॥ अर्हम् ॥

श्रीसुधर्मस्वामिविरचितं ।

श्रुतकेवलिश्रीभद्रबाहुस्वामिदृब्धनिर्युक्तियुतं ।

श्रीगन्धहस्तिकृतशस्त्रपरिज्ञाविवरणानुसारिश्रीशीलाङ्काचार्यविहितविवरणसमन्वितं ॥

# श्रीआचाराङ्गसूत्रम् ।

ॐ नमः सर्वज्ञाय ॥ जयति समस्तवस्तुपर्यायविचारापास्ततीर्थिकं, विहितैकैकतीर्थनयवादसमूहवशात्प्रतिष्ठितम् । बहुविधभङ्गिसिद्धसिद्धान्तविधूनितमलमलीमसं, तीर्थमनादिनिधनगतमनुपममादिनतं जिनेश्वरैः ॥१॥ (स्कन्दकच्छन्दः)। आचारशास्त्रं सुविनिश्चितं यथा, जगाद वीरो जगते हिताय यः। तथैव किञ्चिद्गदतः स एव मे, पुनातु धीमान् विनयार्पिता गिरः ॥२॥ शस्त्रपरिज्ञाविवरणमतिबहुगहनं च गन्धहस्तिकृतम्। तस्मात् सुखबोधार्थं गृह्णाम्यहमञ्जसा सारम् ॥३॥ इह हि रागद्वेषमोहाद्यभिभूतेन सर्वे-

आचा. श्रु. १ अ. १ उ.

णापि संसारिजन्तुना शारीरमानसानेकातिकटुकटु खोपनिपातपीडितेन तदपनयनाय हेयोपादेयपदार्थपरिज्ञाने यत्नो विधेयः, स च न विशिष्टविवेकमृते, विशिष्टविवेकश्च न प्राप्ताशेषातिशयकलापाप्तोपदेशमन्तरेण, आप्तश्च रागद्वेषमोहादीनां दोषाणामात्यन्तिकप्रक्षयात्, स चार्हन्नेव, अतः प्रारभ्यतेऽर्हद्वचनानुयोगः, स च चतुर्धा, तद्यथा—धर्मकथानुयोगो गणितानुयोगो द्रव्यानुयोगश्चरणकरणानुयोगश्चेति, तत्र धर्मकथानुयोग उत्तराध्ययनादिकः, गणितानुयोगः सूर्यप्रज्ञप्त्यादिकः, द्रव्यानुयोगः पूर्वाणि सम्मत्यादिकश्च, चरणकरणानुयोगश्चाचारादिकः, स च प्रधानतमः, शेषाणां तदर्थत्वात्, तदुक्तम्—[1]चरणपडिवत्तिहेउं जेणियरे तिण्णि अणुओग"त्ति, तथा "चरणपडिवत्तिहेउं धम्मकहाकालदिक्खमादीया । दविए दंसणसोही दंसणसुद्धस्स चरणं तु ॥१॥" गणधरैरप्यत एव तस्यैवादौ प्रणयनमकारि, अतस्तत्प्रतिपादकस्याचाराङ्गस्यानुयोगः समारभ्यते, स च परमपदप्राप्तिहेतुत्वात् सविघ्नः, तदुक्तम्—"श्रेयांसि बहुविघ्नानि, भवन्ति महतामपि। अश्रेयसि प्रवृत्तानां, क्वापि यान्ति विनायकाः ॥ १ ॥" तस्मादशेषप्रत्यूहोपशमनाय मङ्गलमभिधेयं, तच्चादिमध्यावसानभेदात्त्रिधा, तत्रादिमङ्गलं 'सुयं मे आउसंतेणं भगवया एवमक्खाय'मित्यादि, अत्र च भगवद्वचनानुवादो मङ्गलम्, अथवा श्रुतमिति श्रुतज्ञानं, तच्च नन्द्यन्तःपातित्वान्मङ्गलमिति, एतच्चाविघ्नेनाभिलपितशास्त्रार्थपारगमनकारणं, मध्यमङ्गलं लोकसाराध्ययनपञ्चमोद्देशकसूत्रं 'से जहा केवि हरए पडिपुण्णे चिट्ठइ समंसि भोम्मे उवसन्तरए सारक्खमाणे' इत्यादि, अत्र च ह्रदगुणैराचार्यगुणोत्कीर्त्तनम्, आचार्याश्च पञ्चनमस्कारान्तःपातित्वान्मङ्गलमिति, एतच्चाभिलपितशास्त्रार्थस्थिरीकरणार्थम्, अवसानमङ्गलं नवमाध्ययनेऽवसानसूत्रम् 'अभिनिव्वुडे अमाई आवकहाए भगवं समियासी' अत्राभिनिर्वृ-

प्र.आ. १

अनुयोगाः मंगलं च

१० १५ २० ॥१॥

---

१ चरणप्रतिपत्तिहेतवो येनेतरे त्रयोऽनुयोगाः । चरणप्रतिपत्तिहेतवो धर्मकथाकालदीक्षादिकाः । द्रव्ये दर्शनशुद्धिर्दर्शनशुद्धस्य चरणं तु ॥ १ ॥

तग्रहणं संसारमहातरुकन्दोच्छेदाविप्रतिपत्त्या ध्यानकारित्वान्मङ्गलमिति, एतच्च शिष्यप्रशिष्यसन्तानाव्यवच्छेदार्थमिति, अध्ययनगतसूत्रमङ्गलत्वप्रतिपादनेनैवाध्ययनानामपि मङ्गलत्वमुक्तमेवेति न प्रतन्यते, सर्वमेव वा शास्त्रं मङ्गलं, ज्ञानरूपत्वात्, ज्ञानस्य च निर्जरार्थत्वात्, निर्जरार्थत्वेन च तस्याविप्रतिपत्तिः, यदुक्तम्—"जं अन्नाणी कम्मं खवेइ बहुयाहिं वासकोडीहिं । तं नाणी तिहिँ गुत्तो खवेइ उस्सासमित्तेणं ॥१॥" मङ्गलशब्दनिरुक्तं च मां गालयत्यपनयति भवादिति मङ्गलं, मा भूद् गलो-विघ्नो गालो वा-नाशः शास्त्रस्येति मङ्गलमित्यादि, शेषं त्वाक्षेपपरिहारादिकमन्यतोऽवसेयमिति ।

साम्प्रतमाचारानुयोगः प्रारभ्यते—आचारस्यानुयोगः-अर्थकथनमाचारानुयोगः, सूत्राद् अनु-पश्चादर्थस्य योगोऽनुयोगः, सूत्राध्ययनात् पश्चादर्थकथनमिति भावना, अणोर्वा-लघीयसः सूत्रस्य महताऽर्थेन योगोऽनुयोगः, स चामीभिर्द्वारैरनुगन्तव्यः, तद्यथा—निक्खेवेगट्ठनिरुत्तिविहिपवित्ती य केण वा कस्स। तद्दारभेयलक्खण तदरिहपरिसा य सुत्तत्थो ॥१॥ तत्र निक्षेपो-नामादिः सप्तधा, नामस्थापने क्षुण्णे, द्रव्यानुयोगो द्वेधा-आगमतो नोआगमतश्च, तत्रागमतो ज्ञाता तत्र चानुपयुक्तो, नोआगमतो ज्ञशरीरभव्यशरीरतद्व्यतिरिक्तोऽनेकधा, द्रव्येण-सेटिकादिना द्रव्यस्य-आत्मपरमाण्वादेर्द्रव्ये निषद्यादौ वा अनुयोगो द्रव्यानुयोगः, क्षेत्रानुयोगः क्षेत्रेण क्षेत्रस्य क्षेत्रे वाऽनुयोगः क्षेत्रानुयोगः, एवं कालेन कालस्य काले वाऽनुयोगः कालानुयोगः, वचनानुयोग एकवचनादिना, भावानुयोगो द्वेधा-आगमतो नोआगमतश्च, तत्रागमतो ज्ञातोपयुक्तो, नोआगमतस्तु औपशमिकादिभावे, तेषां वानुयोगः-अर्थकथनं भावानुयोगः, शेषमावश्यकानुसारेण ज्ञेयं, केवलमिहानुयोगस्य प्रस्तुतत्वात् तस्य चाचार्याधीनत्वात् केनेति द्वारं विव्रियते,

* प्रतिशिष्येति प्र. १ यदज्ञानी कर्म क्षपयति बहुकाभिर्वर्षकोटीभिः । तज्ज्ञानी त्रिभिर्गुप्तः क्षपयत्युच्छ्वासमात्रेण ॥ १ ॥

९

१०

तथा उपक्रमादीनि च द्वाराणि प्रचुरतरोपयोगित्वात्प्रदर्श्यन्ते, तत्र केनेति कथम्भूतेन ?, यथाभूतेन च सूरिणा व्याख्या कर्त्तव्या तथा प्रदर्श्यते–"देसकुलजाइरूवी संघयणी धिइजुओ अणासंसी । अविकत्थणो अमाई थिरपरिवाडी गहियवक्को ॥१॥ जियपरिसो जियनिद्दो मज्झत्थो देसकालभावन्नू । आसन्नलद्धपइभो णाणाविहदेसभासण्णू ॥२॥ पंचविहे आयारे जुत्तो सुत्तत्थतदुभयविहिन्नू । आहरणहेउकारणणयणिउणो गाहणाकुसलो ॥३॥ ससमयपरसमयविऊ गंभीरो दित्तिमं सिवो सोमो । गुणसयकलिओ जुत्तो पवयणसारं परिकहेउं ॥४॥ आर्यदेशोद्भूतः सुखावबोधवचनो भवतीत्यतो देशग्रहणं, पैतृकं कुलमिक्ष्वाकादि, ज्ञातकुलश्च यथोत्क्षिप्तभारवहने न श्राम्यतीति, मातृकी जातिः तत्संपन्नो विनयादिगुणवान् भवति, 'यत्राकृतिस्तत्र गुणा वसन्ती'ति रूपग्रहणं, संहननधृतियुतो व्याख्यानादिषु न खेदमेति, अनाशंसी श्रोतृभ्यो न वस्त्राद्याकाङ्क्षति, अविकत्थनो हितमितभाषी, अमायी सर्वत्र विश्वास्यः, स्थिरपरिपाटिः परिचितग्रन्थस्य सूत्रार्थगलनासंभवात्, ग्राह्यवाक्यः सर्वत्रास्खलिताज्ञ', जितपर्षद् राजादिसदसि न क्षोभमुपयाति, जितनिद्रः अप्रमत्तत्वान्निद्राप्रमादिन शिष्यान् सुखेनैव प्रबोधयति, मध्यस्थः शिष्येषु समचित्तो भवति, देशकालभावज्ञः सुखेनैव गुणवद्देशादौ विहरिष्यति, आसन्नलब्धप्रतिभो द्राक् परवाद्युत्तरदानसमर्थो भवति, नानाविधदेशभाषाविधिज्ञस्य नानाविधदेशजाः शिष्या व्याख्यानं सुखमवभोत्स्यन्ते, ज्ञानाद्याचारपञ्चकयुक्तः श्रद्धेयवचनो भवति, सूत्रार्थतदुभयविधिज्ञ उत्सर्गापवादप्रपञ्चं यथावद् ज्ञापयिष्यति, हेतूदाहरणनिमित्तनयप्रपञ्चज्ञः अनाकुलो हेत्वादीनाचष्टे, ग्राहणाकुशलो बह्वीभिर्युक्तिभिः शिष्यान् बोधयति, स्वसमयपरसमयज्ञ. सुखेनैव तत्स्थापनोच्छेदौ करिष्यति, गम्भीरः खेदसहः, दीप्तिमान् पराधृष्यः, शिवहेतुत्वात् शिवः, तदधिष्ठितदेशे मार्याद्युपशमनात्, सौम्यः सर्वजननयनमनोरमणीय', गुणशतकलितः प्रश्रयादिगुणोपेतः, एवंविधः सूरिः प्रवचनानुयोगे योग्यो

प्र.आ.२

१५ आचार्य स्वरूपं

२०

२५

भवति ॥ तस्य चानुयोगस्य महापुरस्येव चत्वार्यनुयोगद्वाराणि—व्याख्याङ्गानि भवन्ति, तद्यथा—उपक्रमो निक्षेपोऽनुगमो नयः, तत्रोपक्रमणमुपक्रमः उपक्रम्यतेऽनेनास्मादस्मिन्निति वोपक्रमः—व्याचिख्यासितशास्त्रस्य समीपानयनमित्यर्थः, स च शास्त्रीयलौकिकभेदाद् द्विधा, तत्र शास्त्रीयः आनुपूर्वी नाम प्रमाणं वक्तव्यताऽर्थाधिकारः समवतारश्चेति षोढा, लौकिको नामस्थापनाद्रव्यक्षेत्रकालभावभेदात् षोढैव । निक्षेपणमनेनास्मादस्मिन्निति वा निक्षेपः, उपक्रमानीतस्य व्याचिख्यासितशास्त्रस्य नामादिन्यसनमित्यर्थः, स च त्रिविधः, तद्यथा—ओघनिष्पन्नो नामनिष्पन्नः सूत्रालापकनिष्पन्नश्च, तत्रौघनिष्पन्नोऽङ्गाध्ययनादिसामान्याभिधानन्यासः, नामनिष्पन्न आचारशस्त्रपरिज्ञादिविशेषाभिधाननामादिन्यासः, सूत्रालापकनिष्पन्नश्च सूत्रालापकानां नामादिन्यसनमिति। अनुगमनमनेनास्मादस्मिन्निति वाऽनुगमः, अर्थकथनमित्यर्थः, स च द्विधा—निर्युक्त्यनुगमः सूत्रानुगमश्चेति, तत्र निर्युक्त्यनुगमस्त्रिविधः, तद्यथा— निक्षेपनिर्युक्त्यनुगमः उपोद्घातनिर्युक्त्यनुगमः सूत्रस्पर्शिकनिर्युक्त्यनुगमश्चेति, तत्र निक्षेपनिर्युक्त्यनुगमो निक्षेप एव सामान्यविशेषाभिधानयोरोघनिष्पन्ननामनिष्पन्नाभ्यां निक्षेपाभ्यामनुगतः सूत्रापेक्षया वक्ष्यमाणलक्षणश्चेति, उपोद्घातनिर्युक्त्यनुगमश्चाभ्यां द्वारगाथाभ्यामनुगन्तव्यः, तद्यथा—"उद्देसे णिद्देसे य णिग्गमे खेत्तकालपुरिसे य । कारणपच्चयलक्खण णए समोयारणाऽणुमए ॥१॥ किं कतिविहं कस्स कहिं केसु कहं केचिरं हवइ कालं । कइ संतरमविरहियं भवागरिस फासणणिरुत्ती ॥२॥" सूत्रस्पर्शिकनिर्युक्त्यनुगमः सूत्रावयवानां नयैः साक्षेपपरिहारमर्थकथनं, स च सूत्रे सति भवति, सूत्रं च सूत्रानुगमे, स च सूत्रो- १२

---

१ उद्देशो निर्देशश्च निर्गमः क्षेत्रं कालः पुरुषश्च । कारणं प्रत्ययः लक्षणं नयाः समवतारः अनुमतम् ॥१॥ किं कतिविधं कस्य क्व केषु कथं कियच्चिरं भवति कालम् । कति सान्तरमविरहितं भवाकर्षाः स्पर्शना निरुक्तिः ॥२॥

चारणरूपः पदच्छेदरूपश्चेति। अनन्तधर्माध्यासितं वस्त्वेकेनैव धर्मेण नयन्ति–परिच्छिन्दन्तीति ज्ञानविशेषा नयाः, ते च नैगमा-दयः सप्तेति। साम्प्रतमाचाराङ्गस्योपक्रमादीनामनुयोगद्वाराणां यथायोगं किञ्चिद् विभणिषुरशेषप्रत्यूहोपशमनाय मङ्गलार्थं प्रेक्षा-पूर्वकारिणां च प्रवृत्त्यर्थं सम्बन्धाभिधेयप्रयोजनप्रतिपादिकां निर्युक्तिकारो गाथामाह—



वंदित्तु सव्वसिद्धे जिणे अ अणुओगदायए सव्वे। आयारस्स भगवओ निज्जुत्तिं कित्तइस्सामि ॥१॥

तत्र वन्दित्वा सर्वसिद्धान् जिनांश्चेति मङ्गलवचनम्, अनुयोगदायकानित्येतच्च सम्बन्धवचनमपि, आचारस्येत्यभिधेयवचनं, निर्युक्तिं करिष्ये इति प्रयोजनकथनमिति तात्पर्यार्थः॥ अवयवार्थस्तु 'वन्दित्वे'ति 'वदि अभिवादनस्तुत्यो'रित्यर्थद्वयाभिधायी धातुः, तत्राभिवादनं कायेन स्तुतिर्वाचा, अनयोश्च मनःपूर्वकत्वात्करणत्रयेणापि नमस्कार आवेदितो भवति, सितं-ध्मातमेषामिति सिद्धाः—प्रक्षीणाशेषकर्माणः, सर्वे च ते सिद्धाश्च सर्वसिद्धाः, सर्वग्रहणं तीर्थातीर्थानन्तरपरम्परादिसिद्धप्रतिपादकं, तान् वन्दित्वेति सम्बन्धः सर्वत्र योज्यः, रागद्वेषजितो जिनाः—तीर्थकृतस्तानपि सर्वान् अतीतानागतवर्त्तमानसर्वक्षेत्रगतानिति, अनुयोगदायिनः—सुधर्म-स्वामिप्रभृतयो यावदस्य भगवतो निर्युक्तिकारस्य भद्रबाहुस्वामिनश्चतुर्दशपूर्वधरस्याचार्योऽतस्तान् सर्वानिति, अनेन चाम्नायकथनेन स्वमनीषिकाव्युदासः कृतो भवति, 'वन्दित्वे'ति क्त्वाप्रत्ययस्योत्तरक्रियासव्यपेक्षत्वादुत्तरक्रियामाह–'आचारस्य' यथार्थनाम्नः 'भग-वत' इति अर्थ(ऐश्वर्यरूपयशःश्री)धर्मप्रयत्नगुणभाजः, तस्यैवंविधस्य निश्चयेनार्थप्रतिपादिका युक्तिर्निर्युक्तिस्तां 'कीर्त्तयिष्ये' अभिधास्ये इति, अन्तस्तत्त्वेन निष्पन्नां निर्युक्तिं बहिस्तत्त्वेन प्रकाशयिष्यामीत्यर्थः॥१॥ यथाप्रतिज्ञातमेव विभणिषुर्निक्षेपार्हाणि पदानि तावत्





१ चान्द्रमतेन णिज उभयपदभावात्।

सुहृद्भूताऽऽचार्यः संपिण्ड्य कथयति—

**आयार अंग सुयखंध बंभ चरणे तहेव सत्थे य। परिण्णाए संणाए निक्खेवो तह दिसाणं च ॥ २॥**

आचारअङ्गश्रुतस्कन्धब्रह्मचरणशस्त्रपरिज्ञासंज्ञादिशामित्येतेषां निक्षेपः कर्त्तव्य इति ॥ तत्राचारब्रह्मचरणशस्त्रपरिज्ञाशब्दा नामनिष्पन्ने निक्षेपे द्रष्टव्याः, अङ्गश्रुतस्कन्धशब्दा ओघनिष्पन्ने, संज्ञादिक्शब्दौ सूत्रालापकनिष्पन्ने निक्षेपे द्रष्टव्याविति ॥ २ ॥ एतेषां मध्ये कस्य कतिविधो निक्षेप इत्यत आह—

**चरणदिसावज्जाणं निक्खेवो चउक्कओ य नायव्वो। चरणंमि छव्विहो खलु सत्तविहो होइ उ दिसाणं ॥३॥**

चरणदिग्वर्जानां चतुर्विधो निक्षेपः, चरणस्य षड्विधः, दिक्शब्दस्य सप्तविधो निक्षेपः, अत्र च क्षेत्रकालादिकं यथासम्भवमायोज्यम् ॥३॥ नामादिचतुष्टयं सर्वव्यापीति दर्शयितुमाह—

**जत्थ य जं जाणिज्जा निक्खेवं निक्खिवे निरवसेसं। जत्थऽवि य न जाणिज्जा चउक्कयं निक्खिवे तत्थ ॥४॥**

'यत्र' चरणदिक्शब्दादौ यं निक्षेपं-क्षेत्रकालादिकं जानीयात् तं तत्र निरवशेषं निक्षिपेद्, यत्र तु निरवशेषं न जानीयादाचाराङ्गादौ तत्रापि नामस्थापनाद्रव्यभावचतुष्कात्मकं निक्षेपं निक्षिपेदित्युपदेश इति गाथार्थः ॥४॥ प्रदेशान्तरप्रसिद्धस्यार्थस्य लाघवमिच्छता निर्युक्तिकारेण गाथाऽभ्यधायि—

**आयारे अंगंमि य पुव्वुद्दिट्ठो चउक्कनिक्खेवो। नवरं पुण नाणत्तं भावायारंमि तं वोच्छं ॥५॥**

क्षुल्लिकाचारकथायामाचारस्य पूर्वोद्दिष्टो निक्षेपः, अङ्गस्य तु चतुरङ्गाध्ययन इति, यश्चात्र विशेषः सोऽभिधीयते 'भावाचारविषय'

इति ॥५॥ यथाप्रतिज्ञातमाह–

**तस्सेगट्ठ पवत्तण पढमंग गणी तहेव परिमाणे । समोयारे सारो य सत्तहिं दारेहिं नाणत्तं ॥६॥**

'तस्य' भावाचारस्य एकार्थाभिधायिनो वाच्याः, तथा केन प्रकारेण प्रवृत्तिः–प्रवर्त्तनमाचारस्याभूत् तच्च वाच्यं, तथा प्रथमाङ्गता च वाच्या, तथा गणी–आचार्यस्तस्य कतिविधं स्थानमिदमिति च वाच्यं, तथा 'परिमाणम्' इयत्ता वाच्या, तथा किं क समवतरतीत्येतच्च वाच्यं, तथा सारश्च वाच्यः, इत्येभिर्द्वारैः पूर्वस्माद् भावाचाराद् अस्य भेदो–नानात्वमिति पिण्डार्थः ॥ ६ ॥ अवयवार्थं तु निर्युक्तिकृदेवाभिधातुमाह—

**आयारो आचालो आगालो आगरो य आसासो । आयरिसो अंगंति य आईण्णाऽऽजाइ आमोक्खा ॥७॥**

आचर्य्यते-आसेव्यत इत्याचारः, स च नामादि चतुर्द्धा, तत्र ज्ञशरीरभव्यशरीरतद्व्यतिरिक्तो द्रव्याचारोऽनया गाथयाऽनुसर्त्तव्यः—'णामणधोयणवासणसिक्खावणसुकरणाविरोहीणि। दव्वाणि जाणि लोए दव्वायारं वियाणाहि ॥१॥' भावाचारो द्विधा-लौकिको लोकोत्तरश्च, तत्र लौकिकः पाषण्डिकादयः पञ्चरात्रादिकं यत् कुर्व्वन्ति स विज्ञेयो, लोकोत्तरस्तु पञ्चधा ज्ञानादिकः, तत्र ज्ञानाचारोऽष्टधा, तद्यथा—'काले विणए बहुमाणे उवहाणे तहा अणिण्हवणे । वंजणअत्थतदुभए अट्ठविहो णाणमायारो ॥१॥' दर्शना-

१ नामनधावनवासनशिक्षापणसुकरणाविरोधीनि । द्रव्याणि यानि लोके द्रव्याचार विजानीहि ॥१॥

२ कालो विनयः बहुमानः उपधान तथा अनिह्नव । व्यञ्जनमर्थस्तदुभयस्मिन् अष्टविधो ज्ञानाचारः ॥१॥ निश्शङ्कितो निष्काङ्क्षितो निर्विचिकित्सोऽमूढदृष्टिश्च । उपबृंहा स्थिरीकरण वात्सल्य प्रभावनाऽष्टौ ॥२॥ तिस्र एव च गुप्तयः पञ्च समितयोऽष्ट मिलिताः । प्रवचनमातर इमास्तासु स्थितश्चरणसंपन्नः ॥३॥ अनशनमवमौदर्य वृत्तिसक्षेपण रसत्याग । कायक्लेश सलीनता च बाह्य तपो भवति ॥४॥ प्रायश्चित्तं विनयो वैयावृत्त्य तथैव स्वाध्यायः । ध्यानमुत्सर्गोऽपि च अभ्यन्तर तपो भवति ॥५॥ अनिगूहितबलवीर्यः पराक्रमते यो यथोक्तमायुक्तः । युनक्ति च यथास्थाम ज्ञातव्यः स वीर्याचारः ॥६॥

१५ २० २५

आचार्यस्वरूपं

चारोऽप्यष्टधैव, तद्यथा—'निस्संकिय निक्कंखिय निव्वितिगिच्छा अमूढदिट्ठी य । उववूहथिरीकरणे वच्छल्लपभावणे अट्ठ ॥ २ ॥' चारित्राचारोऽप्यष्टधैव—'तिन्नेव य गुत्तीओ पंच समिइओ अट्ठ मिलियाओ । पवयणमाईउ इमा तासु ठिओ चरणसंपन्नो ॥३॥' तपआचारो द्वादशधा, तद्यथा—'अणसणमूणोयरिया वित्तीसंखेवणं रसच्चाओ । कायकिलेसो संलीणया य बज्झो तवो होइ ॥४॥ पायच्छित्तं विणओ वेयावच्चं तहेव सज्झाओ । झाणं उस्सग्गोऽविय अब्भितरओ तवो होइ ॥५॥' वीर्याचारस्त्वनेकधा—'अणिगूहियबलविरिओ परक्कमइ जो जहुत्तमाउत्तो । जुंजइ य जहाथामं नायव्वो वीरियायारो ॥६॥' एष पञ्चविध आचारः, एतत्प्रतिपादकत्वादयमेव ग्रन्थविशेषो भावाचार', एवं सर्वत्र योज्यम् । इदानीमाचालः, आचाल्यतेऽनेनातिनिबिडं कर्मादीत्याचालः, सोऽपि चतुर्धा, व्यतिरिक्तो वायुः, भावाचालस्त्वयमेव ज्ञानादिः पञ्चधा । इदानीमागालः, आगालनमागालः समप्रदेशावस्थानं, सोऽपि चतुर्धा, व्यतिरिक्त उदकादेर्निम्नप्रदेशावस्थानं, भावागालो ज्ञानादिक एव, तस्यात्मनि रागादिरहितेऽवस्थानमितिकृत्वा । इदानीमाकरः, आगत्य तस्मिन् कुर्वन्तीत्याकरः, नामादिः, तत्र व्यतिरिक्तो रजताकरादिः, भावाकरोऽयमेव ज्ञानादिः, तत्प्रतिपादकत्वादयमेव ग्रन्थो, निर्जरादिरत्नानामत्र लाभात् । इदानीमाश्वासः, आश्वसन्त्यस्मिन्नित्याश्वासो नामादिः, तत्र व्यतिरिक्तो यानपात्रद्वीपादिः, भावाश्वासो ज्ञानादिरेव । इदानीमादर्शः, आदृश्यते अस्मिन्नित्यादर्शो नामादिः, व्यतिरिक्तो दर्पणः, भावादर्श उक्त एव, यतोऽस्मिन्नितिकर्तव्यता दृश्यते । इदानीमङ्गम्, अज्यते व्यक्तीक्रियते अस्मिन्नित्यङ्गं, नामादि एव, तत्र व्यतिरिक्तं शिरोबाह्वादि, भावाङ्गमयमेवाचारः । इदानीमाचीर्णम् आसेवितं, तच्च नामादि षोढा, तत्र व्यतिरिक्तं द्रव्याचीर्णं सिंहादेस्तृणादिपरिहारेण पिशितभक्षणं, क्षेत्राचीर्णं बाह्लीकेषु सक्तवः कोङ्कणेषु पेया, कालाचीर्णं त्विद—'सरसो चंदणपंको अग्घइ सरसा य गंधका-

५

१०

साई। पाडलि सिरीस मल्लिय पियाइँ काले निदाहंमि ॥१॥" भावाचीर्णं तु ज्ञानादिपञ्चकं तत्प्रतिपादकश्चाचारग्रन्थः, इदानीमाजातिः, आजायन्ते तस्यामित्याजातिः, साऽपि चतुर्द्धा, व्यतिरिक्ता मनुष्यादिजातिः, भावाजातिस्तु ज्ञानाद्याचारप्रसूतिरयमेव ग्रन्थ इति। इदानीमामोक्षः, आमुच्यन्तेऽस्मिन्निति आमोक्षणं वाऽऽमोक्षो, नामादिः, तत्र व्यतिरिक्तो निगडादेः, भावामोक्षः कर्माष्टकोद्वेष्टनमशेषम् एतत्साधकश्चायमेवाचार इति। एते किञ्चिद्विशेषादेकमेवार्थं विशिषन्तः प्रवर्त्तन्त इत्येकार्थिकाः, शक्रपुरन्दरादिवत्, एकार्थाभिधायिनां च छन्दश्चितिबन्धानुलोम्यादिप्रतिपत्त्यर्थमुद्घट्टनम्, उक्तंच—"बंधाणुलोमया खलु सत्थंमि य लाघवं असम्मोहो। संतगुणदीवणाविय एगट्ठगुणा हवंतेए ॥१॥" ॥७॥ इदानीं प्रवर्त्तनाद्वारं, कदा पुनर्भगवताऽऽचारः प्रणीत इत्यत आह—

**सव्वेसिं आयारो तित्थस्स पवत्तणे पढमयाए। सेसाइं अंगाइं एक्कारस आणुपुव्वीए ॥ ८ ॥**

सर्वेषां तीर्थङ्कराणां तीर्थप्रवर्त्तनादावाचारार्थः प्रथमतयाऽभवद् भवति भविष्यति च, ततः शेषाङ्गार्थ इति, गणधरा अप्यनयैवानुपूर्व्या सूत्रतया ग्रथ्नन्तीति ॥८॥ इदानीं प्रथमत्वे हेतुमाह—

**आयारो अंगाणं पढमं अंगं दुवालसण्हंपि। इत्थ य मोक्खोवाओ एस य सारो पवयणस्स ॥ ९ ॥**

अयमाचारो द्वादशानामप्यङ्गानां प्रथममङ्गमित्यनूद्य कारणमाह—यतोऽत्र मोक्षोपायः—चरणकरणं प्रतिपाद्यते, एष च प्रवचनस्य सारः, प्रधानमोक्षहेतुप्रतिपादनाद्, अत्र च स्थितस्य शेषाङ्गाध्ययनयोग्यत्वाद् अस्य प्रथमतयोपन्यास इति ॥९॥ इदानीं

१ सरसश्चन्दनपङ्कोऽर्घति सरसा च गन्धकाषायिकी। पाटलशिरीषमल्लिकाः प्रियाः काले निदाघे ॥१॥

२ बन्धानुलोमता खलु शास्त्रे च लाघवमसमोहः। सद्गुणदीपनमपि च एकार्थगुणा भवन्त्येते ॥ १ ॥





२० २६

गणिद्वारं, साधुवर्गो गुणगणो वा गणः, सोऽस्यास्तीति गणी ॥ आचारायत्तं च गणित्वमिति प्रदर्शयन्नाह—

**आयारम्मि अहीए जं नाओ होइ समणधम्मो उ। तम्हा आयारधरो भण्णइ पढमं गणिठाणं ॥ १० ॥**

यस्माद् आचाराध्ययनात् क्षान्त्यादिकः चरणकरणात्मको वा श्रमणधर्म्मः परिज्ञातो भवति तस्मात्सर्वेषां गणित्वकारणानामाचार-प्रथमम्-आद्यं प्रधानं वा गणिस्थानमिति ॥१०॥ इदानीं परिमाणं, किं पुनरस्याध्ययनतः पदतश्च परिमाणमित्यत आह—

**णववंभचेरमइओ अट्ठारसपयसहस्सिओ वेओ। हवइ य सपंचचूलो बहुबहुतरओ पयग्गेणं ॥११॥**

तत्र अध्ययनतो नवब्रह्मचर्य्याभिधानाध्ययनात्मकोऽयं पदतोऽष्टादशपदसहस्रात्मको 'वेद' इति विदन्त्यस्माद् हेयोपादेयपदार्थानिति वेदः-क्षायोपशमिकभाववर्त्त्ययमाचार इति, सह पञ्चभिश्चूडाभिर्वर्त्तत इति सपञ्चचूडश्च भवति, उक्तशेषानुवादिनी चूडा,
(१) (२) (३) (४) (५) (६) (७)
तत्र प्रथमा '*पिंडेसण सेज्जिरिया भासज्जाया य वत्थपाएसा 'उग्गहपडिमत्ति' सप्ताध्ययनात्मिका, द्वितीया सत्तसत्तिकया, तृतीया भावना, चतुर्थी विमुक्तिः, पञ्चमी निशीथाध्ययनं, 'बहुबहुतरओ पदग्गेणं'ति तत्र चतुश्चूलिकात्मकद्वितीयश्रुतस्कन्धप्रक्षेपाद्बहुः, निशीथाख्यपञ्चमचूलिकाप्रक्षेपाद्बहुतरः, अनन्तगमपर्य्यायात्मकतया बहुतमश्च, पदाग्रेण-पदपरिमाणेन भवतीति ॥११॥ इदानीमुपक्रमान्तर्गतं समवतारद्वारं, तत्रैताश्चूडा नवसु ब्रह्मचर्याध्ययनेष्ववतरन्तीति दर्शयितुमाह—

**आयारग्गाणत्थो बंभचेरेसु सो समोयरइ। सोऽवि य सत्थपरिण्णाए पिंडिअत्थो समोयरइ ॥१२॥**

प्र.आ.६ ५ १०

* पिंडेसणसिज्जिरिया भासा वत्थेसणा य पाएसा इति प्र.

सत्थपरिण्णाअत्थो छसुवि काएसु सो समोयरइ। छज्जीवणियाअत्थो पंचसुवि वएसु ओयरइ ॥१३॥
पंच य महव्वयाइं समोयरंते य सव्वदव्वेसुं। सव्वेसिं पज्जवाणं अणंतभागम्मि ओयरइ ॥१४॥
उत्तानार्थाः, नवरम् 'आचाराग्राणि'चूलिकाः, द्रव्याणि–धर्मास्तिकायादीनि, पर्याया–अगुरुलघ्वादयः तेषामनन्तभागे व्रताना-मवतार इति ॥१२–१३–१४॥ कथं पुनर्महाव्रतानां सर्वद्रव्येष्ववतार इति ?, तदाह—
छज्जीवणिया पढमे बीए चरिमे य सव्वदव्वाइं। सेसा महव्वया खलु तदेक्कदेसेण दव्वाणं ॥१५॥
'छज्जीवणिया'इत्यादि स्पष्टा, कथं पुनर्महाव्रतानां सर्वद्रव्येष्ववतारो, न सर्वपर्यायेष्विति, उच्यते, येनाभिप्रायेण चोदितवांस्तमा-विष्कर्तुमाह—णणु सव्वणभपएसाणंतगुणं पढमसंजमट्ठाणं। छव्विहपरिवुड्ढीए छट्ठाणासंखया सेढी ॥१॥ अन्ने के पज्जाया ? जे पुव-उत्ता चरित्तविसयम्मि। जे तत्तोऽणंतगुणा जेसिं तमणंतभागम्मि ॥२॥ अन्ने केवलगम्मत्ति ते मई, ते य के तदब्भहिया ?। एवंपि होज्ज तुल्ला णाणंतगुणत्तणं जुत्तं ॥३॥ चो० सेढीसु णाणदंसणपज्जाया तेण तप्पमाणेसा। इह पुण चरित्तमेत्तोवओगिणो तेण ते थोवा ॥४॥ अयमासामर्थो लेशतः–नन्वित्यक्षूयायां, संयमस्थानान्यसंख्यातानि तावद्भवन्ति, तेषां यज्जघन्यं तदविभागपलिच्छेदेन बुद्ध्या खण्ड्यमानं पर्यायैरनन्ताविभागपलिच्छेदात्मकं भवति, तच्च पर्यायसंख्यया निर्दिष्टं सर्वाकाशप्रदेशसंख्याया अनन्तगुणं, सर्वनभःप्र-देशवर्गीकृतप्रमाणमित्यर्थः, ततो द्वितीयादिस्थानैरसंख्यातगच्छगतैरनन्तभागादिकया वृद्ध्या षट्स्थानकानामसंख्येयस्थानगता श्रेणि-र्भवति, एवं चैकमपि स्थानं सर्वपर्यायान्वितं न शक्यते परिच्छेत्तुं, किं पुनः सर्वाण्यपीत्यतः केऽन्ये पर्यायाः ? येषामनन्तभागे

१ षड्जीवनिकायः प्रथमे द्वितीये चरमे च सर्वद्रव्याणि। शेषाणि महाव्रतानि खलु तदेकदेशेन द्रव्याणाम्।

व्रतानि वर्तेरन्निति। स्यान्मतिः, अन्ये केवलगम्या इति, इदमुक्तं भवति—केवलगम्याप्रज्ञापनीयपर्यायाणामपि तत्र प्रक्षेपाद्बहुत्वम्, एवमपि ज्ञानज्ञेययोस्तुल्यत्वात्तुल्या एव नानन्तगुणा इति। अत्राचार्य आह—याऽसौ संयमस्थानश्रेणिर्निरूपिता सा सर्वा चारित्रपर्यायैर्ज्ञानदर्शनपर्यायसहितैः परिपूर्णा तत्प्रमाणा—सर्वाकाशप्रदेशानन्तगुणा, इह पुनश्चारित्रमात्रोपयोगित्वात् पर्यायानन्तभागवृत्तित्वमित्यदोषः। इदानीं सारद्वारं, कः कस्य सार इत्याह—

अंगाणं किं सारो? आयारो, तस्स हवइ किं सारो?। अणुओगत्थो सारो, तस्सवि य परूवणा सारो ॥१६॥

स्पष्टा, केवलमनुयोगार्थो—व्याख्यानभूतोऽर्थः, तस्य प्ररूपणा—यथास्वं विनियोग इति ॥ अन्यच्च—

सारो परूवणाए चरणं, तस्सवि य होइ निव्वाणं। निव्वाणस्स उ सारो अव्वावाहं जिणा बिंति ॥१७॥

स्पष्टैव। इदानीं श्रुतस्कन्धपदयोर्नामादिनिक्षेपादिकं पूर्ववद्विधेयं, भावेन चेहाधिकारः, भावश्रुतस्कन्धश्च ब्रह्मचर्यात्मक इत्यतो ब्रह्मचरणशब्दौ निक्षेप्तव्यावित्याह—

बंभम्मी य चउक्कं ठवणाए होइ बंभणुप्पत्ती। सत्तण्हं वण्णाणं नवण्ह वण्णंतराणं च ॥१८॥

तत्र ब्रह्म नामादि चतुर्द्धा, तत्र नामब्रह्म ब्रह्मेत्यभिधानम्, असद्भावस्थापना अक्षादौ, सद्भावस्थापना प्रतिविशिष्टयज्ञोपवीताद्याकृतिर्मृल्लेप्यादौ द्रव्ये, अथवा स्थापनाया व्याख्यायमानाया ब्राह्मणोत्पत्तिर्वक्तव्या, तत्प्रसङ्गेन च सप्तानां वर्णानां नवानां च वर्णान्तराणामुत्पत्तिर्भणनीयेति। यथाप्रतिज्ञातमाह—

एक्का मणुस्सजाई रज्जुप्पत्तीइ दो कया उसभे। तिण्णेव सिप्पवणिए सावगधम्मम्मि चत्तारि ॥१९॥

५

१०

प्र आ ७

यावन्नाभेयो भगवान्नाद्यापि राजलक्ष्मीमध्यास्ते तावदेकैव मनुष्यजातिः, तस्यैव राज्योत्पत्तौ भगवन्तमेवाश्रित्य ये स्थितास्ते क्षत्रियाः, शेषाश्च शोचनाद्रोदनाच्च शूद्राः, पुनरग्न्युत्पत्तावयस्कारादिशिल्पवाणिज्यवृत्त्या वेशनाद्वैश्याः, भगवतो ज्ञानोत्पत्तौ भरत-काकणीलाञ्छनात् श्रावका एव ब्राह्मणा जज्ञिरे, एते शुद्धाः, त्रयश्चान्ये गाथान्तरितगाथया प्रदर्शयिष्यन्ते ॥ साम्प्रतं वर्णवर्णान्तर-निष्पन्नं संख्यानमाह—

संजोगे सोलसगं सत्त य वण्णा उ नव य अंतरिणो। एए दोऽवि विगप्पा ठवणा बंभस्स णायव्वा ॥२०॥

संयोगेन षोडश वर्णाः समुत्पन्नाः, तत्र सप्त वर्णा नव तु वर्णान्तराणि, एतच्च वर्णवर्णान्तरविकल्पद्वयं स्थापनाब्रह्मेति ज्ञातव्यम् ॥ साम्प्रतं पूर्वसूचितं वर्णत्रयमाह—यदिवा प्रागुद्दिष्टान् सप्त वर्णानाह—

पगई चउक्कगाणंतरे य ते हुंति सत्त वण्णा उ। आणंतरेसु चरमो वण्णो खलु होइ णायव्वो ॥२१॥

प्रकृतयश्चतस्रः—ब्राह्मणक्षत्रियवैश्यशूद्राख्याः आसामेव चतसृणामनन्तरयोगेन प्रत्येकं वर्णत्रयोत्पत्तिः, तद्यथा—द्विजेन क्षत्रिय-योषितो जातः प्रधानक्षत्रियः संकरक्षत्रियो वा, एवं क्षत्रियेण वैश्ययोषितो वैश्येन शूद्राः प्रधानसंकरभेदौ वक्तव्यावित्येवं सप्त वर्णा

* जे गत अस्सिता ते खत्तिआ जाया, अणस्सिया सिद्धरुदणो आसा, जया अग्गी उप्पण्णो तया पागभावस्सिता सिप्पिया वाणियगा जाया, तेहिं तेहिं सिप्पवाणिज्जेहिं विति विगतीति वइस्सा उप्पण्णा । भहारए पव्वइए भरहे अभिसित्ते सावगधम्मे उप्पण्णे बभणा जाया, णिस्सिता बभणा जाया, माहणत्ति उक्कस्सगभावा धम्मपिआ ज च किंचि हणन पिच्छति तं निवारेति मा हण भो मा हण, एव ने जणेण सुम्मनिव्वत्तितसण्णा बभणा जाया । जे पुण अणस्सिता असिप्पिणो असावगा ते थय गता इति ताउ तेसु तेसु पओयणेसु हिंसाचोरियादिसासु दुब्भमाणा सोगदोहणसीला सुद्दा सवुत्ता (इति चूर्णिः)-

भवन्ति, अनन्तरेषु भवा आनन्तरास्तेषु योगेषु चरमवर्णव्यपदेशो भवति–ब्राह्मणेन क्षत्रियायाः क्षत्रियो भवतीत्यादि, स च स्वस्थाने प्रधानो भवतीतिभावः ॥ इदानी वर्णान्तराणां नवानां नामान्याह—

अंबट्ठुग्गनिसाया य अजोगवं मागहा य सूया य। खत्ता(य) विदेहाविय चंडाला नवमगा हुंति ॥२२॥

अम्बष्ठ उग्रः निषादः अयोगवं मागधः सूतः क्षत्ता विदेहः चाण्डालश्चेति ॥ कथमेते भवन्तीत्याह—

एगंतरिए इणमो अंबट्ठो चेव होइ उग्गो य। बिइयंतरिअ निसाओ परासरं तं च पुण वेगे ॥२३॥

पडिलोमे सुद्दाई अजोगवं मागहो य सूओ अ। एगंतरिए खत्ता वेदेहा चेव नायव्वा ॥२४॥

बितियंतरे नियमा चण्डालो सोऽवि होइ णायव्वो। अणुलोमे पडिलोमे एवं एए भवे भेया ॥२५॥

आसामर्थो यन्त्रकादवसेयः, तच्चेदम्—

| ब्रह्मपुरुष वैश्या स्त्री अम्बष्ठ १ | क्षत्रिय पुरुष शूद्री स्त्री उग्र २ | ब्राह्मण पुरुष शूद्री स्त्री निषाद ३ पारासरो वा | शूद्र पुरुष वैश्या स्त्री अयोगवम् ४ | वैश्य पुरुष क्षत्रिया स्त्री मागध ५ | क्षत्रिय पुरुष ब्रह्मस्त्री सूत ६ | शूद्र पुरुष क्षत्रिया स्त्री क्षत्ता ७ | वैश्य पुरुष ब्राह्मणस्त्री वैदेह ८ | शूद्र पुरुष ब्राह्मणस्त्री चाण्डाल ९ |
|---|---|---|---|---|---|---|---|---|

प्र.आ.८ एतानि नव वर्णान्तराणि, इदानीं वर्णान्तराणां संयोगोत्पत्तिमाह—

उग्गेणं खत्ताए सोवागो वेणवो विदेहेणं। अंबट्ठीए सुद्दीय बुक्कसो जो निसाएणं ॥२६॥

सूएण निसाईए कुक्कुरओ सोऽवि होइ णायव्वो। एसो बीओ भेओ चउव्विहो होइ णायव्वो॥२७॥

५ १० १५

अनयोरर्थो यन्त्रकादवसेयः, तच्चेदम्.

| उग्रः पुरुषः | विदेहः पुरुषः | निषादः पुरुषः | शूद्रः पुरुषः |
|---|---|---|---|
| क्षत्ता स्त्री १ | क्षत्ता स्त्री २ | अम्बष्ठी स्त्री शूद्री स्त्री वा ३ | निषादस्त्री ४ |
| श्वपाकः | वैणवः | बुक्कसः | कुक्कुरकः |

गतं भावब्रह्म। इदानीं द्रव्यब्रह्मप्रतिपादनाय आह—

दव्वं सरीरभविओ अन्नाणी वत्थिसंजमो चेव। भावे उ वत्थिसंजम णायव्वो संजमो चेव ॥२८॥

ज्ञशरीरभव्यशरीरव्यतिरिक्तं शाक्यपरिव्राजकादीनामज्ञानानुगतचेतसां वस्तिनिरोधमात्रं विधवाप्रोषितभर्तृकादीनां च कुलव्यवस्थार्थं कारितानुमतियुक्तं द्रव्यब्रह्म, भावब्रह्म तु साधूनां वस्तिसंयमः, अष्टादशभेदरूपोऽप्ययं संयम एव, सप्तदशविधसंयमाभिन्नरूपत्वादस्येति, अष्टादश भेदास्त्वमी—'दिव्यात्कामरतिसुखात् त्रिविधं त्रिविधेन विरतिरिति नवकम्। औदारिकादपि तथा तद् ब्रह्माष्टादशविकल्पम् ॥१॥' (प्रशम०) चरणनिक्षेपार्थमाह—





चरणंमि होइ छक्कं गइमाहारो गुणो व चरणं च। खित्तंमि जंमि खित्ते काले कालो जहिं जाओ(जो उ) ॥२९॥

चरणं नामादि षोढा, व्यतिरिक्तं द्रव्यचरणं त्रिधा भवति–गतिभक्षणगुणभेदात्, तत्र गतिचरणं गमनमेव, आहारचरणं मोदकादेः, गुणचरणं द्विधा–लौकिकं लोकोत्तरं च, लौकिकं यत् द्रव्यार्थं हस्तिशिक्षादिकं वैद्यकादिकं वा शिक्षन्ते, लोकोत्तरं साधूनामनुपयुक्तचरणमुदायिनृपमारकादेर्वा, क्षेत्रचरणं यस्मिन् क्षेत्रे गत्याहारादि चर्यते व्याख्यायते वा, शब्दसामान्यान्तर्भावाद्वा शालि-

क्षेत्रादिचरणमिति, कालेऽप्येवमेव ॥ भावचरणमाह—

भावे गइमाहारो गुणो गुणवओ पसत्थमपसत्था। गुणचरणे पसत्थेण बंभचेरा नव हवंति ॥३०॥

भावचरणमपि गत्याहारगुणभेदात् त्रिधा, तत्र गतिचरणं साधोरुपयुक्तस्य युगमात्रदत्तदृष्टेर्गच्छतः, भक्षणचरणमपि शुद्धं पिण्डमुपभुञ्जानस्य, गुणचरणमप्रशस्तं मिथ्यादृष्टीनां, सम्यग्दृष्टीनामपि सनिदानं, प्रशस्तं तेषामेव कर्मोद्वेष्टनार्थं मूलोत्तरगुणकलापविषयम्, इह चानेनैवाधिकारो, यतो नवाप्यध्ययनानि मूलोत्तरगुणस्थापकानि निर्जरार्थमनुशील्यन्ते ॥ एतेषां चान्वर्थाभिधानानि दर्शयितुमाह— ५

सत्थपरिण्णा १ लोगविजओ २ य सीओसणिज्ज ३ सम्मत्तं ४। तह लोगसारनामं ५ धुयं ६ तह महापरिण्णा ७ य ॥३१॥

अट्ठमए य विमोक्खो ८ उवहाणसुयं ९ च नवमगं भणियं। इच्चेसो आयारो आयारग्गाणि सेसाणि ॥३२॥

स्पष्टे, केवलमित्येष नवाध्ययनरूप आचारः, द्वितीयश्रुतस्कन्धाध्ययनानि तु शेषाणि आचाराग्राणीति ॥ साम्प्रतमुपक्रमान्तर्गतोऽर्थाधिकारो द्वेधा—अध्ययनार्थाधिकार उद्देशार्थाधिकारश्च, तत्राद्यमाह— प्र.आ.९ १०

जिअसंजमो १ अ लोगो जह बज्झइ जह य तं पजहियव्वं २। सुहदुक्खतितिक्खाविय ३ सम्मत्तं ४ लोगसारो ५ य ॥३३॥

निस्संगया य छट्ठे ६ मोहसमुत्था परीसहुवसग्गा ७। निज्जाणं अट्ठमए ८ नवमे य जिणेण एवंति ९ ॥ ३४ ॥

तत्र शस्त्रपरिज्ञायामयमर्थाधिकारो—'जियसंजमो'त्ति जीवेषु संयमो जीवसंयमः—तेषु हिंसादिपरिहारः, स च जीवास्तित्वपरिज्ञाने सति भवति अतो जीवास्तित्वविरतिप्रतिपादनमत्रार्थाधिकारः। लोकविजये तु 'लोगो जह बज्झइ जह य तं पजहियव्वं'ति, १४

विजितमारलोकेन संयमस्थितेन लोको यथा बध्यते अष्टविधेन कर्मणा यथा च तत्प्रहातव्यं तथा ज्ञातव्यमित्ययमर्थाधिकारः। तृतीये त्वयम्–संयमस्थितेन जितकषायेणानुकूलप्रतिकूलोपसर्गनिपाते सुखदुःखतितिक्षा विधेयेति। चतुर्थे त्वयम्–आक्तनाध्ययनार्थसंपन्नेन तापसादिकष्टतपःसेविनामष्टगुणैश्वर्यमृद्धीक्ष्यापि दृढसम्यक्त्वेन भवितव्यमिति। पञ्चमे त्वयम्–चतुरध्ययनार्थस्थितेनागारपरित्यागेन लोकसाररत्नत्रयोद्युक्तेन भाव्यमिति। षष्ठे त्वयम्–प्रागुक्तगुणयुक्तेन निसङ्गतायुक्तेनाप्रतिबद्धेन भवितव्यम्। सप्तमे त्वयम्–संयमादिगुणयुक्तस्य कदाचिन्मोहसमुत्थाः परीषहा उपसर्गा वा प्रादुर्भवेयुस्ते सम्यक् सोढव्याः। अष्टमे त्वयम्–निर्याणम्–अन्तक्रिया, सा सर्वगुणयुक्तेन सम्यग्विधेयेति। नवमे त्वयम्–अष्टाध्ययनप्रतिपादितोऽर्थः सम्यगेवं वर्द्धमानस्वामिना विहित इति, तत्प्रदर्शनं च शेषसाधूनामुत्साहार्थं, तदुक्तम्–"तित्थयरो चउणाणी सुरमहिओ सिज्झियव्वयधुवंमि। अणिगूहियबलविरिओ सव्वत्थामेसु उज्जमइ ॥१॥ किं पुण अवसेसेहिं दुक्खक्खयकारणा सुविहिएहिं। होंति न उज्जमियव्वं सपच्चवायंमि माणुस्से ॥२॥"

(पंन०)साम्प्रतमुद्देशार्थाधिकारः शस्त्रपरिज्ञाया अयम्—

जीवो छक्कायपरूवणा य तेसिं वहे य बंधोत्ति। विरईए अहिगारो सत्थपरिण्णाएँ णायव्वो ॥ ३५ ॥

तत्र प्रथमोद्देशके सामान्येन जीवास्तित्वं प्रतिपाद्यं, शेषेषु तु षट्सु विशेषेण पृथिवीकायाद्यस्तित्वमिति, सर्वेषां चावसाने बन्धविरतिप्रतिपादनमिति, एतच्चान्ते उपात्तत्वात् प्रत्येकमुद्देशार्थेषु योजनीयं, प्रथमोद्देशके जीवः तद्वधे बन्धो विरतिश्चेत्ययमिति॥ तत्र

१ उद्दओ भावो लोगा वसाश जाणियव्वा (इति चूर्णिः). २ तीर्थंकरश्चतुर्ज्ञानी सुरमहितः ध्रुव सेधितव्ये। अनिगूहितबलवीर्यः सर्वस्थाम्नोद्यच्छति ॥१॥ किं पुनरवशेषैर्दुःखक्षयकारणात् सुविहितैः। भवति नोद्यन्तव्य सप्रत्यपाये मानुष्ये ॥ २ ॥

शस्त्रपरिज्ञेति द्विपदं नाम, शस्त्रस निक्षेपमाह—

दव्वं सत्थग्गिविसन्नेहंबिलखारलोणमाईयं। भावो य दुप्पउत्तो वाया काओ अविरई या ॥ ३६ ॥

शस्त्रस निक्षेपो नामादिश्चतुर्द्धा, व्यतिरिक्तं द्रव्यशस्त्रं खड्गाद्यग्निविषस्नेहाम्लक्षारलवणादिकं, भावशस्त्रं दुष्प्रयुक्तो भावः—अन्तःकरणं तथा वाक्कायावविरतिश्चेति, जीवोपघातकारित्वादितिभावः ॥ परिज्ञापि चतुर्द्धेत्याह—

प्र. आ. १०

दव्वं जाणण पच्चक्खाणे दविए सरीर उवगरणे। भावपरिण्णा जाणण पच्चक्खाणं च भावेणं ॥ ३७ ॥

५

तत्र द्रव्यपरिज्ञा द्विधा—ज्ञपरिज्ञा प्रत्याख्यानपरिज्ञा च, ज्ञपरिज्ञा आगमनोआगमभेदाद् द्विधा, आगमतो ज्ञाताऽनुपयुक्तः, नोआगमतस्त्रिधा, तत्र व्यतिरिक्ता द्रव्यपरिज्ञा यो यत् द्रव्यं जानीते सचित्तादि सा परिच्छेद्यद्रव्यप्राधान्यात् द्रव्यपरिज्ञेति, प्रत्याख्यानपरिज्ञाऽप्येवमेव, तत्र व्यतिरिक्तद्रव्यप्रत्याख्यानपरिज्ञा देहोपकरणपरिज्ञानम्, उपकरणं च रजोहरणादि, साधकतमत्वात्, भावपरिज्ञाऽपि द्विधैव—ज्ञपरिज्ञा प्रत्याख्यानपरिज्ञा च, तत्रागमतो ज्ञातोपयुक्तश्च, नोआगमतस्त्विदमेवाध्ययनं ज्ञानक्रियारूपं, नोशब्दस्य मिश्रवाचित्वात्, प्रत्याख्यानभावपरिज्ञाऽपि तथैव, आगमतः पूर्ववत्, नोआगमतस्तु प्राणातिपातनिवृत्तिरूपा मनोवाक्कायकृतकारितानुमतिभेदात्मिका ज्ञेयेति। गतो नामनि पन्नो निक्षेपः, साम्प्रतमाचारादिप्रदानस्य सुखप्रतिपत्तये दृष्टान्तोपन्यासेन विधिराख्यायते—यथा कश्चिद्राजा अभिनवनगरनिवेशेच्छया भूखण्डानि विभज्य समतया प्रकृतिभ्यो दत्तवान्, तथा कचवरापनयने शल्योद्धारे भूस्थिरीकरणे पक्वेष्टकापीठप्रासादरचने रत्नाद्युपादाने चोपदेशं दत्तवान्, ताश्च प्रकृतयस्तदुपदेशानुसारेण तथैव कृत्वा यथाऽभिप्रेतान् भोगान् बुभुजिरे, अयमत्रार्थोपनयः—राजसदृशेन सूरिणा प्रकृतिसदृशस्य शिष्यगणस भूखण्डसदृशः संयमो मिथ्यः-

१०

तदनन्तरमुपस्थापनीय सर्वोपाधिशुद्धस्यारोपणीयः, तं च सामायिकसंयमं स्थिरीकृत्य पञ्चेष्टिकापीठतुल्यानि व्रतान्यारोपणीयानि, ततः प्रासादकल्पोऽप्यमानात्मो विधेयः, तत्रस्थश्चाशेषशास्त्रादिरत्नान्यादत्ते, निर्वाणभाक् भवति। साम्प्रतं सूत्रानुगमेऽस्खलितादिगुणलक्षणोपेतं सूत्रमुच्चारणीयं, लक्षणं त्विदम्—'अप्पग्गंथमहत्थं बत्तीसादोसविरहियं जं च। लक्खणजुत्तं सुत्तं अट्ठहि य गुणेहिं उववेयं ॥१॥' इत्यादि, तच्चेदं सूत्रम्— १५

## ॥ सुयं मे आउसं ! तेणं भगवया एवमक्खायं–इहमेगेसिं णो सण्णा भवइ (सू० १)

अस्य संहितादिक्रमेण व्याख्या-संहिता उच्चारितैव, पदच्छेदस्त्वयम्-श्रुतं मया आयुष्मन्! तेन भगवता एवमाख्यातम्-इह एकेषां नो संज्ञा भवति, एकं तिङन्तं शेषाणि सुबन्तानि, गतः सपदच्छेदः सूत्रानुगमः, साम्प्रतं सूत्रपदार्थः समुन्नीयते-भगवान् सुधर्म्मस्वामी जंबूनाम्न इदमाचष्टे यथा-'श्रुतम्' आकर्णितमवगतमवधारितमितियावद्, अनेन स्वमनीषिकाव्युदासः, 'मये'ति साक्षात्, न पुनः पारम्पर्येण, 'आयुष्मन्नि'ति जात्यादिगुणसंभवेऽपि दीर्घायुष्कत्वगुणोपादानं दीर्घायुरविच्छेदेन शिष्योपदेशप्रदायको यथा स्यात्, इहाचारस्य व्याचिख्यासितत्वात्तदर्थस्य च तीर्थकृत्प्रणीतत्वादिति सामर्थ्यप्रापितं तेनेति तीर्थकरमाह, यदिवा—आमृशता भगवत्पादारविन्दम्, अनेन विनय आवेदितो भवति, आवसता वा तदन्तिक इत्यनेन गुरुकुलवासः कर्त्तव्य इत्यावेदितं भवति, एतच्चार्थद्वयं 'आमुसंतेण आवसंतेणे'त्येतत्पाठान्तरमाश्रित्यावगन्तव्यमिति, 'भगवते'ति भगः-ऐश्वर्य्यादिषडर्थात्मकः सोऽस्यास्तीति भगवान्

२०

२५

---

^ अल्पग्रन्थं महार्थं द्वात्रिंशद्दोषविरहितं यच्च। लक्षणयुक्तं सूत्रमष्टभिश्च गुणैरुपेतम् ॥१॥    १ चूर्ण्यभिप्रायेण द्वितीयसूत्रावतरणमेतत्.

२ पत्तेयं पत्तेयं (गणहरा) सिस्सेहिं पज्जुवासिज्जमाणा एवं भणंति-'सुयं मे०' (इति चूर्णि.).

तेन, 'एव'मिति वक्ष्यमाणविधिना आख्यातमिति, अनेन कृतकत्वव्युदासेनार्थरूपतया आगमस्य नित्यत्वमाह, 'इहे'ति क्षेत्रे प्रवचने आचारे शस्त्रपरिज्ञायां वा आख्यातमितिसंबन्धः, यदिवा–'इहे'ति संसारे 'एकेषां' ज्ञानावरणीयावृतानां प्राणिनां 'नो संज्ञा भवति' संज्ञानं संज्ञा स्मृतिरवबोध इत्यनर्थान्तर, सा नो जायत इत्यर्थः, उक्तः पदार्थः, पदविग्रहस्य तु सामासिकपदाभावादप्रकटनम्। इदानीं चालना–ननु च अकारादिकप्रतिषेधकलघुशब्दसंभवे सति किमर्थं नोशब्देन प्रतिषेध इति ?, अत्र प्रत्यवस्था, सत्यमेवं, किंतु प्रेक्षापूर्वकारितया नोशब्दोपादानं, सा चेयम्–अन्येन प्रतिषेधेन सर्वनिषेधः स्याद्, यथा न घटः अघट इति चोक्ते सर्वात्मना घटनिषेधः, स च नेष्यते, यतः प्रज्ञापनायां दश संज्ञाः सर्वप्राणिनामभिहितास्तासां सर्वासां प्रतिषेधः प्राप्नोतीतिकृत्वा, ताश्चेमाः— "कंइ णं भंते ! सण्णाओ पण्णत्ताओ ?, गोयमा !। दस सण्णाओ पण्णत्ताओ, तंजहा–आहारसण्णा भयसण्णा मेहुणसण्णा परिग्गहसण्णा कोहसण्णा माणसण्णा मायासण्णा लोभसण्णा ओहसण्णा लोगसण्णा"त्ति, आसां च प्रतिषेधे स्पष्टो दोषः, अतो नोशब्देन प्रतिषेधनमकारि, यतोऽयं सर्वनिषेधवाची देशनिषेधवाची च, तथाहि–नोघट इत्युक्ते यथा घटाभावमात्रं प्रतीयते तथा प्रकरणादिप्रसक्तस्य विधानं, स पुनर्विधीयमानः प्रतिषेध्यावयवो ग्रीवादिः प्रतिषेध्यादन्यो वा पटादिः प्रतीयत इति, तथा चोक्तम्— "प्रतिषेधयति समस्तं प्रसक्तमर्थं च जगति नोशब्दः। स पुनस्तदवयवो वा तस्मादर्थान्तर वा स्याद् ॥ १ ॥" इति, एवमिहापि न सर्वसंज्ञानिषेधः, अपितु विशिष्टसंज्ञानिषेधो, ययाऽऽत्मादिपदार्थस्वरूपं गत्यागत्यादिकं ज्ञायते तस्या निषेध इति ॥ साम्प्रतं

५

१०

---

१ कति भदन्त ! संज्ञाः प्रज्ञप्ताः ? गौतम ! दश संज्ञाः प्रज्ञप्ताः तद्यथा–आहारसंज्ञा भयसंज्ञा मैथुनसंज्ञा परिग्रहसंज्ञा क्रोधसंज्ञा मानसंज्ञा मायासंज्ञा लोभसंज्ञा ओघसंज्ञा लोकसंज्ञा  २ ०त्त घटाभावमात्रं प्रतीयते अर्थप्रसक्तनिषेधेन चाप्रसक्तस्य ॥

निर्युक्तिकृत् सूत्रावयवनिक्षेपार्थमाह—

दव्वे सचित्ताई भावेऽणुभवणजाणणा सण्णा। मति होइ जाणणा पुण अणुभवणा कम्मसंजुत्ता ॥३८॥

संज्ञा नामादिभेदाच्चतुर्द्धा, नामस्थापने क्षुण्णे, ज्ञशरीरभव्यशरीरव्यतिरिक्ता सचित्ताचित्तमिश्रभेदात्रिधा, सचित्तेन हस्तादिद्रव्येण पानभोजनादिसंज्ञा अचित्तेन ध्वजादिना मिश्रेण प्रदीपादिना, संज्ञानं—संज्ञा अवगम इतिकृत्वा, भावसंज्ञा पुनर्द्विधा—अनुभवनसंज्ञा ज्ञानसंज्ञा च, तत्राल्पव्याख्येयत्वात् तावत् ज्ञानसंज्ञां दर्शयति—'मइ होइ जाणणा पुण'त्ति, मननं मतिः—अवबोधः, सा च मतिज्ञानादिः पञ्चधा, तत्र केवलसंज्ञा क्षायिकी, शेषास्तु क्षायोपशमिक्यः, अनुभवनसंज्ञा तु स्वकृतकर्मोदयादिसमुत्था जन्तोर्जायते, सा च षोडशभेदेति दर्शयति—

आहार भय परिग्गह मेहुण सुख दुक्ख मोह वितिगिच्छा। कोह माण माय लोहे सोगे लोगे य धम्मोहे ॥३९॥

आहाराभिलाष आहारसंज्ञा, सा च तैजसशरीरनामकर्मोदयादसातोदयाच्च भवति, भयसंज्ञा त्रासरूपा, परिग्रहसंज्ञा मूर्छारूपा, मैथुनसंज्ञा स्त्र्यादिवेदोदयरूपा, एताश्च मोहनीयोदयात्, सुखदुःखसंज्ञे सातासातानुभवरूपे वेदनीयोदयजे, मोहसंज्ञा मिथ्यादर्शनरूपा मोहोदयात्, विचिकित्सासंज्ञा चित्तविप्लुतिरूपा मोहोदयात् ज्ञानावरणीयोदयाच्च, क्रोधसंज्ञा अप्रीतिरूपा, मानसंज्ञा गर्वरूपा, मायासंज्ञा वक्रतारूपा, लोभसंज्ञा गृद्धिरूपा, शोकसंज्ञा विप्रलापवैमनस्यरूपा, एता मोहोदयजाः, लोकसंज्ञा स्वच्छन्दघटितविकल्परूपा लौकिकाचरिता, यथा—न सन्त्यनपत्यस्य लोकाः, श्वानो यक्षाः, विप्रा देवाः, काकाः पितामहाः, बर्हिणां पक्षवातेन गर्भ इत्येवमादिका ज्ञानावरणक्षयोपशमान्मोहोदयाच्च भवति, धर्मसंज्ञा क्षमाद्यासेवनरूपा मोहनीयक्षयोपशमाज्जायते, एताश्चाविशेपो-

पादानात्पञ्चेन्द्रियाणां सम्यग्मिथ्यादृशां द्रष्टव्याः, ओघसंज्ञा तु अव्यक्तोपयोगरूपा वल्लिवितानारोहणादिलिङ्गा ज्ञानवरणीयाल्पक्षयोपशमसमुत्था द्रष्टव्येति। इह पुनर्ज्ञानसंज्ञयाऽधिकारो, यतः सूत्रे सैव निषिद्धा 'इह एकेषां नो संज्ञा-ज्ञानम्-अवबोधो भवती'ति ॥१॥

प्रतिषिद्धज्ञानविशेषावगमार्थमाह सूत्रम्—

तंजहा-पुरत्थिमाओ वा दिसाओ आगओ अहमंसि, दाहिणाओ वा दिसाओ आगओ अहमंसि, पच्चत्थिमाओ वा दिसाओ आगओ अहमंसि, उत्तराओ वा दिसाओ आगओ अहमंसि, उड्ढाओ वा दिसाओ आगओ अहमंसि, अहोदिसाओ वा आगओ अहमंसि, अण्णयरीओ वा दिसाओ अणुदिसाओ वा आगओ अहमंसि, एवमेगेसिं णो णायं भवति (सू० २)

"तंजहेत्यादि णो णायं भवती"ति यावत्, तद्यथेति प्रतिज्ञातार्थोदाहरणं, 'पुरत्थिमाउ'त्ति प्राकृतशैल्या मागधदेशीभाषानुवृत्त्या पूर्वस्या दिशोऽभिधायकात् पुरत्थिमशब्दात् पञ्चम्यन्तात्तसा निर्देशः, वाशब्द उत्तरपक्षापेक्षया विकल्पार्थः, यथा लोके भोक्तव्यं वा शयितव्यं वेति, एवं पूर्वस्या वा दक्षिणस्या वेति, दिशतीति दिक्, अतिसृजति व्यपदिशति द्रव्यं द्रव्यभागं वेति भावः ॥ तां निर्युक्तिकृन्निक्षेप्तुमाह—

नामं ठवणा दविए खित्ते तावे य पण्णवग भावे। एस दिसानिक्खेवो सत्तविहो होइ णायव्वो ॥४०॥

नामस्थापनाद्रव्यक्षेत्रतापप्रज्ञापकभावरूपः सप्तधा दिङ्निक्षेपो ज्ञातव्यः, तत्र सचित्तादेर्द्रव्यस्य दिगित्यभिधानं नामदिक्, चित्र-

५

१०

लिखितजम्बूद्वीपादेर्दिग्विभागस्थापनं स्थापनादिक् । द्रव्यदिग्निक्षेपार्थमाह—

**तेरसपएसियं खलु तावइएसुं भवे पएसेसुं । जं दव्वं ओगाढं जहण्णयं तं दसदिसागं ॥४१॥**

द्रव्यदिग् द्वेधा–आगमतो नोआगमतश्च, आगमतो ज्ञाताऽनुपयुक्तो, नोआगमतो ज्ञशरीरभव्यशरीरव्यतिरिक्ता त्वियम्–त्रयोदशप्रदेशिकं द्रव्यमाश्रित्य या प्रवृत्ता, खलुरवधारणे, त्रयोदशप्रदेशिकमेव दिक्, न पुनर्दशप्रदेशिकं यत् कैश्चिदुक्तमिति, प्रदेशाः–परमाणवस्तैर्निष्पादितं कार्यद्रव्यं तावत्स्वेव क्षेत्रप्रदेशेष्ववगाढं जघन्यं द्रव्यमाश्रित्य दशदिग्विभागपरिकल्पनातो द्रव्यदिगियमिति। तत्स्थापना ।(२)। त्रिबाहुकं नवप्रदेशिकमभिलिख्य चतसृषु दिक्ष्वेकैकगृहवृद्धिः कार्या ॥ क्षेत्रदिशमाह—

**अट्ठपएसो रुयगो तिरियं लोयस्स मज्झयारंमि । एस पभवो दिसाणं एसेव भवे अणुदिसाणं ॥४२॥**





तिर्यग्लोकमध्ये रत्नप्रभापृथिव्या उपरि बहुमध्यदेशे मेर्वन्तर्द्वौ सर्वक्षुल्लकप्रतरौ तयोरुपरितनस्य चत्वारः प्रदेशा गोस्तनाकारसंस्थाना अधस्तनस्यापि चत्वारस्तथाभूता एवेत्येषोऽष्टाकाशप्रदेशात्मकश्चतुरस्रो रुचको दिशामनुदिशां च प्रभव–उत्पत्तिस्थानमिति। स्थापना (३)। आसामभिधानान्याह—



**इंदग्गेई जम्मा य नेरुती वारुणी य वायव्वा । सोमा ईसाणावि य विमला य तमा य बोद्धव्वा ॥४३॥**

आसामाद्यैन्द्री, विजयद्वारानुसारेण शेषाः प्रदक्षिणतः सप्तावसेयाः, ऊर्ध्वं विमला (अधश्च) तमा बोद्धव्या इति ॥ आसामेव स्वरूपनिरूपणायाह—

**दुपएसाइ दुरुत्तर एगपएसा अणुत्तरा चेव । चउरो चउरो य दिसा चउराइ अणुत्तरा दुण्णि ॥४४॥**

चतस्रो महादिशो द्विप्रदेशाद्या द्विद्विप्रदेशोत्तरवृद्धाः, विदिशश्चतस्र एकप्रदेशरचनात्मिकाः 'अनुत्तरा' वृद्धिरहिताः, ऊर्द्ध्वाधोदिग्द्वयं त्वनुत्तरमेव चतुष्प्रदेशादिरचनात्मकम् ॥ किञ्च—

दिशास्वरूपं

अंतो साईआओ बाहिरपासे अपज्जवसिआओ। सव्वाणंतपएसा सव्वा य भवंति कडजुम्मा ॥४५॥

सर्वापि अन्तः–मध्ये सादिकाः, रुचकाद्या इतिकृत्वा, बहिश्च अलोकाकाशाश्रयणादपर्यवसिताः, 'सर्वाश्च' दशाप्यनन्तप्रदेशात्मिका भवन्ति, 'सव्वा य हवंति कडजुम्म'त्ति, सर्वासां दिशां प्रत्येकं ये प्रदेशास्ते चतुष्ककेनापह्रियमाणाश्चतुष्कावशेषा भवन्तीतिकृत्वा, तत्प्रदेशात्मिकाश्च दिश आगमसंज्ञया कडजुम्मत्तिशब्देनाभिधीयन्ते, तथा चागमः—"कइ णं भंते! जुम्मा पण्णत्ता?, गोयमा! चत्तारि जुम्मा पण्णत्ता, तंजहा–कडजुम्मे तेउए दावरजुम्मे कलिओए। से केणट्ठेणं भंते! एवं वुच्चइ?, गोयमा! जे णं रासी चउक्कगावहारेणं अवहीरमाणे अवहीरमाणे चउपज्जवसिए सिया से णं कडजुम्मे, एवं तिपज्जवसिए तेउए, दुपज्जवसिए दावरजुम्मे, एगपज्जवसिए कलिओए"त्ति ॥ पुनरप्यासां संस्थानमाह—

५

सगडुद्धीसंठिआओ महादिसाओ हवंति चत्तारि। मुत्तावली य चउरो दो चेव हवंति रुयगनिभा ॥४६॥

१०

महादिशश्चतस्रोऽपि शकटोर्द्धिसंस्थानाः, विदिशश्च मुक्तावलिनिभाः, ऊर्द्ध्वाधोदिग्द्वयं रुचकाकारमिति ॥ तापदिशमाह—

जस्स जओ आइच्चो उदेइ सा तस्स होइ पुव्वदिसा। जत्तो अ अत्थमेइ उ अवरदिसा सा उ णायव्वा ॥४७॥

[1] कति भदन्त! युग्मा प्रज्ञप्ता?, गौतम! चत्वारो युग्मा प्रज्ञप्ताः, तद्यथा–कृतयुग्म योज द्वापरयुग्म कल्योज। अथ केनार्थेन भदन्तैवमुच्यते?, गौतम! यो राशिश्चतुष्कापहारेणापह्रियमाणोऽपह्रियमाणश्चतुष्पर्यवसित स्यात् स कृतयुग्म, एव त्रिपर्यवसितस्त्र्योज, द्विपर्यवसितो द्वापरयुग्म, एकपर्यवसित कल्योज

दाहिणपासंमि य दाहिणा दिसा उत्तरा उ वामेणं। एया चत्तारि दिसा तावखित्ते उ अक्खाया ॥४८॥

तापयतीति तापः–आदित्यः तदाश्रिता दिक् तापदिक्, शेषं सुगमं, केवलं दक्षिणपार्श्वादिव्यपदेशः पूर्वाभिमुखस्येति द्रष्टव्यः॥ तापदिगङ्गीकरणेनान्योऽपि व्यपदेशो भवतीति प्रसङ्गत आह—

१५

जे मंदरस्स पुव्वेण मणुस्सा दाहिणेण अवरेण। जे आवि उत्तरेणं सव्वेसिं उत्तरो मेरू ॥४९॥

सव्वेसिं उत्तरेणं मेरू लवणो य होइ दाहिणओ। पुव्वेणं उट्ठेई अवरेणं अत्थमइ सूरो ॥५०॥

ये 'मन्दरस्य' मेरोः पूर्वेण मनुष्याः क्षेत्रदिगङ्गीकरणेन, रुचकापेक्षं पूर्वादिदिक्त्वं वेदितव्यं, तेषामुत्तरो मेरुर्दक्षिणेन लवण इति तापदिगङ्गीकरणेन, शेषं स्पष्टम् ॥ प्रज्ञापकदिशमाह—

जत्थ य जो पण्णवओ कस्सवि साहइ दिसासु य णिमित्तं। जत्तोमुहो य ठाई सा पुव्वा पच्छओ अवरा ॥५१॥

२०

प्रज्ञापको यत्र क्वचित् स्थितः दिशां बलात् कस्यचिन्निमित्तं कथयति स यदभिमुखस्तिष्ठति सा पूर्वा, पृष्ठतश्चापरेति, निमित्तकथनं चोपलक्षणम्, अन्योऽपि व्याख्याता ग्राह्य इति ॥ शेषदिक्साधनार्थमाह—



दाहिणपासंमि उ दाहिणा दिसा उत्तरा उ वामेणं। एयासिमन्तरेणं अण्णा चत्तारि विदिसाओ ॥५२॥

एयासिं चेव अट्ठण्हमंतरा अट्ठ हुंति अण्णाओ। सोलस सरीरउस्सयबाहल्ला सव्वतिरियदिसा ॥५३॥

हेट्ठा पायतलाणं अहोदिसा सीसउवरिमा उड्ढा। एया अट्ठारसवी पण्णवगदिसा मुणेयव्वा ॥५४॥

॥१३॥

एवं पकप्पिआणं दसण्ह अट्ठण्ह चेव य दिसाणं। नामाइं वुच्छामी जहक्कमं आणुपुव्वीए ॥५५॥

२६

पुव्वा य पुव्वदक्खिण दक्खिण तह दक्खिणावरा चेव। अवरा य अवरउत्तर उत्तर पुव्वुत्तरा चेव ॥५६॥
सामुत्थाणी कविला खेलिज्जा खलु तहेव अहिधम्मा। परियाधम्मा य तहा सावित्ती पण्णवित्ती य ॥५७॥
हेट्ठा नेरइयाणं अहोदिसा उवरिमा उ देवाणं। एयाइं नामाइं पण्णवगस्सा दिसाणं तु ॥५८॥

एताः सप्त गाथाः कण्ठ्याः, नवरं द्वितीयगाथायां सर्वतिर्यग्दिशां बाहल्यं-पिण्डः शरीरोच्छ्रयप्रमाणमिति ॥ साम्प्रतमासां संस्थानमाह—

सोलस तिरियदिसाओ सगडुद्धीसंठिया मुणेयव्वा। दो मल्लगमूलाओ उड्ढं अ अहेवि य दिसाओ ॥५९॥

षोडशापि तिर्यग्दिशः शकटोर्द्धिसंस्थाना बोद्धव्या, प्रज्ञापकप्रदेशे सङ्कटा बहिर्विशालाः, नारकदेवाख्ये द्वे एव ऊर्ध्वाधोगामिन्यौ शरावाकारे भवतः, यतः शिरोमूले पादमूले च स्वल्पत्वान्मल्लकबुध्नाकारे, गच्छन्त्यौ च विशाले भवत इति ॥ आसां सर्वासां तात्पर्यं यन्त्रकादवसेयं, तच्चेदम् (४) ॥ भावदिग्निरूपणार्थमाह—

मणुया तिरिया काया तहऽग्गबीया चउक्कगा चउरो। देवा नेरइया वा अट्ठारस होंति भावदिसा ॥६०॥

मनुष्याश्चतुर्भेदास्तद्यथा-सम्मूर्च्छनजाः कर्मभूमिजा अकर्म्मभूमिजाः अन्तरद्वीपजाश्चेति, तथा तिर्यञ्चो द्वीन्द्रियास्त्रीन्द्रियाश्चतुरिन्द्रियाः पञ्चेन्द्रियाश्चेति चतुर्द्धा, कायाः पृथिव्यप्तेजोवायवश्चत्वारः, तथाऽग्रमूलस्कन्धपर्वबीजाश्चत्वार एव, एते षोडश देवनारकप्रक्षेपादष्टादश, एभिर्भावैर्भवनाज्जीवो व्यपदिश्यत इति भावदिगष्टादशभेदेति ॥ अत्र च सामान्यदिग्ग्रहणेऽपि यस्यां दिशि जीवानामविगानेन गत्यागती स्पष्टे सर्वत्र सम्भवतस्तयैवेहाधिकार इति तामेव निर्युक्तिकृत् साक्षाद्दर्शयति, भावदिक्काविनाभाविनी

दिशां नामानि संस्थानानि भावदिशः ५

१०

सामर्थ्यादधिकृतैव, यतस्तदर्थमन्या दिशश्चिन्त्यत इति, अत आह—

**पण्णवगदिसऽट्ठारस भावदिसाओऽवि तत्तिया चेव। इक्किकं विंधेज्जा हवंति अट्ठारसऽट्ठारा ॥६१॥**

**पण्णवगदिसाए पुण अहिगारो एत्थ होइ णायव्वो। जीवाण पुग्गलाण य एयासु गयागई अत्थि ॥६२॥**

प्रज्ञापकापेक्षया अष्टादशभेदा दिशः, अत्र च भावदिशोऽपि तावत्प्रमाणा एव प्रत्येकं सम्भवन्तीत्यतः एकैकां प्रज्ञापकदिशं भावदिगष्टादशकेन 'विन्ध्येत्' ताडयेद्, अतोऽष्टादशाष्टादशकाः, ते च संख्यया त्रीणि शतानि चतुर्विंशत्यधिकानि भवन्तीति, एतच्चोपलक्षणं, तापदिगादावपि यथासम्भवमायोजनीयमिति। क्षेत्रदिशि तु चतसृष्वेव महादिक्षु सम्भवो, न विदिगादिषु, तासामेकप्रदेशिकत्वाच्चतुष्प्रदेशिकत्वाच्चेति गाथाद्वयार्थः॥ अयं च दिक्संयोगकलापः 'अण्णयरीओ दिसाओ आगओ अहमंसी'त्यनेन परिगृहीतः, सूत्रावयवार्थश्चायम्-इह दिग्ग्रहणात् प्रज्ञापकदिशश्चतस्रः पूर्वादिका ऊर्ध्वाधोदिशौ च परिगृह्यन्ते, भावदिशस्त्वष्टादशापि, अनुदिग्ग्रहणात्तु प्रज्ञापकविदिशो द्वादशेति, तत्रासंज्ञिनां नैषोऽवबोधोऽस्ति, संज्ञिनामपि केषाञ्चिद्भवति केषाञ्चिन्नेति, यथा अहममुष्या दिशः समागत इहेति। 'एवमेगेसिं णो णायं भवइत्ति' 'एव'मित्यनेन प्रकारेण, प्रतिविशिष्टदिग्विदिगागमनं नैकेषां विदितं भवतीत्येतदुपसंहारवाक्यम्, एतदेव निर्युक्तिकृदाह—



**केसिंचि नाणसण्णा अत्थि केसिंचि नत्थि जीवाणं। कोऽहं परंमि लोए आसी कयरा दिसाओ वा? ॥६३॥**

केषाञ्चिज्जीवानां ज्ञानावरणीयक्षयोपशमवतां ज्ञानसंज्ञाऽस्ति, केषाञ्चित्तु तदावृतिमतां न भवतीति। यादृग्भूता संज्ञा न भवति

१ औपपातिकत्रयभिप्रायेणैष तृतीयसूत्रावतरणभागः, चूर्ण्यभिप्रायेण तु 'भविस्सामि' इति पर्यन्त उपसंहारः, 'भवति' इति 'तजहा इति' चाधिकम.

तां दर्शयति–कोऽहं परस्मिन् 'लोके' जन्मनि मनुष्यादिरासम् ?, अनेन भावदिग् गृहीता, कतरस्या वा दिशः समायात इत्यनेन तु प्रज्ञापकदिगुपात्तेति, यथा कश्चिन्मदिरामदघूर्णितलोललोचनोऽव्यक्तमनोविज्ञानो रथ्यामार्गनिपतितस्तच्छर्यांकृष्टश्वगणावलिह्यमानवदनो गृहमानीतो मदात्यये न जानाति कुतोऽहमागत इति, तथा प्रकृतो मनुष्यादिरपीति गाथार्थः ॥ न केवलमेषैव संज्ञा नास्ति, अपराऽपि नास्तीति सूत्रकृदाह—

**अत्थि मे आया उववाइए, नत्थि मे आया उववाइए, के अहं आसी ? के वा इओ चुए इह पेच्चा भविस्सामि ? ( सूत्रं० ३ )**

'अस्ति' विद्यते 'ममे'त्यनेन षष्ठ्यन्तेन शरीरं निर्दिशति, ममास्य शरीरकस्याधिष्ठाता, अतति–गच्छति सततगतिप्रवृत्त आत्मा–जीवः अस्तीति, किंभूतः ?–'औपपातिकः' उपपातः–प्रादुर्भावो जन्मान्तरसङ्क्रान्तिः, उपपाते भव औपपातिक इति, अनेन संसारिणः स्वरूपं दर्शयति, स एवंभूत आत्मा ममास्ति नास्तीति च, एवंभूता संज्ञा केषाञ्चिदज्ञानावष्टब्धचेतसा न जायत इति । तथा 'कोऽहं' नारकतिर्यग्मनुष्यादिः पूर्वजन्मन्यासं ?, को वा देवादिः 'इतो' मनुष्यादेर्जन्मनः 'च्युतो' विनष्ट 'इह' संसारे 'प्रेत्य' जन्मान्तरे भविष्यामि' उत्पत्स्ये इति, एषा च संज्ञा न भवतीति ॥ इह च यद्यपि सर्वत्र भावदिशाऽधिकार प्रज्ञापकदिशा च तथापि पूर्वसूत्रे साक्षात्प्रज्ञापकदिगुपात्ता, अत्र तु भावदिगित्यवगन्तव्यम् । ननु च अत्र संसारिणा दिग्विदिगागमनादिजा विशिष्टा संज्ञा निषिध्यते न सामान्यसंज्ञेति, एतच्च संज्ञिनि धर्मिण्यात्मनि सिद्धे सति भवति, 'सति धर्मिणि धर्माश्चिन्त्यन्त' इति वचनात्, स च प्रत्य-

गमनादि संज्ञा औपपातिकादि संज्ञा

५

१०

क्षादिप्रमाणगोचरातीतत्वाद् दुरुपपादः, तथाहि—नामावध्यक्षेणार्थसाक्षात्कारिणा विषयीक्रियते, तस्यातीन्द्रियत्वाद्, अतीन्द्रियत्वं च स्वभावविप्रकृष्टत्वाद्, अतीन्द्रियत्वादेव च तदव्यभिचारिकार्यादिलिङ्गसम्बन्धग्रहणासम्भवात् नाप्यनुमानेन, तस्याप्रत्यक्षत्वे तत्सामान्यग्रहणशक्त्यनुपपत्तेः नाप्युपमानेन, आगमस्यापि विवक्षायां प्रतिपाद्यमानायामनुमानान्तर्भावाद्, अन्यत्र च बाह्येऽर्थे सम्बन्धाभावादप्रमाणत्वं, प्रमाणत्वे वा परस्परविरोधित्वान्नाप्यागमेन, तमन्तरेणापि सकलार्थोपपत्तेर्नाप्यर्थापत्त्या, तदेवं प्रमाणपञ्चकातीतत्वात् षष्ठप्रमाणविषयत्वादभाव एवात्मनः। प्रयोगश्चायम्—नास्त्यात्मा, प्रमाणपञ्चकविषयातीतत्वात्, खरविषाणवदिति, तदभावे च विशिष्टसंज्ञाप्रतिषेधाभावसम्भवेनानुत्थानमेव सूत्रस्येति, एतत्सर्वमनुपासितगुरोर्वचः, तथाहि—प्रत्यक्ष एवात्मा, तद्गुणस्य ज्ञानस्य स्वसंवित्सिद्धत्वात्, स्वसंविदितश्च विषयव्यवस्थितयो, घटपटादीनामपि रूपादिगुणप्रत्यक्षत्वादेवाध्यक्षत्वमिति, मरणाभावप्रसङ्गाच्च न भूतगुणश्चैतन्यमाशङ्कनीयं, तेषां सदा सन्निधानसम्भवादिति, हेयोपादेयपरिहारोपादानप्रवृत्तेश्चानुमानेन परात्मनि सिद्धिर्भवतीति, एवमनयैव दिशोपमानादिकमपि स्वधिया स्वविषये यथासम्भवमायोज्यं, केवलं मौनीन्द्रेणानेनैवागमेन विशिष्टसंज्ञानिषेधद्वारेण अहमिति चात्मोल्लेखेनात्मसद्भावः प्रतिपादितः, शेषागमानां चानाप्तप्रणीतत्वादप्रामाण्यमेवेति। अत्र च अस्त्यात्मेत्यनेन क्रियावादिनः सप्रभेदाः नास्तीत्यनेन चाक्रियावादिन एतदन्तःपातित्वाच्चाज्ञानिकवैनयिकाश्च सप्रभेदा उपक्षिप्ताः, ते चामी—'असियसयं किरियाणं अकिरियवाईण होइ चुलसीई। अन्नाणिय सत्तट्ठी वेणइयाणं च बत्तीसा ॥ १ ॥' तत्र जीवाजीवाश्रवबन्धपुण्यपापसंवरनिर्जरामोक्षाख्या नव पदार्थाः स्वपरभेदाभ्यां नित्यानित्यविकल्पद्वयेन च कालनियतिस्वभावेश्वरात्माश्रयणादशीत्युत्तरं भेदशतं भवति क्रियावादिनाम्, एते चास्तित्ववादिनोऽभिधीयन्ते, इयमत्र भावना—अस्ति जीवः स्वतो नित्यः कालतः १

अस्ति जीवः स्वतोऽनित्यः कालतः २ अस्ति जीवः परतो नित्यः कालतः ३ अस्ति जीवः परतोऽनित्यः कालतः ४, इत्येवं कालेन चत्वारो भेदा लब्धाः, एवं नियतिस्वभावेश्वरात्मभिरप्येकैकेन चत्वारश्चत्वारो विकल्पा लभ्यन्ते, एते च पञ्च चतुष्ककका विंशतिर्भवति, इयं च जीवपदार्थेन लब्धा, एवमजीवादयोऽप्यष्टौ प्रत्येकं विंशतिभेदा भवन्ति, ततश्च नव विंशतयः शतमशीत्युत्तरं भवति १८०, तत्र स्वत इति स्वेनैव रूपेण जीवोऽस्ति, न परोपाध्यपेक्षया ह्रस्वत्वदीर्घत्वे इव, नित्यः–शाश्वतो, न क्षणिकः, पूर्वोत्तरकालयोरवस्थितत्वात्, कालत इति काल एव विश्वस्य स्थित्युत्पत्तिप्रलयकारणम्, उक्तं च–"कालः पचति भूतानि, कालः संहरते प्रजाः। कालः सुप्तेषु जागर्त्ति, कालो हि दुरतिक्रमः ॥१॥" स चातीन्द्रियो युगपच्चिरक्षिप्रक्रियाभिव्यङ्ग्यो हिमोष्णवर्षाव्यवस्थाहेतुः क्षणलवमुहूर्त्तयामाहोरात्रमासर्त्वयनसंवत्सरयुगकल्पपल्योपमसागरोपमोत्सर्पिण्यवसर्पिणीपुद्गलपरावर्त्तातीतानागतवर्त्तमानसर्वाद्धादिव्यवहाररूपः १। द्वितीयविकल्पे तु कालादेवात्मनोऽस्तित्वमभ्युपेयं, किं त्वनित्योऽसाविति विशेषोऽयं पूर्वविकल्पात् २। तृतीयविकल्पे तु परत एवास्तित्वमभ्युपगम्यते, कथं पुनः परतोऽस्तित्वमात्मनोऽभ्युपेयते?, नन्वेतत्प्रसिद्धमेव सर्वपदार्थानां परपदार्थस्वरूपापेक्षया स्वरूपपरिच्छेदो, यथा दीर्घत्वापेक्षया ह्रस्वत्वपरिच्छेदो ह्रस्वत्वापेक्षया च दीर्घत्वस्येति, एवमेव चानात्मनः स्तम्भकुम्भादीन् समीक्ष्य तद्व्यतिरिक्ते वस्तुन्यात्मबुद्धिः प्रवर्त्तत इति, अतो यदात्मनः स्वरूपं तत् परत एवावधार्यते, न स्वत इति ३। चतुर्थविकल्पोऽपि प्राग्वदिति चत्वारो विकल्पाः ४। तथाऽन्ये नियतित एवात्मनः स्वरूपमवधारयन्ति, का पुनरियं नियतिरिति, उच्यते, पदार्थानामवश्यंतया यद्यथाभवने प्रयोजककर्त्री नियतिः, उक्तं च–"प्राप्तव्यो नियतिबलाश्रयेण योऽर्थः, सोऽवश्यं भवति नृणां शुभोऽशुभो वा। भूतानां महति कृतेऽपि हि प्रयत्ने, नाभाव्यं भवति न भाविनोऽस्ति नाशः ॥१॥" इयं च मस्करिपरिव्राण्म-

क्रियावादिनः

५

१०

तानुसारिणी प्राय इति। अपरे पुनः स्वभावादेव संसारव्यवस्थामभ्युपयन्ति, कः पुनरयं स्वभावः?, वस्तुनः स्वत एव तथापरिणतिभावः स्वभावः, उक्तं च—"कः कण्टकानां प्रकरोति तैक्ष्ण्यं, विचित्रभावं मृगपक्षिणां च। स्वभावतः सर्व्वमिदं प्रवृत्तं, न कामचारोऽस्ति कुतः प्रयत्नः? ॥१॥ स्वभावतः प्रवृत्तानां, निवृत्तानां स्वभावतः। नाहं कर्त्तेति भूतानां, यः पश्यति स पश्यति ॥२॥ केनाञ्चितानि नयनानि मृगाङ्गनानां?, कोऽलङ्करोति रुचिराङ्गरुहान् मयूरान्?। कश्चोत्पलेषु दलसन्निचयं करोति?, को वा दधाति विनयं कुलजेषु पुंस्सु? ॥३॥" तथाऽन्येऽभिदधते—समस्तमेतज्जीवादि ईश्वरात्प्रसूतं, तस्मादेव स्वरूपेऽवतिष्ठते, कः पुनरयमीश्वरः?, अणिमाद्यैश्वर्ययोगादीश्वरः, उक्तं च—"अज्ञो जन्तुरनीशः स्यादात्मनः सुखदुःखयोः। ईश्वरप्रेरितो गच्छेच्छ्वभ्रं वा स्वर्गमेव वा ॥१॥" तथाऽन्ये ब्रुवते—न जीवादयः पदार्थाः कालादिभ्यः स्वरूपं प्रतिपद्यन्ते, किं तर्हि?, आत्मनः, कः पुनरयमात्मा?, आत्माद्वैतवादिनां विश्वपरिणतिरूपः, उक्तञ्च—"एक एव हि भूतात्मा, भूते भूते व्यवस्थितः। एकधा बहुधा चैव, दृश्यते जलचन्द्रवत् ॥१॥" तथा—"पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्य"मित्यादि। एवमस्त्यजीवः, स्वतः नित्यः कालत इत्येवं सर्वत्र योज्यम्॥

तथा अक्रियावादिनो—नास्तित्ववादिनः, तेषामपि जीवाजीवाश्रवबन्धसंवरनिर्जरामोक्षाख्याः सप्त पदार्थाः स्वपरभेदद्वयेन तथा कालयदृच्छानियतिस्वभावेश्वरात्मभिः षड्भिश्चिन्त्यमानाश्चतुरशीतिविकल्पा भवन्ति, तद्यथा—नास्ति जीवः स्वतः कालतः नास्ति जीवः परतः कालत इति कालेन द्वौ लब्धौ, एवं यदृच्छानियत्यादिष्वपि द्वौ द्वौ भेदौ प्रत्येकं भवतः, सर्वेऽपि जीवपदार्थे द्वादश भवन्ति, एवमजीवादिष्वपि प्रत्येकं द्वादशैते, सप्त द्वादशकाश्चतुरशीतिरिति ८४। अयमत्रार्थः—नास्ति जीवः स्वतः कालत इति, इह पदार्थानां लक्षणेन सत्ता निश्चीयते कार्यतो वा, न चात्मनस्तादृगस्ति किञ्चिल्लक्षणं येन सत्तां प्रतिपद्येमहि, नापि कार्य्यमणूनामिव महीध्रादि



प्र. आ. १७

अक्रियावादितः

सम्भवति, यच्च लक्षणकार्याभ्यां नाभिगम्यते वस्तु तन् नास्त्येव, वियदिन्दीवरवत्, तस्मान्नास्त्यात्मेति। द्वितीयविकल्पः, अपि यच्च सतो नात्मानं बिभर्त्ति गगनारविन्दादिकं तत् परतोऽपि नास्त्येव, अथवा सर्वपदार्थानामेव परभागादर्शनात्सर्वार्विग्भागसूक्ष्मत्वाच्चोभयानुपलब्धेः सर्वानुपलब्धितो नास्तित्वमध्यवसीयते, उक्तं च–"यावद् दृश्यं परस्तावद्भागः स च न दृश्यते" इत्यादि, तथा यदृच्छातोऽपि नास्तित्वमात्मानः, का पुनर्यदृच्छा?, अनभिसन्धिपूर्विका अर्थप्राप्तिर्यदृच्छा, "अतर्कितोपस्थितमेव सर्वं, चित्रं जनानां सुखदुःखजातम्। काकस्य तालेन यथाऽभिघातो, न बुद्धिपूर्वोऽत्र वृथाऽभिमानः॥१॥ सत्यं पिशाचाः स्म वने वसामो, भेरीं कराग्रैरपि न स्पृशामः। यदृच्छया सिद्ध्यति लोकयात्रा, भेरीं पिशाचाः परिताडयन्ति॥२॥" यथा काकतालीयमबुद्धिपूर्वकं, न काकस्य बुद्धिरस्ति–मयि तालं पतिष्यति, नापि तालस्याभिप्रायः–काकोपरि पतिष्यामि, अथ च तत्तथैव भवति, एवमन्यदप्यतर्कितोपनतमजाकृपाणीयमातुरभेषजीयमन्धकण्टकीयमित्यादि द्रष्टव्यम्, एवं सर्वं जातिजरामरणादिकं लोके यादृच्छिकं काकतालीयादिकल्पमवसेयमिति। एवं नियतिस्वभावेश्वरात्मभिरप्यात्मा निराकर्त्तव्यः॥

तथा अज्ञानिकानां सप्तषष्टिर्भेदाः, ते चामी–जीवादयो नव पदार्थाः, उत्पत्तिश्च दशमी, सत् असद् सदसत् अवक्तव्यः सदवक्तव्यः असदवक्तव्यः सदसदवक्तव्य इत्येतैः सप्तभिः प्रकारैर्विज्ञातुं न शक्यन्ते, न च विज्ञातैः प्रयोजनमस्ति, भावना चेयम्–सन् जीव इति को वेत्ति? किं वा तेन ज्ञातेन?, असन् जीव इति को जानाति? किं वा तेन ज्ञातेनेत्यादि, एवमजीवादिष्वपि प्रत्येकं सप्त विकल्पाः, नव सप्तकास्त्रिषष्टिः, अमी चान्ये चत्वारस्त्रिषष्टिमध्ये प्रक्षिप्यन्ते, तद्यथा–सती भावोत्पत्तिरिति को जानाति? किं वाऽनया ज्ञातया? एवमसती सदसती अवक्तव्या भावोत्पत्तिरिति को वेत्ति? किं वाऽनया ज्ञातयेति, शेषविकल्पत्रयमुत्पत्त्युत्तरकालं पदा-

अक्रियाऽज्ञानवादिनः

५

१०

र्थविषयतापेक्षमतोऽत्र न सम्भवतीति नोक्तम्, एतच्चतुष्टयप्रक्षेपात् सप्तषष्टिर्भवन्ति । तत्र सन् जीव इति को वेत्ति ? इत्यस्यायमर्थः– न कस्यचिद्विशिष्टं ज्ञानमस्ति योऽतीन्द्रियान् जीवादीनवभोत्स्यते,न च तैर्ज्ञातैः किञ्चित्फलमस्ति, तथाहि—यदि नित्यः सर्वगतोऽमूर्तो ज्ञानादिगुणोपेत एतद्गुणव्यतिरिक्तो वा ? ततः कतमस्य पुरुषार्थस्य सिद्धिरिति, तस्मादज्ञानमेव श्रेयः । अपि च तुल्येऽप्यपराधे अकामकरणे लोके स्वल्पो दोषो, लोकोत्तरेऽपि आकुट्टिकाऽनाभोगमहमाकारादिषु क्षुल्लकभिक्षुस्थविरोपाध्यायसूरीणां यथाक्रममुत्तरोत्तरं प्रायश्चित्तमित्येवमन्येष्वपि विकल्पेष्वायोज्यम् ॥

तथा वैनयिकानां द्वात्रिंशद्भेदाः, ते चानेन विधिना भावनीयाः-सुरनृपयतिज्ञातिस्थविराधममातृपितृष्वेतेषु मनोवाक्कायप्रदान-चतुर्विधविनयकरणात्, तद्यथा–देवानां विनयं करोति मनसा वाचा कायेन, तथा देशकालोपपन्नेन दानेनेत्येवमादि । एते च विनयादेव स्वर्गापवर्गमार्गमभ्युपयन्ति, नीचैर्वृत्त्यनुत्सेकलक्षणो विनयः, सर्वत्र चैवंविधेन विनयेन देवादिषु प्रतिष्ठमानः स्वर्गापवर्गभाग् भवति, उक्तं च–"विणया णाणं णाणाओ दंसणं दंसणाहि चरणं च । चरणाहिंतो मोक्खो मोक्खे सोक्खं अणाबाहं ॥१॥"

अत्र च क्रियावादिनामस्तित्वे सत्यपि केषाञ्चित्सर्वगतो नित्योऽनित्यः कर्त्ताऽकर्त्ता मूर्त्तोऽमूर्त्तः श्यामाकतण्डुलमात्रोऽङ्गुष्ठपर्वमात्रो दीपशिखोपमो हृदयाधिष्ठान इत्यादिकः, (भेदः, परं) अस्ति चौपपातिकश्च, अक्रियावादिनां त्वात्मैव न विद्यते, कुतः पुनरौपपातिकत्वम् ?, अज्ञानिकास्तु नात्मानं प्रति विप्रतिपद्यन्ते, किन्तु तज्ज्ञानमकिञ्चित्करमेषामिति, वैनयिकानामपि नात्माऽस्तित्वे विप्रतिपत्तिः, किन्त्वन्यद् मोक्षसाधनं विनयादृते न सम्भवतीति प्रतिपन्नाः । तत्रानेन सामान्यात्मास्तित्वप्रतिपादनेनाक्रियावादिनो निरस्ता द्रष्ट-



* विनयात् ज्ञानं ज्ञानात् दर्शनं दर्शनात् (ज्ञानदर्शनाभ्यां) चरणं च । चरणात् (ज्ञानदर्शनचारित्रेभ्यः) मोक्षो मोक्षे सौख्यमनाबाधम् ॥१॥

ञ्याः, आत्मास्तित्वानभ्युपगमे च–"शास्ता शास्त्रं शिष्यः प्रयोजनं वचनहेतुदृष्टान्ताः। सन्ति न शून्यं ब्रुवतस्तदभावाचाप्रमाणं स्यात् ॥१॥ प्रतिषेद्धृप्रतिषेधौ स्तश्चेच्छून्यं कथं भवेत्सर्वम्?। तदभावेन तु सिद्धा अप्रतिषिद्धा जगत्यर्थाः ॥२॥" एवं शेषाणामप्यत्रैव यथासम्भवं निराकरणमुत्प्रेक्ष्यमिति ॥ ३ ॥ गतमानुषङ्गिकं, प्रकृतमनुस्रियते—तत्रेह 'एवमेगेसि णो णायं भवइ' इत्यनेन केषाञ्चिदेव संज्ञानिषेधात् केषाञ्चित्तु भवतीत्युक्तं भवति, तत्र सामान्यसंज्ञायाः प्रतिप्राणि सिद्धत्वात् तत्कारणपरिज्ञानस्य चेहाकिञ्चित्करत्वाद्, विशिष्टसंज्ञायास्तु केषाञ्चिदेव भावात् तस्याश्च भवान्तरगाम्यागामस्पष्टप्रतिपादने सोपयोगित्वाद् सामान्यसंज्ञाकारणप्रतिपादनमनादृत्य विशिष्टसंज्ञायाः कारणं सूत्रकृद्दर्शयितुमाह—

संज्ञाकारणानि सूत्रं ४

५

**से जं पुण जाणेज्जा सह संमइयाए परवागरणेणं अण्णेसिं अंतिए वा सोच्चा तंजहा–पुरत्थिमाओ वा दिसाओ आगओ अहमंसि, जाव अण्णयरीओ दिसाओ अणुदिसाओ वा आगओ अहमंसि, एवमेगेसिं जं णायं भवति–अत्थि मे आया उववाइए, जो इमाओ (दिसाओ) अणुदिसाओ वा अणुसंचरइ, सव्वाओ दिसाओ अणुदिसाओ, सोऽहं (सू० ४)**

१०

'से जं पुण जाणेज्जत्ति सूत्रं यावत् सोऽह'मिति 'से' इति निर्देशो मागधशैल्या प्रथमैकवचनान्तः, स इत्यनेन च यः प्राग्निर्दिष्टो ज्ञाता विशिष्टक्षयोपशमादिमान् स प्रत्यवमृश्यते, यदित्यनेनापि यत् प्राग्निर्दिष्टं दिग्विदिगागमनं, तथा कोऽहमभूवमतीतजन्मनि देवो नारकस्तिर्यग्योनो मनुष्यो वा? स्त्री पुमान्नपुंसको वा?, को वाऽभूतो मनुष्यजन्मनः प्रभ्रष्टोऽहं प्रेत्य देवादिर्भविष्यामीत्ये-

आ. १

तत्परामृश्यते, 'जानीयाद्' अवगच्छेद्, इदमुक्तं भवति–न कश्चिदनादौ संसृतौ पर्यटन् असुमान् दिगागमनादिकं जानीयात्, यः पुनर्जानीयात् स एव 'सह सम्मइयाए'त्ति सहशब्दः सम्बन्धवाची, सदिति प्रशंसाया, मतिः–ज्ञानम्, अयमत्र वाक्यार्थः–आत्मना सह सदा या सन्मतिर्वर्तते तया सन्मत्या कश्चिज्जानीते, सहशब्दविशेषणाच्च सदाऽऽत्मस्वभावत्वं मतेरावेदितं भवति, न पुनर्यथा वैशेषिकाणां व्यतिरिक्ता सती समवायवृत्त्याऽऽत्मनि समवेतेति। यदिवा 'सम्मइए'त्ति स्वकीयया मत्या स्वमत्येति, तत्र भिन्नमप्यथादिकं स्वकीयं दृष्टमतः सहशब्दविशेषणं, सहशब्दश्चासमस्त इति, सत्यपि चात्मनः सदा मतिसन्निधाने प्रबलज्ञानावरणावृतत्वात् न सदा विशिष्टोऽवबोध इति, सा पुनः सन्मतिः स्वमतिर्वा अवधिमनःपर्यायकेवलज्ञानजातिस्मरणभेदाच्चतुर्विधा ज्ञेया, तत्रावधिमनःपर्यायकेवलानां स्वरूपमन्यत्र विस्तरेणोक्तं, जातिस्मरणं त्वाभिनिबोधिकविशेषः, तदेवं चतुर्विधया मत्याऽऽत्मनः कश्चिद्विशिष्टदिग्गत्यागती जानाति, कश्चिच्च परः–तीर्थकृत्सर्वज्ञः, तस्यैव परमार्थतः परशब्दवाच्यत्वात्परत्वं, तस्य तेन वा व्याकरणम्–उपदेशस्तेन जीवास्तद्भेदाश्च–पृथिव्यादीन् तद्गत्यागती च जानाति, अपरः पुनः 'अन्येषां' तीर्थकृद्व्यतिरिक्तानामतिशयज्ञानिनामन्तिके श्रुत्वा जानातीति, यच्च जानाति तत् सूत्रावयवेन दर्शयति–तद्यथा–पूर्वस्या दिश आगतोऽहमस्मि, एवं दक्षिणस्याः पश्चिमायाः उत्तरस्या ऊर्ध्वदिशोऽधोदिशोऽन्यतरस्या दिशोऽनुदिशो वाऽऽगतोऽहमस्मीत्येवमेकेषां विशिष्टक्षयोपशमादिमतां तीर्थकरान्यातिशयज्ञानिबोधितानां च ज्ञानं भवति, तथा प्रतिविशिष्टदिगागमनपरिज्ञानानन्तरमेषामेतदपि ज्ञानं भवति, यथा अस्ति मेऽस्य शरीरकस्याधिष्ठाता ज्ञानदर्शनोपयोगलक्षण 'उपपादुको' भवान्तरसंक्रातिभाग् अमर्वगतो भोक्ता मूर्त्तिरहितोऽविनाशी शरीरमात्रव्यापीत्यादिगुणवानात्मेति। स च द्रव्यकषाययोगोपयोगज्ञानदर्शनचारित्रवीर्यात्मभेदादष्टधा, तत्रोपयोगात्मना बाहुल्येनेहाधिकारः



१५

२०



२६

शेषास्तु तदंशतयोपयुज्यन्त इति उपन्यस्ताः । तथा अस्ति च ममात्मा, योऽमुष्या दिशोऽनुदिशश्च सकाशाद् 'अनुसञ्चरति' गतिप्रायोग्यकर्मोपादानाद् अनु-पश्चात् सञ्चरति अनुसञ्चरति, पाठान्तरं वा 'अणुसंसरइ'त्ति दिग्विदिशां गमनं भावदिगागमनं वा स्मरतीत्यर्थः । साम्प्रतं सूत्रावयवेन पूर्वसूत्रोक्तमेवार्थमुपसंहरति-सर्वस्या दिशः सर्वस्याश्चानुदिशो य आगतोऽनुसञ्चरति अनुसंसरतीति वा सः 'अह'-मित्यारमोल्लेखः, अहंप्रत्ययग्राह्यत्वादात्मन', अनेन पूर्वाद्याः प्रज्ञापकदिशः सर्वा गृहीताः भावदिशश्चेति । इममेवार्थं निर्युक्तिकृद्दर्शयितुमना गाथात्रितयमाह—

दिगागत्यादिहेतवः

५

जाणइ सयं मईए अन्नेसिं वावि अन्तिए सोचा । जाणगजणपण्णविओ जीवं तह जीवकाए वा ॥६४॥

इत्थ य सह संमइअत्ति जं एअं तत्थ जाणणा होई । ओहीमणपज्जवनाणकेवले जाइसरणे य ॥६५॥

परवइ वागरणं पुण जिणवागरणं जिणा परं नत्थि। अण्णेसिं सोचंतिय जिणेहिँ सव्वो परो अण्णो ॥६६॥

कश्चिदनादिसंसृतौ पर्यटन्नवध्यादिकया चतुर्विधया स्वकीयया मत्या जानाति । अनानुपूर्वीन्यायप्रकटनार्थं पश्चादुपात्तमप्यन्येषामित्येतत्पदं तावदाचष्टे—'अन्येषां वा' अतिशयज्ञानिनामन्तिके श्रुत्वा जानाति, तथा 'जाणगजणपण्णविओ' इत्यनेन परव्याकरणमुपात्तं, तेनायमर्थो-ज्ञापकः-तीर्थकृत् तत्प्रज्ञापितश्च जानाति, यज्जानाति तत् स्वत एव दर्शयति-सामान्यतो 'जीव'-मिति, अनेन चाधिकृतोद्देशकस्यार्थाधिकारमाह, तथा 'जीवकायांश्च' पृथ्वीकायादीन् इति, अनेन चोत्तरेषां षण्णामप्युद्देशकानां यथाक्रममधिकारार्थमाहेति, अत्र च 'सह सम्मइए'त्ति सूत्रे यत्पदं तत्र 'जाणणत्ति' ज्ञानमुपात्तं भवति, 'मनि ज्ञाने' मननं मतिरितिकृत्वा, तच्च किंभूतमिति दर्शयति—'अवधिमनःपर्यायकेवलजातिस्मरणरूप'मिति, तत्रावधिज्ञानी संख्येयानसंख्येया वा भवान्

१०

जानाति, एवं मनःपर्यायज्ञान्यपि, केवली तु नियमतोऽनन्तान्, जातिस्मरणस्तु नियमतः संख्येयानिति, शेषं स्पष्टम्। अत्र च सहसम्मत्यादिपरिज्ञाने सुखप्रतिपत्त्यर्थं त्रयो दृष्टान्ताः प्रदर्श्यन्ते, तद्यथा—वसन्तपुरे नगरे जितशत्रू राजा, धारणी नाम महादेवी, तयोर्द्धर्मरुच्यभिधानः सुतः, स च राजा अन्यदा तापसत्वेन प्रव्रजितुमिच्छुर्द्धर्मरुचिं राज्ये स्थापयितुमुद्यतः, तेन च जननी पृष्टा किमिति तातो राज्यश्रियं त्यजति?, तयोक्तम्-किमनया चपलया नारकादिसकलदुःखहेतुभूतया स्वर्गापवर्गमार्गार्गलया अवश्यमपायिन्या परमार्थत इहलोकेऽप्यभिमानमात्रफलयेत्यतो विहायैनां सकलसुखसाधनं धर्मं कर्तुमुद्यतः, धर्मरुचिस्तदाकर्ण्योक्तवान् यद्येवं किमहं तातस्यानिष्टो? येनैवंभूतां सकलदोषाश्रयिणीं मयि नियोजयति, सकलकल्याणहेतोर्द्धर्मान् प्रच्यावयतीत्यभिधाय पित्राऽनुज्ञातस्तेन सह तापसाश्रममगात्, तत्र च सकलामतापसक्रिया यथोक्ताः पालयन्नास्ते, अन्यदाऽमावास्यायाः पूर्वाह्ने केनचित्तापसेनोद्घुष्टम्—यथा भो भोः तापसाः! श्वोऽनाकुट्टिर्भविता, अतोऽद्यैव समित्कुसुमकुशकन्दफलमूलाद्याहरणं कुरुत, एतद्वाकर्ण्य धर्मरुचिना जनकः पृष्टः—तात! केयमनाकुट्टिरिति, तेनोक्तम्-पुत्र! कन्दफलादीनामच्छेदनं, तद्धि अमावास्यादिके विशिष्टे पर्वदिवसे न वर्तते, सावद्यत्वात् छेदनादिक्रियायाः, श्रुत्वा चैतदसावचिन्तयत्—यदि सर्वदाऽनाकुट्टिः स्याच्छोभनं भवेद्, एवमध्यवसायिनस्तस्यामावास्यायां तपोवनासन्नपथेन गच्छतां साधूनां दर्शनमभूत्, ते च तेनाभिहिताः—किमद्य भवतामनाकुट्टिर्न सञ्जाता? येनाटवीं प्रस्थिताः, तैरप्यभिहितम्—'यथाऽस्माकं यावज्जीवमनाकुट्टि'रित्यभिधायातिक्रान्ताः साधवः, तस्य च तदाकर्ण्येहापोहविमर्शेन जातिस्मरणमुत्पन्नं—यथाऽहं जन्मान्तरे प्रव्रज्यां कृत्वा देवलोकसुखमनुभूयेहागत इति, एवं तेन विशिष्टदिगागमनं स्व-

१ एकेन प्र० २ लतादीनामच्छेद० प्र०

१५ सहसन्मत्यां धर्मरुचिः २०

॥१९॥

मत्या—जातिस्मरणरूपया विज्ञातं, प्रत्येकबुद्धश्च जातः, एवमन्येऽपि वल्कलचीरिश्रेयांसप्रभृतयोऽत्र योज्या इति। परव्याकरणे त्विद-मुदाहरणम् गौतमस्वामिना भगवान् वर्द्धमानस्वामी पृष्टो-भगवन्! किमिति मे केवलज्ञानं नोत्पद्यते?, भगवता व्याकृतं-भो गौतम! भवतोऽतीव ममोपरि स्नेहोऽस्ति तद्वशात्, तेनोक्तम्—भगवन्नेवमेवं, किंनिमित्तः पुनरसौ मम भगवदुपरि स्नेहः?, ततो भगवता तस्य बहुषु भवान्तरेषु पूर्वसम्बन्धः समावेदितः 'चिरसंसिट्ठोऽसि मे (गोयमा! चिर) परिचिओऽसि मे गोयमे'त्येवमादि, तच्च तीर्थकृद्व्याकरणमाकर्ण्य गौतमस्वामिनो विशिष्टदिगागमनादिविज्ञानमभूदिति। अन्यश्रवणे त्विदमुदाहरणम्—मल्लिस्वामिना षण्णां राजपुत्राणामुद्वाहार्थमागतानामवधिज्ञानेन तत्प्रतिबोधनार्थं यथा जन्मान्तरे सहितैरेव प्रव्रज्या कृता यथा च तत्फलं देवलोके जयन्ताभिधानविमानेऽनुभूतं तथाऽऽख्यातं, तच्चाकर्ण्य ते लघुकर्मत्वात्प्रतिबुद्धा विशिष्टदिगागमनविज्ञानं च सञ्जातं, उक्तं च—'किं थ[3] तयं पम्हुट्ठं जं च तया भो! जयंतपवरंमि। वुच्छा समयनिबद्धं देवा! तं संभरह जातिं ॥१॥' इति गाथात्रयतात्पर्यार्थः ॥४॥

साम्प्रतं प्रकृतमनुस्त्रियते—यो हि 'सोऽह'मित्यनेनाहङ्कारज्ञानेनात्मोल्लेखेन पूर्वादिर्दिश आगतमात्मानमविच्छिन्नसंततिपतितं द्रव्यार्थतया नित्यं पर्यायार्थतया त्वनित्यं जानाति स परमार्थतः आत्मवादीति सूत्रकृद्दर्शयति—

## से आयावादी लोयावादी कम्मावादी किरियावादी (सू० ५)

'स' इति यो भ्रान्तः पूर्वं नारकतिर्यङ्नरामराद्यासु भावदिक्षु पूर्वाद्यासु च प्रज्ञापकदिक्षु अक्षणिकामूर्त्तादिलक्षणोपेतमात्मानमवैति

१ ०मेतत प्र० २ चिरसंसृष्टोऽसि मया गौतम! चिरपरिचितोऽसि मम गौतम! ३ च प्र० ४ किमथ तद्विस्मृतं यच्च तदा भो जयन्तप्रवरे। उषिता निबद्धसमयं देवास्तां स्मरत जातिम् ॥१॥ ^ ०न वेत्ति

परव्याकरणादौ श्रीगौतमादयः

५

१०

प्र. आ. २१

स इत्थंभूतः 'आत्मवादी'ति आत्मानं वदितुं शीलमस्येति, यः पुनरेवंभूतमात्मानं नाभ्युपगच्छति सोऽनात्मवादी, नास्तिक इत्यर्थः। योऽपि सर्वव्यापिनं नित्यं क्षणिकं वाऽऽत्मानमभ्युपैति सोऽप्यनात्मवाद्येव, यतः सर्वव्यापिनो निष्क्रियत्वाद्भवान्तरसंक्रान्तिर्न स्यात्, सर्वथा नित्यत्वेऽपि 'अप्रच्युतानुत्पन्नस्थिरैकस्वभावं नित्य'मितिकृत्वा मरणाभावेन भवान्तरसंक्रान्तिरेव न स्यात्, सर्वथा क्षणिकत्वेऽपि निर्मूलविनाशात्सोऽहमित्यनेन पूर्वोत्तरानुसन्धानं न स्यात्। य एव चात्मवादी स एव परमार्थतो लोकवादी, यतो लोकयतीति लोकः—प्राणिगणस्तं वदितुं शीलमस्येति, अनेन चात्माद्वैतवादिनिरासेनात्मबहुत्वमुक्तं, यदिवा 'लोकापाती'ति लोकः—चतुर्दशरज्ज्वात्मकः प्राणिगणो वा, तत्रापतितुं शीलमस्येति, अनेन च विशिष्टाकाशखण्डस्य लोकसंज्ञाऽऽवेदिता, तत्र च जीवास्तिकायस्य सम्भवेन जीवानां गमनागमनमावेदितं भवति, य एव च दिगादिगमनपरिज्ञानेनात्मवादी लोकवादी च संवृत्तः स एवासुमान् 'कर्मवादी' कर्म-ज्ञानावरणीयादि तद्वदितुं शीलमस्य, यतो हि प्राणिनो मिथ्यात्वाविरतिप्रमादकषाययोगैः पूर्वं गत्यादियोग्यानि कर्माण्याददते पश्चात् तासु तासु विरूपरूपासु योनिषूत्पद्यन्ते, कर्म्म च प्रकृतिस्थित्यनुभावप्रदेशात्मकमवसेयमिति। अनेन च कालयदृच्छानियतीश्वरात्मवादिनो निरस्ता द्रष्टव्याः। तथा य एव कर्मवादी स एव क्रियावादी, यतः कर्म योगनिमित्तं बध्यते, योगश्च व्यापारः, स च क्रियारूपः, अतः कर्मणः कार्यभूतस्य वदनात् तत्कारणभूतायाः क्रियाया अप्यसावेव परमार्थतो वादीति, क्रियायाश्च कर्मनिमित्तत्वं प्रसिद्धमागमे, स चायमागमः—"जाव णं भंते! एस जीवे सया समियं एयइ वेयइ चलति फंदति घट्टति

१ यावद् भदन्त! एष जीवः सदा समितमेजते व्येजते चलति स्पन्दते घटते यावत् तं तं भावं परिणमति तावत् अष्टविधबन्धको वा सप्तविधबन्धको वा षड्विधबन्धको वा एकविधबन्धको वा, नाबन्धकः

तिप्पति जाव तं तं भावं परिणमति तावं च णं अट्ठविहबंधए वा सत्तविहबंधए वा छव्विहबंधए वा एगविहबंधए वा, णो णं अबंधए 'त्ति, एवं च कृत्वा य एव कर्म्मवादी स एव क्रियावादीति, अनेन च सांख्याभिमतमात्मनोऽक्रियावादित्वं निरस्तं भवति ॥५॥

साम्प्रतं पूर्वोक्तां क्रियामात्मपरिणतिरूपां विशिष्टकालाभिधायिना तिङ्प्रत्ययेनाभिदधद् अहंप्रत्ययसाध्यस्यात्मनस्तद्भव एवावधिमनःपर्यायकेवलज्ञानजातिस्मरणव्यतिरेकेणैव त्रिकालसंस्पर्शिना मतिज्ञानेन सद्भावावगमं दर्शयितुमाह—

## अकरिस्सं चऽहं, कारवेसुं चऽहं, करओ आवि समणुन्ने भविस्सामि ( सू० ६ )

इह भूतवर्त्तमानभविष्यत्कालापेक्षया कृतकारितानुमतिभिर्नव विकल्पाः संभवन्ति, ते चामी—अहमकार्षम् अचीकरमहं कुर्वन्तमन्यमनुज्ञासिषमहं ३ करोमि कारयाम्यनुजानाम्यहमिति ६ करिष्याम्यहं कारयिष्याम्यहं कुर्वन्तमन्यमनुज्ञास्याम्यहमिति ९, एतेषां च मध्ये आद्यन्तौ सूत्रेणैवोपात्तौ, तदुपादानाच्च तन्मध्यपातिनां सर्वेषां ग्रहणम्, अस्यैवार्थस्याविष्करणाय द्वितीयो विकल्पः 'कारवेसुं चऽहं'मिति सूत्रेणोपात्तः, एते च चकारद्वयोपादानादपिशब्दोपादानाच्च मनोवाक्कायैश्चिन्त्यमानाः सप्तविंशतिर्भेदा भवन्ति, अयमत्र भावार्थः—अकार्षमहमित्यत्राहमित्यनेनात्मोल्लेखिना विशिष्टक्रियापरिणतिरूप आत्माऽभिहितः, ततश्चायं भावार्थो भवति—स एवाहं येन मयाऽस्य देहादेः पूर्वं यौवनावस्थायामिन्द्रियवशगेन विषयविषमोहितान्धचेतसा तत्तदकार्य्यानुष्ठानपरायणेनाऽऽनुकूल्यमनुष्ठितम्, उक्तं च—"विहवावलेवनडिएहिं जाइं कीरंति जोव्वणमएणं। वयपरिणामे सरियाइँ ताइं हियए खुडुक्कंति ॥१॥" तथा 'अचीकरमहं'मित्यनेन परोऽकार्यादौ प्रवर्त्तमानो मया प्रवृत्तिं कारितः, तथा कुर्वन्तमन्यमनुज्ञातवानित्येवं कृतकारितानुमतिभिर्भूतका-

१ चकारद्व(द्व)यापिशब्दोपादानान्मनो० प्र० २ विभवावलेपनटितैर्यानि क्रियन्ते यौवनमदेन। वयःपरिणामे स्मृतानि तानि हृदये शल्यायन्ते ॥ १ ॥

लाभिधानं, तथा 'करोमी'त्यादिना वचनत्रिकेण वर्त्तमानकालोल्लेखः, तथा करिष्यामि कारयिष्यामि कुर्वतोऽन्यान् प्रति गमनु-ज्ञापरायणो भविष्यामीत्यनागतकालोल्लेखः, अनेन च कालत्रयसंस्पर्शेन देहेन्द्रियातिरिक्तस्यात्मनो भूतवर्त्तमानभविष्यत्कालपरि-णतिरूपस्यास्तित्वावगतिरावेदिता भवति, सा च नैकान्तक्षणिकनित्यवादिनां सम्भवतीत्यतोऽनेन ते निरस्ताः, क्रियापरिणामेना-त्मनः परिणामित्वाभ्युपगमादिति, एतदनुसारेणैव सम्भवानुमानादतीतानागतयोरपि भवयोरात्मास्तित्वमवसेयम्, यदिवा-अनेन क्रियाप्रबन्धप्रतिपादनेन कर्मण उपादानभूतायाः क्रियायाः स्वरूपमावेदितमिति ॥६॥ अथ किमेतावत्य एव क्रियाः उतान्या अपि (सन्ति ?), सन्तीति, एता एवेत्याह—

## एयावंति सव्वावंति लोगंसि कम्मसमारंभा परिजाणियव्वा भवंति ( सू० ७)

एतावन्तः सर्वेऽपि 'लोके' प्राणिसङ्घाते 'कर्मसमारम्भाः' क्रियाविशेषा ये प्रागुक्ताः अतीतानागतवर्त्तमानभेदेन कृतकारितानु-मतिभिश्च अशेषक्रियानुयायिना च करोतिना सर्वेषां सङ्ग्रहादिति, एतावन्त एव परिज्ञातव्या भवन्ति, नान्य इति। परिज्ञा च ज्ञप्र-त्याख्यानभेदाद् द्विधा, तत्र ज्ञपरिज्ञयाऽऽत्मनो बन्धस्य चास्तित्वमेतावद्भिरेव सर्वैः कर्मसमारम्भैर्ज्ञातं भवति, प्रत्याख्यानपरिज्ञया च सर्वे पापोपादानहेतवः कर्मसमारम्भाः प्रत्याख्यातव्या इति। इयता सामान्येन जीवास्तित्वं प्रसाधितम्, अधुना तस्यैवात्मनो दिगादिभ्रमणहेतूपदर्शनपुरस्सरमपायान् प्रदर्शयितुमाह, यदिवा यस्तावदात्मकर्मादिवादी स दिगादिभ्रमणान्मोक्ष्यते, इतरस्य तु विपाकान् दर्शयितुमाह—

प्र. आ. २३

अपरिण्णायकम्मा खलु अयं पुरिसे जो इमाओ दिसाओ अणुदिसाओ अणुसंचरइ, सव्वाओ दिसाओ सव्वाओ अणुदिसाओ साहेति (सू० ८)

योऽयं पुरि शयनात् पूर्णः सुखदुःखानां वा पुरुषो-जन्तुर्मनुष्यो वा, प्राधान्याच्च पुरुषस्योपादानम्, उपलक्षणं चैतत्, सर्वोऽपि चतुर्गत्यापन्नः प्राणी गृह्यते, दिशोऽनुदिशो वाऽनुसञ्चरति, सः 'अपरिज्ञातकर्मा' अपरिज्ञातं कर्मानेनेत्यपरिज्ञातकर्म्मा, खल्ववधारणे, अपरिज्ञातकर्मैव दिगादौ भ्राम्यति नेतर इति, उपलक्षणं चैतद्, अपरिज्ञातात्माऽपरिज्ञातक्रियश्चेति, यश्चापरिज्ञातकर्मा स सर्वा दिशः सर्वाश्चानुदिशः 'साहेति' स्वयंकृतेन कर्मणा सहानुसञ्चरति, सर्वग्रहणं सर्वासां प्रज्ञापकदिशां भावदिशां चोपसङ्ग्रहार्थम् ॥८॥ स यदाप्नोति तद्दर्शयति—

अणेगरूवाओ जोणीओ संधेइ, विरूवरूवे फासे पडिसंवेदेइ (सू० ९)

अनेकं संकटविकटादिकं रूपं यासां तास्तथा, यौति-मिश्रीभवति औदारिकादिशरीरवर्गणापुद्गलैरसुमान् यासु ता योनयः-प्राणिनामुत्पत्तिस्थानानि, अनेकरूपत्वं चासां (सचित्ताचित्तोभय) संवृतविवृतोभयशीतोष्णोभयरूपतया, यदि वा चतुरशीतिलक्षभेदेन, ते चामी चतुरशीतिर्लक्षाः-पुढवीजलजलणमारुय एक्केके सत्त सत्त लक्खाओ। वण पत्तेय अणंते दस चोद्दस जोणिलक्खाओ ॥१॥ विगलिदिएसु दो दो चउरो चउरो य णारयसुरेसुं। तिरिएसु हुंति चउरो चोद्दस लक्खा य मणुएसु ॥२॥ तथा शुभाशुभभेदेन योनीनामने-

* पृथ्वीजलतेजोवायुषु एकैकस्मिन् सप्त सप्त लक्षाः। प्रत्येकवने लक्षा दश चतुर्दश योनिरूपा ॥१॥ विकलेन्द्रियेषु द्वे द्वे चत्वारश्चत्वारश्च नारकसुरेषु। तिर्यक्षु भवन्ति चत्वारश्चतुर्दश लक्षाश्च मनुष्येषु ॥२॥

१ श्रुत० १ अध्य० योनिसंधानं स्पर्शवेदनं च सू. ८-९

५

१०

स्पर्शादीन् विरूपरूपांस्तेषु तेषु योन्यन्तरेषु विपाकतः परिसंवेदयतीति, आह च-"तैः कर्मभिः स जीवो विवशः संसारचक्रमुपयाति। द्रव्यक्षेत्राद्धाभावभिन्नमावर्त्तते बहुशः ॥ १ ॥ नरकेषु देवयोनिषु तिर्यग्योनिषु च मनुजयोनिषु च। पर्यटति घटीयन्त्रवदात्मा विभ्रच्छरीराणि ॥२॥ सततानुबद्धमुक्तं दुःखं नरकेषु तीव्रपरिणामम्। तिर्यक्षु भयक्षुत्तृड्वधादिदुःखं सुखं चाल्पम् ॥ ३ ॥ सुखदुःखे मनुजानां मनःशरीराश्रये बहुविकल्पे। सुखमेव हि देवानां दुःखं स्वल्पं च मनसि भवम् ॥४॥ कर्मानुभावदुःखित एवं मोहान्धकारगहनवति। अन्ध इव दुर्गमार्गे भ्रमति हि संसारकान्तारे ॥५॥ दुःखप्रतिक्रियार्थं सुखाभिलाषाच्च पुनरपि तु जीवः। प्राणिवधादीन् दोषानधितिष्ठति मोहसंछन्नः ॥६॥ बध्नाति ततो बहुविधमन्यत्पुनरपि नवं सुबहु कर्म। तेनाथ पच्यते पुनरग्नेरग्निं प्रविश्यैव ॥७॥ एवं कर्माणि पुनः पुनः स बध्नंस्तथैव मुञ्चंश्च। सुखकामो बहुदुःखं संसारमनादिकं भ्रमति ॥ ८ ॥ एवं भ्रमतः संसारसागरे दुर्लभं मनुष्यत्वम्। संसारमहत्त्वाधार्मिकत्वदुष्कर्मबाहुल्यैः ॥ ९ ॥ आर्यो देशः कुलरूपसम्पदायुश्च दीर्घमारोग्यम्। यतिसंसर्गः श्रद्धा धर्मश्रवणं च मतितैक्ष्ण्यम् ॥१०॥ एतानि दुर्लभानि प्राप्तवतोऽपि दृढमोहनीयस्य। कुपथाकुलेऽर्हदुक्तोऽतिदुर्लभो जगति सन्मार्गः ॥११॥" यदिवा योऽयं पुरुषः सर्वा दिशोऽनुदिशश्चानुसञ्चरति तथाऽनेकरूपा योनीः सन्धावति विरूपरूपांश्च स्पर्शान् प्रतिसंवेदयति सः 'अविज्ञातकर्मा' अविज्ञातम्-अविदितं कर्म-क्रिया व्यापारो मनोवाक्कायलक्षणः अकार्यमहं करोमि करिष्यामीत्येवंरूपः जीवोपमर्दात्मकत्वेन बन्धहेतुः सावद्यो येन सोऽयमविज्ञातकर्मा, अविज्ञातकर्मत्वेन च तत्र तत्र कर्मणि जीवोपमर्दादिके प्रवर्त्तते येन येनाष्टविधकर्मबन्धो भवति, तदुदयाच्चानेकरूपयोन्यनुसन्धानं विरूपरूपस्पर्शानुभवश्च भवतीति ॥९॥ यद्येवं ततः किमित्यत आह—

कर्मफलं स्पर्शवेदना

५

१०

आचा. १ श्रु. १ अ. १ उ.

स्वरूपत्वं गाथाभिः प्रदर्श्यते—'सीयादी जोणीओ चउरासीती य सयसहस्साइं । असुभाओ य सुभाओ तत्थ सुभाओ इमा जाण ॥१॥ असंखाउमणुस्सा राईसर संखमादिआऊणं । तित्थगरनामगोत्तं सव्वसुहं होइ नायव्वं ॥ २ ॥ तत्थवि य जाइसंपन्नतादि सेसा उ हुंति असुभाओ । देवेसु किब्बिसादी सेसाओ हुंति उ सुभाओ ॥३॥ पंचिंदियतिरिएसुं हयगयरयणे हवंति उ सुभाओ । सेसाओ अ सुभाओ सुभवण्णेगिंदियादीया ॥ ४ ॥ देविंदचक्कवट्टित्तणाइं मोत्तुं च तित्थगरभावं । अणगारभावितानिय सेसा उ अणंतसो पत्ता ॥ ५ ॥" एताश्चानेकरूपा योनीर्दिगादिषु पर्यटन्नपरिज्ञातकर्माऽसुमान् 'संधेइ'त्ति सन्धयति–सन्धिं करोत्यात्मना, सहाविच्छेदेन संघट्टयतीत्यर्थः, 'संधावइ'त्ति वा पाठान्तरं, 'सन्धावति' पौनःपुन्येन तासु गच्छतीत्यर्थः, तत्सन्धाने च यदनुभवति तद्दर्शयति–विरूपं बीभत्समनोज्ञं रूपं–स्वरूपं येषां स्पर्शानां दुःखोपनिपातानां ते तथा, स्पर्शाश्रिता दुःखोपनिपाताः स्पर्शा इत्युक्ताः, 'तात्स्थ्यात्तद्व्यपदेश' इतिकृत्वा, उपलक्षणं चैतन्मानस्योऽपि वेदना ग्राह्याः, अतस्तानेवम्भूतान् स्पर्शान् 'प्रतिसंवेदयति' अनुभवति, प्रतिग्रहणात्प्रत्येकं शारीरान्मानसांश्च दुःखोपनिपाताननुभवतीत्युक्तं भवति, स्पर्शग्रहणं चेह सर्वसंसारान्तर्वर्त्तिजीवराशिसङ्ग्रहार्थं, स्पर्शनेन्द्रियस्य सर्वजीवव्यापित्वात्, अत्रेदमपि वक्तव्यं–सर्वान् विरूपरूपान् रसगन्धरूपशब्दान् प्रतिसंवेदयतीति, विरूपरूपत्वं च स्पर्शानां कार्यभूतानां विचित्रकर्मोदयात्कारणभूताद्भवतीति वेदितव्यं, विचित्रकर्मोदयाच्चापरिज्ञातकर्मा संसारी

शुभाशुभयोनिसंचारः १५

२०

प्र. आ. २४

२३

शीताद्या योनयश्चतुरशीतिश्च शतसहस्राणि । अशुभा शुभाश्च तत्र शुभा इमा जानीहि ॥ १ ॥ असंख्यायुर्मनुष्या मध्यायुष्काणां राजेश्वराद्या । तीर्थकरनामगोत्रं सर्वशुभं भवति ज्ञातव्यम् ॥२॥ तत्रापि च जातिसम्पन्नताद्या शेषा भवन्त्यशुभा । देवेषु किल्बिषाद्या शेषा भवन्ति च शुभा ॥३॥ पञ्चेन्द्रियतिर्यक्षु हयगजरत्नयोर्भवन्ति शुभा । शेषाश्च शुभा शुभवर्णैकेन्द्रियाद्याः ॥४॥ देवेन्द्रचक्रवर्तित्वे मुक्त्वा तीर्थंकरभावं च । भाविताऽनगारतामपि च शेषास्त्वनन्तशः प्राप्ताः ॥५॥ १ ता प्र० २ तत्रे० प्र०

॥२२॥

स्पर्शादीन् विरूपरूपांस्तेषु तेषु योन्यन्तरेषु विपाकतः परिसंवेदयतीति, आह च—"तैः कर्मभिः स जीवो विवशः संसारचक्रमुपयाति । द्रव्यक्षेत्राद्धाभावभिन्नमावर्त्तते बहुशः ॥ १ ॥ नरकेषु देवयोनिषु तिर्यग्योनिषु च मनुजयोनिषु च । पर्यटति घटीयन्त्रवदात्मा विभ्रच्छरीराणि ॥२॥ सततानुबद्धमुक्तं दुःखं नरकेषु तीव्रपरिणामम् । तिर्यक्षु भयक्षुत्तृड्वधादिदुःखं सुखं चाल्पम् ॥ ३ ॥ सुखदुःखे मनुजानां मनःशरीराश्रये बहुविकल्पे । सुखमेव हि देवानां दुःखं स्वल्पं च मनसि भवम् ॥४॥ कर्मानुभावदुःखित एवं मोहान्धकारगहनवर्ति । अन्ध इव दुर्गमार्गे भ्रमति हि संसारकान्तारे ॥५॥ दुःखप्रतिक्रियार्थं सुखाभिलाषाच्च पुनरपि तु जीवः । प्राणिवधादीन् दोषानधितिष्ठति मोहसंछन्नः ॥६॥ बध्नाति ततो बहुविधमन्यत्पुनरपि नवं सुबहु कर्म । तेनाथ पच्यते पुनरग्नेरग्निं प्रविश्येव ॥७॥ एवं कर्माणि पुनः पुनः स बध्नंस्तथैव मुञ्चंश्च । सुखकामो बहुदुःखं संसारमनादिकं भ्रमति ॥ ८ ॥ एवं भ्रमतः संसारसागरे दुर्लभं मनुष्यत्वम् । संसारमहत्त्वाधार्मिकत्वदुष्कर्मबाहुल्यैः ॥ ९ ॥ आर्यो देशः कुलरूपसम्पदायुश्च दीर्घमारोग्यम् । यतिसंसर्गः श्रद्धा धर्मश्रवणं च मतितैक्ष्ण्यम् ॥१०॥ एतानि दुर्लभानि प्राप्तवतोऽपि दृढमोहनीयस्य । कुपथाकुलेऽर्हदुक्तोऽतिदुर्लभो जगति सन्मार्गः ॥११॥" यदिवा योऽयं पुरुषः सर्वा दिशोऽनुदिशश्चानुसञ्चरति तथाऽनेकरूपा योनीः सन्धावति विरूपरूपांश्च स्पर्शान् प्रतिसंवेदयति सः 'अविज्ञातकर्मा' अविज्ञातम्—अविदितं कर्म्म—क्रिया व्यापारो मनोवाक्कायलक्षणः अकार्यमहं करोमि करिष्यामीत्येवंरूपः जीवोपमर्दात्मकत्वेन बन्धहेतुः सावद्यो येन सोऽयमविज्ञातकर्मा, अविज्ञातकर्मत्वेन च तत्र तत्र कर्मणि जीवोपमर्दादिके प्रवर्त्तते येन येनास्याष्टविधकर्मबन्धो भवति, तदुदयाच्चानेकरूपयोन्यनुसन्धानं विरूपरूपस्पर्शानुभवश्च भवतीति ॥९॥ यद्येवं ततः किमित्यत आह—

कर्मफलं स्पर्शवेदना।

५

१०

## तत्थ खलु भगवता परिण्णा पवेइआ (सू० १०)

'तत्र' कर्मणि व्यापारे अकार्षमहं करोमि करिष्यामीत्यात्मपरिणतिस्वभावतया मनोवाक्कायव्यापाररूपे 'भगवता' वीरवर्द्धमानस्वामिना परिज्ञानं परिज्ञा सा प्रकर्षेण प्रशस्ताऽऽदौ वा वेदिता प्रवेदिता, एतच्च सुधर्म्मस्वामी जम्बूस्वामिनाग्रे कथयति, सा च द्विधा-ज्ञपरिज्ञा प्रत्याख्यानपरिज्ञा च, तत्र ज्ञपरिज्ञया सावद्यव्यापारेण बन्धो भवतीत्येवं भगवता परिज्ञा प्रवेदिता, प्रत्याख्यानपरिज्ञया च सावद्ययोगा बन्धहेतवः प्रत्याख्येया इत्येवंरूपा चेति ॥ अमुमेवार्थं निर्युक्तिकृदाह—

२०

तत्थ अकारि करिस्संति बंधचिंता कया पुणो होइ । सहसम्मइया जाणइ कोई पुण हेतुजुत्तीए ॥६७॥

'तत्र' कर्मणि क्रियाविशेषे, किम्भूत इत्याह—'अकारि करिस्संति' अकारीति कृतवान् करिस्सन्ति-करिष्यामीति, अनेनातीतानागतोपादानेन तन्मध्यवर्तिनो वर्त्तमानस्य कारितानुमत्योश्चोपसङ्ग्रहात् नवापि भेदा आत्मपरिणामत्वेन योगरूपा उपात्ता द्रष्टव्याः, तत्रानेनात्मपरिणामरूपेण क्रियाविशेषेण 'बन्धचिन्ता कृता भवति' बन्धस्योपादानमुपात्तं भवति, 'कर्म योगनिमित्तं बध्यते' इति वचनात्, एतच्च कश्चिज्जानाति आत्मना सह या सम्मतिः स्वमतिर्वा-अवधिमनःपर्यायकेवलजातिस्मरणरूपा तया, जानाति कश्चिच्च पक्षधर्मान्वयव्यतिरेकलक्षणया हेतुयुक्त्येति ॥ अथ किमर्थमसौ कटुकविपाकेषु कर्माश्रवहेतुभूतेषु क्रियाविशेषेषु प्रवर्त्तत इत्याह—



१५

## इमस्स चेव जीवियस्स परिवंदणमाणणपूयणाए जाईमरणमोयणाए दुक्खपडिघायहेउं (सू. ११)

तत्र जीवितमिति-जीवन्त्यनेनायुःकर्मणेति जीवितं-प्राणधारणम्, तच्च प्रतिप्राणि स्वसंविदितमितिकृत्वा प्रत्यक्षासन्नवाचिनेदमा निर्दिशति, चशब्दो वक्ष्यमाणजात्यादिसमुच्चयार्थः, एवकारोऽवधारणे, अस्यैव जीवितस्यार्थे परिफल्गुसारस्य तडिल्लताविलसितच-

श्चलस्य बह्वपायस्य दीर्घसुखार्थं क्रियासु प्रवर्त्तते, तथाहि-जीविष्याम्यहमरोगः, सुखेन भोगान् भोक्ष्ये, ततो व्याध्यपनयनार्थं स्नेहापानलावकपिशितभक्षणादिषु क्रियासु प्रवर्त्तते, तथाऽल्पस्य सुखस्य कृते अभिमानग्रहाकुलितचेता बह्वारम्भपरिग्रहाद् बह्वशुभं कर्मादत्ते, उक्तं च—"द्वे वाससी प्रवरयोषिदयायशुद्धा, शय्याऽऽसनं करिवरस्तुरगो रथो वा । काले भिषग्नियमिताशनपानमात्रा,राज्ञः पराक्यमिव(पराक्रो रोगः)सर्वमवेहि शेषम् ॥१॥ पुष्ट्यर्थमन्नमिह यत् प्रणिधिप्रयोगैः, संत्रासदोषकलुषो नृपतिस्तु भुङ्क्ते । यद् निर्भयः प्रशमसौख्यरतिश्च भैक्षं, तत् स्वादुतां भृशमुपैति न पार्थिवान्नम् ॥२॥ भृत्येषु मन्त्रिषु सुतेषु मनोरमेषु, कान्तासु वा मधुमदाङ्कुरितेक्षणासु । विश्रम्भमेति न कदाचिदपि क्षितीशः, सर्वाभिशङ्कितमतेः क्वतरस्तु सौख्यम् ? ॥३॥" तदेवमनवबुद्धतरुणकिशलयपलाशचञ्चलजीवितरतयः कर्माश्रवेषु जीवितोपमर्दादिरूपेषु प्रवर्त्तन्ते, तथाऽस्यैव जीवितस्य परिवन्दनमाननपूजनार्थं हिंसादिषु प्रवर्त्तन्ते, तत्र 'परिवन्दनं' संस्तवः-प्रशंसा तदर्थमाचेष्टते, तथाहि-अहं मयूरादिपिशिताशनाद्बली तेजसा देदीप्यमानो देवकुमार इव लोकानां प्रशंसास्पदं भविष्यामीति, 'माननम्' अभ्युत्थानासनदानाञ्जलिप्रग्रहादिरूपं तदर्थं वा चेष्टमानः कर्माचिनोति, तथा पूजनं पूजा-द्रविणवस्त्रान्नपानसत्कारप्रणामसेवाविशेषरूपं तदर्थं च प्रवर्त्तमानः क्रियासु कर्माश्रवैरात्मानं सम्भावयति, तथाहि—'वीरभोग्या वसुन्धरे'ति मत्वा पराक्रमते, दण्डभयाच्च सर्वा प्रजा बिभ्यतीति दण्डयति, इत्येवं राज्ञामन्येषामपि यथासम्भवमायोजनीयम्, अत्र च वन्दनादीनां द्वन्द्वसमासं(एकवद्भावं च)कृत्वा तादर्थ्ये चतुर्थी विधेया, परिवन्दनमाननपूजनाय जीवितस्य कर्माश्रवेषु प्रवर्त्तन्त इति समुदायार्थः । न केवलं परिवन्दनाद्यर्थमेव कर्मादत्ते, अन्यार्थमप्यादत्त इति दर्शयति—जातिश्च मरणं च मोचनं च जातिमरणमोचनमिति समाहारद्वन्द्वात्ताद र्थ्ये चतुर्थी, एतदर्थं च प्राणिनः क्रियासु प्रवर्त्तमानाः कर्माददते,तत्र जात्यर्थं क्रौञ्चारि(कार्त्तिकेय)वन्दनादिकाः क्रिया

क्रिया-
हेतवः

५

१०

विधत्ते, तथा यान् यान् कामान् ब्राह्मणादिभ्यो ददाति तांस्तानन्यजन्मनि पुनर्जातो भोक्ष्यते, तथा मनुनाऽप्युक्तम्—"वारिद-स्तृप्तिमाप्नोति, सुखमक्षयमन्नदः । तिलप्रदः प्रजामिष्टामायुष्कमभयप्रदः ॥१॥" अत्र चैकमेव सुभाषितम्—'अभयप्रदान'मिति तृणमध्ये कणिकादिति, एवमादिकुमार्गोपदेशाद् हिंसादौ प्रवृत्तिं विदधाति । तथा मरणार्थमपि पितृपिण्डदानादिषु क्रियासु प्रवर्त्तते, यदिवा ममानेन सम्बन्धी व्यापादितस्तस्य वैरनिर्यातनार्थं वधबन्धादौ प्रवर्त्तते, यदिवा मरणनिवृत्त्यर्थमात्मनो दुर्गाद्युपयाचितमजादिना बलिं विधत्ते यशोधर इव पिष्टमयकुक्कुटेन, तथा मुक्त्यर्थमज्ञानावृतचेतसः पञ्चाग्नितपोऽनुष्ठानादिरूपेषु प्राण्युपमर्दकारिषु प्रवर्त्तमानाः कर्माददते, यदिवा जातिमरणयोर्विमोचनाय हिंसादिकाः क्रियाः कुर्वते, 'जाइमरणभोयणाए' त्ति वा पाठान्तरं, तत्र भोजनार्थं कृष्यादिकर्मसु प्रवर्त्तमाना वसुधाजलज्वलनपवनवनस्पतिद्वित्रिचतुष्पञ्चेन्द्रियव्यापत्तये व्याप्रियन्त इति । तथा दुःखप्रतिघातमुररीकृत्यात्मपरित्राणार्थमारम्भानासेवन्ते, तथाहि—व्याधिवेदनार्त्ता लावकपिशितमदिरादि आसेवन्ते, तथा वनस्पतिमूलत्वक्पत्रनिर्यासादिसिद्धशतपाकादितैलार्थमग्न्यादिसमारम्भेण पापं कुर्वन्ति स्वतः कारयन्त्यन्यैः कुर्वतोऽन्यान् समनुजानत इत्येवमतीतानागतकालयोरपि मनोवाक्काययोगैः कर्मादानं विदधतीत्यायोजनीयम् । तथा दुःखप्रतिघातार्थमेव सुखोत्पत्त्यर्थं च कलत्रपुत्रगृहोपस्कराद्याददते, तल्लाभपालनार्थं च तासु तासु क्रियासु प्रवर्त्तमानाः पापकर्मासेवन्त इति, उक्तं च—"आदौ प्रतिष्ठाऽधिगमे प्रयासो, दारेषु पश्चाद् गृहिणः सुतेषु । कर्तुं पुनस्तेषु गुणप्रकर्षं, चेष्टा तदुच्चैःपदलङ्घनाय ॥१॥" तदेवंभूतैः क्रियाविशेषैः कर्मोपादाय नानादिक्ष्वनुसञ्चरन्ति अनेकरूपासु च योनिषु सन्धावन्ति विरूपरूपांश्च स्पर्शान् प्रतिसंवेदयन्ति, इत्येतद् ज्ञात्वा क्रियाविशेषनिवृत्तिर्विधेयेति ॥११॥ एतावन्त एव च क्रियाविशेषा इति दर्शयितुमाह—




२०

॥२४॥
२७

एयावंति सव्वावंति लोगंसि कम्मसमारंभा परिजाणियव्वा भवंति (सू० १२)

'एआवन्ति सव्वावन्ती'ति एतौ द्वौ शब्दौ मागधदेशीभाषाप्रसिद्धा एतावन्तः सर्वेऽपीत्येतत्पर्यायौ, एतावन्त एव सर्वस्मिन् 'लोके' धर्माधर्मास्तिकायावच्छिन्ने नभःखण्डे ये पूर्वं प्रतिपादिताः 'कर्मसमारम्भाः' क्रियाविशेषाः, नैतेभ्योऽधिकाः केचन सन्तीत्येवं परिज्ञातव्या भवन्ति, सर्वेषां पूर्वत्रोपादानादिति भावः, तथाहि—आत्मपरोभयैहिकामुष्मिकातीतानागतवर्त्तमानकालकृतकारितानुमतिभिरारम्भाः क्रियन्ते, ते च सर्वेऽपि प्रागुपात्ता यथासम्भवमायोज्या इति ॥१२॥ एवं सामान्येन जीवास्तित्वं प्रसाध्य तदुपमर्दकारिणां च क्रियाविशेषाणां बन्धहेतुत्वं प्रदर्श्योपसंहारद्वारेण विरतिं प्रतिपादयन्नाह—

जस्सेते लोगंसि कम्मसमारंभा परिण्णाया भवंति से हु मुणी परिण्णायकम्मे (सू० १३)-त्तिबेमि ॥ शस्त्रपरिज्ञायां प्रथमोद्देशकः १ ॥

भगवान् समस्तवस्तुवेदी केवलज्ञानेन साक्षादुपलभ्यैवमाह—'यस्य' मुमुक्षोः 'एते' पूर्वोक्ताः 'कर्मसमारम्भाः' क्रियाविशेषाः कर्मणो वा—ज्ञानावरणीयाद्यष्टप्रकारस्य समारम्भा—उपादानहेतवः ते च क्रियाविशेषा एव परि—समन्तात् ज्ञाताः—परिच्छिन्नाः कर्मबन्धहेतुत्वेन भवन्ति; हुरवधारणे, मनुते मन्यते वा जगतस्त्रिकालावस्थामिति मुनिः, स एव मुनिः ज्ञपरिज्ञया परिज्ञातकर्मा प्रत्याख्यानपरिज्ञया च प्रत्याख्यातकर्मबन्धहेतुभूतसमस्तमनोवाक्कायव्यापार इति, अनेन च मोक्षाङ्गभूते ज्ञानक्रिये उपात्ते भवतो, न ताभ्यां विना मोक्षो भवति, यत उक्तम्—"ज्ञानक्रियाभ्यां मोक्ष" इति। इतिशब्द एतावानयमात्मपदार्थविचारः कर्मबन्धहेतुवि-

श्रु. १ अ. १ उ. २

प्र. आ. २७ १५ पृथिव्या निक्षेपः

चार्थः सकलोद्देशकेन परिसमापित इति प्रदर्शकः, यदिवा 'इति' एतद् अहं ब्रवीमि, यत्प्रागुक्तं यच्च वक्ष्ये तत्सर्वं भगवदन्तिके साक्षात् श्रुत्वेति ॥ शस्त्रपरिज्ञायाः प्रथमोद्देशकः समाप्तः ॥

उक्तः प्रथमोद्देशकः, साम्प्रतं द्वितीयः प्रस्तूयते, अस्य चायमभिसम्बन्धः—प्रथमोद्देशके सामान्येन जीवास्तित्वं प्रसाधितम्, इदानीं तस्यैवैकेन्द्रियादिपृथिव्याद्यस्तित्वप्रतिपिपादयिषयाऽऽह, यदिवा प्राक् परिज्ञातकर्मत्वं मुनित्वकारणमुपादेशि, यः पुनरपरिज्ञातकर्मत्वान्मुनिर्न भवति—विरतिं न प्रतिपद्यते स पृथिव्यादिषु सम्भ्रमीति, अथ क एते पृथिव्यादय इत्यतस्तद्विशेषास्तित्वज्ञापनार्थमिदमुपक्रम्यत इति । अनेनाभिसम्बन्धेनायातस्यास्योद्देशकस्य चत्वार्यनुयोगद्वाराणि वाच्यानि, यावन्नामनिष्पन्ने निक्षेपे पृथिव्युद्देशक इति, तत्रोद्देशकस्य निक्षेपादेरन्यत्र प्रतिपादितत्वान्नेह प्रदर्श्यते, पृथिव्यास्तु यन्निक्षेपादि सम्भवति तन्निर्युक्तिकृद्दर्शयितुमाह—

२०

**पुढवीए निक्खेवो परूवणा लक्खणं परीमाणं । उवभोगो सत्थं वेयणा य वहणा निवित्ती य ॥६८॥**

प्राग् जीवोद्देशके जीवस्य प्ररूपणा किं न कृतेत्येतच्च नाशङ्कनीयं, यतो जीवसामान्यस्य विशेषाधारत्वात् विशेषस्य च पृथिव्यादिरूपत्वात् सामान्यजीवस्य चोपभोगादेरसम्भवात् पृथिव्यादिचर्चयैव तस्य चिन्तितत्वादिति । तत्र पृथिव्या नामादिनिक्षेपो वक्तव्यः, प्ररूपणा—सूक्ष्मबादरादिभेदा, लक्षणं—साकारानाकारोपयोगकाययोगादिकं, परिमाणं—संवर्तितलोकप्रतरासंख्येयभागमात्रादिकम्, उपभोगः—शयनासनचङ्क्रमणादिकः, शस्त्रं—स्नेहाम्लक्षारादि, वेदना—स्वशरीराव्यक्तचेतनानुरूपा सुखदुःखानुभवस्वभावा, वधः—कृतकारितानुमतिभिरुपमर्दनादिकः, निवृत्तिः—अप्रमत्तस्य मनोवाक्कायगुप्त्याऽनुपमर्दादिकेति समासार्थः । व्यासार्थं तु निर्युक्तिकृद्यथाक्रममाह—

॥२५॥ २७

नामंठवणापुढवी दव्वपुढवी य भावपुढवी य ॥ एमो खलु पुढवीए निक्खेवो चउविहो होइ ॥६९॥

स्पष्टा, नामस्थापने क्षुण्णत्वादनादृत्याह—

दव्वं सरीरभविओ भावेण य होइ पुढविजीवो उ। जो पुढविनामगोयं कम्मं वेएइ सो जीवो ॥७०॥

द्रव्यपृथिवी आगमतो नोआगमतश्च, आगमतो ज्ञाता तत्र चानुपयुक्तः, नोआगमतस्तु पृथिवीपदार्थज्ञस्य शरीरं जीवापेतं तथा पृथिवीपदार्थज्ञत्वेन भव्यो—बालादिस्ताभ्यां विनिर्मुक्तो द्रव्यपृथिवीजीवः—एकभविको बद्धायुष्कोऽभिमुखनामगोत्रश्च, भावपृथिवीजीवः पुनर्यः पृथिवीनामादिकर्मोदीर्णं वेदयति। गतं निक्षेपद्वारं, साम्प्रतं प्ररूपणाद्वारम्—

दुविहा य पुढविजीवा सुहुमा तह बायरा य लोगंमि। सुहुमा य सव्वलोए दो चेव य बायरविहाणा ॥७१॥

पृथिवीजीवा द्विविधाः—सूक्ष्मा बादराश्च, सूक्ष्मनामकर्मोदयात् सूक्ष्माः, बादरनामकर्मोदयात्तु बादराः, कर्मोदयजनिते एवैषां सूक्ष्मबादरत्वे, न त्वापेक्षिके बदरामलकयोरिव ॥ तत्र सूक्ष्माः समुद्गकपर्याप्तप्रक्षिप्तगन्धावयववत् सर्वलोकव्यापिनः, बादरास्तु मूलभेदाद् द्विविधा इत्याह—

दुविहा बायरपुढवी समासओ सण्हपुढवि खरपुढवी। सण्हा य पंचवण्णा अवरा छत्तीसइविहाणा ॥७२॥

'समासतः' संक्षेपाद् द्विविधा बादरपृथिवी—श्लक्ष्णबादरपृथिवी खरबादरपृथिवी च, तत्र श्लक्ष्णबादरपृथिवी कृष्णनीललोहितपीतशुक्लभेदात्पञ्चधा, इह च गुणभेदाद्गुणिभेदोऽभ्युपगन्तव्यः, खरबादरपृथिव्यास्त्वन्येऽपि षट्त्रिंशद्विशेषभेदाः सम्भवन्तीति ॥ तानाह—

पुढवी १ य सक्करा २ वालुगा ३ य उवले ४ सिला ५ य लोणूसे ६-७।

पृथ्व्या निक्षेपः

५

१०

अय ८ तंब ९ तउअ १० सीसग ११ रुप्प १२ सुवण्णे १३ य वइरे १४ य ॥७३॥
हरियाले१ हिंगुलए२ मणोसिला३ सासगं४ जण५ पवाले ६। अब्भपडल७ब्भवालुअ८ बायरकाए मणिविहाणा ।७४।
गोमेज्जए१ य रुयगे२ अंको३ फलिहे४ य लोहियक्खे५ य । चंदण६ गेरुय७ हंसग८ भुयमोय९ मसारगल्ले१० य ।७५।
चंदप्पह १ वेरुलिए २ जलकंते ३ चेव सूरकन्ते ४ य । एए खरपुढवीए नामं छत्तीसयं होइ ॥७६॥

अत्र च प्रथमगाथया पृथिव्यादयश्चतुर्दश भेदाः परिगृहीताः, द्वितीयगाथया त्वष्टौ हरितालादयः, तृतीयगाथया दश गोमेदकादयः, तुर्यगाथया चत्वारश्चन्द्रकान्तादयः । अत्र च पूर्वगाथाद्वयेन सामान्यपृथिवीभेदाः प्रदर्शिताः, उत्तरगाथाद्वयेन मणिभेदाः प्रदर्शिताः, एताः स्पष्टा इति कृत्वा न विवृताः ॥ एवं सूक्ष्मबादरभेदान् प्रतिपाद्य पुनर्वर्णादिभेदेन पृथिवीभेदान् दर्शयितुमाह—

वण्णरसगंधफासे जोणिप्पमुहा भवंति संखेज्जा । णेगाइ सहस्साइं हुंति विहाणंमि इक्किक्के ॥७७॥

तत्र वर्णाः शुक्लादयः पञ्च रसास्तिक्तादयः पञ्च गन्धौ सुरभिदुरभी स्पर्शाः मृदुकर्कशादयः अष्टौ, तत्र वर्णादिके एकैकस्मिन् 'योनि प्रमुखा' योनिप्रभृतयः संख्येया भेदा भवन्ति, संख्येयस्यानेकरूपत्वाद्विशिष्टसंख्यार्थमाह—अनेकानि सहस्राणि एकैकस्मिन् वर्णादिके 'विधाने' भेदे भवन्ति, योनितो गुणतश्च भेदानामिति । एतच्च सप्तयोनिलक्षप्रमाणत्वात् पृथिव्या एवं सम्भावनीयमिति । उक्तं च प्रज्ञापनायाम्—"तत्थ णं जे ते पज्जत्तगा एएसि णं वण्णादेसेणं गंधादेसेणं रसादेसेणं फासादेसेणं सहस्सग्गसो विहाणाइं

" मरगय मसारगल्ले भुयमोयग इंदनीले य प्र. १ भावनीयमिति प्र. २ तत्र ये ते पर्याप्तका एतेषां वर्णादेशेन गन्धादेशेन रसादेशेन स्पर्शादेशेन सहस्राग्रशो विधानानि संख्येयानि योनिप्रमुखाणि शतसहस्राणि, पर्याप्तकनिश्रयाऽपर्याप्तका व्युत्क्रामन्ति, तद् यत्रैकस्तत्र नियमादसंख्येयाः, इत्येते खरबादरपृथ्वीकायिका.

I. श्रु. १ अ. २ उ.

१५ पृथ्वीभेदाः

२०

२६ ॥२६॥

संखेज्जाइं जोणिप्पमुहसयसहस्साइं पज्जत्तयणिस्साए अपज्जत्तया वक्कमंति, तं जत्थेगो तत्थ नियमा असंखेज्जा, सेत्तं खरबायरपुढविकाइया" इह च संवृतयोनयः पृथिवीकायिका उक्ताः, सा पुनः सचित्ता अचित्ता मिश्रा वा, तथा पुनश्च शीता उष्णा शीतोष्णा वेत्येवमादिका द्रष्टव्येति ॥ एतदेव भूयो निर्युक्तिकृत् स्पष्टतरमाह—

पृथिव्या भेदाः

**वण्णंमि य इक्किक्के गंधंमि रसंमि तह य फासंमि । नाणत्ती कायव्वा विहाणए होइ इक्किक्कं ॥७८॥**

वर्णादिके एकैकस्मिन् 'विधाने' भेदे सहस्राग्रशो नानात्वं विधेयं, तथाहि—कृष्णो वर्ण इति सामान्यं, तस्य च भ्रमराङ्गारकोकिलगवलकज्जलादिषु प्रकर्षाप्रकर्षविशेषाद्भेदः कृष्णः कृष्णतरः कृष्णतम इत्यादि, एवं नीलादिष्वप्यायोज्यं, तथा रसगन्धस्पर्शेषु सर्वत्र पृथिवीभेदा वाच्याः,तथा वर्णादीनां परस्परसंयोगाद्धूसरकेसरकर्बुरादिवर्णान्तरोत्पत्तिः, एवमुत्प्रेक्ष्य वर्णादीनां प्रत्येकं प्रकर्षाप्रकर्षतया परस्परानुवेधेन च बहवो भेदा वाच्याः ॥ पुनरपि पर्याप्तकादिभेदाद्भेदमाह—

५

प्र. आ. २९

**जे बायरे विहाणा पज्जत्ता तत्तिआ अपज्जत्ता । सुहुमावि हुंति दुविहा पज्जत्ता चेव अपज्जत्ता ॥७९॥**

यानि बादरपृथिवीकाये 'विधानानि' भेदाः प्रतिपादिताः तानि यावन्ति पर्याप्तकानां तावन्त्येवापर्याप्तकानामपि, अत्र च भेदानां तुल्यत्वं द्रष्टव्यं, न तु जीवानां, यत एकपर्याप्तकाश्रयेणासंख्येया अपर्याप्तका भवन्ति, सूक्ष्मा अपि पर्याप्तकापर्याप्तकभेदेन द्विविधा एव, किन्तु अपर्याप्तकनिश्रया पर्याप्तकाः समुत्पद्यन्ते, यत्र चैकोऽपर्याप्तकस्तत्र नियमादसं(त्सं)ख्येयाः पर्याप्तकाः स्युः । पर्याप्तिस्तु 'आहारसरीरिन्दियऊसासवओमणोऽहिनिव्वत्ती । होति जतो दलियाओ करणं पइ सा उ पज्जत्ती ॥१॥' जन्तुरुत्पद्यमानः पुद्गलोपादानेन

१०

* आहार. शरीरेन्द्रियाणि उच्छ्वासो वच. मनः (एषा) अभिनिर्वृत्तिः । भवति यतो दलिकात् करणं प्रति सैव पर्याप्तिः ॥१॥

करणं निर्वर्त्तयति, तेन च करणविशेषेणाहारमवगृह्य पृथग् खलरसादिभावेन परिणतिं नयति स तादृक्करणविशेष आहारपर्याप्तिशब्दे-नोच्यते, एवं शेषपर्याप्तयोऽपि वाच्याः, तत्रैकेन्द्रियाणामाहारशरीरेन्द्रियोच्छ्वासाभिधानाश्चतस्रो भवन्ति, एताश्चान्तर्मुहूर्त्तेन जन्तु-रादत्ते, अनाप्तपर्याप्तिरपर्याप्तकः, अवाप्तपर्याप्तिस्तु पर्याप्तक इति, अत्र च पृथिव्येव कायो येषामिति विग्रहः॥ यथा सूक्ष्मबादरादयो भेदाः सिद्ध्यन्ति तथा प्रसिद्धभेदेनोदाहरणेन दर्शयितुमाह—



रुक्खाणं गुच्छाणं गुम्माण लयाण वल्लिवलयाणं। जह दीसइ नाणत्तं पुढवीकाए तहा जाण ॥८०॥

यथा वनस्पतेर्वृक्षादिभेदेन स्पष्टं नानात्वमुपलभ्यते तथा पृथिवीकायिकेऽपि जानीहि, तत्र वृक्षाः—चूतादयो गुच्छा-वृन्ताकीस-ल्लकीकर्प्पासादयः, गुल्मानि—नवमालिकाकोरण्टकादीनि, लताः—पुन्नागाशोकलताद्याः, वल्लयः—त्रपुषीवालुङ्कीकोशातक्याद्याः, वलयानि—केतकीकदल्यादीनि॥ पुनरपि वनस्पतिभेददृष्टान्तेन पृथिव्या भेदमाह—

२०

ओसहि तण सेवाले पणगविलाणे य कंद मूले य। जह दीसइ नाणत्तं पुढवीकाए तहा जाण ॥८१॥

यथा हि वनस्पतिकायस्य ओषध्यादिको भेदः एवं पृथिव्या अपि द्रष्टव्यः, तत्र ओषध्यः—शाल्याद्याः, तृणानि—दर्भादीनि, सेवालं—जलोपरि मलरूपं, पनकः—काष्ठादावुल्लीविशेषः पञ्चवर्णः, कन्दः—सूरणकन्दादिः, मूलम्—उशीरादीति॥ एते च सूक्ष्म-त्वान्नैकद्व्यादिकाः समुपलभ्यन्ते, यत्संख्यास्तूपलभ्यन्ते तद्दर्शयितुमाह—

इक्कस्स दुण्ह तिण्ह व संखिज्जाण व न पासिउं सक्का। दीसंति सरीराइं पुढविजियाणं असंखाणं ॥८२॥

स्पष्टा॥ कथं पुनरिदमवगन्तव्यम्? सन्ति पृथिवीकायिका इति, उच्यते, तदधिष्ठितशरीरोपलब्धेः अधिष्ठातरि प्रतीतिः गवा-

श्चादाविव इति, एतद्दर्शयितुमाह—

**एएहिं सरीरेहिं पच्चक्खं ते परूविया हुंति । सेसा आणागिज्झा चक्खुफासं न जं इंति ॥८३॥**

'एभिः' असंख्येयतयोपलभ्यमानैः पृथिवीशर्करादिभेदभिन्नैः शरीरैः ते शरीरिणः शरीरद्वारेण 'प्रत्यक्षं' साक्षात् 'प्ररूपिताः' ख्यापिता भवन्ति, शेषास्तु सूक्ष्मा आज्ञाग्राह्या एव द्रष्टव्याः, यतस्ते चक्षुःस्पर्शं नागच्छन्ति, स्पर्शशब्दो विषयार्थः ॥ प्ररूपणाद्वारानन्तरं लक्षणद्वारमाह—

**उवओग जोग अज्झवसाणे मइसुय अचक्खुदंसे य । अट्ठविहोदयलेसा सन्नुस्सासे कसाया य ॥८४॥**

प्र. आ. ३०

तत्र पृथिवीकायादीनां स्त्यानर्द्ध्याद्युदयाद् या च यावती चोपयोगशक्तिरव्यक्ता ज्ञानदर्शनरूपैतयेवमात्मक उपयोगो लक्षणं, तथा योगः–कायाख्य एक एव औदारिकतन्मिश्रकार्म्मणात्मको वृद्धयष्टिकल्पो जन्तोः सकर्मकस्यालम्बनाय व्याप्रियते, तथा अध्यवसायाः–सूक्ष्मा आत्मनः परिणामविशेषाः, ते च लक्षणम्, अव्यक्तचैतन्यपुरुषमनःसमुद्भूतचिन्ताविशेषा इवानभिलक्ष्यास्तेऽभिगन्तव्याः, तथा साकारोपयोगान्तःपातिमतिश्रुताज्ञानसमन्विताः पृथिवीकायिका बोद्धव्याः, तथा स्पर्शनेन्द्रियेणाचक्षुर्दर्शनानुगता बोद्धव्याः, तथा ज्ञानावरणीयाद्यष्टविधकर्मोदयभाजस्तावद्बन्धभाजश्च, तथा लेश्या–अध्यवसायविशेषरूपाः कृष्णनीलकापोततैजस्यश्चतस्रः ताभिरनुगताः, तथा दशविधसंज्ञानुगताः, ताश्च आहारादिकाः प्रागुक्ता एव, तथा सूक्ष्मोच्छ्वासनिःश्वासानुगताः, उक्तं च—"पुढविकाइया णं भंते ! जीवा आणवन्ति वा पाणवन्ति वा ऊससन्ति वा नीससंति वा ?, गोयमा ! अविरहियं

१ पृथ्वीकायिका भदन्त ! जीवा आनन्ति वा प्राणन्ति वा उच्छ्वसन्ति वा निःश्वसन्ति वा ?, गौतम ! अविरहितं सततमेव आनन्ति वा प्राणन्ति वा उच्छ्वसन्ति वा निःश्वसन्ति वा

उपयोगादीनि लक्षणानि ५

१०

आचा. १ श्रु. १ अ. २ उ.

संतयं चेव आणवन्ति वा पाणवन्ति वा ऊससन्ति वा नीससन्ति वा" कपाया अपि सूक्ष्माः क्रोधादयः। एवमेतानि जीवलक्षणान्युपयोगादीनि कषायपर्यवसानानि पृथिवीकायिकेषु सम्भवन्तीति, ततश्चैवंविधजीवलक्षणकलापसमनुगतत्वात् मनुष्यवत्सचित्ता पृथिवीति। ननु च तदिदमसिद्धमसिद्धेन साध्यते, तथाहि—न ह्युपयोगादीनि लक्षणानि पृथिवीकायेषु व्यक्तानि समुपलक्ष्यन्ते, सत्यमेतद्, अव्यक्तानि तु विद्यन्ते, यथा कस्यचित्पुंसः हृत्पूरकव्यतिमिश्रमदिरातिपानपित्तोदयाकुलीकृतान्तःकरणविशेषस्याव्यक्ता चेतना, न चैतावता तस्याचित्रूपता, एवमत्राप्यव्यक्तचेतनासम्भवोऽभ्युपगन्तव्यः, ननु चात्रोच्छ्वासादिकमव्यक्तचेतनालिङ्गमस्ति, न चेह तथाविधं किञ्चिच्चेतनालिङ्गमस्ति, नैतदेवम्, इहापि समानजातीयलतोद्भेदादिकमर्शोमांसाङ्कुरवच्चेतनाचिह्नमस्त्येव, अव्यक्तचेतनानां हि सम्भावितैकचेतनालिङ्गानां वनस्पतीनामिव चेतनाऽभ्युपगन्तव्येति, वनस्पतेश्च चैतन्यं विशिष्टर्तुपुष्पफलप्रदत्वेन स्पष्टं साधयिष्यते च, ततोऽव्यक्तोपयोगादिलक्षणसद्भावात् सचित्ता पृथिवीति स्थितम्॥ ननु चाश्मलवादेः कठिनपुद्गलात्मिकायाः कथं चेतनत्वमित्यत आह—

**अट्ठी जहा सरीरंमि अणुगयं चेयणं खरं दिट्ठं। एवं जीवाणुगयं पुढविसरीरं खरं होइ ॥८५॥**

यथाऽस्थि शरीरानुगतं सचेतनं खरं दृष्टम्, एवं जीवानुगं पृथिवीशरीरमपीति॥ साम्प्रतं लक्षणद्वारानन्तरं परिमाणद्वारमाह—

**जे बायरपज्जत्ता पयरस्स असंखभागमित्ता ते। सेसा तिन्निवि रासी वीसुं लोया असंखिज्जा ॥८६॥**

तत्र पृथिवीकायिकाश्चतुर्धा, तद्यथा—बादराः पर्याप्ता अपर्याप्ताश्च, तथा सूक्ष्मा अपर्याप्ताः पर्याप्ताश्च, तत्र ये बादराः पर्याप्तकास्ते संवर्तितलोकप्रतरासंख्येयभागमात्रवर्तिप्रदेशराशिप्रमाणा भवन्ति, शेषास्तु त्रयोऽपि राशयः प्रत्येकमसंख्येयानां लोकानामाकाश-

१५ लक्षण-परिमाणद्वारे

२०

२६

प्रदेशराशिप्रमाणा भवन्ति, यथानिर्दिष्टक्रमेण चैते यथोत्तरं बहुतराः, यत उक्तम्—"सव्वत्थोवा बादरपुढविकाइया पज्जत्ता, बादरपुढविकाइया अपज्जत्ता असंखेज्जगुणा सुहुमपुढविकाइया अपज्जत्ता असंखेज्जगुणा सुहुमपुढविकाइया पज्जत्ता (अ)संखेज्जगुणा" ॥ प्रकारान्तरेणापि राशित्रयस्य परिमाणं दर्शयितुमाह—

प्र. आ. ३३

पत्थेण व कुडवेण व जह कोइ मिणिज्ज सव्वधन्नाइं । एवं मविज्जमाणा हवंति लोया असंखिज्जा ॥८७॥

पृथ्वीमानं क्षेत्र-सूक्ष्मता

यथा प्रस्थादिना कश्चित् सर्वधान्यानि मिनुयाद्, एवमसद्भावप्रज्ञापनाङ्गीकरणाल्लोकं कुडवीकृत्य अजघन्योत्कृष्टावगाहनान् पृथिवीकायिकजीवान् यदि मिनोति ततोऽसंख्येयान् लोकान् पृथिवीकायिकाः पूरयन्ति ॥ पुनरपि प्रकारान्तरेण परिमाणमाह—

५

लोगागासपएसे इक्किक्कं निक्खिवे पुढविजीवं । एवं मविज्जमाणा हवंति लोआ असंखिज्जा ॥८८॥

स्पष्टा ॥ साम्प्रतं कालतः प्रमाणं निर्दिदिक्षुः क्षेत्रकालयोः सूक्ष्मबादरत्वमाह—

निउणो उ होइ कालो तत्तो निउणयरयं हवइ खित्तं । अंगुलसेढीमित्ते ओसप्पिणीओ असंखिज्जा ॥८९॥

'निपुणः' सूक्ष्मः 'कालः' समयात्मकः, ततोऽपि सूक्ष्मतरं क्षेत्रं भवति, यतोऽङ्गुलीश्रेणिमात्रक्षेत्रप्रदेशानां समयापहारेणासंख्येया उत्सर्पिण्यवसर्पिण्योऽपक्रामन्तीत्यतः कालात् क्षेत्रं सूक्ष्मतरम् ॥ प्रस्तुतं कालतः परिमाणं दर्शयितुमाह—

१०

अणुसमयं च पवेसो निक्खमणं चेव पुढविजीवाणं । काए कायट्ठिइया चउरो लोया असंखिज्जा ॥९०॥

तत्र जीवाः पृथिवीकायेऽनुसमयं प्रविशन्ति निष्क्रामन्ति च, एकस्मिन् समये कियतां निष्क्रमः प्रवेशश्च १-२, तथा विवक्षिते

१ सर्वस्तोकाः बादरपृथ्वीकायिकाः पर्याप्ताः बादरपृथ्वीकायिकाः अपर्याप्ता असंख्येयगुणाः सूक्ष्मपृथ्वीकायिकाः अपर्याप्ता असंख्येयगुणाः सूक्ष्मपृथ्वीकायिकाः पर्याप्ताः संख्येयगुणाः.

च समये कियन्तः पृथिवीकायपरिणताः सम्भवन्ति ३, तथा कियती च कायस्थिति ४ रित्येते चत्वारो विकल्पाः कालतोऽभिधीयन्ते, तत्रासंख्येयलोकाकाशप्रदेशपरिमाणाः समयेनोत्पद्यन्ते विनश्यन्ति च, पृथिवीत्वेन परिणता अप्यसंख्येयलोकाकाशप्रदेशप्रमाणाः, तथा कायस्थितिरपि मृत्वाऽसंख्येयलोकाकाशप्रदेशपरिमाणं कालं तत्र तत्रोत्पद्यन्त इति, एवं क्षेत्रकालभ्यां परिमाणं प्रतिपाद्य परस्परावगाहप्रतिपिपादयिषयाऽऽह—

बायरपुढविक्काइयपज्जत्तो अन्नमन्नमोगाढो । सेसा ओगाहंते सुहुमा पुण सव्वलोगंमि ॥९१॥

बादरपृथिवीकायिकः पर्याप्तो यस्मिन्नाकाशखण्डे अवगाढः तस्मिन्नेवाकाशखण्डेऽपरस्यापि बादरपृथिवीकायिकस्य शरीरमवगाढमिति, शेषास्तु अपर्याप्तकाः पर्याप्तकनिश्रया समुत्पद्यमाना अनन्तरप्रक्रियया पर्याप्तकावगाढाकाशप्रदेशावगाढाः, सूक्ष्माः पुनः सर्वस्मिन्नपि लोकेऽवगाढा इति ॥ उपभोगद्वारमाह—

चंकमणे य ठाणे निसीयण तुयट्टणे य कयकरणे । उच्चारे पासवणे उवगरणाणं च निक्खिवणे ॥९२॥
आलेवण पहरण भूसणे य कयविक्कए किसीए य । भंडाणंपि य करणे उवभोगविही मणुस्साणं ॥९३॥

चङ्क्रमणोर्द्धस्थाननिषीदनत्वग्वर्त्तनकृतकपुत्रककरणउच्चारप्रश्रवणउपकरणनिक्षेपआलेपनप्रहरणभूषणक्रयविक्रयकृषीकरणभण्डकघट्टनादिषूपभोगविधिर्मनुष्याणां पृथिवीकायेन भवतीति ॥ यद्येवं ततः किमित्यत आह—

एएहिं कारणेहिं हिंसंती पुढविकाइए जीवे । सायं गवेसमाणा परस्स दुक्खं उदीरंति ॥९४॥

एभिश्चङ्क्रमणादिभिः कारणैः पृथिवीजीवान् हिंसन्ति, किमर्थमिति दर्शयति–'सातं' सुखमात्मनोऽन्वेषयन्तः परदुःखान्यजानानाः,

कतिपयदिवसरमणीयभोगाशाकदर्थितसमस्तेन्द्रियग्रामा विमूढचेतस इति, 'परस्य' पृथिव्याश्रितजन्तुराशेः 'दुःखं' असातलक्षणं तदुदीरयन्ति-उत्पादयन्तीति, अनेन भूदानजनितः शुभफलोदयः प्रत्युक्त इति॥ अधुना शस्त्रद्वारं, शस्यतेऽनेनेति शस्त्रं, तच्च द्विधा-द्रव्यशस्त्रं भावशस्त्रं च, द्रव्यशस्त्रमपि समासविभागभेदाद् द्विधैव, तत्र समासद्रव्यशस्त्रप्रतिपादनायाह—

शस्त्रं

हलकुलियविसकुदालालित्तयमिगसिंगकट्ठमग्गी य। उच्चारे पासवणे एयं तु समासओ सत्थं ॥९५॥

तत्र हलकुलिकविषकुद्दालालित्रकमृगशृङ्गकाष्ठाग्न्युच्चारप्रश्रवणादिकमेतत् 'समासतः' संक्षेपतो द्रव्यशस्त्रम्॥ विभागद्रव्यशस्त्र-प्रतिपादनायाह— ५

किंची सकायसत्थं किंची परकाय तदुभयं किंचि। एयं तु दव्वसत्थं भावे अ असंजमो सत्थं ॥९६॥

किञ्चित् सकायशस्त्रं पृथिव्येव पृथिव्याः, किञ्चित् परकायशस्त्रमुदकादि, तदुभयं किञ्चिदिति भूदकं-मिलितं भुव इति। तच्च सर्वमपि द्रव्यशस्त्रं, भावे पुनः 'असंयमः' दुष्प्रयुक्ता मनोवाक्कायाः शस्त्रमिति॥ वेदनाद्वारमाह—

पायच्छेयण भेयण जंघोरु तहेव अंगुवंगेसुं। जह हुंति नरा दुहिया पुढवीकाए तहा जाण ॥९७॥ १०

यथा पादादिकेष्वङ्गप्रत्यङ्गेषु छेदनभेदादिकया क्रियया नरा दुःखिताः तथा पृथिवीकायेऽपि वेदना जानीहि॥ यद्यपि पाद-शिरोग्रीवादीन्यङ्गानि पृथिवीकायिकानां न सन्ति तथापि तच्छेदनानुरूपा वेदनाऽस्त्येवेति दर्शयितुमाह—

नत्थि य सि अंगुवंगा तयाणुरूवा य वेयणा तेसिं। केसिंचि उदीरंती केसिंचऽतिवायए पाणे ॥९८॥

पूर्वार्द्धं गतार्थं, केषाञ्चित्पृथिवीकायिकानां तदारम्भिणः पुरुषा वेदनामुदीरयन्ति, केषाञ्चित्तु प्राणानप्यतिपातयेयुरिति। तथा

आचा. १ श्रु. १ अ. २ उ.

हि भगवत्यां दृष्टान्त उपात्तो यथा–चतुरन्तचक्रवर्त्तिनो गन्धपेषिका यौवनवर्त्तिनी बलवती आर्द्रामलकप्रमाणं सचित्तपृथिवीगोलकमेकविंशतिकृत्वो गन्धपट्टके कठिनशिलापुत्रकेण पिंष्यात्, ततस्तेषां पृथिवीजीवानां कश्चित्सङ्घट्टितः कश्चित्परितापितः कश्चिद्व्यापादितोऽपरः किल तेन शिलापुत्रकेण न स्पृष्टोऽपीति ॥ वधद्वारमाह—

१५ वधद्वारं

पचयंति य अणगारा ण य तेहि गुणेहि जेहिं अणगारा। पुढविं विहिंसमाणा न हु ते वायाहि अणगारा ॥९९॥

इह हेके कुतीर्थिका यतिवेषमास्थाय एवं च प्रवदन्ति–वयम् 'अनगाराः' प्रव्रजिताः, न च 'तेषु गुणेषु' निरवद्यानुष्ठानरूपेषु प्रवर्त्तन्ते येष्वनगाराः, यथा चानगारगुणेषु न प्रवर्त्तन्ते तद्दर्शयति–यतस्तेऽहर्निशं पृथिवीजन्तुविपत्तिकारिणो दृश्यन्ते गुदपाणिपादप्रक्षालनार्थम्, अन्यथापि निर्लेपनिर्गन्धत्वं कर्तुं शक्यम्, अतश्च यतिगुणकलापशून्या न वाङ्मात्रेण युक्तिनिरपेक्षेणानगारत्वं बिभ्रतीति, अनेन प्रयोगः सूचितः, तत्र गाथापूर्वार्द्धेन प्रतिज्ञा, पश्चार्द्धेन हेतुः, उत्तरगाथार्द्धेन साधर्म्यदृष्टान्तः, स चायं प्रयोगः–कुतीर्थिका यत्यभिमानवादिनोऽपि यतिगुणेषु न प्रवर्तन्ते, पृथिवीहिंसाप्रवृत्तत्वात्, इह ये ये पृथिवीहिंसाप्रवृत्तास्ते ते यतिगुणेषु न प्रवर्त्तन्ते, गृहस्थवत् ॥ साम्प्रतं दृष्टान्तगर्भं निगमनमाह—

२०

अणगारवाइणो पुढविहिंसगा निग्गुणा अगारिसमा। निद्दोसत्ति य मइला विरइदुगुंछाइ मइलतरा ॥१००॥

'अनगारवादिनो' वयं यतय इति वदनशीलाः पृथिवीकायविहिंसकास्सन्तो निर्गुणा यतोऽतः 'अगारिसमा' गृहस्थतुल्या भवन्ति, अभ्युच्चयमाह–सचेतना पृथिवीत्येवं ज्ञानरहितत्वेन तत्समारम्भवर्त्तिनः सदोषा अपि सन्तो वयं निर्दोषा इत्येवं मन्यमानाः स्वदोषपेक्षाविमुखत्वात् 'मलिनाः' कलुषितहृदयाः, पुनश्चातिप्रगल्भतया साधुजनाश्रिताया निरवद्यानुष्ठानात्मिकाया विरतेः 'जुगु-

ा. आ. ३१

॥३०॥ २८

प्सया' निन्दया मलिनतरा भवन्ति, अनया च साधुनिन्दयाऽनन्तसंसारित्वं प्रदर्शितं भवतीति ॥ एतच्च गाथाद्वयं सूत्रोपात्तार्थानुसार्यपि वधद्वारावसरे निर्युक्तिकृताऽभिहितं, तस्य स्वयमेवोपात्तत्वेन तद्व्याख्यानस्य न्याय्यत्वात्, तच्चेदं सूत्रम् 'लज्जमाणा पुढो पास अणगारा मोत्ति एगे पवयमाणे'त्यादि ॥ अयं च वधः कृतकारितानुमतिभिर्भवतीति तदर्थमाह—

केई सयं वहंती केइ अन्नेहिँ उ वहाविंती । केई अणुमन्नंती पुढवीकायं वहेमाणा ॥१०१॥

स्पष्टा, तद्वधे अन्येषामपि तदाश्रितानां वधो भवतीति दर्शयितुमाह—

जो पुढवि समारंभइ अन्नेऽवि य सो समारभइ काए । अनियाए अ नियाए दिस्से य तहा अदिस्से य ॥१०२॥

यः पृथ्वीकायं 'समारभते' व्यापादयति सः 'अन्यानपि' अप्कायद्वीन्द्रियादीन् 'समारभते' व्यापादयति उदुम्बरवटफलभक्षणप्रवृत्तः तत्फलान्तःप्रविष्टत्रसजन्तुभक्षणवदिति, तथा 'अणियाए य नियाइ'त्ति अकारणेन कारणेन च, यदिवा असङ्कल्पेन सङ्कल्पेन च पृथिवीजन्तून् समारभते, तदारम्भवांश्च 'दृश्यान्' दर्दुरादीन् 'अदृश्यान्' पनकादीन् 'समारभते' व्यापादयतीत्यर्थः ॥ एतदेव स्पष्टतरमाह—

पुढविं समारभंता हणंति तन्निस्सिए य बहुजीवे । सुहुमे य बायरे य पज्जत्ते या अपज्जत्ते ॥१०३॥

स्पष्टा, अत्र च सूक्ष्माणां वधः परिणामाशुद्धत्वात्तद्विषयनिवृत्त्यभावेन द्रष्टव्य इति ॥ विरतिद्वारमाह—

एयं वियाणिऊणं पुढवीए निक्खिवंति जे दंडं । तिविहेण सव्वकालं मणेण वायाए काएणं ॥१०४॥

'एव'मित्युक्तप्रकारानुसारेण पृथिवीजीवान् विज्ञाय तद्वधं बन्धं च विज्ञाय पृथिवीतो निक्षिपन्ति ये दण्डं—पृथिवीसमारम्भाद्युपरमन्ति, ते ईदृक्षा अनगारा भवन्तीत्युत्तरगाथायां वक्ष्यति, 'त्रिविधेने'ति कृतकारितानुमतिभिः 'सर्वकालं' यावज्जीवमपि

वधो

विरतिश्च

५

१०

मनसा वाचा कायेनेति ॥ अनगारभवने उक्तशेषमाह—

गुत्ता गुत्तीहिँ सव्वाहिं समिया समिईहिँ संजया । जयमाणगा सुविहिया एरिसया हुंति अणगारा ॥१०९॥

तिसृभिर्मनोवाक्कायगुप्तिभिर्गुप्ताः, तथा पञ्चभिरीर्यासमित्यादिभिस्समिताः,सम्यक्-उत्थानशयनचङ्क्रमणादिक्रियासु यताः संयताः 'यतमानाः' सर्वत्र प्रयत्नकारिणः, शोभनं विहितं-सम्यग्दर्शनाद्यनुष्ठानं येषां ते तथा, ते ईदृक्षा अनगारा भवन्ति, न तु पूर्वोक्तगुणाः पृथिवीकायसमारम्भिणः शाक्यादय इति ॥ गतो नामनिष्पन्नो निक्षेपः, अधुना सूत्रानुगमेऽस्खलितादिगुणोपेतं सूत्रमुच्चार्यते, तच्चेदं सूत्रम्—

२०

**अट्टे लोए परिजुण्णे दुस्संबोहे अविजाणए अस्सिं लोए पव्वहिए तत्थ तत्थ पुढो पास आतुरा अस्सिं परितावेंति (सू० १४)**

अस्य चायमभिसम्बन्धः-इहानन्तरसूत्रे परिज्ञातकर्मा मुनिर्भवतीत्युक्तं, यस्त्वपरिज्ञातकर्मा स भावार्त्तो भवतीति, तथाऽऽदिसूत्रेण सह सम्बन्धः-सुधर्मस्वामी जम्बूनाम्ने इदमाचष्टे—'श्रुतं मया', किं तच्छ्रुतं?, पूर्वोद्देशकार्थं प्रदर्श्येदमपीति, 'अट्टे'इत्यादि, परम्परसम्बन्धस्तु 'इह एगेसिं णो सन्ना भवती'त्युक्तं, कथं पुनः संज्ञा न भवतीति, आर्त्तत्वात्, तदाह-'अट्टे'इत्यादि, आर्त्तो नामादिश्चतुर्द्धा, नामस्थापने क्षुण्णे, ज्ञशरीरभव्यशरीरव्यतिरिक्तो नोआगमतो द्रव्यार्त्तः शकटादिचक्राणामुद्धिमूले वा यो लोहमयः पट्टो दीयते स द्रव्यार्त्तः, भावार्त्तस्तु द्विधा-आगमतो नोआगमतश्च, तत्रागमतो ज्ञाता-आर्त्तपदार्थज्ञस्तत्र चोपयुक्तो, नोआगमतस्तु औदयिकभाववर्ती रागद्वेषग्रहपरिगृहीतान्तरात्मा प्रियविप्रयोगादिदुःखसङ्कटनिमग्नो भावार्त्त इति व्यपदिश्यते, अथवा शब्दा-

प्र. आ.
३४

२५


२८

दिविषयेषु विषविपाकसदृशेषु तदाकाङ्क्षित्वाद्धिताहितविचारशून्यमना भावार्त्तः कर्मोपचिनोति, यत उक्तम्—"सोइंदियवसट्टे णं भंते ! जीवे किं बंधइ ? किं चिणाइ ? किं उवचिणाइ ?, गोयमा ! अट्ठ कम्मपगडीओ सिढिलबंधणबद्धाओ धणियबंधणबद्धाओ पकरेइ, जाव अणादियं च णं अणवदग्गं दीहमद्धं चाउरन्तसंसारकन्तारमणुपरियट्टइ" एवं स्पर्शनादिष्वप्यायोजनीयम्, एवं क्रोधमानमाया-लोभदर्शनमोहनीयचारित्रमोहनीयादिभिर्भावार्त्ताः संसारिणो जीवा इति, उक्तं च—"रागद्दोसकसाएहिं, इंदिएहि य पञ्चहिं। दुहा वा मोहणिज्जेण, अट्टा संसारिणो जिया ॥१॥" यदिवा ज्ञानावरणीयादिना शुभाशुभेनाष्टप्रकारेण कर्म्मणाऽऽर्त्तः, कः पुनरेवंविध इत्यत्राह—लोकयतीति लोकः, एकद्वित्रिचतुष्पञ्चेन्द्रियजीवराशिरित्यर्थः, अत्र लोकशब्दस्य नामस्थापनाद्रव्यक्षेत्रकालभवभावपर्यायभेदादष्टधा निक्षेपं प्रदर्श्याप्रशस्तभावोदयवर्त्तिना लोकेनेहाधिकारो वाच्यः, यस्माद्यावानार्त्तः स सर्वोऽपि परिद्यूनो नाम परिपेलवो-निस्सारः औपशमिकादिप्रशस्तभावहीनोऽव्यभिचारिमोक्षसाधनहीनो वेति, स च द्विधा—द्रव्यभावभेदात्, तत्र सचित्तद्रव्यपरिद्यूनो जीर्णशरीरः स्थविरकः जीर्णवृक्षो वा, अचित्तद्रव्यपरिद्यूनो जीर्णपटादिः, भावपरिद्यून औदयिकभावोदयात् प्रशस्तज्ञानादिभावविकलः, कथं विकलः ?, अनन्तगुणपरिहाण्या, तथाहि—पञ्चचतुस्त्रिद्व्येकेन्द्रियाः क्रमशो ज्ञानविकलाः, तत्र सर्वनिकृष्टज्ञानाः सूक्ष्मनिगोदापर्याप्तका प्रथमसमयोत्पन्ना इति, उक्तं च—"सर्वनिकृष्टो जीवस्य दृष्ट उपयोग एष वीरेण। सूक्ष्मनिगोदापर्याप्तकानां स च भवति विज्ञेयः ॥१॥ तस्मात्प्रभृति ज्ञानविवृद्धिर्दृष्टा जिनेन जीवानाम्। लब्धिनिमित्तैः करणैः कायेन्द्रियवाङ्मनोदृग्भिः ॥२॥" स

आर्त-सरूपं

५

१०

१ श्रोत्रेन्द्रियवशार्त्तो भदन्त ! जीवः किं बध्नाति ? किं चिनोति ? किमुपचिनोति ?, गौतम ! अष्ट कर्मप्रकृतीः शिथिलबन्धनबद्धाः गाढबन्धनबद्धाः प्रकरोति, यावदनादिकमनवनताग्रं दीर्घाध्वानं चातुरन्तसंसारकान्तारमनुपर्यटति. २ रागद्वेषकषायैरिन्द्रियैश्च पञ्चभि.। द्विधा मोहनीयेन वा आर्त्ताः संसारिणो जीवाः ॥१॥

न विषयकषायार्त्तः प्रशस्तज्ञानयून: किमवस्थो भवतीति दर्शयति-'दुस्संबोध' इति, दुःखेन सम्बोध्यते-धर्मचरणप्रतिपत्तिं कार्यत इति दुस्सम्बोधो, मेतार्यवदिति, यदिवा दुस्सम्बोधो यो बोधयितुमशक्यो ब्रह्मदत्तवत्, किमित्येवम् ?, यतः 'अवियाणए'त्ति विशिष्टावबोधरहितः, स चैवंविधः किं विदध्यादित्याह-'अस्सिन्' पृथिवीकायलोके 'प्रव्यथिते' प्रकर्षेण व्यथिते, सर्वस्यारम्भस्य तदाश्रयत्वादिति प्रकर्षार्थः, तत्तत्प्रयोजनतया खननादिभिः पीडिते नानाविधशस्त्राक्रीते वा 'व्यथ भयचलनयो' रितिकृत्वा व्यथितं भीतमिति, 'तत्थ तत्थे'त्ति तेषु तेषु कृषिखननगृहकरणादिषु 'पृथग्'विभिन्नेषु कार्येषूत्पन्नेषु 'पश्ये'ति विनेयस्य लोकाकार्यप्रवृत्तिः प्रदर्श्यते, सिद्धान्तशैल्या एकादेशेऽपि प्राकृते बह्वादेशो भवतीति, 'आतुरा' विषयकषायादिभिः 'अस्मिन्' पृथिवीकाये विषयभूते सामर्थ्यात् पृथिवीकायं 'परितापयन्ति' परि-समन्तात् तापयन्ति-पीडयन्तीत्यर्थः, बहुवचननिर्देशस्तु तदारम्भिणां बहुत्वं गमयति, यदिवा-लोकशब्दः प्रत्येकमभिसम्बध्यते, कश्चिल्लोको विषयकषायादिभिरार्त्तोऽपरस्तु कायपरिजीर्णः कश्चिद् दुःखसंबोधः तथाऽपरो विशिष्टज्ञानरहितः, एते सर्वेऽप्यातुरा विषयजीर्णदेहादिभिः सुखास्वयेऽस्मिन्-पृथिवीकायलोके विषयभूते पृथिवीकायं नानाविधैरुपायैः 'परितापयन्ति' परि-समन्तात् तापयन्ति-पीडयन्तीति सूत्रार्थः ॥१४॥ ननु चैकदेवताविशेषावस्थिता पृथिवीति शक्यं प्रतिपत्तुं, न पुनरसंख्येयजीवसङ्घातरूपेत्येतत् परिहर्तुकाम आह—

**संति पाणा पुढो सिया लज्जमाणा पुढो पास अणगारा मोत्ति एगे पवयमाणा जमिणं विरूवरूवेहिं सत्थेहिं पुढविकम्मसमारंभेणं पुढविसत्थं समारंभेमाणा अणेगरूवे पाणे विहिंसइ(सू. १५)**

१ बधिरत्व प्र० अगो दु सम्बोधः, नास्तीदं.

प्र. आ. ३५

१५ २० २५

'मन्ति' विद्यन्ते 'प्राणाः' सत्त्वाः 'पृथग्' पृथग्भावेन, अङ्गुलासंख्येयभागस्वदेहावगाहनया पृथिव्याश्रिताः सिता वा-सम्बद्धा इत्यर्थः, अनेनैतत्कथयति-नैकदेवता पृथिवी, अपि तु प्रत्येकशरीरपृथिवीकायात्मिकेति, तदेवं सचेतनत्वमनेकजीवाधिष्ठितत्वं च पृथिव्या आविष्कृतं भवतीति। एतच्च ज्ञात्वा तदारम्भनिवृत्तान् दर्शयितुमाह—'लज्जमाणा पुढो पास'त्ति, लज्जा द्विविधा-लौकिकी लोकोत्तरा च, तत्र लौकिकी स्नुषाश्वभ्रूटादेः श्वशुरसङ्गमविषया, लोकोत्तरा सप्तदशप्रकारः संयमः, तदुक्तं—"लज्जा दया संजम बंभचेर'मित्यादि, लज्जमानाः-संयमानुष्ठानपराः, यदिवा-पृथिवीकायसमारम्भरूपादसंयमानुष्ठानाल्लज्जमानाः 'पृथगि'ति प्रत्यक्षज्ञानिनः परोक्षज्ञानिनश्च, अतस्तान् लज्जमानान् पश्येत्यनेन शिष्यस्य कुशलानुष्ठानप्रवृत्तिविषयः प्रदर्शितो भवतीति। कुतीर्थिकास्त्वन्यथावादिनोऽन्यथाकारिण इति दर्शयितुमाह-'अणगारा' इत्यादि, न विद्यतेऽगारं-गृहमेषामित्यनगारा-यतयः स्मो वयमित्येवं प्ररूपणं वदन्तः प्रवदन्त इति, 'एके' शाक्यादयो ग्राह्याः, ते च वयमेव जन्तुरक्षणपराः क्षपितकषायाज्ञानतिमिराश्चेति, एवमादि प्रतिज्ञामात्रमनर्थकमारटन्ति, यथा कश्चिदत्यन्तशुचिर्वोद्रश्चतुःषष्टिमृत्तिकास्नायी गोशवस्याशुचितया परित्यागं विधाय पुनः कर्मकरवाक्यात्तच्चर्मास्थिपिशितस्नाय्वादेर्यथास्वमुपयोगार्थं संग्रहं कारितवान्, तथा च तेन शुच्यभिमानमुद्वहताऽपि किं तस्य परित्यक्तम्?, एवमेतेऽपि शाक्यादयोऽनगारवादमुद्वहन्ति, न चानगारगुणेषु मनागपि प्रवर्त्तन्ते, न च गृहस्थचर्यां मनागप्यतिलङ्घयन्तीति दर्शयति-'यद्' यस्माद् 'इम'मिति सर्वजनप्रत्यक्षं पृथिवीकायं 'विरूपरूपैः' नानाप्रकारैः 'शस्त्रैः' हलकुद्दालखनित्रादिभिः पृथिव्याश्रयं कर्म्म-क्रियां समारभमाणा विहिंसन्ति, तथाऽनेन च पृथिवीकर्मसमारम्भेण पृथिवीशस्त्रं 'समारभमाणो' व्यापारयन् पृथिवीकायं नाना-

पृथ्वीवधका असंयताः सू. १५

५

१०

१ लज्जा दया संयमो ब्रह्मचर्य २ येषां ते प्र०

विधैः शस्त्रैर्व्यापादयन् 'अनेकरूपान्' तदाश्रितानुदकवनस्पत्यादीन् विविधं हिनस्ति, नानाविधैरुपायैर्व्यापादयतीत्यर्थः, एवं शाक्यादीनां पार्थिवजन्तुपरिणामयतित्वं प्रतिपाद्य साम्प्रतं सुखाभिलाषितया कृतकारितानुमतिभिर्मनोवाक्कायलक्षणां प्रवृत्तिं दर्शयितुमाह—

तत्थ खलु भगवया परिण्णा पवेइया, इमस्स चेव जीवियस्स परिवंदणमाणणपूयणाए जाइमरणमोयणाए दुक्खपडिघायहेउं से सयमेव पुढविसत्थं समारंभइ अण्णेहिं वा पुढविसत्थं समारंभावेइ अण्णे वा पुढविसत्थं समारंभंते समणुजाणइ (सू० १६)

'तत्र' पृथिवीकायसमारम्भे खलुशब्दो वाक्यालङ्कारे 'भगवता' श्रीवर्द्धमानस्वामिना परिज्ञानं परिज्ञा सा प्रवेदितेति, इदमुक्तं भवति—भगवतेदमाख्यात—यथैभिर्वक्ष्यमाणैः कारणैः कृतकारितानुमतिभिः सुखैषिणः पृथिवीकायं समारभन्ते, तानि चामूनि—अस्यैव जीवितस्य परिपेलवस्य परिवन्दनमाननपूजनार्थं, तथा जातिमरणमोचनार्थं, दुःखप्रतिघातहेतुं च स सुखलिप्सुर्दुःखद्विट् स्वयमात्मनैव पृथिवीशस्त्रं समारभते, तथाऽन्यैश्च पृथिवीशस्त्रं समारम्भयति, पृथिवीशस्त्रं समारभमाणानन्यांश्च स एव समनुजानीते, एवमतीतानागताभ्यां मनोवाक्कायकर्मभिरायोजनीयम् । तदेवं प्रवृत्तमतेर्यद्भवति तद्दर्शयितुमाह—

तं से अहिआए तं से अबोहीए से तं संबुज्झमाणे आयाणीयं समुट्ठाय सोच्चा खलु भगवओ अणगाराणं इहमेगेसिं णातं भवति-एस खलु गंथे एस खलु मोहे एस खलु मारे एस

पृथ्वीव- १५ धहेतवः सू. १६

२०

खलु णरए इच्चत्थं गड्ढिए लोए जमिणं विरूवरूवेहिं सत्थेहिं पुढविकम्मसमारंभेण पुढविसत्थं समारंभमाणे अण्णे अणेगरूवे पाणे विहिंसइ, से बेमि अप्पेगे अंधमब्भे अप्पेगे अंधमच्छे अप्पेगे पायमब्भे अप्पेगे पायमच्छे अप्पेगे गुप्फमब्भे अप्पेगे गुप्फमच्छे अप्पेगे जंघमब्भे २ अप्पेगे जाणुमब्भे २ अप्पेगे ऊरुमब्भे २ अप्पेगे कडिमब्भे २ अप्पेगे णाभिमब्भे २ अप्पेगे उदरमब्भे २ अप्पेगे पासमब्भे २ अप्पेगे पिट्ठिमब्भे २ अप्पेगे उरमब्भे २ अप्पेगे हिययमब्भे २ अप्पेगे थणमब्भे २ अप्पेगे खंधमब्भे २ अप्पेगे बाहुमब्भे २ अप्पेगे हत्थमब्भे २ अप्पेगे अंगुलिमब्भे २ अप्पेगे णहमब्भे २ अप्पेगे गीवमब्भे २ अप्पेगे हणुमब्भे २ अप्पेगे होट्ठमब्भे २ अप्पेगे दंतमब्भे २ अप्पेगे जिब्भमब्भे २ अप्पेगे तालुमब्भे २ अप्पेगे गलमब्भे २ अप्पेगे गंडमब्भे २ अप्पेगे कण्णमब्भे २ अप्पेगे णासमब्भे २ अप्पेगे अच्छिमब्भे २ अप्पेगे भमुहमब्भे २ अप्पेगे णिडालमब्भे २ अप्पेगे सीसमब्भे २ अप्पेगे संप-

पृथ्वीवधवेदना सू. १७

५

१०

मारए अप्पेगे उद्दवए, इत्थं सत्थं समारंभमाणस्स इच्चेते आरंभा अपरिण्णाता भवंति (सू. १७)



'तं से अहियाए तं से अबोहीए' तत् पृथिवीकायसमारम्भणं 'से' तस्य कृतकारितानुमतिभिः पृथ्वीशस्त्रं समारभमाणस्यागामिनि काले अहिताय भवति, तदेव चाबोधिलाभायेति, न हि प्राणिगणोपमर्दनप्रवृत्तानामणीयसाऽपि हितेनाऽऽयत्यां योगो भवतीत्युक्तं भवति, यः पुनर्भगवतः सकाशात्तच्छिष्यानगारेभ्यो वा विज्ञाय पृथ्वीसमारम्भं पापात्मकं भावयति स एवं मन्यत इत्याह–'से तं'मित्यादि, 'सः' ज्ञातपृथिवीजीवत्वेन विदितपरमार्थः 'तं' पृथ्वीशस्त्रसमारम्भमहितं सम्यगवबुध्यमानः 'आदानीयं' ग्राह्यं सम्यग्दर्शनादि सम्यगुत्थाय–अभ्युपगम्य, केन प्रत्ययेनेति दर्शयति–'श्रुत्वा' अवगम्य साक्षाद्भगवतोऽनगाराणां वा समीपे, ततः 'इह' मनुष्यजन्मनि 'एकेषां' प्रतिबुद्धतत्त्वानां साधूनां ज्ञातं भवतीति, यत् ज्ञातं भवति तद्दर्शयितुमाह—'एसे'त्यादि, एष पृथ्वीशस्त्रसमारम्भः खलुरवधारणे कारणे कार्योपचारं कृत्वा 'नड्वलोदकं पादरोग' इति न्यायेनैष एव ग्रन्थः–अष्टप्रकारकर्मबन्धः, तथैष एव पृथ्वीसमारम्भो मोहहेतुत्वान्मोहः–कर्मबन्धविशेषो दर्शनचारित्रभेदोऽष्टाविंशतिविधः, तथैष एव मरणहेतुत्वान्मारः–आयुष्ककर्मक्षयलक्षणः, तथैष एव नरकहेतुत्वान्नरकः–सीमन्तकादिर्भूभागः, अनेन चासातवेदनीयमुपात्तं भवति, कथं पुनरेकप्राणिव्यापादनप्रवृत्तोऽष्टविधकर्मबन्धं करोतीति, उच्यते, मार्यमाणजन्तुज्ञानावरोधित्वात् ज्ञानावरणीयं बध्नाति, एवमन्यत्राप्यायोजनीयमिति, अन्यदपि तेषां ज्ञातं भवतीति दर्शयितुमाह—'इच्चत्थ'मित्यादि, 'इत्येवमर्थम्' आहारभूषणोपकरणार्थं तथा परिवन्दनमाननपूजनार्थं दुःखप्रतिघातहेतुं च 'गृद्धो' मूर्छितो 'लोकः' प्राणिगणः, एवंविधेऽप्यतिदुरितनिचयविपाकफले पृथ्वीकायसमारम्भे अज्ञानवशान्मूर्च्छितस्त्वेतद्विधत्त इति दर्शयति–'यद्' यस्माद् 'इमं' पृथ्वीकायं विरूपरूपैः शस्त्रैः पृथ्वीकर्म समारभमाणो हिनस्ति, पृथि-

१५

२०

वीकायसमारम्भेण च पृथिव्येव शस्त्रं स्वकायादेः पृथिव्या वा शस्त्रं हलकुद्दालादि तत् समारभते, पृथिवीशस्त्रं समारभमाणश्चान्यान् अनेकरूपान् 'प्राणिनो' द्वीन्द्रियादीन् विविधं हिनस्तीति । स्यादारेका, ये हि न पश्यन्ति न शृण्वन्ति न जिघ्रन्ति न गच्छन्ति कथं पुनस्ते वेदनामनुभवन्तीति ग्रहीतव्यम् ?, अमुष्यार्थस्य प्रसिद्धये दृष्टान्तमाह—'से बेमी' त्यादि, सोऽहं पृष्टो भवता पृथिवीकायवेदनां ब्रवीमि, अथवा 'से' इति तच्छब्दार्थे वर्त्तते, यत्त्वया पृष्टस्तदहं ब्रवीमि, अपिशब्दो यथानामशब्दार्थे, यथा नाम कश्चिज्जात्यन्धो बधिरो मूकः कुष्ठी पङ्गुः अनभिनिर्वृत्तपाण्याद्यवयवविभागो मृगापुत्रवत् पूर्वकृताशुभकर्मोदयाद् हिताहितप्राप्तिपरिहारविमुखोऽतिकरुणां दशां प्राप्तः, तमेवंविधमन्धादिगुणोपेतं कश्चित् कुन्ताग्रेण 'अब्भे' इति आभिन्द्यात्, तथाऽपरः कश्चिदन्धमाच्छिन्द्यात्, स च भिद्यमानाद्यवस्थायां न पश्यति न शृणोति मूकत्वान्नोच्चै रारटीति, किमेतावता तस्य वेदनाऽभावो जीवाभावो वा शक्यो विज्ञातुम् ?, एवं पृथिवीजीवा अप्यव्यक्तचेतना जात्यन्धबधिरमूकपङ्ग्वादिगुणोपेतपुरुषवदिति, यथा वा पञ्चेन्द्रियाणां परिस्पष्टचेतनानां 'अप्पेगे पायमब्भे' इति यथा नाम कश्चित् पादमाभिन्द्याद् आच्छिन्द्याद्वेति, एवं गुल्फादिष्वप्यायोजनीयमिति दर्शयति, एवं जङ्घाजानूरुकटीनाभ्युदरपार्श्वपृष्ठउरोहृदयस्तनस्कन्धबाहुहस्ताङ्गुलिनखग्रीवाहनुकौष्ठदन्तजिह्वातालुगलगण्डकर्णनासिकाऽक्षिभ्रूललाटशिरःप्रभृतिष्ववयवेषु भिद्यमानेषु छिद्यमानेषु वा वेदनोत्पत्तिर्लक्ष्यते, एवमेषामुत्कटमोहाज्ञानभाजां स्त्यानर्द्ध्याद्युदयादव्यक्तचेतनानामव्यक्तैव वेदना भवतीति ग्राह्यम् । अत्रैव दृष्टान्तान्तरं दर्शयितुमाह—'अप्पेगे संपमारए अप्पेगे उद्दवए' यथा नाम कश्चित् 'सम्' एकीभावेन प्रकर्षेण प्राणानां मारणम्–अव्यक्तत्वापादनं कस्यचित् कुर्यात्, मूर्च्छामापादयेदित्यर्थः, तथाऽवस्थं च यथा नाम कश्चिदपद्रापयेत्–प्राणेभ्यो व्यपरोपयेत् न चासौ तां वेदनां स्फुटमनुभवति, अस्ति चाव्यक्ता तस्यासौ वेदनेति, एवं पृथिवीजीवानामपि

पृथ्वीवधे तद्वेदना।

५

१०

द्रव्यमिति ॥ पृथिवीकायिकानां जीवत्वं प्रसाध्य तथा नानाविधशस्त्रसंपाते वेदनां चाविर्भाव्य अधुना तद्वधे बन्धं दर्शयितुमाह–

**एत्थ सत्थं असमारभमाणस्स इच्चेते आरंभा परिण्णाता भवंति, तं परिण्णाय मेहावी नेव सयं पुढविसत्थंसमारंभेज्जा णेवण्णेहिं पुढविसत्थं समारंभावेज्जा णेवण्णे पुढविसत्थं समारंभंते समणुजाणेज्जा, जस्सेते पुढविकम्मसमारंभा परिण्णाता भवंति से हु मुणी परिण्णातकम्मेत्ति बेमि (सू. १८) इति द्वितीय उद्देशकः ॥**

परिज्ञा-
कमता
सू. १८

‘अत्र’ पृथिवीकाये ‘शस्त्रं’ द्रव्यभावभिन्नं, तत्र द्रव्यशस्त्रं स्वकायपरकायोभयरूपं, भावशस्त्रं त्वसंयमो दुष्प्रणिहितमनोवाक्काय-लक्षणः, एतद्द्विविधमपि शस्त्रं समारभमाणस्येति ‘एते’ खननकृष्याद्यात्मकाः समारम्भाः बन्धहेतुत्वेन ‘अपरिज्ञाता’ अविदिता भवन्ति, एतद्विपरीतस्य परिज्ञाता भवन्तीति दर्शयितुमाह—‘एत्थे’ त्यादि, ‘अत्र’ पृथिवीकाये द्विविधमपि शस्त्रम् ‘असमारभमाणस्य’ अव्यापारयत इति, ‘एते’ प्रागुक्ताः कर्मसमारम्भाः ‘परिज्ञाता’ विदिता भवन्ति, अनेन च विरत्यधिकारः प्रतिपादितो भवतीति तामेव विरतिं स्वनामग्राहमाह–‘त’मित्यादि, तं पृथिवीकायसमारम्भे बन्धं परिज्ञाय असमारम्भे चाऽबन्धमिति ‘मेधावी कुशलः एतत् कुर्यादिति दर्शयति–नैव पृथिवीशस्त्रं द्रव्यभावभिन्नं समारभेत, नापि तद्विषयोऽन्यैः समारम्भः कारयितव्यः, न चान्यान् पृथिवीशस्त्रं समारभमाणान् समनुजानीयात् इति, एवं मनोवाक्कायकर्म्मभिरतीतानागतकालयोरप्यायोजनीयमिति, तत-

२०

श्चैवं कृतनिवृत्तिरसौ मुनिरिति व्यपदिश्यते न शेष इति, दर्शयन्नुपसञ्जिहीर्षुराह-'यस्य' विदितपृथिवीजीववेदनास्वरूपस्य, 'एते' पृथिवीविषयाः कर्म्मसमारम्भाः खननकृष्याद्यात्मकाः कर्मबन्धहेतुत्वेन परिज्ञाता भवन्ति ज्ञपरिज्ञया, तथा प्रत्याख्यानपरिज्ञया च परिहृता भवन्ति, हुरवधारणे, स एव मुनिर्द्विविधयाऽपि परिज्ञया परिज्ञातं कर्म-सावद्यानुष्ठानमष्टप्रकारं वा कर्म येन स परिज्ञातकर्मा, नापरः शाक्यादिः, ब्रवीमीति पूर्ववदिति ॥ शस्त्रपरिज्ञायां द्वितीय उद्देशकः समाप्तः ॥

गतः पृथिव्युद्देशकः, साम्प्रतमप्कायोद्देशकः समारभ्यते, अस्य चायमभिसम्बन्धः-इहानन्तरोद्देशके पृथिवीकायजीवाः प्रतिपादितास्तद्वधे बन्धो विरतिश्च, साम्प्रतं क्रमायातस्याप्कायस्य जीवत्वं तद्वधे बन्धो विरतिश्च प्रतिपाद्यते इति, अनेन सम्बन्धेनायातस्यास्योद्देशकस्य चत्वार्यनुयोगद्वाराणि वाच्यानि, तत्र नामनिष्पन्ने निक्षेपे अप्कायोद्देशकः, तत्र पृथिवीकायजीवस्वरूपसमधिगतये यानि नव निक्षेपादीनि द्वाराण्युक्तानि अप्कायेऽपि तान्येव समानतयाऽतिदेष्टुकामः कानिचिद्विशेषाभिधित्सयोद्धर्तुकामश्च निर्युक्तिकारो गाथामाह—

आउस्सवि दाराइं ताइं जाइं हवंति पुढवीए । नाणत्ती उ विहाणे परिमाणुवभोगसत्थे य ॥१०६॥

अप्कायस्यापि तान्येव द्वाराणि भवन्ति यानि पृथिव्याः प्रतिपादितानीति, 'नानात्वं' भेदरूपं विधानपरिमाणोपभोगशस्त्रविषयं द्रष्टव्यं, चशब्दात् लक्षणविषयं च, तुशब्दोऽवधारणार्थः, एतद्गतमेव नानात्वं, नान्यगतमिति ॥ तत्र विधानं-प्ररूपणा, तद्गतं नानात्वं प्रदर्शयितुमाह—

दुविहा उ आउजीवा सुहुमा तह बायरा य लोगंमि । सुहुमा य सव्वलोए पंचेव य बायरविहाणा ॥१०७॥

अप्काये विधानादि

५

१०

स्पष्टा ॥ तत्र पञ्च बादरविधानानि दर्शयितुमाह—

सुद्धोदए य उस्सा हिमे य महिया य हरतणू चेव । बायर आउविहाणा पंचविहा वण्णिया एए ॥१०८॥

'शुद्धोदकं' तडागसमुद्रनदीह्रदावटादिगतमवश्यायादिरहितमिति, 'अवश्यायो' रजन्यां यत्स्नेहः पतति, हिमं तु शिशिरसमये शीतपुद्गलसम्पर्काज्जलमेव कठिनीभूतमिति, गर्भमासादिषु सायं प्रातर्वा धूमिकापातो महिकेत्युच्यते, वर्षाशरत्कालयोर्हरिताङ्कुरमस्तकव्यवस्थितो जलबिन्दुर्भूमिस्नेहसम्पर्कोद्भूतो हरतनुशब्देनाभिधीयते, एवमेते पञ्च बादराप्कायविधयो व्यावर्णिताः । ननु च प्रज्ञापनायां बादराप्कायभेदा बहवः परिपठिताः, तद्यथा—करकशीतोष्णक्षारक्षत्रकट्टम्ललवणवरुणकालोदपुष्करक्षीरघृतेक्षुरसादयः कथं पुनरेषामत्र सङ्ग्रहः ?, उच्यते, करकस्तावत्कठिनत्वाद्धिमान्तःपाती, शेषास्तु स्पर्शरसस्थानवर्णमात्रभिन्नत्वान्न शुद्धोदकमतिवर्त्तन्ते, यद्येवं प्रज्ञापनायां किमर्थोऽपरभेदानां पाठः ?, उच्यते, स्त्रीबालमन्दबुद्ध्यादिप्रतिपत्त्यर्थमिति, इहापि कस्मान्न तदर्थं पाठः ?, उच्यते, प्रज्ञापनाध्ययनमुपाङ्गत्वादार्षं, तत्र युक्तः सकलभेदोपन्यासः कृपाद्यनुग्रहाय, निर्युक्तयस्तु सूत्रार्थं पिण्डीकुर्वन्त्यः प्रवर्तन्त इत्यदोषः । त एते बादराप्कायाः समासतो द्वेधा—पर्याप्तका अपर्याप्तकाश्च, तत्रापर्याप्तका वर्णादीनसम्प्राप्ताः, पर्याप्तकास्तु वर्णगन्धरसस्पर्शादेशैः सहस्राग्रशो भिद्यन्ते, ततश्च सङ्ख्येयानि योनिप्रमुखानि शतसहस्राणि भवन्ति भेदानामित्यवगन्तव्यं, संवृतयोनयश्चैते, सा च योनिः सचित्ताचित्तमिश्रभेदात् त्रिधा, पुनश्च शीतोष्णोभयभेदात्त्रिविधैव, एवं गण्यमानाः योनीनां सप्त लक्षा भवन्तीति ॥ प्ररूपणानन्तरं परिमाणद्वारमाह—

जे बायरपज्जत्ता पयरस्स असंखभागमित्ता ते । सेसा तिन्निवि रासी वीसुं लोगा असंखिज्जा ॥१०९॥

१५ शुद्धोदकाद्या भेदाः

२०

ये बादराप्कायपर्याप्तकाः ते संवर्त्तितलोकप्रतरासङ्ख्येयभागप्रदेशराशिपरिमाणाः, शेषास्तु त्रयोऽपि राशयो 'विष्वक्' पृथगसङ्ख्येयलोकाकाशप्रदेशराशिपरिमाणा इति, विशेषश्चायम्-बादरपृथिवीकायपर्याप्तकेभ्यो बादराप्कायपर्याप्तका असङ्ख्येयगुणाः, बादरपृथ्वीकायापर्याप्तकेभ्यो बादराप्कायिकापर्याप्तका असंख्येयगुणाः, सूक्ष्मपृथिवीकायापर्याप्तकेभ्यः सूक्ष्माप्कायापर्याप्तका विशेषाधिकाः; *सूक्ष्मपृथ्वीकायपर्याप्तकेभ्यः सूक्ष्माप्कायपर्याप्ता विशेषाधिकाः ॥ साम्प्रतं परिमाणद्वारानन्तरं चशब्दसूचितं लक्षणद्वारमाह—*

जह हत्थिस्स सरीरं कललावत्थस्स अहुणोववन्नस्स । होइ उदगंडगस्स य एसुवमा सव्वजीवाणं ॥११०॥

अथवा पर आक्षिपति-नाप्कायो जीवः तल्लक्षणायोगात् प्रश्रवणादिवदित्यस्य हेतोरसिद्धतोद्भावनार्थं दृष्टान्तद्वारेण लक्षणमाह-'जहे'त्यादि, यथा हस्तिनः शरीरं कललावस्थायामधुनोत्पन्नस्य द्रवं चेतनं च दृष्टम् एवमप्कायोऽपीति, यथा वा उदकप्रधानमण्डकमुदकाण्डकम्, अधुनोत्पन्नमित्यर्थः, तन्मध्यव्यवस्थितं रसमात्रमसञ्जातावयवमनभिव्यक्तचञ्च्वादिप्रविभागं चेतनावद् दृष्टम् एषा एवोपमा अप्कायजीवानामपीति, हस्तिशरीरकललग्रहणं च महाकायत्वात् तद्वद्धु भवतीत्यतः सुखेन प्रतिपद्यते, अधुनोपपन्नग्रहणं *सप्ताहपरिग्रहार्थं, यतः सप्ताहमेव कललं भवति, परतस्त्वर्बुदादि, अण्डकेऽप्युदकग्रहणमेवमर्थमेव,* प्रयोगश्चायम्-सचेतना आपः, शस्त्रानुपहतत्वे सति द्रवत्वात्, हस्तिशरीरोपादानभूतकललवत्, विशेषणोपादानात् प्रश्रवणादिव्युदासः, तथा सात्मकं तोयम्, अनुपहतद्रवत्वाद्, अण्डकमध्यस्थितकललवदिति,-तथा आपो जीवशरीराणि, छेद्यत्वाद्भेद्यत्वादुत्क्षेप्यत्वाद्भोज्यत्वाद्भोग्यत्वात् घ्रेयत्वाद्रसनीयत्वात् स्पर्शनीयत्वात् दृश्यत्वाद् द्रव्यत्वाद् एवं सर्वेऽपि शरीरधर्मा हेतुत्वेनोपन्यसनीयाः, गगनवर्जभूतधर्माश्च रूपवत्त्वाकारवत्त्वादयः, सर्वत्र चायं दृष्टान्तः-सास्नाविषाणादिसङ्घातवदिति, ननु च रूपवत्त्वाकारवत्त्वादयो भूतधर्माः परमाणुष्वपि दृष्टा

अप्काये परिमाणलक्षणे

५

प्र. आ. ४०

१०

ना.
१ श्रु.
१ अ.
३ उ.

१५
उपभोग-
कार-
णानि

इत्यनैकान्तिकता, नैतदेवं, यदत्र छेद्यत्वादिहेतुत्वेनोपन्यस्तं तत् सर्वमिन्द्रियव्यवहारानुपाति, न च तथा परमाणवः, अतः प्रकरणादतीन्द्रियपरमाणुव्यवच्छेदः, यदिवा नैवासौ विपक्षः, सर्वस्य पुद्गलद्रव्यस्य द्रव्यशरीराभ्युपगमात्, जीवसहितासहितत्वं तु विशेषः, उक्तं च—"तणवोऽणब्भातिविगार मुत्तजाइत्तओऽणिलंताउ। सत्थासत्थहयाओ निज्जीवसजीवरूवाओ ॥१॥" एवं शरीरत्वे सिद्धे सति प्रमाणं-सचेतना हिमादयः, क्वचित् अप्कायत्वाद्, इतरोदकवत् इति, तथा सचेतना आपः, क्वचित् खातभूमिस्वाभाविकसम्भवत्वाद्, दर्दुरवत्, अथवा सचेतना अन्तरिक्षोद्भवा आपः, स्वाभाविकव्योमसम्भूतसम्पातित्वात्, मत्स्यवत्, अत एते एवंविधलक्षणभाक्त्वाज्जीवा भवन्त्यप्कायाः ॥ साम्प्रतमुपभोगद्वारमाह—

२०

ण्हाणे पिअणे तह धोअणे य भत्तकरणे अ सेए अ। आउस्स उ परिभोगो गमणागमणे य जीवाणं ॥१११॥

स्नानपानधावनभक्तकरणसेकयानपात्रोडुपगमनागमनादिरुपभोगः ॥ ततश्च तत्परिभोगाभिलाषिणो जीवा एतानि कारणान्युद्दिश्याप्कायवधे प्रवर्त्तन्त इति प्रदर्शयितुमाह—

एएहिं कारणेहिं हिंसंती आउकाइए जीवे। सायं गवेसमाणा परस्स दुक्खं उदीरंति ॥११२॥

'एभिः' स्नानावगाहनादिकैः कारणैरुपस्थितैः विषयविषमोहितात्मानो निष्करुणा अप्कायिकान् जीवान् 'हिंसन्ति' व्यापादयन्ति, किमर्थमित्याह—'सातं' सुखं तद् आत्मनः 'अन्वेषयन्तः' प्रार्थयन्तः हिताहितविचारशून्यमनसः कतिपयदिवसस्थायिरम्ययौवनदर्पाध्मातचेतसः सन्तः सद्विवेकरहिताः तथा विवेकिजनसंसर्गविकलाः 'परस्य' अवादेर्जन्तुगणस्य 'दुःखम्' असातलक्षणं तद्

२७
॥३७॥

१ तनवोऽणभ्रादिविकारा मूर्त्तजातित्वतः अनिलान्तास्तु। शस्त्राशस्त्रहता निर्जीवसजीवरूपाः ॥१॥

उदीरयन्ति, असातवेदनीयमुत्पादयन्तीत्यर्थः, उक्तं च—"एकं हि चक्षुरमलं सहजो विवेकस्तद्वद्भिरेव सह संवसतिर्द्वितीयम्। एतद्द्वयं भुवि न यस्य स तत्त्वतोऽन्धस्तस्यापमार्गचलने खलु कोऽपराधः ? ॥१॥ इदानीं शस्त्रद्वारमुच्यते—

**उस्सिंचणगालणधोवणे य उवगरणमत्तभंडे य। बायरआउक्काए एयं तु समासओ सत्थं ॥११३॥**

प्र. आ. ४१

शस्त्रं द्रव्यभावभेदात् द्विधा, द्रव्यशस्त्रमपि समासविभागभेदात् द्विधैव, तत्र समासतो द्रव्यशस्त्रमिदम्–ऊर्ध्वं सेचनमुत्सेचनं, कूपादेः कोशादिनोत्क्षेपणमित्यर्थः, 'गालनं' घनमसृणवस्त्राद्यन्तेन 'धावनं' वस्त्राद्युपकरणचर्मकोशकटाहादिभण्डकविषयम्, एवमादिकं बादराप्काये 'एतत्' पूर्वोक्तं 'समासतः' सामान्येन शस्त्रं, तुशब्दो विभागापेक्षया विशेषणार्थः ॥ विभागतस्त्विदम्–

५

**किंची सकायसत्थं किंची परकाय तदुभयं किंची। एयं तु दव्वसत्थं भावे य असंजमो सत्थं ॥११४॥**

किञ्चित् स्वकायशस्त्रं नादेयं तडागस्य, किञ्चित्परकायशस्त्रं मृत्तिकास्नेहक्षारादि, किञ्चिचोभयं उदकमिश्रा मृत्तिका उदकस्येति, भावशस्त्रमसंयमः प्रमत्तस्य दुष्प्रणिहितमनोवाक्कायलक्षण इति ॥ शेषद्वाराणि पृथिवीकायवन्नेतव्यानि इति दर्शयितुमाह—

**सेसाइं दाराइं ताइं जाइं हवंति पुढवीए। एवं आउद्देसे निज्जुत्ती कित्तिया एसा (होइ) ॥११५॥**

१०

'शेषाणी'त्युक्तशेषाणि निक्षेपवेदनाद्यनिर्युक्तिरूपाणि, तान्येवात्रापि द्रष्टव्यानि यानि पृथिव्यां भवन्तीति, 'एवम्' उक्तप्रकारेणाप्कायोद्देशके 'निर्युक्तिः' निश्चयेनार्थघटना 'कीर्त्तिता' प्रदर्शिता भवतीति॥ साम्प्रतं सूत्रानुगमेऽस्खलितादिगुणोपेतं सूत्रमुच्चारणीयं, तच्चेदम्–

## से बेमि से जहावि अणगारे उज्जुकडे नियायपडिवण्णे अमायं कुव्वमाणे वियाहिए (सू. १९)

१ नियाग पडिवन्न इति पा

'से बेमी'त्यादि अस्य चायमभिसम्बन्धः-इहानन्तरोद्देशके परिसमाप्तिसूत्रे 'पृथिवीकायसमारम्भव्यावृत्तो मुनि'रित्युक्तं, न चैतावता सम्पूर्णो मुनिर्भवति, यथा च भवति तथा दर्शयति, तथाऽऽदिसूत्रेणायं सम्बन्धः-सुधर्मस्वामी इदमाह-श्रुतं मया भगवदन्तिके यत् प्राक् प्रतिपादितम् अन्यच्चेदमित्येवं परम्परसूत्रसम्बन्धोऽपि प्राग्वद्वाच्यः। सेशब्दस्तच्छब्दार्थो, स यथा पृथिवीकायसमारम्भव्यावृत्युत्तरकालं सम्पूर्णानगारव्यपदेशभाग् भवति तदहं ब्रवीमि, अपिः समुच्चये, स यथा वाऽनगारो न भवति तथा च ब्रवीमि 'अणगारा मोत्ति एगे पवयमाणे'त्यादिनेति, न विद्यते अगारं-गृहमस्येत्यनगारः, इह च यत्यादिशब्दव्युदासेनानगारशब्दोपादानेनैतदाचष्टे-गृहपरित्यागः प्रधानं मुनित्वकारणं, तदाश्रयत्वात्सावद्यानुष्ठानस्य, निरवद्यानुष्ठायी च मुनिरिति दर्शयति-'उज्जुकडे'त्ति ऋजुः-अकुटिलः संयमो-दुष्प्रणिहितमनोवाक्कायनिरोधः सर्वसत्त्वसंरक्षणप्रवृत्तत्वाद्द्वयैकरूपः सर्वत्राकुटिलगतिरितियावत्, यदिवा मोक्षस्थानगमनर्जुश्रेणिप्रतिपत्तिः सर्वसंवरसंयमात्, कारणे कार्योपचारं कृत्वा संयम एव सप्तदशप्रकार ऋजुः, तं करोतीति ऋजुकृत्, ऋजुकारीत्यर्थः, अनेन चेदमुक्तं भवति-अशेषसंयमानुष्ठायी सम्पूर्णोऽनगारः, एवंविधश्चेदृग् भवतीति दर्शयति—'नियागपडिवन्ने'त्ति, यजनं यागः नियतो निश्चितो वा यागो नियागो-मोक्षमार्गः, सङ्गतार्थत्वाद्धातोः सम्यग्ज्ञानदर्शनचारित्रात्मतया गतं सङ्गतमिति, तं नियागं-सम्यग्दर्शनज्ञानचारित्रात्मकं मोक्षमार्गं प्रतिपन्नो नियागप्रतिपन्नः, पाठान्तरं वा 'निकायप्रतिपन्नो' निर्गतः कायः-औदारिकादिर्यस्माद्यस्मिन् वा सति स निकायो-मोक्षस्तं प्रतिपन्नो निकायप्रतिपन्नः, तत्कारणस्य सम्यग्दर्शनादेः स्वशक्त्याऽनुष्ठानात्, स्वशक्त्याऽनुष्ठानं चामायाविनो भवतीति दर्शयति-'अमायं कुव्वमाणे'त्ति माया-सर्वत्र स्ववीर्यनिगूहनं, न माया अमाया तां कुर्वाणः-अनिगूहितबलवीर्यः संयमानुष्ठाने पराक्रममाणोऽनगारो व्याख्यात इति, अनेन च तज्जा-

१. आ.
४२



२०

तीयोपादानादशेषकषायापगमोऽपि द्रष्टव्य इति, उक्तं च—"सोही ये उज्जुभूयस्स, धम्मो सुद्धस्स चिट्ठइ"त्ति ॥ तदेवमम्यायुद्धृतमकलमायावल्लीवितानः किं कुर्यादित्याह—

## जाए सद्धाए निक्खंतो तमेव अणुपालिज्जा, वियहित्ता विसोत्तियं (सू० २०).

'यया श्रद्धया' प्रवर्द्धमानसंयमस्थानकण्डकरूपया 'निष्क्रान्तः' प्रव्रज्यां गृहीतवान् 'तामेव' श्रद्धामश्रान्तो यावज्जीवम् 'अनुपालयेद्' रक्षेदित्यर्थः, प्रव्रज्याकाले च प्रायशः प्रवृद्धपरिणाम एव प्रव्रजति, पश्चात्तु संयमश्रेणीं प्रतिपन्नो वर्द्धमानपरिणामो वा हीयमानपरिणामो वा अवस्थितपरिणामो वेति, तत्र वृद्धिकालो हानिकालो वा समयादि उत्कर्षेणान्तर्मौहूर्त्तिकः, नातः परं सङ्क्लेशविशुद्ध्यद्धे भवतः, उक्तं च "नान्तर्मुहूर्त्तकालमतिवृत्त्य शक्यं हि जगति सङ्क्लेष्टुम् । नापि विशोद्धुं शक्यं प्रत्यक्षो ह्यात्मनः सोऽर्थः ॥ १ ॥ उपयोगद्वयपरिवृत्तिः सा निर्हेतुका स्वभावत्वात् । आत्मप्रत्यक्षो हि स्वभावो व्यर्थोऽत्र हेतूक्तिः ॥ २ ॥." अवस्थितकालश्च द्वयोर्वृद्धिहानिलक्षणयोर्यवमध्यवज्रमध्ययोरष्टौ समयाः, तत ऊर्द्ध्वमवश्यं पातात्, अयं च वृद्धिहान्यवस्थितरूपः परिणामः केवलिनां निश्चयेन गम्यो, न छद्मस्थानामिति । यद्यपि च प्रव्रज्याभिगमोत्तरकालं श्रुतसागरमवगाहमानः संवेगवैराग्यभावनाभावितान्तरात्मा कश्चित्प्रवर्द्धमानमेव परिणामं भजते, तथा चोक्तम्—"जह जह सुयमवगाहइ अइसयरसपसरसंजुयमउव्वं । तह तह पल्हाइ मुणी नवनवसंवेगसद्धाए ॥१॥" तथापि स्तोक एव तादृक् बहवश्च परिपतन्ति अतोऽभिधीयते 'तामेवानुपालयेदि'ति, कथं पुनः कृत्वा श्रद्धामनुपालयेदित्याह—'विजहे'त्यादि, 'विहाय' परित्यज्य 'विस्रोतसिकां' शङ्कां, सा च द्विधा–सर्वशङ्का देशशङ्का

प्रव्रज्या-कालीन-कंडक-श्रद्धारक्षा सू. २१

५

१०

१ शोधिऋजुभूतस्य धर्मः शुद्धस्य तिष्ठति २ पुरुमजोय इति पा ३ यथा यथा श्रुतमवगाहते ऽतिशयरसप्रसरसंयुतमपूर्वम् । तथा तथा प्रह्लादते मुनिर्नवनवसंवेगश्रद्धया ॥१॥

च, तत्र सर्वशङ्का किमस्ति आर्हतो मार्गो नवेति, देशशङ्का तु किं विद्यन्ते अप्कायादयो जीवाः?, विशेष्य प्रवचनेऽभिहितत्वात्, स्पष्टचेतनारमलिङ्गाभावान्न विद्यन्ते इति वा, इत्येवमादिकामारेकां विहाय सम्पूर्णाननगारगुणान् पालयेत्, यदिवा विस्रोतांसि द्रव्यभावभेदात् द्विधा-तत्र द्रव्यविस्रोतांसि नद्यादिस्रोतसां प्रतीपगमनानि, भावविस्रोतांसि तु मोक्षं प्रति सम्यग्दर्शनादिस्रोतसां प्रथितानां विरूपाणि-प्रतिकूलानि गमनानि भावविस्रोतांसि, तानि विहाय सम्पूर्णानगारगुणभाग् भवति, श्रद्धां वाऽनुपालयेदिति, पाठान्तरं वा 'विजहित्ता पुव्वसंजोगं' पूर्वसंयोगः-मातापित्रादिभिः, अस्य चोपलक्षणार्थत्वात् पश्चात्संयोगोऽपि श्वशुरादिकृतो ग्राह्यः तं 'विहाय' त्यक्त्वा 'श्रद्धामनुपालयेदि'ति मीलनीयं॥ तत्र यस्यायमुपदेशो दीयते यथा 'विहाय विस्रोतांसि तदनु श्रद्धानुपालनं कार्यं' स एवाभिधीयते-न केवलं भवानेवापूर्वमिदमनुष्ठानमेवंविधं करिष्यति, किं त्वन्यैरपि महासत्त्वैः कृतपूर्वमिति दर्शयितुमाह-

पणया वीरा महावीहिं ( सू० २१ )

'प्रणताः' प्रह्वाः वीराः परीषहोपसर्गकषायसेनाविजयात् वीथिः-पन्थाः महांश्चासौ वीथिश्च महावीथिः—सम्यग्दर्शनादिरूपो मोक्षमार्गो जिनेन्द्रचन्द्रादिभिः सत्पुरुषैः प्रहतः, तं प्रति प्रह्वाः-वीर्यवन्तः संयमानुष्ठानं कुर्वन्ति, ततश्चोत्तमपुरुषप्रहतोऽयं मार्ग इति प्रदर्श्य तज्जनितमार्गविस्रम्भो विनेयः संयमानुष्ठाने सुखेनैव प्रवर्त्तयिष्यते॥ उपदेशान्तरमाह-'लोकं चे'त्यादि, अथवा यद्यपि भवतो मतिर्न क्रमतेऽप्कायजीवविषये, असंस्कृतत्वात्, तथापि भगवदाज्ञेयमिति श्रद्धातव्यमित्याह—

लोगं च आणाए अभिसमेच्चा अकुओभयं (सू० २२)

अत्राधिकृतत्वादप्कायलोको लोकशब्देनाभिधीयते, तमप्कायलोकं चशब्दादन्यांश्च पदार्थान् 'आज्ञया' मौनीन्द्रवचनेन अभिमु-



मार्गस्य
१५
क्षुण्णता
सू. २१

२०

रूपेन सम्यगितात्-ज्ञात्वा, यथाऽप्कायादयो जीवाः, इत्येवमनगम्य न विद्यते कुतश्चिद्धेतोः-केनापि प्रकारेण जन्तूनां भयं यस्मात् सोऽयमकुतोभयः-संयमः तमनुपालयेदिति सम्बन्धः, यद्वा 'अकुतोभयः' अप्कायलोको, यतोऽसौ न कुतश्चिद्भयमिच्छति, मरणभीरुत्वात्, तमाज्ञयाऽभिसमेत्यानुपालयेद्-रक्षेदित्यर्थः ॥ अप्कायलोकमाज्ञया अभिसमेत्य यत्कर्त्तव्यं तदाह—

**से बेमि णेव सयं लोगं अब्भाइक्खिज्जा, णेव अत्ताणं अब्भाइक्खिज्जा, जे लोयं अब्भाइक्खइ से अत्ताणं अब्भाइक्खइ, जे अत्ताणं अब्भाइक्खइ से लोयं अब्भाइक्खइ (सू० २३)**

सोऽहं ब्रवीमि, सेशब्दस्य युष्मदर्थत्वात् त्वां वा ब्रवीमि, न 'स्वयम्' आत्मना 'लोकः' अप्कायलोकोऽभ्याख्यातव्यः, अभ्याख्यानं नामासदभियोगः, यथाऽचौरं चौरमित्याह, इह तु जीवा न भवन्त्यापः, केवलमुपकरणमात्रं, घृततैलादिवत्, एषोऽसदभियोगः, हस्त्यादीनामपि जीवानामुपकरणत्वात्, स्यादारेका-नन्वेतदेवाभ्याख्यानं यदजीवानां जीवत्वापादनं, नैतदस्ति, प्रसाधितमपां प्राक् सचेतनत्वं, यथा हि अस्य शरीरस्याहंप्रत्ययादिभिर्हेतुभिरधिष्ठाताऽऽत्मा व्यतिरिक्तः प्राक् प्रसाधित एवमप्कायोऽप्यव्यक्तचेतनया सचेतन इति प्राक् प्रसाधितः, न च प्रसाधितस्याभ्याख्यानं न्याय्यम्, अथापि स्याद्, आत्मनोऽपि शरीराधिष्ठातुरभ्याख्यानं कर्त्तव्यं, न च तत्क्रियमाणं घटामियर्त्तीति दर्शयति—'नेव अत्ताणं अब्भाइक्खेज्जा' नैव 'आत्मानं' शरीराधिष्ठातारमहंप्रत्ययसिद्धं ज्ञानाभिन्नगुणं प्रत्यक्षं 'प्रत्याचक्षीत' अपह्नुवीत, ननु चैतदेव कथमवसीयते-शरीराधिष्ठाताऽऽत्माऽस्तीति, उच्यते, विस्मरणशीलो देवानांप्रिय उक्तमपि भाणयति, तथाहि-आहतमिदं शरीरं केनचिदभिसन्धिमता, कफरुधिराङ्गोपाङ्गादिपरिणतेः, अन्नादिवत्, तथोरस्पृष्टमपि केनचिदभिसन्धिमतैव, आहतत्वाद्, अन्नमलवदिति, तथा न ज्ञानोपलब्धिपूर्वकः परिस्पन्दो

अप्कायोऽकुतोभयः अनभ्याख्यानं ५ सूत्र २२-२३

१०

भ्रान्तिरूपः, परिस्पन्दत्वात्, त्वदीयवचनपरिस्पन्दवत्, तथा विद्यमानाधिष्ठातृव्यापारभाञ्जीन्द्रियाणि, करणत्वात्, दात्रादिवत्, एवं पुनरमार्गानुसारिहेतुमालोच्छेदः स्याद्वादपरशुना कार्यः, अत एवंविधोपपत्तिसमधिगतमात्मानं शुभाशुभफलभाजं न प्रत्याचक्षीत, एवं च सति योऽज्ञः कुतर्कतिमिरोपहतज्ञानचक्षुरप्कायलोकमभ्याख्याति—प्रत्याचष्टे स सर्वप्रमाणसिद्धमात्मानमभ्याख्याति, यश्चात्मानमभ्याख्याति—नास्म्यहं स सामर्थ्यादप्कायलोकमभ्याख्याति, यतो ह्यात्मनि पाण्याद्यवयवोपेतशरीराधिष्ठायिनि प्रस्पष्टलिङ्गेऽभ्याख्याते सत्यव्यक्तचेतनालिङ्गोऽप्कायलोकस्तेन सुतरामभ्याख्यातः॥ एवमनेकदोषोपपत्तिं विदित्वा नायमप्कायलोकोऽभ्याख्यातव्य इत्यालोच्य साधवो नाप्कायविषयमारम्भं कुर्वन्तीति, शाक्यादयस्त्वन्यथोपस्थिता इति दर्शयितुमाह—

लज्जमाणा पुढो पास—अणगारा मोत्ति एगे पवयमाणा जमिणं विरूवरूवेहिं सत्थेहिं उदयकम्मसमारंभेणं उदयसत्थं समारंभमाणे अणेगरूवे पाणे विहिंसइ। तत्थ खलु भगवता परिण्णा पवेदिता। इमस्स चेव जीवियस्स परिवंदणमाणणपूयणाए जाइमरणमोयणाए दुक्खपडिघायहेउं से सयमेव उदयसत्थं समारभति अण्णेहिं वा उदयसत्थं समारंभावेति अण्णे उदयसत्थं समारंभंते समणुजाणति। तं से अहियाए तं से अबोहीए। से तं संबुज्झमाणे आयाणीयं समुट्ठाय सोच्चा भगवओ अणगाराणं अंतिए इहमेगेसिं णायं भवति—एस

उदकशस्त्रारंभः सू. २४

खलु गंथे एस खलु मोहे एस खलु मारे एस खलु णरए, इच्चत्थं गड्ढिए लोए जमिणं विरूवरूवेहिं सत्थेहिं उदयकम्मसमारम्भेणं उदयसत्थं समारंभमाणे अण्णे अणेगरूवे पाणे विहिंसइ। से बेमि संति पाणा उदयनिस्सिया जीवा अणेगे (सू० २४)

'लज्जमानाः' स्वकीयं प्रव्रज्याभासं कुर्वाणाः यदिवा सावद्यानुष्ठानेन लज्जमानाः—लज्जां कुर्वाणाः 'पृथग्' विभिन्नाः शाक्योलूककणभुक्कपिलादिशिष्याः, पश्येति शिष्यचोदना, अविवक्षितकर्मका अपि अकर्मका भवन्ति, यथा—पश्य मृगो धावतीति, द्वितीयार्थे वा प्रथमा सुब्व्यत्ययेन द्रष्टव्या, ततश्चायमर्थः—शाक्यादीन् गृहीतप्रव्रज्यानपि सावद्यानुष्ठानरतान् पृथग्—विभिन्नान् पश्य, किं तैरसदाचरितं ? येनैवं प्रदर्श्यन्त इति दर्शयति—अनगारा वयमित्येके शाक्यादयः प्रवदन्तो 'यदिदं' यदेतत् काक्वा दर्शयति—'विरूपरूपैः' उत्सेचनाग्निनिर्वापणादिशस्त्रैः स्वकायपरकायभेदभिन्नैरुदकशस्त्रैः समारभन्ते, उदककर्मसमारम्भेण च उदके शस्त्रमुदकमेव वा शस्त्रं समारभन्ते, तच्च समारभमाणोऽनेकरूपान्वनस्पतिद्वीन्द्रियादीन्विविधं हिनस्ति, तत्र खलु भगवता परिज्ञा प्रवेदिता, यथा अस्यैव जीवितव्यस्य परिवन्दनमाननपूजनार्थं जातिमरणमोचनार्थं दुःखप्रतिघातहेतुं यत् करोति तद्दर्शयति—स स्वयमेवोदकशस्त्रं समारभते अन्यैश्चोदकशस्त्रं समारम्भयति अन्यांश्चोदकशस्त्रं समारभमाणान् समनुजानीते, तच्चोदकसमारम्भणं तस्या हिताय भवति, तथा तदेवाबोधिलाभाय भवति, स एतत्सम्बुध्यमान आदानीयं सम्यग्दर्शनादि सम्यगुत्थाय—अभ्युपगम्य श्रुत्वा भगवतोऽनगाराणां वाऽन्तिके इहैकेषां साधूनां यत् ज्ञातं भवति तद्दर्शयति—'एषः' अप्कायसमारम्भो ग्रन्थः एष खलु मोहः एष खलु

५

१०

मारः एष खलु नरकः इत्येवमर्थं गृद्धो लोको यदिदं विरूपरूपैः शस्त्रैः उदककर्मसमारम्भेणोदकशस्त्रं समारभमाणोऽन्याननेकरूपान् प्राणिनो विविधं हिनस्तीत्येतत्प्राग्वत् व्याख्येयं, पुनरप्याह—'से बेमी'त्यादि, सेशब्द आत्मनिर्देशे, सोऽहमेवमुपलब्धानेकाप्कायतत्त्वः स्वान्तो ब्रवीमि—'सन्ति पाणा' विद्यन्ते प्राणिन उदकनिश्रिताः—पूतरकमत्स्यादयो यानुदकारम्भप्रवृत्तो हन्यादिति, अथवाऽपरः सम्बन्धः—प्रागुक्तमुदकशस्त्रं समारभमाणोऽन्यानप्यनेकरूपान् जन्तून् विविधं हिनस्तीति, तत् कथमेतच्छ्रक्यमभ्युपगन्तुमित्यत आह—'सन्ति पाणा' इत्यादि पूर्ववत्, कियन्तः पुनस्त इति दर्शयति—'जीवा अणेगा' पुनर्जीवोपादानमुदकाश्रितप्रभूतजीवभेदख्यापनार्थं, ततश्चेदमुक्तं भवति—एकैकस्मिन् जीवभेदे उदकाश्रिता 'अनेके' असंख्येयाः प्राणिनो भवन्ति, एवं चाप्कायविषयारम्भभाजः पुरुषास्ते तन्निश्रितप्रभूतसत्त्वव्यापत्तिकारिणो द्रष्टव्याः ॥ शाक्यादयस्तूदकाश्रितानेव द्वीन्द्रियादीन् जीवानिच्छन्ति नोदकमित्येतदेव दर्शयति—

## इहं च खलु भो! अणगाराणं उदयजीवा वियाहिया (सू० २५)

खलुशब्दोऽवधारणे 'इहैव' ज्ञातपुत्रीये प्रवचने द्वादशाङ्गे गणिपिटके 'अनगाराणां' साधूनाम् 'उदकजीवा' उदकरूपा जीवाः चशब्दात्तदाश्रिताश्च पूतरकछेदनकलोढणकभ्रमरकमत्स्यादयो जीवा व्याख्याताः, अवधारणफलं च नान्येषामुदकरूपा जीवाः प्रतिपादिताः ॥ यद्येवमुदकमेव जीवास्ततोऽवश्यं तत्परिभोगे सति प्राणातिपातभाजः साधव इति, अत्रोच्यते, नैतदेवं, यतो वयं त्रिविधमप्कायमाचक्ष्महे—सचित्तं मिश्रमचित्तं च, तत्र योऽचित्तोऽप्कायस्तेनोपयोगविधिः साधूनां, नेतराभ्यां, कथं पुनरसौ भवत्यचित्तः? किं स्वभावादेवाहोश्चिच्छस्त्रसम्बन्धात्?, उभयथाऽपीति, तत्र यः स्वभावादेवाचित्तीभवति न बाह्यशस्त्रसम्पर्कात्, तम-



२०

चित्तं जानाना अपि केवलमनःपर्यायावधिश्रुतज्ञानिनो न परिभुञ्जते, अनवस्थाप्रसङ्गभीरुतया, यतो नु श्रूयते—भगवता किल श्रीवर्द्धमानस्वामिना विमलसलिलसमुच्छलत्तरङ्गः शैवलपटलत्रसादिरहितो महाह्रदो व्यपगताशेषजलजन्तुकोऽचित्तवारिपरिपूर्णः स्वशिष्याणां तृड्बाधितानामपि पानाय नानुजज्ञे, तथा अचित्ततिलशकटस्थण्डिलपरिभोगानुज्ञा चानवस्थादोषसंरक्षणाय भगवता न कृतेति, श्रुतज्ञानप्रामाण्यज्ञापनार्थं च, तथाहि—सामान्यश्रुतज्ञानी बाह्येन्धनसम्पर्कारुपितस्वरूपमेवाचित्तमिति व्यवहरति जलं, न पुनर्निरिन्धनमेवेति, अतो यद्बाह्यशस्त्रसम्पर्कात् परिणामान्तरापन्नं वर्णादिभिस्तदचित्तं साधुपरिभोगाय कल्पते, किं पुनस्तच्छस्त्रमित्यत आह—

पृथक्-शस्त्रं सू. २६

५

## सत्थं चेत्थं अणुवीइ पासा, पुढो सत्थं पवेइयं ( सू० २६ )

शस्यन्ते—हिंसन्तेऽनेन प्राणिन इति शस्त्रं, तच्चोत्सेचनगालनउपकरणधावनादि स्वकायादि च वर्णाद्यापत्तयो वा पूर्वावस्थाविलक्षणाः शस्त्रं, तथाहि—अग्निपुद्गलानुगतत्वादीषत्पिङ्गलं जलं भवत्युष्णं गन्धतोऽपि धूमगन्धि रसतो विरसं स्पर्शत उष्णं तच्चोद्वृत्तत्रिदण्डम्, एवंविधावस्थं यदि ततः कल्पते, नान्यथा, तथा कचवरकरीषगोमूत्रोषादीन्धनसम्बन्धात् स्तोकमध्यबहुभेदात्, स्तोकं स्तोके प्रक्षिपतीत्यादिचतुर्भङ्गिकाभावना कार्या, एवमेतत् त्रिविधं शस्त्रं, चशब्दोऽवधारणार्थः, अन्यतमशस्त्रसम्पर्कविध्वस्तमेव ग्राह्यं, नान्यथेति, 'एत्थ'त्ति एतस्मिन् अप्काये प्रस्तुते 'अनुविचिन्त्य' विचार्य इदमस्य शस्त्रमित्येवं ग्राह्यं, 'पश्ये' त्यनेन शिष्यस्य चोदनेति। तदेवं नानाविधं शस्त्रमप्कायस्यास्तीति प्रतिपादितम्, एतदेव दर्शयति—'पुढो सत्थं पवेदितं' 'पृथग्' विभिन्नमुत्सेचनादिकं शस्त्रं 'प्रवेदितम्' आख्यातं भगवता, पाठान्तरं वा 'पुढोऽपासं पवेदितं' एवं पृथग्विभिन्नलक्षणेन शस्त्रेण परिणामितमुदकग्रहणमपाशं प्रवेदितम्—आख्यातं भगवता, अपाशः—अबन्धनं शस्त्रपरिणामितोदकग्रहणमबन्धनमाख्यातमितियावद् ॥ एवं तावत्साधूनां

प्र. आ. ४६

१०

सचित्तमिश्राप्कायपरित्यागेनाचित्तपयसा परिभोगः प्रतिपादितः, ये पुनः शाक्यादयोऽप्कायोपभोगप्रवृत्तास्ते नियमत एवाप्कायं विहिंसन्ति, तदाश्रितांश्चान्यानिति, तत्र न केवलं प्राणातिपातापत्तिरेव तेषां, किमन्यदित्यत आह—

अदुवा अदिन्नादाणं ( सू० २७ )

'अथवे'ति पक्षान्तरोपन्यासद्वारेणाभ्युच्चयोपदर्शनार्थः, अशस्त्रोपहताऽप्कायोपभोगकारिणां न केवलं प्राणातिपातः, अपि त्वदत्तादानमपि तत्तेषां, यतो यैरप्कायजन्तुभिर्यानि शरीराणि निर्वर्त्तितानि तैरदत्तानि ते तान्युपभुञ्जते, यथा कश्चित् पुमान् सचित्तशाक्यभिक्षुकशरीरकात् खण्डमुत्कृत्य गृह्णीयात्, अदत्तं हि तस्य तत्, परपरिगृहीतत्वात्, परकीयगवाद्यादानवत्, एवं तानि शरीराण्यजीवपरिगृहीतानि गृह्णतोऽदत्तादानमवश्यम्भावि, स्वाम्यनुज्ञानाभावादिति, ननु यस्य तत्तडागकूपादि तेनानुज्ञातं सक्तत्पय इति, ततश्च नादत्तादानं, स्वामिनाऽनुज्ञातत्वात्, परानुज्ञातपश्वादिघातवत्, नन्वेतदपि साध्यावस्थमेवोपन्यस्तं, यतः पशुरपि शरीरप्रदानविमुख एव भिन्नार्यमर्यादैरुच्चैरारटन्विशस्यते, ततश्च कथमिव नादत्तादानं स्यात् ?, न चान्यदीयस्यान्यः स्वामी दृष्टः परमार्थचिन्तायां, नन्वेवमशेषलोकप्रसिद्धगोदानादिव्यवहारस्त्रुट्यति, त्रुट्यतु नामैवंविधः पापसम्बन्धः, तद्धि देयं यद्दुःखितं स्वयं न भवति, दासीबलीवर्दादिवत्, न चान्येषां दुःखोत्पत्तेः कारणं, हलखड्गादिवत्, एतद्व्यतिरिक्तं दातृपरिगृहीत्रोरेकान्तत एवोपकारकं देयं प्रतिजानते जिनेन्द्रमतावलम्बिनः, उक्तं च—"यत् स्वयमदुःखितं स्यान्न च परदुःखे निमित्तभूतमपि । केवलमुपग्रहकरं धर्मकृते तद् भवेद्देयम् ॥१॥" इति, तस्मादवस्थितमेतत्—तेषां तददत्तादानमपीति ॥ साम्प्रतमेतद्दोषद्वयं स्वसिद्धान्ताभ्युपगमद्वारेण परः परिजिहीर्षुराह—

अप्काय-वधेअदत्तादानं सू. २७ २०

कप्पइ णे कप्पइ णे पाउं, अदुवा विभूसाए (सू. २८)

अशस्त्रोपहतोदकारम्भिणो हि चोदिताः सन्त एवमाहुः—यथा नैतत् स्वमनीषिकातः समारम्भयामो वयं, किं त्वागमे निर्जीवत्वेनानिषिद्धत्वात् 'कल्पते' युज्यते 'नः' अस्माकं 'पातुम्' अभ्यवहर्तुमिति, वीप्सया च नानाविधप्रयोजनविषय उपभोगोऽभ्यनुज्ञातो भवति, तथाहि—आजीविकभस्मस्नाय्यादयो वदन्ति—पातुमस्माकं कल्पते, न स्नातुं वारिणा, शाक्यपरिव्राजकादयस्तु स्नानपानावगाहनादि सर्वं कल्पते इति प्रभाषन्ते, एतदेव स्वनामग्राहं दर्शयति—अथवोदकं विभूषार्थमनुज्ञातं नः समये, विभूषा—करचरणपायूपस्थमुखप्रक्षालनादिका वस्त्रभण्डकादिप्रक्षालनात्मिका वा, एवं स्नानादिशौचानुष्ठायिनां नास्ति कश्चिद्दोष इति ॥ एवं ते परिफल्गुवचसः परिव्राजकादयो निजराद्धान्तोपन्यासेन मुग्धमतीन्विमोह्य किं कुर्वन्तीत्याह—

पुढो सत्थेहिं विउट्टन्ति (सू. २९)

'पृथग्' विभिन्नलक्षणैः नानारूपैरुत्सेचनादिशस्त्रैः ते अनगारायमाणाः 'विउट्टन्ति'त्ति अप्कायजीवान् जीवनाद्व्यावर्त्तयन्ति—व्यपरोपयन्तीत्यर्थः, यदिवा पृथग्विभिन्नैः शस्त्रैरप्कायिकान्विविधं कुट्टन्ति—छिन्दन्तीत्यर्थः, कुट्टेर्धातोः छेदनार्थत्वात् ॥ अधुनैषामागमानुसारिणामागमासारत्वप्रतिपादनायाह—

एत्थऽवि तेसिं नो निकरणाए (सू. ३०)

'एतस्मिन्नपि' प्रस्तुते स्वागमानुसारेणाभ्युपगमे सति 'कप्पइ णे कप्पइ णे पाउं, अदुवा विभूसाए'त्ति एवंरूपस्तेषामयमागमो

पानविभूषाभ्यां सूत्रे २८-२९

५

१०

यद्बलादप्कायपरिभोगे ते प्रवृत्ताः स स्याद्वादयुक्तिभिरभ्याहतः सन् 'नो निकरणाए'त्ति नो निश्चयं कर्तुं समर्थो भवति, न केवलं तेषां युक्तयो न निश्चयायालम्, अपि त्वागमोऽपीत्यपिशब्दः, कथं पुनस्तदागमो निश्चयाय नालमिति, अत्रोच्यते, त एवं प्रष्टव्याः– कोऽयमागमो नाम ? यदादेशात्कल्पते भवतामप्कायारम्भः ?, त आहुः–प्रतिविशिष्टानुपूर्वीविन्यस्तवर्णपदवाक्यसङ्घात आप्तप्रणीत आगमः नित्योऽकर्तृको वा ?, तत्राद्यमभ्युपगते यो येन प्रतिपन्न आप्तः स निराकर्त्तव्यः, अनाप्तोऽसौ अप्कायजीवापरिज्ञानात् तद्वधानुज्ञानाद्वा भवानिव, जीवत्वं चापां प्राक् प्रसाधितमेव, ततस्तत्प्रणीतागमोऽपि सद्धर्मचोदनायामप्रमाणम्, अनाप्तप्रणीतत्वात्, रथ्यापुरुषवाक्यवत्, अथ नित्योऽकर्तृकः समयोऽभ्युपगम्यते ततो नित्यत्वं दुष्प्रतिपादं, यतः शक्यते वक्तुं–भवदभ्युपगतः समयः सकर्तृको वर्णपदवाक्यात्मकत्वात्, विधिप्रतिषेधात्मकत्वात्, उभयसम्मतसकर्तृकग्रन्थसन्दर्भवदिति, अभ्युपगम्य वा ब्रूमः–अप्रमाणमसौ, नित्यत्वादाकाशवत्, यच्च प्रमाणं तदनित्यं दृष्टं प्रत्यक्षादिवदिति, तथा विभूषास्नानावयवेऽपि पृष्टा न प्रत्युत्तरदाने क्षमाः, यतियोग्यं स्नानं न भवति, कामाङ्गत्वात्, मण्डनवत्, कामाङ्गता च सर्वजनप्रसिद्धा, तथा चोक्तम्–"स्नानं मददर्पकरं, कामाङ्गं प्रथमं स्मृतम् । तस्मात्कामं परित्यज्य, नैव स्नान्ति दमे रताः ॥ १ ॥" शौचार्थोऽपि न पुष्कलो, वारिणा बाह्यमलापनयनमात्रस्था(करणा)त्, न ह्यन्तर्व्यवस्थितकर्ममलक्षालनसमर्थं वारि दृष्टं, तस्माच्छरीरवाङ्मनसामकुशलप्रवृत्तिनिरोधो भावशौचमेव कर्मक्षयायालं, तच्च वारिसाध्यं न भवति, कुतः ?, अन्वयव्यतिरेकसमधिगम्यत्वात्सर्वभावानां, न हि मत्स्यादयः तत्र स्थिता मत्स्यादित्वकर्मक्षयभाक्त्वेनाभ्युपगम्यन्ते, विना च वारिणा महर्षयो विचित्रतपोभिः कर्म्म क्षपयन्तीति, अतः स्थितमेतत्–तत्समयो न निश्चयाय प्रभवतीति ॥ तदेवं निःसपत्नमपां जीवत्वं प्रतिपाद्य तत्प्रवृत्तिनिवृत्तिविकल्पफलप्रदर्शनद्वारेणोपसंजिहीर्षुः सकलमुद्देशार्थमाह—

एत्थ सत्थं समारभमाणस्स इच्चेए आरंभा अपरिण्णाया भवंति, एत्थ सत्थं असमारभमाणस्स इच्चेते आरंभा परिण्णाया भवंति, तं परिण्णाय मेहावी णेव सयं उदयसत्थं समारम्भेज्जा णेवण्णेहिं उदयसत्थं समारंभावेज्जा उदयसत्थं समारंभंतेऽवि अण्णे ण समणुजाणेज्जा, जस्सेते उदयसत्थसमारंभा परिण्णाया भवंति से हु मुणी परिण्णातकम्मे (सू. ३१)-त्ति बेमि ॥ इति तृतीयोऽप्कायोद्देशकः ॥

परिज्ञातकर्मा मुनिः

'एतस्मिन्' अप्काये 'शस्त्रं' द्रव्यभावरूपं समारभमाणस्येत्येते समारम्भा बन्धकारणत्वेनापरिज्ञाता भवन्ति, अत्रैवाप्काये शस्त्रमसमारभमाणस्येत्येते आरम्भा ज्ञपरिज्ञया परिज्ञाता भवन्ति प्रत्याख्यानपरिज्ञया च परिहृता भवन्ति, तामेव प्रत्याख्यानपरिज्ञां विशेषतो ज्ञपरिज्ञापूर्विकां दर्शयति—'तद्' उदकारम्भणं बन्धायेत्येवं परिज्ञाय मेधावी-मर्यादाव्यवस्थितो नैव स्वयमुदकशस्त्रं समारभेत, नैवान्यैरुदकशस्त्रं समारम्भयेत्, नैवान्यानुदकशस्त्रं समारभमाणान् समनुजानीयात्, यस्यैते उदकशस्त्रसमारम्भा द्विधा परिज्ञाता भवन्ति स एव मुनिः परिज्ञातकर्मा भवति । ब्रवीमीति पूर्ववद् । इति शस्त्रपरिज्ञायां तृतीयोद्देशकः समाप्तः ॥

उक्तस्तृतीयोद्देशकः, साम्प्रतं चतुर्थ आरभ्यते, अस्य चायमभिसम्बन्धः-इहानन्तरोद्देशके मुनित्वप्रतिपत्तये अप्कायः प्रतिपादितः, तदधुना तदर्थमेव क्रमायातस्तेजस्कायप्रतिपादनायायमुद्देशकः समारभ्यते, तस्य चोपक्रमादीनि चत्वार्यनुयोगद्वाराणि

५

१०

वान्यानि तावद्यावन्नामनिष्पन्ने निक्षेपे तेजउद्देशक इति नाम, तत्र तेजसो निक्षेपादीनि द्वाराणि वाच्यानि, अत्र च पृथिवीविकल्पतुल्यत्वात् केषाञ्चिदतिदेशो द्वाराणामपरेषां तद्विलक्षणत्वात् अपोद्वार इत्येतत् द्वयमुररीकृत्य निर्युक्तिकृद् गाथामाह—

तेउस्सवि दाराइं ताइं जाइं हवंति पुढवीए। नाणत्ती उ विहाणे परिमाणुवभोगसत्थे य ॥११६॥

'तेजसोऽपि' अग्नेरपि 'द्वाराणि' निक्षेपादीनि यानि पृथिव्याः समधिगमेऽभिहितानि तान्येव वाच्यानि, अपवादं दर्शयितुमाह– 'नानात्वं' भेदो विधानपरिमाणोपभोगशस्त्रेषु, तुरवधारणे, विधानादिष्वेव च नानात्वं, नान्यत्रेति, चशब्दाल्लक्षणद्वारपरिग्रहः ॥ यथाप्रतिज्ञातनिर्वहणार्थमादिद्वारव्याचिख्यासयाऽऽह—

दुविहा य तेउजीवा सुहुमा तह बायरा य लोगंमि। सुहुमा य सव्वलोए पंचेव य बायरविहाणा ॥११७॥

स्पष्टा ॥ बादरपञ्चभेदप्रतिपादनायाह—

इंगाल अगणि अच्ची जाला तह मुम्मुरे य बोद्धव्वे। बायरतेउविहाणा पंचविहा वण्णिया एए ॥११८॥

दग्धेन्धनो विगतधूमज्वालोऽङ्गारः इन्धनस्थः प्लोषक्रियाविशिष्टरूपः, तथा विद्युदुल्काऽशनिसङ्घर्षसमुत्थितः सूर्यमणिसंसृतादिरूपश्चाग्निः, दाहप्रतिबद्धो ज्वालाविशेषोऽर्चिः, ज्वाला छिन्नमूलाऽनङ्गारप्रतिबद्धा, प्रविरलाग्निकणानुविद्धं भस्म मुर्मुरः, एते बादरा अग्निभेदाः पञ्च भवन्तीति ॥ एते च बादराग्नयः स्वस्थानाङ्गीकरणान्मनुष्यक्षेत्रेऽर्द्धतृतीयेषु द्वीपसमुद्रेष्वव्याघातेन पञ्चदशसु कर्म्मभूमिषु व्याघाते सति पञ्चसु विदेहेषु, नान्यत्र, उपपाताङ्गीकरणेन लोकासङ्ख्येयभागवर्तिनः, तथा चागमः—"उववाएणं दोसु उड्ढकवाडेसु तिरियलोयतट्टे (ट्टे)य'त्ति अस्यायमर्थः–अर्द्धतृतीयद्वीपसमुद्रबाहल्ये पूर्वापरदक्षिणोत्तरस्वयम्भूरमणपर्यन्तायते ऊर्द्ध्वाधो-

लोकप्रमाणे कपाटे तयोः प्रविष्टा बादराग्निपूत्पद्यमानकास्तद्व्यपदेशं लभन्ते, तथा 'तिरियलोयतट्टे (ट्ठे) य'त्ति तिर्यग्लोकस्थालके च व्यवस्थितो बादराग्निपूत्पद्यमानो बादराग्निव्यपदेशभाग् भवति। अन्ये तु व्याचक्षते-तयोस्तिष्ठतीति तत्स्थः, तिर्यग्लोकश्चासौ तत्स्थश्च तिर्यग्लोकतत्स्थः, तत्र च स्थित उत्पित्सुर्बादराग्निव्यपदेशमासादयति, अस्मिंश्च व्याख्याने कपाटान्तर्गत एव गृह्यते, स च द्वयोरूर्ध्वकपाटयोरित्यनेनैवोपात्त इति तद्व्याख्यानाभिप्रायं न विद्मः। कपाटस्थापना चेयम्। समुद्घातेन सर्वलोकवर्त्तिनः, ते च पृथिव्यादयो मारणान्तिकसमुद्घातेन समवहता बादराग्निपूत्पद्यमानास्तद्व्यपदेशभाजः सर्वलोकव्यापिनो भवन्ति, यत्र च बादराः पर्याप्तकास्तत्रैव बादरा अपर्याप्तकाः, तन्निश्रया तेषामुत्पद्यमानत्वात्, तदेवं सूक्ष्मा बादराश्च पर्याप्तकापर्याप्तकभेदेन प्रत्येकं द्विधा भवन्ति, एते च वर्णगन्धरसस्पर्शादेशैः सहस्राग्रशो भिद्यमानाः सङ्ख्येययोनिप्रमुखशतसहस्रभेदपरिमाणा भवन्ति, तत्रैषां संवृता योनिरुष्णा च सचित्ताचित्तमिश्रभेदात् त्रिधा, सप्त चैषां योनिलक्षा भवन्ति ॥ साम्प्रतं चशब्दसमुच्चितं लक्षणद्वारमाह—

जह देहप्परिणामो रत्तिं खज्जोयगस्स सा उवमा। जरियस्स य जह उम्हा तओवमा तेउजीवाणं ॥११९॥

'यथे'ति दृष्टान्तोपन्यासार्थः 'देहपरिणामः' प्रतिविशिष्टा शरीरशक्तिः 'रात्रा'विति विशिष्टकालनिर्देशः 'खद्योतक' इति प्राणिविशेषपरिग्रहः, यथा तस्यासौ देहपरिणामो जीवप्रयोगनिर्वृत्तशक्तिराविष्कृतास्ति, एवमङ्गारादीनामपि प्रतिविशिष्टा प्रकाशादिशक्तिरनुमीयते जीवप्रयोगविशेषाविर्भावितेति। यथा वा-ज्वरोष्मा जीवप्रयोगं नातिवर्त्तते, जीवाधिष्ठितशरीरकानुपात्येव भवति, एषैवोपमाऽऽग्नेयजन्तूनां, न च मृता ज्वरिणः क्वचिदुपलभ्यन्ते, एवमन्वयव्यतिरेकाभ्यामग्नेः सचित्तता सूक्तकग्रन्थोपपत्तिमुखेन प्रतिपादिता, सम्प्रति प्रयोगमारोप्यते अयमेवार्थः-जीवशरीराण्यङ्गारादयः, छेद्यत्वादिहेतुगणान्वितत्वात्, सास्नाविषाणादिसङ्घातवत्,

प्र. आ. ४९

तेजसः सजीवता

५

१०

तथा आत्मसंयोगाविर्भूतोऽङ्गारादीनां प्रकाशपरिणामः, शरीरस्थत्वात्, खद्योतकदेहपरिणामवत्, तथा आत्मसम्प्रयोगपूर्वकोऽङ्गारादीनामूष्मा, शरीरस्थत्वात्, ज्वरोष्मवत्, न चादित्यादिभिरनेकान्तः, सर्वेषामात्मप्रयोगपूर्वकं यत उष्णपरिणामभाक्त्वं तस्मान्नानेकान्तः, तथा सचेतनं तेजो, यथायोग्याहारोपादानेन वृद्धिविशेषतद्विकारवत्त्वात्, पुरुषवत्, एवमादिना लक्षणेनाऽऽग्नेया जन्तवो निश्चेया इति ॥ उक्तं लक्षणद्वारं, तदनन्तरं परिमाणद्वारमाह—

जे बायरपज्जत्ता पलिअस्स असंखभागमित्ता उ । सेसा तिण्णिवि रासी वीसुं लोगा असंखिज्जा ॥१२०॥

ये बादरपर्याप्तानलजीवाः क्षेत्रपल्योपमासङ्ख्येयभागमात्रवर्तिप्रदेशराशिपरिमाणाः भवन्ति ते पुनर्बादरपृथिवीकायपर्याप्तकेभ्योऽसङ्ख्येयगुणहीनाः, शेषास्त्रयोऽपि राशयः पृथ्वीकायवद्भावनीयाः, किन्तु बादरपृथिवीकायापर्याप्तकेभ्यो बादराग्न्यपर्याप्तका असंख्येयगुणहीनाः, सूक्ष्मपृथिवीकायापर्याप्तकेभ्यः सूक्ष्माग्नेयापर्याप्तका विशेषहीनाः, सूक्ष्मपृथिवीकायपर्याप्तकेभ्यः सूक्ष्माग्नेयपर्याप्तका विशेषहीना इति ॥ साम्प्रतमुपभोगद्वारमाह—

दहणे पयावण पगासणे य सेए य भत्तकरणे य । बायरतेउक्काए उवभोगगुणा मणुस्साणं ॥१२१॥

दहनं शरीरावयवस्य वाताद्यपनयनार्थं, प्रकृष्टं तापनं प्रतापनं शीतापनोदाय, प्रकाशकरणमुद्योतकरणं प्रदीपादिना, भक्तकरणम्—ओदनादिरन्धनं, स्वेदो ज्वरविषूचिकादीनाम्, इत्येवमादिष्वनेकप्रयोजनेषूपस्थितेषु मनुष्याणां बादरतेजःकायविषया उपभोगरूपा गुणा उपभोगगुणा भवन्तीति ॥ तदेवमेवमादिभिः कारणैः समुपस्थितैः सततमारम्भप्रवृत्ता गृहिणो यत्याभासा वा सुखैषिणस्तेजःकायजन्तून् हिंसन्तीति दर्शयितुमाह—

तेजस उपभोगः

एएहिं कारणेहिं हिंसंती तेउकाइए जीवे। सायं गवेसमाणा परस्स दुक्खं उदीरंति ॥१२२॥

'एतैः' दहनादिभिः कारणैस्तेजःकायिकान् जीवान् 'हिंसन्ती'ति सङ्घट्टनपरितापनापद्रावणानि कुर्वन्ति 'सातं' सुखं तद् आत्मानोऽन्विष्यन्तः 'परस्य' बादराग्निकायस्य दुःखम् 'उदीरयन्ति' उत्पादयन्तीति ॥ साम्प्रतं शस्त्रद्वारं, तच्च द्रव्यभावशस्त्रभेदात् द्विधा, द्रव्यशस्त्रमपि समासविभागभेदात् द्विधैव, तत्र समासतो द्रव्यशस्त्रप्रतिपादनायाह—

पुढवी आउक्काए उल्ला य वणस्सई तसा पाणा। बायरतेउक्काए एयं तु समासओ सत्थं ॥१२३॥

'पृथिवी' धूलिः अप्कायश्च आर्द्रश्च वनस्पतिः त्रसाश्च प्राणिनः एतद्बादरतेजःकायजन्तूनां 'समासतः' सामान्येन शस्त्रमिति ॥ विभागतो द्रव्यशस्त्रमाह—

किंची सकायसत्थं किंची परकाय तदुभयं किंची। एयं तु दव्वसत्थं भावे य असंजमो सत्थं ॥१२४॥

किञ्चिच्छस्त्रं स्वकाय एव–अग्निकाय एव अग्निकायस्य, तद्यथा–तार्णोऽग्निः पार्णाग्नेः शस्त्रमिति, किञ्चिच्च परकायशस्त्रम्–उदकादि, उभयशस्त्रं पुनः–तुषकरीषादिव्यतिमिश्रोऽग्निरपराग्नेः, तुशब्दो भावशस्त्रापेक्षया विशेषणार्थः, 'एतत्तु' पूर्वोक्तं समासविभागरूपं पृथिवीत्रसकायादि द्रव्यशस्त्रमिति। भावशस्त्रं दर्शयति–भावे शस्त्रम् असंयमो–दुष्प्रणिहितमनोवाक्कायलक्षण इति ॥ उक्तव्यतिरिक्तद्वारातिदेशद्वारेणोपसञ्जिहीर्षुर्निर्युक्तिकृदाह—

सेसाइं दाराइं ताइं जाइं हवंति पुढवीए। एवं तेउद्देसे निज्जुत्ती कित्तिया एसा ॥१२५॥

उक्तशेषाणि द्वाराणि तान्येव यानि पृथिव्युद्देशकेऽभिहितानि, 'एवम्' उक्तप्रकारेण तेजःकायाभिधानोद्देशके निर्युक्तिः 'कीर्त्तिता'

दुखोदीरणं शस्त्रं च

५

१०

व्यावर्णिता भवतीति ॥ साम्प्रतं सूत्रानुगमेऽस्खलितादिगुणोपेतं सूत्रमुच्चारणीयं, तच्चेदम्—

**से बेमि णेव सयं लोगं अब्भाइक्खेज्जा णेव अत्ताणं अब्भाइक्खेज्जा, जे लोयं अब्भाइक्खइ से अत्ताणं अब्भाइक्खइ, जे अत्ताणं अब्भाइक्खइ से लोयं अब्भाइक्खइ (सू. ३२)**

अस्य च सम्बन्धः प्राग्वद्वाच्य इति, येन मया सामान्यात्मपदार्थपृथिव्यप्कायजीवप्रविभागव्यावर्णनमकारि स एवाहमव्यवच्छिन्नज्ञानप्रवाहस्तेजोजीवस्वरूपोपलम्भमुपजनितजिनवचनसम्पदो ब्रवीमि, किं पुनस्तदिति दर्शयति—'नैवे'त्यादि, इह हि प्रकरणसम्बन्धाल्लोकशब्देनाग्निकायलोकोऽभिधित्सितः, अतस्तमग्निलोकं जीवत्वेन नैव 'स्वयम्' आत्मनाऽभ्याचक्षीत, नैवापह्नुवीतेत्यर्थः, एतदभ्याख्याने ह्यात्मनोऽपि ज्ञानादिगुणकलापानुमितस्याभ्याख्यानमवाप्नोति, अथ च प्राक् प्रसाधितत्वादभ्याख्यानं नैवात्मनो न्याय्यम्, एवं तेजःकायस्यापि प्रसाधितत्वात् अभ्याख्यानं क्रियमाणं न युक्तिपथमवतरति, एवं चास्य युक्त्यागमबलप्रसिद्धस्याभ्याख्याने क्रियमाणे सत्यात्मनोऽप्यहंप्रत्ययसिद्धस्याभ्याख्यानं भवतःप्राप्तम्। एवमस्त्विति,चेत्,तन्नेति दर्शयति—'नेव अत्ताणं अब्भाइक्खेज्जा' नैवात्मानं—शरीराधिष्ठातारं ज्ञानगुणं प्रत्यात्मसंवेद्यं प्रत्याचक्षीत, तस्य शरीराधिष्ठातृत्वेन आहृतमिदं शरीरं केनचिदभिसन्धिमता, तथा त्यक्तमिदं शरीरं केनचिदभिसन्धिमतैवेत्येवमादिभिर्हेतुभिः प्रसाधितत्वात्, न च प्रसाधितप्रसाधनं पिष्टपेषणवत् विद्वज्जनमनांसि रञ्जयति, एवं च सत्यात्मवत्प्रसाधितमग्निलोकं यः प्रत्याचक्षीत सोऽतिसाहसिक आत्मानमभ्याख्याति—निराकरोति, यथात्माभ्याख्यानप्रवृत्तः स सदैवाग्निलोकमभ्याख्याति, सामान्यपूर्वकत्वाद्विशेषाणां, सति ह्यात्मसामान्ये पृथिव्याद्यात्मविभागः सिद्ध्यति, नान्यथा, सामान्यस्य विशेषव्यापकत्वात्, व्यापकविनिवृत्तौ च व्याप्यस्याप्यवश्यंभाविनी विनिवृत्तिरितिकृत्वा। एव-



२०

मयमग्निलोकः सामान्यात्मवन्नाभ्याख्यातव्य इति प्रदर्शितम्, अधुनाऽग्निजीवप्रतिपत्तौ सत्यां तद्विषयसमारम्भकटुकफलपरिहारोपन्यासाय सूत्रमाह—

**जे दीहलोगसत्थस्स खेयण्णे से असत्थस्स खयण्णे, जे असत्थस्स खेयण्णे से दीहलोगसत्थस्स खेयण्णे (सू. ३३)**

'य' इति मुमुक्षुर्दीर्घलोकः, वनस्पतिः यस्मादसौ कायस्थित्या परिमाणेन शरीरोच्छ्रयेण च शेषैकेन्द्रियेभ्यो दीर्घो वर्त्तते, तथाहि—कायस्थित्या तावत् 'वणस्सइकाइए णं भंते! वणस्सइकाइएत्ति कालओ केवचिरं होइ?, गोयमा! अणंतं कालं, अणंताओ उस्सप्पिणिअवसप्पिणिओ, खेत्तओ अणंता लोया, असंखेज्जा पोग्गलपरियट्टा, ते णं पुग्गलपरियट्टा आवलियाए असंखेज्जइभागे' परिमाणतस्तु 'पडुप्पन्नवणस्सइकाइयाणं भंते! केवतिकालस्स निल्लेवणा सिया?, गोयमा! पडुप्पन्नवणस्सइकाइयाणं नत्थि निल्लेवणा' तथा शरीरोच्छ्रयाच्च दीर्घो वनस्पतिः 'वणस्सइकाइयाणं भंते! केमहालिया सरीरोगाहणा पण्णत्ता?, गोयमा! साइरेगं जोयणसहस्सं सरीरोगाहणा' न तथाऽन्येषामेकेन्द्रियाणाम्, अतः स्थितमेतत्—सर्वथा दीर्घलोको वनस्पतिरिति, अस्य च शस्त्रमग्निः, यस्मात् स हि प्रवृद्धज्वालाकलापाकुलः सकलतरुगणप्रध्वंसनाय प्रभवति, अतोऽसौ तदुत्सादकत्वाच्छस्त्रं, ननु च सर्वलोकप्रसिद्ध्या

१ वनस्पतिकायो भदन्त! वनस्पतिकाय इति कालतः कियच्चिरं भवति?, गौतम! अनन्तं कालम्, अनन्ता उत्सर्पिण्यवसर्पिण्यः, क्षेत्रतोऽनन्ता लोकाः, असङ्ख्येयाः पुद्गलपरावर्ताः ते पुद्गलपरावर्त्ता आवलिकाया असङ्ख्येये भागे. २ प्रत्युत्पन्नवनस्पतिकायिकानां भदन्त! कियता कालेन निर्लेपना स्यात्?, गौतम! प्रत्युत्पन्नवनस्पतिकायिकानां नास्ति निर्लेपना. ३ वनस्पतिकायिकानां भदन्त! का महती शरीरावगाहना प्रज्ञप्ता? गौतम! सातिरेकं योजनसहस्रं शरीरावगाहना।

आचा. १ श्रु. १ अ. ४ उ.

अग्रेर्दीर्घकायता

कस्मादग्निरेव नोक्तः ?, किं वा प्रयोजनमुररीकृत्योक्तं दीर्घलोकशस्त्रमिति, अत्रोच्यते, प्रेक्षापूर्वकारितया, न निरभिप्रायमेतत्कृतमिति, यस्मादयमुत्पाद्यमानो ज्वाल्यमानो वा हव्यवाहः समस्तभूतग्रामघाताय प्रवर्त्तते, वनस्पतिदाहप्रवृत्तस्तु बहुविधसत्त्वसंहतिविनाशकारी विशेषतः स्यात्, यतो वनस्पतौ कृमिपिपीलिकाभ्रमरकपोतश्वापदादयः सम्भवन्ति, तथा पृथिव्यपि तरुकोटरव्यवस्थिता स्यात्, आपोऽप्यवश्यायरूपाः, वायुरपि चञ्चलस्वभावकोमलकिशलयानुसारी सम्भाव्यते, तदेवमग्निसमारम्भप्रवृत्तः एतावतो जीवान्नाशयति, अस्यार्थस्य सूचनाय दीर्घलोकशस्त्रग्रहणमकरोत् सूत्रकार इति, तथा चोक्तम्—"जायतेयं न इच्छन्ति, पावगं जलइत्तए । तिक्खमन्नयरं सत्थं, सव्वओऽवि दुरासयं ॥१॥ पाईणं पडिणं वावि, उड्ढं अणुदिसामवि । अहे दाहिणओ वावि, दहे उत्तरओऽवि य ॥२॥ भूयाणमेसमाघाओ, हव्ववाहो न संसओ । तं पईवपयावट्ठा, संजओ किंचि नारभे ॥३॥" अथवा बादरतेजःकायाः पर्याप्तकाः स्तोकाः, शेषाः पृथिव्यादयो जीवकाया बहवः, भवस्थितिरपि त्रीण्यहोरात्राणि स्वल्पा इतरेषां पृथिव्यब्वायुवनस्पतीनां यथाक्रमं द्वाविंशतिसप्तत्रिदशवर्षसहस्रपरिमाणाः दीर्घा अवसेया इति, अतो दीर्घलोकः—पृथिव्यादिस्तस्य शस्त्रम्—अग्निकायस्तस्य 'क्षेत्रज्ञो' निपुणः अग्निकायं वर्णादितो जानातीत्यर्थः, 'खेदज्ञो वा' खेदः—तद्व्यापारः सर्वसत्त्वानां दहनात्मकः पाकाद्यनेकशक्तिकलापोपचितः प्रवरमणिरिव जाज्वल्यमानो लब्धाग्निव्यपदेशः यतीनामनारम्भणीयः, तमेवंविधं खेदम्—अग्निव्यापारं जानातीति खेदज्ञः, अतो य एव दीर्घलोकशस्त्रस्य खेदज्ञः स एव 'अशस्त्रस्य' सप्तदशभेदस्य संयमस्य खेदज्ञः, संयमो हि न कश्चि-

१५

प्र. आ. ५२

२०

२३

१ जाततेजसं नेच्छन्ति पावकं उज्ज्वालयितुम् । तीक्ष्णमन्यतरत् शस्त्रं सर्वतोऽपि दुराश्रयम् ॥१॥ प्राचीनं प्रतीचीनं वापि ऊर्ध्वमनुदिक्ष्वपि । अधो दक्षिणतो वापि दहति उत्तरतोऽपि च ॥२॥ भूतानामेष आघातो हव्यवाहो न संशयः । तत् प्रदीपप्रतापार्थं संयतः । किंचिन्नारभेत ॥३॥

जीवं व्यापादयति अतोऽशस्त्रम्, एवमनेन संयमेन सर्वसत्त्वाभयप्रदायिनाऽनुष्ठीयमानेनाग्निजीवविषयः समारम्भः शक्यः परिहर्तुं, पृथिव्यादिकायसमारम्भश्चेत्येवमसौ संयमे निपुणमतिर्भवति, ततश्च निपुणमतित्वाद्विदितपरमार्थोऽग्निसमारम्भाद्व्यावृत्य संयमानुष्ठाने प्रवर्त्तते। इदानीं गतप्रत्यागतलक्षणेनाविनाभावित्वप्रदर्शनार्थं विपर्ययेण सूत्रावयवपरामर्शं करोति—'जे असत्थस्से' त्यादि, यश्चाशस्त्रे-संयमे निपुणः स खलु दीर्घलोकशस्त्रस्य-अग्नेः क्षेत्रज्ञः खेदज्ञो वा, संयमपूर्वकं ह्यग्निविषयखेदज्ञत्वम्, अग्निविषयखेदज्ञतापूर्वकं च संयमानुष्ठानम्, अन्यथा तदसम्भव एवेत्येतद्गतप्रत्यागतफलमाविर्भावितं भवति॥ कैः पुनरिदमेवमुपलब्धमित्यत आह—'वीरेही'त्यादि, अथवा सद्वक्तृप्रसिद्धौ सत्यां वाक्यप्रसिद्धिर्भवतीत्यत उपदिश्यते—

वीरेहिं एयं अभिभूय दिट्ठं, संजएहिं सया जत्तेहिं सया अप्पमत्तेहिं (सू. ३४)

घनघातिकर्मसङ्घातविदारणानन्तरप्राप्तातुलकेवलश्रिया विराजन्त इति वीराः—तीर्थकरास्तैर्वीरैरर्थतो दृष्टमेतद् गणधरैश्च सूत्रतोऽग्निशस्त्रं दृष्टम् अशस्त्रं संयमस्वरूपं चेति। किं पुनरवष्टम्भेनेदं तैरुपलब्धमिति, अत्रोच्यते, 'अभिभूये'ति अभिभवो नामादादिश्चतुर्द्धा, द्रव्याभिभवो-रिपुसेनादिपराजयः आदित्यतेजसा वा चन्द्रग्रहनक्षत्रादितेजोऽभिभवः, भावाभिभवस्तु परीषहोपसर्गानीकज्ञानदर्शनावरणमोहान्तरायकर्मनिर्दलनं, परीषहोपसर्गादिसेनाविजयाद्विमलं चरणं, चरणशुद्धेर्ज्ञानावरणादिकर्मक्षयः, तत्क्षयाच्चिरावरणमप्रतिहतमशेषज्ञेयग्राहि केवलज्ञानमुपजायते, इदमुक्तं भवति—परीषहोपसर्गज्ञानदर्शनावरणीयमोहान्तरायाण्यभिभूय केवलमुत्पाद्य तैरुपलब्धमिति। यथाभूतैस्तैरिदमुपलब्धं तद्दर्शयति—'संजएहिं' सम्यग् यताः संयताः प्राणातिपातादिभ्यस्तैः, तथा 'सदा' सर्वकालं चरणप्रतिपत्तौ मूलोत्तरगुणभेदायां निरतिचारत्वायत्नवन्तस्तैः, तथा 'सदा' सर्वकालं न विद्यते प्रमादो-मद्यविषयकषायविकथा-

णिकम्मसमारम्भेणं अगणिसत्थं समारभमाणे अण्णे अणेगरूवे पाणे विहिंसंति। तत्थ खलु भगवता परिण्णा पवेदिता, इमस्स चेव जीवियस्स परिवंदणमाणणपूयणाए जाइमरणमोयणाए दुक्खपडिघायहेउं से सयमेव अगणिसत्थं समारभइ अण्णेहिं वा अगणिसत्थं समारंभावेइ अण्णे वा अगणिसत्थं समारभमाणे समणुजाणइ, तं से अहियाए तं से अबोहियाए, से तं संबुज्झमाणे आयाणीयं समुट्ठाय सोच्चा भगवओ अणगाराणं इहमेगेसिं णायं भवति- एस खलु गंथे एस खलु मोहे एस खलु मारे एस खलु णरए, इच्चत्थं गड्ढिए लोए जमिणं विरूवरूवेहिं सत्थेहिं अगणिकम्मसमारंभमाणे अण्णे अणेगरूवे पाणे विहिंसइ (सू. ३७)

अग्नेः समारंभः सू. ३७

५

अस्य ग्रन्थस्योक्तार्थस्यायमर्थो लेशतः प्रदर्श्यते—'लज्जमानाः' स्वागमोक्तानुष्ठानं कुर्वाणाः सावद्यानुष्ठानेन वा लज्जां कुर्वाणाः 'पृथग्' विभिन्नाः शाक्यादयः 'पश्ये'ति संयमानुष्ठाने स्थिरीकरणार्थं शिष्यस्य चोदना, अनगारा वयमित्येके प्रवदमानाः, किं तैर्विरूपमाचरितं येनैवं प्रदर्श्यन्त इति दर्शयति—यदिदं विरूपरूपैः शस्त्रैरग्निकर्मसमारम्भेण अग्निशस्त्रं समारभमाणः सत्रन्याननेकरूपान् प्राणिनो विहिनस्ति, तत्र खलु भगवता परिज्ञा प्रवेदिता, य(त)थाऽस्यैव परिफल्गुजीवितस्य परिवन्दनमाननपूजनार्थं जातिमरणमोचनार्थं दुःखप्रतिघातहेतुं यत्करोति तद्दर्शयति–'स' परिवन्दनाद्यर्थी स्वत एवाग्निशस्त्रं समारभते तथा अन्यैश्चाग्निशस्त्रं समा-

१०

रम्भयति तथाऽन्यांश्च अग्निशस्त्रं समारभमाणान् समनुजानीते, तच्चाग्नेः समारम्भणं 'से' तस्य सुखलिप्सोरमुत्रान्यत्र चाहिताय भवति, तथा तदेव च तस्याबोधिलाभाय भवति, 'स' इति यस्यैतदसदाचरणं प्रदर्शितं, स तु शिष्यः, तदग्निसमारम्भणं पापायेत्येवं सम्बुध्यमानः 'आदानीयं' ग्राह्यं सम्यग्दर्शनादि सम्यग् 'उत्थाय' अभ्युपगम्य श्रुत्वा भगवदन्तिकेऽनगाराणां वा इहैकेषां साधूनां ज्ञातं भवति, किम्?, तद्दर्शयति—'एषः' अग्निसमारम्भः ग्रन्थः कर्महेतुत्वात्, एष एव मोहः एष एव मारः एष एव नरकस्तद्धेतुत्वादिति भावः, इत्येवमर्थं च गृद्धो लोको यत्करोति तद्दर्शयति—यदिदं विरूपरूपैः शस्त्रैरग्निकर्म समारभते तदारम्भेण चाग्निशस्त्रं समारभते तच्चारभमाणोऽन्याननेकरूपान् प्राणिनो विहिनस्तीति॥ कथं पुनरग्निसमारम्भप्रवृत्ता नानाविधान् प्राणिनो विहिंसन्तीति दर्शयितुमाह—

से बेमि—संति पाणा पुढवीनिस्सिया तणणिस्सिया पत्तणिस्सिया कट्ठनिस्सिया गोमयणिस्सिया कयवरणिस्सिया, संति संपातिमा पाणा आहच्च संपयंति, अगणिं च खलु पुट्ठा एगे संघायमावज्जंति, जे तत्थ संघायमावज्जंति ते तत्थ परियावज्जंति, जे तत्थ परियावज्जंति ते तत्थ उद्दायंति (सू. ३८) 

तदहं ब्रवीमि यथा नानाविधजीवहिंसनमग्निकायसमारम्भेण भवतीति। यथाप्रतिज्ञातार्थं दर्शयति—'सन्ति' विद्यन्ते 'प्राणा' जन्तवः, पृथिवीकायनिश्रिताः, पृथिवीकायत्वेन परिणता इत्यर्थः, तदाश्रिता वा कृमिकुन्थुपिपीलिकागण्डूपदाहिमण्डूकवृश्चिकक-

र्कटकादयः, तथा वृक्षगुल्मलतावितानादयः, तथा तृणपत्रनिश्रिताः पतङ्गेलिकादयः, तथा काष्ठनिश्रिता-घुणोद्देहिकापिपीलिकाण्डादयः, गोमयनिश्रिताः-कुन्थुपनकादयः, कचवरः-पत्रतृणधूलिसमुदायस्तन्निश्रिताः कृमिकीटपतङ्गादयः। तथा 'सन्ति' विद्यन्ते सम्पतितुम्-उत्प्लुत्योत्प्लुत्य गन्तुमागन्तुं वा शीलं येषां ते सम्पातिनः प्राणिनो-जीवा मक्षिकाभ्रमरपतङ्गमशकपक्षिवातादयः, एते च सम्पातिनः 'आहत्य' उपेत्य स्वत एव, यदिवा अत्यर्थं कदाचिद्वा अग्निशिखायां सम्पतन्ति च। तदेवं पृथिव्यादिनिश्रितानां जीवानां यद्भवति तद्दर्शयितुमाह—'अगणिं चे'त्यादि, रन्धनपचनतापनाद्यग्निगुणार्थिभिरवश्यमग्निसमारम्भो विधेयः, तत्समारम्भे च पृथिव्यादिनिश्रितानां जीवानामेता वक्ष्यमाणा अवस्था भवन्ति, छान्दसत्वात् तृतीयार्थे द्वितीया, ततश्चायमर्थः-अग्निना 'स्पृष्टाः'छुप्ता एके केचन सङ्घातम्-अधिकं गात्रसङ्कोचनं मयूरपिच्छवदापद्यन्ते, चशब्दस्याधिक्यार्थत्वात्, खलुशब्दोऽवधारणे, अग्नेरेवायं प्रतापो नापरस्येति, यदिवा सप्तम्यर्थे द्वितीया स्पृष्टशब्दश्च पतितवचनः, ततश्चायमर्थो भवति-अग्नावेव स्पृष्टाः-पतिताः 'एके'शलभादयः 'सङ्घातं' समेकीभावेनाधिकं गात्रसङ्कोचनम् 'आपद्यन्ते' प्राप्नुवन्ति, ये च 'तत्र' अग्नौ पतिताः सङ्घातमापद्यन्ते ते प्राणिनः 'तत्र' अग्नौ पर्यापद्यन्ते, पर्यापत्तिः-सम्मूर्छनम्, ऊष्माभिभूता मूर्छामापद्यन्ते इत्यर्थः। अथ किमर्थं सूत्रकृता विभक्तिपरिणामोऽकारीति, उच्यते, मागधदेशीसमनुवृत्तेः व्याख्याविकल्पप्रदर्शनार्थं वा, अध्याहारादयोऽपि व्याख्याङ्गानीत्यनेन शिष्यो ज्ञापितो भवति। अथ के पुनस्तेऽध्याहारादय इति?, उच्यन्ते, अध्याहारो विपरिणामो व्यवहितकल्पना गुणकल्पना लक्षणा वाक्यभेदश्चेति, इह च द्वितीयाविभक्तेः सप्तमीपरिणामः कृत इति। ये च 'तत्र' अग्नौ पर्यापद्यन्ते ते प्राणिनः कृमिपिपीलिकाभ्रमरनकुलादयस्तत्राग्नावपद्रावन्ति, प्राणान् मुञ्चन्तीत्यर्थः, तदेवमग्निसमारम्भे सति न केवलमग्निजन्तूनां विनाशः, किं

अग्निधेऽन्यजीववधः

प्र. आ. ५५

५

१०

परिज्ञाता भवन्ति, तथा अत्रैवाग्निकाये शस्त्रमसमारभमाणस्यैते आरम्भाः परिज्ञाता भवन्ति, यस्यैते अग्निकायसमारम्भा ज्ञपरिज्ञया ज्ञाता भवन्ति प्रत्याख्यानपरिज्ञया च परिहृता भवन्ति स एव मुनिः परमार्थतः परिज्ञातकर्मेति ब्रवीमीति पूर्ववत् । इति शस्त्रपरिज्ञायां चतुर्थोद्देशकटीका समाप्ता ॥

उक्तश्चतुर्थोद्देशकः, साम्प्रतं पञ्चमः समारभ्यते, अस्य चायमभिसम्बन्धः—इहानन्तरोद्देशके तेजःकायः प्रतिपादितः, तदनन्तरमविकलसुसाधुगुणप्रतिपत्तये क्रमायातवायुकायप्रतिपादनावसरे वनस्पतिकायजीवस्वरूपमाविर्भाव्यते, किं पुनः क्रमोल्लङ्घनकारणमिति, उच्यते, एष हि वायुरचाक्षुषत्वाद् दुःश्रद्धानः, अतः समधिगताशेषपृथिव्याद्येकेन्द्रियप्राणिगणस्वरूपः शिष्यः सुखमेव वायुजीवस्वरूपं प्रतिपत्स्यते, स एव च क्रमो येन शिष्याः जीवादितत्त्वं प्रति प्रोत्सहन्ते यथावत्प्रतिपत्तुमिति, वनस्पतिकायस्तु समस्तलोकप्रत्यक्षपरिस्फुटजीवलिङ्गकलापोपेतः, अतः स एव तावत्प्रतिपाद्यते, इत्यनेन सम्बन्धेनायातस्यास्य चत्वार्यनुयोगद्वाराणि वाच्यानि यावन्नामनिष्पन्ने निक्षेपे वनस्पत्युद्देशकः, तत्र वनस्पतेः स्वभेदकलापप्रतिपादनाय पूर्वप्रसिद्धार्थातिदेशद्वारेण निर्युक्तिकृदाह—



पुढवीए जे दारा वणस्सइकाएऽवि हुंति ते चेव । नाणत्ती उ विहाणे परिमाणुवभोगसत्थे य ॥१२६॥



यानि पृथ्वीकायसमधिगतये द्वाराण्युक्तानि तान्येव वनस्पतौ द्रष्टव्यानि, नानात्वं तु प्ररूपणापरिमाणोपभोगशस्त्रेषु चशब्दाल्लक्षणे च द्रष्टव्यमिति ॥ तत्रादौ प्ररूपणास्वरूपनिर्ज्ञापनायाह—

दुविह वणस्सइजीवा सुहुमा तह बायरा य लोगंमि । सुहुमा य सव्वलोए दो चेव य बायरविहाणा ॥१२७॥



वनस्पतयो द्विविधाः—सूक्ष्मा बादराश्च, सूक्ष्माः सर्वलोकापन्नाश्चक्षुर्ग्राह्याश्च न भवन्ति एकाकारा एव, बादराणां पुनर्द्वे विधाने ॥

१ श्रु.
१ अ.
५ उ.

के पुनस्ते बादरविधाने इत्यत आह—

**पत्तेया साहारण बायरजीवा समासओ दुविहा। बारसविहऽणेगविहा समासओ छव्विहा हुंति ॥१२८॥**

बादराः समासतः द्विविधाः-प्रत्येकाः साधारणाश्च, तत्र पत्रपुष्पमूलफलस्कन्धादीन् प्रति प्रति एको जीवो येषां ते प्रत्येकजीवाः, साधारणास्तु परस्परानुविद्धानन्तजीवसङ्घातरूपशरीरावस्थानाः, तत्र प्रत्येकशरीरा द्वादशविधानाः, साधारणास्त्वनेकभेदाः, सर्वेऽप्येते समासतः षोढा प्रत्येतव्याः ॥ तत्र प्रत्येकतरुद्वादशभेदप्रत्यायनायाह—

**रुक्खा गुच्छा गुम्मा लया य वल्ली य पव्वगा चेव। तणवलयहरियओसहिजलरुहकुहणा य बोद्धव्वा ॥१२९॥**

वृश्चयन्त इति वृक्षाः, ते द्विविधाः-एकास्थिका बहुबीजकाश्च, तत्रैकास्थिकाः पिचुमन्दाऽऽम्रकोशम्बशालाङ्कोल्लपीलुशल्लक्यादयः, बहुबीजकास्तु उदुम्बरकपित्थास्तिकतिन्दुकबिल्वामलकपनसदाडिममातुलिङ्गादयः, गुच्छास्तु वृन्ताकीकर्पासीजपाआढकीतुलसीकुसुम्भरीपिप्पलीनील्यादयः, गुल्मानि तु नवमालिकासेरियककोरण्टकबन्धुजीवकबाणकरवीरसिन्दुवारविचकिलजातियूथिकादयः, लतास्तु पद्मनागाशोकचम्पकचूतवासन्तीअतिमुक्तककुन्दलताद्याः, वल्ल्यस्तु कुष्माण्डीकालिङ्गीत्रपुषीतुम्बीवालुङ्कीएलालुकीपटोल्यादयः, पर्वगाः पुनः इक्षुवीरणशुण्ठशरवेत्रशतपर्ववंशनलवेणुकादयः, तृणानि तु श्वेतिकाकुशदर्भपर्वकार्ज्जुनसुरभिकुरुविन्दादीनि, वलयानि च तालतमालतकलीशालसरलाकेतकीकदलीकन्दल्यादीनि, हरितानि तन्दुलीयकाधूयारुहवस्तुलबदरकमार्जारपादिकाचिल्लीपालक्यादीनि, औषध्यस्तु शालीव्रीहिगोधूमयवकलमसूरतिलमुद्गमाषनिष्पावकुलत्थातसीकुसुम्भकोद्रवकङ्ग्वादयः, जलरुहा

१ शतपत्री ॥ २ वर्चका प्र ३ ०त्रिशी० प्र

१५
प्रत्येकसाधारणभेदाः

२०

२७

उदकावकपनकशैवलकलम्बुकापावकंकशेरुकउत्पलपद्मकुमुदनलिनपुण्डरीकादयः, कुहुणास्तु भूमिस्फोटकाभिधानाः आयकायकुहुणकुण्डुकोद्देहलिकाशलाकासर्पच्छत्रादयः, येषां हि प्रत्येकजीवानां वृक्षाणां मूलस्कन्धकन्दत्वक्शालप्रवालादिष्वसंख्येयाः प्रत्येकं जीवाः, पत्राणि पुष्पाणि चैकजीवानि मन्तव्यानि, साधारणास्त्वनेकविधाः, तद्यथा—लोहीनिहुस्तुभायिकाअश्वकर्णीसिंहकर्णीशृङ्गबेरैमालुकामूलककृष्णकन्दसूरणकन्दकाकोलीक्षीरकाकोलीप्रभृतयः॥ 'सर्वेऽप्येते संक्षेपात् षोढा भवन्ती'त्युक्तं, के पुनस्ते भेदा इत्याह—

५

अग्गबीया मूलबीया खंधबीया चेव पोरबीया य। बीयरुहा समुच्छिम समासओ वणसईजीवा ॥१३०॥

तत्र कोरिण्टकादयोऽग्रबीजाः, कदल्यादयो मूलबीजाः, निहुशल्लकयरणिकादयः स्कन्धबीजाः, इक्षुवंशवेत्रादयः पर्वबीजाः, बीजरुहाः शालिव्रीह्यादयः, सम्मूर्छनजाः पद्मिनीशृङ्गाटकपाठशैवलादयः, एवमेते समासात् तरुजीवाः षोढा कथिताः, नान्ये सन्तीति प्रतिपत्तव्यं॥ किंलक्षणाः पुनः प्रत्येकतरवो भवन्तीत्यत आह—

जह सगलसरिसवाणं सिलेसमिस्साण वत्तिया वट्टी। पत्तेयसरीराणं तह हुंति सरीरसंघाया॥१३१॥



१०

यथेति दृष्टान्तोपन्यासार्थः, यथा सकलसर्षपाणां श्लेषयतीति श्लेषः—सर्जरसादिस्तेन मिश्रितानां 'वर्त्तिता' वलिता वर्त्तिः तस्यां च वर्त्तौ प्रत्येकप्रदेशाः क्रमेण सिद्धार्थकाः स्थिताः, नान्योऽन्यानुवेधेन, चूर्णितास्तु कदाचिदन्योऽन्यानुवेधभाजोऽपि स्युरित्यतः सकलग्रहणं, यथाऽसौ वर्त्तिस्तथा प्रत्येकतरुशरीरसङ्घातः, यथा च सर्षपास्तथा तदधिष्ठायिनो जीवाः, यथा श्लेषविमिश्रितास्तथा रागद्वेषप्रचितकर्मपुद्गलोदयमिश्रिताः जीवाः, पश्चिमार्द्धेन गाथाया उपन्यस्तदृष्टान्तेन सह साम्यं प्रतिपादितं, तथेति शब्दोपादा-

१ ०पावाक० प्र २ मुहणेति नि० ३ ०बेरा० प्र.

नादिति ॥ अभिप्रेतार्थे दृष्टान्तान्तरमाह—

जह वा तिलसक्कुलिया बहुएहिं तिलेहिँ मेलिया संती । पत्तेयसरीराणं तह हुंति सरीरसंघाया ॥१३२॥

यथा वा तिलप्रपुलिका-तिलप्रधाना पिष्टमयपोलिका बहुभिस्तिलैर्निष्पादिता सती भवति, तथा प्रत्येकशरीराणां तरूणां शरीरसङ्घाता भवन्तीति द्रष्टव्यमिति ॥ साम्प्रतं प्रत्येकशरीरजीवानामेकानेकाधिष्ठितत्वप्रतिपिपादयिषयाऽऽह—

नाणाविहसंठाणा दीसंती एगजीविया पत्ता । खंधावि एगजीवा तालसरलनालिएरीणं ॥१३३॥

नानाविधं-भिन्नं संस्थानं येषां तानि नानाविधसंस्थानानि पत्राणि, यानि चैवंभूतानि दृश्यन्ते तान्येकजीवाधिष्ठितान्यवगन्तव्यानि, तथा स्कन्धा अप्येकजीवाधिष्ठितास्तालसरलनालिकेर्यादीनां, नात्रानेकजीवाधिष्ठितत्वं सम्भवतीति, अवशिष्टानां त्वनेकजीवाधिष्ठितत्वं सामर्थ्यात् प्रतिपादितं भवति ॥ साम्प्रतं प्रत्येकतरुजीवराशिपरिमाणमिधित्सयाऽऽह—

पत्तेया पज्जत्ता सेढीएँ असंखभागमित्ता ते । लोगाऽसंखप्पज्जत्तगाण साहारणाणंता ॥१३४॥

प्रत्येकतरुजीवाः पर्याप्तकाः संवर्तितचतुरस्रीकृतलोकश्रेण्यसंख्येयभागवर्त्याकाशप्रदेशराशितुल्यप्रमाणाः, एते च पुनर्बादरतेजःकायपर्याप्तकराशेरसङ्ख्येयगुणाः, ये पुनरपर्याप्तकाः प्रत्येकतरुजन्तवः ते ह्यसङ्ख्येयानां लोकानां यावन्तः प्रदेशास्तावन्त इति, एतेऽप्यपर्याप्तका बादरतेजःकायजीवराशेरसङ्ख्येयगुणाः, सूक्ष्मास्तु वनस्पतयः प्रत्येकशरीरिणः पर्याप्तका अपर्याप्तका वा न सन्त्येव, साधारणास्त्वनन्ता इति विशेषानुपादानात् १, साधारणाः सूक्ष्मबादरपर्याप्तकापर्याप्तकभेदेन चतुर्विधा अपि पृथक् पृथगनन्तानां लोकानां यावन्तः प्रदेशास्तावन्त इति, अयं तु विशेषः-साधारणबादरपर्याप्तकेभ्यो बादरा अपर्याप्तका असंख्येयगुणाः बादराप-

१५ प्रत्येकत्वे दृष्टान्तः मानं च

२०



२७

पर्याप्तकेभ्यः सूक्ष्माः अपर्याप्तका असङ्ख्येयगुणास्तेभ्योऽपि सूक्ष्माः पर्याप्तकाः असङ्ख्येयगुणा इति ॥ सम्प्रत्येषां तरूणां यो जीवत्वं नेच्छति तं प्रति जीवत्वप्रतिपादनेच्छया निर्युक्तिकृदाह—

एएहिं सरीरेहिं पच्चक्खं ते परूविया जीवा । सेसा आणागिज्झा चक्खुणा जे न दीसंति ॥१३५॥

'एतैः' पूर्वप्रतिपादितैस्तरुशरीरैः प्रत्यक्षप्रमाणविषयैः 'प्रत्यक्षं' साक्षात् 'ते' वनस्पतिजीवाः 'प्ररूपिताः' प्रसाधिताः, तथाहि—न ह्येतानि शरीराणि जीवव्यापारमन्तरेणैवंविधाकारभाञ्जि भवन्ति, तथा च प्रयोगः—जीवशरीराणि वृक्षाः, अक्षाद्युपलब्धिभावात्, पाण्यादिसङ्घातवत्, तथा कदाचित् सचित्ता अपि वृक्षाः, जीवशरीरत्वात्, पाण्यादिसङ्घातवदेव, तथा मन्दविज्ञानसुखादिमन्तस्तरवः, अव्यक्तचेतनानुगतत्वात्, सुप्तादिपुरुषवत्, तथा चोक्तम्—"वृक्षादयोऽक्षाद्युपलब्धिभावात्पाण्यादिसङ्घातवदेव देहाः । तद्वत् सजीवा अपि देहतायाः, सुप्तादिवत् ज्ञानसुखादिमन्तः "॥१॥" 'शेषा' इति सूक्ष्माः ते न चक्षुषा नोपलभ्यन्त इत्याज्ञया ग्राह्या इति, आज्ञा च भगवद्वचनमवितथमरक्तद्विष्टप्रणीतमिति श्रद्धातव्यमिति ॥ साम्प्रतं साधारणलक्षणमभिधित्सुराह—

साहारणमाहारो साहारण आणपाणगहणं च । साहारणजीवाणं साहारणलक्खणं एयं ॥१३६॥

समानम्—एकं धारणम्—अङ्गीकरणं शरीराहारादेर्येषां ते साधारणाः तेषां साधारणानाम्—अनन्तकायानां जीवानां 'साधारणं' सामान्यमेकमाहारग्रहणं तथा प्राणापानग्रहणं च साधारणमेव, एतत्साधारणलक्षणम्, एतदुक्तं भवति—एकस्मिन्नाहारितवति सर्वेऽप्याहारितवन्तः तथैकस्मिन्नुच्छ्वसिते निःश्वसिते वा सर्वेऽप्युच्छ्वसिता निःश्वसिता वेति ॥ अमुमेवार्थं स्पष्टयितुमाह—

एगस्स उ जं गहणं बहूण साहारणाण तं चेव । जं बहुयाणं गहणं समासओ तंपि एगस्स ॥१३७॥

आज्ञाग्राह्याः सूक्ष्माः साधारणलक्षणं ५

प्र. आ. ५८

१०

एको यदुच्छ्वासनिःश्वासयोग्यपुद्गलोपादानं विधत्ते बहूनामपि साधारणजीवानां तदेव भवति, तथा यत्र बहवो ग्रहणमकार्षुरे- कस्यापि तदेवेति ॥ अथ ये बीजात्प्ररोहन्ति वनस्पतयस्तेषां कथमाविर्भाव इत्यत आह—

जोणिब्भूए बीए जीवो वक्कमइ सो व अन्नो वा। जोऽवि य मूले जीवो सो चिय पत्ते पढमयाए ॥१३८॥

अत्र भूतशब्दोऽवस्थावचनः, योन्यवस्थे बीजे, योनिपरिणाममजहतीत्यर्थः, बीजस्य हि द्विविधावस्था—योन्यवस्था अयोन्यवस्था च, यदा योन्यवस्थां न जहाति बीजम् उज्झितं च जन्तुना तदा योनिभूतमुच्यते, योनिस्तु जन्तोरुत्पत्तिस्थानमविनष्टमिति, तस्मिन् बीजे योनिभूते जीवो 'व्युत्क्रामति' उत्पद्यते, स एव पूर्वको बीजजीवोऽन्यो वाऽऽगत्य तत्रोत्पद्यते, एतदुक्तं भवति—यदा जीवेना- युषः क्षयाद्बीजपरित्यागः कृतो भवति, तस्य च यदा बीजस्य क्षित्युदकादिसंयोगस्तदा कदाचित्स एव प्राक्तनो जीवस्तत्रागत्य परिणमते कदाचिदन्य इति, यश्च मूलतया जीवः परिणमते स एव प्रथमपत्रतयाऽपीति, एकजीवकर्तृके मूलपत्रे इति यावत्, प्रथ- मपत्रकं च याऽसौ बीजस्य समुच्छूनावस्था भूजलकालापेक्षा सैवोच्यत इति, नियमप्रदर्शनमेतत्, शेषं तु किशलयादि सकलं न मूलजीवपरिणामाविर्भावितमेवेत्यवगन्तव्यमिति ॥ यत उक्तम्—"सेव्वोऽवि किसलओ खलु उग्गममाणो अणन्तओ भणिओ"- इत्यादि ॥ तथाऽपरं साधारणलक्षणमभिधित्सुराह—

चक्कागं भज्जमाणस्स गंठी चुण्णघणो भवे। पुढविसरिसभेएणं अणंतजीवं वियाणेहि ॥१३९॥

यस्य मूलकन्दत्वक्पत्रपुष्पफलादेर्भज्यमानस्य चक्रकं भवति, चक्राकारः समच्छेदो भङ्गो भवतीति गम्यते, यस्य च ग्रन्थिः—पर्व

१ सव्वोऽवि किसलओ खलु उग्गममाणो अणंतओ भणिओ.



२०

२७

भङ्गस्थानं वा 'चूर्णेन' रजसा 'घनो' व्याप्तो भवति, यो वा भिद्यमानो वनस्पतिः पृथिवीसदृशेन भेदेन केदारोपरिशुष्कतरिकावत् पुटभेदेन भिद्यते तमनन्तकायं विजानीहि ॥ तथा लक्षणान्तरमाह—

गूढसिरागं पत्तं सच्छीरं जं च होइ निच्छीरं। जं पुण पणट्ठसंधिय अणंतजीवं वियाणाहि ॥१४०॥

स्पष्टार्था ॥ एवं साधारणजीवान् लक्षणतः प्रतिपाद्य सम्प्रति नामग्राहमनन्तान् वनस्पतीन् दर्शयितुमाह—

सेवालकत्थभाणियअवए पणए य किंनए य हढे। एए अणंतजीवा भणिया अण्णे अणेगविहा ॥१४१॥

सेवालकत्थभाणिकाऽवकपनककिण्वहठादयोऽनन्तजीवा गदिता अनेकप्रकाराश्चान्येऽपीत्थमवगन्तव्या इति ॥ सम्प्रति प्रत्येकतरूणामेकादिजीवपरिगृहीतशरीरदृश्यत्वं प्रतिपिपादयिषयाह—

एगस्स दुण्ह तिण्ह व संखिज्जाण व तहा असंखाणं। पत्तेयसरीराणं दीसंति सरीरसंघाया ॥१४२॥

एकजीवपरिगृहीतशरीर तालसरलनालिकेर्यादिस्कन्धः, स च चक्षुर्ग्राह्यः, तथा बिसमृणालकर्णिकाकुणककटाहानामेकजीवपरिगृहीतत्वं चक्षुर्दृश्यत्वं च, द्वित्रिसङ्ख्येयासङ्ख्येयजीवपरिगृहीतत्वमप्येवं दृश्यतया भावनीयमिति ॥ किमनन्तानामप्येव?, नेत्यत आह—

इक्कस्स दुण्ह तिण्ह व संखिज्जाण व न पासिउं सक्का। दीसंति सरीराइं निओयजीवाणऽणंताणं ॥१४३॥

नैकादीनामसङ्ख्येयावसानानामनन्ततरुजीवाना शरीराण्युपलभ्यन्ते, कुतः?, अभावात्, न ह्येकादिजीवपरिगृहीतान्यनन्तानां शरीराणि सन्ति, अनन्तजीवपिण्डत्वादेव, कथं तर्ह्युपलभ्यास्ते भवन्तीति दर्शयति—दृश्यन्ते शरीराणि बादरनिगोदानामनन्तजीवाना, सूक्ष्मनिगोदाना तु नोपलभ्यन्ते, अनन्तजीवसङ्घातत्वे सत्यप्यतिसूक्ष्मत्वादिति भावः, निगोदास्तु नियमत एवानन्तजीवस-

साधारणलक्षणं दृश्यादृश्यत्वे

५

प्र. आ. ५९

५

ख्याता भवन्तीति, उक्तं च–"गोला य असंखेज्जा हुंति णिओआ असंखया गोले। एक्केक्को य निओओ अणंतजीवो मुणेयव्वो ॥१॥" एवं वनस्पतीनां वृक्षादिप्रत्येकादिभेदात् तथा वर्णगन्धरसस्पर्शभेदात् सहस्राग्रशो विधानानि सङ्ख्येयानि योनिप्रमुखानि शतसहस्राणि भेदानामवसेयानीति, तथाहि–वनस्पतीनां संवृता योनिः, सा च सचित्ताचित्तमिश्रभेदात् त्रिधा, तथा शीतोष्णमिश्रभेदाच्च, तथा प्रत्येकतरूणां दश लक्षा योनिभेदानां, साधारणानां च चतुर्दश, कुलकोटीनां द्वयोरपि पञ्चविंशतिकोटिशतसहस्राणीति ॥ उक्तं विधानद्वारम्, इदानीं परिमाणमभिधीयते–तत्र प्रथमं सूक्ष्मानन्तजीवानां दर्शयितुमाह—

पत्थेण व कुडवेण व जह कोइ मिणिज्ज सव्वधन्नाइं। एवं मविज्जमाणा हवंति लोया अणंता उ ॥१४४॥

प्रस्थकुडवादिना यथा कश्चित् सर्वधान्यानि प्रमिणुयात्, मित्वा चान्यत्र प्रक्षिपेद्, एवं यदि नाम कश्चित्साधारणजीवराशिं लोककुडवेन मित्वाऽन्यत्र प्रक्षिपेत्, तत एवं मीयमाना अनन्ता लोका भवन्तीति ॥ इदानीं बादरनिगोदपरिमाणाभिधित्सयाऽऽह—

जे बायरपज्जत्ता पयरस्स असंखभागमित्ता ते। सेसा असंखलोया तिन्निवि साहारणाणंता ॥१४५॥

ये पर्याप्तकबादरनिगोदास्ते संवर्त्तितचतुरस्रीकृतसकललोकप्रतरासङ्ख्येयभागवर्त्तिप्रदेशराशिपरिमाणा भवन्ति, एते पुनः प्रत्येकशरीरबादरवनस्पतिपर्याप्तकजीवेभ्योऽसङ्ख्येयगुणाः, शेषास्त्रयोऽपि राशयः प्रत्येकमसङ्ख्येयलोकाकाशप्रदेशपरिमाणाः, के पुनस्त्रय इति?, उच्यन्ते, अपर्याप्तकबादरनिगोदा अपर्याप्तकसूक्ष्मनिगोदाः पर्याप्तकसूक्ष्मनिगोदाः, एते च क्रमशो बहुतरका द्रष्टव्या इति, साधारणजीवास्तेभ्योऽनन्तगुणाः, एतच्च जीवपरिमाणं, प्राक्तनं तु राशिचतुष्टयं निगोदपरिमाणमिति॥ परिमाणद्वारानन्तरमुपभोगद्वारमभिधित्सुराह–

१ गोलाश्चासंख्येया भवन्ति निगोदा असङ्ख्येया गोले। एकैकश्च निगोदोऽनन्तजीवो गुणितव्य. ॥१॥

आहारे उवगरणे सयणासण जाण जुग्गकरणे य। आवरण पहरणेसु अ सत्थविहाणेसु अ बहुंसुं ॥१४६॥

आहारः–फलपत्रकिशलयमूलकन्दत्वगादिनिर्वर्त्त्यः, उपकरणं व्यजनकटकवलकार्गलादि, शयनं–खट्वाफलकादि, आसनम्–आसन्दकादि, यानं–शिबिकादि, युग्यं–गन्त्रिकादि, आवरणम्–फलकादि, प्रहरणं–लकुटमुसुण्ढ्यादि, शस्त्रविधानानि च बहूनि तन्निर्वर्त्त्यानि, शरदात्रखड्गक्षुरिकादिगण्डोपयोगित्वादिति ॥ तथाऽपरोऽपि परिभोगविधिः, तद्दर्शनायाह–

परि-भोगः

प्र. आ. ६०

आउज्ज कट्ठकम्मे गंधंगे वत्थ मल्ल जोए य। झावणवियावणेसु अ तिल्लविहाणे अ उज्जोए ॥१४७॥

५

आतोद्यानि–पटहभेरीवंशवीणाझल्लर्यादीनि, काष्ठकर्म्म–प्रतिमास्तम्भद्वारशाखादि, गन्धाङ्गानि–वालकप्रियङ्गुपत्रकदमनकत्वक्कन्दनोशीरदेवदार्वादीनि, वस्त्राणि–वल्कलकार्पासमयादीनि, माल्ययोगा–नवमालिकाबकुलचम्पकपुन्नागाशोकमालतीविचकिलादयः, ध्मापनं–दाहो भस्मसात्करणमिन्धनैः, वितापनं–शीताभ्यर्दितस्य शीतापनयनाय काष्ठप्रज्वालनात्, तैलविधानं–तिलातसीसर्पपेङ्गुदीज्योतिष्मतीकरञ्जादिभिः, उद्योतो–वर्त्तितृणचूडाकाष्ठादिभिरिति॥एवमेतान्युपभोगस्थानानि प्रतिपाद्य तदुपसञ्जिहीर्पुराह–

एएहिं कारणेहिं हिंसंति वणस्सई बहू जीवे। सायं गवेसमाणा परस्स दुक्खं उदीरंति ॥१४८॥

१०

'एतैः' गाथाद्वयोपात्तैः 'कारणैः' प्रयोजनैः 'हिंसन्ति' व्यापादयन्ति प्रत्येकसाधारणवनस्पतिजीवान् बहून् वनस्पतिसमारम्भिणः पुरुषाः, किंभूतास्त इति दर्शयति–'सातं' सुखं तदन्वेपिणः 'परस्य' वनस्पत्याद्येकेन्द्रियादेः 'दुःखं' बाधामुत्पादयन्ति ॥ साम्प्रतं शस्त्रमुच्यते, तच्च द्विधा, द्रव्यभावभेदात्, द्रव्यशस्त्रमपि समासविभागभेदात् द्विधैव, तत्र समासद्रव्यशस्त्राभिधित्सयाऽऽह–

कप्पणिकुहाणिअसियगदत्तियकुदालवासिपरसू अ। सत्थं वणस्सईए हत्था पाया मुहं अग्गी ॥१४९॥

कल्प्यते-छिद्यते यया सा कल्पनी-शस्त्रविशेषः, कुठारी प्रसिद्धैव, असियगं-दात्रं, दात्रिका-प्रसिद्धा, कुद्दालकवासिपरशवश्च, एते वनस्पतेः शस्त्रं, तथा हस्तपादमुखाग्नयश्च इत्येतत्सामान्यशस्त्रमिति ॥ विभागशस्त्राभिधित्सयाऽऽह—

**किंची सकायसत्थं किंची परकाय तदुभयं किंची । एयं तु दव्वसत्थं भावे य असंजमो सत्थं ॥१५०॥**

किञ्चित् स्वकायशस्त्रं-लकुटादि किञ्चिच्च परकायशस्त्रं-पाषाणाग्न्यादि तथोभयशस्त्रं-दात्रदात्रिकाकुठारादि, एतद् द्रव्यशस्त्रं, भावशस्त्रं पुनरसंयमः दुष्प्रणिहितमनोवाक्कायलक्षण इति ॥ सकलनिर्युक्त्यर्थपरिसमाप्तिप्रचिकटयिषयाऽऽह—

**सेसाइं दाराइं ताइं जाइं हवंति पुढवीए । एवं वणस्सईए निज्जुत्ती कित्तिया एसा ॥१५१॥**

उक्तव्यतिरिक्तशेषाणि तान्येव द्वाराणि यानि पृथिव्यामभिहितानि, ततस्तद्वाराभिधानाद्वनस्पतौ निर्युक्तिः 'कीर्त्तिता' व्यावर्णितेति ॥ साम्प्रतं सूत्रानुगमे अस्खलितादिगुणोपेतं सूत्रमुच्चारणीयं, तच्चेदम्—

**तं णो करिस्सामि समुट्ठाए, मत्ता मइमं, अभयं विदित्ता, तं जे णो करए, एसोवरए, एत्थोवरए, एस अणगारेत्ति पवुच्चई (सू. ४०)**

अस्य चानन्तरपरम्परादिसूत्रैः सम्बन्धः प्राग्वद्वाच्यः, उक्तं प्राक् 'सातान्वेषिणो हि वनस्पतिजन्तूनां दुःखमुदीरयन्ति, ततश्च तन्मूलमेव दुःखगहने संसारसागरे भ्राम्यन्ति सत्त्वाः' इत्येवं विदितकटुकविपाकः समस्तवनस्पतिसत्त्वविषयविमर्दनिवृत्तिमात्यन्तिकीमात्मनि दर्शयन्नाह—'तत्' वनस्पतीनां दुःखमहं दृष्टप्रत्यपायो न करिष्ये, यदिवा तद्दुःखोत्पत्तिनिमित्तभूतं वनस्पतावारम्भं-छेदनभेदनादिरूपं नो करिष्ये मनोवाक्कायैः, तथाऽपरैर्न कारयिष्ये, तथा कुर्वतश्चान्यान्नानुमंस्ये, किं कृत्वेति दर्शयति-सर्वज्ञो-

पदिष्टमार्गानुसृत्या सम्यक् प्रव्रज्योत्थानेनोत्थाय समुत्थाय, प्रव्रज्यां प्रतिपद्येत्यर्थः, तदेवं वर्जितसकलमावद्यारम्भकलापः संस्तद्वनस्पतिदुःखं तदारम्भं वा नो करिष्यामीति, अनेन च संयमक्रिया दर्शिता, न च क्रियात एव मोक्षावाप्तिः, किं तर्हि ?, ज्ञानक्रियाभ्यां, तदुक्तम्—"नाणं किरियारहियं किरियामेत्तं च दोऽवि एगन्ता। न समत्था दाउं जे जम्ममरणदुक्खदाहाइं ॥१॥" यत एवमतो विशिष्टमोक्षकारणभूतज्ञानप्रतिपिपादयिषयाऽऽह—'मत्ता मइमं' मत्वा—ज्ञात्वा अवबुध्य यथावत् जीवान्, मतिरस्यास्तीति मतिमान्, मतिमानेवोपदेशार्हो भवतीत्यतस्तद्द्वारेणैव शिष्यामन्त्रणं हे मतिमन्!, प्रव्रज्यां प्रतिपद्य जीवादिपदार्थांश्च ज्ञात्वा मोक्षमवाप्नोतीति, सम्यग्ज्ञानपूर्विका हि क्रिया फलवतीति दर्शितं भवति। पुनरत्रैवाह—'अभयं विदित्ता' अविद्यमानं भयमस्मिन् सत्त्वानामित्यभयः—संयमः, स च सप्तदशविधानस्तं चाभयं—सर्वभूतपरिपालनात्मकं संसारसागरान्निर्वाहकं विदित्वा वनस्पत्यारम्भान्निवृत्तिर्विधेयेति। एतदेव दर्शयितुमाह—'तं जे नो करए' इत्यादि, 'तं' वनस्पत्यारम्भं 'यो' विदिततदारम्भकटुकविपाकः नो कुर्यात्, तस्य प्रतिविशिष्टेष्टफलावाप्तिः, नान्यस्यान्धमूढ्या प्रवर्त्तमानस्य, अभिलषितविप्रकृष्टस्थानप्राप्तिप्रवृत्तान्धक्रियाव्याघातवदिति मन्तव्यं, ज्ञानमपि क्रियाहीनं न मोक्षाय, गृहान्तर्दह्यमाननिरुद्धपङ्गुचक्षुर्ज्ञानवदिति, एवं ज्ञात्वाऽभ्युपेत्य च तत्परिहारः कर्त्तव्य इति दर्शितं भवति। एवं यः सम्यग्ज्ञानपूर्विकां निवृत्तिं करोति स एव समस्तारम्भनिवृत्त इति दर्शयति—'एसोवरए'त्ति, एष एव सर्वस्मादारम्भाद्वनस्पतिविषयादुपरतो यो यथावत् ज्ञात्वाऽऽरम्भं न करोतीति, स पुनरेवंविधनिवृत्तिभाक् किं शाक्यादिष्वपि सम्भवत्युतेहैव प्रवचन इति दर्शयति—'एत्थोवरए'त्ति, एतस्मिन्नेव जैनेन्द्रे प्रवचने परमार्थत उपरतो, नान्यत्र, यथाप्रतिज्ञातनिर-

१ ज्ञानं क्रियारहितं क्रियामात्रं च द्वे अप्येकान्ते। न समर्थे दातुं यानि जन्ममरणदुःखदाहकानि ॥१॥

यथानुष्ठायित्वादृषरनव्यपदेशभाग् भवति, न शेषाः शाक्यादयः, तद्विपरीतत्वाद्, एप एव च सम्पूर्णानगारव्यपदेशमश्नुते इति दर्शयति—'एस अणगारेत्ति पवुच्चई' 'एषः' अतिक्रान्तसूत्रार्थव्यवस्थितः अविद्यमानागारोऽनगारः प्रकर्षेण उच्यते प्रोच्यते इति, किं कृतः प्रकर्षः ?, अनगारव्यपदेशकारणभूतगुणकलापसम्बन्धकृतः प्रकर्षः, इतिशब्दोऽनगारव्यपदेशकारणपरिसमाप्तिद्योती, एतावदनगारलक्षणं नान्यदिति, ये पुनः प्रोज्झितपारमार्थिकानगारगुणाः शब्दादीन्विषयानङ्गीकृत्य प्रवर्त्तन्ते ते तु नापेक्षन्ते वनस्पतीन् जीवान्, यतो भूयांसः शब्दादयो गुणा वनस्पतिभ्य एव निष्पद्यन्ते, शब्दादिगुणेष्वेव वर्त्तमाना रागद्वेषविषमविषविघूर्णमानलोललोचना नरकादिचतुर्विधगत्यन्तःपातिनो बोद्धव्याः, तदन्तःपातिन एव च शब्दादिविषयाभिष्वङ्गिणो भवन्तीति ॥ अस्यार्थस्य प्रसिद्धये गतप्रत्यागतलक्षणमितरेतरावधारणफलं सूत्रमाह—

## जे गुणे से आवट्टे जे आवट्टे से गुणे ( सू. ४१ )

यो 'गुणः' शब्दादिकः स आवर्त्तः, आवर्त्तन्ते-परिभ्रमन्ति प्राणिनो यत्र स आवर्त्तः-संसारः, इह च कारणमेव कार्यत्वेन व्यपदिश्यते यथा नड्वलोदकं पादरोगः, एवं च एते शब्दादयो गुणाः स आवर्त्तः, तत्कारणत्वात्, अथवैकवचनोपादानात्पुरुषोऽभिसम्बध्यते, यः शब्दादिगुणे वर्त्तते स आवर्त्ते वर्त्तते, यश्चावर्त्ते वर्त्तते स गुणे वर्तते इति, अत्र कश्चिचोद्यचञ्चुराह—यो गुणेषु वर्त्तते स आवर्त्ते वर्त्तत इति साधु, यः पुनरावर्त्ते वर्त्तते नासौ नियमत एव गुणेषु वर्त्तते, यस्मात्साधवो वर्त्तन्ते आवर्त्ते, न गुणेषु तदेतत्कथमिति, अत्रोच्यते, सत्यम्, आवर्त्ते यतयो वर्त्तन्ते, न गुणेषु, किन्तु रागद्वेषपूर्वकं गुणेषु वर्तनमिहाधिक्रियते, तच्च साधूनां न सम्भवति, तदभावात्, आवर्त्तोऽपि संसरणरूपो दुःखात्मको न सम्भवति, सामान्यतस्तु संसारान्तःपातित्वं सामान्यशब्दादि

गुणोपलब्धिश्च सम्भवत्येवातो नोपलब्धिः प्रतिषिध्यते, रागपरिणामो द्वेषपरिणामो वा यस्तत्र स प्रतिषिध्यते, तथा चोक्तम्— "कण्णसोक्खेहिं सद्देहिं, पेम्मं नाभिनिवेसए" इत्यादि, तथा—"न शक्यं रूपमद्रष्टुं, चक्षुर्गोचरमागतम्। रागद्वेषौ तु यौ तत्र, तौ बुधः परिवर्जयेत् ॥१॥" कथं पुनर्गुणभूयस्त्वं वनस्पतिभ्य इति प्रदर्श्यते—वेणुवीणापटहमुकुन्दादीनामातोद्यविशेषाणां वनस्पतेरुत्पत्तिः, ततश्च मनोहराः शब्दा निष्पद्यन्ते, प्राधान्यमत्र वनस्पतेर्विवक्षितं, अन्यथा तु तन्त्रीचर्मपाण्यादिसंयोगाच्छब्दनिष्पत्तिरिति, रूपं पुनः काष्ठकर्मस्त्रीप्रतिमादिषु गृहतोरणवेदिकास्तम्भादिषु च चक्षूरमणीयं, गन्धा अपि हि कर्पूरपाटलालवलीलवङ्गकेतकीसरसचन्दनागुरुकक्कोलैलाजातिफलपत्रिकाकेसरमांसीत्वक्पत्रादीनां सुरभयो गन्धेन्द्रियाह्लादकारिणः प्रादुर्भवन्ति, रसास्तु बिसमृणालमूलकन्दपुष्पफलपत्रकण्टकमञ्जरीत्वगङ्कुरकिसलयारविन्दकेसरादीनां जिह्वेन्द्रियप्रह्लादिनो निष्पद्यन्ते अतिबहव इति, तथा स्पर्शाः पद्मिनीपत्रकमलदलमृणालवल्कलदुकूलशाटकोपधानतूलिकप्रच्छादनपटादीनां स्पर्शनेन्द्रियसुखाः प्रादुष्ष्यन्ति, एवमेतेषु वनस्पतिनिष्पन्नेषु शब्दादिगुणेषु यो वर्त्तते स आवर्त्ते वर्त्तते, यश्च आवर्त्तवर्त्ती स रागद्वेषात्मकत्वात् गुणेषु वर्त्तत इति, स चावर्त्तो नामादिभेदाच्चतुर्द्धा, नामस्थापने क्षुण्णे, द्रव्यावर्त्तः स्वामित्वकरणाधिकरणेषु यथासम्भवं योज्यः, स्वामित्वे नद्यादीनां क्वचित्प्रविभागे जलपरिभ्रमणं द्रव्यस्यावर्त्तः, द्रव्याणां वा हंसकारण्डवचक्रवाकादीनां व्योम्नि क्रीडतामावर्त्तनादावर्त्तः, करणे तु तेनैव जलद्रव्येणावर्त्तते तृणकलिञ्चादि स द्रव्येणावर्त्तः, तथा त्रपुसीसकलोहरजतसुवर्णैरावर्त्यमानैर्यदन्यत् तदन्तःपात्यावर्त्यते स द्रव्यैरावर्त्तत इति, अधिकरणविवक्षायामेकस्मिन् जलद्रव्ये आवर्त्तः तथा रजतसुवर्णरीतिकात्रपुसीसकेष्वेकस्थीकृतेषु बहुषु द्रव्येष्वावर्त्तः, भावावर्त्तो

गुणावर्त्ती

५

१०

१ वर्णसौख्येषु शब्देषु प्रेम नाभिनिवेशयेत्.

नामान्योऽन्यभावसङ्क्रान्तिः, औदयिकभावोदयाद्वा नरकादिगतिनतुष्टयेऽनुमानावर्त्तते, इह च भावावर्त्तेनाधिकारो, न शेषैरिति ॥
अथ य एते गुणाः संसारावर्त्तकारणभूताः शब्दादयो वनस्पतेरभिनिर्वृत्तास्ते किं नियतदिग्देशभाजः उत सर्व्वदिक्षु इत्यत आह—

**उड्ढं अवं तिरियं पाईणं पासमाणे रूवाइं पासति, सुणमाणे सद्दाइं सुणेति, उड्ढं अवं पाइणं मुच्छमाणे रूवेसु मुच्छति, सद्देसु आवि (सू. ४२)**

प्रज्ञापकदिगङ्गीकरणादूर्द्ध्वदिग्व्यवस्थितं रूपगुणं पश्यति प्रासादतलहर्म्यादिषु, 'अव'मित्यवाङ् अधस्तात् गिरिशिखरप्रासादाधिरूढोऽधोव्यवस्थितं रूपगुणं पश्यति, अधःशब्दार्थे अवाङित्यव्ययं वर्त्तते, गृहभित्त्यादिव्यवस्थितं रूपगुणं तिर्यक् पश्यति, तिर्यक्शब्देन चात्र दिशोऽनुदिशश्च परिगृह्यन्ते, ताश्चेमाः—'प्राचीन'मिति पूर्वा दिग्, एतच्चोपलक्षणम्, अन्या अप्येतदाद्यास्तिर्यग्दिशो द्रष्टव्या इति, एतासु दिक्षु पश्यन् चक्षुर्ज्ञानपरिणतो रूपादिद्रव्याणि चक्षुर्ग्राह्यतया परिणतानि पश्यति, उपलभत इत्यर्थः, तथा तासु च शृण्वन् शृणोति शब्दान् उपयुक्तः श्रोत्रेण, नान्यथेति ॥ अत्रोपलब्धिमात्रं प्रतिपादितं, न चोपलब्धिमात्रात्संसारप्रपातः, किन्तु यदि मूर्च्छां रूपादिषु करोति, ततोऽस्य बन्ध इति दर्शयितुमाह—'उड्ढ'मित्यादि, पुनरूर्द्ध्वादिमूर्छासम्बन्धनार्थमुपादानं, मूर्छन् रूपेषु मूर्छति, रागपरिणामं यान् रज्यते रूपादिष्वित्यर्थः, एवं शब्देष्वपि मूर्छति, अपिशब्दः सम्भावनायां समुच्चये वा, रूपशब्दविषयग्रहणाच्च शेषा अपि गन्धरसस्पर्शा गृहीता भवन्ति, एकग्रहणे तज्जातीयानां ग्रहणाद्, आद्यन्तग्रहणाद्वा तन्मध्यग्रहणमवसेयमिति ॥ एवं विषयलोकमाख्याय विवक्षितमाह—

प्र. आ. ६३

नियत-१५ दिक्काः शब्दादय सू. ४२

२०

॥५७॥ २७

एस लोए वियाहिए, एत्थ अगुत्ते अणाणाए ( सू. ४३ )

'एष' इति रूपरसगन्धस्पर्शशब्दविषयाख्यो लोको व्याख्यातः, लोक्यते परिच्छिद्यते इतिकृत्वा, एतस्मिंश्च प्रस्तुते शब्दादिगुणलोकेऽगुप्तो यो मनोवाक्कायैः मनसा द्वेष्टि रज्यते वा वाचा प्रार्थनं शब्दादीनां करोति कायेन शब्दादिविषयदेशमभिसर्पति, एवं यो ह्यगुप्तो भवति सोऽनाज्ञायां वर्त्तते, न भगवत्प्रणीतवचनानुसारीति यावदिति ॥ एवंगुणश्च यत्कुर्यात्तदाह—

पुणो पुणो गुणासाए, वंकसमायारे ( सू. ४४ )

ततश्चासावसकृच्छब्दादिगुणलुब्धो न शक्नोत्यात्मानं शब्दादिगृद्धेर्निवर्त्तयितुम्, अनिवर्त्तमानश्च पुनः पुनर्गुणास्वादो भवति, क्रियासातत्येन शब्दादिगुणानास्वादयतीत्यर्थः, तथा च यादृशो भवति तद्दर्शयति—वक्रः—असंयमः कुटिलो नरकादिगत्यभिमुख्यप्रवणत्वात्, समाचरणं समाचारः—अनुष्ठानं, वक्रः समाचारो यस्यासौ वक्रसमाचारः, असंयमानुष्ठायीत्यर्थः, अवश्यमेव शब्दादिविषयाभिलाषी भूतोपमर्दकारीत्यतो वक्रसमाचारः, प्राक् शब्दादिविषयलवसमास्वादनाद्गृद्धः पुनरात्मानमाचारयितुमसमर्थत्वादपथ्याम्रफलभोजिराजवद्विनाशमाशु संश्रयत इति ॥ एवं चासौ नितरां जितः शब्दादिविषयसमास्वादनात् खंतपुत्तोव्व इदमाचरति—

पमत्तेऽगारमावसे ( सू. ४५ )

प्रमत्तो—विषयमूर्छितः 'अगारं' गृहमावसति, योऽपि द्रव्यलिङ्गसमन्वितः शब्दादिविषयप्रमादवान् असावपि विरतिरूपभावलिङ्गरहितत्वात् गृहस्थ एवेति ॥ अन्यतीर्थिकाः पुनः सर्वदा सर्वथाऽन्यथावादिनोऽन्यथाकारिण इति दर्शयितुमाह—

अगुप्तोऽनाज्ञः गुणेच्छुः वक्रः प्रमत्तोऽगारी सू. ४३-५

१०

लज्जमाणा पुढो पास, अणगारा मोत्ति एगे पवदमाणा जमिणं विरूवरूवेहिं सत्थेहिं वणस्सइकम्मसमारंभेणं वणस्सइसत्थं समारभमाणा अण्णे अणेगरूवे पाणे विहिंसंति, तत्थ खलु भगवया परिण्णा पवेदिता, इमस्स चेव जीवियस्स परिवंदणमाणणपूयणाए जातिमरणमोयणाए दुक्खपडिघायहेउं से सयमेव वणस्सइसत्थं समारंभइ अण्णेहिं वा वणस्सइसत्थं समारंभावेइ अण्णे वा वणस्सइसत्थं समारभमाणे समणुजाणइ, तं से अहियाए, तं से अबोहीए, से तं संबुज्झमाणे आयाणीयं समुट्ठाए सोच्चा भगवओ अणगाराणं वा अंतिए इहमेगेसिं णायं भवति—एस खलु गंथे एस खलु मोहे एस खलु मारे एस खलु णरए, इच्चत्थं गड्ढिए लोए, जमिणं विरूवरूवेहिं सत्थेहिं वणस्सइकम्मसमारंभेणं वणस्सइसत्थं समारंभमाणे अण्णे अणेगरूवे पाणे विहिंसंति (सू. ४६)

प्र. आ. ६४

२०

प्राग्वत् ज्ञेयं, नवरं वनस्पत्यालापो विधेय इति ॥ साम्प्रतं वनस्पतिजीवास्तित्वे लिङ्गमाह—

से वेमि इमंपि जाइधम्मयं एयंपि जाइधम्मयं इमंपि वुड्ढिधम्मयं एयंपि वुड्ढिधम्मयं इमंपि चित्तमंतयं एयंपि चित्तमंतयं इमंपि छिण्णं मिलाइ एयंपि छिण्णं मिलाइ इमंपि आहारगं एयंपि आहारगं इमंपि अणिच्चयं एयंपि अणिच्चयं इमंपि असासयं एयंपि असासयं इमंपि चओवचइयं एयंपि चओवचइयं इमंपि विपरिणामधम्मयं एयंपि विपरिणामधम्मयं (सू. ४७)

वनस्पतेः सचेतनता सू. ४७

सोऽहमुपलब्धतत्त्वो ब्रवीमि, अथवा वनस्पतिचैतन्यं प्रत्यक्षप्रमाणमगाधिगम्यमानस्वरूपं यत् तदहं ब्रवीमि, यथाप्रतिज्ञातमर्थं दर्शयति—'इमंपि जाइधम्मयं'ति, इहोपदेशदानाय सूत्रारम्भस्तद्योग्यश्च पुरुषो भवति अतस्तस्य सामर्थ्येन सन्निहितत्वात्तच्छरीरं प्रत्यक्षासन्नवाचिनेदमा परामृशति, इदमपि—मनुष्यशरीरं, जननं—जातिरुत्पत्तिस्तद्धर्मकम्, एतदपि वनस्पतिशरीरं तद्धर्मकं तत्स्वभावमेव, इतिपूर्वकोऽपिशब्दः सर्वत्र यथाशब्दार्थे द्वितीयस्तु समुच्चये व्याख्येयः, ततश्चायमर्थः—यथा मनुष्यशरीरं बालकुमारयुववृद्धतापरिणामविशेषवत् चेतनावत् सदाधिष्ठितं प्रस्पष्टचेतनाकमुपलभ्यते, तथेदमपि वनस्पतिशरीरं, यतो जातः केतकतरुर्बालको युवा वृद्धश्च संवृत्त इति, अतस्तुल्यत्वादेतदपि जातिधर्मकं, न च कश्चिद्विशेषोऽस्ति येन सत्यपि जातिधर्मत्वे मनुष्यादिशरीरमेव सचेतनं न वनस्पतिशरीरमिति, ननु च जातिधर्मत्वं केशनखदन्तादिष्वप्यस्ति, अव्यभिचारि च लक्षणं भवति, अस्ति च व्यभिचारः, तस्मादयुक्तं कल्पयितुं जातिधर्मत्वं जीवलिङ्गमिति, उच्यते, सत्यमस्ति जननमात्रं, किन्तु मनुष्यशरीरप्रसिद्धबालकुमाराद्यवस्थानामसम्भवः केशादिष्वस्ति स्फुटः, तस्मादसमञ्जसमेतद्, अपिच—केशनखं चेतनावत्पदार्थाधिष्ठितशरीरस्थं जातमित्युच्यते, वर्द्धते

५

१०

इति वा, न पुनस्त्वयैवं तरवोऽपि चेतनावत्पदार्थाधारस्था इष्यन्ते, त्वन्मते भुवोऽचेतनत्वात् तस्मादयुक्तमिति, अथवा जातिधर्मत्वादीनि समुदितानि सूत्रोक्तान्येक एव हेतुः, न पृथक् हेतुता, न च समुदायहेतुः केशादिष्वस्ति तस्माददोष इति। तथा यथेदं मनुष्यशरीरमनवरतं बालकुमाराद्यवस्थाविशेषैर्वर्द्धते, तथैतदपि वनस्पतिशरीरमङ्कुरकिशलयशाखाप्रशाखादिभिर्विशेषैर्वर्द्धत इति, तथा यथेदं मनुष्यशरीरं चित्तवद् एवं वनस्पतिशरीरमपि चित्तवत्, कथम्?, चेतयति येन तच्चित्तं-ज्ञानं, ततश्च यथा मनुष्यशरीरं ज्ञानेनानुगतमेवं वनस्पतिशरीरमपि, यतो धात्रीप्रपुन्नाटादीनां स्वापविबोधसद्भावः तथाऽधोनिखातद्रविणराशेः स्वप्ररोहेणावेष्टनं प्रावृड्जलधरनिनादशिशिरवायुसंस्पर्शादङ्कुरोद्भेदः, तथा मदमदनसङ्गस्खलद्गतिविघूर्णमानलोललोचनविलासिनीसन्नूपुरसुकुमारचरणताडनादशोकतरोः पल्लवकुसुमोद्गमः, तथा सुरभिसुरागण्डूषसेकाद्बकुलस्य स्पृष्टप्ररोहिकादीनां च हस्तादिसंस्पर्शात्सङ्कोचादिका परिस्फुटा क्रियोपलब्धिः, न चैतदभिहिततरुसंबन्धि क्रियाजालं ज्ञानमन्तरेण घटते, तस्मात्सिद्धं चित्तवत्त्वं वनस्पतेरिति। तथा यथेदं



छिन्नं म्लायति तथैतदपि छिन्नं म्लायति, मनुष्यशरीरं हि हस्तादि छिन्नं म्लायति-शुष्यति, तथा तरुशरीरमपि पल्लवफलकुसुमादि छिन्नं शोषमुपगच्छद् दृष्टं, न चाचेतनानामयं धर्म्म इति। तथा यथेदं मनुष्यशरीरं स्तनक्षीरव्यञ्जनौदनाद्याहाराभ्यवहारादाहारकं तथैतदपि वनस्पतिशरीरं भूजलाद्याहाराभ्यवहारकं, न चैतदाहारकत्वमचेतनानां दृष्टम्, अतस्तद्भावात्सचेतनत्वमिति। तथा यथेदं मनुष्यशरीरमनित्यकं—न सर्वदाऽवस्थायि तथैतदपि वनस्पतिशरीरमनित्यं नियतायुष्कत्वात्, तथाहि-अस्य दश वर्षसहस्राणि उत्कृष्टमायुः। तथा यथेदं मनुष्यशरीरमशाश्वतं-प्रतिक्षणमावीचीमरणेन मरणात् तथैतदपि वनस्पतिशरीरमिति। तथा यथेदमिष्टानिष्टाहारादिप्राप्त्या 'चयापचयिकं' वृद्धिहान्यात्मकं तथैतदपि इति। तथा यथेदं मनुष्यशरीरं विविधपरिणामः तत्तद्रोगसम्पर्कात्

पाण्डुत्वोदरवृद्धिशोफकृशत्वाङ्गुलिनासिकाप्रवेशादिरूपो बालादिरूपो वा, तथा रसायनस्नेहाद्युपयोगाद्विशिष्टकान्तिबलोपचयादिरूपो विपरिणामः तद्धर्म्मकं–तत्स्वभावकं तथैतदपि वनस्पतिशरीरं तथाविधरोगोद्भवात् पुष्पपत्रफलत्वगाद्यन्यथाभवनात् तथा विशिष्टदौहृदप्रदानेन पुष्पफलाद्युपचयाद्विपरिणामधर्मकम् । एवमनन्तरोक्तधर्मकलापसद्भावादसंशयं गृहाणैतत्–सचेतनास्तरव इति ॥ एवं वनस्पतेश्चैतन्यं प्रदर्श्य तदारम्भे बन्धं तत्परिहाररूपविरत्यासेवनेन मुनित्वं प्रतिपादयन्नुपसञ्जिहीर्षुराह—



एत्थ सत्थं समारभमाणस्स इच्चेते आरंभा अपरिण्णाता भवंति, एत्थ सत्थं असमारभमाणस्स इच्चेते आरंभा परिण्णाया भवंति, तं परिण्णाय मेहावी णेव सयं वणस्सइसत्थं समारंभेज्जा णेवण्णेहिं वणस्सइसत्थं समारंभावेज्जा णेवण्णे वणस्सइसत्थं समारंभंते समणुजाणेज्जा, जस्सेते वणस्सतिसत्थसमारंभा परिण्णाया भवंति से हु मुणी परिण्णायकम्मे (सू. ४८) त्ति बेमि ॥ पञ्चम उद्देशकः समाप्तः ॥

'एतस्सिन्' वनस्पतौ शस्त्रं द्रव्यभावाख्यमारभमाणस्येत्येते आरम्भा अपरिज्ञाता–अप्रत्याख्याता भवन्ति, एतस्मिंश्च वनस्पतौ शस्त्रमसमारभमाणस्येत्येते आरम्भाः परिज्ञाताः–प्रत्याख्याता भवन्तीति पूर्ववच्चर्चः यावत् स एव मुनिः परिज्ञातकर्मेति ब्रवीमि पूर्व्ववदिति । शस्त्रपरिज्ञाध्ययने पञ्चमोद्देशकटीका परिसमाप्तेति ।

५

१०

उक्तः पञ्चमोद्देशकः, साम्प्रतं षष्ठः समारभ्यते–अस्य चायमभिसम्बन्धः–इहानन्तरोद्देशके वनस्पतिकायः प्रतिपादितः, तदनन्तरं च त्रसकायस्यागमे परिपठितत्वात् तत्स्वरूपाधिगमायायमुद्देशकः समारभ्यते, तस्य चोपक्रमादीनि चत्वार्यनुयोगद्वाराणि वाच्यानि, यावन्नामनिष्पन्ने निक्षेपे त्रसकायोद्देशकः, तत्र त्रसकायस्य पूर्वप्रसिद्धद्वारक्रमातिदेशाय तद्विभिन्नलक्षणद्वाराभिधानाय च निर्युक्तिकृदाह–

तसकाए दाराइं ताइं जाइं हवंति पुढवीए। नाणत्ती उ विहाणे परिमाणुवभोगसत्थे य ॥१५२॥

त्रसन्तीति त्रसास्तेषां कायस्त्रसकायस्तस्मिंस्तान्येव द्वाराणि भवन्ति यानि पृथिव्यां प्रतिपादितानि, नानात्वं तु विधानपरिमाणोपभोगशस्त्रद्वारेषु, चशब्दाल्लक्षणे च प्रतिपत्तव्यमिति ॥ तत्र विधानद्वारमाह–

दुविहा खलु तसजीवा लद्धितसा चेव गइतसा चेव। लद्धीय तेउवाऊ तेणऽहिगारो इहं नत्थि ॥१५३॥

'द्विविधा' द्विभेदाः, खलुरवधारणे, त्रसत्वं प्रति द्विभेदत्वमेव, त्रसनात् स्पन्दनात् त्रसाः, जीवनात् प्राणधारणाज्जीवाः, त्रसा एव जीवास्त्रसजीवाः, लब्धित्रसा गतित्रसाश्च, लब्ध्या तेजोवायू त्रसौ, लब्धिस्तच्छक्तिमात्रं, लब्धित्रसाभ्यामिहाधिकारो नास्ति, तेजसोऽभिहितत्वाद् वायोश्चाभिधास्यमानत्वाद्, अतः सामर्थ्याद्गतित्रसा एवाधिक्रियन्ते ॥ के पुनस्ते कियद्भेदा वेत्यत आह–

नेरइयतिरियमणुया सुरा य गइओ चउव्विहा चेव। पज्जत्ताऽपज्जत्ता नेरइयाई अ नायव्वा ॥१५४॥

नारका–रत्नप्रभादिमहातमःपृथ्वीपर्यन्तनरकावासिनः सप्तभेदाः, तिर्यञ्चोऽपि द्वित्रिचतुष्पञ्चेन्द्रियाः, मनुष्याः सम्मूर्छनजाः गर्भव्युत्क्रान्तयश्च, सुरा भवनपतिव्यन्तरज्योतिष्कवैमानिकाः, एते गतित्रसाश्चतुर्विधाः, नामकर्मोदयाभिनिर्वृत्तगतिलाभाद्गतित्रसत्वम्, एते च नारकादयः पर्याप्तापर्याप्तभेदेन द्विविधा ज्ञातव्याः, तत्र पर्याप्तिः पूर्वोक्तैव षोढा, तया यथासम्भवं निष्पन्नाः

त्रसे द्वाराणि

१५

२०

पर्याप्ताः, तद्विपरीतास्त्वपर्याप्तका अन्तर्मुहूर्त्तकालमिति ॥ इदानीमुत्तरभेदानाह—

तिविहा तिविहा जोणी अंडयपोअअजराउआ चेव । बेइंदिय तेइन्दिय चउरो पंचिंदिया चेव ॥१५५॥ दारं ॥

अत्र हि शीतोष्णमिश्रभेदात् तथा सचित्ताचित्तमिश्रभेदात् तथा संवृतविवृततदुभयभेदात् तथा स्त्रीपुंनपुंसकभेदाच्चेत्यादीनि बहूनि योनीनां त्रिकाणि सम्भवन्ति, तेषां सर्वेषां सङ्ग्रहार्थं त्रिविधा त्रिविधेति वीप्सानिर्देशः, तत्र नारकाणामाद्यासु तिसृषु भूमिषु शीतैव योनिः, चतुर्थ्यामुपरितननरकेषु शीता अधस्तननरकेषूष्णा, पञ्चमीषष्ठीसप्तमीषूष्णैव, नेतरे, गर्भव्युत्क्रान्तिकतिर्यङ्मनुष्याणामशेषदेवानां च शीतोष्णा योनिः, नेतरे, द्वित्रिचतुःपञ्चेन्द्रियसंमूर्छनजतिर्यङ्मनुष्याणां त्रिविधाऽपि योनिः-शीता उष्णा शीतोष्णा चेति, तथा नारकदेवानामचित्ता, नेतरे, द्वीन्द्रियादिसम्मूर्छनजपञ्चेन्द्रियतिर्यङ्मनुष्याणां त्रिविधाऽपि योनिः सचित्ता अचित्ता मिश्रा च, गर्भव्युत्क्रान्तिकतिर्यङ्मनुष्याणां मिश्रा योनिः, नेतरे, तथा देवनारकाणां संवृता योनिः, नेतरे, द्वित्रिचतुरिन्द्रियसम्मूर्छनजपञ्चेन्द्रियतिर्यङ्मनुष्याणां विवृता योनिः, नेतरे, गर्भव्युत्क्रान्तिकतिर्यग्मनुष्याणां संवृतविवृता योनिः, नेतरे, तथा नारका नपुंसकयोनय एव, तिर्यञ्चस्त्रिविधाः-स्त्रीपुंनपुंसकयोनयोऽपि, मनुष्या अप्येवं त्रैविध्यभाजः, देवाः स्त्रीपुंयोनय एव, तथाऽपरं मनुष्ययोनेस्त्रैविध्यं, तद्यथा—कूर्मोन्नता, तस्यां चार्हच्चक्रवर्त्यादिसत्पुरुषाणामुत्पत्तिः, तथा शङ्खावर्त्ता, सा च स्त्रीरत्नस्यैव, तस्यां च प्राणिनां सम्भवोऽस्ति, न निष्पत्तिः, तथा वंशीपत्रा, सा च प्राकृतजनस्येति, तथाऽपरं त्रैविध्यं निर्युक्तिकृद्दर्शयति, तद्यथा—अण्डजाः पोतजाः जरा-

१ शीता शीतोष्णेति । तत्र नारकाणामाद्यासु तिसृषु भूमिषूष्णैव योनिः, चतुर्थ्यामुपरितननरकेषूष्णाऽधस्तननरकेषु शीता, पञ्चमीषष्ठीसप्तमीषु शीतैव नेतरे इति पा०, मतान्तरमित्यावश्यकपाठः, अस्ति सङ्ग्रहणीवृत्तावेव मतद्वयमपि.

योनि-
भेदाः

५

१०

प्र. आ.
६७

गा. १ अग १ अ. ६ उ.

पृजाश्चेति, तत्राण्डजाः पक्ष्यादयः, पोतजाः वल्गुलीगजकलभकादयः, जरायुजा गोमहिषीमनुष्यादयः, तथा द्वित्रिचतुःपञ्चेन्द्रियभेदाच्च भिद्यन्ते, एवमेते प्रमाणविषयोन्यादिभेदेन प्ररूपिताः, एतद्योनिसङ्ग्राहिण्यौ च गाथे–'पुढविदगअगणिमारुयपत्तेयनिओयजीवजोणीणं। सत्तग सत्तग सत्तग सत्तग दस चोद्दस य लक्खा ॥१॥ विगलिंदिएसु दो दो चउरो चउरो य नारयसुरेसु। तिरियाण होन्ति चउरो चोद्दस मणुआण लक्खाइं ॥२॥' एवमेते चतुरशीतिर्योनिलक्षा भवन्ति, तथा कुलपरिमाणं 'कुलकोडिसयसहस्सा बत्तीसट्ठनव य पणवीसा। एगिंदिय बितिइंदियचउरिंदियहरियकायाणं ॥ १ ॥ अद्धत्तेरस बारस दस दस नव चेव कोडिलक्खाइं। जलयरपक्खिचउप्पयउरभुयपरिसप्पजीवाणं ॥ २ ॥ पणुवीसं छव्वीसं च सयसहस्साइं नारयसुराणं। बारस य सयसहस्सा कुलकोडीणं मणुस्साणं ॥ ३ ॥ एगा कोडाकोडी सत्ताणउतिं च सयसहस्साइं। पन्नासं च सहस्सा कुलकोडीणं मुणेयव्वा ॥४॥ अङ्कतोऽपि १९७५००००००००० सकलकुलसङ्ग्रहोऽयं बोद्धव्य इति॥ उक्ता प्ररूपणा, तदनन्तरं लक्षणद्वारमाह–

योनि-कुल-१५ कोटयः

दंसणनाणचरित्ते चरियाचरिए अ दाणलाभे अ। उवभोगभोगवीरिय इंदियविसए य लद्धी य ॥१५३॥

२१

---

१ पृथ्व्युदकाग्निमारुतप्रत्येकनिगोदजीवयोनीनाम्। सप्त सप्त सप्त सप्त दश चतुर्दश च लक्षाः ॥१॥ विकलेन्द्रियेषु द्वे द्वे चतस्रश्चतस्रश्च नारकसुरयोः। तिरश्चां भवन्ति चतस्रश्चतुर्दश मनुष्याणां लक्षाः ॥२॥ २ कुलकोटिशतसहस्राणि द्वात्रिंशत् अष्टौ नव च पञ्चविंशतिः। एकेन्द्रियद्वित्रीन्द्रियचतुरिन्द्रियहरितकायानाम् ॥१॥ अर्धत्रयोदश द्वादश दश दश नव चैव कोटीलक्षाः। जलचरपक्षिचतुष्पदोरोभुजपरिसर्पजीवानाम् ॥२॥ पञ्चविंशतिः षड्विंशतिश्च शतसहस्राणि नारकसुरयोः। द्वादश च शतसहस्राणि कुलकोटीनां मनुष्याणाम् ॥ ३ ॥ एका कोटीकोटी सप्तनवतिश्च शतसहस्राणि। पञ्चाशत् सहस्राणि कुलकोटीनां मुणितव्यानि ॥ ४ ॥ ३ सत्तट्ठ य नव य अट्ठवीस च। बेइंदियतेइंदिय. प्र.

उवओगजोगअज्झवसाणे वीसुं च लद्धी ओदइया(णं उदया)। अट्ठविहोदय लेसा सन्नुस्सासे कसाए अ ॥१५७॥

'दर्शनं' सामान्योपलब्धिरूपं चक्षुरचक्षुरवधिकेवलाख्यं, मत्यादीनि ज्ञानानि स्वपरपरिच्छेदिनो जीवस्य परिणामाः ज्ञानावरणविगमव्यक्तास्तत्त्वार्थपरिच्छेदाः, सामायिकच्छेदोपस्थाप्यपरिहारविशुद्धिसूक्ष्मसम्पराययथाख्यातानि चारित्रं, चारित्राचारित्रं देशविरतिः स्थूलप्राणातिपातादिनिवृत्तिलक्षणं श्रावकाणां, तथा दानलाभभोगोपभोगवीर्यश्रोत्रचक्षुर्घ्राणरसनस्पर्शनाख्याः दश लब्धयः जीवद्रव्याव्यभिचारिण्यो लक्षणं भवन्ति,तथोपयोगः–साकारोऽनाकारश्चाष्टचतुर्भेदः, योगो मनोवाक्कायाख्यस्त्रिधा, अध्यवसायाश्चानेकविधाः सूक्ष्माः मनःपरिणामसमुत्थाः, विष्वग्–पृथग् लब्धीनामुदयाः–प्रादुर्भावाः क्षीरमध्वास्रवादयः, ज्ञानावरणाद्यन्तरायावसानकर्माष्टकस्य स्वशक्तिपरिणाम उदयः, लेश्याः–कृष्णादिभेदा अशुभाः शुभाश्च कषाययोगपरिणामविशेषसमुत्थाः, संज्ञास्त्वाहारभयपरिग्रहमैथुनाख्याः, अथवा दशभेदाः अनन्तरोक्ताश्चतस्रः क्रोधाद्याश्च चतस्रस्तथौघसंज्ञा लोकसंज्ञा च, उच्छ्वासनिःश्वासौ प्राणापानौ, कषायाः कषः-संसारस्तस्यायाः क्रोधादयोऽनन्तानुबन्ध्यादिभेदात् षोडशविधाः। एतानि गाथाद्वयोपन्यस्तानि द्वीन्द्रियादीनां लक्षणानि यथासम्भवमवगन्तव्यानीति, न चैवंविधलक्षणकलापसमुच्चयो घटादिष्वस्ति, तस्मात्तत्राचैतन्यमध्यवस्यन्ति विद्वांसः॥ अभिहितलक्षणकलापोपसञ्जिहीर्षया तथा परिमाणप्रतिपादनार्थं गाथामाह—

लक्खणमेवं चेव उ पयरस्स असंखभागमित्ता उ। निक्खमणे य पवेसे एगाईयावि एमेव ॥१५८॥

तुशब्दः पर्याप्तिवचनः, द्वीन्द्रियादिजीवानां लक्षणं–लिङ्गमेतावदेव दर्शनादि परिपूर्णं, नातोऽन्यदधिकमस्तीति। परिमाणं पुनः क्षेत्रतः संवर्त्तितलोकप्रतरासङ्ख्येयभागवर्त्तिप्रदेशराशिपरिमाणास्त्रसकायपर्याप्तकाः, एते च बादरतेजस्कायपर्याप्तकेभ्योऽसङ्ख्येयगुणाः,

त्रसानां लक्षणं

५

१०

त्रसकायपर्याप्तकेभ्यस्त्रसकायिकापर्याप्तकाः असङ्ख्येयगुणाः, तथा कालतः प्रत्युत्पन्नत्रसकायिकाः सागरोपमलक्षपृथक्त्वसमयराशिपरिमाणा जघन्यपदे, उत्कृष्टपदेऽपि सागरोपमलक्षपृथक्त्वपरिमाणा एवेति, तथा चागमः—"पडुप्पन्नतसकाइया केवतिकालस्स निल्लेवा सिया ?, गोयमा ! जहन्नपए सागरोवमसयसहस्सपुहुत्तस्स उक्कोसपदेऽवि सागरोवमसयसहस्सपुहुत्तस्स" । उद्वर्त्तनोपपातौ गाथाशकलेनाभिदधाति—निष्क्रमणम्—उद्वर्त्तनं प्रवेशः—उपपातः जघन्येनैको द्वौ त्रयो वा, उत्कृष्टतस्तु 'एवमेवे'ति प्रतरस्यासङ्ख्येयभागप्रदेशपरिमाणा एवेत्यर्थः ॥ साम्प्रतमविरहितप्रवेशनिर्गमाभ्यां परिमाणविशेषमाह—

**निक्खमपवेसकालो समयाई इत्थ आवलीभागो । अंतोमुहुत्तऽविरहो उदहिसहस्साहिए दोन्नि ॥१५९॥ दारं ॥**



जघन्येन अविरहिता—संतता त्रसेषु उत्पत्तिर्निष्क्रमो वा जीवानामेकं समयं द्वौ त्रीन् वेत्यादि, उत्कृष्टेनात्रावलिकाऽसङ्ख्येयभागमात्रं कालं सततमेव निष्क्रमः प्रवेशो वा, एकजीवाङ्गीकरणेनाविरहश्चिन्त्यते गाथापश्चिमार्द्धेन—अविरहः सातत्येनावस्थानम्, एकजीवो हि त्रसभावेन जघन्यतोऽन्तर्मुहूर्तमासित्वा पुनः पृथिव्याद्येकेन्द्रियेषूत्पद्यते, प्रकर्षेणाधिकं सागरोपमसहस्रद्वयं च त्रसभावेनावतिष्ठते सन्ततमिति ॥ उक्तं प्रमाणद्वारं, साम्प्रतमुपभोगशस्त्रवेदनाद्वारत्रयप्रतिपादनायाह—

**मंसाई परिभोगो सत्थं सत्थाइयं अणेगविहं । सारीरमाणसा वेयणा य दुविहा बहुविहा य ॥१६०॥ दारं ॥**

मांसचर्मकेशरोमनखपिच्छदन्तस्नाय्वस्थिविषाणादिभिस्त्रसजीवसम्बन्धिभिरुपभोगो भवति, शस्त्रं पुनः 'शस्त्रादिक'मिति (शस्त्रं) खड्गतोमरक्षुरिकादि तदादिर्यस्य जलानलादेस्तच्छस्त्रादिकमनेकविधं—स्वकायपरकायोभयद्रव्यभावभेदभिन्नमनेकप्रकारं त्रसकायस्येति,

१ प्रत्युत्पन्नत्रसकायिकाः कियता कालेन निर्लेपाः स्युः ?, गौतम ! जघन्यपदे सागरोपमशतसहस्रपृथक्त्वेन उत्कृष्टपदेऽपि सागरोपमशतसहस्रपृथक्त्वेन ।

वेदना चात्र प्रसङ्गेनोच्यते, सा च शरीरसमुत्था मनःसमुत्था च द्विविधा यथासम्भवं, तत्राद्या शल्यशलाकादिभेदजनिता, इतरा प्रियविप्रयोगाप्रियसम्प्रयोगादिकृता, बहुविधा च ज्वरातीसारकासश्वासभगन्दरशिरोरोगशूलगुदकीलकादिसमुत्था तीव्रेति ॥ पुनरप्युपभोगप्रपञ्चाभिधित्सयाऽऽह—

मंससस केइ अट्ठा केई चम्मस्स केइ रोमाणं। पिच्छाणं पुच्छाणं दंताणऽट्ठा वहिज्जंति ॥१६१॥

केई वहंति अट्ठा केइ अणट्ठा पसंगदोसेणं। कम्मपसंगपसत्ता बंधंति वहंति मारंति ॥१६२॥

मांसार्थं मृगशूकरादयो वध्यन्ते, चर्मार्थं चित्रकादयः, रोमार्थं मूषिकादयः, पिच्छार्थं मयूरगृद्धकपिञ्जुरुदुकादयः, पुच्छार्थं चमर्यादयः, दन्तार्थं वारणवराहादयः, वध्यन्त इति सर्वत्र सम्बन्ध्यते इति ॥ तत्र केचन पूर्वोक्तप्रयोजनमुद्दिश्य घ्नन्ति, केचित्तु प्रयोजनमन्तरेणापि क्रीडया घ्नन्ति, तथा परे प्रसङ्गदोषात् मृगलक्षक्षिप्तेषुलेलुकादिना तदन्तरालव्यवस्थिता अनेके कपोतकपिञ्जलशुकसारिकादयो हन्यन्ते, तथा कर्म—कृष्याद्यनेकप्रकारं तस्य प्रसङ्गः—अनुष्ठानं तत्र प्रसक्ताः—तन्निष्ठाः सन्तस्त्रसकायिकान् बहून् बध्नन्ति रज्ज्वादिना, घ्नन्ति—कशलकुटादिभिः ताडयन्ति, मारयन्ति—प्राणैर्वियोजयन्तीति ॥ एवं विधानादिद्वारकलापमुपवर्ण्य सकलनिर्युक्त्यर्थोपसंहारायाह—

सेसाइं दाराइं ताइं जाइं हवंति पुढवीए। एवं तसकायंमी निज्जुत्ती कित्तिया एसा ॥१६३॥

उक्तव्यतिरिक्तानि शेषाणि द्वाराणि तान्येव वाच्यानि यानि पृथ्वीस्वरूपसमधिगमे निरूपितानि, अत एवमशेषद्वाराभिधानात्त्रसकाये निर्युक्तिः कीर्तितेषा सकला भवतीत्यवगन्तव्येति ॥ साम्प्रतं सूत्रानुगमेऽस्खलितादिगुणोपेतं सूत्रमुच्चारणीयं, तच्चेदम्—

त्रसोपभोगः

५

१०

प्र. आ. ६९

**से बेमि संतिमे तसा पाणा, तंजहा—अंडया पोयया जराउआ रसया संसेयया संमुच्छिमा उब्भियया उववाइया, एस संसारेत्ति पवुच्चई (सू. ४९)**



अस्य चानन्तरपरम्परादिसूत्रसम्बन्धः प्राग्वद्वाच्यः, सोऽहं ब्रवीमि येन मया भगवद्वदनारविन्दविनिसृतार्थजातावधारणात् यथावदुपलब्धं तत्त्वमिति, 'सन्ति' विद्यन्ते त्रसन्तीति त्रसाः—प्राणिनो द्वीन्द्रियादयः, ते च कियद्भेदाः किंप्रकाराश्चेति दर्शयति—'तद्यथे'ति वाक्योपन्यासार्थः, यदिवा 'तत्' प्रकारान्तरमर्थतो यथा भगवताऽभिहितं तथाऽहं भणामीति, अण्डाज्जाताः अण्डजाः—पक्षिगृहकोकिलादयः, पोता एव जायन्ते पोतजाः, 'अन्येष्वपि दृश्यते' (पा०३–२–१०१) इति जनेर्डप्रत्ययः, ते च हस्तिवल्गुलीचर्मजलूकादयः, जरायुवेष्टिता जायन्त इति जरायुजाः, पूर्ववत् डप्रत्ययः, गोमहिष्यजाविकमनुष्यादयः, रसाज्जाता रसजाः—तक्रारनालदधितीमनादिषु पायुकृम्याकृतयोऽतिसूक्ष्मा भवन्ति, संस्वेदाज्जाताः संस्वेदजाः—मत्कुणयूकाशतपदिकादयः, सम्मूर्छनाज्जाताः सम्मूर्छनजाः—शलभपिपीलिकामक्षिकाशालिकादयः, उद्भेदनमुद्भित्तो जाता उद्भिज्जाः, पृषोदरादित्वाद्दलोपः, पतङ्गखञ्जरीटपारीप्लवादयः, उपपाताज्जाता उपपातजाः, अथवा उपपाते भवा औपपातिकाः—देवा नारकाश्च, एवमष्टविधं जन्म यथासम्भवं संसारिणो नातिवर्तन्ते, एतदेव शास्त्रान्तरे त्रिविधमुपन्यस्तं "सम्मूर्छनगर्भोपपाता जन्म" ( तत्त्वार्थ० अ० २ सू० ३२ ) रसस्वेदजोद्भिज्जानां सम्मूर्छनजान्तःपातित्वात् अण्डजपोतजजरायुजानां गर्भजान्तःपातित्वात् देवनारकाणामौपपातिकान्तःपातित्वात् इति त्रिविधं जन्मेति, इह चाष्टविधं सोत्तरभेदत्वादिति । एवमेतस्मिन्नष्टविधे जन्मनि सर्वे त्रसजन्तवः संसारिणो निपतन्ति, नैतद्व्य-

तिरेकेणान्ये सन्ति, एते चाष्टविधयोनिभाजोऽपि सर्वलोकप्रतीता बालाङ्गनादिजनप्रत्यक्षप्रमाणसमधिगम्याः, 'सन्ति च' अनेन शब्देन त्रैकालिकमस्तित्वं प्रतिपाद्यते त्रसानां, न कदाचिदेतैर्विरहितः संसारः सम्भवतीति, एतदेव दर्शयति– एस संसारोत्ति पवुच्चति' एषः–अण्डजादिप्राणिकलापः संसारः प्रोच्यते, नातोऽन्यस्त्रसानामुत्पत्तिप्रकारोऽस्तीत्युक्तं भवति ॥ कस्य पुनरत्राष्टविधभूतग्रामे उत्पत्तिर्भवतीत्याह—

मंदस्सावियाणओ (सू. ५०)

मन्दो द्विधा–द्रव्यभावभेदात्, तत्र द्रव्यमन्दोऽतिस्थूलोऽतिकृशो वा, भावमन्दोऽप्यनुपचितबुद्धिर्बालः कुशास्त्रवासितबुद्धिर्वा, अयमपि सद्बुद्धेरभावाद्बाल एव, इह भावमन्देनाधिकारः, 'मन्दस्से'ति बालस्याविशिष्टबुद्धेः अत एव अविजानतो–हिताहितप्राप्तिपरिहारशून्यमनसः इत्येषोऽनन्तरोक्तः संसारो भवतीति ॥ यद्येवं ततः किमित्याह—

प्र. आ. ७०

निज्झाइत्ता पडिलेहित्ता पत्तेयं परिनिव्वाणं सव्वेसिं पाणाणं सव्वेसिं भूयाणं सव्वेसिं जीवाणं सव्वेसिं सत्ताणं अस्सायं अपरिनिव्वाणं महब्भयं दुक्खंति बेमि, तसंति पाणा पदिसो दिसासु य (सू. ५१)

एतमिमं त्रसकायमागोपालाङ्गनादिप्रसिद्धं निश्चयेन ध्यात्वा निर्ध्याय, चिन्तयित्वेत्यर्थः, क्त्वाप्रत्ययस्योत्तरक्रियापेक्षत्वाद् ब्रवी-



५

१०

मीत्युत्तरक्रिया सर्व्वत्र योजनीयेति। पूर्व्वं च मनसाऽऽलोच्य ततः प्रत्युपेक्षणं भवतीति दर्शयति–'पडिलेहित्त'त्ति प्रत्युपेक्ष्य–दृष्ट्वा, यथावदुपलभ्येत्यर्थः, किं तदिति दर्शयति–'प्रत्येक'मित्येकमेकं त्रसकायं प्रति परिनिर्वाणं–सुखं, प्रत्येकसुखभाजः सर्वेऽपि प्राणिनः, नान्यदीयमन्य उपभुङ्क्ते सुखमित्यर्थः, एष च सर्व्वप्राणिधर्म्म इति दर्शयति–सर्वेषां प्राणिनां–द्वित्रिचतुरिन्द्रियाणां, तथा सर्व्वेषां–भूतानां–प्रत्येकसाधारणसूक्ष्मबादरपर्याप्तकापर्याप्तकतरूणामिति, तथा सर्व्वेषां जीवानां–गर्भव्युत्क्रान्तिकसम्मूर्च्छनजौपपातिकपञ्चेन्द्रियाणां, तथा सर्व्वेषां सत्त्वानां–पृथिव्याद्येकेन्द्रियाणामिति, इह च प्राणादिशब्दानां यद्यपि परमार्थतोऽभेदस्तथापि उक्तन्यायेन भेदो द्रष्टव्यः, उक्तं च—'प्राणा द्वित्रिचतुः प्रोक्ताः, भूतास्तु तरवः स्मृताः। जीवाः पञ्चेन्द्रियाः प्रोक्ताः, शेषाः सत्त्वा उदीरिताः ॥१॥" इति, यदिवा शब्दव्युत्पत्तिद्वारेण समभिरूढनयमतेन भेदो द्रष्टव्यः, तद्यथा–सततप्राणधारणात्प्राणाः कालत्रयभवनाद् भूताः त्रिकालजीवनात् जीवाः सदाऽस्तित्वात्सत्त्वा इति, तदेवं विचिन्त्य प्रत्युपेक्ष्य च यथा सर्वेषां जीवानां प्रत्येकं परिनिर्वाणं सुखं तथा प्रत्येकमसातम् अपरिनिर्वाणं महाभयं दुःखमहं ब्रवीमि, तत्र दुःखयतीति दुःखं, तद्विशिष्यते, किंविशिष्टम् ?–असातम्, असद्वेद्यकर्मांशविपाकजमित्यर्थः, तथा 'अपरिनिर्वाण'मिति समन्तात् सुखं परिनिर्वाणं न परिनिर्वाणमपरिनिर्वाणं, समन्तात् शरीरमनःपीडाकरमित्यर्थः, तथा 'महाभय'मिति महच्च तद्भयं च महाभयं, नातः परमन्यद् भयमस्तीति महाभयं, तथाहि–सर्व्वेऽपि शारीरान्मानसाच्च दुःखादुद्विजन्ते प्राणिन इति, इतिशब्द एवमर्थे, एवमहं ब्रवीमि सम्यगुपलब्धतत्त्वो यत्प्रागुक्तमिति। एतच्च ब्रवीमीत्याह—'तसंती'त्यादि, एवंविधेन च असातादिविशेषणविशिष्टेन दुःखेनाभिभूतास्त्रसन्ति–उद्विजन्ति, प्राणा इति प्राणिनः, कुतः पुनरुद्विजन्तीति दर्शयति–प्रगता दिक् प्रदिग्, विदिक् इत्यर्थः, ततः प्रदिशः सकाशादुद्विजन्ति, तथा प्राच्यादिषु च दिक्षु

सर्वे- साता १५ सातेक्षा

२०

व्यवस्थिता त्रस्यन्ति, एताश्च प्रज्ञापकविधिविभक्ता दिशोऽनुदिशश्च गृह्यन्ते, जीवव्यवस्थानश्रवणात्, ततश्चायमर्थः प्रतिपादितो भवति काका-न काचिद् दिग् अनुदिग्वा यस्यां न सन्ति त्रसाः त्रस्यन्ति वा न यस्यां स्थिताः कोशिकारकीटवत्, कोशिकारकीटो हि सर्वादिग्भ्योऽनुदिग्भ्यश्च बिभ्यदात्मसंरक्षणार्थं वेष्टनं करोति शरीरस्येति, भावदिगपि न काचित्तादृश्यस्ति यस्यां वर्त्तमानो जन्तुर्न त्रसेत्, शारीरमानसाभ्यां दुःखाभ्यां सर्वत्र नरकादिषु जंघन्यन्ते प्राणिनः अतस्त्रासपरिगतमनसः सर्वदाऽवगन्तव्याः ॥ एवं सर्वत्र दिक्ष्वनुदिक्षु च त्रसाः सन्तीति गृह्णीमः, दिग्विदिग्व्यवस्थितास्त्रसास्त्रस्यन्तीत्युक्तं, कुतः पुनस्त्रस्यन्ति ?-यस्मात् तदारम्भवद्भिस्ते व्यापाद्यन्ते, किं पुनः कारणं ? ते तानारम्भन्त इत्यत आह—

## तत्थ तत्थ पुढो पास आतुरा परितावंति, संति पाणा पुढो सिया ( सू. ५२ )

'तत्र तत्र' तेषु तेषु कारणेषु उत्पन्नेषु वक्ष्यमाणेषु अर्चाऽजिनशोणितादिषु च पृथग्-विभिन्नेषु प्रयोजनेषु, पश्येति शिष्यचोदना, किं तत्पश्येति दर्शयति—मांसभक्षणादिगृद्धा आतुराः-अस्वस्थमनसः परि-समन्तात्-तापयन्ति-पीडयन्ति नानाविधवेदनोत्पादनेन प्राणिव्यापादनेन वा तदारम्भिणस्तानिति, येन केनचिदारम्भेण प्राणिनां सन्तापनं भवतीति दर्शयन्नाह—'संती' त्यादि, 'सन्ति' विद्यन्ते प्रायः सर्वत्रैव प्राणाः-प्राणिनः 'पृथक्' विभिन्नाः द्वित्रिचतुःपञ्चेन्द्रियाः 'श्रिताः' पृथिव्यादिश्रिताः, एतच्च ज्ञात्वा निरवद्यानुष्ठायिना भवितव्यमित्यभिप्रायः ॥ अन्ये पुनरन्यथावादिनोऽन्यथाकारिण इति दर्शयन्नाह—

## लज्जमाणा पुढो पास अणगारा मोत्ति एगे पवयमाणा जमिणं विरूवरूवेहिं सत्थेहिं तस-





१०

कायसमारंभेण तसकायसत्थं समारभमाणा अण्णे अणेगरूवे पाणे विहिंसंति, तत्थ खलु भगवया परिण्णा पवेइया, इमस्स चेव जीवियस्स परिवंदणमाणणपूयणाए जाईमरणमोयणाए दुक्खपडिग्घायहेउं से सयमेव तसकायसत्थं समारभति अण्णेहिं वा तसकायसत्थं समारंभावेइ अण्णे वा तसकायसत्थं समारभमाणे समणुजाणइ, तं से अहियाए तं से अबोहीए, से तं संबुज्झमाणे आयाणीयं समुट्ठाय सोच्चा भगवओ अणगाराणं अंतिए इहमेगेसिं णायं भवति-एस खलु गंथे एस खलु मोहे एस खलु मारे एस खलु णरए, इच्चत्थं गड्डिए लोए जमिणं विरूवरूवेहिं सत्थेहिं तसकायसमारंभेण तसकायसत्थं समारंभमाणे अण्णे अणेगरूवे पाणे विहिंसति (सू० ५३)

पूर्ववत् व्याख्येयं, यावत् 'अण्णे अणेगरूवे पाणे विहिंसइ' त्ति ॥ यानि कानिचित्कारणान्युद्दिश्य त्रसवधः क्रियते तानि दर्शयितुमाह–

से बेमि अप्पेगे अच्चाए हणंति, अप्पेगे अजिणाए वहंति, अप्पेगे मंसाए वहंति, अप्पेगे

सोणियाए वहंति, एवं हिययाए पित्ताए वसाए पिच्छाए पुच्छाए वालाए सिंगाए विसाणाए दंताए दाढाए णहाए ण्हारुणीए अट्ठीए अट्ठिमिंजाए अट्ठाए अणट्ठाए, अप्पेगे हिंसिंसु मेत्ति वा वहंति, अप्पेगे हिंसंति मेत्ति वा वहंति, अप्पेगे हिंसिस्संति मेत्ति वा वहंति (सू० ५४)

त्रसघाते अर्चाद्यर्थाः

प्र. आ. ७२

तदहं ब्रवीमि यदर्थं प्राणिनस्तदारम्भप्रवृत्तैर्व्यापाद्यन्त इति, अप्येकेऽर्चायै घ्नन्ति, अपिरुत्तरापेक्षया समुच्चयार्थः, 'एके' केचन तदर्थित्वेनातुराः, अर्च्यतेऽमाराहारालङ्कारविधानैरित्यर्चा देहस्तदर्थं व्यापादयन्ति, तथाहि-लक्षणवत्पुरुषमक्षतमव्यङ्गं व्यापाद्य तच्छरीरेण विद्यामन्त्रसाधनानि कुर्वन्ति, उपयाचितं वा यच्छन्ति दुर्गादीनामग्रतः, अथवा विषं येन भक्षितं स हस्तिनं मारयित्वा तच्छरीरे प्रक्षिप्यते पश्चाद्विषं जीर्यति, तथा अजिनार्थं चित्रकव्याघ्रादीन् व्यापादयन्ति, एवं मांसशोणितहृदयपित्तवसापिच्छपुच्छवालशृङ्गविषाणदन्तदंष्ट्रानखस्नाय्वस्थ्यस्थिमिञ्जादिष्वपि वाच्यं, मांसार्थं सूकरादयः, त्रिशूलालेखार्थं शोणितं गृह्णन्ति, हृदयानि साधका गृहीत्वा मथ्नन्ति, पित्तार्थं मयूरादयः, वसार्थं व्याघ्रमकरवराहादयः, पिच्छार्थं मयूरगृध्रादयः, पुच्छार्थं रोझादयः, वालार्थं चमर्यादयः, शृङ्गार्थं रुरुखङ्गादयः, तत्किल शृङ्गं पवित्रमिति याज्ञिका गृह्णन्ति, विषाणार्थं हस्त्यादयः, दन्तार्थं शृगालादयः, तिमिरापहत्वात्तद्दन्तानां, दंष्ट्रार्थं वराहादयः, नखार्थं व्याघ्रादयः, स्नाय्वर्थं गोमहिष्यादयः, अस्थ्यर्थं शङ्खशुक्त्यादयः, अस्थिमिञ्जार्थं महिषवराहादयः, एवमेके यथोपदिष्टप्रयोजनकलापापेक्षया घ्नन्ति, अपरे तु कृकलासगृहकोकिलादीन् विना प्रयोजनेन व्यापादयन्ति,

५

१०

१ विषाणार्थं शृगालादयः दन्तार्थं हस्त्यादयः इति प्र०, परं विषाणं तु, शृङ्गे रोझेभदन्तयोः' इत्यनेकार्थवचनादयमसुन्दर

अन्ये पुनः 'हिंसिंसु मे'त्ति हिंसितवानेषोऽसत्स्वजनान् सिंहः सर्पोऽरिर्वाऽतो घ्नन्ति, मम वा पीडां कृतवन्त इत्यतो हन्ति, तथा अन्ये वर्त्तमानकाल एव हिनस्ति अस्मान् सिंहोऽन्यो वेति घ्नन्ति, तथाऽन्येऽस्मानयं हिंसिष्यतीत्यनागतमेव सर्पादिकं व्यापादयन्ति ॥ एवमनेकप्रयोजनोपन्यासेन हननं त्रसविषयं प्रदर्श्य उद्देशकार्थमुपसञ्जिहीर्षुराह—

एत्थ सत्थं समारभमाणस्स इच्चेते आरंभा अपरिण्णाया भवंति, एत्थ सत्थं असमारभमाणस्स इच्चेते आरंभा परिण्णाया भवन्ति, तं परिण्णाय मेहावी णेव सयं तसकायसत्थं समारंभेज्जा णेवऽण्णेहिं तसकायसत्थं समारंभावेज्जा णेवऽण्णे तसकायसत्थं समारंभंते समणुजाणेज्जा, जस्सेते तसकायसमारंभा परिण्णाया भवंति से हु मुणी परिण्णायकम्मे (सू. ५५)-त्तिबेमि ॥ इति षष्ठ उद्देशकः ॥

प्राग्वद्व्याख्येयं, यावत् स एव मुनिस्त्रसकायसमारम्भविरतत्वात् परिज्ञातकर्म्मत्वात् प्रत्याख्यातपापकर्म्मत्वादिति ब्रवीमि भगवतः त्रिलोकबन्धोः परमकेवलालोकसाक्षात्कृतसकलभुवनप्रपञ्चस्योपदेशादिति षष्ठोद्देशकः समाप्तः ॥

उक्तः षष्ठोद्देशकः, साम्प्रतं सप्तमः समारभ्यते, अस्य चायमभिसम्बन्धः—अभिनवधर्म्मणां दुःश्रद्धानत्वादल्पपरिभोगत्वादुत्क्रमायातस्योक्तशेषस्य वायोः स्वरूपनिरूपणार्थमिदमुपक्रम्यते, तदनेन सम्बन्धेनायातस्यास्योद्देशकस्योपक्रमादीनि चत्वार्यनुयोगद्वा-



१५

२०

राणि वाच्यानि यावन्नामनिष्पन्ने निक्षेपे वायूद्देशक इति, तत्र वायोः स्वरूपनिरूपणाय कतिचिद्द्वारातिदेशगर्भां निर्युक्तिकृद् गाथामाह–

वाउस्सऽवि दाराइं ताइं जाइं हवंति पुढवीए। नाणत्ती उ विहाणे परिमाणुवभोगसत्थे य ॥१६४॥

वातीति वायुः तस्य वायोरपि तान्येव द्वाराणि यानि पृथिव्यां प्रतिपादितानि, नानात्वं–भेदः, तच्च विधानपरिमाणोपभोगशस्त्रेषु, चशब्दाल्लक्षणे च द्रष्टव्यमिति ॥ तत्र विधानप्रतिपादनायाह—

दुविहा उ वाउजीवा सुहुमा तह बायरा उ लोगंमि। सुहुमा य सव्वलोए पंचेव य बायरविहाणा ॥१६५॥

वायुरेव जीवा वायुजीवाः, ते च द्विविधाः–सूक्ष्मबादरनामकर्मोदयात् सूक्ष्मा बादराश्च, तत्र सूक्ष्माः सकललोकव्यापितया अप्रतिष्ठन्ते, दत्तकपाटसकलवातायनद्वारगेहान्तर्धूमवत् व्याप्त्या स्थिताः, बादरभेदास्तु पञ्चैवानन्तरगाथया वक्ष्यमाणा इति ॥ बादरभेदप्रतिपादनायाह—

उक्कलिया मंडलिया गुंजा घणवाय सुद्धवाया य। बायरवाउविहाणा पंचविहा वण्णिया एए ॥१६६॥

स्थित्वा स्थित्वोत्कलिकाभिर्यो वाति स उत्कलिकावातः, मण्डलिकावातस्तु वातोलीरूपः, गुञ्जा–भम्भा तद्वत् गुञ्जन् यो वाति स गुञ्जावातः, घनवातः–अत्यन्तघनः पृथिव्याद्याधारतया व्यवस्थितो हिमपटलकल्पो, मन्दास्तिमितः शीतकालादिषु शुद्धवातः, ये त्वन्ये प्रज्ञापनादौ प्राच्यादिवाता अभिहितास्तेषामेष्वेव यथायोगमन्तर्भावो द्रष्टव्य इति, एवमित्येते बादरवायुविधानानि–भेदाः 'पञ्चविधाः' पञ्चप्रकारा व्यावर्णिता इति ॥ लक्षणद्वारामभिधित्सयाऽऽह—

जह देवस्स सरीरं अंतद्धाणं व अंजणाईसुं। एओवम आएसो वाएऽसंतेऽवि रूवंमि ॥१६७॥





५

१०

यथा देवस्य शरीरं चक्षुषाऽनुपलभ्यमानमपि विद्यते चेतनावच्चाध्यवसीयते, देवाः स्वशक्तिप्रभावात् तथाभूतं रूपं कुर्वन्ति यच्चक्षुषा नोपलभ्यते, न चैतद्वक्तुं शक्यते–नास्ति अचेतनं चेति, तद्वद् वायुरपि चक्षुषो विषयो न भवति, अस्ति च चित्तवांश्चेति, यथा वाऽन्तर्द्धानमञ्जनविद्यामन्त्रैर्भवति मनुष्याणां, न च नास्तित्वमचेतनत्वं चेति, एतदुपमानेन वायावपि भवति 'आदेशो' व्यपदेशोऽसत्यपि रूप इति, अत्र चासच्छब्दो नाभाववचनः, किन्त्वसद्रूपं वायोरिति चक्षुर्ग्राह्यं तद्रूपं न भवति, सूक्ष्मपरिणामात्, परमाणोरिव, रूपरसगंधस्पर्शात्मकश्च वायुरिष्यते, न यथाऽन्येषां वायुः स्पर्शवानेवेति, प्रयोगार्थश्च गाथया प्रदर्शितः, प्रयोगश्चायं–चेतनावान् वायुः, अपरप्रेरिततिर्यगनियमितगतिमत्त्वात्, गवाश्वादिवत्, तिर्यगेव गमननियमाभावात् अनियमितविशेषणोपादानाच्च परमाणुनाऽनैकान्तिकासंभवः, तस्य नियमितगतिमत्त्वात्, जीवपुद्गलयोः 'अनुश्रेणि गतिः' (तत्त्वा० अ० २ सू० २७) रिति वचनात्, एवमेष वायुः–घनतनुवातादिभेदोऽशस्त्रोपहतश्चेतनावानवगन्तव्य इति ॥ परिमाणद्वारमाह—

**जे बायरपज्जत्ता पयरस्स असंखभागमित्ता ते । सेसा तिन्निवि रासी वीसुं लोगा असंखिज्जा ॥१६८॥ (दारं)**

ये बादरपर्याप्तका वायवस्ते संवर्तितलोकप्रतरासङ्ख्येयभागवर्त्तिप्रदेशराशिपरिमाणाः, शेषास्त्रयोऽपि राशयो विष्वक्–पृथगसङ्ख्येयलोकाकाशप्रदेशपरिमाणा भवन्ति, विशेषश्चायमत्रावगन्तव्यः–बादराप्कायपर्याप्तकेभ्यो बादरवायुपर्याप्तका असङ्ख्येयगुणाः बादराप्कायापर्याप्तकेभ्यो बादरवायुकायापर्याप्तका असङ्ख्येयगुणाः सूक्ष्माप्कायापर्याप्तकेभ्यः सूक्ष्मवाय्वपर्याप्तका विशेषाधिकाः सूक्ष्माप्कायपर्याप्तकेभ्यः सूक्ष्मवायुपर्याप्तका विशेषाधिकाः ॥ उपभोगद्वारमाह—

**वियणधमणाभिधारण उस्सिंचणफुसणआणुपाणू अ । बायरवाउकाए उवभोगगुणा मणुस्साणं ॥१६९॥**

व्यजनभस्त्राध्माताभिधारणोत्सिश्चनफूत्कारप्राणापानादिभिर्बादरवायुक्रायेन उपभोग एव गुण उपभोगगुणो मनुष्याणामिति ॥ शस्त्रद्वाराभिधित्सयाऽऽह, तत्र शस्त्रं द्रव्यभावभेदाद्द्विविधं, द्रव्यशस्त्राभिवित्सयाऽऽह—

**विअणे अ तालवंटे सुप्पसियपत्त चेलकण्णे य । अभिधारणा य बाहिं गंधग्गी वाउ सत्थाइं ॥१७०॥**

व्यजनं-तालवृन्तं शूर्पसितपत्रचेलकर्णादयः द्रव्यशस्त्रमिति, तत्र सितमिति चामर, प्रस्विन्नो यद् बहिरवतिष्ठते वातागमनमार्गे साऽभिधारणा, तथा गन्धाः चन्दनोशीरादीनां, अग्निर्ज्वाला प्रतापश्च, तथा प्रतिपक्षवातश्च शीतोष्णादिकः, प्रतिपक्षवायुग्रहणेन स्वका-यादिशस्त्रं सूचितमिति, एवं भावशस्त्रमपि दुष्प्रणिहितमनोवाक्कायलक्षणमवगन्तव्यमिति ॥ अधुना सकलनिर्युक्त्यर्थोपसञ्जिहीर्षुराह—

**सेसाइं दाराइं ताइं जाइं हवंति पुढवीए । एवं वाउद्देसे निज्जुत्ती कित्तिया एसा ॥१७१॥**

५

'शेषाणि' उक्तव्यतिरिक्तानि तान्येव द्वाराणि पृथिवीसमधिगमे यान्यभिहितानीति, एवं सकलद्वारकलापव्यावर्णनाद् वायुका-योद्देशके निर्युक्तिः कीर्तितेत्यवगन्तव्येति ॥ गतो नामनिष्पन्नो निक्षेपः, साम्प्रतं सूत्रानुगमेऽस्खलितादिगुणोपेतं सूत्रमुच्चारणीयं, तच्चेदम्-'पहू एजस्स दुगुंछणाए' त्ति, अस्य चायमभिसम्बन्धः—इहानन्तरोद्देशके पर्यन्तसूत्रे त्रसकायपरिज्ञानं तदारम्भवर्जनं च मुनित्वकारणमभिहितम्, इहापि तदेव द्वयं वायुकायविषयं मुनित्वकारणमेवोच्यते, तथा परम्परसूत्रसम्बन्धः 'इहमेगेसिं णो णायं भवइ' त्ति, किं न तत्र ज्ञातं भवति ?, 'पहू एजस्स दुगुंछणाए' त्ति, तथा आदिसूत्रसम्बन्धश्च 'सुयं मे आउसतेण' मित्यादि, किं तत् श्रुतं ?, यत्प्रागुपदिष्टं, तथैतच्च—

१०

**पहू एजस्स दुगुंछणाए ( सू. ५६ )**

'दुगुञ्छण'त्ति जुगुप्सा, प्रभवतीति प्रभुः-समर्थः योग्यो वा, कस्य वस्तुनः समर्थ इति ?, 'एजृ कम्पने' एजतीत्येजो-वायुः कम्पनशीलत्वात् तस्यैजस्य जुगुप्सा-निन्दा तदासेवनपरिहारो निवृत्तिरितियावत् तस्यां-तद्विषये प्रभुर्भवति, वायुकायसमारम्भनिवृत्तौ शक्तो भवतीतियावत्, पाठान्तरं वा 'पहू य एगस्स दुगुंछणाए' उद्रेकावस्थावर्त्तिनैकेन गुणेन स्पर्शाख्येनोपलक्षित इत्येको-वायुस्तस्यैकस्य एकगुणोपलक्षितस्य वायोर्जुगुप्सायां प्रभुः, चशब्दात् श्रद्धाने च प्रभुर्भवतीति, अर्थात् यदि श्रद्धाय जीवतया जुगुप्सते ततः ॥ योऽसौ वायुकायसमारम्भनिवृत्तौ प्रभुरुक्तस्तं दर्शयति—

**आयंकदंसी अहियंति णच्चा, जे अज्झत्थं जाणइ से बहिया जाणइ, जे बहिया जाणइ से अज्झत्थं जाणइ, एयं तुलमन्नेसिं (सू. ५७)**

'तकि कृच्छ्रजीवने' इत्यातङ्कनमातङ्कः-कृच्छ्रजीवनं दुःखं, तच्च द्विविधं-शारीरं मानसं च, तत्राद्यं कण्टकक्षारशस्त्रगण्डलूतादिसमुत्थं, मानसं प्रियविप्रयोगाप्रियसम्प्रयोगेप्सितालाभदारिद्र्यदौर्मनस्यादिकृतम्, एतदुभयमातङ्कः, एनमातङ्कं पश्यति तच्छीलश्चेत्यातङ्कदर्शी, अवश्यमेतदुभयमपि दुःखमापतति सत्यनिवृत्तवायुकायसमारम्भे, ततश्चैतद्वायुकायसमारम्भणमातङ्कहेतुभूतमहितमिति ज्ञात्वैतस्मान्निवर्त्तने प्रभुर्भवतीति । यदिवाऽऽतङ्को द्वेधा-द्रव्यभावभेदात्, तत्र द्रव्यातङ्के इदमुदाहरणम्—जंबुद्दीवे दीवे भरहे वासंमि अत्थि सुपसिद्धं । बहुणयरगुणसमिद्धं रायगिहं णाम णयरंति ॥१॥ तत्थासि गरुयदरियारिमद्दणो भुयणनिग्गयप-







१ •सत्यनिवृत्त० प्र० अत्र अपीति सम्बोधनऽवधारणे वा । २ जम्बूद्वीपे द्वीपे भरते वर्षेऽस्ति सुप्रसिद्धम् । बहुनगरगुणसमृद्धं राजगृहं नाम नगरमिति ॥१॥ तत्रासीद् गुरुदृप्तारिमर्दनो भुवननिर्गतप्रतापः । अभिगतजीवाजीवो राजा नाम्ना जितशत्रुः ॥ ॥

न. आ. ७५

यावो । अभिगयजीवाजीवो राया णामेण जियसत्तू ॥२॥ अणवरयगरुयसंवेगभाविओ धम्मघोसपामूले। सो अन्नया कयाई पमाइणं पासए सेहं ॥ ३ ॥ चोइज्जंतमभिक्खं अवराहं तं पुणोऽवि कुणमाणं। तस्स हियट्ठं राया सेसाण य रक्खणट्ठाए॥ ४ ॥ आयरियाणुण्णाए आणावइ सो उ णियपुरिसेहिं। तिव्वुक्कडदव्वेहिं संचियपुव्वं तहिं खारं ॥५॥ पक्खित्तो जत्थ णरो णवरं गोदोहमेत्तकालेणं। णिज्जिण्णमंसरुहिरो अट्ठियसेसत्तणमुवेइ ॥ ६ ॥ दो ताहे पुव्वमए पुरिसे आणावए तहिं राया। एगं गिहत्थवेसं बीयं पासंडिणेवत्थं ॥ ७ ॥ पुव्वं चिय सिक्खविए ते पुरिसे पुच्छए तहिं राया। को अवराहो एसिं ? भणंति आणं अइक्कमइ ॥८॥ पासंडिओ जहुत्ते ण वट्टइ अत्तणो य आयारे। पक्खिवह खारमज्झे खित्ता गोदोहमेत्तस्स॥ ९ ॥ दट्ठूणऽट्ठियसेसे ते पुरिसे अलियरोसरत्तच्छो। सेहं आलोयंतो राया तो भणइ आयरियं ॥१०॥ तुम्हवि कोऽवि पमादी ? सासेमि य तंपि णत्थि भणइ गुरू। जइ होही तो साहे तुम्हे चिय तस्स जाणिहिह ॥११॥ सेहो गए णिवंमी भणई ते साहुणो उ ण पुणत्ति। होहं पमायसीलो तुम्हं सरणागओ धणियं ॥१२॥ जइ पुण होज पमाओ पुणो ममं सब्भावरहियस्स। तुम्ह गुणेहिं सुविहिय ! तो सावगरक्खसा मुंचे

५

१

१ अनवरतगुरुसंवेगभावितो धर्मघोषपादमूले। सोऽन्यदा कदाचित्प्रमादिनं पश्यति शिष्यम् ॥३॥ चोद्यमानमभीक्ष्णमपराधं त पुनरपि कुर्वन्तम्। तस्य हितार्थं राजा शेषाणां च रक्षणार्थाय ॥४॥ आचार्यानुज्ञया आनयति स तु निजपुरुषैः। तीव्रोत्कटद्रव्यैः संयुक्तपूर्वं तत्र क्षारम् ॥५॥ प्रक्षिप्तो यत्र नरो नवरं गोदोहमात्रकालेन। निर्जीर्णमांसशोणितोऽस्थिशेषत्वमुपैति ॥६॥ द्वौ तदा पूर्वमृतौ पुरुषावानयति तत्र राजा। एकं गृहस्थवेषं द्वितीयं पाषण्डिनेपथ्यम् ॥७॥ पूर्वमेव शिक्षितान् तान् पुरुषान् पृच्छति तत्र राजा। कोऽपराधोऽनयोः ? भणन्ति आज्ञामतिक्रामति ॥८॥ पाखण्डिको यथोक्ते न वर्त्तते आत्मनश्चाचारे। प्रक्षिपत क्षारमध्ये क्षिप्तौ गोदोहमात्रेण ॥९॥ दृष्ट्वाऽस्थ्यवशेषौ तौ पुरुषौ अलिकरोषरक्ताक्षः। शैक्षकमालोकयन् राजा ततो भणत्याचार्यम् ॥१०॥ युष्माकमपि कोऽपि प्रमादी ?, शासयामि न तमपि नास्ति भणति गुरुः। यदि भविष्यति तदा कथयिष्यामि यूयमेव तं ज्ञास्यथ ॥११॥ शैक्षको गते नृपे भणति तान् साधूंस्तु

॥१३॥ आयंकभओविग्गो ताहे सो णिच्चउज्जुओ जाओ। कोवियमती य समए रण्णा मरिसाविओ पच्छा ॥१४॥ दव्वायंकादंसी अप्पाणं सव्वहा णियत्तेइ। अहियारंभाउ मया जह सीसो धम्मघोसस्स ॥१५॥ भावातङ्कादर्शी तु नरकतिर्यङ्मनुष्यामरभवेषु प्रियविप्रयोगादिशारीरमानसातङ्कभीत्या न प्रवर्त्तते वायुसमारम्भे, अपि तु अहितमेतद्वायुसमारम्भणमिति मत्वा परिहरति, अतो य आतङ्कदर्शी भवति विमलविवेकभावात् स वायुसमारम्भस्य जुगुप्सायां प्रभुः, हिताहितप्राप्तिपरिहारानुष्ठानप्रवृत्तेः, तदन्यैवंविधपुरुषवदिति। वायुकायसमारम्भनिवृत्तेः कारणमाह—'जे अज्झत्थ'मित्यादि, आत्मानमधिकृत्य यद्वर्त्तते तदध्यात्मं, तच्च सुखदुःखादि, तद् यो जानाति-अवबुध्यते स्वरूपतोऽवगच्छतीत्यर्थः स बहिरपि प्राणिगणं वायुकायादिकं जानाति, यथैषोऽपि हि सुखाभिलाषी दुःखाच्चोद्विजते, यथा मयि दुःखमापतितमतिकटुकमसद्वेद्यकर्मोदयादशुभफलं स्वानुभवसिद्धं एवं यो वेत्ति स्वात्मनि सुखं च सद्वेद्यकर्मोदयात् शुभफलमेवं च योऽवगच्छति स खल्वध्यात्मं जानाति, एवं च योऽध्यात्मवेदी स बहिर्व्यवस्थितवायुकायादिप्राणिगणस्यापि नानाविधोपक्रमजनितं स्वपरसमुत्थं च शरीरमनःसमाश्रयं दुःखं सुखं वा वेत्ति, स्वप्रत्यक्षतया परत्राप्यनुमीयते, यस्य पुनः स्वात्मन्येव विज्ञानमेवंविधं न समस्ति कुतस्तस्य बहिर्व्यवस्थितवायुकायादिष्वपेक्षा?, यश्च बहिर्जानाति सोऽध्यात्मं यथावद्वेत्ति, इतरेतराव्यभिचारादिति। परात्मपरिज्ञानाच्च यद्विधेयं तद्दर्शयितुमाह—'एयं तुलमन्नेसि'मित्यादि, एतां तुलां

न पुनरिति। भविष्यामि प्रमादशीलो युष्माकं शरणागतोऽत्यर्थम् ॥१२॥ यदि पुनर्भवेत्प्रमादः पुनर्मम शठ (श्राद्ध) मात्रगृहितस्य। युष्माकं गुणैः सुविहिता सत श्रावकगुणसार सुखेयम् ॥१३॥ आतङ्कभयोद्विग्नस्तदा स नित्यमुद्युक्तो जातः। कोविदमतिश्च समये राज्ञा क्षमितः पश्चात् ॥१४॥ द्रव्यातङ्कादर्शी आत्मानं सर्वथा निवर्त्तयति। अहितारम्भात् सदा यथा शिष्यो धर्मघोषस्य ॥१५॥

प्र. आ
७६

१०
आतंकदर्शिता
अध्यात्मं

१५

२५

यथोक्तलक्षणाम् अन्वेषयेद्–गवेषयेदिति, का पुनरसौ तुला ?, यथाऽऽत्मानं सर्व्वथा सुखाभिलाषितया रक्षसि तथाऽपरमपि रक्ष, यथा परं तथाऽऽत्मानमित्येतां तुलां तुलितस्वपरसुखदुःखानुभवोऽन्वेषयेद्, एवं कुर्यादित्यर्थः, उक्तं च–"कट्ठेणं कंटएण व पाए विद्धस्स वेयणट्टस्स। जह होइ अनिव्वाणी सव्वत्थ जिएसु तं जाण ॥१॥" तथा "मरिष्यामीति यद् दुःखं, पुरुषस्योपजायते। शक्यस्तेनानुमानेन, परोऽपि परिरक्षितुम् ॥१॥" अतश्च यथाऽभिहितवतुलातुलितस्वपरा नराः स्थावरजङ्गमजन्तुसङ्घातरक्षणायैव प्रवर्त्तन्ते, कथमिति दर्शयति—

५

## इह संतिगया दविया णावकंखंति जीविउं ( सू. ५८ )

'इह' एतस्मिन् दयैकरसे जिनप्रवचने शमनं शान्तिः–उपशमः प्रशमसंवेगनिर्वेदानुकम्पाऽऽस्तिक्याभिव्यक्तिलक्षणसम्यग्दर्शनज्ञानचरणकलापः शान्तिरुच्यते, निराबाधमोक्षाख्यशान्तिप्राप्तिकारणत्वात्, तामेवंविधां शान्ति गताः–प्राप्ताः शान्तिगताः, शान्तौ वा स्थिताः शान्तिगताः, द्रविका नाम रागद्वेषविनिर्मुक्ताः, द्रवः–संयमः सप्तदशविधानः कर्म्मकाठिन्यद्रवणकारित्वाद्–विलयहेतुत्वात् स येषां विद्यते ते द्रविकाः, नावकाङ्क्षन्ति–न वाञ्छन्ति, नाभिलषन्तीत्यर्थः, किं नावकाङ्क्षन्ति ?–'जीवितुं' प्राणान् धारयितुं, केनोपायेन जीवितुं नाभिकाङ्क्षन्ति ?, वायुजीवोपमर्दनेनेत्यर्थः, शेषपृथिव्यादिजीवकायसंरक्षणं तु पूर्वोक्तमेव, समुदायार्थस्त्वयम्–इहैव जैने प्रवचने यः संयमस्तद्व्यवस्थिता एवोन्मूलितातितुङ्गरागद्वेषद्रुमाः परभूतोपमर्दनिष्पन्नसुखजीविकानिरभिलाषाः साधवः, नान्यत्र, एवंविधक्रियावबोधाभावादिति ॥ एवं व्यवस्थिते सति—

१०

१ काष्ठेन कण्टकेन वा पादे विद्धस्य वेदनार्त्तस्य। यथा भवत्यनिर्वाणी (असाता) सर्वत्र जीवेषु तां जानीहि ॥१॥ २ स्वपरान्तरा. प्र.

आ. १श्रु० अ० ७ उ०

लज्जमाणे पुढो पास अणगारा मोत्ति एगे पवयमाणा जमिणं विरूवरूवेहिं सत्थेहिं वाउकम्मसमारंभेणं वाउसत्थं समारंभमाणे अण्णे अणेगरूवे पाणे विहिंसति। तत्थ खलु भगवया परिण्णा पवेइया। इमस्स चेव जीवियस्स परिवंदणमाणणपूयणाए जाईमरणमोयणाए दुक्खपडिघायहेउं से सयमेव वाउसत्थं समारभति अण्णेहिं वा वाउसत्थं समारंभावेइ अण्णे वाउसत्थं समारंभंते समणुजाणति, तं से अहियाए तं से अबोहिए, से तं संबुज्झमाणे आयाणीयं समुट्ठाए सोच्चा भगवओ अणगाराणं अंतिए इहमेगेसिं णायं भवति—एस खलु गंथे एस खलु मोहे एस खलु मारे एस खलु णिरए, इच्चत्थं गड्ढिए लोए जमिणं विरूवरूवेहिं सत्थेहिं वाउकम्मसमारंभेणं वाउसत्थं समारंभमाणे अण्णे अणेगरूवे पाणे विहिंसति (सू. ५९) से बेमि संति संपाइमा पाणा आहच्च संपयंति य फरिसं च खलु पुट्ठा एगे संघायमावज्जंति, जे तत्थ संघायमावज्जंति ते तत्थ परियावज्जंति, जे तत्थ परियावज्जंति ते तत्थ उद्दायंति,

प्र. आ. ७७

वधाजीवित्वं १५ साध्वाभासाः साधवः

२०

॥७०॥ २३

एत्थ सत्थं समारभमाणस्स इच्चेते आरंभा अपरिण्णाया भवंति, एत्थ सत्थं असमारभमाणस्स इच्चेते आरंभा परिण्णाया भवंति, तं परिण्णाय मेहावी णेव सयं वाउसत्थं समारंभेज्जा णेवऽण्णेहिं वाउसत्थं समारंभावेज्जा णेवऽण्णे वाउसत्थं समारंभंते समणुजाणेज्जा, जस्सेते वाउसत्थसमारंभा परिण्णाया भवंति से हु मुणी परिण्णायकम्मेत्तिवेमि (सू. ६०)

पूर्ववन्नेयं ॥ सम्प्रति पड्जीवनिकायविषयवधकारिणामपायदिदर्शयिषया तन्निवृत्तिकारिणा च सम्पूर्णमुनिभावप्रदर्शनाय सूत्राणि प्रक्रम्यन्ते—

एत्थंपि जाणे उवादीयमाणा, जे आयारे ण रमंति. आरंभमाणा विणयं वयंति, छंदोवणीया अज्झोववण्णा, आरंभसत्ता पकरंति संगं (सू. ६१)

एतस्मिन्नपि—प्रस्तुते वायुकाये, अपिशब्दात् पृथिव्यादिषु च समाश्रितमारम्भ ये कुर्वन्ति ते उपादीयन्ते, कर्म्मणा बध्यन्त इत्यर्थः, एकस्मिन् जीवनिकाये वधप्रवृत्तः शेषनिकायवधजनितेन कर्मणा बध्यते, किमिति?—यतो न ह्येकजीवनिकायविषय आरम्भः शेषजीवनिकायोपमर्दमन्तरेण कर्तुं शक्यत इत्यतस्त्वमेवं जानीहि, श्रोतुरनेन परामर्शः, अत्र च द्वितीयार्थे प्रथमा, ततश्चैवमन्वयो लगयितव्यः—पृथिव्याद्यारम्भिणः शेषकायारम्भकर्मणा उपादीयमानान् जानीहि, के पुनः पृथिव्याद्यारम्भिणः शेषकायारम्भक-

५

१०

र्म्मणोपादीयन्ते ? इति, आह—'जे आयारे ण रमंति' ये ह्यविदितपरमार्था ज्ञानदर्शनचरणतपोवीर्याख्ये पञ्चप्रकाराचारे 'न रमन्ते' न धृतिं कुर्व्वन्ति, तदधृत्या च पृथिव्याद्यारम्भिणः, तान् कर्म्मभिरुपादीयमानान् जानीहि, के पुनराचारे न रमन्ते ?, शाक्यदिगम्बरपार्श्वस्थादयः, किमिति ?, यत आह—'आरंभमाणा विणयं वयंति' आरम्भमाणा अपि पृथिव्यादीन् जीवान् विनयं-संयममेव भापन्ते, कर्माष्टकविनयनाद्विनयः-संयमः, शाक्यादयो हि वयमपि विनयव्यवस्थिता इत्येवं भापन्ते, न च पृथिव्यादिजीवाभ्युपगमं कुर्व्वन्ति, तदभ्युगमे वा तदाश्रितारम्भित्वात् ज्ञानाद्याचारविकलत्वेन नष्टशीला इति । किं पुनः कारणं ?, येनैवं ते दुष्टशीला अपि विनयव्यवस्थितमात्मानं भापन्ते इत्यत आह-'छन्दोवणीया अज्झोववण्णा' छन्दः-स्वाभिप्रायः इच्छामात्रमनालोचितपूर्वापरं विपयाभिलापो वा, तेन छन्दसा उपनीताः-प्रापिता आरम्भमार्गमविनीता अपि विनयं भापन्ते, अधिकमत्यर्थमुपपन्ना तच्चित्तास्तदात्मकाः अध्युपपन्नाः, विपयपरिभोगायत्तजीविता इत्यर्थः, य एवं विपयाशाकर्पितचेतसस्ते किं कुर्युरित्याह-'आरंभसत्ता पकरंति संगं' आरम्भणमारम्भः-सावद्यानुष्ठानं तस्मिन् सक्ताः-तत्पराः प्रकर्षेण कुर्व्वन्ति, सज्यन्ते येन संसारे जीवाः स सङ्गः-अष्टविधं कर्म्म विपयसङ्गो वा तं सङ्गं प्रकुर्व्वन्ति, सङ्गाच्च पुनरपि संसारः, आजवंजवीभावरूपैः, एवंप्रकारमपायमवाप्नोति षड्जीवनिकायघातकारीति ॥ अथ यो निवृत्तस्तदारम्भात् स किंविशिष्टो भवतीत्यत आह—

से वसुमं सव्वसमण्णागयपण्णाणेणं अप्पाणेणं अकरणिज्जं पावं कम्मं णो अण्णेसिं, तं

१ छन्देनोपनीताः प्र. 'अभिप्रायवशौ छन्दौ' इत्यमरोक्तेः 'छन्दो पद्येऽभिप्राये च' इति सकारान्तेऽनेकार्थोक्ति र्नायमसाधुः. २ इतः प्राक् 'पुनः पुनरत्रैवोत्पत्तिः' इति प्र. न च पुस्त., ३ पुनः पुनस्तत्रैव राहः कर्मोत्पत्तिरूप..

प्र. आ. ७८

१५ विरताश्च

२०

२४

परिण्णाय मेहावी णेव सयं छज्जीवनिकायसत्थं समारंभेज्जा णेवऽण्णेहिं छज्जीवनिकायसत्थं समारंभावेज्जा णेवऽण्णे छज्जीवनिकायसत्थं समारंभंते समणुजाणेज्जा, जस्सेते छज्जीवनिकायसत्थसमारंभा परिण्णाया भवंति से हु मुणी परिण्णायकम्मेत्तिवेमि ॥ (सू. ६२) इति सप्तमोद्देशकः। इति प्रथममध्ययनम् ॥

'से' इति पृथिव्याद्युद्देशकाभिहितनिवृत्तिगुणभाक् षड्जीवनिकायहनननिवृत्तो 'वसुमान्' वसूनि द्रव्यभावभेदाद्द्विधा, द्रव्यवसूनि-मरकतेन्द्रनीलवज्रादीनि भाववसूनि-सम्यक्त्वादीनि तानि यस्य यस्मिन् वा सन्ति स वसुमान्, द्रव्यवानित्यर्थः, इह च भाववसुभिर्वसुमत्त्वमङ्गीक्रियते, प्रज्ञायन्ते यैस्तानि प्रज्ञानानि-यथावस्थितविषयग्राहीणि ज्ञानानि सर्वाणि समन्वागतानि प्रज्ञानानि यस्यात्मनः स सर्वसमन्वागतप्रज्ञानः-सर्वावबोधविशेषानुगतः सर्वेन्द्रियज्ञानैः पटुभिर्यथावस्थितविषयग्राहिभिरविपरीतैरनुगत इतियावत्, तेन सर्वसमन्वागतप्रज्ञानेनात्मना, अथवा सर्वेषु द्रव्यपर्यायेषु सम्यगनुगतं प्रज्ञानं यस्यात्मनः स सर्वसमन्वागतप्रज्ञान आत्मा, भगवद्वचनप्रामाण्यादेवमेतत् द्रव्यपर्यायजात नान्यथेति सामान्यविशेषपरिच्छेदान्निश्चिताशेषज्ञेयप्रपञ्चस्वरूपः सर्वसमन्वागतप्रज्ञान आत्मेत्युच्यते, अथवा—शुभाशुभफलमवलम्ब्य कलापपरिज्ञानान्नरकतिर्यग्नरामरमोक्षसुखस्वरूपपरिज्ञानाच्चापरितुष्यन्नैकान्तिकादिगुणयुक्ते संसारसुखे मोक्षानुष्ठानमाविष्कुर्वन् सर्वसमन्वागतप्रज्ञान आत्माऽभिधीयते, तेनैवंविधेनात्मना 'अकरणीयम्' अकर्त्तव्यमिहपरलोकविरुद्धत्वादकार्यमिति मत्वा नान्वेषयेत्, न तदुपादानाय यत्नं कुर्यादित्यर्थः, किं पुनः तदकरणीयं नान्वेषणीयमिति ?,

उच्यते, 'पापं कर्म' अधःपतनकारित्वात्पापं, क्रियत इति कर्म, तच्चाष्टादशविधं प्राणातिपातमृषावादादत्तादानमैथुनपरिग्रहक्रोधमान-मायालोभप्रेमद्वेषकलहाभ्याख्यानपैशून्यपरपरिवादरत्यरतिमायामृषामिथ्यादर्शनशल्याख्यमिति, एवमेतत् पापमष्टादशभेदं नान्वे-षयेत्-न कुर्यात् स्वयं, न चान्यं कारयेत्, न कुर्वाणमन्यमनुमोदेत। एतदेवाह-'तं परिण्णाय मेहावी'त्यादि 'तत्' पापमष्टादशप्रकारं परि:-समन्तात् ज्ञात्वा मेधावी-मर्यादावान् नैव स्वयं षड्जीवनिकायशस्त्रं स्वकायपरकायादिभेदं समारभेत नैवान्यैः समारम्भयेत् न चान्यान् समारभमाणान् समनुजानीयात्, एवं यस्यैते सुपरीक्ष्यकारिणः षड्जीवनिकायशस्त्रसमारम्भाः तद्विषयाः पापकर्म्म विशेषाः परिज्ञाता ज्ञपरिज्ञया प्रत्याख्यानपरिज्ञया च स एव मुनिः, प्रत्याख्यातकर्म्मत्वात्-प्रत्याख्याताशेषपापागमत्वात्, तद-न्यैवंविधगुरुत्पन्नदिति। इतिशब्दोऽध्ययनपरिसमाप्तिप्रदर्शनाय, ब्रवीमीति सुधर्मस्वाम्याह स्वमनीषिकाव्यावृत्तये, भगवतोऽपनीत-घनघातिकर्म्मचतुष्टयस्य समासादिताशेषपदार्थाविर्भावकदिव्यज्ञानस्य प्रणताशेषगीर्वाणाधिपतेश्चतुस्त्रिंशदतिशयसमन्वितस्य श्रीवर्द्ध-मानस्वामिन उपदेशात् सर्वमेतदाख्यातं यदतिक्रान्तं मयेति। उक्तः सूत्रानुगमः निक्षेपश्च सूत्रस्पर्शनिर्युक्तिः॥ २०

प्र. आ. ७९

सम्प्रति नया नैगमादयः, ते चान्यत्र सुविचारिताः, सङ्क्षेपतस्तु सर्वेऽपि एते द्वेधा भवन्ति, ज्ञाननयाश्चरणनयाश्च, तत्र ज्ञाननया ज्ञानमेव प्रधानं मोक्षसाधनमित्यध्यवसन्ति, हिताहितप्राप्तिपरिहारकारित्वात् ज्ञानस्य, तत्पूर्वकमकलदुःखप्रहाणाच्च ज्ञानमेव, न तु क्रिया, चरण-नयास्तु चरणस्य प्राधान्यमभिदधति, अन्वयव्यतिरेकसमधिगम्यत्वात्सकलपदार्थानां, तथाहि-सत्यपि ज्ञाने सकलवस्तुग्राहिणि समु-ल्लसिते न चरणमन्तरेण भवधारणीयकर्मोच्छेदः, तदनुच्छेदाच्च मोक्षालाभः, तस्मान्न ज्ञानं प्रधानं, चरणे पुनः सति सर्वमूलोत्तरगुणाख्ये घातिकर्मोच्छेदः, तदुच्छेदात् केवलावबोधप्राप्तिः, ततश्च यथाख्यातचारित्रवह्निज्वालाकलापप्रतापितसकलकर्म्मकन्दोच्छेदः, तदुच्छे-

दादव्याबाधसुखलक्षणमोक्षावाप्तिरिति, तस्माच्चरणं प्रधानमित्यध्यवसामः । अत्रोच्यते, उभयमप्येतन्मिथ्यादर्शनं, यत उक्तम्–"हयं नाणं कियाहीणं, हया अन्नाणओ किया। पासंतो पंगुलो दड्ढो, धावमाणो य अंधओ ॥१॥" तदेवं सर्वेऽपि नयाः परस्परनिरपेक्षा मिथ्यात्वरूपतया न सम्यग्भावमनुभवन्ति, समुदितास्तु यथावस्थितार्थप्रतिपादनेन सम्यक्त्वं भवन्ति, यत उक्तम्–"एवं सव्वेऽवि णया मिच्छादिट्ठी सपक्खपडिबद्धा । अण्णोण्णणिस्सिया पुण हवंति ते चेव सम्मत्तं॥ १ ॥" तस्मादुभयं परस्परसापेक्षं मोक्षप्राप्तये अलं, न प्रत्येकं ज्ञानं चरणं चेति निर्दोषः खल्वेष पक्ष इति व्यवस्थितं, तथा चोभयप्राधान्यदिदर्शयिषयाऽऽह–सव्वेसिंपि णयाणं बहुविधवत्तव्वयं णिसामेत्ता। तं सव्वणयविसुद्धं जं चरणगुणट्ठिओ साहू ॥ १ ॥ चरणं च गुणश्च चरणगुणौ तयोः स्थितश्चरणगुणस्थितः, गुणशब्दोपादानात् ज्ञानमेव परिगृह्यते, यतो न कदाचिदात्मनो गुणिनस्तेन ज्ञानाख्येन गुणेन वियोगोऽस्ति, ततोऽसौ सहभावी गुणः, अतो बहुविधवक्तव्यं-नयमार्गमवधार्यापि सङ्क्षेपात् ज्ञानचरणयोरेव स्वातन्त्र्यमिति निश्चयो विदुषां, न चाभिलषितप्राप्तिः केवलेन चरणेन, ज्ञानहीनत्वात्, अन्धगमिक्रियाप्रतिविशिष्टप्रदेशप्राप्तिवत्, न च ज्ञानमात्रेणाभीष्टप्राप्तिः, क्रियाहीनत्वात्, चक्षुर्ज्ञानसमन्वितपङ्गुपुरुषअर्धदग्धनगरमध्यावस्थितयथावस्थितदर्शिज्ञानवत्, तस्मादुभयं प्रधानं, नगरदाहनिर्गमे पङ्ग्वन्धसंयोगक्रियाज्ञानवत् ॥ एवमिदमाचाराङ्गसन्दोहभूतं प्रथमाध्ययनं षड्जीवनिकायस्वरूपरक्षणोपायगर्भमादिमध्यावसानेषु दयैकरसमेकान्तहिंसापरिहारि मुमुक्षुणा यदाऽधीतं भवति सूत्रतः शिक्षकेणार्थतश्चावधृतं भवति श्रद्धानसंवेगाभ्यां च यथावदात्मीकृतं भवति ततो-

ज्ञान-
क्रिया-
विचारः

५

१०

---

१ हतं ज्ञानं क्रियाहीनं हताऽज्ञानतः क्रिया। पश्यन् पङ्गुर्दग्धो धावंश्चान्धः ॥१॥ २ एवं सर्वेऽपि नया मिथ्यादृष्टयः स्वपक्षप्रतिबद्धाः। अन्योऽन्यनिश्रिताः पुनर्भवन्ति त एव सम्यक्त्वम् ॥१॥

चा. १ शस्त्र० अ० ७ उ० प्र. आ. ८०

ऽस्य महाव्रतारोपणमुपस्थापनं परीक्ष्य निशीथाद्यभिहितक्रमेण सचित्तपृथिवीमध्यगमनादिना श्रद्दधानस्य सर्वं यथाविधि कार्यम्। कः पुनरुपस्थापने विधिरिति ?, अत्रोच्यते, शोभनेषु तिथिकरणनक्षत्रमुहूर्त्तेषु द्रव्यक्षेत्रभावेषु च भगवतां प्रतिकृतीरभिवन्द्य प्रवर्द्धमानाभिः स्तुतिभिः, अथ पादपतितोत्थितः सूरिः सह शिक्षकेण महाव्रतारोपणप्रत्ययं कायोत्सर्गमुत्सार्यैकैकं महाव्रतमादित आरभ्य त्रिरुच्चारयेद् यावन्निशिभुक्तिविरतिरविकला त्रिरुच्चारिता, पश्चादिदं त्रिरुच्चरितव्यम्–'इच्चेइयाइं पंच महव्वयाइं राइभोयणवेरमण छट्ठाइं अत्तहियट्ठयाए उपसंपज्जित्ता णं विहरामि' पश्चाद्वन्दनकं दत्त्वोत्थितोऽभिधत्ते अवनताङ्गयष्टिः–'संदिशत किं भणामी'ति ?, सूरिः प्रत्याह–'वन्दित्वाऽभिधत्स्वे'त्येवमुक्तोऽभिवन्द्योत्थितो भणति–'युष्माभिर्मम महाव्रतान्यारोपितानि इच्छाम्यनुशिष्टि'मिति, आचार्योऽपि प्रणिगदति–'निस्तारकपारगो भवाचार्यगुणैर्वर्द्धस्व' वचनविरतिसमनन्तरं च सुरभिवासचूर्णमुष्टिं शिष्यस्य शिरसि किरति, पश्चाद्वन्दनकं दत्त्वा प्रदक्षिणीकरोत्याचार्यं नमस्कारमावर्त्तयन्, पुनरपि वन्दते, तथैव च करोति सकलक्रियानुष्ठानम्, एवं त्रिप्रदक्षिणीकृत्य विरमति शिष्यः, शेषाः साधवश्चास्य मूर्ध्नि युगपद्वासमुष्टिं विमुञ्चन्ति सुरभिपरिमलां यतिजनसुलभकेसराणि वा, पश्चात्कारितकायोत्सर्गः सूरिरभिदधाति–गणस्तव कोटिकः स्थानीयं कुलं वैराख्या शाखा अमुकाभिधान आचार्य उपाध्यायश्च, साध्व्याः प्रवर्त्तिनी तृतीयोद्देष्टव्या, यथाऽऽसन्नं चोपस्थाप्यमाना रत्नाधिका भवन्ति, पश्चादाचाम्लं निर्विकृतिकं वा स्वगच्छसन्ततिसमायातमाचरन्तीति। एवमेतदध्ययनमादिमध्यान्तकल्याणकलापयोगि भव्यजनतामनःसमाधानाधायि प्रियचित्रप्रयोगादिदुःखावर्त्तवहुलकषायझषादिकुलाकुलविषमसंसृतिसरित्तारणसमर्थममलदयैकरसमसकृदभ्यसितव्यं मुमुक्षुणेति ॥ आचार्यश्रीशीलाङ्कविरचिता शस्त्रपरिज्ञाध्ययनटीका समाप्तेति ( ग्रन्थाग्रं श्लोकाः २२२१ ) ॥

प्र. आ. ८१

उपस्थापना १५ २० २६



१ इत्येतानि पञ्च महाव्रतानि रात्रिभोजनविरमणषष्ठानि आत्महितार्थायोपसंपद्य विहरामि

## अथ लोकविजयाख्यं द्वितीयमध्ययनं।

नमः श्रीवर्द्धमानाय, वर्द्धमानाय पर्ययैः। उक्ताचारप्रपञ्चाय, निष्प्रपञ्चाय तायिने ॥१॥

शस्त्रपरिज्ञाविवरणमतिगहनमितीव किल धृतं पूज्यैः। श्रीगन्धहस्तिमिश्रैर्विवृणोमि ततोऽहमवशिष्टम् ॥२॥



उक्तं प्रथमाध्ययनं, साम्प्रतं द्वितीयमारभ्यते, अस्य चायमभिसम्बन्धः–इह हि मिथ्यात्वोपशमक्षयक्षयोपशमान्यतरावाप्तसम्यग्दर्शनज्ञानकार्यस्यात्यन्तिकैकान्तानाबाधपरमानन्दस्वतत्त्वसुखानावरणज्ञानदर्शनलक्षणलक्षितमोक्षकारणस्याश्रवनिरोधनिर्जरारूपस्य मूलोत्तरगुणभेदभिन्नस्य चारित्रस्यापराशेषव्रतधृतिकल्पनिष्पादितनिष्प्रत्यूहसकलप्राणिगणसङ्घट्टनपरितापनापद्रावणनिवृत्तिरूपस्य संसिद्धये मरणाभावप्रसङ्गादभूतगुणात्मधर्मज्ञानोपलब्धेर्बार्हस्पत्यमतनिरासेन सामान्यतो जीवास्तित्वं प्रतिपाद्य विशेषतश्च बौद्धादिमतनिरासेनैकेन्द्रियावनिजीवनानलपवनवनस्पतिभेदांश्च जीवान् प्रकटय्य यथाक्रमं समानजातीयाश्मलताद्युद्भेददर्शनादर्शोमांसाङ्कुरवत् अविकृतभूमिखननोपलब्धेर्मण्डूकवत् विशिष्टाहारोपचयापचयशरीराभिवृद्धिक्षयान्वयव्यतिरेकगतेरर्भकशरीरवत् अपरप्रेरिताप्रतिहतानियततिरश्चीनगमनाद्गवाश्वादिवत् सालक्तकनूपुरालङ्कारकामिनीचरणताडनविकाराधिगतेः कामुकवदित्यादिभिः प्रयोगैः तथोच्चैः शिर उद्घाट्य सूक्ष्मबादरद्वित्रिचतुष्पञ्चेन्द्रियसंज्ञीतरपर्याप्तकअपर्याप्तकभेदांश्च प्रदर्श्य शस्त्रं च स्वकायपरकायभेदभिन्नं तद्वधे बन्धं विरतिं च प्रतिपाद्य पुनरपि तदेव चारित्रं यथा सम्पूर्णभावमनुभवति तथाऽनेनाध्ययनेनोपदिश्यते, तथाहि—अधिगतशस्त्रपरिज्ञासूत्रार्थस्य तत्प्रतिपादितैकेन्द्रियपृथिवीकायादिश्रद्धानस्य सम्यक् तद्रक्षापरिणामवतः सर्वोपाधिशुद्धस्य तद्योग्यतयाऽऽरोपितप-

श्रमहानतभारस्य साधोर्यथारागादिकषायलोकस्य शब्दादिविषयलोकस्य वा विजयो भवति तथाऽनेनाध्ययनेन प्रतिपाद्यते। तथा च निर्युक्तिकारेणाध्ययनार्थाधिकारः शस्त्रपरिज्ञायां प्रागिरदेशि—"लोओ जह बज्झइ जह य तं विजहियव्वं"ति, इत्यनेन सम्बन्धेनायातस्यास्याध्ययनस्य चत्वार्यनुयोगद्वाराणि भवन्ति। तत्र सूत्रार्थकथनमनुयोगः, तस्य द्वाराणि-उपायाः, व्याख्याङ्गानीत्यर्थः, तानि चोपक्रमादीनि, तत्रोपक्रमो द्वेधा-शास्त्रानुगतः शास्त्रीयः, लोकानुगतो लौकिक इति, निक्षेपस्त्रिधा-ओघनामसूत्रालापकनिष्पन्नभेदात्, अनुगमो द्वेधा-सूत्रानुगमो निर्युक्त्यनुगमश्च, नया-नैगमादयः। तत्र शास्त्रीयोपक्रमान्तर्गतोऽर्थाधिकारो द्वेधा-अध्ययनार्थाधिकार उद्देशार्थाधिकारश्च, तत्राध्ययनार्थाधिकारोऽध्ययनसम्बन्धे शस्त्रपरिज्ञायां प्रागेव निरदेशि, उद्देशार्थाधिकारं तु स्वयमेव निर्युक्तिकारः प्रचिकटयिषुराह—

उद्देशार्थाधिकारः

सयणे१य अदढत्तं वीयगंमि २माणो अ अत्थसारो ३अ। भोगेसु ४लोगनिस्साइ ५लोगे अममिज्जया चेव६ ॥१७२॥

तत्र प्रथमोद्देशकार्थाधिकारः 'स्वजने' मातापित्रादिके अभिष्वङ्गोऽधिगतसूत्रार्थेन न कार्य इत्यध्याहारः, तथा च सूत्रम्—'माया मे पिया मे' इत्यादि १, 'अदढत्तं वीयगंमि'त्ति द्वितीय उद्देशके अदृढत्वं संयमे न कार्यमिति शेषः, विषयकषायादौ चादृढत्वं कार्यमिति, वक्ष्यति च—'अरइं आउट्टे मेहावी'२, तृतीय उद्देशके 'माणो अ अत्थसारो अ'त्ति जात्याद्युपेतेन साधुना कर्मवशाद्विचित्रतामवगम्य सर्वमदस्थानानां मानो न कार्यः, आह च—'के गोआवादी ? के माणावादी'त्यादि, अर्थसारस्य च निस्सारता वर्ण्यते, तथा च—'तिविहेण जाऽवि से तत्थ मत्ता अप्पा वा बहुगा वे'त्यादि ३, चतुर्थे तु 'भोगेसु'त्ति भोगेष्वभिष्वङ्गो न कार्य इति शेषः, यतो भोगिनामपायान् वक्ष्यति, सूत्रं च—'थीहि लोए पव्वहिए' ४, पञ्चमे तु 'लोगणिस्साए'त्ति त्यक्तस्वजनधन-

मानभोगेनापि साधुना संयमदेहप्रतिपालनाय सार्थारम्भप्रवृत्तलोकनिश्रया विहर्त्तव्यमिति शेषः, तथा च सूत्रम्-'समुट्ठिए अणगारे इत्यादि जाव परिव्वए' ५, षष्ठोद्देशके तु-'लोए अममिज्झया चेव' लोकनिश्रयाऽपि विहरता साधुना तस्मिन् लोके पूर्वापरसंस्तुतेऽसंस्तुते च न ममत्वं कार्यं, पङ्कजवत्तदाधारस्वभावानभिष्वङ्गिणा भाव्यमिति, तथा च सूत्रम्-'जे ममाईयमई जहाति से जहाति ममातियं' गाथातात्पर्यार्थः ॥ नामनिष्पन्ने तु निक्षेपे लोकविजय इति द्विपदं नाम, तत्र लोकविजययोर्निक्षेपः कार्यः, सूत्रालापकनिष्पन्ने च निक्षेपे यानि निक्षेपार्हाणि सूत्रपदानि तेषां च निक्षेपः कार्यः, सूत्रपदोपन्यस्तमूलशब्दस्य च कषायाभिधायकत्वात् कषायाश्च निक्षेप्तव्याः, तदेवं नामनिष्पन्नं भविष्यत्सूत्रालापकनिष्पन्ननिक्षेपोपक्षिप्तं सामर्थ्यायातं च यन्निक्षेप्तव्यं तन्निर्युक्तिकारो गाथया सम्पिण्ड्याऽऽचष्टे—

**लोगस्स य विजयस्स य गुणस्स मूलस्स तह य ठाणस्स। निक्खेवो कायव्वो जंमूलागं च संसारो ॥१७३॥**

कण्ठ्या, केवलं 'जंमूलागं च संसार' इति यन्मूलकः संसारस्तस्य च निक्षेपः कार्यः, तच्च मूलं कषायाः, यतः नारकतिर्यङ्नरामरगतिस्कन्धस्य गर्भनिषेककललार्बुदमांसपेश्यादिजन्मजरामरणशाखस्य दारिद्र्याद्यनेकव्यसनोपनिपातप्रगहनस्य प्रियविप्रयोगाप्रियसम्प्रयोगार्थनाशानेकव्याधिशतपुष्पोपचितस्य शारीरमानसोपचिततीव्रतरदुःखोपनिपातफलस्य संसारतरोर्मूलम्-आद्यं कारणं कषायाः, कषः-संसारस्तस्याऽऽया इतिकृत्वा ॥ तदेवं यान्यत्र नामनिष्पन्ने यानि यानि च सूत्रालापकनिष्पन्ने निक्षेप्तव्यपदानि सम्भवन्ति तानि निर्युक्तिकारः सुहृद्भूत्वा विवेकेनाऽऽचष्टे—

**लोगोत्ति य विजओत्ति य अज्झयणे लक्खणं तु निप्फण्णं। गुणमूलं ठाणंति य सुत्तालावे य निप्फण्णं ॥१७४॥**

कषायाः लोकादि निक्षेपाः

५

१०

कथ्या, तत्र 'यथोद्देशस्तथा निर्देश इति न्यायाल्लोकविजययोर्निक्षेपमाह—

**लोगस्स य निक्खेवो अट्ठविहो छव्विहो उ विजयस्स। भावे कसायलोगो अहिगारो तस्स विजएणं ॥१७५॥**

तत्र लोक्यत इति लोकः, 'लोकृ दर्शने' इत्यस्माद्धातोः 'अकर्तरि च कारके संज्ञायां (पा. ३ ३ १९)' मिति घञ्, स च धर्मा धर्मास्तिकायव्यवच्छिन्नमशेषद्रव्याधारं वैशाखस्थानस्थकटिन्यस्तकरयुग्मपुरुषोपलक्षितमाकाशखण्डं पञ्चास्तिकायात्मको वेति, तस्य निक्षेपोऽष्टधा-नामस्थापनाद्रव्यक्षेत्रकालभवभावपर्यवभेदात्, 'छव्विहो उ विजयस्स'त्ति विजयः अभिभवः पराभवः पराजय इति पर्यायाः, तस्य निक्षेपः षड्विधो वक्ष्यते, तत्राष्टप्रकारे लोके येनात्राधिकारस्तमाह—'भावे कसायलोगो'त्ति भावलोकेनात्राधिकारः, स च भावः षट्प्रकारः-औदयिकादिः, तत्राप्यौदयिकभावकषायलोकेनाधिकारः, तन्मूलत्वात् संसारस्य, यद्येवं ततः किमत आह-'अहिगारो तस्स विजएणं'ति अधिकारो-व्यापारः तस्य-औदयिकभावकषायलोकस्य 'विजयेन' पराजयेनेति गाथार्थः ॥ तत्र लोकोऽष्टधा निक्षेपार्थं प्रागुपादेशि विजयश्च षोढा, तन्निक्षेपार्थमाह—



**लोगो भणिओ दव्वं खित्तं कालो अ भावविजओ अ। भवलोग भावविजओ पगयं जह बज्झई लोगो ॥१७६॥**



तत्र लोकश्चतुर्विंशतिस्तवे विस्तरतोऽभिहित', ननु च कथं वाचोयुक्तिः? 'लोकश्चतुर्विंशतिस्तवेऽभिहित' इति, किमत्रानुपपन्नम्?, उच्यते, इह ह्यपूर्वकरणप्रक्रमाधिरूढक्षपकश्रेणिध्यानाग्निदग्धघातिकर्मेन्धनेनोत्पन्ननिरावरणज्ञानेन विपच्यमानतीर्थकरनामाविर्भूतचतुस्त्रिंशदतिशयोपेतेन श्रीवर्द्धमानस्वामिना हेयोपादेयार्थाविर्भावनाय सदेवमनुजायां परिषद्याचारार्थो बभाषे, गणधरैश्च महामतिभिरचिन्त्यशक्त्युपेतैर्गौतमादिभिः प्रवचनार्थमशेषासुमदुपकाराय स एवाचाराङ्गतया दृब्धे, आवश्यकान्तर्भूतश्चतुर्विंशति-

स्तवस्त्वारातीयकालभाविना भद्रबाहुस्वामिनाऽकारि, ततश्चायुक्तः पूर्वकालभाविन्याचाराङ्गे व्याख्यायमाने पश्चात्कालभाविना चतुर्विंशतिस्तवेनातिदेश इति कश्चित् सुकुमारमतिः, अत्राह–नैष दोषो, यतो भद्रबाहुस्वामिनाऽयमतिदेशोऽभ्यधायि, स च पूर्वमावश्यकनिर्युक्तिं विधाय पश्चादाचाराङ्गनिर्युक्तिं चक्रे, तथा चोक्तम्–"आवस्सयस्स दसकालियस्स तह उत्तरज्झमायारे" त्ति सूत्रम्। विजयस्य तु निक्षेपं नामस्थापने क्षुण्णत्वादनादृत्य द्रव्यादिकमाह–'दव्व'मित्यादिना, द्रव्यविजयो व्यतिरिक्तो द्रव्येण द्रव्यात् द्रव्ये वा विजयः कटुतिक्तकषायादिना श्लेष्मादेर्नृपतिमल्लादेर्वा, क्षेत्रविजयः षट्खण्डभरतादेः यस्मिन् वा क्षेत्रे विजयः प्ररूप्यते, कालविजय इति कालेन विजयो यथा षष्टिभिर्वर्षसहस्रैर्भरतेन जितं भरतं, कालस्य प्राधान्यात्, भृतककर्मणि वा मासोऽनेन जित इति, यस्मिन् वा काले विजयो व्याख्यायत इति, भावविजय औदयिकादेर्भावस्य भावान्तरेण औपशमिकादिना विजयः। तदेवं लोकविजययोः स्वरूपमुपदर्श्य प्रकृतोपयोग्याह–'भवे'त्यादि, अत्र हि भवलोकग्रहणेन भावलोक एवाभिहितः, छन्दोभङ्गभीत्या ह्रस्व एवोपादायि, तथा चाभाणि–"भावे कसायलोगो अहिगारो तस्स विजएणं"ति, तस्य औदयिकभावकषायलोकस्य औपशमिकादिभावलोकेन विजयो यत एतदत्र प्रकृतम्, इदमत्र हृदयम्–अष्टविधलोकषड्विधविजययोः प्राग्व्यावर्णितस्वरूपयोर्भावलोकभावविजयाभ्यामत्रोपयोग इति, यथा चाष्टप्रकारेण कर्मणा लोकः–प्राणिगणो बध्यते, बन्धस्योपलक्षणत्वाद् यथा च मुच्यत इत्येतदप्यत्राध्ययने प्रकृतमिति गाथार्थः॥ तेनैव भावलोकविजयेन किं फलमित्याह—

विजिओ कसायलोगो सेयं खु तओ नियत्तिउं होइ। कामनियत्तमई खलु संसारा मुच्चई खिप्पं॥१७७॥



५

१०

१ आवश्यकस्य दशकालिकस्य तथोत्तराध्ययनेष्वाचारे २ भिन्याया शताद् द्द इतिनियमेनैकस्याऽपि सन्सस्य बहुवचनेऽपि भावात् तद्विशेषण।

'विजितः' पराजितः, कोऽसौ ?—कषायलोकः औदयिकभावकषायलोक इतियावत्, विजितकषायलोकः सन् किमवाप्नोतीत्याह—संसारान्मुच्यते क्षिप्रम्, अतस्तस्मान्निवर्त्तितुं श्रेयः, खुर्वाक्यालङ्कारे अवधारणे वा, निवर्त्तितुं श्रेय एव, किं कषायलोकादेव निवृत्तः संसारान्मुच्यते आहोश्विदन्यस्मादपि पापोपादानहेतोरिति दर्शयति—'कामे'त्यादि गाथार्द्धं सुगमम्। गतो नामनिष्पन्नो निक्षेपः, साम्प्रतं सूत्रालापकनिष्पन्ननिक्षेपावसरः, स च सूत्रे सति भवति, तत्रास्खलितादिगुणोपेतं सूत्रानुगमे सूत्रमुच्चारयितव्यं, तच्चेदम्—'जे गुणे से मुलट्ठाणे जे मूलट्ठाणे से गुणे' इत्यादि ॥ अस्य च निक्षेपनिर्युक्त्यनुगमेन प्रतिपदं निक्षेपः क्रियते, तत्र गुणस्य पञ्चदशधा निक्षेपः—



दव्वे खित्ते काले फल पज्जव गणण करण अब्भासे। गुणअगुणे अगुणगुणे भव सीलगुणे य भावगुणे ॥१७८॥ २०

नामगुणः स्थापनागुणः द्रव्यगुणः क्षेत्रगुणः कालगुणः फलगुणः पर्यवगुणः गणनागुणः करणगुणः अभ्यासगुणः गुणागुणः अगुणगुणः भवगुणः शीलगुणः भावगुणश्चेति गाथासमासार्थः ॥ तदेवं सूत्रानुगमेन सूत्रे समुच्चरिते निक्षेपनिर्युक्त्यनुगमेन तदवयवे निक्षिप्ते सति उपोद्घातनिर्युक्तेरवसरः, सा च 'उद्देसे'त्यादिना द्वारगाथाद्वयेनानुगन्तव्या। साम्प्रतं सूत्रस्पर्शिकनिर्युक्तेरवसरः, तत्रापि सुगमनामस्थापनाव्युदासेन द्रव्यादिकमाह—



दव्वगुणो दव्वं चिय गुणाण जं तंमि संभवो होइ। सचित्ते अचित्ते मीसंमि य होइ दव्वंमि ॥१७९॥

तत्र द्रव्यगुणो नाम द्रव्यमेव, किमिति ?, गुणानां यतो गुणिनि तादात्म्येन सम्भवात् (वः), ननु च द्रव्यगुणयोर्लक्षणविधानभेदाद्भेदः, तथाहि द्रव्यलक्षणं गुणपर्यायवद् द्रव्यं, विधानमपि—धर्म्माधर्म्माकाशजीवपुद्गलादिकमिति, गुणलक्षणं द्रव्याश्र-

षिणः सद्वर्त्तिनो निर्गुणा गुणा इति, विधानमपि ज्ञानेच्छाद्वेषरूपरसगन्धस्पर्शादयः स्वगतभेदभिन्ना इति, नैष दोषो, यतो द्रव्ये सचित्ताचित्तमिश्रभेदभिन्ने स गुणस्तादात्म्येन स्थितः, तत्राचित्तद्रव्यं द्विधा–अरूपि रूपि च, तत्रारूपिद्रव्यं त्रिधा–धर्म्माधर्म्माकाशभेदभिन्नं, तच्च गतिस्थित्यवगाहदानलक्षणं, गुणोऽप्यस्यामूर्त्तत्वागुरुलघुपर्यायलक्षणः, तत्रामूर्त्तत्वं त्रयस्यापि स्वं रूपं, न भेदेन व्यवस्थितम्, अगुरुलघुपर्यायोऽपि, तत्पर्यायत्वादेव, मृदो मृत्पिण्डस्थासकोशकुशूलपर्यायवत्, रूपिद्रव्यमपि स्कन्धतद्देशप्रदेशपरमाणुभेदं, तस्य च रूपादयो गुणाः अभेदेन व्यवस्थिताः, भेदेनानुपलब्धेः, संयोगविभागाभावात्, स्वात्मवत् । तथा सचित्तमप्युपयोगलक्षणलक्षितं जीवद्रव्यं, न च तस्माद्भिन्ना ज्ञानादयो गुणाः, तद्भेदे जीवस्याचेतनत्वप्रसङ्गात्, तत्सम्बन्धाद्भविष्यतीति चेत्, अनुपासितगुरोरिदं वचः, यतो न हि स्वतोऽसती शक्तिः कर्तुमन्येन पार्यते, न ह्यन्धः प्रदीपशतसम्बन्धेऽपि रूपावलोकनायालमिति । अनयैव दिशा मिश्रद्रव्येऽप्येकत्वसंयोजना स्वबुद्ध्या कार्येति गाथार्थः ॥ तदेवं द्रव्यगुणयोरेकान्तेनैकत्वे प्रतिपादिते सत्याह शिष्यः–तत्किमिदानीमभेदोऽस्तु ?, नैतदप्यस्ति, यतः सर्वथाऽभेदेऽभ्युपगम्यमाने सत्येकेनैवेन्द्रियेण गुणान्तरस्याप्युपलब्धेरपरेन्द्रियवैफल्यं स्यात्, तथाहि–चूतफलरूपादौ चक्षुरानुपलभ्यमाने रूपाद्यात्मभूताश्रयविद्रव्याव्यतिरिक्तरसादेरप्युपलब्धिः स्यात्, रूपादिस्वरूपवद्, एवं ह्यभेदः स्याद् यदि रूपादौ समुपलभ्यमानेऽन्येऽपि समुपलभ्येरन्, अन्यथा विरुद्धधर्म्माध्यासाद्भिद्येरन् घटपटवदिति । तदेवं भेदाभेदोपपत्तिभिर्व्याकुलितमतिः शिष्यः पृच्छति–उभयथाऽपि दोषापत्तिदर्शनात्कथं गृह्णीमः ?, आचार्य आह–अत एव भेदाभेदोऽस्तु, तत्राभेदपक्षे द्रव्यं गुणो भेदपक्षे तु भावो गुण इति, तथाहि–गुणगुणिनोः पर्यायपर्यायिणोः सामान्यविशेषयोरवयवावयविनोर्भेदाभेदव्यवस्थानेनैवात्मभावसद्भावात्, आह हि–"दव्वं पज्जवविजुयं दव्वविउत्ता य पज्जवा

णत्थि। उप्पायट्ठिइभंगा हंदि दवियलक्खणं एयं ॥१॥ नयास्तव स्यात्पदलाञ्छिता इमे, रसोपविद्धा इव लोहधातवः। भवन्त्यभिप्रेतफला यतस्ततो, भवन्तमार्याः प्रणता हितैषिणः ॥२॥" इत्यादि स्वयूथ्यैरत्र बहु विजृम्भितमित्यलं विस्तरेण। एवमेव निर्युक्तिकारः समस्तद्रव्यप्रधाने जीवद्रव्ये गुणप्रभेदेन व्यवस्थितमाह—

संकुचियवियसियत्तं एसो जीवस्स होइ जीवगुणो। पूरेइ हंदि लोगं बहुप्पएसत्तणगुणेणं ॥१८०॥

जीवो हि सयोगिवीर्यसद्द्रव्यतया प्रदेशसंहारविसर्गाभ्यामाधारवशात् प्रदीपवत् सङ्कुचति विकसति च, एष जीवस्यात्मभूतो गुणः, भेदं विनाऽपि षष्ठ्युपलब्धेः, तद्यथा-राहोः शिरः शिलापुत्रकस्य शरीरमिति, तद्वच एव वा सप्तसमुद्घातवशात् सङ्कुचति विकसति च, सम्यक्—समन्ततः उत्—प्राबल्येन हननम्—इतश्चेतश्चात्मप्रदेशानां प्रक्षेपणं समुद्घातः, स च कषायवेदनामारणान्तिकवैक्रियतैजसाहारककेवलिसमुद्घातभेदात् सप्तधा, तत्र कषायसमुद्घातोऽनन्तानुबन्धिक्रोधाद्युपहतचेतस आत्मप्रदेशानामितश्चेतश्च प्रक्षेपः, इत्येवं तीव्रतरवेदनोपहतस्यापि वेदनासमुद्घातः, मारणान्तिकसमुद्घातो हि मुमूर्षोरसुमत आदित्सितोत्पत्तिप्रदेशे आलोकान्तादात्मप्रदेशानां भूयो भूयः प्रक्षेपसंहाराविति, वैक्रियसमुद्घातो वैक्रियलब्धिमतो वैक्रियोत्पादनाय बहिरात्मप्रदेशप्रक्षेपः, तैजससमुद्घातस्तैजसशरीरनिमित्तं तेजोलेश्यालब्धिमतस्तेजोलेश्याप्रक्षेपावसरे इति, आहारकसमुद्घातश्चतुर्दशपूर्वविद आहारकलब्धिमतः क्वचित्सन्देहापगमनाय तीर्थङ्करान्तिकगमनार्थमाहारकशरीरं समुपादातुं बहिरात्मप्रदेशप्रक्षेपः, केवलिसमुद्घातं तु समस्तलोकव्यापितयाऽन्तर्नीतान्यसमुद्घातं निर्युक्तिकारः स्वत एवाचष्टे—'पूरयति' व्याप्नोति, हन्दीत्युपप्रदर्शने, कम्?—'लोकं' चतुर्दशरज्ज्वा-

प्र. आ. ८५

२० २७

१ द्रव्यं पर्यायवियुतं द्रव्यवियुताश्च पर्याया न सन्ति। उत्पादस्थितिभङ्गा हन्दि द्रव्यलक्षणमेतत् ॥१॥ २ दण्ड कपाटे मन्था अन्तराणि च

त्मकमाकाशखण्डं, कुतो ?, बहुप्रदेशगुणत्वात्, तथाहि-उत्पन्नदिव्यज्ञान आयुषोऽल्पत्वमवधार्य वेदनीयस्य च प्राचुर्यं दण्डादिक्रमेण लोकप्रमाणतयाऽऽत्मप्रदेशानां लोकमापूरयति, तदुक्तम्-"दंडं कवाडे मंथंतरे य"त्ति गाथार्थः ॥ गतो द्रव्यगुणः, क्षेत्रादिकमाह-

देवकुरु सुसमसुसमा सिद्धी निब्भय दुगादिया चेव। कल भोअणुज्जु वंके जीवमजीवे य भावंमि ॥१८१॥

क्षेत्रगुणे देवकुर्वादिः, कालगुणे सुषमसुषमादिः, फलगुणे सिद्धिः, पर्यवगुणे निर्भजना, गणनागुणे द्विकादि, करणगुणे कलाकौशल्यम्, अभ्यासगुणे भोजनादि, गुणागुणे ऋजुता, अगुणगुणे वक्रता, भवगुणशीलगुणयोर्भावगुणार्थमुपात्तेन जीवग्रहणेन गतार्थत्वाद्गाथायां पृथगनुपादानं, भवगुणो जीवस्य नारकादिर्भवः, शीलगुणो जीवः क्षान्त्याद्युपेतो, 'भावगुणो जीवाजीवयोः' इति संयोज्यैकैको व्याख्यायते-तत्र देवकुरूत्तरकुरुहरिवर्षरम्यकहैमवतहैरण्यवतपट्पञ्चाशदन्तरद्वीपकाकर्मभूमीनामयं गुणो, यदुत तत्रत्यमनुजा देवकुमारोपमाः सदाऽवस्थितयौवना निरुपक्रमायुषो मनोज्ञशब्दादिविषयोपभोगिनः स्वभावमार्दवार्जवप्रकृतिभद्रकगुणामरदेवलोकगतयश्च भवन्ति। कालगुणोऽपि भरतैरावतयोस्तिसृष्वप्येकान्तसुषमादिषु समासु स एव सदावस्थितयौवनादिरिति। फलमेव गुणः फलगुणः, फलं च क्रियाया भवति, तस्याश्च क्रियायाः सम्यग्दर्शनज्ञानचारित्ररहिताया ऐहिकामुष्मिकार्थं प्रवृत्ताया अनात्यन्तिकोऽनैकान्तिको भवन् फलगुणोऽप्यगुण एव भवति, सम्यग्दर्शनज्ञानचारित्रक्रियायास्त्वैकान्तिकात्यन्तिकानाबाधसु-

५

१०

चा० २६ कि० १ उद्दे०

देशप्रदेशेन भिद्यमानं परमाण्वन्तं भेदं ददाति, परमाणुरप्येकगुणकृष्णाद्विगुणकृष्णादिना अनन्तशोऽपि भिद्यमानो भेददायीति। गणनागुणो नाम द्विकादिकः, तेन च सुमहतोऽपि राशेर्गणनागुणेनेयत्ताऽवधार्यते। करणगुणो नाम कलाकौशलं, तथाहि—उदकादौ करणपाटवार्थं गात्रोत्क्षेपादिकां क्रियां कुर्वन्ति। अभ्यासगुणो नाम भोजनादिविषयः, तद्यथा—तदहर्जातबालकोऽपि भवान्तराभ्यासात् स्तनादिकं मुख एव प्रक्षिपति उपरतरुदितश्च भवति, यदिवाऽभ्यासवशात् सन्तमसेऽपि कवलादेर्मुखविवरप्रक्षेपाद्वया (पो व्या-) कुलितचेतसोऽपि च तुदद्गात्रकण्डूयनमिति। गुणागुणो नाम गुण एव कस्यचिदगुणत्वेन विपरिणमते, यथाऽऽर्जवोपेतस्यर्जुत्वाख्यो गुणो मायाविनः प्रत्यगुणो भवति, उक्तं च—"शाठ्यं ह्रीमति गण्यते व्रतरुचौ दम्भः शुचौ कैतवं, शूरे निर्घृणता ऋजौ विमतिता दैन्यं प्रियाभाषिणि। तेजस्विन्यवलिप्तता मुखरता वक्तर्यशक्तिः स्थिरे, तत्को नाम गुणो भवेत् स विदुषां यो दुर्जनैर्नाङ्कितः?

२५ गुणनिक्षेपः

२०

स च जीवाजीवनिषयः, तत्र जीवविषय औदयिकादिः पोढा, तत्रौदयिकः प्रशस्तोऽप्रशस्तश्च, तीर्थकराहारकशरीरादिः प्रशस्तः, अप्रशस्तस्तु शब्दादिविषयोपभोगहास्यरत्यरतीत्यादिः, औपशमिक उपशमश्रेण्यन्तर्गतायुष्कक्षयानुत्तरविमानप्राप्तिलक्षणः तथा सत्कर्म्मानुदयलक्षणश्चेति, क्षायिकभावगुणश्चतुर्द्धा, तद्यथा—क्षीणसप्तकस्य पुनर्मिथ्यात्वागमनं १ क्षीणमोहनीयस्यावश्यंभाविशेषघातिकर्म्मक्षयः २ क्षीणघातिकर्म्मणोऽनावरणज्ञानदर्शनाविर्भावः ३ अपगताशेषकर्म्मणोऽपुनर्भवस्तथाऽऽत्यन्तिकैकान्तिकानाबाधपरमानन्दलक्षणसुखावाप्ति ४ श्चेति, क्षायोपशमिकः क्षायोपशमिकदर्शनाद्यवाप्तिरिति, पारिणामिको भव्यत्वादिरिति, सान्निपातिकस्त्वौदयिकादिपञ्चभावसमकालनिष्पादितः, तद्यथा—मनुष्यगत्युदयादौदयिकः सम्पूर्णपञ्चेन्द्रियत्वावाप्तेः क्षायोपशमिकः दर्शनसप्तकक्षयात् क्षायिकः चारित्रमोहनीयोपशमादौपशमिकः भव्यत्वात्पारिणामिक इति, उक्तो जीवभावगुणः । साम्प्रतमजीवभावगुणः, स चौदयिकपारिणामिकयोरेव सम्भवति, नान्येषां, तत्रौदयिकस्तावद् उदये भव औदयिकः, स चाजीवाश्रयोऽनया विवक्षया, यदुत—काश्चित् प्रकृतयः पुद्गलविपाकिन्य एव भवन्ति, काः पुनस्ताः ?, उच्यन्ते, औदारिकादीनि शरीराणि पञ्च षट् संस्थानानि त्रीण्यङ्गोपाङ्गानि षट् संहननानि वर्णपञ्चकं गन्धद्वयं पञ्च रसा अष्टौ स्पर्शा अगुरुलघुनाम उपघातनाम पराघातनाम उद्योतनाम आतपनाम निर्म्माणनाम प्रत्येकनाम साधारणनाम स्थिरनाम अस्थिरनाम शुभनाम अशुभनाम, एताः सर्वा अपि पुद्गलविपाकिन्यः, सत्यपि जीवसम्बन्धित्वे पुद्गलविपाकित्वादागामिति, पारिणामिकोऽजीवगुणस्तु द्वेधा—अनादिपारिणामिकः सादिपारिणामिकश्चेति, तत्रानादिपारिणामिको धर्म्माधर्म्माकाशानां गतिस्थित्यवगाहलक्षणः, सादिपारिणामिकस्त्वभ्रेन्द्रधनुरादीनां परमाणूनां च वर्णादिगुणान्तरापत्तिरिति गाथातात्पर्यार्थः ॥ उक्तो गुणो, मूलनिक्षेपार्थमाह—

५

१०

मूले छक्कं दव्वे ओदइउवएस आइमूलं च। खित्ते काले मूलं भावे मूलं भवे तिविहं ॥१८२॥

मूलस्य षोढा निक्षेपः, नामस्थापनाद्रव्यक्षेत्रकालभावभेदात्, नामस्थापने गतार्थे, द्रव्यमूलं ज्ञशरीरभव्यशरीरव्यतिरिक्तं त्रिधा-औदयिकमूलमुपदेशमूलमादिमूलं चेति, तत्रौदयिकद्रव्यमूलं वृक्षादीनां मूलत्वेन परिणतानि यानि द्रव्याणि, उपदेशमूलं यच्चिकित्सको रोगप्रतिघातसमर्थं मूलमुपदिशत्यातुरायेति, तच्च पिप्पलीमूलादिकं, आदिमूलं नाम यद् वृक्षादिमूलोत्पत्तावाद्यं कारणं, तद् यत् स्थावरनामगोत्रप्रकृतिप्रत्ययान्मूलनिर्वर्त्तनोत्तरप्रकृतिप्रत्ययाच्च मूलमुत्पद्यते, एतदुक्तं भवति तेषामौदारिकशरीरत्वेन मूलनिर्वर्त्तकानां पुद्गलानामुदयिष्यतां कार्म्मणं शरीरमाद्यं कारणं, क्षेत्रमूलं यस्मिन् क्षेत्रे मूलमुत्पद्यते व्याख्यायते वा, एवं कालमूलमपि, यावन्तं वा कालं मूलमास्ते, भावमूलं तु त्रिधेति गाथार्थः ॥ तथाहि—

ओदइयं उवदिट्ठा आइ तिगं मूलभाव ओदइअं। आयरिओ उवदिट्ठा विणयकसायादिओ आई ॥१८३॥

भावमूलं त्रिविधम्-औदयिकभावमूलम् उपदेष्टृमूलम् आदिमूलं चेति, तत्रौदयिकभावमूलं वनस्पतिकायमूलत्वमनुभवन्नामगोत्रकर्म्मोदयात् मूलजीव एव, उपदेष्टृभावमूलं त्वाचार्य उपदेष्टा, यैः कर्म्मभिः प्राणिनो मूलत्वेनोत्पद्यन्ते तेषामपि, मोक्षसंसारयोर्वा यदादिभावमूलं तस्य चोपदेष्टेति, एतदेव दर्शयति-'विणयकसाआइओ आई' तत्र मोक्षस्यादिमूलं ज्ञानदर्शनचारित्रतपऔपचारिकरूपः पञ्चधा विनयः, तन्मूलत्वान्मोक्षावाप्तेः, तथा चाह—"विणया णाणं णाणाउ दंसणं दंसणाहि चरणं तु। चरणाहिंतो मोक्खो मुक्खे सुक्खं अणाबाहं ॥१॥ विनयफलं शुश्रूषा गुरुशुश्रूषाफलं श्रुतज्ञानम्। ज्ञानस्य फलं विरतिर्विरतिफलं चाश्र-

१ विनयात् ज्ञानं ज्ञानाद्दर्शनं दर्शनाच्च चरणं तु। ज्ञानदर्शनचरणेभ्यस्तु मोक्षो मोक्षे सौख्यमनाबाधम् ॥१॥

१५ मूलनिक्षेपः प्र. आ. ८७

२०

२७

॥७९॥

वनिरोधः ॥२॥ संवरफलं तपोबलमथ तपसो निर्जरा फलं दृष्टम् । तस्मात्क्रियानिवृत्तिः क्रियानिवृत्तेरयोगित्वम् ॥३॥ योगनिरोधाद् भवसन्ततिक्षयः सन्ततिक्षयान्मोक्षः । तस्मात्कल्याणानां सर्वेषां भाजनं विनयः ॥४॥" इत्यादि, संसारस्य त्वादिमूलं विषयकषाया इति ॥ मूलमुक्तम्, इदानीं स्थानस्य पञ्चदशधा निक्षेपमाह—

तरूपः, तस्य पञ्चविधस्याप्यसङ्ख्येयानि संयमस्थानानि, कियदसङ्ख्यमिति चेत् अतीन्द्रियत्वादर्थस्य न साक्षान्निर्देष्टुं शक्यते, आगमानुसारोपमया तूच्यते इहैकसमयेन सूक्ष्माग्निजीवा असङ्ख्येयलोकाकाशप्रदेशप्रमाणा उत्पद्यन्ते, तेभ्योऽग्निकायत्वेन परिणता असङ्ख्येयगुणाः, ततोऽपि तत्कायस्थितिरसङ्ख्येयगुणा, ततोऽप्यनुभागबन्धाध्यवसायस्थानान्यसङ्ख्येयगुणानि, संयमस्थानान्यप्येतावन्त्येवेति सामान्यतः, विशेषतस्तूच्यते–सामायिकच्छेदोपस्थापनीयपरिहारविशुद्धीनां प्रत्येकमसङ्ख्येयलोकाकाशप्रदेशतुल्यानि संयमस्थानानि, सूक्ष्मसम्परायस्य त्वान्तर्मुहूर्त्तिकत्वादन्तर्मुहूर्त्तसमयतुल्यान्यसङ्ख्येयानि संयमस्थानानि, यथाख्यातस्य त्वेकमेवाजघन्योत्कृष्टं संयमस्थानम्, अथवा संयमश्रेण्यन्तर्गतानि संयमस्थानानि ग्राह्याणि, सा चानेन क्रमेण भवति, तद्यथा–अनन्तचारित्रपर्यायनिष्पादितमेकं संयमस्थानम्, असंङ्ख्येयसंयमस्थाननिर्वर्त्तितं कण्डकं, तैश्चासङ्ख्येयैर्जनितं षट्स्थानकं, तदसङ्ख्येयात्मिका श्रेणीति । प्रग्रहस्थानं तु प्रकर्षेण गृह्यते वचोऽस्येति प्रग्रहः–ग्राह्यवाक्यो, नायक इत्यर्थः, स च लौकिको लोकोत्तरश्च, तस्य स्थानं प्रग्रहस्थानं, लौकिकं तावत्पञ्चविधं, तद्यथा–राजा युवराजो महत्तरः अमात्यः कुमारश्चेति, लोकोत्तरमपि पञ्चविधं, तद्यथा–आचार्योपाध्यायप्रवृत्तिस्थविरगणावच्छेदकभेदादिति । योधस्थानं पञ्चधा, तद्यथा–आलीढप्रत्यालीढवैशाखमण्डलसमपादभेदात् । अचलस्थानं तु चतुर्द्धा–सादिसपर्यवसानादिभेदात्, तद्यथा–सादिसपर्यवसानं परमाण्वादेर्द्रव्यस्यैकप्रदेशादावस्थानं जघन्यत एकं समयमुत्कृष्टतश्चासङ्ख्येयकालमिति, साद्यपर्यवसानं सिद्धानां भविष्यदद्धारूपम्, अनादिसपर्यवसानमतीताद्धारूपस्य शैलेश्यवस्थान्त्यसमये कार्म्मणतैजसशरीरभव्यत्वानां चेति, अनाद्यपर्यवसानं धर्म्माधर्म्माकाशानामिति । गणनास्थानमेकद्व्यादिकं शीर्षप्रहेलिकापर्यन्तं । सन्धानस्थानं द्विधा–द्रव्यतो भावतश्च, पुनरप्येकैकं द्विधा छिन्नाच्छिन्नभेदात्, तत्र द्रव्यच्छिन्नसन्धानं कञ्चुकादेः, अच्छिन्नसन्धानं म

पक्ष्मोत्पद्यमानतन्त्वादेरिति, भावसन्धानमपि प्रशस्ताप्रशस्तभेदात् द्वेधा, तत्र प्रशस्ताच्छिन्नभावसन्धानमुपशमक्षपकश्रेण्यामारोहतो जन्तोरपूर्वसंयमस्थानान्यच्छिन्नान्येव भवन्ति, श्रेणिव्यतिरेकेण वा प्रवर्द्धमानकण्डकस्येति, छिन्नप्रशस्तभावसन्धानं पुनरौपशमिकादिभावादौदयिकादिभावान्तरगतस्य पुनरपि शुद्धपरिणामवतः तत्रैव गमनम्, अप्रशस्ताच्छिन्नभावसन्धानमुपशमश्रेण्याः प्रतिपततोऽविशुद्धयमानपरिणामस्यानन्तानुबन्धिमिथ्यात्वोदयं यावत्, उपशमश्रेणिमन्तरेणापि कषायवशात् बन्धाध्यवसायस्थानान्युत्तरोत्तराण्यवगाहमानस्य वा इति, अप्रशस्तच्छिन्नभावसन्धानं पुनरौदयिकभावादौपशमिकादिभावान्तरसङ्क्रान्तौ सत्यां पुनस्तत्रैव गमनमिति । इह द्वारद्वयं यौगपद्येन व्याख्यातं, तत्र सन्धानस्थानं द्रव्यविषयमितरतु भावविषयमित्युक्तं स्थानम् । अथवा भावस्थानं कषायाणां यत् स्थानं तदिह परिगृह्यते, तेषामेव जेतव्यत्वेनाधिकृतत्वात्, तेषां किं स्थानं? यदाश्रित्य च ते भवन्ति, शब्दादिविषयानाश्रित्य च ते भवन्तीति तद्दर्शयति—

पंचसु कामगुणेसु य सद्दप्फरिसरसरूवगंधेसुं । जस्स कसाया वट्टंति मूलट्ठाणं तु संसारे ॥१८५॥

तत्रेच्छानङ्गरूपः कामस्तस्य गुणा यानाश्रित्यासौ चेतसो विकारमादर्शयति, ते च शब्दस्पर्शरसरूपगन्धास्तेषु पञ्चस्वपि व्यस्तेषु समस्तेषु वा विषयभूतेषु 'यस्य' जन्तोर्विषयसुखपिपासोन्मुखस्यापरमार्थदर्शिनः संसाराभिष्वङ्गिणो रागद्वेषतिमिरोपप्लुतदृष्टेर्मनोज्ञेतरविषयोपलब्धौ सत्यां कषाया 'वर्तन्ते' प्रादुर्भवन्ति, तन्मूलश्च संसारपादपः प्रादुर्भवतीत्यतः शब्दादिविषयोद्भूत(ताः) कषायाः 'संसारे' संसारविषयं मूलस्थानमेवेति, एतदुक्तं भवति—रागाद्युपहतचेताः परमार्थमजानानोऽतत्स्वभावेऽपि तत्स्वभावारोपणेनान्धादप्यन्धतमः कर्म मोहते, यत आह—"दृश्यं वस्तु परं न पश्यति जगत्यन्धः पुरोऽवस्थितं, रागान्धस्तु यदस्ति तत्परिहरन् यन्नास्ति

तत् पश्यति । कुन्देन्दीवरपूर्णचन्द्रकलशश्रीमल्लतापल्लवानारोप्याशुचिराशिषु प्रियतमागात्रेषु यन्मोदते ॥१॥" द्वेषं वा कर्कशशब्दादौ व्रजतीति, ततश्च मनोज्ञेतरशब्दादिविषयाः कषायाणां मूलस्थानं, ते च संसारस्येति गाथातात्पर्यार्थः॥ यदि नाम शब्दादिविषयाः कषायाः कथं तेभ्यः संसार इति ?, उच्यते, यतः कर्म्मस्थितेः कषाया मूलं, साऽपि संसारस्य, संसारिणश्चावश्यंभाविनः कषाया इति, एतदेवाह—

जह सव्वपायवाणं भूमीए पइट्ठियाइं मूलाइं । इय कम्मपायवाणं संसारपइट्ठिया मूला ॥१८६॥

यथा सर्वपादपानां भूमौ प्रतिष्ठितानि मूलानि एवं कर्मपादपानां संसारे कषायरूपाणि मूलानि प्रतिष्ठितानीति गाथार्थः॥ ननु च कथमेतच्छ्रद्धेयं–कर्म्मणः कषाया मूलमिति ?, उच्यते, यतो मिथ्यात्वाविरतिप्रमादकषाययोगा बन्धहेतवः, तथा चागमः— "जीवे णं भंते ! कतिहि ठाणेहि णाणावरणिज्जं कम्मं बंधइ ?, गोयमा ! दोहिं ठाणेहिं, तंजहा–रागेण य दोसेण य । रागे दुविहे–माया लोभे य, दोसे दुविहे–कोहे य माणे य । एएहिं चउहि ठाणेहि वीरिओवगूहिएहि णाणावरणिज्जं कम्मं बंधइ" एवमष्टानामपि कर्म्मणां योज्यमिति॥ ते च कषाया मोहनीयान्तःपातिनोऽष्टप्रकारस्य च कर्म्मणः कारणं,मोहनीयं कामगुणानां च इति दर्शयति—

अट्ठविहकम्मरुक्खा सव्वे ते मोहणिज्जमूलागा । कामगुणमूलगं वा तम्मूलागं च संसारो ॥१८७॥

यदवादि प्राक्–'इय कम्मपायवाणं' तत्र कतिप्रकाराः ते कर्म्मपादपाः किंकारणाश्चेति ?, उच्यते, अष्टविधकर्म्मवृक्षाः, ते सर्वेऽपि

१ जीवो भदन्त ! कतिभिः स्थानैर्ज्ञानावरणीयं कर्म बध्नाति ?, गौतम ! द्वाभ्यां स्थानाभ्यां, तद्यथा–रागेण वा द्वेषेण वा, रागो द्विविधो–माया लोभश्च द्वेषो द्विविधः–क्रोधश्च मानश्च एतैश्चतुर्भिः स्थानैर्वीर्योपगूढैर्ज्ञानावरणीयं कर्म बध्नाति

मोहनीयमूलाः, न केवलं कषायाः, कामगुणा अपि मोहनीयमूलाः, यस्माद् वेदोदयात् कामाः,वेदश्च मोहनीयान्तःपातीत्यतस्तन्मोहनीयं मूलम्–आद्यं कारणं यस्य संसारस्य स तथा इति गाथार्थः ॥ तदेवं पारम्पर्येण संसारकषायकामानां कारणत्वान्मोहनीयं प्रधानभावमनुभवति, तत्क्षये चावश्यम्भावी कर्म्मक्षयः, तथा चाभाणि—"जह मत्थयसूईए, हयाए हम्मए तलो । तहा कम्माणि हम्मंति, मोहणिज्जे खयं गए ॥१॥" तच्च द्विधा–दर्शनचारित्रमोहनीयभेदात्, एतदेवाह—



दुविहो अ होइ मोहो दंसणमोहो चरित्तमोहो अ । कामा चरित्तमोहो तेणऽहिगारो इहं सुत्ते ॥१८८॥

५

मोहनीयं कर्म्म द्वेधा भवति, दर्शनमोहनीयं चारित्रमोहनीयं चेति, बन्धहेतोर्द्वैविध्यात्, तथाहि–अर्हत्सिद्धचैत्यतपःश्रुतगुरुसाधुसङ्घप्रत्यनीकतया दर्शनमोहनीयं कर्म्म बध्नाति, येन चासावनन्तसंसारसमुद्रान्तःपात्येनावतिष्ठते, तथा तीव्रकषायबहुरागद्वेषमोहाभिभूतः सन् देशसर्वविरत्युपघाति चारित्रमोहनीयं कर्म्म बध्नाति, तत्र मिथ्यात्वसम्यग्मिथ्यात्वसम्यक्त्वभेदात्रेधा दर्शनमोहनीयं, तथा षोडशकषायनवनोकषायभेदाच्चारित्रमोहनीयं पञ्चविंशतिधा, तत्र कामाः शब्दादयः पञ्च चारित्रमोहः तेन चात्र सूत्रेऽधिकारो, यतः कषायाणां स्थानमत्र प्रकृतं, तच्च शब्दादिकपञ्चगुणात्मकमिति गाथार्थः ॥ तत्र चारित्रमोहनीयोत्तरप्रकृतिस्त्रीपुंनपुंसकवेदहास्यरतिलोभाश्रितकामाश्रयिणः कषायाः संसारमूलस्य च कर्म्मणः प्रधानं कारणमिति प्रचिकटयिषुराह—

प्र. आ. ९०

१०

संसारस्स उ मूलं कम्मं तस्सवि हुंति य कसाया ।

'संसारस्य' नारकतिर्यङ्नरामरगतिसंसृतिरूपस्य(मूलं)कारणमष्टप्रकारं कर्म्म, तस्यापि कर्म्मणः कषायाः–क्रोधादयो निमित्तं

१ यथा मस्तकसूच्यां हतायां हन्यते तालः । तथा कर्म्माणि हन्यन्ते मोहनीये क्षयं गते ॥१॥

भवन्ति। तेषां च प्रतिपादितशब्दादिस्थानानां प्रचुरस्थानत्वप्रतिपादनाय पुनरपि स्थानविशेषं गाथाशकलेनाह—

ते सयणपेसअत्थाइएसु अज्झत्थओ अ ठिआ ॥१८९॥

स्वजनः-पूर्वापरसंस्तुतो मातापितृश्वशुरादिकः प्रेष्यो-भृत्यादिः अर्थो-धनधान्यकुप्यवास्तुरत्नभेदरूपः ते स्वजनादयः कृतद्वन्द्वा आदिर्येषां मित्रादीनां तेषु स्थिताः कषाया विषयरूपतया, अध्यात्मनि च विषयिरूपतया प्रसन्नचंद्रकेन्द्रियादीनामिति गाथार्थः॥ तदेवं कषायस्थानप्रदर्शनेन सूत्रपदोपात्तं स्थानं परिसमाप्य तेषामेव कषायाणां सूत्रमूलपदोपात्तानां जेतव्यत्वाधिकृतानां निक्षेपमाह—

णामंठवणादविए उप्पत्ती पच्चए य आएसो। रसभावकसाए या तेण य कोहाइया चउरो ॥१९०॥

यथाभूतार्थनिरपेक्षमभिधानमात्रं नाम, सद्भावासद्भावरूपा प्रतिकृतिः स्थापना कृतभीमभ्रूकुट्युत्कटललाट(पट)घटितत्रिशूलरक्तासनगनगन्दष्टाधरस्पन्दमानस्वेदसलिलचित्रपुस्ताद्यक्षवराटकादिगतेति, द्रव्यकषाया ज्ञशरीरभव्यशरीराभ्यां व्यतिरिक्ताः कर्मद्रव्यकषाया नोकर्मद्रव्यकषायाश्चेति, तत्रादित्सितात्तानुदीर्णोदीर्णाः पुद्गला द्रव्यप्राधान्यात् कर्मद्रव्यकषायाः, नोकर्मद्रव्यकषायास्तु बिभीतकादयः, उत्पत्तिकषायाः शरीरोपधिक्षेत्रवास्तुस्थाण्वादयो यदाश्रित्य तेषामुत्पत्तिः, तथा चोक्तम्—'किं एत्तो कट्ठयरं जं मूढो थाणुअम्मि आवडिओ। थाणुस्स तस्स रूसइ न अप्पणो दुप्पओगस्स ॥१॥'' प्रत्ययकषायाः कषायाणां ये प्रत्ययाः—यानि बन्धकारणानि, ते चेह मनोज्ञेतरभेदाः शब्दादयः, अत एवोत्पत्तिप्रत्यययोः कार्यकारणगतो भेदः, आदेशकषायाः कृत्रिमकृतभ्रूकुटीभङ्गादयः, रसतो रसकषायः कटुतिक्तकषायपञ्चकान्तर्गतः, भावकषायाः शरीरोपधिक्षेत्रवास्तुस्वजनप्रेष्यार्थादिनिमित्ताविर्-

१ किमितःकष्टतरं यन्मूढः स्थाणावापतितः। स्थाणवे तस्मै रुष्यति नात्मनो दुष्प्रयोगाय ॥१॥

कषाय-१५ स्थानं कषाय-निक्षेपः

२०

२५

भूताः शब्दादिकामगुणकारणकार्यभूतकषायकर्मोदयादात्मपरिणामविशेषाः क्रोधमानमायालोभाः,ते चैकैकशोऽनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणसञ्ज्वलनभेदेन भिद्यमानाः षोडशविधा भवन्ति, तेषां च स्वरूपानुबन्धफलानि गाथाभिरभिधीयन्ते, ताश्चेमाः—"जलरेणुपुढविपव्वयराईसरिसो चउव्विहो कोहो। तिणिसलयाकट्ठट्ठियसेलत्थंभोवमो माणो ॥१॥ मायावलेहिगोमुत्तिमेंढसिंगघणवंसमूलसमा। लोभो हलिद्दकद्दमखंजणकिमिरायसामाणो ॥२॥ पक्खचउमासवच्छरजावज्जीवाणुगामिणो कमसो। देवणरतिरियणारयगइसाहणहेयवो भणिया ॥३॥" एषां च नामाद्यष्टविधकषायनिक्षेपाणां कतमो नयः कमिच्छतीत्येतदभिधीयते—तत्र नैगमस्य सामान्यविशेषरूपत्वादनेकगमत्वाच्च तदभिप्रायेण सर्वेऽपि साधवो नामादयः, सङ्ग्रहव्यवहारौ तु कषायसम्बन्धाभावादादेशसमुत्पत्ती नेच्छतः, ऋजुसूत्रस्तु वर्त्तमानार्थनिष्ठत्वादादेशसमुत्पत्तिस्थापना नेच्छति,शब्दस्तु नाम्नोऽपि कथञ्चिद्भावान्तर्भावान्नामभावाविच्छतीति गाथातात्पर्यार्थः ॥ तदेवं कषायाः कर्म्मकारणत्वेनोक्ताः, तदपि संसारस्य, स च कतिविध इति दर्शयति—

**दव्वे खित्ते काले भवसंसारे अ भावसंसारे। पंचविहो संसारो जत्थेते संसरंति जिआ ॥ १९१ ॥**

द्रव्यसंसारो व्यतिरिक्तो द्रव्यसंसृतिरूपः, क्षेत्रसंसारो येषु क्षेत्रेषु द्रव्याणि संसरन्ति, कालसंसारः यस्मिन् काल इति, नारकतिर्यग्नरामरगतिचतुर्विधानुपूर्व्युदयाद्भवान्तरसङ्क्रमणं भवसंसारः, भावसंसारस्तु संसृतिस्वभाव औदयिकादिभावपरिणतिरूपः,तत्र च प्रकृतिस्थित्यनुभागप्रदेशबन्धानां प्रदेशविपाकानुभवनम्, एवं द्रव्यादिकः पञ्चविधः संसारः, अथवा द्रव्यादिकश्चतुर्धा संसारः,



५

१०

१ जलरेणुपृथ्वीपर्वतराजीसदृशश्चतुर्विधः क्रोधः। तिनिशलताकाष्ठास्थिशैलस्तम्भोपमो मानः ॥१॥ मायाऽवलेखिकागोमूत्रिकामेषशृङ्गघनवंशीमूलसमा। लोभो हरिद्राकर्दमखञ्जनकृमिरागसमानः ॥२॥ पक्षचतुर्मासवत्सरयावज्जीवानुगामिनः क्रमशः। देवनरतिर्यग्नारकगतिसाधनहेतवो भणिताः ॥३॥

तद्यथा—अथादृत्तिनं ग्रामान्नगरं वसन्ताद् ग्रीष्मं औदयिकादौपशमिकमिति गाथार्थः ॥ तस्मिंश्च संसारे कर्मवशगाः प्राणिनः संसरन्तीत्यतः कर्म्मनिदर्शनार्थमाह—

णामंठवणाकम्मं दव्वकम्मं पओगकम्मं च। समुदाणिरियावहियं आहाकम्मं तवोकम्मं ॥१९२॥
किइकम्म भावकम्मं दसविह कम्मं समासओ होइ।

नामकर्म्म कर्म्मार्थशून्यमभिधानमात्रं, स्थापनाकर्म्म पुस्तकपत्रादौ कर्मवर्गणानां सद्भावासद्भावरूपा स्थापना, द्रव्यकर्म व्यतिरिक्तं द्विधा—द्रव्यकर्म्म नोद्रव्यकर्म्म च, तत्र द्रव्यकर्म कर्म्मवर्गणान्तःपातिनः पुद्गलाः बन्धयोग्या बध्यमाना बद्धाश्चानुदीर्णा इति, नोद्रव्यकर्म्म कृषीवलादिकर्म्म। अथ कर्म्मवर्गणान्तःपातिनः पुद्गला द्रव्यकर्म्मेत्यवाचि, काः पुनस्ता वर्गणा इति सङ्कीर्त्यन्ते?, इह वर्गणाः सामान्येन चतुर्विधाः—द्रव्यक्षेत्रकालभावभेदात्, तत्र द्रव्यत एकद्व्यादिसङ्ख्येयासङ्ख्येयानन्तप्रदेशिकाः क्षेत्रतोऽप्येकद्व्यादिसङ्ख्येयासङ्ख्येयप्रदेशात्मिकाः कालत एकद्व्यादिसङ्ख्येयासङ्ख्येयसमयस्थितिकाः भावतो रूपरसगन्धस्पर्शसगतभेदात्मिकाः सामान्यतः, विशेषतस्तूच्यन्ते—तत्र परमाणूनामेका वर्गणा, एवमेकैकपरमाणूपचयात् सङ्ख्येयप्रदेशिकानां स्कन्धानां सङ्ख्येयाः असङ्ख्येयप्रदेशिकानामसङ्ख्येयाः, एताश्चौदारिकादिपरिणामाग्रहणयोग्याः, अनन्तप्रदेशिकानामप्यनन्ता अग्रहणयोग्याः, ता उल्लङ्घ्य औदारिकग्रहणयोग्यास्त्वनन्तानन्तप्रदेशिकाः खल्वनन्ता एव भवन्ति, तत्रायोग्योत्कृष्टवर्गणायां रूपे प्रक्षिप्ते औदारिकशरीरग्रहणयोग्या जघन्या वर्गणा भवति, पुनरेकैकप्रदेशवृद्ध्या प्रवर्द्धमाना औदारिकयोग्योत्कृष्टवर्गणा यावदनन्ता भवन्ति, अथ जघन्योत्कृष्टयोः को विशेषः?, जघन्यात् उत्कृष्टा विशेषाधिकाः, विशेषस्त्वस्या एवौदारिकजघन्यवर्गणाया अनन्तभागः, तस्य



१५

१८

२६

चानन्तपरमाणुमयत्वादेकैकोत्तरप्रदेशोपचये सत्यप्यौदारिकयोग्यवर्गणानां जघन्योत्कृष्टमध्यवर्त्तिनीनामानन्त्यं, तत औदारिक-योग्योत्कृष्टवर्गणायां रूपप्रक्षेपेणायोग्यवर्गणा जघन्या भवन्ति, एता अप्येकैकप्रदेशवृद्ध्योत्कृष्टान्ता अनन्ता भवन्ति, जघन्योत्कृष्टवर्गणानां को विशेषः ?, जघन्याभ्योऽसङ्ख्येयगुणा उत्कृष्टाः, ताश्च बहुप्रदेशत्वादतिसूक्ष्मपरिणामत्वाच्चौदारिकस्यानन्ता एवाग्रहणयोग्या भवन्ति, अल्पप्रदेशत्वाद्बादरपरिणामत्वाच्च वैक्रियस्यापीति, अत्र च यथा यथा प्रदेशोपचयस्तथा तथा विश्रसापरिणामवशाद्वर्गणानां सूक्ष्मतरत्वमवसेयम् । एतदेवोत्कृष्टोपरिरूपप्रक्षेपयोग्यायोग्यादिकं वैक्रियशरीरवर्गणानां जघन्योत्कृष्टविशेषलक्षणं चावसेयं, तथा वैक्रियाहारकान्तरालवर्त्ययोग्यवर्गणानां जघन्योत्कृष्टविशेषासङ्ख्येयगुणत्वमिति, पुनरप्ययोग्यवर्गणोपरि रूपप्रक्षेपात् जघन्याहारकशरीरयोग्यवर्गणा भवन्ति, ताश्च प्रदेशवृद्ध्या वर्द्धमाना उत्कृष्टा यावदनन्ता भवन्ति, अथ जघन्योत्कृष्टयोः कियदन्तरमिति ?, उच्यते, जघन्याभ्य उत्कृष्टा विशेषाधिकाः, को विशेष इति चेत् ?, जघन्यवर्गणाया एवानन्तभागः, तस्याप्यनन्तपरमाणुत्वादाहारकशरीरयोग्यवर्गणानां प्रदेशोत्तरवृद्धानामानन्त्यमिति भावना, तस्यामेवोत्कृष्टवर्गणायां रूपे प्रक्षिप्ते जघन्या आहारकाग्रहणयोग्यवर्गणाः, ततः प्रदेशवृद्ध्या वर्द्धमाना उत्कृष्टा यावदनन्ता एव आहारकस्य सूक्ष्मत्वाद् बहुप्रदेशत्वाच्चायोग्या एव भवन्ति, बादरत्वादल्पप्रदेशत्वाच्च तैजसस्येति, जघन्योत्कृष्टयोः कियदन्तरमिति ?, उच्यते, जघन्याभ्य उत्कृष्टा अनन्तगुणाः, केन गुणकारेणेति चेत्, अभव्येभ्योऽनन्तगुणाः सिद्धानामनन्तभाग इति, तदुपरि रूपे प्रक्षिप्ते तैजसशरीरवर्गणा जघन्याः, एता अपि प्रदेशवृद्ध्या वर्द्धमाना उत्कृष्टा यावदनन्ता भवन्ति, अथ जघन्योत्कृष्टयोः कियदन्तरं ?, जघन्याभ्य उत्कृष्टा विशेषाधिकाः, विशेषस्तु जघन्यवर्गणानन्तभागः, तस्याप्यनन्तप्रदेशत्वाज्जघन्योत्कृष्टान्तरालवर्गणानामानन्त्यं भवति, तैजसोत्कृष्टवर्गणोपरिरूपे प्रक्षिप्ते

गत्यग्रहणवर्गणा भवन्ति, एवमेकादिवृद्ध्योत्कृष्टान्ता अनन्ताः, ताश्चातिसूक्ष्मत्वाद् बहुप्रदेशत्वाच्च तैजसस्याग्रहणयोग्याः, बादरत्वात् अल्पप्रदेशत्वाच्च भाषाद्रव्यस्यापीति, जघन्योत्कृष्टयोरनन्तगुणत्वेन विशेषो, गुणकारश्चाभव्येभ्योऽनन्तगुणः सिद्धानामनन्तभाग इति, तस्यामयोग्योत्कृष्टवर्गणायां रूपे प्रक्षिप्ते जघन्या भाषाद्रव्यवर्गणा भवति, तस्याश्च प्रदेशवृद्ध्या उत्कृष्टवर्गणापर्यन्तान्यनन्तानि स्थानानि भवन्ति, जघन्योत्कृष्टयोर्विशेषो जघन्यवर्गणानन्तभागाधिकोत्कृष्टवर्गणा भवति, अत्राप्यनन्तभागस्यानन्तपरमाण्वात्मकत्वाद्भाषाद्रव्ययोग्यवर्गणानामानन्त्यमवसेयं, तदनेनैकादिप्रदेशवृद्धिप्रक्रमेणायोग्यवर्गणानां जघन्योत्कृष्टादिकं ज्ञातव्यं; नवरं जघन्योत्कृष्टयोर्भेदोऽयम्–अभव्यानन्तगुणः सिद्धानन्तभागात्मकः, तासां च पूर्वहेतुकदम्बकादेव भाषाद्रव्यानापानद्रव्ययोरयोग्यत्वमवसेयम्, अयोग्योत्कृष्टवर्गणायां रूपे प्रक्षिप्ते आनापानवर्गणा जघन्या, ततो रूपोत्तरवृद्ध्योत्कृष्टवर्गणान्ता अनन्ता भवन्ति, जघन्यात उत्कृष्टा जघन्यानन्तभागाधिका, तदुपरि रूपोत्तरवृद्ध्या जघन्योत्कृष्टभेदेनाग्रहणवर्गणा, विशेषस्त्वभव्येभ्योऽनन्तगुणः सिद्धानामनन्तभागः,पुनरप्ययोग्योत्कृष्टवर्गणोपरि प्रदेशादिवृद्ध्या जघन्योत्कृष्टभेदा मनोद्रव्यवर्गणा, जघन्यवर्गणानन्तभागो विशेषः, पुनरपि प्रदेशोत्तरक्रमेणाग्रहणवर्गणा,विशेषश्चाभव्यानन्तगुणादिकः, ताश्च प्रदेशबहुत्वादतिसूक्ष्मत्वाच्च मनोद्रव्यायोग्याः, अल्पप्रदेशत्वाद् बादरत्वाच्च कार्म्मणस्यापि, तदुपरि रूपे प्रक्षिप्ते जघन्याः कार्म्मणशरीरवर्गणाः, पुनरप्येकैकप्रदेशवृद्ध्या वर्द्धमाना उत्कृष्टा यावदनन्ता भवन्ति, अथ जघन्योत्कृष्टयोः कः प्रतिविशेष इति ?, उच्यते, जघन्यवर्गणानन्तभागाधिकोत्कृष्टवर्गणा, स चानन्तभागोऽनन्तानन्तपरमाण्वात्मकोऽत एवानन्तभेदभिन्नाः कर्मद्रव्यवर्गणा एवं भवन्ति, आभिश्चात्र प्रयोजनं, 'द्रव्यकर्म्मणो व्याचिख्यासितत्वादिति । शेषा अपि वर्गणाः क्रमायाताः विनेयजनानुग्रहार्थं व्युत्पाद्यन्ते–पुनरप्युत्कृष्टकर्म्मवर्गणोपरि रूपादिप्र-

१५ वर्गणाः

२०

२८

क्षेपेण जघन्योत्कृष्टभेदभिन्ना ध्रुववर्गणाः, जघन्यास्य उत्कृष्टाः सर्वजीवेभ्योऽनन्तगुणाः, तदुपरि रूपप्रक्षेपादिक्रमेणानन्ता एव जघन्योत्कृष्टभेदा अध्रुववर्गणाः, अध्रुवत्वादध्रुवाः, पाक्षिकसद्भावादध्रुवत्वं, जघन्योत्कृष्टभेदोऽनन्तरोक्त एव, तदुत्कृष्टोपरि रूपादिप्रवृद्धा जघन्योत्कृष्टभेदा अनन्ता एव शून्या वर्गणा भवन्ति, जघन्योत्कृष्टविशेषः पूर्ववत्, तासां संसारेऽप्यभावात् शून्यवर्गणा इत्यभिधानम्, एतदुक्तं भवति–अध्रुववर्गणोपरि प्रदेशवृद्ध्याऽनन्ता अपि न सम्भवन्तीति प्रथमा शून्यवर्गणा, तदुपरि रूपादिवृद्ध्या जघन्योत्कृष्टभेदाः प्रत्येकशरीरवर्गणा भवन्ति, जघन्यातः क्षेत्रपल्योपमासङ्ख्येयभागप्रदेशगुणोत्कृष्टा, तदुपरि रूपोत्तरादिवृद्ध्या जघन्योत्कृष्टभेदा अनन्ता एव शून्यवर्गणा भवन्ति, जघन्यवर्गणात उत्कृष्टा स्वसङ्ख्येयभागप्रदेशगुणा, तदसङ्ख्येयभागोऽप्यसङ्ख्येयलोकात्मक इति द्वितीया शून्यवर्गणा, तदुपरि रूपादिवृद्ध्या बादरनिगोदशरीरवर्गणा, जघन्यातः क्षेत्रपल्योपमासङ्ख्येयभागप्रदेशगुणोत्कृष्टा, तदुपरि रूपादिवृद्ध्या जघन्योत्कृष्टभेदा तृतीया शून्यवर्गणा, उत्कृष्टा जघन्यातोऽसङ्ख्येयगुणा, को गुणकार इति?, उच्यते, अङ्गुलासङ्ख्येयभागप्रदेशराशेरावलिकाकालासङ्ख्येयभागसमयप्रमाणकृतपौनःपुन्यवर्गमूलस्यासङ्ख्येयभागप्रदेशप्रमाण इति, तदुपरि रूपोत्तरवृद्ध्या जघन्योत्कृष्टभेदा सूक्ष्मनिगोदशरीरवर्गणा, जघन्यात उत्कृष्टा आवलिकाकालासंख्येयभागसमयगुणा, तदुपरि रूपोत्तरवृद्ध्या जघन्योत्कृष्टभेदा चतुर्थी शून्यवर्गणा, जघन्यात उत्कृष्टा चतुरस्रीकृतलोकस्यासङ्ख्येयाः श्रेण्यः, ताश्च प्रतरासङ्ख्येयभागतुल्या इति, तदुपरि रूपादिवृद्ध्या जघन्योत्कृष्टभेदा महास्कन्धवर्गणा, जघन्यात उत्कृष्टा क्षेत्रपल्योपमासङ्ख्येयगुणा संख्येयगुणा वेति। उक्ताः समासतो वर्गणाः, विशेषार्थिना तु कर्मप्रकृतिरवलोकनीयेति। साम्प्रतं प्रयोगकर्म, वीर्यान्तरायक्षयोपशमाविर्भूतवीर्येणात्मना प्रकर्षेण युज्यत इति प्रयोगः, स च मनोवाक्कायलक्षणः पञ्चदशधा, कथमिति?, उच्यते,

१०

तत्र मनोयोगः सत्यासत्यमिश्रानुभयरूपश्चतुर्द्धा, एवं वाग्योगोऽपि, काययोगः सप्तधा–औदारिकौदारिकमिश्रवैक्रियवैक्रियमिश्राहारकाहारकमिश्रकार्मणयोगभेदात्, तत्र मनोयोगो मनःपर्याप्त्या पर्याप्तस्य मनुष्यादेः, वाग्योगोऽपि द्वीन्द्रियादीनाम्, औदारिकयोगस्तिर्यग्मनुजयोः शरीरपर्याप्तेरूर्द्धं, तदारतस्तु मिश्रः, केवलिनो वा समुद्घातगतस्य द्वितीयषष्ठसप्तमसमयेषु, वैक्रियकाययोगो देवनारकबादरवायूनाम्, अन्यस्य वा वैक्रियलब्धिमतः, तन्मिश्रस्तु देवनारकयोरुत्पत्तिसमयेऽन्यस्य वा वैक्रियं निर्वर्त्तयतः, आहारककाययोगश्चतुर्दशपूर्वविद आहारकशरीरस्थस्य, तन्मिश्रस्तु निर्वर्त्तनाकाले, कार्मणयोगो विग्रहगतौ केवलिसमुद्घाते वा तृतीयचतुर्थपञ्चमसमयेष्विति। तदनेन पञ्चदशविधेनापि योगेनात्माऽष्टौ प्रदेशान् विहायोत्तप्तभाजनोदकवदुद्वर्त्तमानैः सर्वैरेवात्मप्रदेशैरात्मप्रदेशावष्टब्धाकाशदेशस्थं कार्मणशरीरयोग्यं कर्मदलिकं यद् बध्नाति तत्प्रयोगकर्मेत्युच्यते, उक्तं च—"जाव णं एस जीवे एयइ वेयइ चलइ फंदई[1]त्यादि ताव णं अट्ठविहबंधए वा सत्तविहबंधए वा छव्विहबंधए वा एगविहबंधए वा नो णं अबंधए"।



समुदानकर्म सम्पूर्वादाङ्पूर्वाच्च ददातेर्ल्युडन्तात् पृषोदरादिपाठेन आकारस्योकारादेशेन रूपं भवति, तत्र प्रयोगकर्मणैकरूपतया गृहीतानां कर्मवर्गणानां सम्यग्–मूलोत्तरप्रकृतिस्थित्यनुभावप्रदेशबन्धभेदेनाङ्–मर्यादया देशसर्वोपघातिरूपया तथा स्पृष्टनिधत्तनिकाचितावस्थया च स्वीकरणं समुदानं तदेव कर्म समुदानकर्म, तत्र मूलप्रकृतिबन्धो ज्ञानावरणीयादिः, उत्तरप्रकृतिबन्धस्तूच्यते–उत्तरप्रकृतिबन्धो ज्ञानावरणीयं पञ्चधा–मतिश्रुतावधिमनःपर्यायकेवलावरणभेदात्, तत्र केवलावारकं सर्वघाति शेषाणि तु देशसर्वघातीन्यपि, दर्शनावरणीयं नवधा–निद्रापञ्चकदर्शनचतुष्टयभेदात्, तत्र निद्रापञ्चकं प्राप्तदर्शनलब्ध्युपयोगोपघातकारि, दर्शन-

[1] यावदेष जीव एजते व्येजते चलति स्पन्दते तावदष्टविधबन्धको वा सप्तविधबन्धको वा षड्विधबन्धको वा एकविधबन्धको वा नैवाबन्धकः

चतुष्टयं तु दर्शनलब्धिप्राप्तेरेव, अत्रापि केवलदर्शनावरणं सर्वघाति शेषाणि तु देशतः, वेदनीयं द्विधा–सातासातभेदात्, मोहनीयं द्विधा–दर्शनचारित्रभेदात्, तत्र दर्शनमोहनीयं त्रिधा–मिथ्यात्वादिभेदात्, बन्धतस्त्वेकविधं, चारित्रमोहनीयं षोडशकषायनवनोकषायभेदात्पञ्चविंशतिविधम्, अत्रापि मिथ्यात्वं सञ्ज्वलनवर्ज्या द्वादश कषायाश्च सर्वघातिन्यः, शेषास्तु देशघातिन्य इति, आयुष्कं चतुर्धा–नारकादिभेदात्, नाम द्विचत्वारिंशद्भेदं गत्यादिभेदात् त्रिनवतिभेदं चोत्तरोत्तरप्रकृतिभेदात्, गतिश्चतुर्द्धा जातिरेकेन्द्रियादिभेदात् पञ्चधा शरीराणि औदारिकादिभेदात् पञ्चधा औदारिकवैक्रियाहारकभेदादङ्गोपाङ्गं त्रिधा, निर्माणनाम सर्वजीवशरीरावयवनिष्पादकमेकधा बन्धननाम औदारिकादिकर्म्मवर्गणैकत्वापादकं पञ्चधा, सङ्घातनामौदारिकादिकर्म्मवर्गणारचनाविशेषसंस्थापकं पञ्चधा, संस्थाननाम समचतुरस्रादि षोढा, संहनननाम वज्रऋषभनाराचादि षोढैव, स्पर्शोऽष्टधा रसः पञ्चधा गन्धो द्विधा वर्णः पञ्चधा आनुपूर्वी नारकादिश्चतुर्द्धा विहायोगतिः प्रशस्ताप्रशस्तभेदात् द्विधा, अगुरुलघूपघातपराघातातपोद्योतोच्छ्वासप्रत्येकसाधारणत्रसस्थावरशुभाशुभसुभगदुर्भगसुस्वरदुःस्वरसूक्ष्मबादरपर्याप्तकापर्याप्तकस्थिरास्थिरादेयानादेययशःकीर्त्तिअयशःकीर्त्तितीर्थंकरनामानि प्रत्येकमेकविधानीति, गोत्रमुच्चनीचभेदात् द्विधा, अन्तरायं दानलाभभोगोपभोगवीर्यभेदात् पञ्चधेत्युक्तः प्रकृतिबन्धो, बन्धकारणानि तु गाथाभिरुच्यन्ते–[4]"पडिणीयमंतराइय उवघाए तप्पओसणिण्हवणे। आवरणदुगं बन्धइ भूओ अच्चासणाए य ॥१॥ भूयाणुकंपवयजोगउज्जुओ खंतिदाणगुरुभत्तो। बन्धइ भूओ सायं विवरीए बन्धई इयरं ॥२॥ अरहंतसिद्धचेइयतवसुअगुरुसाधुसं-





१ सप्तधा-अनन्तानुबन्धिमिथ्यात्वादिभेदात्, बन्धतस्तु पञ्चधा प्र. २ द्वादश प्र. ३ एकत्रिंशतिविधम् प्र. ४ प्रत्यनीकतोऽन्तराय उपघाते तत्प्रद्वेषे निह्नवने। आवरणद्विकं बध्नाति भूतोऽत्याशातनया च ॥१॥ भूतानुकम्पाव्रतयोगोद्युक्तः क्षान्ति (मान्)दानी गुरुभक्तः। बध्नाति भूतः सातं विपरीतो बध्नातीतरत् ॥२॥

पपडिर्णाओ। बंधइ दंमणमोहं अणंतसंसारिओ जेणं ॥३॥ तिव्वकसाओ बहुमोहपरिणतो रागदोससंजुत्तो। बंधइ चरित्तमोहं दुविहंपि चरित्तगुणघाई ॥४॥ मिच्छद्दिट्ठी महारंभपरिग्गहो तिव्वलोभ णिस्सीलो। निरआउयं निबंधइ पावमती रोद्दपरिणामो ॥५॥ उम्मग्गदेसओ मग्गणासओ गूढहियय माइल्लो। सढसीलो अ ससल्लो तिरिआउं बंधई जीवो ॥६॥ पगतीएँ तणुकसाओ दाणरओ सीलसंजमविहूणो। मज्झिमगुणेहिँ जुत्तो मणुयाउं बन्धई जीवो ॥७॥ अणुव्वयमहव्वएहि य बालतवोऽकामनिज्जराए य। देवाउयं णिबंधइ सम्मद्दिट्ठी उ जो जीवो ॥८॥ मणवयणकायवंको माइल्लो गारवेहिँ पडिबद्धो। असुभं बंधइ नामं तप्पडिपक्खेहिँ सुभनामं ॥९॥ अरिहंतादिसु भत्तो सुत्तरुई पयणुमाण गुणपेही। बन्धइ उच्चागोयं विवरीए बंधई इयरं ॥१०॥ पाणवहादीसु रतो जिणपूयामोक्खमग्गविग्घयरो। अज्जेइ अंतरायं ण लहइ जेणिच्छियं लाभं ॥११॥ स्थितिबन्धो मूलोत्तरप्रकृतीनामुत्कृष्टजघन्यभेदः, तत्रोत्कृष्टो मूलप्रकृतीनां ज्ञानावरणीयदर्शनावरणीयवेदनीयान्तरायाणां त्रिंशत्सागरोपमकोटीकोट्यः, यस्य च यावत्यः कोटी-

---

१ अर्हत्सिद्धचैत्यतपःश्रुतगुरुसाधुसङ्घप्रत्यनीकः। बध्नाति दर्शनमोहमनन्तसंसारिको येन ॥३॥ तीव्रकषायो बहुमोहपरिणतो रागद्वेषसंयुक्तः। बध्नाति चारित्रमोहं द्विविधमपि चारित्रगुणघाति ॥४॥ मिथ्यादृष्टिर्महारम्भपरिग्रहस्तीव्रलोभो निःशीलः। नरकायुष्कं निबध्नाति पापमती रौद्रपरिणामः ॥५॥ उन्मार्गदेशको मार्गनाशको गूढहृदयो मायावी। शाठ्यशीलश्च सशल्यस्तिर्यगायुर्बध्नाति जीवः ॥६॥ प्रकृत्या तनुकषायो दानरतः शीलसंयमविहीनः। मध्यमगुणैर्युक्तो मनुजायुर्बध्नाति जीवः ॥७॥ अणुव्रतमहाव्रतैश्च बालतपोऽकामनिर्जरया च। देवायुर्निबध्नाति सम्यग्दृष्टिश्च यो जीवः ॥८॥ मनोवचनकायवक्रो मायावी गौरवैः प्रतिबद्धः। अशुभं बध्नाति नाम तत्प्रतिपक्षैः शुभनाम ॥९॥ अर्हदादिषु भक्तः सूत्ररुचिः प्रतनुमानो गुणप्रेक्षी। १ बध्नात्युच्चैर्गोत्रं विपरीतो बध्नातीतरत् ॥१०॥ प्राणवधादिषु रतो जिनपूजामोक्षमार्गविघ्नकरः। अर्जयत्यन्तरायं न लभते येनेप्सितं लाभम् ॥११॥

बन्धहेतवः

१५

२०

कोट्यः स्थितिस्तस्य तावन्त्येव वर्षशतान्यबाधा, तदुपरि प्रदेशतो विपाकतो वा अनुभवः, एतदेव प्रतिकर्म्मस्थिति योजनीयं, सप्ततिर्मोहनीयस्य, नामगोत्रयोर्विंशतिः, त्रयस्त्रिंशत्सागरोपमाण्यायुषः पूर्वकोटीत्रिभागोऽबाधा। जघन्यो ज्ञानदर्शनावरणमोहनीयान्तरायाणामन्तर्मुहूर्त्तं, नामगोत्रयोरष्टौ मुहूर्त्ताः, वेदनीयस्य द्वादश, आयुषः क्षुल्लकभवः, स चानापानसप्तदशभागः। साम्प्रतमेतदेव बन्धद्वयमुत्तरप्रकृतीनामुच्यते—तत्रोत्कृष्टो मतिश्रुतावधिमनःपर्यायकेवलावरणनिद्रापञ्चकचक्षुर्दर्शनादिचतुष्कासद्वेद्यदानाद्यन्तरायपञ्चकभेदानां विंशतेरुत्तरप्रकृतीनां त्रिंशत्सागरोपमकोटीकोट्यः, स्त्रीवेदसातवेदनीयमनुजगत्यानुपूर्वीणां चतसृणां पञ्चदश, मिथ्यात्वस्यौधिकमोहनीयवत्, कषायषोडशकस्य चत्वारिंशत् कोटीकोट्यः, नपुंसकवेदारतिशोकभयजुगुप्सानरकतिर्यग्गत्येकेन्द्रियपञ्चेन्द्रियजात्यौदारिकवैक्रियशरीरतदङ्गोपाङ्गद्वयतैजसकार्म्मणहुण्डसंस्थानान्त्यसंहननवर्णगन्धरसस्पर्शनरकतिर्यगानुपूर्वीअगुरुलघूपघातपराघातोच्छ्वासातपोद्योताप्रशस्तविहायोगतित्रसस्थावरबादरपर्याप्तकप्रत्येकास्थिराशुभदुर्भगदुःस्वरानादेयायशःकीर्त्तिनिर्माणनीचैर्गोत्ररूपाणां त्रिचत्वारिंशत उत्तरप्रकृतीनां विंशतिः, पुंवेदहास्यरतिदेवगत्यानुपूर्वीद्व्याद्यसंस्थानसंहननप्रशस्तविहायोगतिस्थिरशुभसुभगसुस्वरादेययशःकीर्त्त्युच्चैर्गोत्ररूपाणां पञ्चदशानामुत्तरप्रकृतीनां दश, न्यग्रोधसंस्थानद्वितीयसंहननयोर्द्वादश तृतीयसंस्थाननाराचसंहननयोश्चतुर्दश कुब्जसंस्थानार्धनाराचसंहननयोः षोडश वामनसंस्थानकीलिकासंहननद्वित्रिचतुरिन्द्रियजातिसूक्ष्मापर्याप्तकसाधारणानामष्टानामुत्तरप्रकृतीनामष्टादश, आहारकतदङ्गोपाङ्गतीर्थकरनाम्नां सागरोपमकोटीकोटिर्भिन्नान्तर्मुहूर्त्तमबाधा, देवनारकायुषोरौघिकवत्, तिर्यग्मनुष्यायुषः पल्योपमत्रयं पूर्वकोटित्रिभागोऽबाधा। उक्त उत्कृष्टः स्थितिबन्धो, जघन्य उच्यते—मत्यादिपञ्चकचक्षुर्दर्शनाद्यावरणचतुष्कसञ्ज्वलनलोभदानाद्यन्तरायपञ्चकभेदानां पञ्चदशानामन्तर्मुहूर्त्तमन्तर्मुहूर्त्तमेवाबाधा, निद्रापञ्चकासातवेदनीयानां

५

१०

१० १४० १ उ० प्र. आ. ९६

स्थित्य-नुभावौ

ष्णां सागरोपमस्य त्रयः सप्तभागाः पल्योपमासङ्ख्येयभागन्यूनाः, सातावेदनीयस्य द्वादश मुहूर्त्ता अन्तर्मुहूर्त्तमबाधा, मिथ्यात्वस्य सागरोपमं पल्योपमासङ्ख्येयभागन्यूनम्, आद्यकषायद्वादशकस्य चत्वारः सप्तभागाः सागरोपमस्य पल्योपमासङ्ख्येयभागन्यूनाः, सञ्ज्वलनक्रोधस्य मासद्वयं, मानस्य मासः, तदर्धं मायायाः, पुंवेदस्याष्टौ संवत्सराः, सर्वत्रान्तर्मुहूर्त्तमबाधा, शेषनोकषायमनुष्यतिर्यग्गतिपञ्चेन्द्रियजात्यौदारिकतदङ्गोपाङ्गतैजसकार्म्मणषट्संस्थानसंहननवर्णगन्धरसस्पर्शतिर्यग्मनुजानुपूर्व्यगुरुलघूपघातपराघातोच्छ्वासातपोद्योतप्रशस्ताप्रशस्तविहायोगतियशःकीर्त्तिवर्जत्रसादिविंशतिकनिर्म्माणनीचैर्गोत्रदेवगत्यानुपूर्वीद्वयनरकगत्यानुपूर्वीद्वयवैक्रियशरीरतदङ्गोपाङ्गरूपाणामष्टषष्टयुत्तरप्रकृतीनां सागरोपमस्य द्वौ सप्तभागौ पल्योपमासङ्ख्येयभागन्यूनौ अन्तर्मुहूर्त्तमबाधा, वैक्रियषट्कस्य तु सागरोपमसहस्रस्य द्वौ सप्तभागौ पल्योपमासङ्ख्येयभागन्यूनावन्तर्मुहूर्त्तमबाधा, आहारकतदङ्गोपाङ्गतीर्थकरनाम्नां सागरोपमकोटीकोटिरभ्यन्तर्मुहूर्त्तमबाधा, ननु चोत्कृष्टोऽप्येतावन्मात्र एवाभिहितस्ततः कोऽनयोर्भेद इति ?, उच्यते, उत्कृष्टात् सङ्ख्येयगुणहीनो जघन्य इति, यशःकीर्त्त्युच्चैर्गोत्रयोरष्ट मुहूर्त्तान्यन्तर्मुहूर्त्तमबाधा, देवनारकायुषोर्दश वर्षसहस्राण्यन्तर्मुहूर्त्तमबाधा, तिर्यग्मनुजायुषोः क्षुल्लकभवोऽन्तर्मुहूर्त्तमबाधेति, बन्धनसङ्घातयोरौदारिकादिशरीरसहचरितत्वात्तद्वत एवोत्कृष्टजघन्यभेदोऽवगन्तव्य इति । उक्तः स्थितिबन्धः, अनुभावबन्धस्तूच्यते—तत्र शुभाशुभानां कर्मप्रकृतीनां प्रयोगकर्मणोपात्तानां प्रकृतिस्थितिप्रदेशरूपाणां तीव्रमन्दानुभावतयाऽनुभवनमनुभावः, स चैकद्वित्रिचतुःस्थानभेदेनानुगन्तव्यः, तत्राशुभप्रकृतीनां कोशातकीरससमक्वथ्यमानार्द्धत्रिभागपादावशेषतुल्यतया तीव्रानुभावोऽवगन्तव्यो, मन्दानुभावस्तु जातिरसैकद्वित्रिचतुर्गुणोदकप्रक्षेपास्वादतुल्यतयेति, शुभानां

१५

२०

२५

१ स्थितिशिपर्यादि० प्र. २ देवद्विकनरकद्विकवैक्रियद्विकआहारकद्विकयशःकीर्तितीर्थकरनामकर्मरहितानां शेषनामप्रकृतीनां तथा नीचैर्गोत्रस्य चैतासामुत्तरप्रकृतीनां

क्षीरेक्षुरसदृष्टान्तः पूर्ववद्योजनीयः, अत्र च कोशातकीक्षुरसादावुदकविन्द्वादिप्रक्षेपात् व्यत्ययाद्वा भेदानामानन्त्यमवसेयमिति । अत्र चायूंषि भवविपाकीनि, आनुपूर्व्यः क्षेत्रविपाकिन्यः, शरीरसंस्थानाङ्गोपाङ्गसङ्घातसंहननवर्णगन्धरसस्पर्शागुरुलघूपघातपराघातो(च्छ्वासो) द्योतातपनिर्माणप्रत्येकसाधारणस्थिरास्थिरशुभाशुभरूपाः पुद्गलविपाकिन्य', शेषास्तु ज्ञानावरणादिका जीवविपाकिन्य इत्युक्तोऽनुभागबन्धः । प्रदेशबन्धस्त्वेकविधादिबन्धकापेक्षया भवति, तत्र यदैकविधं बध्नाति तदा प्रयोगकर्मणैकसमयोपात्ताः पुद्गलाः सातावेदनीयभावेन विपरिणमन्ते, षड्विधबन्धकस्य त्वायुर्मोहनीयवर्ज्जाः षोढा, सप्तविधबन्धकस्य सप्तधा, अष्टविधबन्धकस्याष्टधेति, तत्राद्यसमयप्रयोगात्ताः पुद्गलाः समुदानेन द्वितीयादिसमयेऽल्पबहुप्रदेशतयाऽनेन क्रमेण व्यवस्थापयति—तत्रायुषः स्तोकाः पुद्गलाः, तद्विशेषाधिकाः प्रत्येकं नामगोत्रयोः, परस्परं तुल्याः, तद्विशेषाधिकाः प्रत्येकं ज्ञानदर्शनावरणान्तरायाणां, तेभ्यो विशेषाधिका मोहनीये । ननु च तेभ्यो विशेषाधिका इत्यत्र निर्द्धारणे पञ्चमी, सा च "पञ्चमी विभक्ते" (पा० २ ३ ४२) इत्यनेन सूत्रेण विधीयते, अस्य चायमर्थो-विभागो विभक्तं तत्र पञ्चमी विधीयमाना यत्रात्यन्तविभागस्तत्रैव भवति, यथा माथुरेभ्यः पाटलिपुत्रका अभिरूपतराः, इह च कर्म्मपुद्गलाना सर्वदैकत्वं, तथावस्थानामेव च बुद्धया बहुप्रदेशादिगुणेन पृथक्करणं चिकीर्षितं, तत्र षष्ठी सप्तमी वा न्याय्या, तद्यथा-गवां गोषु वा कृष्णा सम्पन्नक्षीरतमेति, नैष दोषो, यत्रावध्यवधिमतोः सामान्यवाची शब्दः प्रयुज्यते तत्रैव षष्ठीसप्तम्यौ "यतश्च निर्द्धारण (पा० २-३ ४१) मित्यनेन सूत्रेण विधीयेते, यथा गवां कृष्णा सम्पन्नक्षीरतमा, मनुष्येषु पाटलिपुत्रकाः आढ्यतराः, कर्म्मवर्गणापुद्गलानां वेदनीये बहुतरा इति, यत्र पुनर्विशेषवाची शब्दोऽवधित्वेनोपादीयते तत्र पञ्चम्येव, यथा शाण्डमुण्डशबलशावलेयधवलधावलेयव्यक्तिभ्यः कृष्णा सम्पन्नक्षीरतमेति, अतो नात्र विभागः कारणमविभागो

ग, यतो माथुरपाटलिपुत्रकादिविभागेन विभक्तानामपि सामान्यमनुष्यादिशब्दोच्चारणे षष्ठीसप्तम्यौ भवतो, यत्र तु पुनर्माथुरादिविशेषोऽवधित्वेनोपादीयते तत्र कार्यवशादेकस्थानामपि पञ्चम्येव, तदिह सत्यपि कर्म्मवर्गणानामेकत्वे तद्विशेषस्यावधित्वेनोपादानात्पञ्चम्येव न्याय्येति, तद्विशेषाधिका वेदनीये। उक्तः प्रदेशबन्धः समुदानकर्म्मापीति। साम्प्रतमीर्यापथिकं, "ईर गतिप्रेरणयोः" अस्माद्भावे ण्यत्, ईरणमीर्या तस्याः पन्था ईर्यापथस्तत्र भवमीर्यापथिकं, कथेर्यायाः पन्था भवति ?, यदाश्रिता सा भवतीति, एतच्च व्युत्पत्तिनिमित्तं यतस्तिष्ठतोऽपि तद्भवति, प्रवृत्तिनिमित्तं तु स्थित्यभावः, तच्चोपशान्तक्षीणमोहसयोगकेवलिनां भवति, सयोगकेवलिनोऽपि हि तिष्ठतोऽपि सूक्ष्मगात्रसञ्चारा भवन्ति, उक्तं च—"केवली णं भंते! अस्सिं समयंसि जेसु आगासपदेसेसु हत्थं वा पायं वा ओगाहित्ता णं पडिसाहरेज्जा, पभू णं भंते! केवली तेसु चेवागासपदेसेसु पडिसाहरित्तए ?, णो इणट्ठे समट्ठे, कहं ?, केवलिस्स णं चलाइं सरीरोवगरणाइं भवंति, चलोवगरणत्ताए केवली णो सञ्चाएति तेसु चेवागासपदेसेसु हत्थं वा पायं वा पडिसाहरित्तए" तदेवं सूक्ष्मतरगात्रसञ्चाररूपेण योगेन यत्कर्म्म बध्यते तदीर्यापथिकम्—ईर्याप्रभवं, ईर्याहेतुकमित्यर्थः, तच्च द्विसमयस्थितिकम्—एकस्मिन् समये बद्धं द्वितीये वेदितं, तृतीयसमये तदपेक्षया चाकर्म्मतेति, कथमिति ?, उच्यते, यतस्तत्प्रकृतितः सातावेदनीयमकषायत्वात् स्थित्यभावेन बध्यमानमेव परिशटति, अनुभावतोऽनुत्तरोपपातिकसुखातिशायि, प्रदेशतः स्थूलरूक्षशुक्लादिबहुप्रदेशमिति, उक्तं च—"अप्पं बायरमउयं बहुं च लुक्खं च सुकिलं चेव। मंदं महव्वतंतिय सातावहुलं च तं





१ केवली भदन्त! अस्मिन् समये येष्वाकाशप्रदेशेषु हस्तं वा पादं वाऽवगाह्य प्रतिसंहरेत्, प्रभुर्भदन्त! केवली तेष्वेवाकाशप्रदेशेषु प्रतिसंहर्त्तुम् ?, नैषोऽर्थः समर्थः, कथम् ?, केवलिनश्चलानि शरीरोपकरणानि भवन्ति, चलोपकरणतया केवली न शक्नोति तेष्वेवाकाशप्रदेशेषु हस्तं वा पादं वा प्रतिसंहर्त्तुम्.

कर्म्म ॥१॥" अल्पं स्थितितः स्थितेरेवाभावात्, बादरं परिणामतो,ऽनुभावतो मृद्वनुभावं, बहु च बहुप्रदेशैः, रूक्षं स्पर्शतो, वर्णेन शुक्लं, मन्दं लेपतः, स्थूलचूर्णमुष्टिमृष्टकुड्यापतितलेपवत्, महाव्ययमेकसमयेनैव सर्वापगमात्, सातावहुलमनुत्तरोपपातिकसुखातिशायीति। उक्तमीर्यापथिकम्, अधुना आधाकर्म्म, यद् आधाय–निमित्तत्वेनाश्रित्य पूर्वोक्तमष्टप्रकारमपि कर्म्म बध्यते तदाधाकर्म्मेति, तच्च शब्दस्पर्शरसरूपगन्धादिकमिति, तथाहि–शब्दादिकामगुणविषयाभिष्वङ्गवान् सुखलिप्सुर्मोहोपहतचेताः परमार्थासुखमयेष्वपि सुखाध्यारोपं विदधाति, तदुक्तम्–"दुःखात्मकेषु विषयेषु सुखाभिमानः, सौख्यात्मकेषु नियमादिषु दुःखबुद्धिः। उत्कीर्णवर्णपदपङ्क्तिरिवान्यरूपा, सारूप्यमेति विपरीतगतिप्रयोगात् ॥१॥" एतदुक्तं भवति–कर्म्मनिमित्तभूता मनोज्ञेतरशब्दादय एवाधाकर्म्मेत्युच्यन्ते इति। तपःकर्म्म तस्यैवाष्टप्रकारस्य कर्म्मणो बद्धस्पृष्टनिधत्तनिकाचितावस्थस्यापि निर्जराहेतुभूतं बाह्याभ्यन्तरभेदेन द्वादशप्रकारं तपःकर्म्मेत्युच्यते। कृतिकर्म्म तस्यैव कर्म्मणोऽपनयनकारकमर्हत्सिद्धाचार्योपाध्यायविषयमवनामादिरूपमिति। भावकर्म्म पुनरबाधामुल्लङ्घ्य स्वोदयेनोदीरणाकरणेन वोदीर्णाः पुद्गलाः प्रदेशविपाकाभ्यां भवक्षेत्रपुद्गलजीवेष्वनुभावं ददतो भावकर्म्मशब्देनोच्यन्त इति। तदेवं नामादिनिक्षेपेण दशधा कर्म्मोक्तम्, इह तु समुदानकर्म्मोपात्तेनाष्टविधकर्म्मणाऽधिकार इति गाथाशकलेन दर्शयति–

अट्ठविहेण उ कम्मेण एत्थ होई अहीगारो ॥१९३॥

गाथार्द्धं कण्ठ्यमिति गाथाद्वयपरमार्थः॥ तदेवं सूत्रानुगमेन सूत्रे समुच्चारिते निक्षेपनिर्युक्त्यनुगमेन प्रतिपदं निक्षिप्ते नामादिनिक्षेपे च व्याख्याते तत्पुत्तरकालं सूत्रं विव्रियते—

**जे गुणे से मूलट्ठाणे, जे मूलट्ठाणे से गुणे। इति से गुणट्ठी महया परियावेणं पुणो पुणो**

५

१०

वसे पमत्ते-माया मे पिया मे भज्जा मे पुत्ता मे धूआ मे ण्हुसा मे सहिसयणसंगंथसंथुआ मे विवित्तुवगरणपरिवट्टणभोयणच्छायणं मे। इच्चत्थं गड्डिए लोए वसे पमत्ते अहो य राओ य परितप्पमाणे कालाकालसमुट्ठाई संजोगट्ठी अट्ठालोभी आलुंपे सहसाकारे विणिविट्ठचित्ते, एत्थ सत्थे पुणो पुणो, अप्पं च खलु आउयं इहमेगेसिं माणवाणं, तंजहा-॥६३॥



अस्य चानन्तरपरम्परादिसूत्रैः सम्बन्धो वाच्यः, तत्रानन्तरसूत्रसम्बन्धः-'से हु मुणी परिण्णायकम्मे'ति, स मुनिः परिज्ञातकर्म्मा भवति यस्यैतद्गुणमूलादिकमधिगतं भवति, परम्परसूत्रसम्बन्धस्तु 'से जं पुण जाणिज्जा सहसंमुइयाए परवागरणेणं अण्णेसिं वा सोचा' स्वसम्मत्या परव्याकरणेन तीर्थकरोपदेशादन्येभ्यो वाऽऽचार्यादिभ्यः श्रुत्वा जानीयात्-परिच्छिन्द्यात्, किं तदित्युच्यते-'जे गुणे से मूलट्ठाणे', आदिसूत्रसम्बन्धस्तु 'सुयं मे आउसंतेणं भगवया एवमक्खायं' किं तत् श्रुतं भवता यद्भगवता आयुष्मताऽऽख्यातमिति ?, उच्यते, 'जे गुणे से मूलट्ठाणे', 'य' इति सर्वनाम प्रथमान्तं मागधदेशीवचनत्वादेकारान्तं सामान्योद्देशार्थाभिधायीति, गुंण्यते-भिद्यते विशेष्यतेऽनेन द्रव्यमिति गुणः, स चेह शब्दरूपरसगन्धस्पर्शादिकः, 'स' इति सर्वनाम प्रथमान्तमुद्दिष्टनिर्देशार्थाभिधायीति, 'मूल'मिति निमित्तं कारणं प्रत्यय इति पर्यायाः, तिष्ठन्त्यस्मिन्निति स्थानं, मूलस्य स्थानं मूलस्थानं, 'व्यवच्छेदफलत्वाद् वाक्याना'मिति न्यायात् य एव शब्दादिकः कामगुणः स एव संसारस्य-नारकतिर्यङ्नरामरसंसृतिलक्षणस्य यन्मूलं कारणं कषायास्तेषां स्थानम्-आश्रयो वर्त्तते, यस्मान्मनोज्ञेतरशब्दाद्युपलब्धौ कषायोदयः, ततोऽपि संसार इति, अथवा

मूलमिति-कारणं, तच्चाष्टप्रकारं कर्म्म, तस्य स्थानम्-आश्रयः कामगुण इति, अथवा मूलं-मोहनीयं तद्भेदो वा कामस्तस्य स्थानं शब्दादिको विषयगुणः, अथवा मूलं-शब्दादिको विषयगुणस्तस्य स्थानमिष्टानिष्टविषयगुणभेदेन व्यवस्थितो गुणरूपः संसार एव, आत्मा वा शब्दाद्युपयोगानन्यत्वाद् गुणः, अथवा मूलं-संसारस्तस्य शब्दादयः स्थानं कषाया वा, गुणोऽपि शब्दादिकः कषायपरिणतो वाऽऽत्मेति, यदिवा मूलं संसारस्य शब्दादिकषायपरिणतः सद्मात्मा तस्य स्थानं शब्दादिकं, गुणोऽप्यसावेवेति, ततश्च सर्वथा य एव गुणः स एव मूलस्थाने वर्त्तते। ननु च वर्त्तनक्रियायाः सूत्रेऽनुपादानात् कथं प्रक्षेप इति ?, उच्यते, यत्र हि काचिद्विशेषक्रिया नैवोपादायि तत्र सामान्यक्रियामस्ति भवति विद्यते वर्त्तत इत्यादिकामुपादाय वाक्यं परिसमाप्यते, एवमन्यत्रापि द्रष्टव्यमिति। अथवा मूलमित्याद्यं प्रधानं वा, स्थानमिति कारणं, मूलं च तत्कारणं चेति विगृह्य कर्म्मधारयः, ततश्च य एव शब्दादिको गुणः स एव मूलस्थानं-संसारस्य आद्यं प्रधानं वा कारणमिति, शेषं पूर्ववदिति। साम्प्रतमनयोरेव गुणमूलस्थानयोर्नियम्यनियामकभावं दर्शयंस्तदुपादानां विषयकषायादीनां बीजाङ्कुरन्यायेन परस्परतः कार्यकारणभावं सूत्रेणैव दर्शयति-'जे मूलट्ठाणे से गुणे'त्ति, यदेव संसारमूलानां कर्म्ममूलानां वा कषायाणां स्थानम्-आश्रयः शब्दादिको गुणोऽप्यसावेव, अथवा कषायमूलानां शब्दादीनां यत् स्थानं कर्म्म संसारो वा तत्तत्स्वभावापत्तेः गुणोऽप्यसावेवेति, अथवा शब्दादिकषायपरिणाममूलस्य संसारस्य कर्म्मणो वा यत् स्थानं-मोहनीयं कर्म्म शब्दादिकषायपरिणतो वाऽऽत्मेति तद्गुणावाप्तेः गुणोऽप्यसावेव, यदिवा संसारकषायमूलस्यात्मनो यत् स्थानं-विषयाभिष्वङ्गः असावपि शब्दादिविषयत्वाद् गुणरूप एवेति। अत्र च विषयोपादानेन विषयिणोऽप्याक्षेपात् सूचनार्थत्वात् सूत्रस्य व्यत्ययेनापि द्रष्टव्यं-यो गुणे गुणेषु वा वर्त्तते स मूलस्थाने मूलस्थानेषु वा वर्त्तते, यो मूलस्थानादौ वर्त्तते स एव

५

१५

गुणादौ वर्त्तते इति, य एव जन्तुः शब्दादिके प्राग्व्यावर्णितस्वरूपे गुणे वर्त्तते स एव संसारमूलकषायादिस्थानादौ वर्त्तते, एतदेव द्वितीयसूत्रापेक्षया व्यत्ययेन प्राग्वदायोज्यम्, अनन्तगमपर्यायत्वात् सूत्रस्यैवमपि द्रष्टव्यं–यो गुणः स एव मूलं स एव च स्थानं, यन्मूलं तदेव गुणः स्थानमपि तदेव, यत् स्थानं तदेव गुणो मूलमपि तदेवेति, यो गुणः शब्दादिकोऽसावेव संसारस्य कषायकारणत्वान्मूलं स्थानमप्यसावेव इत्येवमन्येष्वपि विकल्पेषु योज्यं, विषयनिर्देशे च विषय्यप्याक्षिप्तो, यो गुणे वर्त्तते स मूले स्थाने चेत्येवं सर्वत्र द्रष्टव्यम्, इह च सर्वज्ञप्रणीतत्वादनन्तार्थता सूत्रस्यावगन्तव्या, तथाहि–मूलमत्र कषायादिकमुपन्यस्तं, कषायाश्च क्रोधादयश्चत्वारः, क्रोधोऽप्यनन्तानुबन्ध्यादिभेदेन चतुर्द्धा, अनन्तानुबन्धिनोऽप्यसङ्ख्येयलोकाकाशप्रदेशप्रमाणानि बन्धाध्यवसायस्थानान्यनन्तांश्च तत्पर्यायास्तेषां च प्रत्येकं स्थानगुणनिरूपणेनानन्तार्थता सूत्रस्य सम्पद्यते, सा च छद्मस्थेन सर्वायुषाऽप्यविषयत्वा(दनन्तत्वा)दशक्या दर्शयितुं, दिग्दर्शनं तु कृतमेव, अतोऽनया दिशा कुशाग्रीयशेमुष्या गुणमूलस्थानानां परस्परतः कार्यकारणभावः संयोजना च कार्येति। तदेवं य एव गुणः स एव मूलस्थानं यदेव मूलस्थानं स एव गुण इत्युक्तं, ततः किमित्यत आह–'इति से गुणट्ठी महया' इत्यादि, इतिर्हेतौ यस्माच्छब्दादिगुणपरीत आत्मा कषायमूलस्थाने वर्त्तते, सर्वोऽपि च प्राणी 'गुणार्थी' गुणप्रयोजनी गुणानुरागीत्यतस्तेषां गुणानामप्राप्तौ प्राप्तिनाशे वा काङ्क्षाशोकाभ्यां स प्राणी 'महता' अपरिमितेन परि–समन्तात्तापः परितापस्तेन–शारीरमानसस्वभावेन दुःखेनाभिभूतः सन् पौनःपुन्येन तेषु तेषु स्थानेषु 'वसेत्' तिष्ठेदुत्पद्येत, किम्भूतः सन् ?—प्रमत्तः, प्रमादश्च रागद्वेषात्मको, द्वेषश्च प्रायो न रागमृते, रागोऽप्युत्पत्तेरारभ्यानादिभवाभ्यासान्मातापित्रादिविषयो भवतीति दर्शयति—'माया मे' इत्यादि, तत्र मातृविषयो रागः संसारस्वभावादुपकारकर्त्तृत्वाद्वोपजायते, रागे च सति मदीया

१५
सूत्रस्यानन्तार्थता

२०



२८

माता क्षुत्पिपासादिकां वेदनां मा प्रापदित्यतः कृषिवाणिज्यसेवादिकां प्राण्युपघातरूपां क्रियामारभते, तदुपघातकारिणि वा तस्यां वाऽकार्यप्रवृत्तायां द्वेष उपजायते, तद्यथा–अनन्तवीर्यप्रमक्तायां रेणुकायां रामस्येति, एवं पिता मे, पितृनिमित्तं रागद्वेषौ भवतो, यथा रामेण पितरि रागात् तदुपहन्तरि च द्वेषात् सप्तकृत्वः क्षत्रिया व्यापादिताः, सुभूमेनापि त्रिसप्तकृत्वो ब्राह्मणा इति, भगिनीनिमित्तेन च क्लेशमनुभवति प्राणी, तथा भार्यानिमित्तं रागद्वेषोद्भवः, तद्यथा–चाणाक्येन भगिनीभगिनीपत्याद्यवज्ञातया भार्यया चोदितेन नन्दान्तिकं द्रव्यार्थमुपगतेन कोपान्नन्दकुलं क्षयं निन्ये, तथा पुत्रा मे न जीवन्तीति आरम्भे प्रवर्त्तते, एवं दुहिता मे दुःखिनीति रागद्वेषोपहतचेताः परमार्थमजानानस्तचद्विधत्ते येन ऐहिकामुष्मिकान् अपायान् अवाप्नोति,तद्यथा–जरासन्धो जामातरि कंसे व्यापादिते स्वबलावलेपादपसृतवासुदेवपदानुसारी सबलवाहनः क्षयमगात्, स्नुषा मे न जीवन्तीत्यारम्भादौ प्रवर्त्तते,'सखिस्वजनसंग्रन्थसंस्तुता मे' सखा–मित्रं स्वजनः–पितृव्यादिः संग्रन्थः–स्वजनस्यापि स्वजनः पितृव्यपुत्रशालादिः संस्तुतो–भूयोभूयोदर्शनेन परिचितः, अथवा पूर्वसंस्तुतो मातापित्रादिरभिहितः पश्चात्संस्तुतः शालकादिः स इह ग्राह्यः, म च मे दुःखित इति परितप्यते, विविक्तं शोभनं प्रचुरं वा उपकरणं–हस्त्यश्वरथासनमञ्चकादि परिवर्त्तनं–द्विगुणत्रिगुणादिभेदभिन्नं तदेव भोजनं–मोदकादि आच्छादनं–पट्टयुगमादि तच मे भविष्यति नष्टं वा । 'इच्चत्थ'मिति इत्येवमर्थं गृद्धो लोकः तेष्वेव मातापित्रादिरागादि-निमित्तस्थानेष्वामरणं प्रमत्तो ममेदमहमस्य स्वामी पोषको चेत्येवं मोहितमना 'वसेत्' तिष्ठेदिति, उक्तं च—"पुत्रा मे भ्राता मे स्वजना मे गृहकलत्रवर्गो मे। इति कृतमेमेशब्दं पशुमिव मृत्युर्जनं हरति ॥१॥ पुत्रकलत्रपरिग्रहममत्वदोषैर्नरो व्रजति नाशम्। कृमिक इव कोशकारः परिग्रहाद्दुःखमाप्नोति ॥२॥" अमुमेवार्थं निर्युक्तिकारो गाथाद्वयेनाह—

१० २लोक० १ उद्दे०

संसारं छेत्तुमणो कम्मं उम्मूलए तदट्ठाए । उम्मूलिज्ज कसाया तम्हा उ चइज्ज सयणाई ॥१९४॥
माया मेत्ति पिया मे भगिणी भाया य पुत्तदारा मे । अत्थंमि चेव गिद्धा जम्मणमरणाणि पावंति ॥१९५॥

'संसारं' नारकतिर्यग्नरामरलक्षणं मातापितृभार्यादिस्नेहलक्षणं वा 'छेत्तुमना' उन्मुमूलयिषुरष्टप्रकारं कर्मोन्मूलयेत्, तदुन्मूलनार्थं च तत्कारणभूतान् कषायानुन्मूलयेत्, कषायापगमनाय च मातापित्रादिगतं स्नेहं जह्यात्, यस्मान्मातापित्रादिसंयोगाभिलाषिणोऽर्थे-रत्नकुप्यादिके गृद्धाः-अध्युपपन्ना जन्मजरामरणादिकानि दुःखान्यसुभृतः प्राप्नुवन्तीति गाथाद्वयार्थः ॥ तदेवं कषायेन्द्रियप्रमत्तो मातापित्राद्यर्थमर्थोपार्जनरक्षणतत्परो दुःखमेव केवलमनुभवतीत्याह-'अहो' इत्यादि, अहश्च सम्पूर्णं रात्रिं च, चशब्दात्पक्षं मासं च, निवृत्तशुभाध्यवसायः परि-समन्तात्तप्यमानः परितप्यमानः सन् तिष्ठति, तद्यथा-"कंइया वच्चइ सत्थो ? किं भण्डं ? कत्थ कित्तिया भूमी ?। को कयविक्कयकालो ? निव्विसइ किं कहिं केण ? ॥१॥" इत्यादि, स च परितप्यमानः किम्भूतो भवतीत्याह-'काले'त्यादि, कालः-कर्त्तव्यावसरस्तद्विपरीतोऽकालः सम्यगुत्थातुम्-अभ्युद्यन्तुं शीलमस्येति समुत्थायीति पदार्थः, वाक्यार्थस्तु-काले कर्त्तव्यावसरे अकालेन तद्विपर्यासेन समुत्तिष्ठते-अभ्युद्यतमनुष्ठानं करोति तच्छीलश्चेति, कर्त्तव्यावसरे न करोति अन्यदा च विदधातीति, यथा वा काले करोत्येवमकालेऽपीति, यथा वाऽनवसरे न करोत्येवमवसरेऽपीति, अन्यमनस्कत्वादपगतकालाकाल-विवेक इति भावना, यथा प्रद्योतेन मृगापतिरपगतभर्तृका सती ग्रहणकालमतिवाह्य कृतप्राकारादिरक्षा जिघृक्षितेति, यस्तु पुनः सम्यक्कालोत्थायी भवति स यथाकालं परस्परानाबाधया सर्वाः क्रियाः करोतीति, तदुक्तम्-"मासैरष्टभिरह्ना च,पूर्वेण वय-

१५ मूढानां दुःखिता

२०

२७ ॥९२॥

१ कदा व्रजति सार्थः. किं भाण्डं कुत्र कियती भूमिः । कः क्रयविक्रयकालो निर्विषयति ( निर्विशति ) किं क्व केन ? ॥१॥

साऽऽयुपा। तत् कर्त्तव्यं मनुष्येण, येनान्ते सुखमेधते ॥१॥" धर्मानुष्ठानस्य च न कश्चिदकालो मृत्योरिवेति। किमर्थं पुनः कालाकालसमुत्थायी भवतीत्याह—'संजोगट्ठी' संयुज्यते संयोजनं वा संयोगोऽर्थः—प्रयोजनं संयोगार्थः सोऽस्यास्तीति संयोगार्थी, तत्र धनधान्यहिरण्यद्विपदचतुष्पदराज्यभार्यादिः संयोगस्तेनार्थी—तत्प्रयोजनी, अथवा शब्दादिविषयः संयोगो मातापित्रादिभिर्वा तेनार्थी कालाकालसमुत्थायी भवतीति। किं च—'अट्ठालोभी' अर्थो—रत्नकुप्यादिस्तत्र आ—समन्ताल्लोभोऽर्थालोभः स विद्यते यस्येत्यसावपि कालाकालसमुत्थायी भवति, मम्मणवणिग्वत्, तथाहि—असावतिक्रान्तार्थोपार्जनसमर्थयौवनतया जलस्थलपथप्रेषितनानादेशभाण्डभृतबोहित्थगन्त्रीकोष्ट्रमण्डलिकासम्भृतसम्भारोऽपि प्रावृषि सप्तरात्रावच्छिन्नमुशलप्रमाणजलधारावर्षनिरुद्धसकलप्राणिगणसञ्चारमनोरथायां महानदीजलपूरानीतकाष्ठानि जिघृक्षुरुपभोगधर्म्मावसरे निवृत्तापराशेषशुभपरिणामः केवलमर्थोपार्जनप्रवृत्त इति, उक्तं च—"उक्खणइ खणइ निहणइ रत्ति ण सुअति दियावि य ससंको। लिपइ ठएइ सययं लंछियपडिलंछियं कुणइ ॥१॥ भुंजसु न ताव रिक्को जेमेउं नविय अज्ज मज्झीहं। नवि य वसीहामि घरे कायव्वमिणं बहुं अज्ज ॥२॥" पुनरपि लोभिनोऽशुभव्यापारानाह—'आलुंपे' आ—समन्ताल्लुम्पतीत्यालुम्पः, स हि लोभाभिभूतान्तःकरणोऽपगतसकलकर्त्तव्याकर्त्तव्यविवेकोऽर्थलोभैकदत्तदृष्टिरैहिकामुष्मिकविपाककारिणीर्निर्लाञ्छनगलकर्त्तनचौर्यादिकाः क्रियाः करोति, अन्यच्च—'सहसक्कारे' करणं कारः, असमीक्षितपूर्वापरदोषं सहसा करणं सहसाकारः स विद्यते यस्येत्यर्शआदिभ्योऽच् (पा० ५-२-१२७) अथवा छान्दसत्वात्कर्त्तर्येव घञ्, करोतीति

प्र. आ.
१०१

५

१०

---

१ उत्खनति खनति निदधाति (हन्ति) रात्रौ न स्वपिति दिवाऽपि च सशङ्कः। लिम्पति स्थगयति सतत लाञ्छितप्रतिलाञ्छितं करोति ॥१॥ भुङ्क्ष्व न तावन्निर्व्यापारो जिमितुं नापि चाद्य मङ्क्ष्यामि। नापि च वत्स्यामि गृहे कर्त्तव्यमिदं बह्वद्य ॥२॥

१० २लोक० १ उद्दे०

कारः, तथाहि—लोभतिमिराच्छादितदृष्टिरर्थैकमनाः शकुन्तवच्छरापातमनालोच्य पिशिताभिलाषितया सन्धिच्छेदनादितो विनश्यति, लोभाभिभूतो ह्यर्थैकदृष्टित्वन्मनास्तदर्थोपयुक्तोऽर्थमेव पश्यति, नापायान्, आह च—'विणिविट्ठचित्ते' विविधम्—अनेकधा निविष्टं—स्थिरमरगादमर्थोपार्जनोपाये मातापित्राद्यभिष्वङ्गे वा शब्दादिविषयोपभोगे वा चित्तम्—अन्तःकरणं यस्य स तथा, पाठान्तरं वा 'विणिविट्ठचिट्ठे'त्ति, विशेषेण निविष्टा कायवाग्मनसां परिस्पंदात्मिकाऽर्थोपार्जनोपायादौ चेष्टा यस्य स विनिविष्टचेष्टः । तदेवं मातापित्रादिसंयोगार्थी अर्थलोभी आलुम्पः सहसाकारो विनिविष्टचित्तो विनिविष्टचेष्टो वा किम्भूतो भवतीत्याह—'इत्थ' इत्यादि, 'अत्र' अस्मिन् मातापित्रादौ शब्दादिविषयसंयोगे वा विनिविष्टचित्तः सन् पृथिवीकायादिजन्तूनां यच्छस्त्रम्—उपघातकारि तत्र पुनः पुनः प्रवर्त्तते, एवं पौनःपुन्येन शस्त्रे प्रवृत्तो भवति यदि(था)पृथिवीकायादिजन्तूनामुपघाते वर्त्तते, तथाहि—'शसु हिंसाया'मित्यस्माच्छसते हिंसत इति करणे प्रन्विहितः, तच्च स्वकायपरकायादिभेदभिन्नमिति । पाठान्तरं वा 'एत्थ सत्ते पुणो पुणो' 'अत्र' मातापितृशब्दादिसंयोगे लोभार्थी सन् 'सक्तो' गृद्धः अध्युपपन्नः पौनःपुन्येन विनिविष्टचेष्ट आलुम्पकः सहसाकारः कालाकालसमुत्थायी वा भवतीति । एतच्च साम्प्रतेक्षिणामपि युज्येत यद्यजरामरत्वं दीर्घायुष्कं वा स्यात्, तत्तोभयमपि नास्तीत्याह—'अप्पं च' इत्यादि, अल्पं—स्तोकं, चशब्दोऽधिकवचनः, खलुरवधारणे, आयुरिति भवस्थितिहेतवः कर्म्मपुद्गलाः 'इहे'ति संसारे मनुष्यभवे वा 'एकेषां' केषाञ्चिदेव 'मानवानां' मनुजानामिति पदार्थः, वाक्यार्थस्तु—इह अस्मिन् संसारे केषाञ्चिन्मनुजानां क्षुल्लकभवोपलक्षितान्तर्मुहूर्त्तमात्रमल्पं—स्तोकमायुर्भवति, चशब्दादुत्तरोत्तरभयादिवृद्ध्या पल्योपमत्रयावमानेऽप्यायुषि खलुशब्दस्यावधारणार्थत्वात् संयमजीवितमल्पमेवेति, तथाहि—अन्तर्मुहूर्तादारभ्य देशोनपूर्वकोटिं यावत्संयमायुष्कं, तच्चाल्पमेवेति, अथवा त्रिपल्योपमस्थितिकमप्यायुरल्पमेव,

लोभिदशा १५

अल्पायुष्कता

२०

यतस्तदप्यन्तर्मुहूर्त्तमपहाय सर्वमपवर्त्तते, उक्तं च–"अद्धा जोगुक्कोसे बंधित्ता भोगभूमिएसु लहुं। सव्वप्पजीवियं वज्जइत्तु उव्वट्टिया दोण्हं ॥१॥" अस्या अयमर्थः–उत्कृष्टे योगे–बन्धाध्यवसायस्थाने आयुषो यो बन्धकालोऽद्धा उत्कृष्ट एव तं बद्ध्वा, क्व?–'भोगभूमिकेषु' देवकुर्वादिजेषु, तस्य क्षिप्रमेव सर्वाल्पमायुर्वर्जयित्वा 'द्वयोः' तिर्यग्मनुष्ययोरपवृत्तिका–अपवर्त्तनं भवति, एतच्चापर्याप्तकान्तर्मुहूर्त्तान्तर्द्रष्टव्यं, तत ऊर्ध्वमनपवर्त्तनमेवेति। सामान्येन चाऽऽयुः सोपक्रमायुषां सोपक्रमं, निरुपक्रमायुषां निरुपक्रमं, यदा ह्यसुमान् स्वायुषस्त्रिभागे त्रिभागत्रिभागे वा जघन्यत एकेनं द्वाभ्यां वोत्कृष्टतः सप्तभिरष्टभिर्वाऽऽकर्षैरन्तर्मुहूर्त्तप्रमाणेन कालेनात्मप्रदेशरचनानाडिकान्तर्वर्त्तिन आयुष्ककर्मवर्गणापुद्गलान् प्रयत्नविशेषेण विधत्ते तदा निरुपक्रममायुर्भवतीति, अन्यदा तु सोपक्रमायुष्क इति, उपक्रमश्चोपक्रमणकारणैर्भवति, तानि चामूनि—"दंडकससत्थरज्जू अग्गी उदगपडणं विसं वाला। सीउण्हं अरइ भयं खुहा पिवासा य वाही य ॥१॥ मुत्तपुरीसनिरोहे जिण्णाजिण्णे य भोयणे बहुसो। घंसणघोलणपीलण आउस्स उवक्कमा एते ॥२॥" उक्तं च—"स्वतोऽन्यत इतस्ततोऽभिमुखधावमानापदामहो निपुणता नृणां क्षणमपीह यज्जीव्यते। मुखे फलमतिक्षुधा सरसमल्पमायोजितं, कियच्चिरमचर्वितं दशनसङ्कटे स्थास्यति? ॥१॥ उच्छ्वासावधयः प्राणाः, स चोच्छ्वसः समीरणः। समीरणाच्चलं नान्यत्, क्षणमप्यायुरद्भुतम् ॥२॥" इत्यादि। येऽपि दीर्घायुष्कस्थितिका उपक्रमणकारणाभावे आयुःस्थितिमनुभवन्ति तेऽपि मरणादप्यधिकां जराभिभूतविग्रहा जघन्यतमामवस्थामनुभवन्तीति तद्यथेत्यादिना दर्शयति ॥





१ दण्डः कशा शस्त्रं रज्जुरग्निरुदक पतनं विषं व्यालः। शीतमुष्णमरतिर्भयं क्षुत्पिपासा च व्याधिश्च ॥१॥ मूत्रपुरीषनिरोधः जीर्णेऽजीर्णे च भोजने बहुशः। घर्षणं घोलनं पीडनमायुष उपक्रमा एते ॥२॥

शीलाङ्क०
१ उद्दे०

सोयपरिण्णाणेहिं परिहायमाणेहिं चक्खुपरिण्णाणेहिं परिहायमाणेहिं घाणपरिण्णाणेहिं परिहायमाणेहिं रसणापरिण्णाणेहिं परिहायमाणेहिं फासपरिण्णाणेहिं परिहायमाणेहिं अभिकंतं च खलु वयं स पेहाए तओ से एगदा मूढभावं जणयंति (सू. ६४)

१५

शृणोति भाषापरिणतान् पुद्गलानिति श्रोत्रं, तच्च कदम्बपुष्पाकारं द्रव्यतो, भावतो भाषाद्रव्यग्रहणलब्ध्युपयोगस्वभावमिति, तेन श्रोत्रेण परिः-समन्ताद् घटपटशब्दादिविषयाणि ज्ञानानि परिज्ञानानि तैः श्रोत्रपरिज्ञानैःजराप्रभावात्परिहीयमानैः सद्भिस्ततोऽसौ प्राणी 'एकदा' वृद्धावस्थायां रोगोदयावसरे वा 'मूढभावं' मूढतां कर्त्तव्याकर्त्तव्याज्ञतामिन्द्रियपाटवाभावादात्मनो जनयति, हिताहितप्राप्तिपरिहारविवेकशून्यतामापद्यत इत्यर्थः, जनयन्तीति चैकवचनावसरे 'तिङां तिङो भवन्ती'ति बहुवचनमकारि, अथवा तानि वा श्रोत्रविज्ञानानि परिक्षीयमाणान्यात्मनः सदसद्विवेकविकलतामापादयन्तीति, श्रोत्रादिविज्ञानानां च तृतीया प्रथमार्थे सुब्व्यत्ययेन द्रष्टव्येति, एवं चक्षुरादिविज्ञानेष्वपि योज्यम्, अत्र च करणत्वादिन्द्रियाणामेवं सर्वत्र द्रष्टव्यं-श्रोत्रेणात्मनो विज्ञानानि चक्षुषाऽऽत्मनो विज्ञानानीति, ननु च तान्येव द्रष्टॄणि कुतो न भवन्ति ?, उच्यते, अशक्यमेवं विज्ञातुं, तद्विनाशे तदुपलब्धार्थस्मृत्यभावात्, दृश्यते च हृषीकोपघातेऽपि तदुपलब्धार्थस्मरणं, तद्यथा-धवलगृहान्तर्व्यवस्थितपुरुषपञ्चवातायनोपलब्धार्थस्य तदन्यतरस्थगनेऽपि तदुपपत्तिरिति, तथाहि-अहमनेन श्रोत्रेण चक्षुषा वा मन्दमर्थमुपलभे अनेन च स्फुटतरमिति स्पष्टैव करणत्वावगतिरक्षाणां, यद्येवमन्यान्यपि करणानि सन्ति तानि किं नोपात्तानि ?, कानि पुनस्तानि ?, उच्यन्ते, वाक्पाणिपादपायूपस्थमनांसि वचनादानविह-

प्र. आ. १०२

रणोत्सर्गानन्दसङ्कल्पव्यापाराणि, ततश्चैतेषामात्मोपकारकत्वेन करणत्वं, करणत्वादिन्द्रियत्वमिति, एवं चैकादशेन्द्रियसद्भावे सति पञ्चानामेवोपादानं किमर्थमिति, आहाचार्यो—नैष दोषः, इह ह्यात्मनो विज्ञानोत्पत्तौ यद् प्रकृष्टमुपकारकं तदेव करणत्वादिन्द्रियम्, एतानि तु वाक्पाण्यादीनि नैवात्मनोऽनन्यसाधारणतया करणत्वेन व्याप्रियन्ते, अथ यां काञ्चन क्रियामुपादाय करणत्वमुच्यते एवं तर्हि भ्रूदरादेरप्युत्क्षेपादिसम्भवात्करणत्वं स्यात्, किंच—इन्द्रियाणां स्वविषये नियतत्वात् नान्येन्द्रियकार्यमन्यदिन्द्रियं कर्तुमलं, तथाहि—चक्षुरेव रूपावलोकनायालं, न तदभावे श्रोत्रादीनि, यस्तु रसाद्युपलम्भे शीतस्पर्शादेरप्युपलम्भः स सर्वव्यापित्वात् स्पर्शनेन्द्रियस्येत्यनाशङ्कनीयम्, इह तु पुनः पाणिच्छेदेऽपि तत्कार्यस्यादानलक्षणस्य दशनादिनाऽपि निर्वर्त्यमानत्वाद्यत्किञ्चिदेतत्, मनसस्तु सर्वेन्द्रियोपकारकत्वादन्तःकरणत्वमिष्यत एव, तस्य च बाह्येन्द्रियविज्ञानोपघातेनैव गतार्थत्वान्न पृथगुपादानमिति, प्रत्येकोपादानं च क्रमोत्पत्तिविज्ञानोपलक्षणार्थं, तथाहि—येनैवेन्द्रियेण सह मनः संयुज्यते तदेवात्मीयविषयगुणग्रहणाय प्रवर्त्तते, नेतरदिति, ननु च दीर्घशष्कुलीभक्षणादौ पञ्चानामपि विज्ञानानां यौगपद्येनोपलब्धिरनुभूयते, नैतदस्ति, केवलिनोऽपि द्वावुपयोगौ न स्तः, आस्तां तावदारातीयभागदर्शिनः पञ्चोपयोगा इति, एतच्चान्यत्र न्यक्षेण प्रतिपादितमिति नेह प्रतायते, यस्तु यौगपद्येनानुभवाभासः स द्रागवृत्तित्वान्मनसो भवतीति, उक्तं च—"आत्मा सहैति मनसा मन इन्द्रियेण, स्वार्थेन चेन्द्रियमिति क्रम एष शीघ्रः। योगोऽयमेव मनसः किमगम्यमस्ति ?, यस्मिन् मनो व्रजति तत्र गतोऽयमात्मा ॥१॥" इह चायमात्मा इन्द्रियलब्धिमान् आदित्सितजन्मोत्पत्तिदेशे समयेनाहारपर्याप्तिं निर्वर्त्तयति, तदनन्तरमन्तर्मुहूर्त्तेन शरीरपर्याप्तिं, ततोऽपीन्द्रियपर्याप्तिं तावतैव कालेन,

५

१०

१ स्वपक्षे भावमनो व्याप्रियते इत्यर्थ द्रव्यमनोमात्रयोगो यद्यपि अन्येन्द्रियविषयकज्ञाननिवर्तनायात्र तथापि स्वविषयानेकज्ञानोत्पत्तिदुर्वारा सवशरीरग च द्रव्यमन

तानि च पञ्चेन्द्रियाणि-स्पर्शनरसनघ्राणचक्षुःश्रोत्राणीति, तान्यपि द्रव्यभावभेदात् प्रत्येकं द्विविधानीति, तत्र द्रव्येन्द्रियं निर्वृत्त्युपकरणभेदात् द्विधा, निर्वृत्तिरप्यान्तरबाह्यभेदात् द्विधैव, निर्वर्त्यत इति निर्वृत्तिः, केन निर्वर्त्यते? कर्म्मणा, तत्रोत्सेधाङ्गुलासङ्ख्येयभागप्रमितानां शुद्धानामात्मप्रदेशानां प्रतिनियतचक्षुरादीन्द्रियसंस्थानेनावस्थिता या वृत्तिरभ्यन्तरा निर्वृत्तिः, तेष्वेवात्मप्रदेशेष्विन्द्रियव्यपदेशभाक् यः प्रतिनियतसंस्थानो निर्म्माणनाम्ना पुद्गलविपाकिना वर्द्धकिसंस्थानीयेन आरचितः कर्णशष्कुल्यादिविशेषः अङ्गोपाङ्गनाम्ना च निष्पादित इति बाह्या निर्वृत्तिः, तस्या एव निर्वृत्तेर्द्विरूपायाः येनोपकारः क्रियते तदुपकरणं, तच्चेन्द्रियकार्यसमर्थं, सत्यामपि(बाह्य)निर्वृत्तावनुपहतायां(च)मसूराकृतिरूपायां(आन्तर)निर्वृत्तौ तस्योपघातान्न पश्यति, तदपि निर्वृत्तिवद् द्विधा, तत्राभ्यन्तरमक्ष्णस्तावत् कृष्णशुक्लमण्डलं बाह्यमपि पत्रपक्ष्मद्वयादि, एवं शेषेष्वप्यायोजनीयमिति, भावेन्द्रियमपि लब्ध्युपयोगभेदात् द्विधा, तत्र लब्धिर्ज्ञानदर्शनावरणीयक्षयोपशमरूपा यत्सन्निधानादात्मा द्रव्येन्द्रियनिर्वृत्तिं प्रति व्याप्रियते, तन्निमित्त आत्मनो मनस्सान्निध्यादर्थग्रहणं प्रति व्यापार उपयोग इति, तदत्र सत्यां लब्धौ निर्वृत्त्युपकरणोपयोगाः, सत्यां च निर्वृत्तावुपकरणोपयोगौ, सत्युपकरण उपयोग इति, एतेषां च श्रोत्रादीनां कदम्बकमसूरकलम्बुकापुष्पक्षुरप्रनानासंस्थानताऽवगन्तव्येति, विषयश्च श्रोत्रेन्द्रियस्य द्वादशभ्यो योजनेभ्य आगतं शब्दं गृह्णाति, चक्षुरप्येकविंशतिषु लक्षेषु सातिरेकेषु व्यवस्थितं प्रकाशकं, प्रकाश्यं तु सातिरेकयोजनलक्षस्थितं रूपं गृह्णाति, शेषाणि तु नवभ्यो योजनेभ्य आगतं स्वविषयं गृह्णन्ति, जघन्यतस्त्वङ्गुलासङ्ख्येयभागविषयत्वं सर्वेषाम्, अत्र च 'गोयपरिण्णाणेहिं परिहायमाणेही'त्यादि य उत्पत्तिं प्रति व्यत्ययेनेन्द्रियाणामुपन्यासः स एवमर्थं द्रष्टव्यः-इह संज्ञिनः

१ मधुरः गेहवैयमाणो यद्यपि तथापि सर्वेषां विषयस्य सामान्येन विवक्षणादित्युक्त.

[Left margin: रा० २लोक० १ उद्दे० ... प्र. आ. १०४]
[Right margin: १५ २० २६ ॥९४॥]

पञ्चेन्द्रियस्य उपदेशदानेनाधिकृतत्वाद् उपदेशश्च श्रोत्रेन्द्रियविषय इतिकृत्वा, तत्पर्याप्तौ च सर्वेन्द्रियपर्याप्तिः सूचिता भवति। श्रोत्रादिविज्ञानानि च वयोऽतिक्रमे परिहीयन्ते, तदेवाह–'अभिकंत'मित्यादि, अथवा श्रोत्रादिविज्ञानैरपचितैः करणभूतैः सद्भिः 'अभिकंतं च खलु वयं स पेहाए' तत्र प्राणिनां कालकृता शरीरावस्था यौवनादिर्वयः तज्जराममि मृत्युं वा क्रान्तमभिक्रान्तम्, इह हि चत्वारि वयांसि–कुमारयौवनमध्यमवृद्धत्वानि, उक्तं च—"प्रथमे वयसि नाधीतं, द्वितीये नार्जितं धनम्। तृतीये न तपस्तप्तं, चतुर्थे किं करिष्यति ? ॥१॥" तत्राद्यवयोद्वयातिक्रमे जराभिमुखमभिक्रान्तं वयो भवति, अन्यथा वा त्रीणि वयांसि–कौमारयौवनस्थविरत्वभेदाद्, उक्तं च—"पिता रक्षति कौमारे, भर्त्ता रक्षति यौवने। पुत्राश्च स्थाविरे भावे, न स्त्री स्वातन्त्र्यमर्हति ॥१॥" अन्यथा वा त्रीणि वयांसि, बालमध्यवृद्धत्वभेदात्, उक्तं च–आषोडशाद्भवेद्बालो, यावत् क्षीरान्नवर्त्तकः। मध्यमः सप्ततिं यावत्, परतो वृद्ध उच्यते ॥१॥" एतेषु वयस्सु सर्वेष्वपि योपचयवत्यवस्था तामतिक्रान्तोऽतिक्रान्तवया इत्युच्यते, चः समुच्चये, न केवलं श्रोत्रचक्षुर्घ्राणरसनस्पर्शनविज्ञानैर्व्यस्तसमस्तैर्देशतः सर्वतो वा परिहीयमाणैर्वा मौढ्यमापद्यते, वयश्चातिक्रान्तं 'प्रेक्ष्य' पर्यालोच्य 'स' इति प्राणी खलुरिति विशेषणे विशेषेण–अत्यर्थं मौढ्यमापद्यत इति, आह च–'ततो से' इत्यादि, 'तत' इति तसादिन्द्रियविज्ञानापचयाद्वयोऽतिक्रमणाद्वा स इति प्राणी 'एकदे'ति वृद्धावस्थायां मूढभावो मूढत्वं–किंकर्त्तव्यताभावमात्मनो जनयति, अथवा 'से'तस्यासुभृतः श्रोत्रादिविज्ञानानि परिहीयमाणानि मूढभावं जनयन्तीति ॥ स एवं वार्द्धक्ये मूढस्वभावः सन् प्रायेण लोकावगीतो भवतीत्याह—

जेहिं वा सद्धिं संवसति तेऽवि णं एगदा णियगा पुव्विं परिवयंति, सोऽवि ते णियए पच्छा परिवएज्जा, णालं ते तव ताणाए वा सरणाए वा, तुमंपि तेसिं णालं ताणाए वा सरणाए वा,

से ण हासाय ण किड्डाए ण रतीए ण विभूसाए (सू० ६५)

वाशब्दः पक्षान्तरद्योतकः, आस्तां तावदपरो लोकः 'यैः' पुत्रकलत्रादिभिः 'सार्द्धं' सह संवसति त एव भार्यापुत्रादयो णमिति वाक्यालङ्कारे 'एकदे'ति वृद्धावस्थायां 'नियगा' आत्मीया ये तेन समर्थावस्थायां पूर्वमेव पोषिताः ते तं 'परिवदंति' परि-समन्ताद्वदन्ति-यथाऽयं न म्रियते नापि मञ्चकं ददाति, यदिवा परिवदन्ति-परिभवन्तीत्युक्तं भवति, अथवा किमनेन वृद्धेनेत्येवं परिवदन्ति, न केवलमेषां, तस्यामपि तस्यामवस्थायामवगीतो भवतीति, आह च-"वलिसन्ततमस्थिशेषितं, शिथिलस्नायुधृतं कडेवरम् । स्वयमेव पुमान् जुगुप्सते, किमु कान्ता कमनीयविग्रहा ? ॥१॥" गोपालबालाङ्गनादीनां च दृष्टान्तद्वारेणोपन्यस्तोऽर्थो बुद्धिमधितिष्ठतीत्यतस्तदाविर्भावनाय कथानकम्-कौशाम्ब्यां नगर्यां अर्थवान् बहुपुत्रो धनो नाम सार्थवाहः, तेन चैकाकिना नानाविधैरुपायैः स्वापतेयमुपार्जितं, तच्चाशेषदुःखितबन्धुजनस्वजनमित्रकलत्रपुत्रादिभोग्यतां निन्ये, ततोऽसौ कालपरिपाकवशाद्वृद्धभावमुपगतः सन् पुत्रेषु सम्यक्पालनोपचितकलाकुशलेषु समस्तकार्यचिन्ताभारं निचिक्षेप । तेऽपि वयमनेनेदृशीमवस्थां नीताः सर्वजनाग्रेसरा विहिता इति स्मृतोपकाराः सन्तः कुलपुत्रतामवलम्बमानाः स्वतः क्वचित् कार्यव्यासङ्गात् स्वभार्याभिस्तमकल्पं वृद्धं प्रत्यजजागरन्, ता अप्युद्वर्त्तनस्नानभोजनादिना यथाकालमक्षुण्णं विहितवत्यः । ततो गच्छत्सु दिवसेषु वर्द्धमानेषु पुत्रभाण्डेषु प्रौढीभवत्सु भर्तृषु जरद्वृद्धे च विवशकरणपरिचारे सर्वाङ्गकम्पिनि गलदशेषश्रोतसि सति शनैः शनैरुचितमुपचारं शिथिलतां निन्युः। असावपि मन्दप्रतिजागरणतया चित्ताभिमानेन विश्रसया च सुतरां दुःखसागरावगाढः सन् पुत्रेभ्यः स्नुषाक्षुण्णान्याचचक्षे, ताश्च स्वभर्तृभिर्भिखिद्यमानाः सुतरामुपचारं परिहृतवत्यः, सर्वाश्च पर्यालोच्यैकवाक्यतया स्वभर्तृनभिहितवत्यः-क्रियमाणेऽप्ययं प्रतिजा-

वृद्धत्वेऽ-
१५
वगीतता
२०
॥९५॥
२७

गरणे वृद्धभावाद्विपरीतबुद्धितयाऽपह्नुते, यदि भवतामप्यस्माकमुपर्यविस्रम्भस्ततोऽन्येन विश्वसनीयेन निरूपयत, तेऽपि तथैव चक्रुः, तास्तु तस्मिन्नवसरे सर्वा अपि सर्वाणि कार्याणि यथाऽवसरं विहितवत्यः, असावपि पुत्रैः पृष्टः पूर्वविरुक्षितचेतास्तथैव ता अपव- दति, नैता मम किञ्चित् सम्यक् कुर्वन्ति, तैस्तु प्रत्ययिकवचनादवगततत्त्वैर्यथाऽभ्युपचर्यमाणोऽपि वार्द्धक्याद्रोरुद्यते, ततस्तैरप्यव- धीरितोऽन्येषामपि यथावसरे तद्भण्डनस्वभावतामाचचक्षिरे। ततोऽसौ पुत्रैरवधीरितः स्नुषाभिः परिभूतः परिजनेनावगीतो वाङ्- मात्रेणापि केनचिदप्यननुवर्त्यमानः सुखितेषु दुःखितः कष्टतरामायुःशेषामवस्थामनुभवतीति। एवमन्योऽपि जराभिभूतविग्रहस्तृ- णकुब्जीकरणेऽप्यसमर्थः सन् कार्यैकनिष्ठलोकात्परिभवमाप्नोतीति, आह–"गात्रं सङ्कुचितं गतिर्विगलिता दन्ताश्च नाशं गता, दृष्टि- र्भ्रश्यति रूपमेव ह्रसते वक्त्रं च लालायते। वाक्यं नैव करोति बान्धवजनः पत्नी न शुश्रूषते, धिक्कष्टं जरयाऽभिभूतपुरुषं पुत्रोऽप्य- वज्ञायते ॥१॥" इत्यादि। तदेवं जराभिभूतं निजाः परिवदन्ति, असावपि परिभूयमानस्तद्विरक्तचेतास्तदपवादान् जनायाचष्टे, आह च–'सो वा' इत्यादि, वाशब्दः पूर्वापेक्षया पक्षान्तरं दर्शयति, ते वा निजास्तं परिवदन्ति, स वा जराजर्ज्जरितदेहस्तान्निजाननेक- दोषोद्घट्टनतया परिवदेत्–निन्देद्, अथवा विद्यमानार्थतया तानसाववगायति–परिभवतीत्यर्थः। येऽपि पूर्वकृतधर्म्मवशात्तं वृद्धं न परिवदन्ति तेऽपि तद्दुःखापनयनसमर्था न भवन्ति, आह च—'नालं'मित्यादि, नालं–न समर्थाः ते–पुत्रकलत्रादयः तवेति प्रत्यक्षभावमुपगतं वृद्धमाह, त्राणाय शरणाय वेति, तत्रापत्तरणसमर्थं त्राणमुच्यते, यथा महाश्रोतोभिरुह्यमानः सुकर्णधाराधिष्ठितं प्लवमासाद्यापस्तरतीति, शरणं पुनर्यदवष्टम्भान्निर्भयैः स्थीयते तदुच्यते, तत् पुनर्दुर्गं पर्वतः पुरुषो वेति, एतदुक्तं भवति–जराभि- भूतस्य न कश्चित् त्राणाय शरणाय वा, त्वमपि तेषां नालं त्राणाय शरणाय वेति, उक्तं च–"जन्मजरामरणभयैरभिद्रुते व्याधिवे-

५

१०

दनागमे। जिनवरवचनादन्यत्र नास्ति शरणं क्वचिल्लोके ॥१॥" इत्यादि, स तु तस्यामवस्थायां किम्भूतो भवतीत्याह–'से ण हस्साए' इत्यादि, 'स' जराजीर्णविग्रहो न हासाय भवति, तस्यैव हसनीयत्वात् न परान् हसितुं योग्यो भवतीत्यर्थः, स च समक्षं परोक्षं वा एवमभिधीयते जनैः–किं किलास्य हसितेन हास्यास्पदस्येति, न च क्रीडायै–न च लङ्घनवल्गनास्फोटनक्रीडानां योग्योऽसौ भवति, नापि रत्यै भवति, रतिरिह विषयगता गृह्यते, सा पुनर्ललनावगूहनादिका, तथाभूतोऽप्यवजुगूहिषुः स्त्रीभिरभिधीयते–न लज्जते भवान् न पश्यति आत्मानं नावलोकयति शिरः पलितभस्मावगुण्डितं मां दुहितृभूतामवगूहितुमिच्छसीत्यादिवचसामास्पदत्वान्न रत्यै भवति, न विभूषायै, यतो विभूषितोऽपि प्रततचर्म्मवलीकः स नैव शोभते, उक्तं च–"न विभूषणमस्य युज्यते, न च हास्यं कुत एव विभ्रमः?। अथ तेषु च वर्त्तते जनो, ध्रुवमायाति परां विडम्बनाम् ॥१॥ जं जं करेइ तं तं न सोहए जोव्वणे अतिक्कंते। पुरिसस्स महिलियाइ व एक्कं धम्मं पमुत्तूणं ॥२॥" गतमप्रशस्तं मूलस्थानं, साम्प्रतं प्रशस्तमुच्यते—

इच्चेवं समुट्ठिए अहोविहाराए अंतरं च खलु इमं सपेहाए धीरे मुहुत्तमवि णो पमायए वओ अच्चेति जोव्वणं व ( सू. ६६ )

अथवा यत एवं ते सुहृदो नालं त्राणाय शरणाय वा अतः किं विदध्यादित्याह–'इच्चेव' मित्यादि, 'इतिः' उपप्रदर्शने, अप्रशस्तमूलगुणस्थाने वर्तमानो जराभिभूतो न हासाय न क्रीडायै न रत्यै न विभूषायै प्रत्येकं च शुभाशुभकर्म्मफलं प्राणिनामित्येवं

१ यद्यत्करोति तत्तत् न शोभते यौवनेऽतिक्रान्ते। पुरुषस्य महिलाया इव एकं धर्मं प्रमुच्य ॥ ३ ॥



२०

२६

मत्वा समुत्थितः-सम्यगुत्थितः शस्त्रपरिज्ञोक्तं मूलगुणस्थानमधितिष्ठन् अहो-इत्याश्चर्ये विहरणं विहारः आश्चर्यभूतो विहारो अहो-विहारो-यथोक्तसंयमानुष्ठानं तस्मै अहोविहारायोत्थितः मन् क्षणमपि नो प्रमादयेदित्युत्तरेण सण्टङ्कः, किंच-'अंतरं चे'त्यादि, अन्तरमित्यवसरः, तच्चार्यक्षेत्रसुकुलोत्पत्तिबोधिलाभसर्वविरत्यादिकं, चः समुच्चये, खलुरवधारणे, 'इम'मित्यनेनेदमाह-विनेयस्त-पःसंयमादाववसीदन् प्रत्यक्षभावापन्नमार्यक्षेत्रादिकमन्तरमवसरमुपदर्श्याभिधीयते-तवायमेवम्भूतोऽवसरोऽनादौ संसारे पुनरतीव सुदुर्लभ एवेति, अतस्तमवसरं 'संप्रेक्ष्य'पर्यालोच्य धीरः सन्मुहूर्त्तमप्येकं नो 'प्रमादयेत्' प्रमादवशगो भूयादिति, सम्प्रेक्ष्येत्यत्र अनु-स्वारलोपश्छान्दसत्वादिति, अन्यदप्यलाक्षणिकमेवंजातीयमस्मादेव हेतोरवगन्तव्यमिति, आन्तर्मौहूर्त्तिकत्वाच्च छाद्मस्थिकोपयोगस्य मुहूर्त्तमित्युक्तम्, अन्यथा समयमप्येकं न प्रमादयेदिति वाच्यं, तदुक्तम्-"सम्प्राप्य मानुषत्वं संसारासारतां च विज्ञाय। हे जीव! किं प्रमादान्न चेष्टसे शान्तये सततम्? ॥१॥ ननु पुनरिदमतिदुर्लभमगाधसंसारजलधिविभ्रष्टम्। मानुष्यं खद्योतकतडिल्लताविल-सितप्रतिमम् ॥२॥" इत्यादि, किमर्थं च नो प्रमादयेदित्याह-'वयो अच्चेइ'त्ति, वयः-कुमारादि अत्येति-अतीव एति-याति अत्येति, अन्यच्च-'जोव्वणं च'त्ति अत्येत्यनुवर्तते, यौवनं वाऽत्येति-अतिक्रामति, वयोग्रहणेनैव यौवनस्य गतत्वात्तदुपादानं प्राधा-न्यख्यापनार्थं, धर्मार्थकामानां तन्निबन्धनत्वात्सर्ववयमां यौवनं साधीयः, तदपि त्वरितं यातीति, उक्तं च-"नइवेगसमं चवलं च जीवियं जोव्वणं च कुसुमसमं। सोक्खं च जं अणिचं तिण्णिवि तुरमाणभोज्जाइं ॥१॥" तदेवं मत्वा अहोविहारायोत्थानं श्रेय इति ॥ ये पुनः संसाराभिष्वङ्गिणोऽसंयमजीवितमेव बहु मन्यन्ते ते किंभूता भवंतीत्याह—

५

१०

१ नदीवेगसमं चपलमेव जीवितं यौवनं च कुसुमसमम्। सौख्यं च यदनित्यं त्रीण्यपि त्वरमाणभोज्यानि ॥ १ ॥

श्रुत०
श्लोक०
१ उद्दे०

प्र. आ.
१०७
१५
स्वजनो
न
त्राणाय

जीविए इह जे पमत्ता से हंता छेत्ता भेत्ता लुंपित्ता विलुंपित्ता उद्दवित्ता उत्तासइत्ता, अकडं करिस्सामित्ति मण्णमाणे, जेहिं वा सद्धिं संवसइ ते वा णं एगया नियगा तं पुव्विं पोसेंति, सो वा ते नियगे पच्छा पोसिज्जा, नालं ते तव ताणाए वा सरणाए वा, तुमंपि तेसिं नालं ताणाए वा सरणाए वा ( सू. ६७ )

ये तु वयोऽतिक्रमणं नावगच्छन्ति ते 'इहे'त्यसिन्नसंयमजीविते 'प्रमत्ताः' अध्युपपन्ना विषयकषायेषु प्रमाद्यन्ति, प्रमत्ताश्चाहर्निशं परितप्यमानाः कालाकालसमुत्थायिनः सन्तः सत्त्वोपघातकारिणीः क्रियाः समारभन्त इति, आह च–'से हंता' इत्यादि, 'से' इत्यप्रशस्तगुणमूलस्थानवान् विषयाभिलाषी प्रमत्तः सन् स्थावरजङ्गमानामसुमतां हन्ता भवतीति, अत्र च बहुवचनप्रक्रमेऽपि जात्यपेक्षयैकवचननिर्देश इति, तथा छेत्ता कर्णनासिकादीनां भेत्ता शिरोनयनोदरादीनां लुम्पयिता ग्रन्थिच्छेदादिभिः विलुम्पयिता ग्रामघातादिभिः अपद्रावयिता प्राणव्यपरोपको विषशस्त्रादिभिः अपद्रापयिता वा, उत्त्रासको लोष्टप्रक्षेपादिभिः। स किमर्थं हननादिकाः क्रियाः करोतीत्याह—'अकडं' इत्यादि, अकृतमिति यदन्येन नानुष्ठितं तदहं करिष्यामीत्येवं मन्यमानोऽर्थोपार्जनाय हननादिषु प्रवर्त्तते। स एवं क्रूरकर्मातिशयकारी समुद्रलङ्घनादिकाः क्रियाः कुर्वन्नप्यलाभोदयादपगतसर्वस्वः किंभूतो भवतीत्याह— 'जेहिं वा' इत्यादि, वाशब्दो भिन्नक्रमः पक्षान्तरद्योतकः 'यैः' मातापितृस्वजनादिभिः सार्द्धं संवसत्यसौ त एव वा 'ण' मिति वाक्यालङ्कारे 'एकदे'त्यर्थनाशापदि शैशवे वा 'निजाः' आत्मीया बान्धवाः सुहृदो वा 'पुव्विं' पूर्वमेव 'तं' सर्वोपायक्षीणं पोषयन्ति,

२०

॥९७॥
२६

स चा प्राप्तेष्टमनोरथलाभः संस्तान्निजान् पश्चात् 'पोषयेद्' अर्थदानादिना सन्मानयेदिति। ते च पोषकाः पोष्या वा तव आपद्गतस्य न त्राणाय भवन्तीत्याह—'नालं' इत्यादि, 'ते' निजा मातापित्रादयः, तवेत्युपदेशविषयापन्न उच्यते, 'त्राणाय' आपद्रक्षणार्थे 'शरणाय' निर्भयस्थित्यर्थं 'नालं' न समर्थाः, त्वमपि तेषां त्राणशरणे कर्तुं नालमिति ॥ तदेवं तावत्स्वजनो न त्राणाय भवतीत्येतत्प्रतिपादितं, अर्थोऽपि महता क्लेशेनोपात्तो रक्षितश्च न त्राणाय भवतीत्येतत्प्रतिपिपादयिषुराह—



उवाइयसेसेण वा संनिहिसंनिचओ किज्जइ, इहमेगेसिं असंजयाण भोयणाए, तओ से एगया रोगसमुप्पाया समुप्पज्जंति, जेहिं वा सद्धिं संवसइ ते वा णं एगया नियगा तं पुव्विं परिहरंति, सो वा ते नियगे पच्छा परिहरिज्जा, नालं ते तव ताणाए वा सरणाए वा तुमंपि तेसिं नालं ताणाए वा सरणाए वा (सू. ६८)

५

'उपादिते'ति 'अद भक्षणे' इत्येतस्मादुपपूर्वान्निष्ठाप्रत्ययः, तत्र 'बहुलं छन्दसी'तीडागमः, उपादितम्–उपभुक्तं, तस्य शेषमुपभुक्तशेषं, तेन वा, वाशब्दादनुपभुक्तशेषेण वा सन्निधानं सन्निधिस्तस्य संनिचयः सन्निधिसन्निचयः, अथवा सम्यग् निधीयते–अवस्थाप्यत उपभोगाय योऽर्थः स सन्निधिस्तस्य सन्निचयः–प्राचुर्य्यम्, उपभोग्यद्रव्यनिचय इत्यर्थः, स 'इह' अस्मिन्संसारे 'एकेषाम्' असंयतानां संयताभासानां वा केषाञ्चिद् 'भोजनाय' उपभोगार्थं 'क्रियते' विधीयत इति, असावपि यदर्थमनुष्ठितोऽन्तरायोदयात्तत्संपत्तये न प्रभवतीत्याह–'तओ से' इत्यादि, 'ततो' द्रव्यसन्निधिसन्निचयादुत्तरकालमुपभोगावसरे 'से' तस्य बुभुक्षोः 'एकदे'ति

१०

द्रव्यक्षेत्रकालभावनिमित्ताविर्भावितवेदनीयकर्म्मोदये 'रोगसमुत्पादाः' ज्वरादिप्रादुर्भावाः 'समुत्पद्यन्त' इत्याविर्भवन्ति । स च तैः राजयक्ष्मादिभिरभिभूतः सन् भग्ननासिको गलत्पाणिपादोऽविच्छेदप्रवृत्तश्वासाकुलः किंभूतो भवति इत्याह—'जेहिं' इत्यादि, 'यैः'-मातापित्रादिभिर्निजैः सार्द्धं संवसति त एव वा निजाः 'एकदा' रोगोत्पत्तिकाले पूर्वमेव तं परिहरन्ति, स वा तान्निजान् पश्चात्परिभवोत्थापितविवेकः 'परिहरेत्' त्यजेत्, तन्निरपेक्षः सेडुकवत् स्यादित्यर्थः, ते च स्वजनादयो रोगोत्पत्तिकाले परिहरन्तोऽपरिहरन्तो वा न त्राणाय भवन्तीति दर्शयति—'नाल'मित्यादि, पूर्ववद्, रोगाद्यभिभूतान्तःकरणेन चापगतत्राणेन च किमालम्ब्य सम्यक्करणेन रोगवेदनाः सोढव्याः ? इत्याह—

## जाणित्तु दुक्खं पत्तेयं सायं ( सू. ६९ )

ज्ञात्वा प्रत्येकं प्राणिनां दुःखं तद्विपरीतं सातं वाऽदीनमनस्केन ज्वरादिवेदनोत्पत्तिकाले स्वकृतकर्म्मफलमवश्यमनुभवनीयमिति मत्वा न वैक्लव्यं कार्यमिति, उक्तं च—"सह कलेवर ! दुःखमचिन्तयन्, स्ववशता हि पुनस्तव दुर्लभा । बहुतरं च सहिष्यसि जीव हे !, परवशो न च तत्र गुणोऽस्ति ते ॥१॥" यावच्च श्रोत्रादिभिर्विज्ञानैः परिहीयमानैः जराजीर्णं न निजाः परिवदन्ति यावच्चानुकम्पया न पोषयन्ति रोगाभिभूतं च न परिहरन्ति तावदात्मार्थोऽनुष्ठेय इत्येतद्दर्शयति—

## अणभिक्कंतं च खलु वयं संपेहाए (सू० ७०).

चशब्द आधिक्ये खलुशब्दः पुनरर्थे पूर्वमभिक्रान्तं वयः समीक्ष्य मूढभावं व्रजतीति प्रतिपादितम्, अनभिक्रान्तं च पुनर्वयः संप्रेक्ष्य "आयट्ठं सम्मणुवासेज्जासि" इत्युत्तरेण सम्बन्धः, आत्मार्थम्' आत्महितं 'समनुवासयेत्' कुर्यादित्यर्थः । किमनतिक्रान्तवय-

सैवात्महितमनुष्ठेयमुतान्येनापि इति ?, परेणापि लब्धावसरेणात्महितमनुष्ठेयमित्येतद्दर्शयति—

खणं जाणाहि पंडिए (सू० ७१)

क्षणः-अवसरो धर्मानुष्ठानस्य, स चार्यक्षेत्रसुकुलोत्पत्त्यादिकः, परिवादपोषणपरिहारदोषदुष्टानां जराबालभावरोगाणामभावे सति, तं क्षणं 'जानीहि' अवगच्छ 'पण्डित' आत्मज्ञ ! । अथवाऽवमौदन् शिष्यः प्रोत्साह्यते-हे अनतिक्रान्तयौवन ! परिवादादिदोषत्रयास्पृष्ट ! पण्डित ! द्रव्यक्षेत्रकालभावभेदभिन्नं 'क्षणम्' अवसरमेवंविधं 'जानीहि' अवबुध्यस्व, तथाहि-द्रव्यक्षणो-द्रव्यात्मकोऽवसरो जङ्गमत्वपञ्चेन्द्रियत्वविशिष्टजातिकुलरूपबलारोग्यायुष्कादिको मनुष्यभावः संसारोत्तरणसमर्थचारित्रावाप्तियोग्यस्त्वयाऽवाप्तः, स चानादौ संसारे पर्यटतोऽसुमतो दुरापो भवति, अन्यत्र तु नैतच्चारित्रमवाप्यते, तथाहि-देवनारकभवयोः सम्यक्त्वश्रुतसामायिके एव, तिर्यक्षु च कस्यचिद्देशविरतिरेवेति । क्षेत्रक्षणः क्षेत्रात्मकोऽवसरो यस्मिन् क्षेत्रे चारित्रमवाप्यते, तत्र सर्वविरतिसामायिकस्याधोलौकिकग्रामसमन्वितं तिर्यक्क्षेत्रमेव, तत्राप्यर्द्धतृतीयद्वीपसमुद्राः, तत्रापि पञ्चदशसु कर्मभूमिषु, तत्रापि भरतक्षेत्रमपेक्ष्य अर्द्धषड्विंशेषु जनपदेष्वित्यादिकः क्षेत्रक्षणः क्षेत्ररूपोऽवसरोऽधिगन्तव्यः, अन्यस्मिंश्च क्षेत्र आद्ये एव सामायिके । कालक्षणस्तु कालरूपः क्षणोऽवसरः, स चावसर्पिण्यां तिसृषु समासु सुषमदुष्षमादुष्षमसुषमादुष्षमाख्यासु उत्सर्पिण्यां तु तृतीयचतुर्थारकयोः सर्वविरतिसामायिकस्य भवति, एतच्च प्रतिपद्यमानकं प्रत्यस्यधायि, पूर्वप्रतिपन्नास्तु सर्वत्र तिर्यगूर्द्धाधोलोके सर्वासु च समासु द्रष्टव्याः। भावक्षणस्तु द्वेधा-कर्मभावक्षणो नोकर्मभावक्षणश्च, तत्र कर्मभावक्षणः कर्मणामुपशमक्षयोपशमक्षयान्यतरावाप्तावसर उच्यते, तत्रोपशमश्रेण्यां चारित्रमोहनीय उपशमितेऽन्तर्मौहूर्तिक औपशमिकश्चारित्रक्षणो भवति, तस्यैव मोहनीयस्य क्षयेणान्तर्मौहूर्तिक एव



५

१०

१०
लोक०
१ उद्दे०

छद्मस्थयथाख्यातचारित्रक्षणो भवति, क्षयोपशमेन तु क्षायोपशमिकचारित्रावसरः, स चोत्कृष्टतो देशोनां पूर्वकोटिं यावदवगन्तव्यः, सम्यक्त्वक्षणस्त्वजघन्योत्कृष्टस्थितायायुषो वर्त्तमानस्य, शेषाणां तु कर्म्मणां पल्योपमासङ्ख्येयभागन्यूनान्तःसागरोपमकोटिकोटीस्थितिकस्य जन्तोर्भवति, स चानेन क्रमेणेति, ग्रन्थिकसत्त्वेभ्योऽभव्येभ्योऽनन्तगुणया शुद्ध्या विशुद्ध्यमानो मतिश्रुतविभङ्गान्यतरसाकारोपयुक्तः शुद्धलेश्यात्रिकान्यतरलेश्योऽशुभकर्म्मप्रकृतीनां चतुःस्थानिकं रसं द्विस्थानिकतामापादयन् शुभानां च द्विस्थानिकं चतुःस्थानिकतां नयन् बध्नंश्च ध्रुवप्रकृतीः परिवर्त्तमानाश्च भवप्रायोग्या बध्नातीति, ध्रुवकर्म्मप्रकृतयश्चेमाः—पञ्चधा ज्ञानावरणीयं नवधा दर्शनावरणीयं मिथ्यात्वं कषायषोडशकं भयं जुगुप्सा तैजसकार्मणशरीरे वर्णगन्धरसस्पर्शागुरुलघूपघातनिर्म्माणनामानि पञ्चधाऽन्तरायः, एताः सप्तचत्वारिंशद् ध्रुवप्रकृतयः, आसां सर्वदा बध्यमानत्वात्, मनुष्यतिरश्चोरन्यतरः प्रथमं सम्यक्त्वमुत्पादयन्नेता एकविंशतिः (प्र)परिवर्त्तमाना बध्नाति, तद्यथा—देवगत्यानुपूर्वीद्वयपञ्चेन्द्रियजातिवैक्रियशरीराङ्गोपाङ्गद्वयसमचतुरस्रसंस्थानपराघातोच्छ्वासप्रशस्तविहायोगतिप्रशस्तत्रसादिदशकसातावेदनीयोच्चैर्गोत्ररूपा इति, देवनारकास्तु मनुष्यगत्यानुपूर्वीद्वयौदारिकद्वयप्रथमसंहननसहितानि शुभानि बध्नन्ति, तमतमानारकास्तु तिर्यग्गत्यानुपूर्वीद्वयनीचैर्गोत्रसहितानीति, तदध्यवसायोपपन्नः सप्तायुष्कमबध्नन् यथाप्रवृत्तेन करणेन ग्रन्थिमासाद्यापूर्वकरणेन भित्त्वा मिथ्यात्वस्यान्तरकरणं विधायानिवृत्तिकरणेन सम्यक्त्वमवाप्नोति, तत ऊर्द्ध्वं क्रमेण क्षीयमाणे कर्म्मणि प्रवर्द्धमानेषु कण्डकेषु देशविरत्यादेरवसर इति। नोकर्म्मभावक्षणस्त्वालस्यमोहावर्णवादस्तम्भाद्यभावे सम्यक्त्वाद्यवाप्त्यवसर इति, आलस्यादिभिस्तूपहतो लब्ध्वाऽपि संसारलङ्घनक्षमं मनुष्यभवं बोध्यादिकं नाप्नोतीति, उक्तं च—"आलस्समोहऽवन्ना

१ आलस्यं मोहोऽवर्णः स्तम्भः क्रोधः प्रमादः कृपणता। भयशोकौ अज्ञानं विक्षेपः कौतूहलं रमणम्॥१॥ एतैः कारणैर्लब्ध्वा सुदुर्लभमपि मानुष्यम्। न लभते श्रुतिं हितकरीं संसारोत्तारिणीं जीवः॥२॥

१५
चतुर्विधः
क्षणः

२०

थंभा कोहा पमाय किविणत्ता । भयसोगा अन्नाणा विक्खेव कुऊहला रमणा ॥१॥ एएहिं कारणेहिं लद्धूण सुदुल्लहंपि माणुस्सं । न लहइ सुई हिअकरिं संसारुत्तारणिं जीवो ॥२॥" तदेवं चतुर्विधोऽपि क्षण उक्तः, तद्यथा–द्रव्यक्षणो जङ्गमत्वादिविशिष्टं मनुष्यजन्म क्षेत्रक्षण आर्यक्षेत्रं कालक्षणो धर्म्मचरणकालो भावक्षणः क्षयोपशमादिरूपः। इत्येवंभूतमवसरमवाप्यात्मार्थं समनुवासयेदित्युत्तरेण सम्बन्धः । किं च—

जाव सोयपरिण्णाणा अपरिहीणा नेत्तपरिण्णाणा अपरिहीणा घाणपरिण्णाणा अपरिहीणा जीहपरिण्णाणा० फरि०, इच्चेएहिं विरूवरूवेहिं पण्णाणेहिं अपरिहीणेहिं आयट्ठं सम्मं समणुवासिज्जासि ( सू. ७२ ) त्तिबेमि ॥ प्रथमोद्देशः ॥





यावदस्य विशरारोः कायापशदस्य श्रोत्रविज्ञानानि जरसा रोगेण वा अपरिहीनानि भवन्ति, एवं नेत्रघ्राणरसनस्पर्शविज्ञानानि न विषयग्रहणस्वभावतया मान्द्यं प्रतिपद्यन्ते, इत्येतैः 'विरूपरूपैः' इष्टानिष्टरूपतया नानारूपैः 'प्रज्ञानैः' प्रकृष्टैर्ज्ञानैरपरिक्षीयमाणैः सद्भिः किं कुर्याद् ?, इत्याह—'आयट्ठं' इत्यादि, आत्मनोऽर्थ आत्मार्थः, स च ज्ञानदर्शनचारित्रात्मकः, अन्यस्त्वनर्थ एव, अथवाऽऽत्मने हितं-प्रयोजनमात्मार्थं, तच्च चारित्रानुष्ठानमेव, अथवा आयतः अपर्यवसानान्मोक्ष एव, स चासावर्थश्चायतार्थोऽतस्तं, यदिवाऽऽयत्तो-मोक्षः अर्थः-प्रयोजनं यस्य दर्शनादित्रयस्य तत्तथा 'समनुवासयेत्' इति 'वस निवासे' इत्येतस्माद्धेतुमण्णिजन्ताल्लिङ्मिप् सं-सम्यग् यथोक्तानुष्ठानेन अनु-पश्चादनभिक्रान्तं वयः संप्रेक्ष्य क्षणम्-अवसरं प्रतिपद्य श्रोत्रादिविज्ञानानां वा अप्रही-

णतामधिगम्य तत आत्मार्थं 'समनुवासयेः' आत्मनि विदध्याः। अथवा 'अर्थवशाद् विभक्तिपुरुषपरिणाम'इतिकृत्वा तेन वा आत्मार्थेन ज्ञानदर्शनचारित्रात्मकेनात्मानं 'समनुवासयेद्'भावयेद् रञ्जयेत्, आयतार्थं वा मोक्षाख्यं सम्यग्-अपुनरागमनेनान्विति-यथोक्तानुष्ठानात्पश्चादात्मना 'समनुवासयेद्'अधिष्ठापयेद्। 'इतिः' परिसमाप्तौ, ब्रवीमीति सुधर्मस्वामी जम्बूस्वामिनमिदमाह, यद्भगवता श्रीवर्द्धमानस्वामिनाऽर्थतोऽभ्यधायि तदेवाहं सूत्रात्मना वच्मीति। द्वितीयाध्ययनस्य प्रथम उद्देशकः समाप्तः॥

---

उक्तः प्रथमोद्देशकः, साम्प्रतं द्वितीयस्य व्याख्या प्रतन्यते, अस्य चायमभिसम्बन्धः, इह विषयकषायमातापित्रादिलोकविजयेन मोक्षावाप्तिहेतुभूतं चारित्रं यथा सम्पूर्णभावमनुभवत्येवंरूपोऽध्ययनार्थाधिकारः प्राक्निरदेशि, तत्र मातापित्रादिलोकविजयेन रोगजराद्यनभिभूतचेतसाऽऽत्मार्थः-संयमोऽनुष्ठेय इत्येतत्प्रथमोद्देशकेऽभिहितम्, इहापि तस्मिन्नेव संयमे वर्त्तमानस्य कदाचिन्मोहनीयोदयादरतिः स्याद्, अज्ञानकर्मलोभोदयाद्वाऽध्यात्मदोषेण संयमे न दृढत्वं भवेदित्यतोऽरत्यादिव्युदासेन यथा संयमे दृढत्वं भवति तथाऽनेन प्रतिपाद्यते, अथवा यथाऽष्टप्रकारं कर्म्मापहीयते तथा अस्मिन्नध्ययने प्रतिपाद्यते इत्यध्ययनार्थाधिकारेऽभ्यधायि, तत्र कथं क्षीयत इत्याह—

अरइं आउट्टे से मेहावी, खणंसि मुक्के (सू० ७३)

अस्य चानन्तरसूत्रेण सम्बन्धो वाच्यः, स चायम्—'आयट्ठं समणुवासेज्जासि' आत्मार्थं संयमं सम्यक्तया कुर्यात्, तत्र कदाचिदरत्युत्पन्नो भवेत्तदर्थमाह-'अरइं' इत्यादि, परम्परसूत्रसम्बन्धस्तु 'खणं जाणाहि पंडिए' क्षणं-चारित्रावसरमवाप्यारतिं न कुर्या-

मोहस्याज्ञानलोभकामायात्मकत्वात्तेषां चाध्यात्मिकत्वादिति गाथार्थः ॥ [ द्वितीयाध्ययने द्वितीयोद्देशकनिर्युक्तिः ] ॥ ननु चारतिमतो मेधाविनोऽनेन सूत्रेणोपदेशो दीयते यथा–संयमारतिमपवर्त्तेत, मेधावी चात्र विदितसंसारस्वभावो विवक्षितो, यश्चैवंभूतो नासावरतिमान् तद्वांश्चेन्न विदितवेद्य इत्यनयोः सहानवस्थानलक्षणेन विरोधेन विरोधात् छायातपयोरिव नैकत्रावस्थानम्, उक्तं च–"तज्ज्ञानमेव न भवति यस्मिन्नुदिते विभाति रागगणः। तमसः कुतोऽस्ति शक्तिर्दिनकरकिरणाग्रतः स्थातुम्? ॥ १ ॥" इत्यादि, यो ह्यज्ञानी मोहोपहतचेताः स विषयाभिष्वङ्गात् संयमे सर्वद्वन्द्वप्रत्यनीके रत्यभावं विदध्याद्, आह च–अज्ञानान्धाश्चटुलवनितापाङ्गविक्षेपितास्ते, कामे सक्तिं दधति विभवाभोगतुङ्गार्जने वा। विद्वच्चित्तं भवति हि महन्मोक्षमार्गैकतानं, नाल्पस्कन्धे विटपिनि कषत्यंसभित्तिं गजेन्द्रः ॥१॥" नैतन्मृष्यामहे, यतो ह्यवाप्तचारित्रस्यायमुपदेशो दित्सितः, चारित्रावाप्तिश्च न ज्ञानमृते, तत्कार्यत्वाच्चारित्रस्य, न च ज्ञानारत्योर्विरोधः, अपि तु रत्यरत्योः, ततश्च संयमगता रतिरेवारत्या बाध्यते न ज्ञानम्, अतो ज्ञानिनोऽपि चारित्रमोहनीयोदयात् संयमे स्यादेवारतिः, यतो ज्ञानमप्यज्ञानस्यैव बाधकं, न संयमारतेः, तथा चोक्तम्–ज्ञानं भूरि यथार्थवस्तुविषयं स्वस्य द्विषो बाधकं, रागारातिशमाय हेतुमपरं युङ्क्ते न कर्तुं स्वयम्। दीपो यत्तमसि व्यनक्ति किमु नो रूपं स एवेक्षतां, सर्वः स्वं विषयं प्रसाधयति हि प्रासङ्गिकोऽन्यो विधिः ॥१॥" तथेदमपि भवतो न कर्णविवरमगाद् यथा–'बलवानिन्द्रियग्रामः, पण्डितोऽप्यत्र मुह्यती'त्यतो यत्किञ्चिदेतत्, अथवा नारत्यापन्न एवैवमुच्यते, अपि त्वयमुपदेशो मेधावी संयमविषये मा विधादरतिमिति। संयमारतिनिवृत्तश्च सन् कं गुणमवाप्नोतीत्याह–'खणंसि मुक्के'परमनिरुद्धः कालः क्षणः जरत्पट्टशाटिकापाटनदृष्टान्तसमयप्रसाधितः तत्र मुक्तो विभक्तिपरिणामाद्वा क्षणेन–अष्टप्रकारेण कर्मणा संसारबन्धनैर्वा विषयाभिष्वङ्गस्नेहादिभिर्मुक्तो

न ज्ञानारत्योर्विरोधः

१५

२०

भरतवदिति, ये पुनरनुपदेशवर्त्तिनः कण्डरीकाद्यास्ते चतुर्गतिकसंसारान्तर्वर्त्तिनो दुःखसागरमधिवसन्तीत्याह च—

**अणाणाय पुट्ठावि एगे नियट्टंति, मंदा मोहेण पाउडा, अपरिग्गहा भविस्सामो समुट्ठाय लद्धे कामे अभिगाहइ, अणाणाए मुणिणो पडिलेहंति, इत्थ मोहे पुणो पुणो सन्ना नो हव्वाए नो पाराए ( सू. ७४ )**

आज्ञाप्यत इत्याज्ञा—हिताहितप्राप्तिपरिहाररूपतया सर्वज्ञोपदेशस्तद्विपर्ययोऽनाज्ञा तया अनाज्ञया सत्या 'स्पृष्टाः' परीषहोपसर्गैः, अपिशब्दः सम्भावनायां स च भिन्नक्रमो निवर्त्तन्त इत्यस्मादनन्तरं द्रष्टव्यः, 'एके' मोहनीयोदयात् कण्डरीकादयो न सर्वे संयमात् समस्तद्वन्द्वोपशमरूपात् निवर्त्तन्ते अपीति, सम्भाव्यत एतन्मोहोदयस्येत्यपिशब्दार्थः, किंभूताः सन्तो निवर्त्तन्त इत्याह—'मन्दा' जडा—अपगतकर्त्तव्यविवेकाः, कुत एवंभूता ?, यतो 'मोहेन प्रावृता' मोहः—अज्ञानं मिथ्यात्वमोहनीयं वा तेन प्रावृता—गुण्ठिताः, उक्तं च—"अज्ञानं खलु कष्टं क्रोधादिभ्योऽपि सर्वपापेभ्यः। अर्थं हितमहितं वा न वेत्ति येनावृतो लोकः ॥१॥" इत्यादि, तदेव-मवाप्तचारित्रोऽपि कर्मोदयात्परीषहोदयेऽङ्गीकृतलिङ्गः पश्चाद्भावतामालम्बत इत्युक्तम्। अपरे तु स्वरुचिविरचितवृत्तयो नानाविधैरुपायैर्लोकादर्थं जिघृक्षवः,(ते)किल वयं संसारोद्विग्ना मुमुक्षवस्तेषु तेषु आरम्भविषयाभिष्वङ्गेषु प्रवर्त्तन्त इति दर्शयति—'अपरिग्गहा' इत्यादि, परिः—समन्तात् मनोवाक्कायकर्मभिर्गृह्यत इति परिग्रहः स येषां नास्तीत्यपरिग्रहा एवंभूता वयं भविष्याम इति शाक्यादिमतानुसारिणः स्वयूथ्या वा 'समुत्थाय' चीवरादिग्रहणं प्रतिपद्य, ततो लब्धान् कामान् 'अभिगाहन्ते' सेवन्ते, तिङ्व्यत्ययेन चैक-

५

१०

वचनमिति, अत्र चान्त्यव्रतोपादानात् शेषाण्यपि ग्राह्याणि, अहिंसका वयं भविष्याम एवममृषावादिन इत्याद्यप्यायोज्यम्।। तदेवं शैल्या इहान्यथावादिनोऽन्यथाकारिणः कामार्थमेव तांस्तान् प्रव्रज्याविशेषान् बिभ्रति, उक्तं च–"स्वेच्छाविरचितशास्त्रैः प्रव्रज्यावेषधारिभिः क्षुद्रैः। नानाविधैरुपायैरनाथवन्मुष्यते लोकः ॥१॥" इत्यादि। तदेवं प्रव्रज्यावेषधारिणो लब्धान्कामानवगाहन्ते, तल्लाभार्थं च तदुपायेषु प्रवर्त्तन्ते इत्याह–'अणाणाए' इत्यादि, 'अनाज्ञया' स्वैरिण्या बुद्ध्या 'मुनयः' इति मुनिवेषविडम्बिनः कामोपायान् 'प्रत्युपेक्षन्ते' कामोपायारम्भेषु पौनःपुन्येन लगन्तीति, आह च–'एत्थ' इत्यादि, 'अत्र' अस्मिन् विषयाभिष्वङ्गाज्ञानमये भावमोहे पौनःपुन्येन 'मग्नाः' विषण्णा निमग्नाः पङ्कावमग्ना नागा इवात्मानमाक्रष्टुं नालमिति, आह च–'नो हव्वाए नो पाराए' यो हि मध्येमहानदीपूरं निमग्नो भवत्यसौ नारातीयतीराय नापि पारेमहानदीपूरमिति, एवमत्रापि कुतश्चिन्निमित्तात्त्यक्तगृहगृहिणीपुत्रधनधान्यहिरण्यरत्नकुप्यदासीदासादिविभव आकिञ्चन्यं प्रतिज्ञायारातीयतीरदेश्याद्गृहवाससौख्यान्निर्गतः सन् नो हव्वाएत्ति भवति, पुनरपि वान्तभोगाभिलाषितया यथोक्तसंयमाभावेन तत्क्रियाया विफलत्वात् नो पाराएत्ति भवति, उभयतो मुक्तबन्धना मुक्तोलीवोभयभ्रष्टो न गृहस्थो नापि प्रव्रजित इत्युक्तं भवति, उक्तं च–"इन्द्रियाणि न गुप्तानि, लालितानि न चेच्छया। मानुष्यं दुर्लभं प्राप्य, न भुक्तं नापि शोषितम् ॥१॥" इति। ये पुनरप्रशस्तरतिनिवृत्ताः प्रशस्तरतिमधिश्रयामासुस्ते किंभूता भवन्तीत्याह–

**विमुत्ता हु ते जणा जे जणा पारगामिणो, लोभमलोभेण दुगुंछमाणे लद्धे कामे नाभिगाहइ (सू० ७५)**

विविधम्–अनेकप्रकारं द्रव्यतो धनस्वजनानुषङ्गाद्भावतो विषयकषायादिभ्योऽनुसमयं मुच्यमाना एव भाविनि भूतवदुपचारान्मुक्ता



२०

विमुक्ताः ते जना ये जनाः सर्वस्वजनभूता निर्ममत्वाः पारगामिनो भवन्ति, पारो-मोक्षः संसारार्णवतटवर्तित्वात् तत्कारणानि ज्ञान-दर्शनचारित्राण्यपि पार इति, भवति हि तादर्थ्यात्ताच्छब्द्यं, यथा तन्दुलान् वर्षति पर्जन्यः, अतस्तत्पारं-ज्ञानदर्शनचारित्राख्यं गन्तुं-शीलं येषां ते पारगामिनः, ते मुक्ता भवन्तीति पूर्वेण सम्बन्धः। कथं पुनः सम्पूर्णपारगामित्वं भवतीत्याह-'लोभं' इत्यादि, इह हि लोभः सर्वसङ्गानां दुस्त्यजो भवति, तथाहि-क्षपकश्रेण्यन्तर्गतस्यापगताशेषकषायस्यापि खण्डशः क्षिप्यमाणोऽप्यनुबध्यत इति, अतस्तं लोभं, तद्विपक्षेण अलोभेन 'जुगुप्समानो' निन्दन्-परिहरन्, किं करोतीत्याह-'लद्धे' इत्यादि, 'लब्धान्' प्राप्तानिच्छामदनरू-पान् कामान् 'नाभिगाहते' न सेवते, यो हि शरीरादावपि निवृत्तलोभः स कामाभिष्वङ्गवान्न भवति, ब्रह्मदत्तामन्त्रितचित्रवदिति, प्रधानान्त्यलोभपरित्यागेन चोपसर्जनाधस्तनपरित्यागो द्रष्टव्यः, तद्यथा-क्रोधं क्षान्त्या जुगुप्समानो मानं मार्दवेन मायामार्जवे-नेत्याद्यप्यायोज्यं, लोभोपादानं तु सर्वकषायप्राधान्यख्यापनार्थमुपादडे, तथाहि-तत्प्रवृत्तः साध्यासाध्यविवेकविकलः कार्याकार्य-विचाररहितः सन्नर्थैकदत्तदृष्टिः पापोपादानमास्थाय सर्वाः क्रियाः अधितिष्ठतीति, तदुक्तम्-"धावेइ रोहणं तरइ सायरं भमइ गिरि-णिगुंजेसुं। मारेइ बंधवंपिहु पुरिसो जो होइ धणलुद्धो ॥१॥ अडइ बहुं वहइ भरं सहइ छुहं पावमायरइ धिट्ठो। कुलसीलजाइपच्च-यधिइं च लोभदुओ चयइ ॥ २ ॥" इत्यादि, तदेवं कुतश्चिन्निमित्तात् गृहादपि लोभादिना निष्क्रम्य पुनर्लोभादिपरित्यागः कार्यः, अन्यस्तु लोभं विनापि प्रव्रज्यां प्रतिपद्यत इति दर्शयति—

१ धावति रोहणं तरति सागरं भ्राम्यति गिरिनिकुञ्जेषु। मारयति बान्धवमपि पुरुषो यो भवति धनलुब्धः ॥१॥ अटति बहु वहति भारं सहते क्षुधां पाप-माचरति धृष्टः। कुलशीलजातिप्रत्ययधृतीश्च लोभाभिद्रुतस्त्यजति ॥२॥

विणावि लोभं निक्खम्म एस अकम्मे जाणइ पासइ, पडिलेहाए नावकंखइ, एस अणगारित्ति पवुच्चई, अहो य राओ परितप्पमाणे कालाकालसमुट्ठाई संजोगट्ठी अट्ठालोभी आलुंपे सहसक्कारे विणिविट्ठचित्ते, इत्थ सत्थे पुणो पुणो, से आयबले से नाइबले से मित्तबले से पिच्चबले से देवबले से रायबले से चोरबले से अतिहिबले से किविणबले से समणबले, इच्चेएहिं विरूवरूवेहिं कज्जेहिं दंडसमायाणं संपेहाए भया कज्जइ, पावमुक्खुत्ति मन्नमाणे, अदुवा आसंसाए (सू. ७६)

कश्चिद्भरतादिर्निःशेषतो लोभापगमाद्विनापि लोभं 'निष्क्रम्य' प्रव्रज्यां प्रतिपद्य, पाठान्तरं वा 'विणइत्तु लोभं' सञ्ज्वलनसंज्ञकमपि लोभं 'विनीय' निर्मूलतोऽपनीय एष एवंभूतः सन् 'अकर्मा' अपगतघातिकर्म्मचतुष्टयाविर्भूतानावरणज्ञानो विशेषतो जानाति सामान्यतः पश्यति, एतदुक्तं भवति-एवंभूतो लोभो येन तत्क्षये मोहनीयक्षये चावश्यं घातिकर्म्मक्षयस्तत्सिद्ध निरावरणज्ञानसद्भावस्ततोऽपि भवोपग्राहिकर्म्मापगमं इत्यतो लोभापगमे अकर्म्मेत्युक्तम्। यतश्चैवम्भूतो लोभो दुरन्तस्तद्ज्ञानी चावश्यं कर्म्मक्षयस्ततः किं कर्त्तव्यमित्याह-'पडिलेहाए' इत्यादि, प्रत्युपेक्षणया-गुणदोषपर्यालोचनयोपपन्नः सन् अथवा लोभविपाकं प्रत्युपेक्ष्य-पर्यालोच्य तदभावे गुणं च लोभं 'नावकाङ्क्षति' नाभिलषतीति, यथाज्ञानोपहतान्तःकरणोऽप्रशस्तमूलगुणस्थानवर्ती विषयकषायाद्युपपन्नस्तस्य

पूर्वोक्तं विपरीततया सर्वं संतिष्ठते, तथाहि-अलोभं लोभेन जुगुप्समानो लब्धान् कामानवगाहते, लोभमनपनीय निष्क्रम्य पुनरपि लोभैकमनाः सकर्म्मा न जानाति नापि पश्यति, अपश्यंश्चाप्रत्युपेक्षणयाऽभिकाङ्क्षति। यच्च प्रथमोद्देशकेऽप्रशस्तमूलगुणस्थानमवाचि तच्च वाच्यमिति, आह च-'अहो य राओ' इत्यादि, अहोरात्रं परितप्यमानः कालाकालसमुत्थायी संयोगार्थी अर्थालोभी आलुम्पः सहसाकारो विनिविष्टचित्तः अत्र शस्त्रे पृथिवीकायाद्युपघातकारिणि पौनःपुन्येन वर्त्तते। किं च-'से आयबले'-आत्मनो बलं-शक्त्युपचय आत्मबलं तन्मे भावीतिकृत्वा-नानाविधैरुपायैरात्मपुष्ट्यै तास्ताः क्रियाः ऐहिकामुष्मिकोपघातकारिणीर्विधत्ते, तथाहि-'मांसेन पुष्यते मांस'मितिकृत्वा पञ्चेन्द्रियघातादावपि प्रवर्त्तते, अपराश्च लुम्पनादिकाः सूत्रेणैवाभिहिताः, एवं च ज्ञातिबलं-स्वजनबलं मे भावीति, तथा तन्मित्रबलं मे भविष्यति येनाहमापदं सुखेनैव निस्तरिष्यामि, तत्प्रेत्यबलं भविष्यतीति वस्तादिकमुपहन्ति, तद्वा देवबलं भावीति पचनपाचनादिकाः क्रिया विधत्ते, राजबलं वा मे भविष्यतीति राजानमुपचरति, चौरग्रामे वा वसति, चौरभागं वा प्राप्स्यामीति चौरानुपचरति, अतिथिबलं वा मे भविष्यतीत्यतिथीनुपचरति, अतिथिर्हि निःस्पृहोऽभिधीयते इति, उक्तं च—"तिथिपर्वोत्सवाः सर्वे, त्यक्ता येन महात्मना। अतिथिं तं विजानीयाच्छेषमभ्यागतं विदुः ॥१॥" एतदुक्तं भवति-तद्बलार्थमपि प्राणिषु दण्डो न निक्षेप्तव्य इति, एवं कृपणश्रमणार्थमपि वाच्यमिति, एवं पूर्वोक्तैः 'विरूपरूपैः' नानाप्रकारैः पिण्डदानादिभिः कार्यैः 'दण्डसमादान'मिति दण्ड्यन्ते—व्यापाद्यन्ते प्राणिनो येन स दण्डस्तस्य सम्यगादानं-ग्रहणं समादानं, तदात्मबलादिकं मम नाभविष्यत् यद्यहमेतन्नाकरिष्यमित्येव 'सप्रेक्षया' पर्यालोचनया एवं सम्प्रेक्ष्य वा भयात् क्रियते, एवं सारं दिहभवमाश्रित्य दण्डसमादानकारणमुपन्यस्तम्, आमुष्मिकार्थमपि परमार्थमजानानैर्दण्डसमादानं क्रियत इति दर्शयति-'पावमो-

स्था० श्लोक० २ उ०

वखो'त्ति इत्यादि, पातयति पासयतीति वा पाप तस्मान्मोक्ष', 'इति' हेतौ, यस्मात्म मम भविष्यतीति मन्यमानः दण्डममादानाय प्रवर्त्तत इति, तथाहि–हुतभुजि पड्जीवोपघातकारिणि शस्त्रे नानाविधोपायप्राण्युपघाताच्चपापविध्वंसनाय पिप्पलशमीसमित्तिलाज्यादिकं शठव्युद्ग्राहितमतयो जुह्वति, तथा पितृपिण्डदानादौ वस्त्रादिमामोपस्कृतभोजनादिकं द्विजातिभ्य उपकल्पयन्ति, तदुक्तोपानुज्ञात स्वतोऽपि भुञ्जते, तदव नानाविधरुपायैरज्ञानोपहतबुद्धयः पापमोक्षार्थं दण्डोपादानेन तास्ताः क्रियाः प्राण्युपघातकारिणीः समारभमाणाः अनेकभवशतकोटीदुर्मोचमघमेवोपाददन इति। किञ्च–'अदुवा' इत्यादि, पापमोक्ष इति मन्यमानो दण्डमादत्त इत्युक्तम्, अथवा आशमनम् आशमा–अप्राप्तप्रापणाभिलापस्तदर्थं डण्डमादानमादत्ते, तथाहि–ममेतत् परुत्परारि वा प्रेत्योपस्थास्यते इत्याशसया क्रियासु प्रवर्त्तते, राजान वाऽर्थाशाविमोहितमना अवलगति, उक्तं च–"आराध्य भूपतिमवाप्य ततो धनानि, भोक्ष्यामहे किल वय सतत सुखानि। इत्याशया धनविमोहितमानमाना, कालः प्रयाति मरणावधिरेव पुंसाम् ॥ १ ॥ एहि गच्छ पतोत्तिष्ठ, वद मौन ममाचर। इत्याद्याशाग्रहग्रस्ते', क्रीडन्ति धनिनोऽर्थिभि. ॥२॥" इत्यादि॥ तदेवं व्यवस्था किं कर्त्तव्यमित्याह—

प्र आ ११५

त परिण्णाय मेहावी नेव सयं एएहिं कज्जेहिं दंडं समारंभिज्जा नेव अन्नं एएहिं कज्जेहिं दंडं समारंभाविज्जा एएहिं कज्जेहिं दंडं समारंभंतंपि अन्नं न समणुजाणिज्जा, एस मग्गे आरिएहिं पवेइए, जहेत्थ कुसले नोवलिंपिज्जासि त्तिबेमि (सू ७७) लोगविजयस्स बितिओ उद्देसो ॥२॥

'तदि'ति सर्वनाम प्रक्रान्तपरामर्शि, 'तत्' शस्त्रपरिज्ञोक्त स्वकायपरकायादिभेदभिन्न शस्त्रम्, इह वा यदुक्तम् अप्रशस्तगुणमूल

१५ अदण्ड आर्यमार्गः

२०

ध्यानं-विषयकषायमातापित्रादिकं, तथा कालाकालसमुत्थानेक्षणपरिज्ञानश्रोत्रादिविज्ञानग्रहणादिकं तथाऽऽत्मबलाधानाद्यर्थे च दण्डसमादानं ज्ञपरिज्ञया ज्ञात्वा प्रत्याख्यानपरिज्ञया परिहरेत् 'मेधावी' मर्यादावर्त्ती, ज्ञातहेयोपादेयः सन् किं कुर्यादित्याह— 'नेव सयं' इत्यादि, नैव 'स्वयम्' आत्मना एभिः-आत्मबलाधानादिकैः 'कार्यैः' कर्त्तव्यैः समुपस्थितैः सद्भिः 'दण्डं' सत्त्वोपघातं समारभेत्, नाप्यन्यम्-अपरमेभिः कार्यैर्हिंसानृतादिकं दण्डं समारम्भयेत्, तथा समारभमाणमप्यपरं योगत्रिकेण न समनुज्ञापयेद्। एष चोपदेशस्तीर्थकृद्भिरभिहित इत्येतत् सुधर्म्मस्वामी जम्बूस्वामिनमाहेति दर्शयति-'एस' इत्यादि, 'एष' इति ज्ञानादियुक्तो भाव-  मार्गो योगत्रिककरणत्रिकेण दण्डसमादानपरिहारलक्षणो वा 'आर्यैः' आराद्याताः सर्वहेयधर्म्मेभ्य इत्यार्याः-संसारार्णवतटवर्त्तिनः क्षीणघातिकर्म्मांशाः संसारोदरविवरवर्त्तिभावविदः तीर्थकृतस्तैः 'प्रकर्षेण' सदेवमनुजायां पर्षदि सर्वस्वभाषानुगामिन्या वाचा यौगपद्याशेषसंशीतिच्छेद्या प्रकर्षेण वेदितः-कथितः प्रतिपादित इतियावत्, एवम्भूतं च मार्गं ज्ञात्वा किं कर्त्तव्यमित्याह-'जहेत्थ' इत्यादि, तेषु तेष्वात्मबलोपधानादिकेषु कार्येषु समुपस्थितेषु सत्सु दण्डसमुपादानादिकं परिहरन् 'कुशलो' निपुणः अवगततत्त्वो यथैतस्मिन् दण्डसमुपादाने समारम्भमाणं 'नोपलिम्पयेः' न तत्र संश्लेषं कुर्या इति, विभक्तिपरिणामाद्वा एतेन दण्डसमुपादानजनितकर्मणा यथा  नोपलिप्यसे तथा सर्वैः प्रकारैः कुर्यास्त्वम्। इतिशब्दः परिसमाप्तौ, ब्रवीमीति पूर्ववत्। लोकविजये द्वितीय उद्देशकः समाप्तः॥

उक्तो द्वितीयोद्देशकः, साम्प्रतं तृतीय आरभ्यते, अस्य चायमभिसम्बन्धः–इहानन्तरोद्देशके संयमे दृढत्वं कार्यमसंयमे चादृढत्वमुक्तं, तच्चोभयमपि कषायव्युदासेन सम्पद्यते, तत्रापि मान उत्पत्तेरारभ्य उच्चैर्गोत्रोत्थापितः स्यात् अतस्तद्व्युदासार्थमिदमभिधीयते। अस्य चानन्तरसूत्रेण सम्बन्धः–'जहेत्थ कुसले नोवलिंपेज्जासि' कुशलो–निपुणः सन् अस्मिन्नुच्चैर्गोत्राभिमाने यथाऽऽत्मानं नोपलिम्पयेत्तथा विदध्यास्त्वं, किं मत्वा ?, इत्यतस्तदभिधीयते—

१५

**से असइं उच्चागोए असइं नीआगोए, नो हीणे नो अइरित्ते, नोऽपीहए, इय संखाय को गोयावाई को माणावाई ?, कंसि वा एगे गिज्झा, तम्हा नो हरिसे नो कुप्पे, भूएहिं जाण पडिलेह सायं (सू. ७८)**

प्र. आ. ११६

'से असइं उच्चागोए असइं नीआगोएत्ति' 'स' इति संसार्यसुमान् 'असकृद्' अनेकशः उच्चैर्गोत्रे मानसत्कारार्हे, उत्पन्न इति शेषः, तथा असकृन्नीचैर्गोत्रे–सर्वलोकावगीते, पौनःपुन्येनोत्पन्न इति, तथाहि–नीचैर्गोत्रोदयादनन्तमपि कालं तिर्यक्ष्वास्ते, तत्र च पर्यटन् द्विनवतिनामोत्तरप्रकृतिसत्कर्म्मा संस्तथाविधाध्यवसायोपपन्नः आहारकशरीरतत्सङ्घातबन्धनाङ्गोपाङ्गदेवगत्यानुपूर्वीद्वयनरकगत्यानुपूर्वीद्वयवैक्रियचतुष्टयरूपा एता द्वादश कर्म्मप्रकृतीर्निर्लेप्याशीतिसत्कर्म्मा तेजोवायुषूत्पन्नः सन् मनुजगत्यानुपूर्वीद्वयमपि निर्लेप्य तत उच्चैर्गोत्रमुद्वलयति पल्योपमासंख्येयभागेन, अतस्तेजोवायुष्वाद्य एव भङ्गकः, तद्यथा–नीचैर्गोत्रस्य बन्ध उदयोऽपि तस्यैव सत्क-

२०



२३

र्म्मताऽपीति, ततोऽप्युद्वृत्तस्यापरैकेन्द्रियगतस्यायमेव भङ्गः[1], त्रसेष्वप्यपर्याप्तकावस्थायामयमेव, अनिर्लेपिते[2] तूच्चैर्गोत्रे द्वितीयचतुर्थौ भङ्गौ, तद्यथा–नीचैर्गोत्रस्य बन्ध उदयोऽपि तस्यैव सत्कर्म्मता तूभयरूपस्यैवेति द्वितीयः, तथा उच्चैर्गोत्रस्य बन्धो नीचस्योदयः सत्कर्म्मता तूभयरूपस्येति चतुर्थः, शेषास्तु चत्वारो न सन्त्येव, तिर्यक्षूच्चैर्गोत्रस्योदयाभावादिति भावः, तदेवमुच्चैर्गोत्रोद्वलनेन कलंकलीभावमापन्नोऽनन्तं कालमेकेन्द्रियेष्वास्ते, अनुद्वलिते वा तिर्यक्ष्वास्तेऽनन्ता उत्सर्पिण्यवसर्पिणीः, आवलिकाकालासङ्ख्येयभागसमयसंख्यान् पुद्गलपरावर्त्तानिति, कीदृशः पुनः पुद्गलपरावर्त्त इति ?, उच्यते, यदौदारिकवैक्रियतैजसभाषानापानमनःकर्मसप्तकेन संसारोदरविवरवर्त्तिनः पुद्गलाः आत्मसात्परिणामिता भवन्ति तदा पुद्गलपरावर्त्त इत्येके, अन्ये तु द्रव्यक्षेत्रकालभावभेदाच्चतुर्द्धा वर्णयन्ति, प्रत्येकमसावपि बादरसूक्ष्मभेदात् द्वैविध्यमनुभवति, तत्र द्रव्यतो बादरो यदौदारिकवैक्रियतैजसकार्म्मणचतुष्टयेन सर्वपुद्गला गृहीत्वोज्झितास्तदा भवति, सूक्ष्मः पुनर्यदैकशरीरेण सर्वपुद्गलाः स्पर्शिता भवन्ति तदा द्रष्टव्यः १, क्षेत्रतो बादरो यदा क्रमोत्क्रमाभ्यां म्रियमाणेन सर्वे लोकाकाशप्रदेशाः स्पृष्टा भवन्ति तदा विज्ञेयः, सूक्ष्मस्तु तदा विज्ञेयो, यदैकस्मिन् विवक्षिताका-

---

१ ०स्यान्यत्रापि आद्यद्वय० प्र. २ अनिर्लेपिते तूच्चैर्गोत्रे द्वितीयो भङ्गकः, कस्यचित्प्रथमसमय एवापरस्यान्तमुहूर्त्ताद्वोर्ध्वमुच्चैर्गोत्रसम्बन्धसद्भावे चतुर्थभङ्गकः, तद्यथा–नीचैर्गोत्रस्य बन्ध उदयोऽपि तस्यैव सत्कर्म्मता तूभयरूपस्यैवेति द्वितीयः, तथोच्चैर्गोत्रस्य बन्धो नीचस्योदयः सत्कर्म्मता तूभयरूपस्येति चतुर्थः, शेषास्तु चत्वारो न सन्त्येव, तिर्यक्षूच्चैर्गोत्रस्योदयाभावादिति भावः । तदेवमुच्चैर्गोत्रोद्वलनेन कलकलीभावमापन्नोऽसख्येयमपि काल सूक्ष्मत्रसेष्वास्ते, ततोऽप्युद्वृत्त उच्चैर्गोत्रोदयाभावे सति द्वितीयचतुर्थभङ्गकस्थोऽनन्तमपि काल तिर्यक्ष्वास्ते इति, स च अनन्ता उत्सर्पिण्यवसर्पिणीः, आवलिकाकालासख्येयभागसमयसख्यान् पुद्गलपरावर्त्तानिति प्र. २ नीचैर्गोत्रस्य बन्ध उच्चैर्गोत्रस्योदयः उच्चनीचैर्गोत्रे सती ३ उच्चैर्गोत्रस्य बन्ध उच्चैर्गोत्रस्योदय उच्चनीचैर्गोत्रे सती ५ उच्चैर्गोत्रस्योदय उच्चनीचैर्गोत्रे सती ६ उच्चैर्गोत्रस्योदय उच्चैर्गोत्र सत् ७ इत्येवंरूपाः शेषास्तृतीयपञ्चमषष्ठसप्तमभङ्गरूपाश्चत्वारः. प्र.

आ०
२लोक०
३ उद्दे०

शखण्डके मृतः पुनर्यदा तस्यानन्तरप्रदेशवृद्ध्या सर्वं लोकाकाशं व्याप्नोति तदा ग्राह्यः २, कालतो बादरो यदोत्सर्पिणीसमयाः क्रमोत्क्रमाभ्यां म्रियमाणेनालिङ्गिता भवन्ति तदा विज्ञेयः, सूक्ष्मस्तूत्सर्पिणीप्रथमसमयादारभ्य क्रमेण सर्वसमया म्रियमाणेन यदा छुप्ता भवन्ति तदाऽवगन्तव्यो ३, भावतो बादरो यदाऽनुभागबन्धाध्यवसायस्थानानि क्रमोत्क्रमाभ्यां म्रियमाणेन व्याप्तानि भवन्ति तदाऽभिधीयते, अनुभागबन्धाध्यवसायप्रमाणं तु संयमस्थानावसरे प्रागेवाभ्यधायीति, सूक्ष्मस्तु जघन्यानुभागबन्धाध्यवसायस्थानादारभ्य यदा सर्वेष्वपि क्रमेण मृतो भवति तदाऽवसेय इति ४। तदेवं कलंकलीभावमापन्नोऽन्यो वा नीचैर्गोत्रोदयादनन्तमपि कालं तिर्यक्ष्वास्ते, मनुष्येष्वपि तदुदयादेव चावगीतेषु स्थानेषूत्पद्यते, तथा कलंकलीसत्त्वोऽपि द्वित्रिन्द्रियादिषूत्पन्नः सन् प्रथमसमये एव पर्याप्त्युत्तरकालं वोच्चैर्गोत्रं बद्ध्वा मनुष्येष्वसकृदुच्चैर्गोत्रमास्कन्दति, तत्र कदाचित्तृतीयभङ्गकस्थः पञ्चमभङ्गोपपन्नो वा भवति, तावेमौ—

१०

उच्चनी-
चगोत्रे

१५

प्र. आ.
११७

नीचैर्गोत्रं बध्नात्युच्चैर्गोत्रस्योदयः सत्कर्म्मता तूभयस्य तृतीयः, पञ्चमस्तूच्चैर्गोत्रं बध्नाति तस्यैवोदयः सत्कर्म्मता तूभयस्य, षष्ठसप्तमभङ्गौ तूपरतबन्धस्य भवतः, अविषयत्वान्न ताभ्यामिहाधिकारः, तौ चेमौ बन्धोपरमे उच्चैर्गोत्रोदयः सत्कर्म्मता तूभयस्येति षष्ठः, सप्तमस्तु शैलेश्यवस्थायां द्विचरमसमये नीचैर्गोत्रे क्षपिते उच्चैर्गोत्रोदयस्तस्यैव सत्कर्म्मतेति, तदेवमुच्चावचेषु गोत्रेषु असकृदुत्पद्यमानेनासुमता पञ्चभङ्गकान्तर्वर्त्तिना न मानो विधेयो नापि दीनतेति। तयोश्चोच्चावचयोः गोत्रयोर्बन्धाध्यवसायस्थानकण्डकानि तुल्यानीत्याह—'णो हीणे णो अइरित्ते' यावन्त्युच्चैर्गोत्रेऽनुभावबन्धाध्यवसायस्थानकण्डकानि नीचैर्गोत्रेऽपि तावन्त्येव, तानि च सर्वाण्यप्यसुमताऽनादिसंसारे भूयो भूयः स्पर्शितानि, तत उच्चैर्गोत्रकण्डकार्थतयाऽसुभृन्न हीनो नाप्यतिरिक्तः, एवं नीचैर्गोत्रकण्डकार्थतयाऽपीति। नागार्जुनीयास्तु पठन्ति—"एगमेगे खलु जीवे अईअद्धाए असइं उच्चागोए असइं नीआगोए, कंडगट्ठयाए नो

हीणे नो अइरित्ते" एकको जीवः खलुशब्दो वाक्यालङ्कारे अतीते कालेऽसकृदुच्चावचेषु गोत्रेषूत्पन्नः, न चोच्चावचानुभागकण्डकापेक्षया न हीनो नाप्यतिरिक्त इति, तथाहि-उच्चैर्गोत्रकण्डकेभ्य एकभविकेभ्योऽनेकभविकेभ्यो वा नीचैर्गोत्रकण्डकानि न हीनानि नाप्यतिरिक्तानीत्यतोऽनयोरुत्कर्षापकर्षौ न विधेयौ, अस्य चोपलक्षणार्थत्वात् सर्वेष्वपि मदस्थानेष्वेतदायोज्य, यतश्चोच्चावचेषु स्थानेषु कर्म्मवशादुत्पद्यन्ते, बलरूपलाभादिमदस्थानानां चासमञ्जसतामवगम्य किं कर्त्तव्यमित्याह-'नोऽपीहए' अपिः सम्भावने स च भिन्नक्रमो, जात्यादीनां मदस्थानानामन्यतमदपि 'नो ईहेतापि' नाभिलषेदपि अथवा नो स्पृहयेत्-नाकाङ्क्षेदिति।-तत्र यदुच्चावचेषु स्थानेष्वसकृदुत्पन्नोऽसुमांस्ततः किमित्याह—'इय संखाय' इत्यादि, इतिरुपप्रदर्शने 'इति' एतत्पूर्वोक्तनीत्योच्चावचस्थानोत्पादादिकं 'परिसंख्याय' ज्ञात्वा 'को गोत्रवादी भवेद्?' यथा ममोच्चैर्गोत्रं सर्वलोकमाननीयं नापरस्येत्येवंवादी को बुद्धिमान् भवेत्?, तथाहि-मयाऽन्यैश्च जन्तुभिः सर्वाण्यपि स्थानान्यनेकशः प्राप्तपूर्वाणीति, तथोच्चैर्गोत्रनिमित्तमानवादी वा को भवेत्?, न कश्चित्संसारस्वरूपपरिच्छेदीत्यर्थः, किं च—'कंसि वा एगे गिज्झे' अनेकशोऽनेकस्मिन् स्थानेऽनुभूते सति 'तन्मध्ये कस्मिन्वा एकस्मिन्नुच्चैर्गोत्रादिकेऽनवस्थितस्थानके रागादिविरहादेकः कथं गृध्येत्?, तात्पर्यम्-आसेवां विदितकर्मपरिणामो विदध्यात्, युज्येत गार्ध्यं यदि तत्स्थानं प्राप्तपूर्वं नाभविष्यत्, तच्चानेकशः प्राप्तपूर्वम्, अतस्तल्लाभालाभयोः नोत्कर्षापकर्षौ विधेयाविति, आह च—'तम्हा' इत्यादि, यतोऽनादौ संसारे पर्यटताऽसुमताऽवश्यमेतान्यसकृदुच्चावचानि स्थानान्यनुभूतानि तस्मात्कथञ्चिदुच्चावचादिकं मदस्थानमवाप्य 'पण्डितो' हेयोपादेयतत्त्वज्ञो 'न हृष्येत्' न हर्षं विदध्यात्, उक्तं च—"सर्वसुखान्यपि बहुशः प्राप्तान्यटता मयाऽत्र संसारे। उच्चैःस्थानानि तथा तेन न मे विस्मयस्तेषु ॥१॥ जइ सोऽवि णिज्जरमओ पडिसिद्धो अट्ठमाणमहणेहिं। अवसेस मयट्ठाणा

५

१०

परिहरिअव्वा पयत्तेणं ॥२॥" नाप्यवगीतस्थानावाप्तौ वैमनस्यं विदध्याद्, आह च—'नो कुप्पे' अदृष्टवशात्तथाभूतलोकासम्मतं जातिकुलरूपबललाभादिकमधममवाप्य 'न कुप्येत्' न क्रोधं कुर्यात्, कतरन्नीचस्थानं शब्दादिकं वा दुःखं मया नानुभूतमित्येवमवगम्य नोद्वेगवशगेन भाव्यम्, उक्तं च—"अवमानात्परिभ्रंशाद्वधबन्धधनक्षयात् । प्राप्ता रोगाश्च शोकाश्च, जात्यन्तरशतेष्वपि ॥१॥ संते य अविम्हइउं असोइउं पंडिएण य असंते । सक्का हु दुमोवमिअंहिअएण हिअं धरंतेण ॥२॥ होऊण चक्कवट्टी पुहइवई विमलपंडरच्छत्तो । सो चेव नाम भुज्जो अणाहसालालओ होइ ॥३॥" एकस्मिन् वा जन्मनि नानाभूतावस्था उच्चावचाः कर्म्मवशी[३]तोऽनुभवति । तदेवमुच्चनीचगोत्रनिर्विकल्पमनाः अन्यदपि अविकल्पेन किं कुर्यादित्याह—'भूएहिं' इत्यादि, भवन्ति भविष्यन्त्यभूवन्निति च भूतानि–असुभृतस्तेषु 'प्रत्युपेक्ष्य' पर्यालोच्य विचार्य कुशाग्रीयया शेमुष्या जानीहि–अवगच्छ, किं जानीहि ?–'सातं' सुखं तद्विपरीतमसातमपि जानीहि, किं च कारणं सातासातयोः ? एतज्जानीहि, किं चाभिलपन्त्यविगानेन प्राणिन इति, अत्र जीवजन्तुप्राण्यादिशब्दान् उपयोगलक्षणद्रव्यस्य मुख्यान् वाचकान् विहाय सत्तावाचिनो भूतशब्दस्योपादानेनेदमाविर्भावयति-यथाऽयमुपयोगलक्षणपदार्थोऽवश्यं सत्तां बिभर्त्ति, साताभिलाष्यसातं च जुगुप्सते, साताभिलापश्च शुभप्रकृतित्वाद्, अतोऽपरासामपि शुभप्रकृतीनामुपलक्षणमेतदवसेयम्, अतः शुभनामगोत्रायुराद्याः कर्म्मप्रकृतीरनुधावत्यशुभाश्च जुगुप्सते सर्वोऽपि प्राणी । एवं च व्यवस्थिते सति किं विधेयमित्याह—

१ यदि सोऽपि निर्जगमदः प्रतिषिद्धोऽष्टमानमथनैः । अवशेषाणि मदस्थानानि परिहर्त्तव्यानि प्रयत्नेन ॥१॥ २ सत्सु च विस्मेतुमशोचितुं पण्डितेन चासत्सु । शक्य* हि द्रुमोपमेन हृदयेन हितं धरता ॥१॥ भूत्वा चक्रवर्ती पृथ्वीपतिर्विमलपाण्डुरच्छत्रः । स एव नाम भूयोऽनाथशालालयो भवति ॥२॥ कर्मवशगो० प्र. ३ कुप्यन्त

समिए एयाणुपस्सी, तंजहा-अन्धत्तं बहिरत्तं मूयत्तं काणत्तं कुंटत्तं खुजत्तं वडभत्तं सामत्तं सबलत्तं सह पमाएणं अणेगरूवाओ जोणीओ संधायइ विरूवरूवे फासे परिसंवेयइ (सू० ७९)

अथवा भूतेषु शुभाशुभरूपं कर्म्म प्रत्युपेक्ष्य यत्तेषामप्रियं तन्न विदध्यात् इत्ययमुपदेशो, नागार्जुनीयास्तु पठन्ति—"पुरिसेणं खलु दुक्खुव्वेअसुहेसए" 'पुरुषो' जीवः णमिति वाक्यालङ्कारे 'खलुः' अवधारणे दुःखात् उद्वेगो यस्य स दुःखोद्वेगः, सुखस्यैषकः सुखैषकः, याजकादित्वात्समासश्छान्दसत्वाद्वा, दुःखोद्वेगश्चासौ सुखैषकश्च दुःखोद्वेगसुखैषकः, सर्वोऽपि प्राणी दुःखोद्वेगसुखैषक एव भवत्यतो जीवप्ररूपणं कार्यं, तच्चावनिवनपवनानलवनस्पतिसूक्ष्मबादरविकल्पश्चेन्द्रियसंज्ञीतरपर्याप्तकापर्याप्तकरूपं शस्त्रपरिज्ञायामकार्येव, तेषां च दुःखपरिजिहीर्षूणां सुखलिप्सूनामात्मौपम्यमाचरता तदुपमर्दकानि हिंसादिस्थानानि परिहरताऽऽस्मा पञ्चमहाव्रतेष्वास्थेयः, तत्परिपालनार्थं चोत्तरगुणा अप्यनुशीलनीयाः, तदर्थमुपदिश्यते—'समिए एयाणुपस्सी' पञ्चभिः समितिभिः समितः सन् एतत्-शुभाशुभं कर्म्म वक्ष्यमाणं चान्धत्वादिकं द्रष्टुं शीलं यस्येत्येतदनुदर्शी भूतेषु सातं जानीहीति सण्टङ्कः, तत्र 'समिति'-रिति 'इण् गतौ' वित्यस्मात्सम्पूर्वात् क्तिन्नन्ताद्भवति, सा च पञ्चधा, तद्यथा—ईर्याभाषैषणाऽऽदाननिक्षेपोत्सर्गरूपाः, तत्रेर्यासमितिः प्राणव्यपरोपणव्रतपरिपालनाय, भाषासमितिरसदभिधाननियमसंसिद्धये, एषणासमितिरस्तेयव्रतपरिपालनाय, शेषद्वयं तु समस्तव्रतप्रकृष्टस्याहिंसाव्रतस्य संसिद्धये व्याप्रियते इति, तदेवं पञ्चमहाव्रतोपपेतस्तद्विकल्पसमितिभिः समितः सन् भावत एतद्भूतसातादिकमनुपश्यति, अथवा यदनुदर्श्यसौ भवति तद्यथेत्यादिना सूत्रेणैव दर्शयति—'अन्धत्वमित्यादिना यावत् विरूवरूवे फासे परिसंवेएइ' संसारोदरे पर्यटन् प्राणी अन्धत्वादिका अवस्था बहुशः परिसंवेदयते, स चान्धो द्रव्यतो भावतश्च, तत्रैकेन्द्रियद्वीन्द्रियत्रीन्द्रिया

द्रव्यभावान्धाः, चतुरिन्द्रियादयस्तु मिथ्यादृष्टयो भावान्धाः, उक्तं च—"एकं हि चक्षुरमलं सहजो विवेकस्तद्वद्भिरेव सह संवसतिर्द्वितीयम्। एतद्द्वयं भुवि न यस्य स तत्त्वतोऽन्धस्तस्यापमार्गचलने खलु कोऽपराधः? ॥१॥" सम्यग्दृष्टयस्तूपहतनयना द्रव्यान्धाः, त एवानन्धा न द्रव्यतो न च भावतः, तदेवमन्धत्वं द्रव्यभावभिन्नमेकान्तेन दुःखजननमवाप्नोतीति, उक्तं च—"जीवन्नेव मृतोऽन्धो यस्मात्सर्वक्रियासु परतन्त्रः। नित्यास्तमितदिवाकरस्तमोऽन्धकारार्णवनिमग्नः ॥१॥ लोकद्वयव्यसनवह्निविदीपिताङ्गमन्धं समीक्ष्य कृपणं परयष्टिनेयम्। को नोद्विजेत भयकृज्जननादिवोग्रात्, कृष्णाहिनैकनिचितादिव चान्धगर्त्तात्? ॥२॥" एवं बधिरत्वमप्यदृष्टवशादनेकशः परिसंवेदयते, तदावृतश्च सदसद्विवेकविकलत्वादैहिकामुष्मिकेष्टफलक्रियानुष्ठानशून्यतां बिभर्त्ति इति, उक्तं च—"धर्म्मश्रुतिश्रवणमङ्गलवर्जितो हि, लोकश्रुतिश्रवणसंव्यवहारबाह्यः। किं जीवतीह बधिरो? भुवि यस्य शब्दाः, स्वप्नोपलब्धधननिष्फलतां प्रयान्ति? ॥१॥ सकलत्रबालपुत्रकमधुरवचःश्रवणबाह्यकरणस्य। बधिरस्य जीवितं किं जीवन्मृतकाकृतिधरस्य? ॥२॥" एवं मूकत्वमप्येकान्तेन दुःखावहं परिसंवेदयते, उक्तं च—"दुःखकरमकीर्त्तिकरं मूकत्वं सर्वलोकपरिभूतम्। प्रत्यादेशं मूढाः कर्म्मकृतं किं न पश्यन्ति? ॥१॥" तथा काणत्वमप्येवंरूपमिति, आह च—"काणो निमग्नविषमोन्नतदृष्टिरेकः, शक्तो विरागजनने जननातुराणाम्। यो नैव कस्यचिदुपैति मनःप्रियत्वमालेख्यकर्म्मलिखितोऽपि किमु स्वरूपः॥१॥" एवं 'कुण्टत्वं'—पाणिवक्रत्वादिकं 'कुब्जत्वं' वामनलक्षणं 'वडभत्वं' विनिर्गतपृष्ठिवडभलक्षणं 'श्यामत्वं' कृष्णलक्षणं 'शबलत्वं' श्वित्रलक्षणं 'सहजं' पश्चाद्वापि वा कर्म्मवशगो भूरिशो दुःखराशिदेशीयं परिसंवेदयते। किं च—सह 'प्रमादेन' विषयक्रीडाभिष्वङ्गरूपेण श्रेयस्यनुद्यमात्मकेन 'अनेकरूपाः' सङ्कटविकटशीतोष्णादिभेदभिन्ना योनीः 'संदधाति' संघत्ते चतुरशीतियोनिलक्षसम्बन्धाविच्छेदं विदधा-

तीति भावः, सम्यग् धावतीति वा, तासु तास्वायुष्कबन्धोत्तरकालं गच्छतीत्यर्थः, तासु च नानाप्रकारासु योनिषु 'विरूपरूपान्' नानाप्रकारान् 'स्पर्शान्' दुःखानुभवान् परिसंवेदयते, अनुभवतीत्यर्थः॥ तदेवमुच्चैर्गोत्रोत्थापितमानोपहतचेता नीचैर्गोत्रविहितदीनभावो वाऽन्धबधिरभूयं वा गतः सन्नावबुध्यते कर्त्तव्यं न जानाति कर्मविपाकं नावगच्छति संसारापसदतां नावधारयति हिताहिते न गणयति औचित्यमित्यनवगततत्त्वो मूढस्तत्रैवोच्चैर्गोत्रादिके विपर्यासमुपैति, आह च—

से अबुज्झमाणे हओवहए जाईमरणं अणुपरियट्टमाणे, जीवियं पुढो पियं इहमेगेसिं माणवाणं खित्तवत्थुममायमाणाणं, आरत्तं विरत्तं मणिकुंडलं सह हिरण्णेण इत्थियाओ परिगिज्झति तत्थेव रत्ता, न इत्थ तवो वा दमो वा नियमो वा दिस्सइ, संपुण्णं बाले जीवि-उकामे लालप्पमाणे मूढे विप्परियासमुवेइ ( सू. ८० )

९

'से' इत्युच्चैर्गोत्राभिमानी अन्धबधिरादिभावसंवेदको वा कर्मविपाकमनवबुध्यमानो हतोपहतो भवति, नानाव्याधिसद्भावक्षतशरीरत्वाद्धतः समस्तलोकपरिभूतत्वादुपहतः, अथवोच्चैर्गोत्रगर्वाध्मातत्यक्तोचितविधेयविद्वज्जनवदनसमुद्भूतशब्दायशःपटहहतत्वाद्धतः अभिमानोत्पादितानेकभवकोटिनीचैर्गोत्रोदयादुपहतः, मूढो विपर्यासमुपैतीत्युत्तरेण सम्बन्धः, तथा जातिश्च मरणं च समाहारद्वन्द्वस्तद् 'अनुपरिवर्त्तमानः' पुनर्जन्म पुनर्मरणमित्येवमरहट्टघटीयन्त्रन्यायेन संसारोदरे विवर्त्तमानः, आवीचीमरणाद्वा प्रतिक्षणं जन्मविनाशावनुभवन् दुःखसागरावगाढो विशरारुण्यपि नित्यताकृतमतिः हितेऽप्यहिताध्यवसायो विपर्यासमुपैति, आह च–'जीवि-

१०

तम्' आयुष्कानुपरमलक्षणमसंयमजीवितं वा 'पृथग्' इति प्रत्येकं प्रतिप्राणि 'प्रियं' दयितं वल्लभम् 'इहे'ति अस्मिन् संसारे 'एकेषाम्' अविद्योपहतचेतसां मानवानामिति, उपलक्षणार्थत्वात् प्राणिनां, तथाहि-दीर्घजीवनार्थं तास्ता रसायनादिकाः क्रियाः सत्त्वोपघातकारिणीः कुर्वते, तथा 'क्षेत्रं' शालिक्षेत्रादि 'वास्तु' धवलगृहादि मम इदमित्येवमाचरतां सतां तत्क्षेत्रादिकं श्रेयो भवति, किं च— 'आरक्तम्' ईषद्रक्तं वस्त्रादि 'विरक्तं' विविधरागं वा 'मणिः' इति रत्नवैडूर्येन्द्रनीलादि 'कुण्डलं' कर्णाभरणं हिरण्येन सह स्त्रीः परिगृह्य 'तत्रैव' क्षेत्रवास्त्वारक्तविरक्तवस्त्रमणिकुण्डलस्त्र्यादौ 'रक्ता' गृद्धा अध्युपपन्ना मूढा विपर्यासमुपयान्ति, वदन्ति च-नात्र 'तपो वा' अनशनादिलक्षणं 'दमो वा' इन्द्रियनोइन्द्रियोपशमलक्षणो 'नियमो वा' अहिंसाव्रतलक्षणः फलवान् दृश्यते, तथाहि-तपोनियमोपपेतस्यापि कायक्लेशभोगादिवञ्चनां विहाय नान्यत्फलमुपलभ्यते, जन्मान्तरे भविष्यतीति चेदयुक्ताहितस्योल्लापः, किं च-दृष्टहानिरदृष्टकल्पना च पापीयसीति, तदेवं साम्प्रतेक्षी भोगसङ्गविहितैकपुरुषार्थबुद्धिः सम्पूर्णं यथावसरसम्पादितविषयोपभोगं 'बालः' अज्ञः 'जीवितुकामः' आयुष्कानुभवनमभिलपन् 'लालप्यमानः' भोगार्थमत्यर्थं लपन् वाग्दण्डं करोति, तद्यथा-अत्र तपो दमो नियमो वा फलवान्न दृश्यत इत्येवमर्थं ब्रुवन् मूढः अबुध्यमानो हतोपहतो जातिमरणमनुपरिवर्त्तमानो जीवितक्षेत्ररुप्यादिलोभपरिमोहितमनाः 'विपर्यासमुपैति' तत्त्वेऽतत्त्वाभिनिवेशम् अतत्त्वे च तत्त्वाभिनिवेशं हितेऽहितबुद्धिमित्येवं सर्वत्र विपर्ययं विदधाति, उक्तं च—"दाराः परिभवकारा बन्धुजनो बन्धनं विषं विषयाः। कोऽयं जनस्य मोहो ?, ये रिपवस्तेषु सुहृदाशा ॥१॥" इत्यादि॥ ये पुनरुन्मज्जत्शुभकर्म्मापादिताध्यवसायपुरस्कृतमोक्षास्ते किंभूता भवन्तीत्याह—

इणमेव नावकंखंति, जे जणा धुवचारिणो। जाईमरणं परिन्नाय, चरे संकमणे दढे ॥(२)॥



२-

नत्थि कालस्स णागमो, सव्वे पाणा पियाउया, सुहसाया दुक्खपडिकूला अप्पियवहा पिय-
जीविणो जीविउकामा, सव्वेसिं जीवियं पियं, तं परिगिज्झ दुपयं चउप्पयं अभिजुंजिया णं
संसिंचियाणं तिविहेण जाऽवि से तत्थ मत्ता भवइ अप्पा वा बहुया वा, से तत्थ गड्ढिए चिट्ठइ
भोअणाए, तओ से एगया विविहं परिसिट्ठं संभूयं महोवगरणं भवइ, तंपि से एगया दायाया
वा विभयन्ति, अदत्तहारो वा से अवहरति, रायाणो वा से विलुंपंति, नस्सइ वा से विणस्सइ ५
वा से, अगारदाहेण वा से डज्झइ, इय से परस्सऽट्ठाए कूराइं कम्माइं बाले पकुव्वमाणे तेण
दुक्खेण संमूढे विप्परियासमुवेइ, मुणिणा हु एयं पवेइयं, अणोहंतरा एए, नो य ओहं तरित्तए;
अतीरंगमा एए, नो य तीरं गमित्तए, अपारंगमा एए, नो य पारं गमित्तए, आयाणिज्जं च
आयाय तंमि ठाणे न चिट्ठइ, वितहं पप्पऽखेयन्ने तंमि ठाणंमि चिट्ठइ (सू. ८१)

प्र. आ.
१२१

'इणमेव' इत्यादि, इदमेव पूर्वोक्तं सम्पूर्णजीवितं क्षेत्राङ्गनापरिभोगादिकं वा 'नावकाङ्क्षन्ति' नाभिलषन्ति, ये जना 'ध्रुवचारिणो' १०

ध्रुवो-मोक्षस्तत्कारणं च ज्ञानादि ध्रुवं तदाचरितुं शीलं येषां ते तथा, धूतचारिणो वा धुनातीति धूतं-चारित्रं तच्चारिण इति। किं च—'जाई' इत्यादि, जातिश्च मरणं च समाहारद्वन्द्वः तत् 'परिज्ञाय' परिच्छिद्य ज्ञात्वा 'चरेत्' उद्युक्तो भवेत्, क?—'सङ्क्रमणे' सङ्क्रम्यतेऽनेनेति सङ्क्रमणं-चारित्रं तत्र 'दृढो' विस्रोतसिकारहितः परीषहोपसर्गैः निष्प्रकम्पो वा, यदिवा अशङ्कमनाः सन् संयमं चर, न विद्यते शङ्का यस्य मनसस्तदशङ्कम् अशङ्कमनो यस्यासावशङ्कमनाः-तपोदमनियमनिष्फलत्वाशङ्कारहित आस्तिक्यमत्युपपेतस्तपोदमादौ प्रवर्त्तेत, यतस्तद्वान् राजराजादीनां पूजाप्रशंसार्हो भवति, न चौपशमिकसुखावाप्तफलस्य तपस्विनः समस्तद्वन्द्वदवीयसोऽसत्यपि परलोके किञ्चित् क्षूयते, उक्तं च-"संदिग्धेऽपि परे लोके, त्याज्यमेवाशुभं बुधैः। यदि नास्ति ततः किं स्यादस्ति चेन्नास्तिको हतः ॥१॥" इत्यादि। तस्मात् स्वायत्ते संयमसुखे दृढेन भाव्यं, न चैतद्भावनीयं यथा-परुत्परारि वृद्धावस्थायां वा धर्म्मं करिष्यामीति, यतः—'नत्थि' इत्यादि, 'नास्ति' न विद्यते 'कालस्स' मृत्योरनागमः-अनागमनमनवसर इतियावत्, तथाहि-सोपक्रमायुषोऽसुमतो न काचित्साऽवस्था यस्यां कर्म्मपावकान्तर्वर्त्ती जन्तुर्जतुगोलक इव न विलीयेत इति, उक्तं च—"शिशुमशिशुं कठोरमकठोरमपण्डितमपि च पण्डितं, धीरमधीरं मानिनममानिनमपगुणमपि च बहुगुणम्। यतिमयतिं प्रकाशमवलीनमचेतनमथ सचेतनं, निशि दिवसेऽपि सान्ध्यसमयेऽपि विनश्यति कोऽपि कथमपि ॥१॥" तदेवं सर्वंकषत्वं मृत्योरवधार्याहिंसादिषु दत्तावधानेन भाव्यं, किमिति?, यतः—'सव्वे पाणा पियाउया' प्राणशब्देनात्राभेदोपचारात् तद्वन्त एव गृह्यन्ते, सर्वे प्राणिनो-जन्तवः 'प्रियायुषः' प्रियमायुर्येषां ते तथा, ननु च सिद्धैर्व्यभिचारो, न हि ते प्रियायुषस्तदभावात्, नैष दोषो, यतो मुख्यजीवादिशब्दव्युदासेन प्राणशब्दस्योपचरितस्य ग्रहणं संसारप्राण्युपलक्षणार्थमिति यत्किञ्चिदेतत्, पाठान्तरं वा 'सव्वे पाणा पियायया'

मोक्षार्थि स्वरूपं

१५

२०

आयतः-आत्माऽनाद्यनन्तत्वात् स प्रियो येषां ते तथा, सर्वेऽपि प्राणिनः प्रियात्मानः, प्रियात्मता च सुखदुःखप्राप्तिपरिहारतया भवतीति, आह च-'सुहमाया दुक्खपडिकूला' सुखम्-आनन्दरूपमास्वादयन्तीति सुखास्वादाः-सुखभोगिनः, सुखैषिण इत्युक्तं भवति, दुःखम्-असातं तत्प्रतिकूलयन्तीति दुःखप्रतिकूलाः-दुःखद्वेषिण इत्युक्तं भवति, तथा 'अप्रियवधा' अप्रियं-दुःखकारणं तत् घ्नन्त्य-प्रियवधाः, तथापि 'पियजीविणो' प्रियं-दयितं जीवितम्-आयुष्कमसंयमजीवितं(वा)येषां ते तथा, 'जीविउकामा' यत एव प्रियजी-विनोऽत एव दीर्घकालं जीवितुकामाः-दीर्घकालमायुष्काभिलाषिणो, दुःखाभिभूता अप्यन्त्यां दशामापन्ना जीवितुमेवाभिलषन्ति, उक्तं च—"रेमइ विहवी विसेसे ठितिमित्तं थेववित्थरो महई। मग्गइ सरीरमहणो रोगी जीए च्चिय कयत्थो ॥ १ ॥"-तदेवं सर्वोऽपि प्राणी सुखजीविताभिलाषी, तच्च नारम्भमृते, असावपि प्राण्युपघातकारी, प्राणिनां च जीवितमत्यर्थं दयितमित्यतो भूयो भूयस्तद्देयोपदिश्यत इत्याह-'सव्वेसिं' इत्यादि, सर्वेषामविगानेन 'जीवितम्' असंयमजीवितं 'प्रियं' दयितं, यद्येवं ततः किमित्यत आह-'तं परिगिज्झ' तद्-असंयमजीवितं 'परिगृह्य' आश्रित्य, किं कुर्वन्तीत्याह—'दुपयं' इत्यादि, 'द्विपदं' दासीकर्म्मकरादि 'चतुष्पदं' गवाश्वादि 'अभियुज्य' योजयित्वा अभियोगं ग्राहयित्वा व्यापारयित्वेत्युक्तं भवति, ततः किमित्यत आह-'संसिंचिया णं' इत्यादि, प्रियजीवितार्थमर्थाभिवृद्धये द्विपदचतुष्पदादिव्यापारेण 'संसिच्य' अर्थनिचयं संवर्ध्य 'त्रिविधेन' योगत्रिककरणत्रिकेण यापि काचिदल्पा परमार्थचिन्तायां बह्वयपि फल्गुदेश्या 'से' तस्यार्थारम्भिणः सा चार्थमात्रा 'तत्र' इति द्विपदाद्यारम्भे 'मात्रा' इति सोपस्कारत्वात्सूत्राणां अर्थमात्रा—अर्थाल्पता 'भवति' सत्तां बिभर्त्ति, किंभूता ? सा, सूत्रेणैव कथयति—अल्पा वा बह्वी वा,

१ रमते विभववान् विशेषे स्थितिमात्रं स्तोकविस्तारोऽभिलषति । मार्गयति शरीरमथनो रोगी जीवित एव कृतार्थः ॥ १ ॥



५

१०

अल्पबहुत्वं चापेक्षिकमतः सर्वाऽप्यल्पा सर्वाऽपि वह्वी 'स' इत्यर्थवान् 'तत्र' तस्मिन्नर्थे 'गृद्धः' अध्युपपन्नस्तिष्ठति, नालोचयत्यर्थस्योपार्जनक्लेशं न गणयति रक्षणपरिश्रमं न विवेचयति तरलतां नावधारयति फल्गुताम्, उक्तं च—कृमिकुलचितं लालाक्लिन्नं विगन्धि जुगुप्सितं, निरुपमरसप्रीत्या खादन्नरास्थि निरामिषम्। सुरपतिमपि श्वा पार्श्वस्थं सशङ्कितमीक्षते, न हि गणयति क्षुद्रो लोकः परिग्रहफल्गुताम् ॥ १ ॥" इत्यादि, स च किमर्थमर्थमर्थयत इत्यत आह—'भोयणाए' भोजनम्—उपभोगस्तस्मै अर्थमर्थयते, तदर्थी च क्रियासु प्रवर्त्तते, क्रियावतश्च किं भवतीत्याह–'तओ से' इत्यादि, ततः 'से' तस्यावलगनादिकाः क्रियाः कुर्वतः 'एकदा' लाभान्तरायकर्म्मक्षयोपशमे 'विविधं' नानाप्रकारं 'परिशिष्टं' प्रभूतत्वाद्भुक्तोद्धरितं 'सम्भूतं' सम्यक्परिपालनाय भूतं—संवृत्तं, किं तत्?, महच्च तत्परिभोगाङ्गत्वादुपकरणं च महोपकरणं, द्रव्यनिचय इत्यर्थः, स कदाचिल्लाभोदये भवति, असावप्यन्तरायोदयान्न तस्योपभोगायेत्याह–'तंपि से' इत्यादि, तदपि समुद्रोत्तरणरोहणखननविलप्रवेशरसेन्द्रमर्दनराजावलगनकृषीवलादिकाभिः क्रियाभिः स्वपरोपतापकारिणीभिः स्वोपभोगायोपार्जितं सत् 'से' तस्यार्थोपार्जनोपायक्लेशकारिणः 'एकदा' भाग्यक्षये 'दायादाः' पितृपिण्डोदकदानयोग्याः 'विभजन्ते' विलुम्पन्ति, 'अदत्तहारो वा' दस्युर्वा अपहरति, राजानो वा 'विलुम्पन्ति' अवच्छिन्दन्ति 'नश्यति वा' स्वत एवाटवीतः 'से' तस्य 'विनश्यति वा' जीर्णभावापत्तेः, 'अगारदाहेन वा' गृहदाहेन वा दह्यते, कियन्ति वा कारणान्यर्थनाशे वक्ष्यन्ते इत्युपसंहरति—'इति' एवं बहुभिः प्रकारैरुपार्जितोऽप्यर्थो नाशमुपैति, नैवोपार्जयितुरुपतिष्ठत इत्युपदिश्यते, सः अर्थस्योत्पादयिता परस्मै–अन्यस्मै अर्थाय–प्रयोजनाय अन्यप्रयोजनकृते 'क्रूराणि' गलकर्त्तनादीनि 'कर्म्माणि' अनुष्ठानानि 'बालः' अज्ञः 'प्रकुर्वाणः' विदधानः 'तेन' कर्म्मविपाकापादितेन 'दुःखेन' असातोदयेन '(सं) मूढः' अपगतविवेकः विपर्यासमुपैति' अप-



२०

॥१११॥ २७

गतसदसद्विवेकत्वात्कार्यमकार्यं मन्यते व्यत्ययं चेति, उक्तं च—"रागद्वेषाभिभूतत्वात्कार्याकार्यपराङ्मुखः। एष मूढ इति ज्ञेयो, विपरीतविधायकः ॥१॥" तदेवं मौढ्यान्धतमसाच्छादितालोकपथाः सुखार्थिनो दुःखमृच्छन्ति जन्तव इति ज्ञात्वा सर्वज्ञवचनप्रदीपमशेषपदार्थस्वरूपाविर्भावकमालम्बिरे मुनयः, अदश्च मया न स्वमनीषिकयोच्यते, सुधर्म्मस्वामी जम्बूस्वामिनमाह, यदि स्वमनीषिकया नोच्यते कौतस्त्यं तर्हीदमित्यत आह—'मुणिणा' इत्यादि, मनुते जगतस्त्रिकालावस्थामिति मुनिः—तीर्थकृत् तेन 'एतद्' असकृदुच्चैर्गोत्रभवनादिकं प्रकर्षेणादौ वा सर्वस्वभाषानुगामिन्या वाचा वेदितं—कथितं वक्ष्यमाणं च प्रवेदितं, किं तदित्याह—'अणोहं' इत्यादि, ओघो द्विधा—द्रव्यभावभेदात्, द्रव्यौघो नदीपूरादिको भावौघोऽष्टप्रकारं कर्म्म संसारो वा, तेन हि प्राण्यनन्तमपि कालमुह्यते, तम्—ओघं ज्ञानदर्शनचारित्रबोहित्थस्थाः तरन्तीत्योघन्तराः न ओघन्तरा अनोघन्तराः, तरतेश्छान्दसत्वात् खश्, खित्त्वान्मुमागमः, एते कुतीर्थिकाः पार्श्वस्थादयो वा ज्ञानादियानविकलाः, यद्यपि तेऽप्योघतरणायोद्यतास्तथापि सम्यगुपायाभावात् न ओघतरणसमर्था भवन्तीति, आह च—'नो य ओहं तरित्तए' 'न च' नैवौघं—भावौघं तरितुं समर्थाः, संसारौघतरणप्रत्यला न भवन्तीत्यर्थः, तथा 'अतीरंगमा' इत्यादि, तीरं गच्छन्तीति तीरङ्गमाः, पूर्ववत् खश्प्रत्ययादिकं, न तीरङ्गमा अतीरङ्गमाः, एत इति प्रत्यक्षभावमापन्नान् कुतीर्थिकादीन् दर्शयति, न च ते तीरगमनायोद्यता अपि तीरं गन्तुमलं, सर्वज्ञोपदिष्टसन्मार्गाभावादिति भावः, तथा 'अपारंगमा' इत्यादि, पारः—तटः परकूलं तद्गच्छन्तीति पारङ्गमाः न पारङ्गमा अपारङ्गमाः, 'एत' इति पूर्वोक्ताः, पारगतोपदेशाभावादपारङ्गता इति भावनीयं, न च ते पारगतोपदेशमृते पारगमनायोद्यता अपि पारं गन्तुमलम्, अथवा गमनं गमः पारस्य पारे वा गमः पारगमः, सूत्रे त्वनुस्वारोऽलाक्षणिको, न पारगमोऽपारगमस्तस्मा अपारगमाय, असमर्थसमासोऽयं, तेनायमर्थः—पार-



५

१०

गमनाय ते न भवन्तीत्युक्तं भवति, ततश्चानन्तमपि कालं संसारान्तर्वर्त्तिन एवासते, यद्यपि पारगमनायोद्यमयन्ति तथापि ते सर्वज्ञोपदेशविकलाः स्वरुचिविरचितशास्त्रप्रवृत्तयो नैव संसारपारं गन्तुमलम्, अथ तीरपारयोः को विशेष इति, उच्यते, तीरं मोहनीयक्षयः पारं शेषघातिक्षयः, अथवा तीरं घातिचतुष्टयापगमः पारं भवोपग्राह्यभाव इत्यर्थः, स्यात्-कथमोघतारी कुतीर्थादिको न भवति तीरपारगामी चेत्याह—'आयाणिज्जं' इत्यादि, आदीयन्ते-गृह्यन्ते सर्वभावा अनेनेत्यादानीयं-श्रुतं तदादाय तदुक्ते तस्मिन् संयमस्थाने न तिष्ठति, यदिवा-आदानीयम्—आदातव्यं भोगाङ्गं द्विपदचतुष्पदधनधान्यहिरण्यादि तदादाय-गृहीत्वा, अथवा मिथ्यात्वाविरतिप्रमादकषाययोगैरादानीयं—कर्म्मादाय, किंभूतो भवतीत्याह—'तस्मिन्' ज्ञानादिमये मोक्षमार्गे सम्यगुपदेशे वा प्रशस्तगुणस्थाने न तिष्ठति-नात्मानं विधत्ते, न केवलं सर्वज्ञोपदेशस्थाने न तिष्ठति, विपर्ययानुष्ठायी च भवतीति दर्शयति—'वितहं' इत्यादि, वितथम्-असद्भूतं दुर्गतिहेतुं तत्तथाभूतमुपदेशं प्राप्याखेदज्ञः-अकुशलः खेदज्ञो वाऽसंयमस्थाने तस्मिंश्च साम्प्रतेक्ष्याचरित उपदिष्टे वा तिष्ठति, तत्रैवासंयमस्थानेऽध्युपपन्नो भवतीतियावत्, अथवा वितथमिति आदानीयभोगाङ्गव्यतिरिक्तं संयमस्थानं तत्प्राप्य खेदज्ञो—निपुणस्तस्मिन् स्थाने आदानीयस्य हन्तृणि तिष्ठति, सर्वज्ञाज्ञायामात्मानं व्यवस्थापयतीत्यर्थः। अयं चोपदेशोऽनवगततत्त्वस्य विनेयस्य यथोपदेशं प्रवर्त्तमानस्य दीयते, यस्त्ववगतहेयोपादेयविशेषः स यथावसरं यथाविधेयं स्वत एव विधत्त इत्याह च—

**उद्देसो पासगस्स नत्थि, बाले पुण निहे कामसमणुन्ने असमियदुक्खे दुक्खी दुक्खाणमेव आवट्टं अणुपरियट्टइ (सू. ८२) त्तिबेमि ॥ लोकविजये तृतीयोद्देशकः ॥**

उद्दिश्यते इत्युद्देशः-उपदेशः सदसत्कर्त्तव्यादेशः सः, पश्यतीति पश्यः स एव पश्यकस्तस्य न विद्यते, स्वत एव विदितवेद्यत्वा-त्तस्य, अथवा पश्यतीति पश्यकः-सर्वज्ञस्तदुपदेशवर्ती वा तस्य उद्दिश्यत इत्युद्देशो-नारकादिव्यपदेशः उच्चावचगोत्रादिव्यपदेशो वा स तस्य न विद्यते, द्रागेव मोक्षगमनादिति भावः, कः पुनर्यथोपदेशकारी न भवतीत्याह-'बाले' इत्यादि, बालो नाम रागादिमोहितः, स पुनः कषायैः कर्म्मभिः परीषहोपसर्गैर्वा निहन्यत इति निहः, निपूर्वाद्धन्तेः कर्म्मणि डः, अथवा स्निह्यत इति स्निहः-स्नेहवान्, रागीत्यर्थः, अत एवाह-'कामसमणुन्ने' कामाः-इच्छामदनरूपाः सम्यग् मनोज्ञा यस्य स तथा, अथवा सह मनोज्ञैर्वर्त्तत इति समनोज्ञो, गमकत्वात्सापेक्षस्यापि समासः, कामैः सह मनोज्ञः कामसमनोज्ञो, यदिवा कामान् सम्यग् अनु-पश्चात् स्नेहानुबन्धात् जानाति-सेवत इति कामसमनुज्ञः, एवंभूतश्च किंभूतो भवतीत्याह-'असमियदुक्खे' अशमितम्-अनुपशमितं विषयाभि-ष्वङ्गकषायोत्थं दुःखं येन स तथा, यत एवाशमितदुःखोऽत एव दुःखी शारीरमानसाभ्यां दुःखाभ्यां, तत्र शारीरं कण्टकशस्त्रगण्ड-लूतादिसमुत्थं मानसं प्रियविप्रयोगाप्रियसंप्रयोगेप्सितालाभदारिद्र्यदौर्भाग्यदौर्मनस्यकृतं तद्विरूपमपि दुःखं विद्यते यस्यासौ दुःखी, किमवाप्नोतीत्याह-'दुक्खाणं' इत्यादि, दुःखानां-शारीरमानसानामावर्त्तं-पौनःपुन्यभवनमनुपरिवर्त्तते, दुःखावर्त्तायमग्नो भ्रंभ्रम्यत इत्यर्थः। इतिः परिसमाप्तौ, ब्रवीमीति पूर्ववत्॥ लोकविजयस्य तृतीयोद्देशकटीका समाप्ता॥३॥



तओ से एगया रोगसमुप्पाया समुप्पज्जंति, जेहिं वा सद्धिं संवसइ ते एव णं एगया नियया पुव्विं परिवयंति, सो वा ते नियगे पच्छा परिवइज्जा, नालं ते तव ताणाए वा सरणाए वा, तुमंपि तेसिं नालं ताणाए वा सरणाए वा, जाणित्तु दुक्खं पत्तेयं सायं, भोगा मे व अणुसोयन्ति इहमेगेसिं माणवाणं (सू. ८३)



उक्तस्तृतीयोद्देशकः, साम्प्रतं चतुर्थस्य व्याख्या प्रस्तूयते–भोगेष्वनभिषक्तेन भाव्यं, यतो भोगिनामपाया दृश्यन्ते (इति) प्रागुक्तं, ते चामी–'तओ से एगया' इत्यादि, अनन्तरसूत्रसम्बन्धः 'दुक्खी दुक्खाणमेव आवट्टं अणुपरियट्टइ'त्ति, तानि चामूनि दुःखानि 'तओ से' इत्यादि, परम्परसूत्रसम्बन्धस्तु 'बाले पुण निहे कामसमणुण्णे', ते च कामा दुःखात्मका एव, तत्र चासक्तस्य धातुक्षयभगन्दरादयो रोगाः समुत्पद्यन्ते इत्यतोऽपदिश्यते—'तत' इति कामानुषङ्गात् कर्म्मोपचयः ततोऽपि पञ्चत्वं तस्मादपि नरकभवो नरकान्निषेककललार्बुदपेशीव्यूहगर्भप्रसवादिः जातस्य च रोगाः प्रादुःष्यन्ति, 'से' तस्य कामानुषक्तमनसः 'एकदे'त्यसातावेदनीयविपाकोदये 'रोगसमुत्पादा' इति रोगाणां–शिरोऽर्तिशूलादीनां समुत्पादाः–प्रादुर्भावाः 'समुत्पद्यन्ते' प्रादुर्भवन्ति, तस्यां च रोगावस्थायां किंभूतो भवत्यसावित्यत आह—'जेहिं' इत्यादि, यैर्वा सार्द्धमसौ संवसति त एवैकदा निजाः पूर्वं परिवदन्ति, स वा तान्निजान् पश्चात्परिवदेत्, नालं 'ते' तव त्राणाय वा शरणाय वा, त्वमपि तेषां नालं त्राणाय वा शरणाय वा, इति ज्ञात्वा दुःखं प्रत्येकं सातं च स्वकृतकर्म्मफलभुजः सर्वेऽपि प्राणिन इति मत्वा रोगोत्पत्तौ न दौर्मनस्यं भावनीयं, न भोगाः शोचनीया इति,

आह च–'भोगा मे' इत्यादि, भोगाः–शब्दरूपरसगन्धस्पर्शविषयाभिलाषास्तानेव अनुशोचयन्ति–कथमक्षामप्यवस्थायां वयं भोगान् भुङ्क्ष्महे ?, एवंभूता चाऽस्माकं दशाऽभूद् येन मनोज्ञा अपि विषया उपनता नोपभोगायेति । ईदृक्षश्चाध्यवसायः केषाञ्चिदेव भवतीत्याह–'इहमेगेसिं' इत्यादि, 'इह' संसारे एकेषामनवगतविषयविपाकानां ब्रह्मदत्तादीनां मानवानामेवंभूतोऽध्यवसायो भवति, न सर्वेषां, सनत्कुमारादिना व्यभिचारात्, तथाहि–ब्रह्मदत्तो मारणान्तिकरोगवेदनाभिभूतः सन्तापातिशयात् स्पृशन्तीं प्रणयिनीमिव विश्वासभूमीं मूर्च्छां बहु मन्यमानः तथा हस्तीकृतो निहस्ततया विपर्यीकृतो वैपम्येण गोचरीकृतो ग्लान्या दष्टो दुःखासिकया क्रोडीकृतो कालेन पीडितः पीडाभिर्निरूपितो नियत्या आदित्सितो दैवेन अन्तिकेऽन्त्योच्छ्रासस्य मुखे महाप्रवासस्य द्वारि दीर्घनिद्राया जिह्वाग्रे जीवितेशस्य वर्त्तमानो विरलो वाचि विह्वलो वपुषि प्रचुरः प्रलापे जितो जृम्भिकाभिरित्थेवंभूतामवस्थामनुभवन्नपि महामोहोदयात् भोगांश्चिकाङ्क्षिषुः पार्श्वोपविष्टां भार्यामनवरतवेदनावेशविगलदश्रुरक्तनयनां कुरुमति ! कुरुमतीत्येवं तां व्याहरन्नधः सप्तमीं नरकपृथ्वीमगात्, तत्रापि तीव्रतरवेदनाभिभूतोऽप्यवगणय्य वेदनां तामेव कुरुमतीं व्याहरतीत्येवंभूतो भोगाभिष्वङ्गो दुस्त्यजो भवति केषाञ्चित्, न पुनरन्येषां महापुरुषाणामुदारसत्त्वानाम्, आत्मनोऽन्यच्छरीरमित्येवमवगततत्त्वानां सनत्कुमारादीनामिव, यथोक्तरोगवेदनाप्रादुर्भावे सत्यपि मयैवैतत्कृतं मोढव्यमपि मयैवेत्येवं जातनिश्चयानां कर्म्मक्षपणोद्यतानां न मनसः पीडोत्पद्यते इति, उक्तं च–"उभो यः स्वत एव मोहमलिनो जन्मालवालोऽशुभो, रागद्वेषकषायसन्ततिमहानिर्विघ्नबीजस्त्वया । रोगैरङ्कुरितो विपत्कुसुमितः कर्म्मद्रुमः साम्प्रतं, सोढा नो यदि सम्यगेष फलितो दुःखैरधोगामिभिः ॥१॥ पुनरपि सहनीयो दुःखपाकस्त्वयाऽयं, न खलु भवति नाशः कर्म्मणां सञ्चितानाम् । इति सह गणयित्वा यद्यदायाति सम्यग्, सदसदिति विवेकोऽन्यत्र भूयः कुतस्त्यः ?

रोग्यवस्था

५

१०

आचा० श्लोक० ४ उद्दे०

॥२॥" अपि च-भोगानां प्रधानं कारणमर्थोऽतस्तत्स्वरूपमेव निर्दिदिक्षुराह—

तिविहेण जाऽवि से तत्थ मत्ता भवइ अप्पा वा बहुगा वा से तत्थ गड्ढिए चिट्ठइ भोयणाए, तओ से एगया विपरिसिट्ठं संभूयं महोवगरणं भवइ, तंपि से एगया दायाया विभयंति, अदत्तहारो वा से हरति, रायाणो वा से विलुंपंति, नस्सइ वा से विणस्सइ वा से, अगारडाहेण वा से डज्झइ, इय से परस्स अट्ठाए कूराणि कम्माणि बाले पकुव्वमाणे तेण दुक्खेण मूढे विप्परियासमुवेइ (सू० ८४)

त्रिविधेन याऽपि तस्य तत्रार्थमात्रा भवति अल्पा वा बह्वी वा, स तस्यामर्थमात्रायां गृद्धस्तिष्ठति, सा च भोजनाय किल भविष्यति, ततस्तस्यैकदा विपरिशिष्टं सम्भूतं महोपकरणं भवति, तदपि 'से' तस्यैकदा दायादा विभजन्ते, अदत्तहारो वा तस्य हरति, राजानो वा विलुम्पन्ति, नश्यति वा विनश्यति वा, अगारदाहेन वा दह्यते, इति स परस्मै अर्थाय क्रूराणि कर्म्माणि बालः प्रकुर्वाणस्तेन दुःखेन मूढो विपर्यासमुपैति, एतच्च प्रागेव व्याख्यातमिति नेह प्रतायते ॥ तदेवं दुःखविपाकान् भोगान् प्रतिपाद्य यत् कर्त्तव्यं तदुपदिशतीत्याह—

आसं च छन्दं च विगिंच धीरे!, तुमं चेव तं सल्लमाहट्टु, जेण सिया तेण नो सिया, इणमेव

प्र. आ. १२६

१५ परार्थकर्मता

२०



२६

नावबुज्झंति जे जणा मोहपाउडा, थीभिं लोए पव्वहिए, ते भो! वयंति एयाइं आययणाइं, से दुक्खाए मोहाए माराए नरगाए नरगतिरिक्खाए, सययं मूढे धम्मं नाभिजाणइ, उआहु वीरे, अप्पमाओ महामोहे, अलं कुसलस्स पमाएणं, संतिमरणं संपेहाए भेउरधम्मं संपेहाए, नालं पास अलं ते एएहिं (सू. ८५)

'आशां' भोगाकाङ्क्षां, चः समुच्चये, छन्दनं छन्दः–परानुवृत्त्या भोगाभिप्रायस्तं च, चशब्दः पूर्वापेक्षया समुच्चयार्थः, तावाशाछन्दौ 'विविंच' पृथक्कुरु त्यज 'धीर!' धीः–बुद्धिस्तया राजत इति, भोगाशाछन्दापरित्यागे च दुःखमेव केवलं, न तत्प्राप्तिरिति, आह च–'तुमं चेव' इत्यादि, विनेय उपदेशगोचरापन्न आत्मा वा उपदिश्यते–त्वमेव तद्भोगाशादिकं शल्यमाहृत्य–स्वीकृत्य परमशुभमादत्से, न तु पुनरुपभोगं, यतो भोगोपभोगो यैरेवार्थाद्युपायैर्भवति तैरेव न भवतीत्याह–'जेण सिआ तेण नो सिया' येनैवार्थोपार्जनादिना भोगोपभोगः स्यात् तेनैव विचित्रत्वात् कर्म्मपरिणतेर्न स्याद्, अथवा येन केनचिद्धेतुना कर्म्मबन्धः स्यात्तन्न कुर्यात्, तत्र न वर्त्तेतेत्यर्थः, यदिवा येनैव राज्योपभोगादिना कर्म्मबन्धो येन वा निर्ग्रन्थत्वादिना मोक्षः 'स्याद्' भवेत् तेनैव तथाभूतपरिणामवशान्न स्यादिति । एतच्चानुभवावधारितमपि मोहाभिभूता नावगच्छन्तीत्याह—'इणमेव' इत्यादि, इदमेव हेतुवैचित्र्यं 'न बुध्यन्ते' न संजानते, के?–ये जना मौनीन्द्रोपदेशविकला मोहेन–अज्ञानेन मिथ्यात्वोदयेन वा प्रावृताः–छादिताः तत्त्वविपर्यस्तमतयो मोहनीयोदयाद्भवन्ति। मोहनीयस्य च तद्भेदकामानां च स्त्रियो गरीयः कारणमिति दर्शयति–'थीभिं' इत्यादि, स्त्रीभिः–अ-

अकुशल-
कुशल-
कार्ये

५

१०

ङ्गनाभिर्भ्रूत्क्षेपादिविभ्रमैरगौ लोकः आशाच्छन्दाभिभूतात्मा क्रूरकर्म्मविधायी नरककटुकविपाकफलं शल्यमाहृत्य तत्फलमबुध्यमानो मोहान्धादितान्तरात्मा प्रकर्षेण व्यथितः प्रव्यथितः पराजितो वशीकृत इतियावत्, न केवलं स्वतो विनष्टाः, अपरानपि असकृदुपदेशदानेन विनाशयन्तीत्याह–'ते भो!' इत्यादि, 'ते' स्त्रीभिः प्रव्यथिता भो! इत्यामन्त्रणे एतद्वदन्ति–यथैतानि–रूपादीनि 'आयतनानि' उपभोगास्पदभूतानि वर्त्तन्ते, एतैश्च विना शरीरस्थितिरेव न भवतीति। एतच्च प्रव्यथनमुपदेशदानं वा तेषामपायाय स्यादित्याह–'से' इत्यादि, तेषां 'से' इत्येतत् प्रव्यथनमायतनभणनं वा 'दुःखाय' भवति, शारीरमानसासातवेदनीयोदयाय जायते, किं च–'मोहाए' मोहनीयकर्म्मबन्धनाय अज्ञानाय वेति, तथा 'माराए' मरणाय, ततोऽपि 'नरगाए' नरकाय नरकगमनार्थं, पुनरपि 'नरगतिरिक्खाए' ततोऽपि नरकादुद्धृत्य तिरश्च्येतत्प्रभवति, तिर्यग्योन्यर्थं तत् स्त्रीप्रव्यथनं भोगायतनवदनं वा सर्वत्र सम्बन्धनीयं।





स एवमङ्गनापाङ्गविलोकनाक्षिप्तस्तासु तासु योनिषु पर्यटन्नात्महितं न जानातीत्याह—'सययं' इत्यादि, सततम्–अनवरतं दुःखाभिभूतो मूढो 'धम्मं' क्षान्त्यादिलक्षणं दुर्गतिप्रसृतिनिषेधकं 'न जानाति' न वेत्ति। एतच्च तीर्थकृदाहेति दर्शयति—'उदाहु' इत्यादि, उत्–प्राबल्येनाह उदाह–उक्तवान्, कोऽसौ?–वीरः–अपगतसंसारभयः तीर्थकृदित्यर्थः, किमुक्तवान्?, तदेव पूर्वोक्तं वाचा दर्शयति—'अप्रमादः' कर्त्तव्यः, क?–'महामोहे' अङ्गनाभिष्वङ्ग एव, महामोहकारणत्वान्महामोहः, तत्र प्रमादवता न भाव्यम्। आह च—'अलम्' इत्यादि, 'अलं' पर्याप्तं, कस्य?—'कुशलस्य' निपुणस्य सूक्ष्मेक्षिणः, केनालं?–मद्यविषयकषायनिद्राविकथारूपेण पञ्चविधेनापि प्रमादेन, यतः प्रमादो दुःखाद्यभिगमनायोक्त इति। स्यात्–किमालम्ब्य प्रमादेनालमिति?, उच्यते–'सन्ति' इत्यादि, शमनं शान्तिः–अशेषकर्म्मापगमः अतो मोक्ष एव शान्तिरिति, म्रियन्ते प्राणिनः पौनःपुन्येन यत्र चतुर्गतिके

संसारे स मरणः-संमारः, शान्तिश्च मरणं च शान्तिमरणं, समाहारद्वन्द्वस्तत् 'संप्रेक्ष्य' पर्यालोच्य, प्रमादवतः संसारानुपरमस्तत्परित्यागाच्च मोक्ष इत्येतद्विचार्येति हृदयं, स वा कुशलः प्रेक्ष्य विषयकषायप्रमादं न विदध्याद्, अथवा शान्त्या-उपशमेन मरणं-मरणावधिं यावत् तिष्ठतो यत्फलं भवति तत्पर्यालोच्य प्रमादं न कुर्यादिति । किं च-'भेउर' इत्यादि, प्रमादो हि विषयकषायाभिष्वङ्गरूपः शरीराधिष्ठानः, तच्च शरीरं भिदुरधर्म्मं, स्वत एव भिद्यत इति भिदुरं स एव धर्म्मः—स्वभावो यस्य तद्भिदुरधर्म्मं एतत् 'समीक्ष्य' पर्यालोच्य प्रमादं न कुर्यादिति सम्बन्धः, एते च भोगा भुज्यमाना अपि न तृप्तये भवन्तीत्याह-'नालं'इत्यादि, 'नालं' न समर्था अभिलाषोच्छित्तये यथेष्टावाप्तावपि भोगाः, एतत् 'पश्य' जानीहि, अतोऽलं तव कुशल ! 'एभिः' प्रमादमयैर्दुःखकारणस्वभावैर्विषयैरुपभोगैरिति, न चैते बहुशोऽप्युपभुज्यमाना उपशमं विदधतीति, उक्तं च—"यल्लोके व्रीहियवं, हिरण्यं पशवः स्त्रियः । नालमेकस्य तत्सर्वमिति मत्वा शमं कुरु ॥१॥ उपभोगोपायपरो वाञ्छति यः शमयितुं विषयतृष्णाम् । धावत्याक्रमितुमसौ, पुरोऽपराह्ने निजच्छायाम् ॥२॥" तदेवं भोगलिप्सूनां तत्प्राप्तावप्राप्तौ च दुःखमेवेति दर्शयति— ५

एवं पस्स मुणी ! महब्भयं, नाइवाइज्ज कंचणं, एस वीरे पसंसिए, जे न निव्विज्जइ आयाणाए, न मे देइ न कुप्पिज्जा थोवं लद्धुं न खिंसए, पडिसेहिओ परिणमिज्जा, एयं मोणं समणुवासिज्जासि (सू. ८६) त्तिबेमि ॥ १०

'एतत्' प्रत्यक्षमेव भोगाशामहाज्वरगृहीतानां कामदशावस्थात्मकं महद्भयं भयहेतुत्वात् दुःखमेव महाभयं, तच्च मरणकारण-

-ाचा०
२श्रोरु०
४ उ०

मिति महदित्युच्यते, एतन् मुने! 'पश्य' सम्यगैहिकामुष्मिकापायापादकत्वेन जानीहीत्युक्तं भवति। यद्येवं तत्किं कुर्यादित्याह– मुनिता-
'नाहराएज्ञ' इत्यादि, यतो भोगाभिलषणं महद्भयमतस्तदर्थं 'नातिपातयेत्' न व्यथेत 'कञ्चन' कमपि जीवमिति, अस्य च शेष- १५
ग्रनोपलक्षणार्थत्वाच्च प्रतारयेन् कञ्चनेत्याद्यप्यायोज्यं। भोगनिरीहः प्राणातिपातादिव्रतारूढश्च कं गुणमवाप्नोतीत्याह–'एस' इत्यादि, समनु
'एष' इति भोगाशान्छन्दविवेचकोऽप्रमादी पञ्चमहाव्रतभारारोहणोन्नामितस्कन्धो वीरः कर्म्मविदारणात् 'प्रशंसितः' स्तुतो देवरा- वासनं
जादिभिः, क एष वीरो नाम? योऽभिष्टूयत इत्यत आह–'जे' इत्यादि, यो 'न निर्विद्यते' न खिद्यते न जुगुप्सते, कस्मै?—
'आदानाय' आदीयते गृह्यतेऽवाप्यते आत्मस्वतत्त्वमशेषावारककर्म्मक्षयाविर्भूतसमस्तवस्तुग्राहिज्ञाना(ना)बाधसुखरूपं येन तदादानं–
संयमानुष्ठानं तस्मै न जुगुप्सते, तद्वा कुर्वन् सिकताकवलचर्वणदेशीयं क्वचिदलाभादौ न खेदमुपयातीति, आह—'न मे' इत्यादि, २०
प्र. आ. १२८ ममायं गृहस्थः सम्भृतसंभारोऽप्युपस्थितेऽपि दानावसरे न ददातीतिकृत्वा 'न कुप्येत्' न क्रोधवशगो भूयाद्, भावनीयं च—
ममैषा कर्म्मपरिणतिरित्यलाभोदयोऽयम्, अनेन चालाभेन कर्म्मक्षयायोद्यतस्य मे तत्क्षपणसमर्थं तपो भावीति न किञ्चित्क्षूयते,
अथापि कथञ्चित् स्तोकं प्रान्तं वा लभेत तदपि न निन्देदित्याह–'थोवं' इत्यादि, 'स्तोकम्' अपर्याप्तं 'लद्धुं' लब्ध्वा न निन्देद् दा-
तारं दत्तं वा, तथाहि–कतिचित्सिक्थानयने ब्रवीति–सिद्ध ओदनो भिक्षामानय लवणाहारो वा अस्माकं नास्तीत्यन्नं ददस्वेत्येवं
अत्युद्गच्छानवद्य विदध्यात्। किं च–'पडिसेहिओ' इत्यादि, 'प्रतिषिद्धः' अदित्सितस्तस्मादेव प्रदेशात् 'परिणमेत्' निवर्त्तेत,
क्षणमपि न तिष्ठेत् न दौर्मनस्यं विदध्यात् न रुष्टत्वमपगच्छेत् न तां सीमन्तिनीमपवदेद्–धिक्ते गृहवासमिति, उक्तं च–"दिट्ठोऽसि ॥११६॥

१ दृष्टोऽसि उदारमते! अनुभूतोऽसि उदारमते!। पीनमेव ते पानीय ?? तव नाम न दर्शनम् ॥ १ ॥

२६

कसेरुमई ! अणुभूयासि कसेरुमई ! । पीयं विय ते पाणिययं वरि तुह नाम न दंसणं ॥ १ ॥" इत्यादि । पठ्यते च-'पडिलामिओ परिणमेज्जा" प्रतिलाभितः-प्राप्तभिक्षादिलाभः सन् परिणमेत्, नोच्चावचालापैः तत्रैव संस्तवं विदध्याद्, वैतालिकवद्दातारं नोत्प्रासयेदिति । उपसंहरन्नाह—'एयं' इत्यादि, 'एतत्' प्रव्रज्यानिर्वेदरूपं अदानाकोपनं स्तोकाजुगुप्सनं प्रतिषिद्धनिवर्त्तनं मुनेरिदं मौनं-मुनिभिर्मुमुक्षुभिराचरितं त्वमप्यवाप्यानेकभवकोटिदुरापसंयमः सन् 'समनुवासयेः' सम्यग् विधस्वानुपालयेति विनेयोपदेश आत्मानुशासनं वा । इतिः परिसमाप्तौ, ब्रवीमि पूर्ववत् ॥ लोकविजयाध्ययनचतुर्थोद्देशकटीका समाप्ता ॥

उक्तश्चतुर्थोद्देशकः, साम्प्रतं पञ्चमस्य व्याख्या प्रतन्यते, तस्य चायमभिसम्बन्धः-इह भोगान् परित्यज्य लोकनिश्रया संयमदेहप्रतिपालनार्थं विहर्त्तव्यमित्युक्तं, तदत्र प्रतिपाद्यते, इह हि संसारोद्वेगवता परित्यक्तभोगाभिलाषेण मुमुक्षुणोत्क्षिप्तपञ्चमहाव्रतभारेण निरवद्यानुष्ठानविधायिना दीर्घसंयमयात्रार्थं देहपरिपालनाय लोकनिश्रया विहर्त्तव्यं, निराश्रयस्य हि कुतो देहसाधनानि ?, तदभावे धर्मश्चेति, उक्तं हि—"धम्मं चरतः साधोर्लोके निश्रापदानि पञ्चापि । राजा गृहपतिरपरः षड्जाया गणशरीरे च ॥१॥" साधनानि च वस्त्रपात्रान्नासनशयनादीनि, तत्रापि प्रायः प्रतिदिनमुपयोगित्वादाहारो गरीयानिति, स च लोकादन्वेष्टव्यो, लोकश्च नानाविधैरुपायैरात्मीयपुत्रकलत्राद्यर्थं आरम्भे प्रवृत्तः, तत्र साधुना संयमदेहनिमित्तं वृत्तिरन्वेषणीयेति दर्शयति—

जमिणं विरूवरूवेहिं सत्थेहिं लोगस्स कम्मसमारंभा कज्जंति, तंजहा—अप्पणो से पुत्ताणं धूयाणं सुण्हाणं नाईणं धाईणं राईणं दासाणं दासीणं कम्मकराणं कम्मकरीणं आएसाए पुढो-

पहेणाए संभासाए पायरासाए, संनिहिसंनिचओ कज्जइ, इहमेगेसिं माणवाणं भोयणाए (सू.८७)

'यैः' अविदितवेद्यैः 'इद'मिति सुखदुःखप्राप्तिपरिहारत्वमुद्दिश्य 'विरूपरूपैः' नानाप्रकारस्वरूपैः 'शस्त्रैः' प्राण्युपघातकारिभिर्द्रव्यभावभेदभिन्नैः'लोकाय' शरीरपुत्रदुहितृस्नुषाज्ञात्याद्यर्थं कर्म्मणां–सुखदुःखप्राप्तिपरिहारक्रियाणां कायिकाधिकरणिकाप्राद्वेषिकापारितापनिकाप्राणातिपातरूपाणां कृषिवाणिज्यादिरूपाणां वा, समारम्भा इति मध्यग्रहणाद्बहुवचननिर्देशाच्च संरम्भारम्भयोरप्युपादानं, तेनायमर्थः–शरीरकलत्राद्यर्थं संरम्भसमारम्भारम्भाः 'क्रियन्ते' अनुष्ठीयन्ते, तत्र संरम्भ इष्टानिष्टप्राप्तिपरिहाराय प्राणातिपातादिसङ्कल्पावेशः, तत्साधनसन्निपातकायवाग्व्यापारजनितपरितापनादिलक्षणः समारम्भः, दण्डत्रयव्यापारापादितचिकीर्षितप्राणातिपातादिक्रियानिर्वृत्तिरारम्भः, कर्म्मणो वा–अष्टप्रकारस्य समारम्भाः–उपार्जनोपायाः क्रियन्त इति, लोकस्येति चतुर्थ्यर्थे षष्ठी, साऽपि तादर्थ्ये, कः पुनरसौ लोको ? यदर्थं संरम्भसमारम्भारम्भाः क्रियन्त इत्याह–'तंजहा अप्पणो से' इत्यादि, यदिवा लोकस्य तृतीयार्थे षष्ठी, यदिति हेतौ, यस्माल्लोकेन नानाविधैः शस्त्रैः कर्म्मसमारम्भाः क्रियन्त इत्यतस्तस्मिन् लोके साधुर्वृत्तिमन्वेषयेत्, यदर्थं च लोकेन कर्म्मसमारम्भाः क्रियन्ते तद्यथेत्यादिना दर्शयति–'तंजहा अप्पणो से' इत्यादि, 'तद्यथे'त्युपप्रदर्शनार्थो, नोक्तमात्रमेव अन्यदप्येवंजातीयकं मित्रादिकं द्रष्टव्यं, 'से'तस्यारम्भारिप्सोर्य आत्मा–शरीरं [तस्मै अर्थं] तदर्थं कर्म्मसमारम्भाः–पाकादयः क्रियन्ते, ननु च लोकार्थमारम्भाः क्रियन्त इति प्रागभिहितं, न च शरीरं लोको भवति, नैतदस्ति, यतः परमार्थदृशां ज्ञानदर्शनचारित्रात्मकमात्मतत्त्वं विहायान्यत्सर्वं शरीराद्यपि पराक्यमेव, तथाहि–बाह्यस्य पौद्गलिकस्याचेतनस्य कर्म्मणो विपाकभूतानि पञ्चापि शरीराणीत्यतः शरीरमात्माऽपि लोकशब्दाभिधेय इति, तदेवं कश्चिच्छरीरनिमित्तं कर्म्मारभते, परस्तु पुत्रेभ्यो दुहितृभ्यः



२०

स्नुषाः-वधवस्ताभ्यो ज्ञातयः-पूर्वापरसम्बद्धाः स्वजनाः तेभ्यो धात्रीभ्यो राजभ्यो दासेभ्यो दासीभ्यः कर्म्मकरेभ्यः कर्म्मकरीभ्यः आदिश्यते परिजनो यस्मिन्नागते तदातिथेयायेत्यादेशः-प्राघूर्णकस्तदर्थं कर्म्मसमारम्भाः क्रियन्त इति सम्बन्धः, तथा 'पुढो पहेणाए' इत्यादि, पृथक् पृथक् पुत्रादिभ्यः प्रहेणकार्थं, तथा 'सामासाए'त्ति श्यामा-रजनी तस्यामशनं श्यामाशः तदर्थं, तथा 'पादरासाए'त्ति प्रातरशनं प्रातराशस्तस्मै, कर्म्मसमारम्भाः क्रियन्त इति सामान्येनोक्तावपि विशेषार्थमाह—'सन्निहि' इत्यादि, सम्यग्निधीयत इति सन्निधिः-विनाशिद्रव्याणां दध्योदनादीनां संस्थापनं, तथा सम्यग्-निश्चयेन चीयत इति सन्निचयः-अविनाशिद्रव्याणां अभयासितामृद्वीकादीनां सङ्ग्रहः, सन्निधिश्च सन्निचयश्च सन्निधिसन्निचयं, प्राकृतशैल्या पुंल्लिङ्गता, अथवा सन्निधेः सन्निचयः सन्निधिसन्निचयः, स च परिग्रहसंज्ञोदयादाजीविकाभ्यासाद्वा धनधान्यहिरण्यादीनां क्रियत इति। स च किमर्थमित्याह—'इह' इत्यादि, 'इहे'ति मनुष्यलोके 'एकेषा'मिहलोके कृतपरमार्थबुद्धीनां 'मानवानां' मनुष्याणां 'भोजनाय' उपभोगार्थमिति। तदेवं विरूपरूपैः शस्त्रैरात्मपुत्राद्यर्थं कर्म्मसमारम्भप्रवृत्ते लोके पृथक् प्रहेणकाय श्यामाशाय प्रातराशाय केषाञ्चिन्मानवानां भोजनार्थं सन्निधिसन्निचयकरणोद्यते सति साधुना किं कर्त्तव्यमित्याह—

**समुट्ठिए अणगारे आरिए आरियपन्ने आरियदंसी अयंसंधित्ति अदक्खु, से नाइए नाइयावए न समणुजाणइ, सव्वामगंधं परिन्नाय निरामगंधो परिव्वए (सू. ८८)**

सम्यक् सततं सङ्गतं वा संयमानुष्ठानेनोत्थितो, नानाविधशस्त्रकर्म्मसमारम्भोपरत इत्यर्थः, न विद्यतेऽगारं-गृहमस्येत्यनगारः, पुत्रदुहितृस्नुषाज्ञातिधात्र्यादिरहित इत्यर्थः, सोऽनगारः आराद्यातः सर्वहेयधर्म्मेभ्यः इत्यार्यः-चारित्रार्हः, आर्या प्रज्ञा यस्यासावार्यप्रज्ञः,



५

१०

श्रुतविशेषितशेमुषीक इत्यर्थः, आर्य-प्रगुणं न्यायोपपन्नं पश्यति तच्छीलश्चेत्यार्यदर्शी, पृथक्प्रहेणकश्यामाशनादिसङ्कल्परहित इत्यर्थः, 'अयंसंधीति' सन्धानं सन्धीयते वाऽसाविति सन्धिः अयं सन्धिर्यस्य साधोरसावयंसन्धिः, छान्दसत्वाद्विभक्तेरलुगित्ययंसन्धिः-यथाकालमनुष्ठानविधायी, यो यस्य वर्त्तमानः कालः कर्त्तव्यतयोपस्थितस्तत्करणतया तमेव सन्धत्त इति, एतदुक्तं भवति-सर्वाः क्रियाः प्रत्युपेक्षणोपयोगस्वाध्यायभिक्षाचर्याप्रतिक्रमणादिकाः असपत्ना अन्योऽन्याबाधया आत्मीयकर्त्तव्यकाले करोतीत्यर्थः, इतिः हेतौ, यस्माद्यथाकालानुष्ठानविधायी तस्मादसावेव परमार्थं पश्यतीत्याह—'अदक्खु'त्ति, तिङ्व्यत्ययेन एकवचनावसरे बहुवचनमकारि, ततश्चायमर्थः-यो ह्यार्य आर्यप्रज्ञ आर्यदर्शी कालज्ञश्च स एव परमार्थमद्राक्षीन्नापर इति, पाठान्तरं वा 'अयं संधिमदक्खु' 'अयम्' अनन्तरविशेषणविशिष्टः साधुः 'सन्धिं' कर्त्तव्यकालम् 'अद्राक्षीत्' दृष्टवान्, एतदुक्तं भवति-यः परस्पराबाधया हिताहितप्राप्तिपरिहाररूपतया विधेयावसरं वेत्ति विधत्ते च स परमार्थं ज्ञातवानिति, अथवा भावसन्धिः-ज्ञानदर्शनचारित्राणामभिवृद्धिः, स च शरीरमृते न भवति, तदपि नोपष्टम्भककारणमन्तरेण, तस्य च सावद्यस्य परिहारः कर्त्तव्य इत्यत आह-'से णाईए' इत्यादि, 'स' भिक्षुस्तद्वाऽकल्प्यं 'नाददीत' न गृह्णीयात्, नाप्यपरमादापयेत्-ग्राहयेत्, नाप्यपरमनेषणीयमाददानं समनुजानीयादपि, अथवा महज्जालं सधूमं वा नाद्यात्-न भक्षयेत् नापरमादयेद् अदन्तं वा न समनुजानीयादिति, आह-'सव्वामगंधं' इत्यादि, आमं च गन्धश्च आमगन्धं समाहारद्वन्द्वः, सर्वं च तदामगन्धं च सर्वामगन्धं, सर्वशब्दः प्रकारकार्त्स्न्येऽत्र गृह्यते, न द्रव्यकार्त्स्न्ये, आमम्-अपरिशुद्धं, गन्धग्रहणेन तु पूतिर्गृह्यते, ननु च पूतिद्रव्यस्याप्यशुद्धत्वात् आमशब्देनैवोपादानात्किमर्थं भेदेनोपादानमिति ?, सत्यम्, अशुद्धसामान्याद्गृह्यते, किं तु पूतिग्रहणेनेहाधाकर्म्माद्यविशुद्धकोटिरुपात्ता, तस्याश्च गुरुतरत्वात् प्राधान्यख्यापनार्थं पुनरु-

पादानं, ततश्चायमर्थः—गन्धग्रहणेनाधाकर्म्म १ औद्देशिकत्रिकं २ पूतिकर्म्म ३ मिश्रजातं ४ बादरप्राभृतिका ५ अध्यवपूरक ६-श्चैते षडुद्गमदोषा अविशुद्धकोट्यन्तर्गता गृहीताः, शेषास्तु विशुद्धकोट्यन्तर्भूता आमग्रहणेनोपात्ता द्रष्टव्या इति, सर्वशब्दस्य च प्रकारकात्स्न्याभिधायकत्वात् येन केनचित् प्रकारेण आमम्—अपरिशुद्धं पूति वा भवति तत्सर्वं ज्ञपरिज्ञया ज्ञात्वा प्रत्याख्यानपरिज्ञया 'निरामगन्धः' निर्गतावामगन्धौ यस्मात्स तथा 'परिव्रजेत्' मोक्षमार्गे ज्ञानदर्शनचारित्राख्ये परिः—समन्ताद्व्रजेत् संयमानुष्ठानं सम्यगनुपालयेदितियावत् । आमग्रहणेन प्रतिषिद्धेऽपि क्रीतकृते तथाप्यल्पसत्त्वानां विशुद्धकोट्यालम्बनतया मा भूत्तत्र प्रवृत्तिरतस्तदेव नामग्राहं प्रतिषिषेधिषुराह—

५

अदिस्समाणे कयविक्कयेसु, से ण किणे न किणावए किणंतं न समणुजाणइ, से भिक्खू कालन्ने बालन्ने मायन्ने खेयन्ने खणयन्ने विणयन्ने ससमयपरसमयन्ने भावन्ने परिग्गहं अममायमाणे कालाणुट्ठाई अपडिण्णे (सू. ८९)



क्रयश्च विक्रयश्च क्रयविक्रयौ तयोरदृश्यमानः, कीदृक्षश्च तयोरदृश्यमानो भवति ?, यतस्तयोर्निमित्तभूतद्रव्याभावादकिञ्चनोऽथवा क्रयविक्रययोरदिश्यमानः—अनपदिश्यमानः, कथं तयोरनपदिश्यमानो भवति ?, यः क्रीतकृतापरिभोगी भवतीति, आह च—'से ण किणे' इत्यादि, 'स' मुमुक्षुरकिञ्चनो धर्म्मोपकरणमपि न क्रीणीयात् स्वतो नाप्यपरेण क्रापयेत् क्रीणन्तमपि न समनुजानीयात् , अथवा निरामगन्धः परिव्रजेदित्यत्रामग्रहणेन हननकोटित्रिकं गन्धग्रहणेन पचनकोटित्रिकं क्रयणकोटित्रिकं तु पुनः

१०

स्वरूपेणोपात्तम्, अतो नवकोटिपरिशुद्धमाहारं विगताङ्गारधूमं भुञ्जीत, एतद्गुणविशिष्टश्च किंभूतो भवतीत्याह—'से भिक्खू कालन्ने' कालः-कर्त्तव्यावसरस्तं जानातीति कालज्ञः—विदितवेद्यः, तथा 'बालण्णे' बलज्ञः बलं जानातीति बलज्ञः, छान्दसत्वा-दीर्घत्वं, आत्मबलं सामर्थ्यं जानातीति यथाशक्त्यनुष्ठानविधायी, अनिगूहितबलवीर्य इत्यर्थः, तथा 'मायन्ने' यावद्द्रव्योपयोगिता मात्रा तां जानातीति तज्ज्ञः, तथा 'खेयन्ने' खेदः-अभ्यासस्तेन जानातीति खेदज्ञः अथवा खेदः-श्रमः संसारपर्यटनजनितस्तं जानातीति, उक्तंच—"जरामरणदौर्गत्यव्याधयस्तावदासताम्। मन्ये जन्मैव धीरस्य, भूयो भूयस्त्रपाकरम् ॥१॥" इत्यादि, अथवा 'क्षेत्रज्ञः' संसक्तविरुद्धद्रव्यपरिहार्यकुलादिक्षेत्रस्वरूपपरिच्छेदकः, तथा 'खणयन्नो' क्षण एव क्षणकः-अवसरो भिक्षार्थमुपसर्प्पणादिकस्तं जानातीति, तथा 'विणयन्ने' विनयो-ज्ञानदर्शनचारित्रोपचारिकरूपस्तं जानातीति, तथा 'ससमयपरसमयण्णे' स्वसमयपरसमयौ जानातीति, स्वसमयज्ञो गोचरप्रदेशादौ पृष्टः सन् सुखेनैव भिक्षादोषानाचष्टे, तद्यथा-षोडशोद्गमदोषाः, ते चामी-आधाकर्म्म १ औद्देशिकं २ पूतिकर्म्म ३ मिश्रजातं ४ स्थापना ५ प्राभृतिका ६ प्रकाशकरणं ७ क्रीतं ८ उद्यतकं ९ परिवर्त्तितं १० अभ्याहृतं ११ उद्भिन्नं १२ मालापहृतं १३ आच्छेद्यं १४ अनिसृष्टं १५ अध्यवपूरकश्चेति १६। षोडशोत्पादनदोषाः, ते चामी-धात्रीपिण्डः १ दूतीपिण्डः २ निमित्तपिण्डः ३ आजीवपिण्डः ४ वनीपकपिण्डः ५ चिकित्सापिण्डः ६ क्रोधपिण्डः ७ मानपिण्डः ८ मायापिण्डः ९ लोभपिण्डः १० पूर्वसंस्तवपिण्डः ११ पश्चात्संस्तवपिण्डः १२ विद्यापिण्डः १३ मन्त्रपिण्डः १४ चूर्णयोगपिण्डः १५ मूलकर्म्मपिण्डश्चेति १६। तथा दशैषणादोषाः, ते चामी-शङ्कित १ म्रक्षित २ निक्षिप्त ३ पिहित ४ संहृत ५ दायको ६ न्मिश्रा-७ उपरिणत ८ लिप्तो ९ ज्झित १० दोषाः। एषां चोद्गमदोषा दातृकृता एव भवन्ति, उत्पादनादोषास्तु साधुजनिताः, एषणा-

दोषाश्चोभयोत्पादिता इति । तथा परसमयज्ञो ग्रीष्ममध्याह्नतीव्रतरतरणिकरनिकरावलीढगलत्स्वेदविन्दुकः क्लिन्नपुष्कः साधुः केनचिद् धिग्जातिदेश्येनाभिहितः—किमिति भवतां सर्वजनाचीर्णं स्नानं न सम्मतमिति ?, स आह—प्रायः सर्वेषामेव यतीनां कामाङ्गत्वाज्जलस्नानं प्रतिषिद्धं, तथा चार्षम्—"स्नानं मदद‍र्पकरं, कामाङ्गं प्रथमं स्मृतम् । तस्मात्कामं परित्यज्य, नैव स्नान्ति दमे रताः ॥१॥" इत्यादि, तदेवमुभयज्ञस्तद्विषये प्रश्ने उत्तरदानकुशलो भवति, तथा 'भावन्ने' भावः—चित्ताभिप्रायो दातुः श्रोतुर्वा तं जानातीति भावज्ञः, किं च—'परिग्गहं अममायमाणे' परिगृह्यत इति परिग्रहः—संयमातिरिक्तमुपकरणादिः तमममीकुर्वन्—अस्वीकुर्वन् मनसाऽप्यनाददान इतियावत्, स एवंविधो भिक्षुः कालज्ञो बलज्ञो मात्रज्ञः क्षेत्रज्ञः खेदज्ञो क्षणज्ञः विनयज्ञः समयज्ञो भावज्ञः परिग्रहममर्मीकुर्वाणश्च किंभूतो भवतीत्याह—'कालाणुट्ठाई' यद्यस्मिन् काले कर्त्तव्यं तत्तस्मिन्नेवानुष्ठातुं शीलमस्येति कालानुष्ठायी, कालानतिपातकर्त्तव्योद्यतो, ननु चास्यार्थस्य 'से भिक्खू कालन्ने' इत्यनेनैव गतार्थत्वात् किमर्थं पुनरभिधीयते इति ?, नैष दोषः, तत्र हि ज्ञपरिज्ञैव केवलाऽभिहिता, कर्त्तव्यकालं जानाति, इह पुनरासेवनापरिज्ञा, कर्त्तव्यकाले कार्यं विधत्त इति । किं च—'अपडिण्णे' नास्य प्रतिज्ञा विद्यते इत्यप्रतिज्ञः, प्रतिज्ञा च कषायोदयादाविरस्ति, तद्यथा—क्रोधोदयात् स्कन्दाचार्येण स्वशिष्ययन्त्रपीलनव्यतिकरमालोक्य सबलवाहनराजधानीसमन्वितपुरोहितोपरि विनाशप्रतिज्ञाऽकारि, तथा मानोदयात् बाहुबलिना प्रतिज्ञा व्यधायि—कथमहं शिशून् स्वभ्रातॄनुत्पन्ननिरावरणज्ञानांश्छद्मस्थः सन् द्रक्ष्यामीति ?, तथा मायोदयात् मल्लिस्वामिजीवेन यथाऽपरयतिविप्रलम्भनं भवति तथा प्रत्याख्यानपरिज्ञा जगृहे, तथा लोभोदयाच्चाविदितपरमार्थाः साम्प्रतेक्षिणो यत्याभासा मासक्षपणादिका अपि प्रतिज्ञाः कुर्वते, अथवा अप्रतिज्ञः—अनिदानो वसुदेववत् संयमानुष्ठानं कुर्वन् निदानं न करोतीति, अथवा गोचरादौ



कालानुष्ठानादि-अप्रतिज्ञता

५

१०

प्रविष्टः गन्धाहारादिकं ममैवैतद्भविष्यतीत्येवं प्रतिज्ञां न करोतीत्यप्रतिज्ञो, यदिवा स्याद्वादप्रधानत्वान्मौनीन्द्रागमस्यैकपक्षावधारणं प्रतिज्ञा तद्रहितोऽप्रतिज्ञः, तथाहि—मैथुनविषयं विहायान्यत्र न क्वचिन्नियमवती प्रतिज्ञा विधेया, यत उक्तम्—"नं यं किंचि अणुण्णायं पडिसिद्धं वावि जिणवरिंदेहिं। मोत्तुं मेहुणभावं न तं विणा रागदोसेहिं ॥१॥" तथा "दोसा जेण निरुज्झंति जेण खिज्झंति पुव्वकम्माइं। सो सो मुक्खोवाओ, रोगावत्थासु समणं व ॥२॥ जे जत्तिया उ हेऊ भवस्स ते चेव तत्तिया मुक्खे। गणणाईया लोया दुण्हवि पुण्णा भवे तुल्ला ॥३॥" इत्यादि। 'अयंसन्धीत्यारभ्य काले अणुट्ठाइ'त्ति यावदेतेभ्यः सूत्रेभ्य एकादश पिण्डैषणा निर्यूढा इति।



१९

१ नापि किञ्चिदवलम्बनीयमनुज्ञातं कारणे च समुत्पन्ने नापि किञ्चित् प्रतिषिद्धं, किन्तु एषा तेषां तीर्थकृतां निश्चयव्यवहारनयद्वयाश्रिता सम्यगाज्ञा मन्तव्या यदुत कार्ये–ज्ञानाद्यालम्बने सत्येन–सद्भावसारेण साधुना भवितव्यं, न मातृस्थानतो यत्किञ्चिदालम्बनीयमित्यर्थः, तात्त्विकज्ञानाद्यालम्बनसिध्यैव मोक्षपथसिद्धेः, बाह्यानुष्ठानस्य अनैकान्तिकत्वादनात्यन्तिकत्वाच्च, इत्थमेव तस्य द्रव्यत्वसिद्धेः, अथवा सत्यं नाम संयमस्तेन कार्ये समुत्पन्ने भवितव्यं, यथा यथा संयमं उपसर्पति तथा तथा कर्तव्यं, तद्गुरगपंग च शक्त्यनिगूहनेनैव निर्वहतीति, सर्वत्र यथाशक्ति यतितव्यमेवेति भावः। आह च बृहद्भाष्यकारः—"कज्ज नाणादीयं सच्चं पुण होइ संजमो णियमा। जह जह सोहइ चरणं तह तह कायव्वयं होइ ॥१॥" दोषा–रागादयो निरुध्यन्ते–सन्तोऽप्यप्रवृत्तिमन्तो जायन्ते येनानुष्ठानविशेषेण पूर्वकर्म्माणि–प्राग्भवोपात्तज्ञानावरणादिकर्म्माणि च येन क्षीयन्ते स सोऽनुष्ठानविशेषो मोक्षोपायो ज्ञातव्यः, रोगावस्थासु–ज्वरादिरोगप्रकारेषु शमनमिव–उचितौषधप्रदानापथ्यपरिहारानुष्ठानमिव, यथा तेन विधीयमानेन ज्वरादिरोगः क्षयमुपगच्छति, एवमुत्सर्गे उत्सर्गमपवादे चापवादं समाचरतो रागादयो निरुध्यन्ते पूर्वकर्म्माणि च क्षीयन्ते, अथवा यथा कस्यापि रोगिणोऽधिकृतपथ्यौषधादिकं प्रतिषिध्यते कस्यापि पुनस्तदेवानुज्ञायते, एवमत्रापि यः समर्थस्तस्याकल्प्यमन्यस्य तु तदेवानुज्ञायते, तथोक्तं निशाथभाष्ये—"उत्पद्यते हि साऽवस्था, देशकालामयान् प्रति। यस्यामकार्यं कार्यं स्यात्, कर्मकार्यं च वर्जयेत् ॥ १ ॥" दिति। २ नैव किञ्चिदनुज्ञातं प्रतिषिद्धं वापि जिनवरेन्द्रैः। मुक्त्वा मैथुनभावं न तद् विना रागद्वेषाभ्याम् ॥१॥ दोषा येन निरुध्यन्ते येन क्षीयन्ते पूर्वकर्माणि। स स मोक्षोपायो रोगावस्थासु शमनमिव ॥२॥ ये यावन्तो हेतवो भवस्य त एव तावन्तो मोक्षस्य। गणनातीता लोका द्वयोरपि पूर्णा भवेयुस्तुल्याः ॥३॥

एवं तर्ह्यप्रतिज्ञ इत्यनेन सूत्रेणेदमापन्नं—न कचित्केनचित्प्रतिज्ञा विधेया, प्रतिपादिताश्चागमे नानाविधा अभिग्रहविशेषाः, ततश्च पूर्वोत्तरव्याहतिरिव लक्ष्यत इत्यत आह—

दुहओ छेत्ता नियाइ, वत्थं पडिग्गहं कंबलं पायपुंछणं उग्गहणं च कडासणं एएसु चेव जाणिज्जा (सू. ९०)

'द्विधे'ति रागेण द्वेषेण वा या प्रतिज्ञा तां छित्त्वा निश्चयेन नियतं वा याति नियाति ज्ञानदर्शनचारित्राख्ये मोक्षमार्गे संयमानुष्ठाने वा भिक्षाद्यर्थं वा, एतदुक्तं भवति—रागद्वेषौ छित्त्वा प्रतिज्ञा गुणवती, व्यत्यये व्यत्यय इति, स एवम्भूतो भिक्षुः कालज्ञो बलज्ञो यावद्द्विधा छिन्दन् किं कुर्यादित्याह—'वत्थं पडिग्गहं इत्यादि यावत् एएसु चेव जाणेज्जा' एतेषु पुत्राद्यर्थमारम्भप्रवृत्तेषु सन्निधिसन्निचयकरणोद्यतेषु जानीयात्—शुद्धाशुद्धतया परिच्छिन्द्यात्, परिच्छेदश्चैवमात्मकः—शुद्धं गृह्णीयादशुद्धं परिहरेदितियावत्, किं तद्विजानीयात्?—वस्त्रं वस्त्रग्रहणेन वस्त्रैषणा सूचिता, तथा पतद्ग्रहं—पात्रम्, एतद्ग्रहणेन च पात्रैषणा सूचिता, कम्बलमित्यनेनाऽऽविकः पात्रनिर्योगः कल्पश्च गृह्यते, पादपुञ्छनकमित्यनेन च रजोहरणमिति, एभिश्च सूत्रैरोघोपधिरौपग्रहिकश्च सूचितः, तथैतेभ्य एव वस्त्रैषणा पात्रैषणा च निर्यूढा, तथा अवगृह्यत इत्यवग्रहः, स च पञ्चधा—देवेन्द्रावग्रहः १ राजावग्रहः २ गृहपत्यवग्रहः ३ शय्यातरावग्रहः ४ साधर्मिकावग्रहश्चेति ५, अनेन चावग्रहप्रतिमाः सर्वाः सूचिताः, अत एवासौ निर्यूढा, अवग्रहकल्पिकश्चास्मिन्नेव सूत्रे कल्प्यते, तथा कटासनं, कटग्रहणेन संस्तारो गृह्यते, आसनग्रहणेन चामन्दकादिविष्टरमिति, आस्यते—स्थीयते अस्मिन्निति वाऽऽसनं—



५

१०

शय्या, ततश्च आगमग्रहणेन शय्या सूचिता, अत एव (च मा)निर्व्यूढेति। एतानि च सर्वाण्यपि वस्त्रादीन्याहारादीनि चैतेषु स्वारम्भप्रवृत्तेषु गृहस्थेषु जानीयात्, सर्वामगन्धं परिज्ञाय निरामगन्धो यथा भवति तथा परिव्रजेरिति भावार्थः ॥ एतेषु च स्वारंभप्रवृत्तेषु गृहस्थेषु परिव्रजन् यावल्लाभं गृह्णीयादुत कश्चिन्नियमोऽप्यस्ति ?, अस्तीत्याह—

## लद्धे आहारे अणगारो मायं जाणिज्जा, से जहेयं भगवया पवेइयं, लाभुत्ति न मज्जिज्जा, अलाभुत्ति न सोइज्जा, बहुंपि लद्धुं न निहे, परिग्गहाओ अप्पाणं अवसक्किज्जा (सू. ९१)

'लब्धे' प्राप्ते सत्याहारे, आहारग्रहणं चोपलक्षणार्थं, अन्यस्मिन्नपि वस्त्रोपधादिके 'अनगारः' भिक्षुः 'मात्रां जानीयात्' यावन्मात्रेण गृहीतेन गृहस्थः पुनरारम्भे न प्रवर्तते यावन्मात्रेण चात्मनो विवक्षितकार्यनिष्पत्तिर्भवति तथाभूतां मात्रामवगच्छेदिति भावः, एतच्च स्वमनीषिकया नोच्यत इत्यत आह—'से जहेयं' इत्यादि, तद्यथा—इदमुद्देशकादेरारभ्यानन्तरसूत्रं यावद्भगवता—ऐश्वर्यादिगुणगमन्वितेनार्द्धमागधया भाषया सर्वस्वभाषानुगतया सदेवमनुजायां परिषदि केवलज्ञानचक्षुषाऽवलोक्य 'प्रवेदितं' प्रतिपादितं, सुधर्म्मस्वामी जम्बूस्वामिने इदमाचष्टे। किं चान्यत्—'लाभो'त्ति इत्यादि, लाभो वस्त्राहारादेर्मम संवृत्त इत्यतोऽहो ! अहं लब्धिमानित्येवं मदं न विदध्यात्, न च तदभावे शोकाभिभूतो विमनस्को भूयादिति, आह च—'अलाभो'त्ति इत्यादि, अलाभे सति शोकं न कुर्यात्, कथं ?—धिग्मां मन्दभाग्योऽहं येन सर्वदानोद्यतादपि दातुर्न लभेऽहमिति, अपि तु तयोर्लाभालाभयोर्माध्यस्थ्यं भावनीयमिति, उक्तं च—"लभ्यते लभ्यते साधु, साधु एव न लभ्यते। अलब्धे तपसो वृद्धिर्लब्धे तु प्राणधारणम् ॥१॥" इत्यादि,

तदेवं पिण्डपात्रवस्त्राणामेषणाः प्रतिपादिताः, साम्प्रतं सन्निधिप्रतिषेधं कुर्वन्नाह-'बहुंपी'त्यादि, 'बहुंपि' बह्वपि लब्ध्वा 'न निहे'त्ति न स्थापयेत्-न सन्निधिं कुर्यात्, स्तोकं तावन्न सन्निधीयत एव, बह्वपि न सन्निदध्यादित्यपिशब्दार्थः, न केवलमाहारसन्निधिं न कुर्याद्, अपरमपि वस्त्रपात्रादिकं संयमोपकरणातिरिक्तं न बिभृयादिति, आह-'परि' इत्यादि, परिगृह्यत इति परिग्रहो-धर्मोपकरणातिरिक्तमुपकरणं तस्मादात्मानमपष्वष्केद्—अपसर्प्पयेद्, अथवा संयमोपकरणमपि मूर्छया परिग्रहो भवति, 'मूर्च्छा परिग्रहः' (तत्त्वा० अ० ८ सू०) इतिवचनात्, तत आत्मानं परिग्रहादपसर्प्पयन्नुपकरणे तुरगवत् मूर्च्छां न कुर्यात्, ननु च यः कश्चिद्धर्मोपकरणाद्यपि परिग्रहो न स चित्तकालुष्यमृते भवति, तथाहि-आत्मीयोपकारिणि रागः, उपघातकारिणि च द्वेषः, ततः परिग्रहे सति रागद्वेषौ नेदिष्ठौ, ताभ्यां च कर्म्मबन्धः, ततः कथं न परिग्रहो धर्म्मोपकरणम्?, उक्तं च-"ममाहमिति चैष यावदभिमानदाहज्वरः, कृतान्तमुखमेव तावदिति न प्रशान्त्युन्नयः। यशःसुखपिपासितैरयमसावनर्थोत्तरैः, परैरपसदः कुतोऽपि कथमप्यपाक्रृष्यते ॥१॥" नैष दोषः, न हि धर्म्मोपकरणे ममेदमिति साधूनां परिग्रहाग्रहयोगोऽस्ति, तथा ह्यागमः-"[1]अवि अप्पणोऽवि देहंमि, नायरंति ममाइउं", यदिह परिगृहीतं कर्म्मबन्धायोपकल्पते स परिग्रहो, यत्तु पुनः कर्म्मनिर्जरणार्थं प्रभवति तत्परिग्रह एव न भवतीति। आह च—



**अन्नहा णं पासए परिहरिज्जा, एस मग्गे आयरिएहिं पवेइए जहित्थ कुसले नोवलिंपिज्जासित्तिबेमि (सू० ९२)**

णमिति वाक्यालङ्कारे, 'अन्यथे'त्यन्येन प्रकारेण पश्यकः सन् परिग्रहं परिहरेत्, यथा हि अविदितपरमार्था गृहस्थाः सुखसा-

[1] अप्यात्मनोऽपि देहे नाचरन्ति ममायितुम्

धनाय परिग्रहं पश्यन्ति, न तथा साधुः, तथाहि—अयमस्याशयः—आचार्यसत्कमिदमुपकरणं न ममेति, रागद्वेषमूलत्वात् परिग्रहाग्रहयोगोऽत्र निषेध्यो, न धर्म्मोपकरणं, तेन विना संसारार्णवपारागमनादिति, उक्तं च—"साध्यं यथा कथञ्चित् स्वल्पं कार्यं महच्च न तथेति । प्रवनमृते न हि शक्यं पारं गन्तुं समुद्रस्य ॥१॥" अत्र चार्हताभासैर्बोटिकैः सह महान्विवादोऽस्तीत्यतो विवक्षितमर्थं तीर्थकृदभिप्रायेणापि सिसाधयिषुराह—'एस मग्गे' इत्यादि, धर्म्मोपकरणं न परिग्रहायेत्येषः—अनन्तरोक्तो मार्गः आराद्याताः सर्वहेयधर्म्मेभ्य इत्यार्याः—तीर्थकृतस्तैः 'प्रवेदितः' कथितो, न तु यथा बोटिकैः कुण्डिका तट्टिका लम्बणिका अश्ववालधिवालादि व्यवच्छिन्नो मार्ग इति, न वा यथा मौद्गलिस्वातिपुत्राभ्यां शौद्धोदनिं ध्वजीकृत्य प्रकाशितः, इत्यनया दिशा अन्येऽपि परिहार्या इति । इह तु स्वशास्त्रगौरवमुत्पादयितुमार्यैः प्रवेदित इत्युक्तम्, अस्मिंश्चार्यप्रवेदिते मार्गे प्रयत्नवता भाव्यमिति, आह च—'जहेत्थ' इत्यादि, लब्ध्वा कर्म्मभूमिं मोक्षपादपबीजभूतां च बोधिं सर्वसंवरचारित्रं च प्राप्य तथा विधेयं यथा 'कुशलो' विदितवेद्यः 'अत्र' अस्मिन्नार्यप्रवेदिते मार्गे आत्मानं पापेन कर्म्मणा नोपलिम्पयेत् इति । एवं चोपलिम्प(लेप)नं भवति यदि यथोक्तानुष्ठानविधायित्वं न भवति, सतां चायं पन्था यदुत—यत्स्वयं प्रतिज्ञातं तदंत्योच्छ्वासं यावद्विधेयमिति, उक्तं च—"लज्जां गुणौघजननीं जननीमिवार्यामत्यन्तशुद्धहृदयामनुवर्त्तमानाः । तेजस्विनः सुखमसूनपि सन्त्यजन्ति, सत्यस्थितिव्यसनिनो न पुनः प्रतिज्ञाम् ॥१॥" इतिशब्दोऽधिकारसमाप्त्यर्थो, 'ब्रवीमि' इति सोऽहं ब्रवीमि येन मया भगवत्पादारविन्दमुपासता अश्रावीति ॥ परिग्रहादात्मानमपसर्पयेदित्युक्तं, तच्च न निदानोच्छेदमन्तरेण, निदानं च शब्दादिपञ्चगुणानुगामिनः कामाः, तेषां चोच्छेदोऽसुकरो, यत आह—

कामा दुरतिक्कमा, जीवियं दुप्पडिवूहगं, कामकामी खलु अयं पुरिसे, से सोयइ जूरइ

## तिप्पइ परितप्पइ (सू. ९३)



कामा द्विविधाः—इच्छाकामा मदनकामाश्च, तत्रेच्छाकामा मोहनीयभेदहास्यरत्युद्भवाः, मदनकामा अपि मोहनीयभेदवेदोदयात् प्रादुष्ष्यन्ति, ततश्च द्विरूपाणामपि कामानां मोहनीयं कारणं, तत्सद्भावे च न कामोच्छेद इत्यतो दुःखेनातिक्रमः—अतिलङ्घनं विनाशो येषां ते तथा, ततश्चेदमुक्तं भवति—न तत्र प्रमादवता भाव्यं। न केवलमत्र, जीवितेऽपि न प्रमादवता भाव्यमिति, आह च—'जीवियं' इत्यादि, जीवितम्—आयुष्कं तत् क्षीणं सत् 'दुष्प्रतिबृंहणीयं' दुरभावार्थे, नैव वृद्धिं नीयते इतियावत्, अथवा जीवितं—संयमजीवितं तद् दुष्प्रतिबृंहणीयं, कामानुषक्तजनान्तर्वर्त्तिना दुःखेन वृद्धिं नीयते, दुःखेन निष्प्रत्यूहः संयमः प्रतिपाल्यते इति, उक्तं च—"आगासे गंगसोउव्व, पडिसोउव्व दुत्तरो। बाहाहिं चेव गंभीरो, तरिअव्वो महोअही ॥१॥ वालुगाकवलो चेव, निरासाए हु संजमो। जवा लोहमया चेव, चावेयव्वा सुदुकरं ॥२॥" इत्यादि, येन चाभिप्रायेण कामा दुरतिक्रमा इति प्रागभ्यधायि तमभिप्रायमाविष्कुर्वन्नाह—'कामकामी' इत्यादि. कामान् कामयितुम्—अभिलषितुं शीलमस्येति कामकामी 'खलु'ः वाक्यालङ्कारे 'अयम्' इत्यध्यक्षः 'पुरुषः' जन्तुः। यस्त्वेवंविधोऽविरतचेताः कामकामी स नानाविधान् शारीरमानसान् दुःखविशेषाननुभवतीति दर्शयति—'से सोयई'त्यादि, 'स' इति कामकामी ईप्सितस्यार्थस्याप्राप्तौ तद्वियोगे च स्मृत्यनुषङ्गः शोकस्तमनुभवति, अथवा शोचत इति काममहाज्वरगृहीतः सन् प्रलपतीति, उक्तं च—"गते प्रेमाबन्धे प्रणयबहुमाने च गलिते, निवृत्ते सद्भावे जन इव जने गच्छति

५

१०

१ आकाशे गङ्गास्रोत इव, प्रतिस्रोत इव दुस्तरः। बाहुभ्यामेव गम्भीरस्तरीतव्यो महोदधिः ॥१॥ वालुकाकवल इव, निरास्वाद एव संयमः। यवा लोहमया एव, चर्वयितव्याः सुदुष्करम् ॥२॥

१०
२९ अ०
५ उद्दे०

पुरः। तमुत्प्रेक्ष्योत्प्रेक्ष्य प्रियसखि! गतांस्तांश्च दिवसान्, न जाने को हेतुर्दलति शतधा यन्न हृदयम्? ॥१॥" इत्यादि शोचते, तथा 'जूरइ'त्ति हृदयेन खिद्यते, तद्यथा-"प्रथमतरमथेदं चिन्तनीयं तवासीद्, बहुजनदयितेन प्रेम कृत्वा जनेन। हतहृदय! निराश! क्लीव! संतप्यसे किं?, न हि जड! गततोये सेतुबन्धाः क्रियन्ते ॥१॥" इत्येवमादि, तथा 'तिप्पइ'त्ति 'तिपृ तेपृ प्रक्षरणार्थो' तेपते -क्षरति सञ्चलति मर्यादातो भ्रश्यति निर्मर्यादो भवतीतियावत्, तथा शारीरमानसैर्दुःखैः पीड्यते, तथा परिः-समन्ताद्बहिरन्तश्च तप्यते परितप्यते, पश्चात्तापं वा करोति, यथेष्टे पुत्रकलत्रादौ कोपात् क्वचिद्गते स मया नानुवर्त्तित इति परितप्यते, सर्वाणि चैतानि शोचनादीनि विषयविपाकप्रध्वान्तःकरणानां दुःखावस्थासंसूचकानि, अथवा शोचत इति यौवनधनमदमोहाभिभूतमानसो विरुद्धानि

कामि-
दशा
१५

**वद्धे पडिमोयए, जहा अंतो तहा बाहिं जहा बाहिं तहा अंतो, अंतो अंतो पूइदेहंतराणि पासइ पुढोवि सवंताइं पंडिए पडिलेहाए (सू. ९४)**

आयतं–दीर्घमैहिकामुष्मिकापायदर्शि चक्षुः–ज्ञानं यस्य स आयतचक्षुः, कः पुनरित्थंभूतो भवति ?, यः कामानेकान्तेनानर्थभूयिष्ठान् परित्यज्य शमसुखमनुभवति, किं च–'लोगविपस्सी' लोकं विषयानुषङ्गावेशासदुःखातिशयं तथा त्यक्तकामाधाप्तप्रशमसुखं विविधं द्रष्टुं शीलमस्येति लोकविदर्शी, अथवा लोकस्य ऊर्द्धाधस्तिर्यग्भागगतिकारणायुष्कसुखदुःखविशेषान् पश्यतीति, एतद्दर्शयति–'लोगस्स' इत्यादि, लोकस्य–धर्माधर्मास्तिकायावच्छिन्नाकाशखण्डस्याधोभागं जानातीति–स्वरूपतोऽवगच्छति, इदमुक्तं भवति–येन कर्म्मणा तत्रोत्पद्यन्तेऽसुमन्तः यादृक् तत्र सुखदुःखविपाको भवति तं जानाति, एवमूर्द्धतिर्यग्भागयोरपि वाच्यं, यदिवा लोकविदर्शीति–कामार्थमर्थोपार्जनप्रसक्तं गृद्धमध्युपपन्नं लोकं पश्यतीति। एतदेव दर्शयितुमाह–'गढिए' इत्यादि, अयं हि लोको 'गृद्धः' अध्युपपन्नः कामानुषङ्गे तदुपाये वा तत्रैवानुपरिवर्त्तमानो भूयो भूयस्तदेवाऽऽचरस्तज्जनितेन वा कर्म्मणा संसारचक्रेऽनुपरिवर्त्तमानः–पर्यटन् आयतचक्षुषो गोचरीभवन् कामाभिलापनिवर्त्तनाय न प्रभवति ?, यदिवा कामगृद्धान् संसारेऽनुपरिवर्त्तमानानसुमतः पश्येत्येवमुपदेशः, अपि च–'संधि' इत्यादि, इह 'मर्त्येषु' मनुजेषु यो ज्ञानादिको भावसन्धिः, स च मर्त्येष्वेव सम्पूर्णो भवतीति मर्त्यग्रहणम्, अतस्तं विदित्वा यो विषयकषायादीन् परित्यजति स एव वीर इति दर्शयति–'एस' इत्यादि, 'एषः' अनन्तरोक्तः आयतचक्षुर्यथावस्थितलोकविभागस्वभावदर्शी भावसन्धेर्वेत्ता परित्यक्तविषयतर्षो वीरः कर्म्मविदारणात् 'प्रशंसितः' स्तुतः विदिततत्त्वैरिति। स एवंभूतः किमपर करोतीति चेदित्याह–'जे बद्धे' इत्यादि, यो बद्धान् द्रव्यभावबन्धनेन स्वतो विमुक्तोऽप-

रानपि मोचयतीत्येतदेव द्रव्यभावबन्धनविमोक्षं वाचो युक्त्याऽऽचष्टे—'जहा अंतो तहा बाहिं' इत्यादि, यथाऽन्तर्भावबन्धनमष्टप्रकारकर्मनिगडनं मोचयति एवं पुत्रकलत्रादि बाह्यमपि, यथा वा बाह्यं बन्धुबन्धनं मोचयति एवं मोक्षगमनविघ्नकारणमान्तरमपीति, यदिवा—कथमसौ मोचयतीति चेत्तत्त्वाविर्भावनेन, स्यादेतत्—तदेव किंभूतमित्याह—'जहा अंतो' इत्यादि, यथा स्वकायस्यान्तः—मध्ये अमेध्यकललपिशितासृक्पूत्यादिपूर्णत्वेनासारत्वमित्येवं बहिरप्यसारता द्रष्टव्या, अमेध्यपूर्णघटवदिति, उक्तं च—"यदि नामास्य कायस्य, यदन्तस्तद्बहिर्भवेत्। दण्डमादाय लोकोऽयं, शुनः काकांश्च वारयेत् ॥१॥" इति, यथा वा बहिरसारता तथाऽन्तरपीति। किं च—'अन्तो अन्तो' इत्यादि, देहस्य मध्ये मध्ये पूत्यन्तराणि—पूतिविशेषान् 'देहान्तराणि' देहस्यावस्थाविशेषान्, इह मांसमिह रुधिरमिह मेदो मज्जा चेत्येवमादि पूतिदेहान्तराणि 'पश्यति' यथावस्थितानि परिच्छिनत्तीत्युक्तं भवति, यदिवा देहान्तराण्येवंभूतानि पश्यति—'पुढो' इत्यादि, 'पृथगपि' प्रत्येकमपि अपिशब्दात्कुष्ठाद्यवस्थायां यौगपद्येनापि स्रवन्ति नवभिः श्रोत्रोभिः कर्णाक्षिमलश्लेष्मलालाप्रश्रवणोच्चारादीन् तथाऽपरव्याधिविशेषापादितव्रणमुखपूतिशोणितरसिकादीनि चेति। यद्येतानि ततः किं? —'पंडिए पडिलेहाए' एतान्येवंभूतानि गलच्छ्रोतोव्रणरोमकूपानि 'पण्डितः' अवगततत्त्वः 'प्रत्युपेक्षेत' यथावस्थितमस्य स्वरूपमवगच्छेदिति, उक्तं च—"मंसट्ठिरुहिरण्हारुवणद्धकललमलयमेयमज्जासु। पुण्णंमि चम्मकोसे दुग्गंधे असुइबीभच्छे ॥१॥ संचारिमजंतगलंतवच्चमुत्तंतसेअपुण्णंमि। देहे हुज्जा किं रागकारणं असुइहेउम्मि? ॥२॥" इत्यादि। तदेवं पूतिदेहान्तराणि पश्यन् पृथगपि स्रव-

१ मांसास्थिरुधिरस्नायवनद्धकललमेदमज्जाभिः। पूर्णे चर्मकोशे दुर्गन्धेऽशुचिबीभत्से ॥ १ ॥ संचारक (श्रवत्) यन्त्रगलद्वर्चोमूत्रान्त्रस्वेदपूर्णे। देहे भवेत् किं रागकारणं अशुचिहेतौ? ॥ २ ॥

१५
आयतचक्षुष्कता

२०

२६

न्तीत्येवं प्रत्युपेक्ष्य किं कुर्यादित्याह—

से मइमं परिन्नाय मा य हु लालं पच्चासी, मा तेसु तिरिच्छमप्पाणमावायए, कासंकासे खलु अयं पुरिसे, बहुमाई कडेण मूढे, पुणो तं करेइ लोहं वेरं वड्ढेइ अप्पणो, जमिणं परिकहिज्जइ इमस्स चेव पडिवूहणयाए, अमरायइ महासड्ढी अट्टमेयं तु पेहाए अपरिण्णाए कंदइ (सू. ९५)

५

'स' पूर्वोक्तो यतिर्मतिमान्–श्रुतसंस्कृतबुद्धिर्यथावस्थितं देहस्वरूपं कामस्वरूपं च द्विविधयाऽपि परिज्ञया परिज्ञाय किं कुर्यादित्याह—'मा य हु' इत्यादि, 'मा' प्रतिषेधे चः समुच्चये हुर्वाक्यालङ्कारे, ललतीति लाला–अनुबन्धमुखश्लेष्मसन्ततिः तां प्रत्यशितुं शीलमस्येति प्रत्याशी, वाक्यार्थस्तु यथा हि बालो निर्गतामपि लालां सदसद्विवेकाभावात् पुनरप्यश्नातीत्येवं त्वमपि लालावत्त्यक्त्वा मा भोगान् प्रत्यशान, वान्तस्य पुनरप्यमिलाषं मा कुर्वित्यर्थः। किं च–'मा तेसु तिरिच्छं' इत्यादि, संसारश्रोतांसि अज्ञानाविरतिमिथ्यादर्शनादीनि प्रतिकूलेन वा तिरश्चीनेन वाऽतिक्रमणीयानि, निर्वाणश्रोतांसि तु ज्ञानादीनि तत्रानुकूल्यं विधेयं, मा तेष्वात्मानं तिरश्चीनमापादयेः, ज्ञानादिकार्ये प्रतिकूलतां मा विदध्याः, तत्राप्रमादवता भाव्यं, प्रमादवांश्चेहैव शान्तिं न लभते, यत आह—'कासंकासे' इत्यादि, यो हि ज्ञानादिश्रोतसि तिरश्चीनवर्ती भोगाभिलाषवान् स एवंभूतोऽयं पुरुषः सर्वदा किंकर्त्तव्यताकुल इदमहमकार्षमिदं च करिष्ये इत्येवं भोगाभिलाषक्रियाव्यापृतान्तःकरणो न स्वास्थ्यमनुभवति, खलुशब्दोऽवधारणे, वर्तमानका-

१०

आचा० श्लोक० ५ उद्दे०

इत्याह-'जमिणं' इत्यादि, 'यदि'ति यस्मादस्यैव-विशरारोः शरीरकस्य परिबृंहणार्थं प्राणघातादिकाः क्रियाः करोतीति, ते च तेनोपहताः प्राणिनः पुनः शतशो घ्नन्ति, ततो मयेदं कथ्यते-कासंकषः खल्वयं पुरुषो बहुमायी कृतेन मूढः पुनस्तत्करोति येनात्मनो वैरं वर्द्धयतीति, यदिवा यदिदं मयोपदेशप्रायं पौनःपुन्येन कथ्यते तदस्यैव संयमस्य परिबृंहणार्थम्, इदं चापरं कथ्यते-'अमरायई'त्यादि, अमरायते अनमरः सन् द्रव्ययौवनप्रभुत्वरूपावसक्तोऽमर इवाचरति अमरायते, कोऽसौ?-महाश्रद्धी, महती चासौ श्रद्धा च महाश्रद्धा सा विद्यते भोगेषु तदुपायेषु वा यस्य स तथा, अत्रोदाहरणं-राजगृहे नगरे मगधसेना गणिका, तत्र कदाचिद्धनः सार्थवाहो महता द्रव्यनिचयेन समन्वितः प्रविष्टः, तद्रूपयौवनगुणगणद्रव्यसम्पदाक्षिप्तया मगधसेनयाऽसावभिसरितः, तेन चायव्ययाक्षिप्तमानसेनासौ नावलोकिताऽपि, अस्याश्चात्मीयरूपयौवनसौभाग्यावलेपान्महती दुःखासिकाऽभूत्, ततश्च तां परिम्लानवदनामवलोक्य जरासन्धेनाभ्यधायि-किं भवत्या दुःखासिकाकारणं?, केन वा सार्द्धमुषितेति, सा त्ववादीद्-अमरेणेति, कथममायमर इत्युक्ते तया सद्भावः कथितो निरूपितश्च यावत्तथैवाद्याप्यास्त इत्यतो भोगार्थिनोऽर्थे प्रसक्ता अजरामरवत्क्रियासु प्रवर्त्तन्त इति। यश्चामरायमाणः कामभोगाभिलाषुकः स किंभूतो भवतीत्याह-'अट्ट' इत्यादि, अर्त्तिः-शारीरमानसी पीडा तत्र भव आर्त्तस्तमार्त्तममरायमाणं कामार्थं महाश्रद्धावन्तं 'प्रेक्ष्य' दृष्ट्वा पर्यालोच्य वा कामार्थयोर्न मनो विधेयं इति, पुनरमरायमाणभोगश्रद्धावतः स्वरूपमुच्यते-'अपरिण्णाए' इत्यादि, कामस्वरूपं तद्विपाकं वा अपरिज्ञाय तत्र दत्तावधानः कामस्वरूपापरिज्ञया वा 'क्रन्दते' भोगेष्वप्रासन्नेषु काङ्क्षाशोकावसुभवतीति, उक्तं च-"चिन्ता गते भवति साध्वसमन्तिकस्थे, मुक्ते तु तस्मिरधिका रमितेऽप्यतृप्तिः। द्वेषोऽन्यभाजि यशवर्त्तिनि दग्धमानः, प्राप्तिः सुखस्य दयिते न कथञ्चिदस्ति॥१॥" इत्यादि। तदेवमनेकधा कामविपाकमुपदर्श्य उपसंहरति-

सार्थोरुपदेशः

५

१०

से तं जाणह जमहं बेमि. तेइच्छं पंडिए पवयमाणे से हंता छित्ता भित्ता लुंपइत्ता विलुंपइत्ता उद्दवइत्ता. अकडं करिस्सामित्ति मन्नमाणे, जस्सवि य णं करेइ, अलं बालस्स संगेणं, जे वा से कारेइ बाले, न एवं अणगारस्स जायइ (सू. ९६) त्तिबेमि॥

'से'त्ति तदर्थं, तदपि हेत्वर्थे, यस्मात्कामा दुःखैकहेतवः तस्मात्तज्जानीत यदहं ब्रवीमि, मदुपदेशं कामपरित्यागविषयं कर्णे कुरुतेति भावार्थः। ननु च कामनिग्रहोऽत्र चिकीर्षितः, स चान्योपदेशादपि सिद्ध्यत्येवेत्येतदाशङ्क्याह-'तेइच्छं' इत्यादि, कामचिकित्सां 'पण्डितः' पण्डिताभिमानी प्रवदन्नपरव्याधिचिकित्सामिवोपदिशन्नपरः-तीर्थिको जीवोपमर्दे वर्त्तत इति, आह-'से हंता' इत्यादि, 'स' इत्यविदिततत्त्वः कामचिकित्सोपदेशकः प्राणिनां हन्ता दण्डादिभिः छेत्ता कर्णादीनां भेत्ता शूलादिभिः लुम्पयिता ग्रन्थिच्छेदनादिना विलुम्पयिता अवस्कन्दादिना अपद्रावयिता प्राणव्यपरोपणादिना नान्यथा कामचिकित्सा व्याधिचिकित्सा वा अपरमार्थदृशां गम्यते,'किं च-'अकृतं' यदपरेण न कृतं कामचिकित्सनं व्याधिचिकित्सनं वा तदहं करिष्य इत्येवं मन्यमानः हननादिकाः क्रियाः करोति, तासु च कर्मबन्धः, अतो य एवंभूत उपदिशति यस्याप्युपदिश्यते उभयोरप्येतयोरपथ्यत्वादकार्यमिति, आह च-'जस्सवि य णं' इत्यादि, यस्याप्यसावेवंभूतां चिकित्सां करोति, न केवलं स्वस्येत्यपिशब्दार्थः, तयोर्द्वयोरपि कर्तुः कारयितुश्च हननादिकाः क्रियाः, अतो 'अलं' पर्याप्तं 'बालस्स' अज्ञस्य 'सङ्गेन' कर्मबन्धहेतुना कर्तुरिति, योऽप्येतत् कारयति 'बालः' अज्ञस्तस्याप्यलमिति सम्बन्धः, एतच्चैवम्भूतमुपदेशदानं विधानं वाऽवगततत्त्वस्य न भवतीत्याह-'न एवं' इत्यादि, एवम्भूतं प्राण्युपमर्देन चिकि-

त्सोपदेशदानं करणं वा 'अनगारस्य' साधोः ज्ञातसंसारस्वभावस्य न जायते—न कल्पते, ये तु कामचिकित्सां व्याधिचिकित्सां वा जीवोपमर्देन प्रतिपादयन्ति ते बालाः-अविज्ञाततत्त्वाः, तेषां वचनमवधीरणीयमेवेति भावार्थः। इतिः परिसमाप्त्यर्थे ब्रवीमीति पूर्ववदिति लोकविजयस्य पञ्चमोद्देशकटीका समाप्तेति।

उक्तः पञ्चमोद्देशकः, साम्प्रतं षष्ठ आरभ्यते, अस्य चायमभिसम्बन्धः-संयमदेहयात्रार्थं लोकमनुसरता साधुना लोके ममत्वं न कर्त्तव्यमित्युद्देशार्थाधिकारोऽभिहितः, सोऽधुना प्रतिपाद्यते-अस्य चानन्तरसूत्रसम्बन्धो वाच्यो 'नैतमनगारस्य जायत' इत्यभिहितम्, एतदेवात्रापि प्रतिपिपादयिषुराह—

## से तं संबुज्झमाणे आयाणीयं समुट्ठाय तम्हा पावकम्मं नेव कुज्जा न कारवेज्जा (सू. ९७)

यस्यानगारस्यैतत्पूर्वोक्तं न जायते सोऽनगारस्तत्—प्राण्युपघातकारि चिकित्सोपदेशदानमनुष्ठानं वा संबुध्यमानः-अवगच्छन् ज्ञपरिज्ञया प्रत्याख्यानपरिज्ञया च परिहरन् आदातव्यम् आदानीयं, तच्च परमार्थतो भावादानीयं ज्ञानदर्शनचारित्ररूपं तद् 'उत्थाये'त्यनेकार्थत्वादादाय-गृहीत्वा अथवा सोऽनगार इत्येतदादानीयं-ज्ञानाद्यपवर्गैककारणमित्येवं सम्यगवबुध्यमानः सम्यक् संयमानुष्ठानेनोत्थाय-सर्वं सावद्यं कर्म्म न मया कर्त्तव्यमित्येवं प्रतिज्ञामन्दरमारुह्य, क्त्वाप्रत्ययस्य पूर्वकालाभिधायित्वात् किं कुर्यादित्याह-'तम्हा' इत्यादि, यस्मात् संयमः सर्वसावद्यारम्भनिवृत्तिरूपः तस्मात्तमादाय पापं-पापहेतुत्वात् कर्म्म क्रियां-न कुर्यात् स्वतो, मनसाऽपि न समनुजानीयादित्यवधारणफलं, अपरेणापि न कारयेदिति, आह च-'न कारवे' इत्यादि, अपरेणापि कर्म्मकरादिना



५

१०

पापसमारम्भं न कारयेदित्युक्तं भवति, प्राणातिपातमृषावादादत्तादानमैथुनपरिग्रहक्रोधमानमायालोभरागद्वेषकलहाभ्याख्यानपैशुन्यपरपरिवादारतिरतिमायामृषावादमिथ्यादर्शनशल्यरूपमष्टादशप्रकारं पापं कर्म्म स्वतो न कुर्यान्नाप्यपरेण कारयेदेवकाराच्चापरं कुर्वन्तं न समनुजानीयात्योगत्रिकेणापि (इति) भावार्थः। स्यादेतत्–किमेकं प्राणातिपातादिकं पापं कुर्वतोऽपरमपि ढौकते आहोस्विन्नेत्याह–

सिया तत्थ एगयरं विप्परामुसइ छसु अन्नयरंमि कप्पइ, सुहट्ठी लालप्पमाणे, सएण दुक्खेण मूढे विप्परियासमुवेइ, सएण विप्पमाएण पुढो वयं पकुव्वइ, जंसिमे पाणा पव्वहिया, पडिलेहाए नो निकरणयाए, एस परिन्ना पवुच्चइ, कम्मोवसंती (सू. ९८)

'स्यात्तत्र' कदाचित्तत्र–पापारम्भे 'एकतरं' पृथिवीकायादिसमारम्भं विपरामृशति–पृथिवीकायादिसमारम्भं करोति, एकतरं वाऽऽश्रवद्वारं परामृशति–आरभते स षट्स्वन्यतरस्मिन् कल्प्यते, यस्मिन्नेवालोच्यते तस्मिन्नेव प्रवृत्तो द्रष्टव्यः, इदमुक्तं भवति–पृथिवीकायादिषु षट्सु जीवनिकायेष्वाश्रवद्वारेषु वा मध्येऽन्यतरस्मिन्नपि प्रवर्त्तमानो यस्मिन्नेव पर्यालोच्यते तस्मिन्नेव कल्प्यते, सर्वस्मिन्नेव वर्त्तत इति भावार्थः। कथमन्यतरस्मिन् पृथिवीकायादिसमारम्भे वर्त्तमानोऽपरकायसमारम्भे सर्वपापसमारम्भे वा वर्त्तते इत्येवं मन्यते ?, कुम्भकारशालोदकप्लावनदृष्टान्तेनैककायसमारम्भकोऽपरकायसमारम्भको भवति, अथवा प्राणातिपातास्रवद्वारविघटनादेकजीवातिपातादेककायातिपाताद्वा अपरजीवातिपाती द्रष्टव्यः, प्रतिज्ञालोपाच्चानृतो, न च तेन व्यापाद्यमानेनासुमताऽऽत्मा व्यापादकाय दत्तस्तीर्थकरेण चानुज्ञातोऽतः प्राणिनः प्राणान् गृह्णन्नदत्तग्राही, सावद्योपादानाच्च पारिग्राहिकः, परिग्रहाच्च मैथुनरा-

१५ एकातिक्रमे सर्वातिक्रमः

२०



२६

श्रीभोजने अपि गृहीते, यतो नापरिगृहीतमुपभुज्यते परिभुज्यते चेत्यतोऽन्यतरारम्भे षण्णामप्यारम्भोऽथवा अनावृतचतुराश्रवद्वा-
रस्य कथं चतुर्थपञ्चव्रतावस्थानं स्याद् ?, अतः षट्स्वन्यतरस्मिन् प्रवृत्तः सर्वेष्वपि प्रवृत्त इति, अथैकतरमपि पापसमारम्भं य आर-
भते स षट्स्वन्यतरस्मिन् कल्पते–योग्यो भवति, अकर्त्तव्यप्रवृत्तत्वाद् , अथवैकतरमपि यः पापारम्भं करोत्यसावष्टप्रकारं कर्म्मा-
दाय षट्स्वन्यतरस्मिन् कल्पते–प्रभवति, पौनःपुन्येनोत्पद्यत इत्यर्थः, स्यात्–किमर्थमेवंविधं पापकं कर्म्म समारभते ?, तदुच्यते–
'सुहट्ठी लालप्पमाणे' सुखेनार्थः सुखार्थः स विद्यते यस्यासाविति मत्वर्थीयः, स एवम्भूतः सन्नत्यर्थं लपति पुनः पुनर्वा लपति लालप्यते
वाचा कायेन धावनवल्गनादिकाः क्रियाः करोति मनसा च तत्साधनोपायांश्चिन्तयति, तथाहि– सुखार्थी सन् कृष्यादिकर्म्मभिः

5

पृथिवीं समारभते स्नानार्थमुदकं वितापनार्थमग्निं घर्मापनोदार्थं वायुं आहारार्थी वनस्पतिं त्रसकायं वेत्यसंयतः, संयतो वा रससु-
खार्थी सचित्तं लवणवनस्पतिफलादि गृह्णाति, एवमन्यदपि यथासंभवमायोज्यं। स चैवं लालप्यमानः किंभूतो भवतीत्याह–'सएण'-
इत्यादि, यत्तदुप्तमन्यजन्मनि दुःखतरुकर्म्मबीजं तदात्मीयं दुःखतरुकार्यमाविर्भावयति, तच्च तेनैव कृतमित्यात्मीयमुच्यते, अतस्तेन
स्वकीयेन 'दुःखेन' स्वकृतकर्म्मोदयजनितेन 'मूढः' परमार्थमजानानो 'विपर्यासमुपैति' सुखार्थी प्राण्युपघातकारणमारम्भमारभते,
सुखस्य च विपर्यासो दुःखं तदुपैति, उक्तं च—"दुःखद्विट् सुखलिप्सुर्मोहान्धत्वाददृष्टगुणदोषः । यां यां करोति चेष्टां तया तया
दुःखमादत्ते ॥ १॥" यदिवा 'मूढो' हिताहितप्राप्तिपरिहाररहितो विपर्यासमुपैति—हितमप्यहितबुद्ध्याऽध्यवस्यत्यहितं च हितबु-
द्ध्येति, एवं कार्याकार्यपथ्यापथ्यवाच्यावाच्यादिष्वपि विपर्यासो योज्यः, इदमुक्तं भवति—मोहोऽज्ञानं मोहनीयभेदो वा, तेनो-
भयप्रकारेणापि मोहेन मूढोऽल्पसुखकृते तत्तदारभते येन शारीरमानसदुःखव्यसनोपनिपातानामनन्तमपि कालं पात्रतां व्रज-

10

नीति। पुनरपि मूढस्यानर्थपरम्परां दर्शयितुमाह—'सएण' इत्यादि, स्वकीयेनात्मना कृतेन प्रमादेन—मद्यादिना 'विविध'मिति मद्यविषयकषायविकथानिद्राणां स्वभेदग्रहणं तेन पृथग्–विभिन्नं व्रतं करोति, यदिवा पृथु विस्तीर्णं 'वय'मिति वयन्ति–पर्यटन्ति प्राणिनः स्वकीयेन कर्मणा यस्मिन् स वयः–संसारस्तं प्रकरोति, एकैकस्मिन् काये दीर्घकालमवस्थानाद्, यदिवा कारणे कार्योपचारात् स्वकीयेन नानाविधप्रमादकृतेन कर्म्मणा वयः–अवस्थाविशेषस्तमेकेन्द्रियादिकललार्बुदादितदहर्जातबालादिव्याधिगृहीतदारिद्र्यदौर्भाग्यव्यसनोपनिपातादिरूपं प्रकर्षेण करोति–विधत्त इति। तस्मिंश्च संसारेऽवस्थाविशेषे वा प्राणिनः पीड्यन्ते इति दर्शयितुमाह–'जंसिमे' इत्यादि, यस्मिन् स्वकृतप्रमादापादितकर्म्मविपाकजनिते चतुर्गतिकसंसारे एकेन्द्रियाद्यवस्थाविशेषे वा 'इमे' प्रत्यक्षगोचरीभूताः 'प्राणा'इत्यभेदोपचारात्प्राणिनः 'प्रव्यथिताः' नानाप्रकारैर्व्यसनोपनिपातैः पीडिताः, सुखार्थिभिरारम्भप्रवृत्तैर्मोहाद्विपर्यस्तैः प्रमादवद्भिश्च गृहस्थैः पाषण्डिकैर्यत्याभासैश्चेति वा। यदि नामात्र प्रव्यथिताः प्राणिनस्ततः किमित्याह–'पडि' इत्यादि, एतत् संसारचक्रवाले स्वकृतकर्म्मफलेश्वराणामसुमतां गृहस्थादिभिः परस्परतो वा कर्म्मविपाकतो वा प्रव्यथनं प्रत्युपेक्ष्य विदितवेद्यः साधुर्निश्चयेन निरसं वा नियतं वा क्रियन्ते नानादुःखावस्था जन्तवो येन तन्निकरणं निकारः—शारीरमानसदुःखोत्पादनं तस्मै नो कर्म्म कुर्याद्, येन प्राणिनां पीडोत्पद्यते तमारम्भं न विदध्यादिति भावार्थः। एवं च सति किं भवतीत्याह—'एस' इत्यादि, येयं सावद्ययोगनिवृत्तिरेषा परिज्ञा एतत्तत्त्वतः परिज्ञानं प्रकर्षेणोच्यते प्रोच्यते, न पुनः शुकस्येव ज्ञानं निवृत्तिफलरहितमिति। एवं द्विविधयाऽपि ज्ञपरिज्ञया प्रत्याख्यानपरिज्ञया च प्राणिनिकारपरिहारे सति किं भवतीत्याह—'कम्मोवसंती'त्ति कर्म्मणाम्–अशेषद्वन्द्वप्रतानमूलसंसारतरुबीजभूतानामुपशान्तिः—उपशमः, कर्म्मक्षयः प्राणिनिकारक्रियाप्रवृत्तेर्भवतीत्युक्तं भवति।

अस्य च कर्मक्षयप्रत्यूहस्य प्राणिनिकरणस्य मूलमात्मात्मीयग्रहः, तदपनोदार्थमाह—

**जे ममाइयमइं जहाइ से चयइ ममाइयं, से हु दिट्ठपहे मुणी जस्स नत्थि ममाइयं, तं परिन्नाय मेहावी विइत्ता लोगं वंता लोगसन्नं से मइमं परिक्कमिज्जासि त्तिबेमि ॥ नारइं सहई वीरे, वीरे न सहई रतिं। जम्हा अविमणे वीरे, तम्हा वीरे न रज्जइ ॥१॥ (सू० ९९)**

ममायितं-मामकं तत्र मतिर्ममायितमतिस्तां यः परिग्रहविपाकज्ञो 'जहाति' परित्यजति स 'ममायितं' स्वीकृतं परिग्रहं 'जहाति' परित्यजति, इह द्विविधः परिग्रहो-द्रव्यतो भावतश्च, तत्र परिग्रहमतिनिषेधादान्तरो भावपरिग्रहो निषिद्धः, परिग्रहबुद्धिविषयप्रतिषेधाच्च बाह्यो द्रव्यपरिग्रह इति। अथवा काक्वा नीयते, यो हि परिग्रहाध्यवसायकलुषितं ज्ञानं परित्यजति स एव परमार्थतः सबाह्याभ्यन्तरं परिग्रहं परित्यजति, ततश्चेदमुक्तं भवति—सत्यपि सम्बन्धमात्रे चित्तस्य परिग्रहकालुष्याभावान्नगरादिसम्बन्धिपृथ्वीसम्बन्धेऽपि जिनकल्पिकस्येव निष्परिग्रहतैव, यदि नामैवं ततः किमित्याह—'से हु' इत्यादि, यो हि मोक्षैकविघ्नहेतोः संसारभ्रमणकारणात् परिग्रहान्निवृत्ताध्यवसायः, हुः अवधारणे, स एव मुनिः दृष्टो ज्ञानादिको मोक्षपथो येन स दृष्टपथः, यदिवा दृष्टभयः—अवगतसप्तप्रकारभयः, शरीरादेः परिग्रहात्साक्षात्पारम्पर्येण वा पर्यालोच्यमानं सप्तप्रकारमपि भयमापनीपद्यत इत्यतः परिग्रहपरित्यागे ज्ञातभयत्वमवसीयत इति। एतदेव पूर्वोक्तं स्पष्टयितुमाह—'जस्स' इत्यादि, यस्य 'ममायितं' स्वीकृतं परिग्रहो न विद्यते स दृष्टभयो मुनिरिति सम्बन्धः, किं च—'तं' इत्यादि, 'तं' पूर्वव्यावर्णितस्वरूपं परिग्रहं द्विविधयाऽपि परिज्ञया परिज्ञाय 'मेधावी' ज्ञातज्ञेयो

विदित्वा 'लोकं' परिग्रहाग्रहयोगविपाकिनमेकेन्द्रियादिप्राणिगणं 'वान्त्वा' उद्गीर्य 'लोकस्य' प्राणिगणस्य संज्ञा दशप्रकारा अतस्तां 'स' इति मुनिः, किंभूतो ?–'मतिमान्' सदसद्विवेकज्ञः, 'पराक्रमेथाः' संयमानुष्ठाने समुद्यच्छेः, संयमानुष्ठानोद्योगं सम्यग्विदध्या इतियावद्, अथवाऽष्टप्रकारं कर्म्मारिषड्वर्गं वा विषयकषायान् वा पराक्रमस्वेति, इतिरधिकारसमाप्तौ, ब्रवीमीति पूर्ववत्। स एवं संयमानुष्ठाने पराक्रममाणस्त्यक्तपरिग्रहाग्रहयोगो मुनिः किंभूतो भवतीत्याह–तस्य हि त्यक्तगृहगृहिणीधनहिरण्यादिपरिग्रहस्य निष्किञ्चनस्य संयमानुष्ठानं कुर्वतः साधोः कदाचिन्मोहनीयोदयादरतिराविः स्यात्, तामुत्पन्नां संयमविषयां 'न सहते' न क्षमते, कोऽसौ ? –विशेषेणेरयति–प्रेरयति अष्टप्रकारं कर्म्मारिषड्वर्गं वेति वीरः–शक्तिमान्, स एव वीरोऽसंयमे विषयेषु परिग्रहे वा या रतिरुत्पद्यते तां 'न सहते' न मर्षयति, या चारतिः संयमे विषयेषु च रतिस्ताभ्यां विमनीभूतः शब्दादिषु न रज्यति, अतो रत्यरतिपरित्यागान्न विमनस्को भवति, नापि रागमुपयातीति दर्शयति–यस्मात्यक्तरत्यरतिरविमना वीरस्तस्मात् कारणाद्वीरो 'न रज्यति' शब्दादिविषयग्रामे न गार्द्ध्यं विदधाति। यत एवं ततः किमित्याह—

सद्दे फासे अहियासमाणे, निव्विंद नंदिं इह जीवियस्स। मुणी मोणं समायाय, धुणे कम्मसरीरगं ॥ ३ ॥ पंतं लूहं सेवंति, वीरा संमत्तदंसिणो। एस ओहंतरे मुणी तिन्ने मुत्ते विरए वियाहिएत्तिबेमि ( सू. १०० )

यस्माद्वीरो रत्यरती निराकृत्य शब्दादिषु विषयेषु मनोज्ञेषु न रागमुपयाति, नापि दुष्टेषु द्वेषं, तस्माच्छब्दान् स्पर्शांश्च मनोज्ञेतर-



२०

भेदभिन्नान् 'अहियासमाणे'त्ति सम्यक् सहमानो निर्विन्द नन्दीत्युत्तरसूत्रेण सम्बन्धः, एतदुक्तं भवति–मनोज्ञान् शब्दान् श्रुत्वा न रागमुपयाति, नापीतरान् द्वेष्टि, आद्यन्तग्रहणाच्चेतरेषामप्युपादानं द्रष्टव्यं, तत्राप्यतिसहनं विधेयमिति, उक्तं च—"सद्देसु अ भद्दयपावएसु सोयविसयमुवगएसु। तुट्ठेण व रुट्ठेण व समणेण सया न होअव्वं ॥१॥ एवं रूवेसु अ भद्दयपावएसु०। तहा गंधेसु अ० ॥" इत्यादि वाच्यं, ततश्च शब्दादीन्विषयानतिसहमानः किं कुर्यादित्याह–'निव्विंद' इत्यादि, इहोपदेशगोचरापन्नो विनेयोऽभिधीयते, सामान्येन वा मुमुक्षोरयमुपदेशः, निर्विन्दस्व–जुगुप्सस्व ऐश्वर्यविभवात्मिका मनसस्तुष्टिर्नन्दिस्ताम् 'इह' मनुष्यलोके यज्जीवितमसंयमजीवितं वा तस्य या नन्दिः–तुष्टिः प्रमोदो यथा ममैतत्समृद्ध्यादिकमभूद्भवति भविष्यति वेत्येवंविकल्पजनितां नन्दीं जुगुप्सस्व, यथा किमनया पापोपादानहेतुभूतयाऽस्थिरयेति ?, उक्तं च—"विभव इति किं मदस्ते ?, च्युतविभवः किं विषादमुपयासि ?। करनिहितकन्दुकसमाः, पातोत्पाता मनुष्याणाम् ॥२॥" एवं रूपबलादिष्वपि वाच्यं, सनत्कुमारदृष्टान्तेनेति, अथवा पञ्चानामप्यतीचाराणामतीतं निन्दति प्रत्युत्पन्नं संवृणोत्यनागतं प्रत्याचष्टे, स्यादेतत्–किमालम्ब्य करोतीत्याह—'मुणी' त्यादि, मुनिस्त्रिकालवेदी यतिरित्यर्थः, मुनेरयं मौनः–संयमो, यदि वा मुनेर्भावः मुनित्वं तदप्यसावेव, मौनं वा वाचः संयमनम्, अस्य चोपलक्षणार्थत्वात् कायमनसोरपि, अतः सर्वथा संयममादाय, किं कुर्यात् ?–धुनीयात् कर्म्मशरीरकं औदारिकादिशरीरं वा, अथवा 'धुनीहि' विवेचय पृथक्कुरु, तदुपरि ममत्वं मा विधत्स्वेति भावार्थः। कथं तच्छरीरकं धूयते, ममत्वं वा तदुपरि न कृतं भवतीत्याह–'प्रान्तं' स्वाभाविकरसरहितं स्वल्पं वा 'रूक्षम्' आगन्तुकस्नेहादिरहितं द्रव्यतो भावतोऽपि प्रान्तं–द्वेषरहितं विगतधूमं

५

१०

प्र. आ.
१४३

१ शब्देषु च भद्रकपापकेषु श्रोत्रविषयमुपगतेषु। तुष्टेन वा रुष्टेन वा श्रमणेन सदा न भवितव्यम् ॥१॥ एवं रूपेषु च भद्रकपापकेषु। तथा गन्धेषु च.

र्थं-गगरहितमपगताङ्गार 'सेवन्ते' भुञ्जते, के ?-'वीरा.' साधवः, किंभूताः ?-'समत्वदर्शिनः' रागद्वेषरहिताः, सम्यक्त्वदर्शिनो वा-सम्यक् तत्त्वं सम्यक्त्वं तद्दर्शिनः परमार्थदृशः, तथाहि-इदं शरीरकं कृतघ्नं निरुपकारि, एतत्कृते प्राणिनः ऐहिकामुष्मिकक्लेशभाजो भवंति, अनेकादेशे चैकादेश इतिकृत्वा, प्रान्तरूक्षसेवी समत्वदर्शी च कं गुणमवाप्नोतीत्याह-'एस' इत्यादि, एष इति प्रान्तरूक्षाहारसेवनेन कर्म्मादिशरीरं धुनानो भवतो भवौघं तरतीति। कोऽसौ ?-'मुनिः' यतिः, अथवा क्रियमाणं कृतमितिकृत्वा तीर्ण एव भवौघं, कथ भवौघं तरति ?-यो 'मुक्तः' सबाह्याभ्यन्तरपरिग्रहरहित', कथं परिग्रहान्मुक्तो भवति ?-यो भावतः शब्दादिविषयाभिष्वङ्गाद्विरतः, ततश्च यो मुक्तत्वेन विरतत्वेन वा विख्यातो मुनिः स एव भवौघं तरति, तीर्ण एवेति वा स्थितम्। इतिरधिकारपरिसमाप्तौ, ब्रवीमीति पूर्ववत्। यश्च मुक्तत्वविरतत्वाभ्यां न विख्यातः स किंभूतो भवतीत्याह—

## दुव्वसुमुणी अणाणाए, तुच्छए गिलाइ वत्तए, एस वीरे पसंसिए, अच्चेइ लोयसंजोगं, एस नाए पवुच्चइ (सू. १०१)

वसु—द्रव्यम्, एतच्च भव्येऽर्थे व्युत्पादितं 'द्रव्यं च भव्य' इत्यनेन, भव्यश्च—मुक्तिगमनयोग्यः, ततश्च मुक्तिगमनयोग्यं यद्द्रव्यं तद्वसु, दुष्टं वसु दुर्वसु दुर्वसु चासौ मुनिश्च दुर्वसुमुनिः-मोक्षगमनायोग्यः, स च कुतो भवति ?-अनाज्ञया-तीर्थकरोपदेशशून्यः, स्वैरीत्यर्थः, किमत्र तीर्थकरोपदेशे दुष्करं येन स्वैरित्वमभ्युपगम्यते ?, तदुच्यते-उद्देशकादेरारभ्य सर्वं यथासम्भवमायोज्यं, तथाहि—मिथ्यात्वमोहिते लोके संचोदुं दुष्करं व्रतेष्वात्मानमध्यारोपयितुं त्वरतो निग्रहीतुं शब्दादिविषयेष्विष्टानिष्टेषु मध्यस्थतां भावयितुं प्रान्तरूक्षाणि भोक्तुम्, एवं यथोद्दिष्टया मौनीन्द्राज्ञया असिधाराकल्पया दुष्करं सञ्चरितुं,तथाऽनुकूलप्रतिकूलांश्च नानाप्रकारानुपस-

सम्यक्त्व-
१५
दर्शिता

२०

र्गान् मोढुम्, असहने च कर्म्मोदयोऽनायतीतकालसुखभावना च कारणं, जीवो हि स्वभावतो दुःखभीरुरनिरोधसुखप्रियः, अतो निरोधरूपायामाज्ञायां दुःखं वसति, अधिरसंश्च किंभूतो भवतीत्याह–'तुच्छ' इत्यादि, तुच्छो–रिक्तः, स च द्रव्यतो निर्द्धनो घटादिर्वा जलादिरहितो भावतो ज्ञानादिरहितः, ज्ञानादिरहितो हि क्वचित्संशीतिविषये केनचित्पृष्टोऽपरिज्ञानात् ग्लायति वक्तुं, ज्ञानसमन्वितो वा चारित्ररिक्तः पूजासत्कारभयान् शुद्धमार्गप्ररूपणावसरे ग्लायति यथावस्थितं प्रज्ञापयितुं, तथाहि–प्रवृत्तसन्निधिः,सन्निधेर्निर्दोषतामाचष्टे, एवमन्यत्रापीति। यस्तु कषायमहाविषागदकल्पभगवदाज्ञोपजीवकः स सुवसुर्मुनिर्मवत्यरिक्तो न ग्लायति च वक्तुं, यथावस्थितवस्तुपरिज्ञानादनुष्ठानाच्च, आह च–'एस' इत्यादि, 'एष' इति सुवसुमुनिर्ज्ञानाद्यरिक्तो यथावस्थितमार्गप्ररूपको वीरः कर्म्मविदारणात् 'प्रशंसितः' तद्विद्भिः श्लाघित इति। किं च–'अचेई'त्यादि, स एवं भगवदाज्ञानुवर्तको वीरोऽत्येति–अतिक्रामति, कं?– 'लोकसंयोगं' लोकेनासंयतलोकेन संयोगः–सम्बन्धः ममत्वकृतस्तमत्येति, अथवा लोको बाह्योऽभ्यन्तरश्च, तत्र बाह्यो धनहिरण्यमातृपित्रादिः आन्तरस्तु रागद्वेषादिः तत्कार्यं वा अष्टप्रकारं कर्म्म तेन सार्द्धं संयोगमत्येति–अतिलङ्घयतीत्युक्तं भवति। यदि नामैवं ततः किमित्याह–'एस' इत्यादि, योऽयं लोकसंयोगातिक्रमः 'एष न्यायः' एष सन्मार्गः मुमुक्षूणामयमाचारः 'प्रोच्यते' अभिधीयते, अथवा परम् आत्मानं च मोक्षं नयतीति छान्दसत्वात्कर्त्तरि घञ् नायः, यो हि त्यक्तलोकसंयोग एष एव परात्मनोर्मोक्षस्य न्यायः प्रोच्यते–मोक्षप्रापकोऽभिधीयते मदुपदेशात्। स्यादेतत्–किंभूतोऽसावुपदेश इत्यत आह—

५

प्र. आ.
१४४

१०

जं दुक्खं पवेइयं इह माणवाणं तस्स दुक्खस्स कुसला परिन्नमुदाहरंति, इइ कम्मं परिन्नाय

**सव्वसो जे अणन्नदंसी से अणण्णारामे जे अणण्णारामे से अणन्नदंसी, जहा पुण्णस्स कत्थइ तहा तुच्छस्स कत्थइ, जहा तुच्छस्स कत्थइ तहा पुण्णस्स कत्थइ (सू. १०२)**

यद्दुःखं दुःखकारणं वा कर्म्म लोकसंयोगात्मकं वा 'प्रवेदितं' तीर्थकृद्भिरावेदितं 'इह' अस्मिन् संसारे 'मानवानां' जन्तूनां, ततः किं?–तस्य 'दुःखस्य' असातलक्षणस्य कर्मणो वा 'कुशला' निपुणा धर्म्मकथालब्धिसम्पन्नाः स्वसमयपरसमयविद उद्युक्तविहारिणो यथावादिनस्तथाकारिणो जितनिद्रा जितेन्द्रिया देशकालादिक्रमज्ञास्ते एवंभूताः परिज्ञाम्–उपादानकारणपरिज्ञानं निरोधकारणपरिच्छेदं चोदाहरन्ति ज्ञपरिज्ञया, प्रत्याख्यानपरिज्ञया च परिहरन्ति परिहारयन्ति च। किं च–'इति कम्मं' इत्यादि, इतिः पूर्वप्रक्रान्तपरामर्शको यत्तद् दुःखं प्रवेदितं मनुजानां यस्य च दुःखस्य परिज्ञां कुशला उदाहरन्ति तद्दुःखं कर्म्मकृतं तत्कर्म्माष्टप्रकारं परिज्ञाय तदाश्रवद्वाराणि च, तद्यथा–ज्ञानप्रत्यनीकतया ज्ञानावरणीयमित्यादि, प्रत्याख्यानपरिज्ञया प्रत्याख्याय तदाश्रवद्वारेषु 'सर्वशः' सर्वैः प्रकारैर्योगत्रिककरणत्रिकरूपैर्न वर्त्तेत, अथवा सर्वशः परिज्ञाय कथयति, सर्वशः परिज्ञानं च केवलिनो गणधरस्य चतुर्दशपूर्वविदो वा, यदिवा सर्वशः कथयति आक्षेपण्याद्या चतुर्विधया धर्मकथयेति। सा च कीदृक्कथेत्याह–'जे' इत्यादि, अन्यद्द्रष्टुं शीलमस्येत्यन्यदर्शी यस्तथा नासावनन्यदर्शी–यथावस्थितपदार्थद्रष्टा, कश्चैवंभूतो?–यः सम्यग्दृष्टिर्मौनीन्द्रप्रवचनाविर्भूततत्त्वार्थो, यश्चा-



१ कथाचतुष्टयलक्षण विदं–स्थाप्यते हेतुदृष्टान्तै, स्वमत यत्र पण्डितै। स्याद्वादध्वनिसयुक्त, सा कथाऽऽक्षेपणी मता ॥१॥ मिथ्यादृशा मत यत्र, पूर्वापरविरोधकृत। तन्निराक्रियते सद्भिः, सा च विक्षेपणी मता॥२॥ यस्या. श्रवणमात्रेण, भवेन्मोक्षाभिलाषिता। भव्याना सा च विद्वद्भि, प्रोक्ता सवेदनी कथा॥३॥ यत्र सगारभोगाद्ध्रुवस्थितिलक्षणवर्णनम्। वैराग्यकारण भव्यैः, सोक्ता निर्वेदनीकथा॥४॥

नन्यदृष्टिः सोऽनन्यारामो–मोक्षमार्गादन्यत्र न रमते । हेतुहेतुमद्भावेन सूत्रं लगयितुमाह—'जे' इत्यादि, यश्च भगवदुपदेशादन्यत्र न रमते सोऽनन्यदर्शी, यश्चैवम्भूतः सोऽन्यत्र न रमत इति, उक्तं च—"शिवमस्तु कुशास्त्राणां वैशेषिकषष्टितन्त्रबौद्धानाम् । येषां दुर्विहितत्वाद्भगवत्यनुरज्यते चेतः ॥१॥" इत्यादि । तदेव सम्यक्त्वस्वरूपमाख्यातं, कथयंश्चारक्तद्विष्टः कथयतीति दर्शयति–'जहा पुण्णस्स' इत्यादि, तीर्थकरगणधराचार्यादिना येन प्रकारेण 'पुण्यवतः' सुरेश्वरचक्रवर्त्तिमाण्डलिकादेः 'कथ्यते' उपदेशो दीयते 'तथा' तेनैव प्रकारेण 'तुच्छस्य' द्रमकस्य काष्ठहारकादेः कथ्यते, अथवा पूर्णो–जातिकुलरूपाद्युपेतस्तद्विपरीतस्तुच्छो, विज्ञानवान् वा पूर्णस्ततोऽन्यस्तुच्छ इति, उक्तं च–"ज्ञानैश्वर्यधनोपेतो, जात्यन्वयबलान्वितः । तेजस्वी मतिमान् ख्यातः, पूर्णस्तुच्छो विपर्ययात् ॥१॥" एतदुक्तं भवति–यथा द्रमकादेस्तदनुग्रहबुद्ध्या प्रत्युपकारनिरपेक्षः कथयति एव चक्रवर्त्यादेरपि, यथा वा चक्रवर्त्यादेः कथयत्यादरेण समारोपणहेतुमेवमितरस्यापि, अत्र च निरीहता विवक्षिता, न पुनरयं नियमः–एकरूपतयैव कथनीयं, तथा हि—यो यथा बुध्यते तस्य तथा कथ्यते, बुद्धिमतो निपुणं स्थूलबुद्धेस्त्वन्यथेति, राज्ञश्च कथयता तदभिप्रायमनुवर्त्तमानेन कथनीयं, किम सावभिगृहीतमिथ्यादृष्टिरनभिगृहीतो वा सशीत्यापन्नो वा ?, अभिगृहीतोऽपि कुतीर्थिकैर्व्युद्ग्राहितः स्वत एव वा ?, तस्य चैवम्भूतस्य यद्येवं कथयेद् यथा–"दशसूनासमश्चक्री, दशचक्रिसमो ध्वजः । दशध्वजसमा वेश्या, दशवेश्यासमो नृपः ॥१॥" तद्भक्तिविषयरुद्रादिदेवताभवनचरितकथने च मोहोदयात्तथाविधकर्मोदये कदाचिदसौ प्रद्वेषमुपगच्छेद्, द्विष्टश्चैतद्विदध्यादिति, आह च—



५

१०

अवि य हणे अणाढायमाणे, इत्थंपि जाण सेयंति नत्थि, केयं पुरिसे कं च नए ?, एसवीरे पसंसिए, जे बद्धे परिमोयए, उड्ढं अहं तिरियं दिसासु, से सव्वओ सव्वपरिन्नाचारी, न

लिप्पई छणपएण वीरे, से मेहावी अणुग्घायणखेयन्ने, जे य बन्धपमुक्खमन्नेसी कुसले पुण नो बद्धे नो मुक्के (सू. १०३)

अपिः सम्भावने, आस्तां तावद्वाचा तर्जनम्, अनाद्रियमाणो हन्यादपि, चशब्दादन्यदप्येवंजातीयक्रोधाभिभूतो दण्डकशादिना ताडयेदिति, उक्तं च—"तत्थेन य निट्ठवणं बंधण निच्छुभण कडगमद्दो वा। निव्विसयं व नरिंदो करेज्ज संघंपि सो कुद्धो ॥१॥" तथा तच्चनिकोपासको नन्दबलात् युद्धोत्पत्तिकथानकाद् भागवतो वा भल्लिगृहोपाख्यानाद् रौद्रो वा पेढालपुत्रसत्यकमुमाव्यतिकराकर्णनात् प्रद्वेषमुपगच्छेत्, द्रमकक्काणकुण्टादिर्वा कश्चित्तमेवोद्दिश्योद्दिश्याधर्म्मफलोपदर्शनेनेति। एवमविधिकथनेनेहैव तावद्बाधा, आमुष्मिकोऽपि न कश्चिद्गुणोऽस्तीति, आह च—'एत्थंपि' इत्यादि, मुमुक्षोः परहितार्थं धर्मकथां कथयतस्तावत्पुण्यमस्ति, परिषदं त्वविदित्वाऽनन्तरोपवर्णितस्वरूपकथने 'अत्रापि' धर्म्मकथायामपि 'श्रेयः' पुण्यमित्येतन्नास्तीत्येवं जानीहि, यदिवाऽसौ राजादिरनाद्रियमाणस्तं साधुं धर्म्मकथिकमपि हन्यात्। कथमित्याह—'एत्थंपी'त्यादि, यद्यदसौ पशुवधतर्प्पणादिकं धर्म्मकारणमुपन्यस्यति तत्तदसौ धर्म्मकथिकोऽत्रापि श्रेयो न विद्यते इत्येवं प्रतिहन्ति, यदिवा यद्यदविधिकथनं तत्र तत्रेदमुपतिष्ठते—अत्रापि श्रेयो नास्तीति, तथाहि—अक्षरकोविदपरिषदि पक्षहेतुदृष्टान्तानभिधानात्प्राकृतभाषया कथनमविविरितरस्यां चान्यथेति। एवं च प्रवचनस्य हीलनैव केवलं कर्म्मबन्धश्च, न पुनः श्रेयो, विधिमजानानस्य मौनमेव श्रेय इति, उक्तं च—"सावज्जणवज्जाणं वयणाणं जो न याणइ विसेसं। वुत्तुंपि

---

१ मन्त्र निर्यापन बन्धन निष्काशन कटकमर्द वा। निर्विषयं वा नरेन्द्रः कुर्यात्सङ्घमपि स कुद्ध ॥१॥ २ सावद्यानवद्ययोर्वचनयोर्यो न जानाति विशेषम्। 'वक्तुमपि तस्य न क्षमं किमङ्ग पुनर्देशना कर्तुम्? ॥१॥

तस्स न समं किमंग पुण देसणं काउं ? ॥१॥" स्यादेतत्—कथं तर्हि धर्मकथा कार्येत्युच्यते—'कोऽयं' इत्यादि, यो हि वश्येन्द्रियो विषयविषपराङ्मुखः संसारोद्विग्नमना वैराग्याकृष्यमाणहृदयो धर्मं पृच्छति तेनाचार्यादिना धर्मकथिकेनासौ पर्यालोचनीयः—कोऽयं पुरुषो ?, मिथ्यादृष्टिरुत भद्रकः, केन वाऽऽशयेनायं पृच्छति, कं च देवताविशेषं नतः, किमनेन दर्शनमाश्रितमित्येवमालोच्य यथायोग्यमुत्तरकालं कथनीयं, एतदुक्तं भवति—धर्मकथाविधिज्ञो ह्यात्मना परिपूर्णः श्रोतारमालोचयति द्रव्यतः, क्षेत्रतः किमिदं क्षेत्रं तच्चनिकैर्भागवतैरन्यैर्वा तज्जातीयैः पार्श्वस्थादिभिर्वोत्सर्गरुचिभिर्वा भावितं, कालतो दुष्षमादिकं कालं दुर्लभद्रव्यकालं वा, भावतोऽरक्तद्विष्टमध्यस्थभावापन्नम्, एवं पर्यालोच्य यथा यथाऽसौ बुध्यते तथा तथा धर्मकथा कार्या, एवमसौ धर्मकथायोग्यः, अपरस्य त्वधिकार एव नास्तीति, उक्तं च—"जो हेउवायपक्खंमि हेउओ आगमम्मि आगमिओ। सो ससमयपण्णवओ सिद्धंतविराहओ अण्णो ॥१॥" य एवं धर्मकथाविधिज्ञः स एव प्रशस्त इति, आह च—'एस' इत्यादि, यो हि पुण्यापुण्यवतोर्धर्मकथासमदृष्टिर्विधिज्ञः श्रोतृविवेचकः 'एषः' अनन्तरोक्तो 'वीरः' कर्मविदारकः 'प्रशंसितः' श्लाघितः। किंभूतश्च यो भवतीत्याह—'जे बद्धे' इत्यादि, यो ह्यष्टप्रकारेण कर्मणा स्नेहनिगडादिना वा बद्धानां जन्तूनां प्रतिमोचकः, धर्मकथोपदेशनादिना, स च तीर्थकृद्गणधर आचार्यादिर्वा यथोक्तधर्मकथाविधिज्ञ इति। क्व पुनर्व्यवस्थितान् जन्तून् मोचयतीत्याह—'उड्ढं' इत्यादि, ऊर्ध्वं ज्योतिष्कादीन् अधो भवनपत्यादीन् तिर्यक्षु मनुष्यादीनिति। किं च—'से सव्वओ' इत्यादि, 'स' इति वीरो बद्धप्रतिमोचकः 'सर्वतः' सर्वकालं सर्वपरिज्ञया द्विविधयाऽपि चरितुं शीलमस्येति सर्वपरिज्ञाचारी—विशिष्टज्ञानान्वितः सर्वसंवरचारित्रोपेतो वा, स एवंभूतः कं गुण-

१०

---

१ यो हेतुवादपक्षे हेतुक आगमे आगमिकः। स स्वसमयप्रज्ञापकः सिद्धान्तविराधकोऽन्यः ॥१॥

मराप्नोतीत्याह-'न लिप्पई'त्यादि, 'न लिप्यते' नावगुण्ठ्यते, केन ?-'क्षणपदेन' हिंसास्पदेन प्राण्युपमर्दजनितेन, 'क्षणु हिंसाया'मित्यस्यैतद्रूपं, कोऽसौ ?, वीर इति। किमेतावदेव वीरलक्षणमुतान्यदप्य(स्ति ?, अ)स्तीत्याह—'से मेहावी'त्यादि, स 'मेधावी' बुद्धिमान् यः 'अणोद्घातनस्य खेदज्ञः' अणत्यनेन जन्तुगणश्चतुर्गतिकं संसारमित्यणं—कर्म्म तस्योत्—प्राबल्येन घातनम्—अपनयनं तस्य तत्र वा खेदज्ञो-निपुणः, इह हि कर्म्मक्षपणोद्यतानां मुमुक्षूणां यः कर्म्मक्षपणविधिज्ञः स मेधावी कुशलो वीर इत्युक्तं भवति, किं चान्यत्—'जे य'इत्यादि, यश्च प्रकृतिस्थित्यनुभावप्रदेशरूपस्य चतुर्विधस्यापि बन्धस्य यः प्रमोक्षः तदुपायो वा तमन्वेष्टुं-मृगयितुं शीलमस्येत्यन्वेषी, यश्चैवम्भूतः स वीरो मेधावी खेदज्ञ इति पूर्वेण सम्बन्धः, अणोद्घातनस्य खेदज्ञ इत्यनेन मूलोत्तरप्रकृतिभेदभिन्नस्य योगनिमित्तायातस्य कषायस्थितिकस्य कर्म्मणो बध्यमानावस्थां बद्धस्पृष्टनिधत्तनिकाचितरूपां तदपनयनोपायं च वेत्तीत्येतदभिहितं, अनेन चापनयनानुष्ठानमिति न पुनरुक्तदोषानुषङ्गः प्रसजति। स्यादेतत्—योऽयमणोद्घातनस्य खेदज्ञो बन्धमोक्षान्वेषको वाऽभिहितः स किं छद्मस्थ आहोस्वित् केवली ?, केवलिनो यथोक्तविशेषणासम्भवात् छद्मस्थग्रहणं, केवलिनस्तर्हि का वार्त्तेति ?, उच्यते—'कुसले' इत्यादि, कुशलोऽत्र क्षीणघातिकर्म्मांशो विवक्षितः, स च तीर्थकृत् सामान्यकेवली वा, छद्मस्थो हि कर्म्मणा बद्धो मोक्षार्थी तदुपायान्वेषकः, केवली तु पुनर्घातिकर्म्मक्षयात् नो बद्धो भवोपग्राहिकर्म्मसद्भावात् नो मुक्तो, यदिवा छद्मस्थ एवाभिधीयते—'कुशलः' अवाप्तज्ञानदर्शनचारित्रो मिथ्यात्वद्वादशकषायोपशमक्षयोपशमसद्भावात् तदुदयवानिव न बद्धः अद्यापि तत्सत्कर्म्मतासद्भावात् नो मुक्त इति। एवम्भूतश्च कुशलः केवली छद्मस्थो वा यदाचीर्णवानाचरति चा तदपरेणापि मुमुक्षुणा विधेयमिति दर्शयति—

२०

**से जं च आरभे जं च नारभे, अणारद्धं च न आरभे, छणं छणं परिण्णाय लोगसन्नं च**



र. आ.
१४७

सव्वसो (सू. १०४)

'स' कुशलो यदारभते आरब्धवान् वा अशेषकर्मक्षपणोपायं संयमानुष्ठानं यच्च नारभते मिथ्यात्वाविरत्यादिकं संसारकारणं तदारब्धव्यमारम्भणीयमनारब्धमनारम्भणीयं चेति, संसारकारणस्य च मिथ्यात्वाविरत्यादेः प्राणातिपाताद्यष्टादशरूपस्य चैकान्तेन निराकार्यत्वात्, तन्निषेधे च विधेयस्य संयमानुष्ठानस्य सामर्थ्यायातत्वात्तन्निषेधमाह–'अणारद्धं च' इत्यादि, अनारब्धम्–अनाचीर्णं केवलिभिर्विशिष्टमुनिभिर्वा तन्मुमुक्षुर्नारभते–न कुर्यादित्युपदेशो, यच्च मोक्षाङ्गमाचीर्णं तत्कुर्यादित्युक्तं भवति। यत्तद्भगवदनाचीर्णं परिहार्यं तन्नामग्राहमाह–'छणं छणं' इत्यादि,'क्षणु हिंसायां' क्षणनं क्षणो–हिंसनं कारणे कार्योपचारात् येन येन प्रकारेण हिंसोत्पद्यते तत्तत् ज्ञपरिज्ञया परिज्ञाय प्रत्याख्यानपरिज्ञया परिहरेद्, यदिवा क्षणः–अवसरः–कर्त्तव्यकालस्तं तं ज्ञपरिज्ञया ज्ञात्वाऽऽसेवनापरिज्ञया च आचरेदिति। किं च–'लोयसन्नं' इत्यादि,'लोकस्य' गृहस्थलोकस्य संज्ञानं संज्ञा–विषयाभिष्वङ्गजनितसुखेच्छा परिग्रहसंज्ञा वा तां च ज्ञपरिज्ञया ज्ञात्वा प्रत्याख्यानपरिज्ञया च परिहरेत्, कथं?–'सर्वशः' सर्वैः प्रकारैः योगत्रिककरणत्रिकेणेत्यर्थः, तस्यैवंविधस्य यथोक्तगुणावस्थितस्य धर्म्मकथाविधिज्ञस्य बद्धप्रतिमोचकस्य कर्म्मोद्घातनखेदज्ञस्य बन्धमोक्षान्वेषिणः सत्पथव्यवस्थितस्य कुमार्गनिराचिकीर्षोर्हिंसाद्यष्टादशपापस्थानविरतस्यावगतलोकसंज्ञस्य यद्भवति तद्दर्शयति–

उद्देसो पासगस्स नत्थि, बाले पुण निहे कामसमणुन्ने असमियदुक्खे दुक्खी दुक्खाणमेव आवट्टं अणुपरियट्टइ (सू. १०५) त्तिबेमि॥ षष्ठ उद्देशकः, समाप्तं च लोकविजयाध्ययनम् २॥

देशकेन केवल्यनुक्तिः

५

१०

उद्दिश्यते नारकादिव्यपदेशेनेत्युद्देशः स 'पश्यकस्य' परमार्थदृशो न विद्यते इत्यादीनि च सूत्राण्युद्देशकपरिसमाप्तिं यावत्तृतीयोद्देशके व्याख्यातानि, तत एवार्थोऽवगन्तव्यः, आक्षेपपरिहारौ चेति। तानि चामूनि—बालः पुनर्निहः कामसमनुज्ञः अशमितदुःखः दुःखी दुःखानामेवावर्त्तमनुपरिवर्त्तते। इतिः परिसमाप्तौ, ब्रवीमीति पूर्ववत्॥ (ग्रन्थाग्रम् २५००) ॥उक्तः षष्ठोद्देशकः॥ तत्परिसमाप्तौ चोक्तः सूत्रानुगमः सूत्रालापकनिष्पन्ननिक्षेपश्च ससूत्रस्पर्शनिर्युक्तिकः। साम्प्रतं नैगमादयो नयाः, ते चान्यत्र न्यक्षेण प्रतिपादिता इति नेह प्रतन्यन्ते, संक्षेपतस्तु ज्ञानक्रियानयद्वयान्तर्गतत्वात्तेषां तावेव प्रतिपाद्येते, तयोरप्यात्मीयपक्षसावधारणतया मोक्षाङ्गत्वाभावात् प्रत्येकं मिथ्यादृष्टित्वम्, अतः पङ्ग्वन्धवत् परस्परसापेक्षतयेष्टकार्यावाप्तिरवगन्तव्येति उपरम्यते॥ इति लोकविजयाध्ययनस्य टीका समाप्ता॥२॥



इति श्रीआचाराङ्गे श्रीशीलाङ्काचार्यवृत्तियुतं लोकविजयाध्ययनं द्वितीयम्

# अथ तृतीयमध्ययनं शीतोष्णीयं ।

उक्तं द्वितीयमध्ययनं, साम्प्रतं तृतीयमारभ्यते, अस्य चायमभिसम्बन्धः, तत्र शस्त्रपरिज्ञायामस्यार्थाधिकारोऽभाणि, यथा शीतोष्णयोरनुकूलप्रतिकूलपरिषहयोरतिसहनं कर्त्तव्यं, तदधुना प्रतिपाद्यते, अध्ययनसम्बन्धस्तु शस्त्रपरिज्ञोक्तमहाव्रतसम्पन्नस्य लोकविजयाध्ययनप्रसिद्धसंयमव्यवस्थितस्य विजितकषायादिलोकस्य मुमुक्षोः कदाचिदनुलोमप्रतिलोमाः परीषहाः प्रादुष्ष्यन्ति, तेऽविकृतान्तःकरणेन सम्यक् सोढव्या इत्यनेन सम्बन्धेनायातमिदमध्ययनम्, अस्य चोपक्रमादीनि चत्वार्यनुयोगद्वाराणि भवन्ति, तत्रोपक्रमेऽर्थाधिकारो द्वेधा, तत्राप्यध्ययनार्थाधिकारोऽभिहितः, उद्देशार्थाधिकारप्रतिपादनार्थं तु निर्युक्तिकार आह—

**पढमे सुत्ता अस्संजयत्ति १ बिइए दुहं अणुहवंति २। तइए न हु दुक्खेणं अकरणयाए व समणुत्ति ३ ॥१९७॥
उद्देसंमि चउत्थे अहिगारो उ वमणं कसायाणं। पावविरईओ विउणो उ संजमो इत्थ मुक्खुत्ति ४ ॥ १९८ ॥**

प्रथमोद्देशकेऽयमर्थाधिकारो, यथा-भावनिद्रया सुप्ताः-सम्यग्विवेकरहिताः, के?-असंयताः-गृहस्थाः, तेषां च भावसुप्तानां दोषा अभिधीयन्ते, जाग्रतां च गुणाः, तद्यथा—'जरामच्चुवसोवणीए नरे' इत्यादि १, द्वितीये तु त एवासंयता यथा भावनिद्रापन्ना दुःखमनुभवन्ति तथोच्यते, तद्यथा—'कामेसु गिद्धा निचयं करेंति' २, तृतीये तु 'न हु' नैव दुःखमहनादेव केवलाच्छ्रमणः अकरणतयैव—अक्रिययैव, संयमानुष्ठानमन्तरेणेत्यर्थः, वक्ष्यति च—'सहिए दुक्खमायाय तेणेव य पुट्ठो नो झंझाए' ३, चतुर्थोद्देशके त्वयमधिकारो, यथा-कषायाणां वमनं कार्यं, पापस्य च कर्मणो विरतिः, 'विदुषो' विदितवेद्यस्य संयमोऽत्रैव प्रतिपाद्यते, क्षपकश्रेणिप्रक्रमात् केवलं

उद्देशार्थाधिकारः

५

१०

भवोपग्राहिक्षयान्मोक्षश्चेति गाथाद्वयार्थः ॥ नामनिष्पन्ने तु निक्षेपे शीतोष्णीयमध्ययनमतः शीतोष्णयोर्निक्षेपं निर्दिदिक्षुराह—

**नामंठवणा सीयं दव्वे भावे य होइ नायव्वं। एमेव य उण्हस्सवि चउव्विहो होइ निक्खेवो ॥१९९॥**

सुगमा। तत्र नामस्थापने अनादृत्य द्रव्यशीतोष्णे दर्शयितुमाह—

**दव्वे सीयलदव्वं दव्वुण्हं चेव उण्हदव्वं तु। भावे उ पुग्गलगुणो जीवस्स गुणो अणेगविहो ॥२००॥**

ज्ञशरीरभव्यशरीरव्यतिरिक्तं द्रव्यशीतं शीतगुणोपेतं गुणगुणिनोरभेदात् शीतकारणं वा यद् द्रव्यं द्रव्यप्राधान्यात्, शीतलद्रव्यमेव द्रव्यशीतं–हिमतुषारकरकहारादि, एवं द्रव्योष्णमपीति। भावतस्तु द्वेधा पुद्गलाश्रितं जीवाश्रितं च गाथाशकलेनाचष्टे, तत्र पुद्गलाश्रितं भावशीतं, पुद्गलस्य शीतो गुणो, गुणस्य च प्राधान्यविवक्षयेति, एवं भावोष्णमपि, जीवस्य तु शीतोष्णरूपोऽनेकविधो गुणः, तद्यथा–औदयिकादयः षड् भावाः, तत्रौदयिकः कर्म्मोदयाविर्भूतनारकादिभवकषायोत्पत्तिलक्षणः उष्णः, औपशमिकः कर्म्मोपशमावाप्तसम्यक्त्वविरतिरूपः शीतः, क्षायिकोऽपि शीत एव, क्षायिकसम्यक्त्वचारित्रादिरूपत्वाद्, अथवाऽशेषकर्म्मदाहान्यथानुपपत्तेरुष्णः, शेषा अपि विवक्षातो द्विरूपा अपीति ॥ अस्य च जीवभावगुणस्य शीतोष्णविवेकं स्वत एव निर्युक्तिकारः प्रचिकटयिषुराह—

प्र. आ. १४९

**सीयं परीसह पमायुवसमविरई सुहं च उण्हं तु। परीसहतवुज्जमकसाय सोगवेयारई दुक्खं ॥२०१॥ दारं।**

'शीत'मिति भावशीतं, तच्चेह जीवपरिणामस्वरूपं गृह्यते, स चायं परिणामो, मार्गाच्यवननिर्जरार्थं परिषोढव्याः परीषहाः, 'प्रमादः' कार्यशैथिल्यं शीतलविहारता, 'उपशमो' मोहनीयोपशमः, स च सम्यक्त्वदेशविरतिसर्वविरतिलक्षणः, उपशमश्रेण्याश्रितो वा, तत्क्षयो चेति, 'विरति'रिति प्राणातिपातादिविरत्युपलक्षितः सप्तदशविधः संयमः 'सुखं च' सातावेदनीयविपाकाविर्भूतमिति।



२० ॥१३५॥ २८

एतत् सर्वं परीषहादि शीतम्, उष्णं च गाथाशकलेनाह—परीषहाः—पूर्वव्यावर्णितस्वरूपाः तपस्युद्यमो—यथाशक्ति द्वादशप्रकारतपोऽनुष्ठानं 'कषायाः' क्रोधादयः 'शोक' इष्टाप्राप्तिविनाशोद्भवः आधिः 'वेदः' स्त्रीपुंनपुंसकवेदोदयः 'अरतिः' मोहनीयविपाकाच्चित्तदौःस्थ्यं 'दुःखं च' असातावेदनीयोदयादीति, एतानि परीषहादीनि पीडाकारित्वादुष्णमिति गाथासमासार्थः। व्यासार्थं तु निर्युक्तिकारः स्वत एवाचष्टे, तत्र परीषहाः शीतोष्णयोर्द्वयोरप्यभिहिताः, ततो मन्दबुद्धेरनध्यवसायः संशयो विपर्ययो वा स्याद् अतस्तदपनोदार्थमाह—

**इत्थी सक्कारपरीसहो य दो भावसीयला एए। सेसा वीसं उण्हा परीसहा हुंति नायव्वा ॥२०२॥**

स्त्रीपरीषहः सत्कारपरीषहश्च द्वावप्येतौ शीतौ, भावमनोऽनुकूलत्वात्, शेषास्तु पुनर्विंशतिरुष्णा ज्ञातव्या भवन्ति, मनसः प्रतिकूलत्वादिति गाथार्थः ॥ यदिवा परीषहाणां शीतोष्णत्वमन्यथा आचष्टे—

**जे तिव्वप्परिणामा परीसहा ते भवंति उण्हा उ। जे मंदप्परिणामा परीसहा ते भवे सीया ॥२०३॥**

तीव्रो—दुःसहः परिणामः—परिणतिर्येषां ते तथा, य एवम्भूताः परीषहास्ते उष्णाः, ये तु मन्दपरिणामास्ते शीता इति, इदमुक्तं भवति—ये शारीरदुःखोत्पादकत्वेनोदीर्णाः सम्यक्सहनाभावाच्चाधिविधायिनस्ते तीव्रपरिणामत्वादुष्णाः, ये पुनरुदीर्णाः शारीरमेव केवलं दुःखमुत्पादयन्ति महासत्त्वस्य, न मानसं, ते भावतो मन्दपरिणामाः, यदिवा ये तीव्रपरिणामाः—प्रबलाविर्भूतस्वरूपास्ते उष्णाः, ये तु मन्दपरिणामाः—ईषल्लक्ष्यमाणस्वरूपास्ते शीता इति ॥ यत्परीषहानन्तरं प्रमादपदमुपन्यस्तं शीतत्वेन यच्च तपस्युद्यम इत्युष्णत्वेन तदुभयं गाथयाऽऽचष्टे—

**धम्मंमि जो पमायइ अत्थे वा सीअलुत्ति तं विंति। उज्जुत्तं पुण अन्नं तत्तो उण्हंति णं विंति ॥२०४॥ दारं।**



५

१०

'धर्म्मे' श्रमणधर्म्मे यः 'प्रमाद्यति'नोद्यमं विधत्ते 'अर्थे वा' अर्थ्यत इत्यर्थो-धनधान्यहिरण्यादिस्तत्र तदुपाये वा शीतल इत्येवं तं 'ब्रुवते' आचक्षते, उद्युक्तं पुनरन्यं ततः-संयमोद्यमात् कारणादुष्णमित्येवं ब्रुवते, णमिति वाक्यालङ्कार इति गाथार्थः ॥ उपशमपदव्याचिख्यासयाऽऽह—

सीईभूओ परिनिव्वुओ य(व)संतो तहेव पण्हाओ(ल्हाओ)। होउवसंतकसाओ तेणुवसंतो भवे जीवो ।२०५। दारं।

उपशमो हि क्रोधाद्युदयाभावे भवति, ततश्च कषायाद्युपशमात् शीतीभूतो भवति, क्रोधादिज्वालानिर्वाणात् परिनिर्वृतो भवति, चः समुच्चये, रागद्वेषपरात्कोपशमादुपशान्तः, तथा क्रोधादिपरितापोपशमात् 'प्रह्लादितः' आपन्नसुखो, यतो ह्युपशान्तकषाय एव एवम्भूतो भवति तेनोपशान्तकषायः शीतो भवतीति, एकार्थिकानि वैतानीति गाथार्थः॥ अधुना विरतिपदव्याख्यामाह—

अभयकरो जीवाणं सीयघरो संजमो भवइ सीओ। अस्संजमो य उण्हो एसो अन्नोऽवि पज्जाओ ॥२०६॥ दारं।

अभयकरणशीलः, केषां ?-जीवानां, शीतं सुखं तद्गृहं-तदावासः, कोऽसौ ?-संयमः सप्तदशभेदः, अतोऽसौ शीतो भवति, समस्तदुःखहेतुद्वन्द्वोपरमात्, एतद्विपर्ययस्त्वसंयम उष्णः, 'एष' शीतोष्णलक्षणः संयमासंयमयोः पर्यायः अन्यो वा सुखदुःखरूपो विवक्षावशाद्भवतीति गाथार्थः ॥ साम्प्रतं सुखपदविवरणायाह—

निव्वाणसुहं सायं सीईभूयं पयं अणाबाहं। इहमवि जं किंचि सुहं तं सीयं दुक्खमवि उण्हं ॥२०७॥

सुखं शीतमित्युक्तं, तच्च समस्तद्वन्द्वोपरमादात्यन्तिकैकान्तिकानाबाधलक्षणं निरुपाधिकं परमार्थचिन्तायां मुक्तिसुखमेव सुखं, नापरम्, एतच्च समस्तकर्म्मोपतापाभावाच्छीतमिति दर्शयति,'निर्वाणसुख'मिति, निर्वाणम्-अशेषकर्म्मक्षयस्तदवाप्तौ वा विशिष्टाका-

शप्रदेशः तेन तत्र वा सुखं निर्वाणसुखम्, अस्य चैकार्थिकानि—सातं शीतीभूतं पदमनाबाधमिति। इहापि संसारे यत्किञ्चित् साता-वेदनीयविपाकोद्भूतं सातं—सुखं तदपि शीतं मनआल्हादाद्, एतद्विपर्ययस्तु दुःखं, तच्चोष्णमिति गाथार्थः॥ कषायादिपदव्या-चिख्यासयाऽऽह—

डज्झइ तिव्वकसाओ सोगऽभिभूओ उइन्नवेओ य। उण्हयरो होइ तवो कसायमाईवि जं डहइ॥२०८॥

'दह्यते' परिपच्यते, कोऽसौ?—'तीव्रा' उत्कटा उदीर्णा विपाकानुभवेन कषाया यस्य स तथा, न केवलं कषायाग्निना दह्यते, 'शोका-भिभूतश्च' इष्टवियोगादिजनितः शोकस्तेनाभिभूतः तिरोहितशुभव्यापारोऽसावपि दह्यते, तथा उदीर्णो—विपाकापन्नो वेदो यस्य स तथा, उदीर्णवेदो हि पुमान् स्त्रियं कामयते, साऽपीतरं, नपुंसकस्तूभयमिति, तत्प्राप्त्यभावे काङ्क्षोद्भूतारतिदाहेन दह्यते, चशब्दा-दिच्छाकामाप्राप्तिजनितारतिबाधकेन दह्यते, तदेवं कषायाः शोको वेदोदयश्च दाहकत्वादुष्णः, सर्वं वा मोहनीयमष्टप्रकारं वा कर्मोष्णं, ततोऽपि तद्दाहकत्वादुष्णतरं तप इति गाथाशकलेन दर्शयति—उष्णतरं तपो भवति, किमिति?, यतः कषायादिकमपि दहति, आदिशब्दाच्छोकादिपरिग्रह इति गाथार्थः। येनाभिप्रायेण द्रव्यभावभेदभिन्ने परीषहप्रमादोद्यमादिरूपे शीतोष्णे जगादाचार्यस्तम-भिप्रायमाविष्करोति—

सीउण्हफाससुहदुहपरीसहकसायवेयसोयसहो। हुज्ज समणो सया उज्जुओ य तवसंजमोवसमे॥२०९॥

शीतं चोष्णं च शीतोष्णे तयोः स्पर्शः तं, सहत इति सम्बन्धः, शीतस्पर्शोष्णस्पर्शजनितवेदनामनुभवन् नार्त्तध्यानोपगतो भवती-तियावत्, शरीरमनसोरनुकूलं सुखमिति, तद्विपरीतं दुःखं, तथा परीषहकषायवेदशोकान् शीतोष्णभूतान् सहत इति। तदेवं शीतो-

कषाया-दीना-मुष्णता

५

१०

ष्यादिसहः सन् भवेत् 'श्रमणः' यतिः सदोद्युक्तश्च, क ?-तपःसंयमोपशमे इति गाथार्थः॥ साम्प्रतमुपसंहारव्याजेन साधुना शीतोष्णातिसहनं कर्तव्यमिति दर्शयति—

सीयाणि य उण्हाणि य भिक्खूणं हुंति विसहियव्वाइं। कामा न सेवियव्वा सीओसणिज्जस्स निज्जुत्ती ॥२१०॥

'शीतानि' परीषहप्रमादोपशमविरतिसुखरूपाणि यान्यभिहितानि 'उष्णानि च' परीषहतपउद्यमकषायशोकवेदारत्यात्मकानि प्रागभिहितानि तानि 'भिक्षूणां' मुमुक्षूणां विषोढव्यानि, न सुखदुःखयोः उत्सेकविषादौ विधेयौ, तानि चैवं सम्यग्दृष्टिना सह्यन्ते यदि कामपरित्यागो भवतीति गाथाशकलेनाह-'कामा' इत्यादि गाथार्द्धं सुगमं॥ गतो नामनिष्पन्नो निक्षेपः, साम्प्रतं सूत्रानुगमेऽस्खलितादिगुणोपेतमशेषदोषव्रातविकलं सूत्रमुच्चारयितव्यं, तच्चेदम्—

## सुत्ता अमुणी, सया मुणिणो जागरंति (सू. १०६)

अस्य चानन्तरसूत्रेण सम्बन्धो वाच्यः, स चायम्-इह दुःखी दुःखानामेवावर्त्तमनुपरिवर्त्तत इत्युक्तं, तदिहापि भावसुप्ता अज्ञानिनो दुःखिनो दुःखानामेवावर्त्तमनुपरिवर्त्तन्ते इति, उक्तं च-"नातः परमहं मन्ये, जगतो दुःखकारणम्। यथाऽज्ञानमहारोगो, दुरन्तः सर्वदेहिनाम् ॥१॥" इत्यादि, इह सुप्ता द्विधा-द्रव्यतो भावतश्च, तत्र निद्राप्रमादवन्तो द्रव्यसुप्ताः, भावसुप्तास्तु मिथ्यात्वाज्ञानमयमहानिद्राव्यामोहिताः, ततो ये 'अमुनयः' मिथ्यादृष्टयः सततं भावसुप्ताः, सद्विज्ञानानुष्ठानरहितत्वात्, निद्रया तु भजनीयाः, मुनयस्तु सद्बोधोपेता मोक्षमार्गादचलन्तस्ते सततम्-अनवरतं 'जाग्रति' हिताहितप्राप्तिपरिहारं कुर्वते, अतो द्रव्यनिद्रोपगता अपि कचिद्द्वितीयपौरुष्यादौ सततं जागरूका एवेति॥ एनमेव भावस्वापं जागरणं च विषयीकृत्य निर्युक्तिकारो गाथां जगाद—



२०



२८

सुत्ता अमुणओ सया मुणओ सुत्तावि जागरा हुंति। धम्मं पडुच्च एवं निद्दासुत्तेण भइयव्वं ॥२११॥

सुप्ता द्विधा-द्रव्यतो भावतश्च, तत्र निद्रया द्रव्यसुप्तान् गाथान्ते वक्ष्यति, भावसुप्तास्त्वमुनयो—गृहस्था मिथ्यात्वाज्ञानावृता हिंसाद्यास्रवद्वारेषु सदा प्रवृत्ताः, मुनयस्त्वपगतमिथ्यात्वादिनिद्रतयाऽवाप्तसम्यक्त्वादिबोधा भावतो जागरूका एव, यद्यपि क्वचिदाचार्यानुज्ञाता द्वितीयपौरुष्यादौ दीर्घसंयमाधारशरीरस्थित्यर्थं निद्रावशोपगता भवन्ति तथापि सदा जागरा एव, एवं च धर्म्मं प्रतीत्योक्ताः सुप्ता जाग्रदवस्थाश्च। द्रव्यनिद्रासुप्तेन तु भाज्यमेतद्-धर्म्मः स्याद्वा न वा, यद्यसौ भावतो जागर्त्ति ततो निद्रासुप्तस्यापि धर्म्मः स्यादेव, यदिवा भावतो जाग्रतो निद्राप्रमादावष्टब्धान्तःकरणस्य न स्यादपि, यस्तु द्रव्यभावसुप्तस्तस्य न स्यादेवेति भजनार्थः। अथ किमिति द्रव्यसुप्तस्य धर्म्मो न भवतीति?, उच्यते, द्रव्यसुप्तो हि निद्रया भवति, सा च दुरन्ता, किमिति?, यतः स्त्यानर्द्धित्रिकोदये सम्यक्त्वावाप्तिर्भवसिद्धिकस्यापि न भवति, तद्बन्धश्च मिथ्यादृष्टिसास्वादनयोरनन्तानुबन्धिबन्धसहचरितः, क्षयस्त्वनिवृत्तिबादरगुणस्थानकालसंख्येयभागेषु कियत्स्वपि गतेषु सत्सु भवति, निद्राप्रचलयोरपि उदयः प्राग्वदेव, बन्धोपरमस्त्वपूर्वकरणकालसंख्येयभागान्ते भवति, क्षयः पुनः क्षीणकषायद्विचरमसमये, उदयस्तूपशमकोपशान्तमोहयोरपि भवतीत्यतो दुरन्तो निद्राप्रमादः। यथा च द्रव्यसुप्तो दुःखमवाप्नोत्येवं भावसुप्तोऽपि (इति) दर्शयितुमाह—

५

जह सुत्त मत्त मुच्छिय असहीणो पावए बहुं दुक्खं। तिव्वं अप्पडियारपि वट्टमाणो तहा लोगो ॥२१२॥

१०

सुप्तो निद्रया मत्तो मदिरादिना मूर्च्छितो गाढमर्म्मप्रहारादिना अस्वाधीनः-परायत्तो वातादिदोषोद्भवग्रहादिना यथा बहु दुःखमप्रतीकारमवाप्नोति तथा भावस्वापे-मिथ्यात्वाविरतिप्रमादकषायादिकेऽपि 'वर्त्तमानः' अवतिष्ठमानो 'लोकः' प्राणिगणो(तीव्रं)नरक-

भयादिकं दुःखमवाप्नोतीति गाथार्थः ॥ पुनरपि व्यतिरेकदृष्टान्तद्वारेणोपदेशदानायाह—

एसेव य उवएसो पदित्त पयलाय पंथमाईसुं। अणुहवइ जह सचेओ सुहाइं समणोऽवि तह चेव ॥२१३॥

'एष एव' पूर्वोक्त उपदेशो यो विवेकाविवेकजनितः, तथाहि—सचेतनो विवेकी प्रदीप्ते सति अपलायमानः सुखमनुभवति, पथि-निपथे च सापायनिरपायविवेकज्ञः, आदिग्रहणादन्यस्मिन्वा दस्युभयादौ समुपस्थिते सति, यथा विवेकी सुखेनैव तमपायं परिहरन् सुखभाग् भवति, एवं श्रमणोऽपि भावतः सदा विवेकित्वाज्जाग्रदवस्थामनुभवन् समस्तकल्याणास्पदीभवति। अत्र च सुप्तासुप्ताधिकारगाथाः—"जागरह णरा णिचं जागरमाणस्स वड्डए बुद्धी। जो सुअइ न सो धण्णो जो जग्गइ सो सया धन्नो ॥१॥ सुअइ सुअंतस्स सुअं संकियखलियं भवे पमत्तस्स। जागरमाणस्स सुअं थिरपरिचिअमप्पमत्तस्स ॥२॥ नालस्सेण समं सुक्खं, न विज्जा सह निद्दया। न वेरग्गं पमाएणं, नारंभेण दयालुया ॥३॥ जागरिआ धम्मीणं आहम्मीणं तु सुत्तया सेआ। वच्छाहिवभगिणीए अकहिंसु जिणो जयंतीए ॥४॥ सुयइ य अयगरभूओ सुअंपि से नासई अमयभूअं। होहिइ गोणब्भूओ नट्ठंमि सुए अमयभूए ॥५॥"

तदेवं दर्शनावरणीयकर्म्मविपाकोदयेन कचित्स्वपन्नपि यः संविग्नो यतनावांश्च स दर्शनमोहनीयमहानिद्रापगमाज्जाग्रदवस्थ एवेति। ये तु सुप्तास्तेऽज्ञानोदयाद्भवन्ति, अज्ञानं च महादुःखं, दुःखं च जन्तूनामहितायेति दर्शयति—



२०

२५

१ जागृत नरा नित्य जाग्रतो वर्धते बुद्धिः। यः स्वपिति न स धन्यः यो जागर्ति स सदा धन्यः ॥१॥ स्वपिति स्वपतः श्रुतं शङ्कितस्खलितं भवेत्प्रमत्तस्य। जाग्रतः श्रुतं स्थिरपरिचितमप्रमत्तस्य ॥२॥ नालस्येन समं सौख्यं न विद्या सह निद्रया। न वैराग्यं प्रमादेन नारम्भेण दयालुता ॥३॥ जागरिता धर्मिणां अधर्मिणां तु सुप्तता श्रेयसी। वत्साधिपभगिन्या अकथयत् जिनो जयन्त्याः ॥४॥ स्वपिति चाजगरभूतः श्रुतमपि तस्य नश्यत्यमृतभूतम्। भविष्यति गोभूतो नष्टे श्रुतेऽमृतभूते ॥५॥

**लोयंसि जाण अहियाय दुक्खं, समयं लोगस्स जाणित्ता, इत्थ सत्थोवरए, जस्सिमे सद्दा य रूवा य रसा य गंधा य फासा य अभिसमन्नागया भवंति (सू. १०७)**

'लोके' षड्जीवनिकाये 'जानीहि' परिच्छिन्धि दुःखहेतुत्वाद्दुःखम्-अज्ञानं मोहनीयं वा तदहिताय-नरकादिभवव्यसनोपनिपाताय, इह वा बन्धवधशारीरमानसपीडायै जायत इत्येतज्जानीहि, परिज्ञानाच्चैतत्फलं, यदुत-द्रव्यभावस्वापादज्ञानरूपाद्दुःखहेतोरपसर्प्पणमिति, किंचान्यत्-'समय'मित्यादि, समयः-आचारोऽनुष्ठानं तं लोकस्यासुमद्व्रातस्य ज्ञात्वा अत्र शस्त्रोपरतो भवेदित्युत्तरसूत्रेण सम्बन्धो, लोको हि भोगाभिलाषितया प्राण्युपमर्दादिकषायहेतुकं कर्म्मोपादाय नरकादियातनास्थानेषूत्पद्यते, ततः कथञ्चिदुद्वृत्यावाप्य चाशेषक्लेशव्रातघ्नं धर्म्मकारणमार्यक्षेत्रादौ मनुष्यजन्म पुनरपि महामोहमोहितमतिस्तत्तदारभते येन येनाधोऽधो व्रजति, संसारान्नोन्मज्जतीति, अयं लोकाचारस्तं ज्ञात्वा, अथवा समभावः समता तां ज्ञात्वा, 'लोकस्ये'ति सप्तम्यर्थे षष्ठी, ततश्चायमर्थो-'लोके' जन्तुसमूहे 'समतां' समशत्रुमित्रतां समात्मपरतां वा ज्ञात्वा, यदिवा सर्वेऽप्येकेन्द्रियादयो जन्तवः सदा स्वोत्पत्तिस्थानरिरंसवो मरणभीरवः सुखेप्सवो दुःखद्विष इत्येवम्भूतां समतां ज्ञात्वा, किं कुर्यादित्याह-'एत्थ सत्थोवरए', 'अत्र' अस्मिन् षट्कायलोके शस्त्राद्द्रव्यभावभेदादुपरतो धर्म्मजागरणेन जागृहि, यदिवा यद्यत्संयमशस्त्रं प्राणातिपाताद्यास्त्रवद्वारं शब्दादिपञ्चप्रकारकामगुणाभिष्वङ्गो वा तस्माद् उपरतः स मुनिरिति, आह च-'जस्सिमे' इत्यादि, यस्य मुनेरिमे-प्रत्यात्मवेद्याः समस्तप्राणिगणेन्द्रियप्रवृत्तिविषयभूताः शब्दरूपरसगन्धस्पर्शा मनोज्ञेतरभेदभिन्ना 'अभिसमन्नागता' इति, अभिः-आभिमुख्येन सम्यग्-इष्टानिष्टावधारणतयाऽन्विति-शब्दादिस्वरूपावगमात् पश्चादागताः-ज्ञाताः परिच्छिन्ना यस्य मुनेर्भवन्ति स लोकं जानातीति सम्बन्धः,

५

१०

इदमुक्तं भवति-इष्टेषु न रागमुपयाति नापीतरेषु द्वेषम्, एतदेवाभिसमन्वागमनं तेषां, नान्यदिति, यदिवेहैव शब्दादयो दुःखाय भवन्ति आस्तां तावत्परलोक इति, उक्तं च-"रक्तः शब्दे हरिणः स्पर्शे नागो रसे च वारिचरः। कृपणपतङ्गो रूपे भुजगो गन्धे ननु विनष्टः ॥१॥ पञ्चसु रक्ताः पञ्च विनष्टा यत्रागृहीतपरमार्थाः। एकः पञ्चसु रक्तः प्रयाति भस्मान्ततामबुधः ॥२॥" अथवा शब्दे पुष्पशालाद्भद्रा ननाश रूपे अर्जुनकतस्करः गन्धे गन्धप्रियकुमारः रसे सौदासः स्पर्शे सत्यकिः सुकुमारिकापतिर्वा ललिताङ्गकः, परत्र च नारकादियातनास्थानभयमिति॥एवं शब्दादीनुभयदुःखस्वभावानवगम्य यः परित्यजेदसौ कं गुणमवाप्नुयादित्याह-

**से आयवं नाणवं वेयवं धम्मवं बंभवं पन्नाणेहिं परियाणइ लोयं, मुणीति वुच्चे, धम्मविऊ उज्जू, आवट्टसोए संगमभिजाणइ (सू. १०८)**

यो हि महामोहनिद्राघूते लोके दुःखमहिताय जानानो लोकमभयदर्शी शस्त्रोपरतः सन् शब्दादीन् कामगुणान् दुःखैकहेतूनभिसमन्वागच्छति ज्ञपरिज्ञया प्रत्याख्यानपरिज्ञया च प्रत्याचष्टे 'स' मुमुक्षुरात्मवान्—आत्मा ज्ञानादिकोऽस्यास्तीत्यात्मवान्, शब्दादिपरित्यागेन ह्यात्माऽनेन रक्षितो भवति, अन्यथा नारकैकेन्द्रियादिपाते सत्यात्मकार्याकरणात्कुतोऽस्यात्मेति, पाठान्तरं वा 'से आयवी नाणवी' आत्मानं श्वभ्रादिपतनरक्षणद्वारेण वेत्तीत्यात्मवित्, तथा ज्ञानं-यथावस्थितपदार्थपरिच्छेदकं वेत्तीति ज्ञानवित्, तथा वेद्यते जीवादिस्वरूपम् अनेनेति वेदः-आचाराद्यागमः तं वेत्तीति वेदवित्, तथा दुर्गतिप्रसृतजन्तुधरणस्वभावं स्वर्गापवर्गमार्गं धर्मं वेत्तीति धर्मवित्, एवं ब्रह्म-अशेषमलकलङ्कविकलं योगिशर्म्म वेत्तीति ब्रह्मवित्, यदिवा अष्टादशधा ब्रह्मेति, एवम्भूतश्चासौ प्रकर्षेण ज्ञायते ज्ञेयं यैस्तानि प्रज्ञानानि-मत्यादीनि तैर्लोकं-यथावस्थितं जन्तुलोकं तदाधारं वा क्षेत्रं जानाति-परिच्छि-

नत्तीत्युक्तं भवति, य एव शब्दादिविषयसङ्गस्य परिहर्त्ता स एव यथावस्थितलोकस्वरूपरिच्छेदीति। यश्चानन्तरगुणोपेतः स किं वाच्य? इत्यत आह–'मुणी' त्यादि, यो ह्यात्मवान् ज्ञानवान् वेदवान् धर्म्मवान् ब्रह्मवान् प्रज्ञानैर्न्यस्तैः समस्तैर्वा लोकं जानाति स मुनिर्वाच्यो, मनुते मन्यते वा जगतस्त्रिकालावस्थां मुनिरितिकृत्वा, किं च–'धम्म' इत्यादि, धर्म्म–चेतनाचेतनद्रव्यस्वभावं श्रुतचारित्ररूपं वा वेत्तीति धर्म्मवित्, 'ऋजु'रिति ऋजोः–ज्ञानदर्शनचारित्राख्यस्य मोक्षमार्गस्यानुष्ठानादकुटिलो यथावस्थितपदार्थस्वरूपपरिच्छेदाद्वा ऋजुः सर्वोपाधिशुद्धोऽवक्र इतियावत्। तदेवं धर्म्मविद्दजुर्मुनिः किम्भूतो भवतीत्याह–'आवट्ट' इत्यादि, भावावर्त्तो–जन्मजरामरणरोगशोकव्यसनोपनिपातात्मकः संसार इति, उक्तं हि–"रागद्वेषवशाविद्धं, मिथ्यादर्शनदुस्तरम्। जन्मावर्त्ते जगत् क्षिप्तं, प्रमादाद्भ्राम्यते भृशम् ॥१॥" भावश्रोतोऽपि शब्दादिकामगुणविषयाभिलापः, आवर्त्तश्च श्रोतश्चावर्त्तश्रोतसी तयो रागद्वेषाभ्यां सम्बन्धः–सङ्गस्तमभिजानाति–आभिमुख्येन परिच्छिनत्ति–यथाऽयं सङ्गः आवर्त्तश्रोतसोः कारणं, जानानश्च परमार्थतः कोऽभिधीयते?, योऽनर्थं ज्ञात्वा परिहरति, ततश्चायमर्थः–संसारश्रोतःसङ्गं रागद्वेषात्मकं ज्ञात्वा यः परिहरति स एव आवर्त्तश्रोतसोः सङ्गस्याभिज्ञाता ॥ सुप्तजाग्रतां दोषगुणपरिच्छेदी कं गुणमवाप्नुयादित्याह–

**सीउसिणच्चाई से निग्गंथे अरइरइसहे, फरुसयं नो वेएइ, जागरवेरोवरए, वीरे एवं दुक्खा पमुक्खसि, जरामच्चुवसोवणीए नरे सययं मूढे धम्मं नाभिजाणइ (सू. १०९)**

सबाह्याभ्यन्तरग्रन्थरहितः सन् शीतोष्णत्यागी–सुखदुःखानभिलाषुकः शीतोष्णरूपौ वा परीषहावतिसहमानः संयमासंयमरत्यर-

विषयत्यागे गुणाः

५

१०

तिसहः सन् परुषतां—कर्कशतां पीडाकारितां परीषहाणामुपसर्गाणां वा कर्मक्षपणायोद्यतः साहाय्यं मन्यमानो 'नो वेत्ति' न तान् पीडाकारित्वे गृह्णातीत्युक्तं भवति, यदिवा संयमस्य तपसो वा परुषतां शरीरपीडोत्पादनात् कर्म्मलेपापनयनाद्वा संसारोद्विग्नमना मुमुक्षुर्निराबाधसुखोन्मुखो 'न वेत्ति' न संयमतपसी पीडाकारित्वेन गृह्णातीतियावत् । किं च—'जागर' इत्यादि, असंयमनिद्रापगमाज्जागर्तीति जागरः, अभिमानसमुत्थोऽमर्षावेशः परापकाराध्यवसायो वैरं तस्मादुपरतो वैरोपरतो, जागरश्चासौ वैरोपरतश्चेति विगृह्य कर्म्मधारयः, क एवम्भूतो?—'वीरः' कर्म्मापनयनशक्त्युपेतः, एवम्भूतश्च त्वं वीर! आत्मानं परं वा दुःखाद्दुःखकारणाद्वा कर्म्मणः प्रमोक्ष्यसीति । यश्च यथोक्ताद्विपरीतः आवर्त्तश्रोतसोः सङ्गमुपगतोऽजागरः स किमामुयादित्याह—जरा च मृत्युश्च(जरामृत्यू)ताभ्यामात्मवशमुपनीतो 'नरः' प्राणी 'सततम्' अनवरतं 'मूढो' महामोहमोहितमतिर्द्धर्म्मं—स्वर्गापवर्गमार्गं नाभिजानीते—नावगच्छति, तत् संसारे स्थानमेव नास्ति यत्र जरामृत्यू न स्तः, देवानां जराऽभाव इति चेत्, तत्राप्युपान्त्यकाले लेश्याबलसुखप्रभुत्ववर्णहान्युपचेरस्त्येव च तेषामपि जरासद्भावः, उक्तंच—"देवा णं भंते! सव्वे समवण्णा?, नो इणट्ठे, समट्ठे, से केणट्ठेणं भंते! एवं वुच्चइ?, गोयमा! देवा दुविहा—पुव्वोववण्णगा य पच्छोववण्णगा य। तत्थ णं जे ते पुव्वोववण्णगा ते णं अविसुद्धवण्णयरा, जे णं पच्छोववण्णगा ते णं विसुद्धवण्णयरा" एवं लेश्याद्यपीति, च्यवनकाले तु सर्वस्यैवैतद्भवति, तद्यथा—"माल्यम्लानिः कल्पवृक्षप्रकम्पः, श्रीह्रीनाशो वाससां चोपरागः। दैन्यं तन्द्रा कामरागाङ्गभङ्गौ, दृष्टिभ्रान्तिर्वेपथुश्चारतिश्च ॥१॥" यतश्चैवमतः सर्वे जरामृत्युवशो-

१ देवा भदन्त! सर्वे समवर्णाः? नैषोऽर्थः समर्थः, तत् केनार्थेन भदन्त! एवमुच्यते?, गौतम! देवा द्विविधाः—पूर्वोत्पन्नकाश्च पश्चादुपपन्नकाश्च । तत्र ये ते पूर्वोत्पन्नकास्तेऽविशुद्धवर्णाः, ये पश्चादुपपन्नास्ते विशुद्धवर्णाः.

२०

२५

पनीतमभिसमीक्ष्य किं कुर्यादित्याह—



पासिय आउरपाणे अप्पमत्तो परिव्वए, मंता य मइमं पास, आरंभजं दुक्खमिणंति णच्चा, माई पमाई पुण एइ गब्भं, उवेहमाणो सद्दरूवेसु उज्जू माराभिसंकी मरणा पमुच्चई, अप्पमत्तो कामेहिं, उवरओ पावकम्मेहिं, वीरे आयगुत्ते खेयन्ने, जे पज्जवज्जायसत्थस्स खेयण्णे से असत्थस्स खेयन्ने, जे असत्थस्स खेयण्णे से पज्जवज्जायसत्थस्स खेयन्ने, अकम्मस्स ववहारो न विज्जइ, कम्मुणा उवाही जायइ, कम्मं च पडिलेहाए (सू. ११०)

५



स हि भावजागरस्तैस्तैर्भावस्वापजनितैः शारीरमानसैर्दुःखैरातुरान्—किंकर्त्तव्यतामूढान् दुःखसागरावगाढान् प्राणान् अभेदोपचारात् प्राणिनो 'दृष्ट्वा' ज्ञात्वाऽप्रमत्तः परिव्रजेत्—उद्युक्तः सन् संयमानुष्ठानं विदध्यात्। अपिच—'मंता' इत्यादि, हे मतिमन्!—सच्छ्रुतिक! भावसुप्तातुरान् पश्य, मत्वा चैतज्जाग्रत्सुप्तगुणदोषापादनं मा स्वापमतिं कुरु, किं च—'आरंभज'मित्यादि, आरम्भः—सावद्यक्रियानुष्ठानं तस्माज्जातमारम्भजं, किं तद्?—दुःखं तत्कारणं वा कर्म्म। 'इद'मिति प्रत्यक्षगोचरापन्नमशेषारम्भप्रवृत्तप्राणिगणानुभूयमानमित्येतत् 'ज्ञात्वा' परिच्छिद्य निरारम्भो भूत्वाऽऽत्महिते जागृहि। यस्तु विषयकषायाच्छादितचेता भावशायी स किमाप्नुयादित्याह—'माई' इत्यादि, मध्यग्रहणाद्याद्यन्तयोर्ग्रहणं, तेन क्रोधादिकषायवान् मद्यादिप्रमादवान्नारकदुःखमनुभूय पुनस्तिर्यक्षु गर्भमु-

१०

वैति। यस्त्वकषायी प्रमादरहितः स किम्भूतो भवतीत्याह–'उवेह' इत्यादि, बहुवचननिर्देशादाद्यर्थो गम्यते, शब्दरूपादिषु यौ रागद्वेषौ तावुपेक्षमाणः–अकुर्वन् ऋजुर्भवति–यतिर्भवति, यतिरेव परमार्थत ऋजुः, अपरस्त्वन्यथाभूतः स्वयादिपदार्थान्यथाग्रहणाद्वक्रः, किञ्च–स ऋजुः शब्दादीनुपेक्षमाणो मरणं मारस्तदभिशङ्की–मरणादुद्विजंस्तत्करोति येन मरणात् प्रमुच्यते। किं तत्करोतीत्याह–'अप्पमत्त' इत्यादि, कामैर्यः प्रमादस्तत्राप्रमत्तो भवेत्। कथाप्रमत्तः स्याद् ?, यः कामारम्भकेभ्यः पापेभ्य उपरतो भवतीति दर्शयति–'उवरओ' इत्यादि, उपरतो मनोवाक्कायैः, कुतः ?–पापोपादानकर्म्मभ्यः, कोऽसौ ?–वीरः, किम्भूतो ?–गुप्तात्मा, कथ गुप्तो भवति ?, यः खेदज्ञो, यश्च खेदज्ञः स कं गुणमवाप्नुयादित्याह–'जे पज्जव' इत्यादि, शब्दादीनां विषयाणां पर्यवाः— विशेषास्तेषु–तन्निमित्तं जातं शस्त्रं पर्यवजातशस्त्रं–शब्दादिविशेषोपादानाय यत्प्राण्युपघातकार्यनुष्ठानं तत्पर्यवजातशस्त्रं तस्य पर्यवजातशस्त्रस्य यः खेदज्ञो–निपुणः सोऽशस्त्रस्य–निरवद्यानुष्ठानरूपस्य संयमस्य खेदज्ञो, यश्चाशस्त्रस्य संयमस्य खेदज्ञः स पर्यवजातशस्त्रस्यापि खेदज्ञः, इदमुक्तं भवति–यः शब्दादिपर्यायान् इष्टानिष्टात्मकान् तत्प्राप्तिपरिहारानुष्ठानं च शस्त्रभूतं वेत्ति सोऽनुपघातकत्वात्संयममप्यशस्त्रभूतमात्मपरोपकारिणं वेत्ति, शस्त्राशस्त्रे च जानानस्तत्प्राप्तिपरिहारौ विधत्ते, एतत्फलत्वात् ज्ञानस्येति, यदिवा शब्दादिपर्यायेभ्यस्तज्जनितरागद्वेषपर्यायेभ्यो वा जातं यज्ज्ञानावरणीयादि कर्म्म तस्य यच्छस्त्रं दाहकत्वात् तपस्तस्य यः खेदज्ञः तज्ज्ञानानुष्ठानतः सोऽशस्त्रस्य संयमस्यापि खेदज्ञः, पूर्वोक्तादेव हेतोः, हेतुहेतुमद्भावाच्च योऽशस्त्रस्य खेदज्ञः स पर्यवजातशस्त्रस्यापि खेदज्ञ इति, तस्य

खेदज्ञता।

१५

२०

वति। यश्च सकर्म्मा स नारकादिव्यपदेशेन व्यपदिश्यत इत्याह—'कम्मुणा' इत्यादि, उपाधीयते—व्यपदिश्यते येनेत्युपाधिः—विशेषणं स उपाधिः कर्म्मणा—ज्ञानावरणीयादिना जायते, तद्यथा—मतिश्रुतावधिमनःपर्यायवान् मन्दमतिस्तीक्ष्णो वेत्यादि, चक्षुर्दर्शनी अचक्षुर्दर्शनी निद्रालुरित्यादि, सुखी दुःखी चेति, मिथ्यादृष्टिः सम्यग्दृष्टिः सम्यग्मिथ्यादृष्टिः स्त्री पुमान्नपुंसकः कषायीत्यादि, सोपक्रमायुष्को निरुपक्रमायुष्कोऽल्पायुरित्यादि, नारकः तिर्यग्योनिक एकेन्द्रियो द्वीन्द्रियः पर्याप्तकोऽपर्याप्तकः सुभगो दुर्भग इत्यादि, उच्चैर्गोत्रो नीचैर्गोत्रो वेति, कृपणस्त्यागी निरुपभोगो निर्वीर्यः, इत्येवं कर्म्मणा संसारी व्यपदिश्यते। यदि नामैवं ततः किं कर्त्तव्यमित्याह—'कम्मं च' इत्यादि, कर्म्म ज्ञानावरणीयादि तत्प्रत्युपेक्ष्य बन्धं वा प्रकृतिस्थित्यनुभावप्रदेशात्मकं पर्यालोच्य, तत्सत्ताविपाकापन्नांश्च प्राणिनो यथा भावनिद्रया शेरते तथाऽवगम्याकर्म्मतोपाये भावजागरणे यतितव्यमिति, तदभावश्चानेन प्रक्रमेण भवति, तद्यथा-अष्टविधसत्कर्म्माऽपूर्वादिकरणक्षपकश्रेणिप्रक्रमेण मोहनीयक्षयं विधायान्तर्मुहूर्त्तमजघन्योत्कृष्टं कालं सप्तविधसत्कर्म्मा, ततः शेषघातित्रये क्षीणे चतुर्विधभवोपग्राहिसत्कर्म्मा जघन्यतोऽन्तर्मुहूर्त्तमुत्कृष्टतो देशोनां पूर्वकोटिं यावत्, पुनरूर्द्ध्वं पञ्चह्रस्वाक्षरोद्गिरणकालीयां शैलेश्यवस्थामनुभूयाकर्म्मा भवति। साम्प्रतमुत्तरप्रकृतीनां सदसत्कर्म्मताविधानमुच्यते—तत्र ज्ञानावरणीयान्तराययोः प्रत्येकमुपात्तपञ्चभेदयोश्चतुर्दशस्वपि जीवस्थानकेषु गुणस्थानकेषु च मिथ्यादृष्टेरारभ्य केवलिगुणस्थानादारतोऽपरविकल्पाभावात् पञ्चविधसत्कर्म्मता। दर्शनावरणस्य त्रीणि सत्कर्म्मतास्थानानि, तद्यथा—नवविधं निद्रापञ्चकदर्शनचतुष्टयसमन्वयाद्, एतत् सर्वजीवस्थानानुयायि, गुणस्थानेष्वप्यनिवृत्तिबादरकालसङ्ख्येयभागान् यावत् १, ततः कतिचित्सङ्ख्येयभागावसाने स्त्यानर्द्धित्रयक्षयात् षट्सत्कर्म्मतास्थानं २, ततः क्षीणकषायद्विचरमसमये निद्राप्रचलाद्वयक्षयाच्चतुःसत्कर्म्मतास्थानं, तस्यापि क्षयः क्षीणकषायकालान्त इति ३। वेदनीयस्य द्वे सद-

कर्मो-पाधिः

५

१०

१० २ तो. १ उ२०

र्म्मतास्थाने, तद्यथा–द्वे अपि सातासाते इत्येकं, अन्यतरोदयारूढशैलेश्यवस्थेतरद्विचरमक्षणक्षये सति सातमसातं वा कर्म्मेति द्वितीयं २। मोहनीयस्य पञ्चदश सत्कर्म्मतास्थानानि, तद्यथा–षोडशकषायनवनोकषायदर्शनत्रये सति सम्यग्दृष्टेरष्टाविंशतिः १, सम्यक्त्वोद्वलने सम्यग्मिथ्यादृष्टेः सप्तविंशतिः २, दर्शनद्वयोद्वलनेसम्यग्मिथ्यादृष्टेरनादिमिथ्यादृष्टेर्वा षड्विंशतिः ३, सम्यग्दृष्टेरष्टाविंशतिसत्कर्म्मणोऽनन्तानुबन्ध्युद्वलने क्षपणे वा चतुर्विंशतिः ४, मिथ्यात्वक्षये त्रयोविंशतिः ५, सम्यग्मिथ्यात्वक्षये द्वाविंशतिः ६, क्षायिकसम्यग्दृष्टेरेकविंशतिः ७, अप्रत्याख्यानप्रत्याख्यानावरणक्षये त्रयोदश ८, अन्यतरवेदक्षये द्वादश ९, द्वितीयवेदक्षये सत्येकादश १०, हास्यादिषट्कक्षये पञ्च ११, स्ववेदाभावे चत्वारि १२, सञ्ज्वलनक्रोधक्षये त्रयः १३, मानक्षये द्वौ १४, मायाक्षये सत्येको लोभः १५, तत्क्षये च मोहनीयासत्त्वेति। आयुषो द्वे सत्कर्म्मतास्थाने सामान्येन, तद्यथा—परभवायुष्कबन्धोत्तरकालमायुष्कद्वयमेकं १, द्वितीयं तु तद्बन्धाभाव इति २। नाम्नो द्वादश सत्कर्म्मतास्थानानि, तद्यथा–त्रिनवतिः १ द्विनवतिः २ एकोननवतिः ३ अष्टाशीतिः ४ षडशीतिः ५ अशीतिः ६ एकोनाशीतिः ७ अष्टसप्ततिः ८ षट्सप्ततिः ९ पञ्चसप्ततिः १० नव ११ अष्टौ १२ चेति, तत्र त्रिनवतिः–गतयश्चतस्रः ४ पञ्च जातयः ५ शरीराणि पंच ५ पञ्च सङ्घाताः ५ बन्धनानि पञ्च ५ संस्थानानि षट् ६ अङ्गोपाङ्गत्रयं ३ संहननानि षट् ६ वर्णपञ्चकं ५ गन्धद्वयं २ रसाः पञ्च ५ अष्टौ स्पर्शा ८ आनुपूर्वीचतुष्टयं ४ अगुरुलघूपघातोच्छ्वासातपोद्योताः षट् ६ प्रशस्तेतरविहायोगतिद्वयं २ प्रत्येकशरीरत्रसशुभसुभगसुस्वरसूक्ष्मपर्याप्तकस्थिरादेययशांसि सेतराणीति विंशतिः २० निर्म्माणं तीर्थकरत्वमित्येवं सर्वसमुदाये त्रिनवतिर्भवति. ९३, तीर्थकरनामाभावे द्विनवतिः ९२, त्रिनवतेराहारकशरीरसङ्घातबन्धनाङ्गोपाङ्गचतुष्टयाभावे सत्येकोननवतिः ८९, ततोऽपि तीर्थकरनामाभावेऽष्टाशीतिः ८८, देवगतितदानुपूर्वीद्वयोद्वलने षडशीतिः ८६, यद्वा

१५ कर्मोपाधिः

२०



२८

अशीतिसत्कर्म्मणो नरकगतिप्रायोग्यं बध्नतः तद्गत्यानुपूर्व्वीद्वयवैक्रियचतुष्कबन्धकस्य षडशीतिः, देवगतिप्रायोग्यबन्धकस्य वेति, ततो नरकगत्यानुपूर्व्वीद्वयवैक्रियचतुष्टयोद्वलनेऽशीतिः ८०, पुनर्मनुष्यगत्यानुपूर्व्वीद्वयोद्वलनेऽष्टसप्ततिः ७८, एतान्यक्षपकाणां सत्कर्मतास्थानानि । क्षपकश्रेण्यन्तर्गताना तु प्रोच्यन्ते, तद्यथा—त्रिनवतेर्नरकतिर्यग्गतितदानुपूर्व्वीद्वयैकद्वित्रिचतुरिन्द्रियजात्यातपोद्योतस्थावरसूक्ष्मसाधारणरूपैर्नरकतिर्यग्गतिप्रायोग्यैस्त्रयोदशभिः कर्म्मभिः क्षपितैरशीतिर्भवति, द्विनवतेस्त्वेभिस्त्रयोदशभिः क्षपितैरेकोनाशीतिः, षाण्णवतेराहारकचतुष्टयापगमेनैकोननवतिः सञ्जाता ततस्त्रयोदशनाम्नि क्षपिते षट्सप्ततिर्भवति, तीर्थकरनामाभावापादिताऽष्टाशीतिः, अष्टाशीतेस्त्रयोदशनामाभावे पञ्चसप्ततिः, तत्राशीतेः षट्सप्ततेर्वा तीर्थकरकेवलिशैलेश्यापन्नद्विचरमसमये तीर्थकरनाम्नः प्रक्षेपात् वेद्यमाननवकर्म्मप्रकृतिव्युदासेन क्षयमुपगते शेषनाम्नि अन्त्यसमये नवसत्कर्म्मतास्थानं, ताश्च वेद्यमाना नवेमाः, तद्यथा—मनुजगति १ पञ्चेन्द्रियजाति २ त्रस ३ बादर ४ पर्याप्तक ५ सुभगादेय ६–७ यशःकीर्त्ति ८ तीर्थकररूपाः ९, एता नव शैलेश्यन्त्यसमये सत्तां बिभ्रति, शेषास्तु एकसप्ततिः सप्तषष्टिर्वा द्विचरमसमये क्षयमुपयान्ति, एता एव नव अतीर्थकरकेवलिनस्तीर्थकरनामरहिता अष्टौ भवन्ति, अतोऽन्त्यसमयेऽष्टसत्कर्म्मतास्थानमिति । सामान्येन गोत्रस्य द्वे सत्कर्म्मतास्थाने, तद्यथा—उच्चनीचगोत्रसद्भावे सत्येकं सत्कर्म्मतास्थानं, तेजोवायुषूच्चैर्गोत्रोद्वलने कालं कलीभावावस्थायां नीचैर्गोत्रसत्कर्म्मतेति द्वितीयं, यदिवा अयोगिद्विचरमसमये नीचैर्गोत्रक्षये सत्युच्चैर्गोत्रसत्कर्म्मता, एवं द्विरूपगोत्रास्थाने सत्येकं सत्कर्म्मतास्थानमन्यतरगोत्रसद्भावे सति द्वितीयमित्येवं कर्म्म प्रत्युपेक्ष्य तत्सत्तापगमाय यतिना यतितव्यमिति । किं च—

कम्ममूलं च जं छणं, पडिलेहिय सव्वं समायाय दोहिं अंतेहिं अदिस्समाणे तं परिन्नाय

५

१०

मेहावि, विइत्ता लोगं वंता लोगसन्नं से मेहावी परिक्कमिज्जासि (सू० १११) त्तिबेमि ॥ शीतोष्णीये उद्देशः १ ॥

कर्मणो मूलं-कारणं मिथ्यात्वाविरतिप्रमादकषाययोगाः, चः समुच्चये, कर्म्ममूलं च प्रत्युपेक्ष्य 'यत्क्षण'मिति 'क्षणु हिंसायां' क्षणनं-हिंसनं यत्किमपि प्राण्युपघातकारि तत् कर्म्ममूलतया प्रत्युपेक्ष्य परित्यजेत्, पाठान्तरं वा 'कम्ममाहूय जं छणं' य उपादानक्षणोऽस्य कर्म्मणः तत्क्षणं कर्म्माहूय-कर्म्मोपादाय तत्क्षणमेव निवृत्तिं कुर्याद्, इदमुक्तं भवति-अज्ञानप्रमादादिना यस्मिन्नेव क्षणे कर्महेतुकमनुष्ठानं कुर्यात्तस्मिन्नेव क्षणे लब्धचेताः तदुपादानहेतोर्निवृत्तिं विदध्यादिति, पुनरप्युपदेशदानायाह-'पडिलेहिअ' इत्यादि, 'प्रत्युपेक्ष्य' पूर्वोक्तं कर्म्म तद्विपक्षपदे मोक्षं च सर्वं 'समादाय' गृहीत्वा अन्तहेतुत्वादन्तौ-रागद्वेषौ ताभ्यां सहादृश्यमानः ताभ्यामनपदिश्यमानो वा तत्कर्म्म तदुपादानं वा रागादिकं ज्ञपरिज्ञया परिज्ञाय प्रत्याख्यानपरिज्ञया परिहरेदिति, रागादिमोहितं लोकं विषयकषायलोकं वा ज्ञात्वा वान्त्वा च 'लोकसंज्ञां' विषयपिपासासंज्ञितां धनाद्याग्रहग्रहरूपां वा स 'मेधावी' मर्यादान्यवस्थितः सन् 'पराक्रमेत' संयमानुष्ठाने उद्युक्तो भवेत्, विषयपिपासामरिषड्वर्गं वाऽष्टप्रकारं वा कर्म्मारिमुपक्रमेत्यात् । इतिः परिसमाप्तौ, ब्रवीमीति पूर्ववत्। इति शीतोष्णीयाध्ययनप्रथमोद्देशकटीका समाप्ता ॥



उक्तः प्रथमोद्देशकः, साम्प्रतं द्वितीय आरभ्यते, अस्य चायमभिसम्बन्धः, पूर्वोद्देशके भावसुप्ताः प्रदर्शिताः, इह तु तेषां स्वापविपाकफलमसातमुच्यते इत्यनेन सम्बन्धेनायातस्यास्य सूत्रानुगमे सूत्रमुच्चारयितव्यं, तच्चेदम्—



२०



२७

जाइं च वुड्ढिं च इहऽज्ज! पासे, भूएहिं जाणे पडिलेह सायं। तम्हाऽतिविज्जे परमंति णच्चा, संमत्तदंसी न करेइ पावं ॥४॥

जातिः—प्रसूतिः, बालकुमारयौवनवृद्धावस्थावसाना वृद्धिः, 'इह' मनुष्यलोके संसारे वा, अद्यैव कालक्षेपमन्तरेण, जातिं च वृद्धिं च 'पश्य' अवलोकय, इदमुक्तं भवति—जायमानस्य यद्दुःखं वृद्धावस्थायां च यच्छारीरमानसमुत्पद्यते तद्विवेकचक्षुषा पश्य, उक्तं च—"जायमाणस्स जं दुक्खं, मरमाणस्स जंतुणो। तेण दुक्खेण संतत्तो, न सरइ जाइमप्पणो ॥१॥ विरसरसियं रसंतो तो सो जोणीमुहाउ निप्फिडइ। माऊए अप्पणोऽविअ वेअणमउलं जणेमाणो ॥२॥" तथा—'हीणभिण्णसरो दीणो, विवरीओ विचित्तओ। दुब्बलो दुक्खिओ वसइ, संपत्तो चरिमं दसं ॥३॥' इत्यादि, अथवा आर्य इत्यामन्त्रणं, भगवान् गौतममामन्त्रयति, इह आर्य ! जातिं वृद्धिं च तत्कारणं कर्म्म कार्यं च दुःखं पश्य, दृष्ट्वाऽवबुद्ध्यस्व, यथा च जात्यादिकं न स्यात् तथा विधत्स्व। किं चापरं—'भूएहिं'मित्यादि, भूतानि—चतुर्दश भूतग्रामास्तैः सममात्मनः सातं—सुखं 'प्रत्युपेक्ष्य' पर्यालोच्य जानीहि, यथा त्वं सुखप्रिय एवमन्येऽपीति, यथा च त्वं दुःखद्विडेवमन्येऽपि जन्तवः, एवं मत्वाऽन्येषामसातोत्पादनं न विदध्याः, एवं च जन्मादिषु दुःखं न प्राप्स्यसीति, उक्तं च—"यथेष्टविषयाः सातमनिष्टा इतरत्तव। अन्यत्रापि विदित्वैवं, न कुर्यादप्रियं जने ॥१॥" यद्येवं ततः किमित्याह—'तम्हा' इत्यादि, 'तस्माद्' जातिवृद्धिसुखदुःखदर्शनादतीव विद्या—तत्त्वपरिच्छेत्री यस्यासावतिविद्यः सः 'परमं' मोक्षं ज्ञानादिकं वा तन्मार्गं

५

१०

१ जायमानस्य यद् दु:ख म्रियमाणस्य जन्तोः। तेन दुःखेन सततो न स्मरति जातिमात्मन ॥१॥ विरसरसित रसन् ततः स योनिमुखात् निस्सरति। मातुरु मनोऽपि च वेदनामतुलां जनयन् ॥२॥ हीनभिन्नस्वरो दीनो विपरीतो विचित्तकः। दुर्बलो दुःखितो वसति संप्राप्तः चरमां दशाम् ॥३॥

ज्ञाता सम्यक्त्वदर्शी सन् पापं न करोति, सावद्यमनुष्ठानं न विदधातीत्युक्तं भवति। पापस्य च मूलं स्नेहपाशास्तदपनोदार्थमाह–



उम्मुंच पासं इह मच्चिएहिं, आरंभजीवी उभयाणुपस्सी। कामेसु गिद्धा निचयं करंति, संसिच्चमाणा पुणरिंति गब्भं ॥ ५ ॥

१५

'इह' मनुष्यलोके चतुर्विधकषायविषयविमोक्षक्षमाधारे मर्त्यैः सार्द्धं द्रव्यभावभेदभिन्नं पाशमुत्–प्राबल्येन 'मुञ्च' अपाकुरु, स हि कामभोगलालसस्तदादानहेतोर्हिंसादीनि पापान्यारभते अतोऽपदिश्यते–'आरंभ' इत्यादि, आरम्भेण जीवितुं शीलमस्येत्यारम्भजीवी–महारम्भपरिग्रहपरिकल्पितजीवनोपायः उभयं–शारीरमानसमैहिकामुष्मिकं वा द्रष्टुं शीलमस्येति स तथा, किं च–'कामेसु' इत्यादि, कामा–इच्छामदनरूपास्तेषु गृद्धाः–अध्युपपन्ना निचयं–कर्म्मोपचयं कुर्वन्ति। यदि नामैवं ततः किमित्याह–'संसिच्च' इत्यादि, तेन कामोपादानजनितेन कर्म्मणा 'संसिच्यमानाः' आपूर्यमाणा गर्भाद्गर्भान्तरमुपयान्ति, संसारचक्रवालेऽरघट्टघटीपत्रन्यायेन पर्यटन्ते, आसत इत्युक्तं भवति। तदेवमनिभृतात्मा किंभूतो भवतीत्याह–

२०

अवि से हासमासज्ज, हंता नंदीति मन्नई। अलं बालस्स संगेण, वेरं वड्ढइ अप्पणो ॥६॥



ह्रीभयादिनिमित्तश्रंतोविप्लुवो हासस्तमासाद्य—अङ्गीकृत्य 'स' कामगृध्नुर्हत्वाऽपि प्राणिनो 'नन्दी'ति क्रीडेति मन्यते, वदति च महामोहावृतोऽशुभाध्यवसायो यथा–एते पशवो मृगयार्थं सृष्टाः, मृगया च सुखिनां क्रीडार्थं भवति, इत्येवं मृषावादादत्तादानादिष्वप्यायोज्यं। यदि नामैवं ततः किमित्याह–'अलं' मित्यादि, अलं–पर्याप्तं बालस्य–अज्ञस्य यः प्राणातिपातादिरूपः सङ्गो विषय-



२५

कषायादिमयो वा तेनालं, बालस्य हास्यादिसङ्गेनालं, किमिति चेद् ?, उच्यते, 'वेर'मित्यादि, पुरुषादिवधसमुत्थं वैरं तद्बालसङ्गानुषङ्गी स्वात्मनो वर्द्धयति, तद्यथा–गुणसेनेन हास्यानुषङ्गादग्निशर्म्मोणं नानाविधैरुपहसता नवभवानुषङ्गि वैरं वर्द्धितं, एवमन्यत्रापि विषयसङ्गादावायोज्यं ॥ यतश्चैवमतः किमित्याह—

तम्हाऽतिविज्जो परमंति णच्चा, आयंकदंसी न करेइ पावं । अग्गं च मूलं च विगिंच धीरे, पलिच्छिंदिया णं निक्कम्मदंसी ॥ ७ ॥

यस्माद्बालसङ्गिनो वैरं वर्द्धते तस्मादतिविद्वान् परमं–मोक्षपदं सर्वसंवररूपं चारित्रं वा सम्यग्ज्ञानं सम्यग्दर्शनं वा, एतत्परममिति ज्ञात्वा किं करोतीत्याह-'आयंके' त्यादि, आतङ्को–नरकादिदुःखं तद्द्रष्टुं शीलमस्येत्यातङ्कदर्शी स 'पावं' पापानुबन्धि कर्म्म न करोति, उपलक्षणार्थत्वान्न कारयति नानुमन्यते च। पुनरप्युपदेशदानायाह–'अग्गं च' इत्यादि, अग्रं–भवोपग्राहिकर्म्मचतुष्टयं मूलं–घातिकर्म्मचतुष्टयं, यदिवा मोहनीयं मूलं शेषाणि त्वग्रं, यदिवा मिथ्यात्वं मूलं शेषं त्वग्रं, तदेवं सर्वमग्रं मूलं च 'विगिंच' इति त्यजापनय पृथक्कुरु, तदनेनेदमुक्तं भवति-न कर्म्मणः पौद्गलिकस्यात्यन्तिकः क्षयः, अपि त्वात्मनः पृथक्करणं, कथं मोहनीयस्य मिथ्यात्वस्य वा मूलत्वम् ? इति चेत्, तद्वशाच्छेषप्रकृतिबन्धो यतः, उक्तं च–"न मोहमतिवृत्त्य बन्ध उदितस्त्वया कर्म्मणां, न चैकविधबन्धनं प्रकृतिबन्धविभवो महान्। अनादिभवहेतुरेष न च बध्यते नासकृत्त्वयाऽतिकुटिला गतिः कुशल ! कर्म्मणां दर्शिता ॥१॥" तथा चागमः–"कहण्णं भंते ! जीवा अट्ठ कम्मपगडीओ बंधंति ?, गोयमा ! णाणावरणिज्जस्स उदएणं दरिसणावरणिज्जं कम्मं नियच्छइ, दरिसणावरणिज्जस्स कम्मस्स उदएणं दंसणमोहणीयं कम्मं नियच्छइ, दंसणमोहणिज्जस्स कम्मस्स उदएणं मिच्छत्तं नियच्छइ,

५

१०

मिच्छत्तेणं उदिण्णेणं एवं खलु जीवे अट्ठ कम्मपगडीओ बंधइ", क्षयोऽपि मोहनीयक्षयाविनाभावी, उक्तं च—"णायगंमि हते संते, जहा सेणा विणस्सई। एवं कम्माणि णस्संति, मोहणिज्जे खयं गए॥१॥" इत्यादि, अथवा मूलम्—असंयमः कर्म्म वा, अग्रं-संयमतपसी मोक्षो वा ते मूलाग्रे 'धीरः'अक्षोभ्यो धीविराजितो वा विवेकेन दुःखसुखकारणतयाऽवधारय। किं च—'पलिछिंदिया ण' मित्यादि, तपःसंयमाभ्यां रागादीनि बन्धनानि तत्कार्याणि वा कर्म्माणि छित्त्वा निष्कर्म्मदर्शी भवति, निष्कर्म्माणमात्मानं पश्यति, तच्छीलश्च निष्कर्म्मत्वाद्वा अपगतावरणः सर्वदर्शी सर्वज्ञानी च भवति॥ यश्च निष्कर्म्मदर्शी भवति सोऽपरं किमाप्नुयादित्याह—



**एस मरणा पमुच्चइ, से हु दिट्ठभए मुणी, लोगंसि परमदंसी विवित्तजीवी उवसंते समिए सहिए सया जए कालकंखी परिव्वए, बहुं च खलु पावं कम्मं पगडं (सू. ११२)**



'एष' इत्यनन्तरोक्तो मूलाग्रविवेचको निष्कर्म्मदर्शी मरणाद्—आयुःक्षयलक्षणात् मुच्यते, आयुषो बन्धनाभावाद्, यदिवा आजवंजवीभावादावीचीमरणाद्वा सर्व एव संसारो मरणं तस्मात्प्रमुच्यते। यश्चैवं स किम्भूतो भवतीत्याह—'से हु' इत्यादि, 'सः' अनन्तरोक्तो मुनिर्दृष्टं संसाराद्भयं सप्तप्रकारं वा येन स तथा, हुरवधारणे, दृष्टभय एव। किं च—'लोयंसि' इत्यादि, लोके(धर्मादि)द्रव्याधारे चतुर्दशभूतग्रामात्मके वा परमो—मोक्षस्तत्कारणं वा संयमः तं द्रष्टुं शीलमस्येति परमदर्शी, तथा 'विविक्तं' स्त्रीपशुपण्डकसमन्वितश-



१ कथं भदन्त! जीवा अष्ट कर्मप्रकृतीर्बध्नन्ति ?, गौतम! ज्ञानावरणीयस्योदयेन दर्शनावरणीयं कर्म बध्नन्ति, दर्शनावरणीयस्य कर्मण उदयेन दर्शनमोहनीयं कर्म बध्नन्ति, दर्शनमोहनीयस्य कर्मण उदयेन मिथ्यात्वं बध्नन्ति, मिथ्यात्वेनोदितेनैव खलु जीवा अष्ट कर्मप्रकृतीर्बध्नन्ति॥ २. नायके हते सति यथा सेना विनश्यति। एवं कर्माणि विनश्यन्ति मोहनीये क्षयं गते॥१॥

ण्यादिरहितं द्रव्यतः भावतस्तु रागद्वेषरहितममङ्क्लिष्टं जीवितुं शीलमस्येति विविक्तजीवी, यश्चैवम्भूतः स इन्द्रियनोइन्द्रियोपशमा-दुपशान्तो, यश्चोपशान्तः स पञ्चभिः समितिभिः सम्यग् वा इतो- गतो मोक्षमार्गे समितः, यश्चैवं स ज्ञानादिभिः सहितः-समन्वितो, यश्च ज्ञानादिसहितः स सदा यतः-अप्रमादी। किमवधिश्चायमनन्तरोक्तो गुणोपन्यास इत्याह-'काल' इत्यादि, कालो-मृत्युका-लस्तमाकाङ्क्षितुं शीलमस्येति कालाकाङ्क्षी स एवम्भूतः परिः-समन्तात्व्रजेत्परिव्रजेत्, यावत्पर्यायागतं पण्डितमरणं तावदाकाङ्क्ष-माणो विविक्तजीवित्वादिगुणोपेतः संयमानुष्ठानमार्गे परिष्वष्केदिति। स्यादेतत्-किमर्थं एवं क्रियते? इत्याह-मूलोत्तरप्रकृतिभे-दभिन्नं प्रकृतिस्थित्यनुभावप्रदेशबन्धात्मकं बन्धोदयसत्कर्मतान्यवस्थामयं तथा बद्धस्पृष्टनिधत्तनिकाचितावस्थागतं कर्म तच्च न ह्रसीयसा कालेन क्षयमुपयातीत्यतः कालाकाङ्क्षीत्युक्तं, तत्र बन्धस्थानापेक्षया तावन्मूलोत्तरप्रकृतीनां बहुत्वं प्रदर्श्यते, तद्यथा-सर्व-मूलप्रकृतीर्बध्नतोऽन्तर्मुहूर्त्तं यावदष्टविधं, आयुष्कवर्जं सप्तविधं, तज्जघन्येनान्तर्मुहूर्त्तमुत्कृष्टतस्तद्रहितानि त्रयस्त्रिंशत्सागरोपमाणि पूर्व-कोटित्रिभागाभ्यधिकानि, सूक्ष्मसंपरायस्य मोहनीयबन्धोपरमे आयुष्कबन्धाभावात् षड्विधम्, एतच्च जघन्यतः सामयिकमुत्कृष्ट-तस्त्वन्तर्मुहूर्त्तमिति, तथोपशान्तक्षीणमोहसयोगिकेवलिनां सप्तविधबन्धोपरमे सातमेकं बध्नतामेकविधं बन्धस्थानं, तच्च जघन्येन सामयिकमुत्कृष्टतो देशोनपूर्वकोटिकालीयं। इदानीमुत्तरप्रकृतिबन्धस्थानान्यभिधीयन्ते-तत्र ज्ञानावरणान्तराययोः पञ्चभेदयोरप्ये-कमेव ध्रुवबन्धित्वाद्बन्धस्थानं, दर्शनावरणीयस्य त्रीणि बन्धस्थानानि-निद्रापञ्चकदर्शनचतुष्टयसमन्वयाद् ध्रुवबन्धित्वान्नवविधं १, नतः स्त्यानर्द्धित्रिकस्यानन्तानुबन्धिभिः सह बन्धोपरमे षड्विधं २, अपूर्वकरणसङ्ख्येयभागे निद्राप्रचलयोर्बन्धोपरमे चतुर्विधं बन्ध-स्थानं ३। वेदनीयस्यैकमेव बन्धस्थानं-सातमसातं वा बध्नतः, उभयोरपि यौगपद्येन विरोधितया बन्धाभावात्। मोहनीयस्यबन्धस्था-

१

१०

नानि दश, तद्यथा—द्वाविंशतिः, मिथ्यात्वं १ षोडश कषाया १७ अन्यतरवेदो १८ हास्यरतियुग्मारतिशोकयुग्मयोरन्यतर २० द्वयं २१ जुगुप्सा २२ चेति १, मिथ्यात्वबन्धोपरमे सास्वादनस्य सैवैकविंशतिः २, सैव सम्यग्मिथ्यादृष्टेरविरतसम्यग्दृष्टेर्वा अनन्तानुबन्ध्यभावे सप्तदशविधं बन्धस्थानं ३, तदेव देशविरतस्याप्रत्याख्यानबन्धाभावे त्रयोदशविधं ४, तदेव प्रमत्ताप्रमत्तापूर्वकरणानां यतीनां प्रत्याख्यानावरणबन्धाभावान्नवविधं ५, एतदेव हास्यादियुग्मस्य भयजुगुप्सयोश्चापूर्वकरणचरमसमये बन्धोपरमात्पञ्चविधं ६, ततोऽनिवृत्तिकरणसङ्ख्येयभागावसाने पुंवेदबन्धोपरमाच्चतुर्विधं ७, ततोऽपि तस्मिन्नेव सङ्ख्येयभागे क्षयमुपगच्छति सति क्रोधमानमायालोभसञ्ज्वलनानां क्रमेण बन्धोपरमात्त्रिविधं ८ द्विविध ९ मेकविधं १० चेति, तस्याप्यनिवृत्तिकरणचरमसमये बन्धोपरमान्मोहनीयस्याबन्धकः। आयुषः सामान्येनैकविधं बन्धस्थानं चतुर्णामन्यतरत्, द्व्यादेर्यौगपद्येन बन्धाभावो विरोधादिति। नाम्नोऽष्टौ बन्धस्थानानि, तद्यथा—त्रयोविंशतिस्तिर्यग्गतिप्रायोग्यं बध्नतस्तिर्यग्गतिरेकेन्द्रियजातिरौदारिकतैजसकार्म्मणानि हुण्डसंस्थानं वर्णगन्धरसस्पर्शास्तिर्यग्गतिप्रायोग्यानुपूर्वी अगुरुलघूपघातं स्थावरं बादरसूक्ष्मयोरन्यतरदपर्याप्तकं प्रत्येकसाधारणयोरन्यतरत् अस्थिरं अशुभं दुर्भगं अनादेयं अयशःकीर्त्तिर्निर्माणमिति, इयमेकेन्द्रियापर्याप्तकप्रायोग्यं बध्नतो मिथ्यादृष्टेर्भवति १, इयमेव पराघातोच्छ्वाससहिता पञ्चविंशतिः,नवरमपर्याप्तकस्थाने पर्याप्तकमेव वाच्यं २,इयमेव चातपोद्योतान्यतरसमन्विता षड्विंशतिः,नवरं बादरप्रत्येके एव वाच्ये ३, तथा देवगतिप्रायोग्यं बध्नतोऽष्टाविंशतिः, तथाहि—देवगतिः १ पञ्चेन्द्रियजातिः २ वैक्रिय ३ तैजस ४ कार्म्मणानि ५ शरीराणि समचतुरस्रं ६ अङ्गोपाङ्गं ७ वर्णादिचतुष्टयं ११ आनुपूर्वी १२ अगुरुलघु १३ उपघात १४ पराघात १५ उच्छ्वासः १६ प्रशस्तविहायोगतिः १७ त्रसं १८ बादरं १९ पर्याप्तकं २० प्रत्येकं २१ स्थिरास्थिरयोरन्यतरत् २२ शुभाशुभयोरन्यतरत् २३ सुभगं २४



२०

सुस्वरं २५ आदेयं २६ यशःकीर्त्ययशःकीर्त्योरन्यतरत् २७ निर्माणमिति २८, एषैव तीर्थकरनामसहिता एकोनत्रिंशत्, साम्प्रतं त्रिंशत्–देवगतिः १ पञ्चेन्द्रियजातिः २ वैक्रिया ३ हारका ४ ङ्गोपाङ्ग ६ चतुष्टयं तैजस ७ कार्म्मणं ८ संस्थानमाद्यं ९ वर्णादिचतुष्कं १३ आनुपूर्वी १४ अगुरुलघू १५ पघातं १६ पराघातं १७ उच्छ्वासं १८ प्रशस्तविहायोगतिः १९ त्रसं २० बादरं २१ पर्याप्तकं २२ प्रत्येकं २३ स्थिरं २४ शुभं २५ सुभगं २६ सुस्वरं २७ आदेयं २८ यशःकीर्त्ति २९ निर्माण ३० मिति च बध्नत एकं बन्धस्थानं ६, एषैव त्रिंशत्तीर्थकरनाममहिता एकत्रिंशत् ७, एतेषां च बन्धस्थानानामेकेन्द्रियद्वीन्द्रियत्रीन्द्रियनरकगत्यादिभेदेन बहुविधता कर्म्मग्रन्थादवसेया, अपूर्वकरणादिगुणस्थानकत्रये देवगतिप्रायोग्यबन्धोपरमाद्यशःकीर्त्तिमेव बध्नतः एकविधं बन्धस्थानमिति ८, तत ऊर्द्ध्वं नाम्नो बन्धाभाव इति। गोत्रस्य सामान्येनैकं बन्धस्थानं–उच्चनीचयोरन्यतरत्, यौगपद्येनोभयोर्बन्धाभावो विरोधादिति। तदेवं बन्धद्वारेण लेशतो बहुत्वमावेदितं कर्म्मणां, तच्च बहु कर्म्म प्रकृतं बद्धं प्रकटं वा, तत्कार्यप्रदर्शनात्, खलुशब्दो वाक्यालङ्कारेऽवधारणे वा, बह्वेव तत्कर्म्म। यदि नामैवं ततस्तदपनयनार्थं किं कर्त्तव्यमित्याह—



**सच्चंमि धिइं कुव्वहा, एत्थोवरए मेहावी सव्वं पावं कम्मं झोसइ (सू. ११३)**



सद्भ्यो हितः सत्यः–संयमस्तत्र धृतिं कुरुध्वं, सत्यो वा–मौनीन्द्रागमो यथावस्थितवस्तुस्वरूपाविर्भावनात्, तत्र भगवदाज्ञायां धृतिं कुमार्गपरित्यागेन कुरुध्वमिति, किं च–'एत्थोवरए' इत्यादि, 'अत्र' अस्मिन् संयमे भगवद्वचसि वा उप–सामीप्येन रतो–व्यवस्थितो 'मेधावी' तत्त्वदर्शी 'सर्वम्' अशेषं 'पापं' कर्म्म संसारार्णवपरिभ्रमणहेतुं झोषयति—शोषयति क्षयं नयतीतियावत्। उक्तोऽप्रमादः, तत्प्रत्यनीकस्तु प्रमादः, तेन च कषायादिप्रमादेन प्रमत्तः किंगुणो भवतीत्याह—

अणेगचित्ते खलु अयं पुरिसे, से केयणं अरिहए पूरित्तए, से अण्णवहाए अण्णपरियावाए अण्णपरिग्गहाए जणवयवहाए जणवयपरियावाए जणवयपरिग्गहाए (सू. ११४)

अनेकानि चित्तानि कृषिवाणिज्यावलगनादीनि यस्यासावनेकचित्तः, खलुरवधारणे, संसारसुखाभिलाष्यनेकचित्त एव भवति, 'अयं पुरुष' इति प्रत्यक्षगोचरीभूतः संसार्यपदिश्यते, अत्र च प्राग्गुपन्यस्तदधिघटिकया कपिलदरिद्रेण च दृष्टान्तो वाच्य इति। यथानेकचित्तो भवति स किं कुर्यादित्याह–'से केयण'मित्यादि, द्रव्यकेतनं चालिनी परिपूर्णकः समुद्रो वेति, भावकेतनं लोभेच्छा, तदसावनेकचित्तः केनाप्यभूतपूर्वं पुरयितुमर्हति, अर्थितया शक्याशक्यविचाराक्षमोऽशक्यानुष्ठानेऽपि प्रवर्त्तत इत्युक्तं भवति, स च लोभेच्छापूरणव्याकुलितमतिः किं कुर्यादित्याह–'से अण्णवहाए' इत्यादि, स लोभपूरणप्रवृत्तोऽन्येषां प्राणिनां वधाय भवति, तथाऽन्येषां शारीरमानसपरितापनाय, तथाऽन्येषां द्विपदचतुष्पदादीनां परिग्रहाय, जनपदे भवा जानपदाः कालप्रष्टा(पृष्ठा)दयो राजादयो वा तद्वधाय, मगधादिजनपदा वा तद्वधाय, तथा जनपदानां लोकानां परिवादाय–दस्युरयं पिशुनो वेरयेयं मर्मोद्घट्टनाय, तथा जनपदानां–मगधादीनां परिग्रहाय, प्रभवतीति सर्वत्राध्याहारः॥किं य एते लोभवृत्ता वधादिकाः क्रियाः कुर्वन्ति ते तथाभूता एवामते उतान्यथा ?, अन्यथाऽपीति दर्शयति—

आसेवित्ता एतं (वं) अट्ठं इच्चेवेगे संमुट्ठिया, तम्हा तं बिइयं नो सेवे निस्सारं पासिय नाणी, उववायं चवणं णच्चा, अणण्णं चर माहणे, से न छणे न छणावए छणंतं नाणुजा-

अनेकचित्त-१५ कार्यं

२०

॥१४७॥ २६

णइ, निव्विंद नंदिं, अरए पयासु, अणोमदंसी, निसण्णे पावेहिं कम्मेहिं (सू. १२५)



एवम्-अनन्तरोक्तमर्थमन्यवधपरिग्रहपरितापनादिकमासेव्य 'इत्येवे'ति लोभेच्छाप्रतिपूरणायैव 'एके' भरतराजादयः 'समुत्थिताः' सम्यग्योगत्रिकेणोत्थिताः संयमानुष्ठानेनोद्यतास्तेनैव भवेन सिद्धिमासादयन्ति। संयमसमुत्थानेन च समुत्थाय कामभोगान् हिंसादीनि चास्रवद्वाराणि हित्वा किं विधेयमित्याह-'तम्हा' यस्माद्वान्तभोगतया कृतप्रतिज्ञस्तस्माद्भोगलिप्सुतया तं द्वितीयं मृषावादमसंयमं वा नासेवेत। विषयार्थमसंयमः सेव्यते, ते च विषया निःसारा इति दर्शयति-'निस्सारं' इत्यादि, सारो हि विषयगणस्य तत्प्राप्तौ तृप्तिस्तदभावान्निःसारस्तं दृष्ट्वा 'ज्ञानी' तत्त्ववेदी न विषयाभिलाषं विदध्यात्। न केवलं मनुष्याणां, देवानामपि विषयसुखास्पदमनित्यं जीवितमिति च दर्शयति-'उववायं चवणं णच्चा' उपपातं-जन्म च्यवनं-पातस्तच्च ज्ञात्वा न विषयसङ्गोन्मुखो भवेदिति, यतो निःसारो विषयग्रामः समस्तः संसारो वा सर्वाणि च स्थानान्यशाश्वतानि, ततः किं कर्त्तव्यमित्याह—'अणण्ण'-मित्यादि, मोक्षमार्गादन्योऽसंयमो नान्योऽनन्यः—ज्ञानादिकस्तं चर 'माहण' इति मुनिः। किं च—'से न छणे' इत्यादि, स मुनिरनन्यसेवी प्राणिनो न क्षणुयात्—न हन्यात् नाप्यपरं घातयेत् घातयन्तं न समनुजानीयात्। चतुर्थव्रतसिद्ध्ये त्विदमुपदिश्यते-'निव्विंद' इत्यादि, निर्विन्दस्व-जुगुप्सस्व विषयजनितां 'नंदीं' प्रमोदं, किम्भूतः सन्?-'प्रजासु' स्त्रीषु अरक्तो-रागरहितो, भावयेच्च यथैते विषयाः किम्पाकफलोपमास्त्रपुषीफलनिबन्धनकटवः, अतस्तदर्थं परिग्रहाग्रहयोगपराङ्मुखो भवेदिति, उत्तमधर्म्मपालनार्थमाह-'अणोम' इत्यादि, अवमं-हीनं मिथ्यादर्शनाविरत्यादि तद्विपर्यस्तमनवमं तद्द्रष्टुं शीलमस्येत्यनवमदर्शी सम्यग्दर्श-

५

१०

नज्ञानचारित्रवान्, एवम्भूतः सन् प्रजानुगां नन्दिं निर्विन्दस्वेति सण्टङ्कः। यश्चानवमसंदर्शी स किम्भूतो भवतीत्याह–'निसन्न' इत्यादि, पापोपादानेभ्यः कर्म्मभ्यो निषण्णो–निर्विण्णः पापकर्म्मभ्यः पापकर्म्मसु वा कर्त्तव्येषु निवृत्त इतियावत् ॥ किं च—

कोहाइमाणं हणिया य वीरे, लोभस्स पासे निरयं महंतं। तम्हा य वीरे विरए वहाओ, छिंदिज्ज सोयं लहुभूयगामी ॥७॥ गंथं परिण्णाय इहऽज्ज ! धीरे, सोयं परिण्णाय चरिज्ज दंते। उम्मज्ज लद्धुं इह माणवेहिं, नो पाणिणं पाणे समारभिज्जा ॥८॥ सि त्तिबेमि। शीतो० द्वितीय उद्देशकः ३-२॥

क्रोध आदिर्येषां ते क्रोधादयः मीयते–परिच्छिद्यतेऽनेनेति मानं–स्वलक्षणं अनन्तानुबन्ध्यादिविशेषः, क्रोधादीनां मानं क्रोधादिमानं, क्रोधादिर्वा यो मानो–गर्वः क्रोधकारणस्तं हन्यात्, कोऽसौ ?—वीरः, द्वेषापनोदमुक्त्वा रागापनोदार्थमाह–'लोहस्स' इत्यादि, लोभस्यानन्तानुबन्ध्यादेश्चतुर्विधस्यापि स्थितिं विपाकं च पश्य, स्थितिर्महती सूक्ष्मसम्परायानुयायित्वाद् विपाकोऽप्यप्रतिष्ठानादिनरकापत्तेर्महान्, यत आगमः–"मच्छा मणुआ य सत्तमिं पुढविं" ते च महालोभाभिभूताः सप्तमपृथिवीभाजो भवन्तीति भावार्थः। यद्येवं ततः किं कर्त्तव्यमित्याह–'तम्हा' इत्यादि, यस्माल्लोभाभिभूताः प्राणिवधादिप्रवृत्तितया महानरकभाजो भवन्ति तस्माद्वीरो लोभहेतोः–वधाद्विरतः स्यात्, किंच–'छिंदिज्ज' इत्यादि, शोकं भावश्रोतो वा छिन्द्यात्–अपनयेत्, किम्भूतो ?–लघुभूतो–मोक्षः संयमो वा तं गन्तुं शीलमस्येति लघुभूतगामी, लघुभूतं वा कामयितुं शीलमस्येति लघुभूतकामी, पुनरप्युपदेशदानायाह–'गन्थ' मित्यादि, 'ग्रन्थं' बाह्याभ्यन्तरभेदभिन्नं ज्ञपरिज्ञया परिज्ञाय इहाद्यैव कालानतिपातेन धीरः सन् प्रत्याख्यान-

लघुभूतादि १५

२०

॥१४८॥

२६

परिज्ञया परित्यजेत्, किं च-'सोयं' मित्यादि, विषयाभिष्वङ्गः संसारश्रोतस्तत् ज्ञात्वा दान्त इन्द्रियनोइन्द्रियदमेन संयमं चरेदिति, किमभिसन्धाय संयमं चरेदित्याह-'उम्मज्जं लद्धुं' मित्यादि, इह मिथ्यात्वादिशैवलाच्छादितसंसारह्रदे जीवकच्छपः श्रुतिश्रद्धासंयमवीर्यरूपमुन्मज्जनमासाद्य-लब्ध्वा, अन्यत्र सम्पूर्णमोक्षमार्गासम्भवात् मानुष्येऽपीत्युक्तं, क्त्वाप्रत्ययान्तस्योत्तरक्रियासव्यपेक्षत्वादुत्तरक्रियामाह-'नो पाणिणं' मित्यादि, प्राणा विद्यन्ते येषां ते प्राणिनस्तेषां प्राणान्-पञ्चेन्द्रियत्रिविधबलोच्छ्वासनिश्वासायुष्कलक्षणान् 'नो समारभेथाः' न व्यपरोपयेः, तदुपघातकार्यनुष्ठानं मा कृथा इत्युक्तं भवति, इति परिसमाप्तौ, ब्रवीमीति पूर्ववत्। शीतोष्णीयाध्ययने द्वितीयोद्देशकटीका समाप्तेति।



---

उक्तो द्वितीयोद्देशकः, साम्प्रतं तृतीय आरभ्यते, अस्य चायमभिसम्बन्धः, इहानन्तरोद्देशके दुःखं तत्सहनं च प्रतिपादितं, न च तत्सहनेनैव संयमानुष्ठानरहितेन पापकर्माकरणतया वा श्रमणो भवतीत्येतत् प्रागुद्देशार्थाधिकारनिर्दिष्टमुच्यते, ततोऽनेन सम्बन्धेनायातस्यास्योद्देशकस्य सूत्रानुगमे सूत्रमुच्चारयितव्यं, तच्चेदम्—



**संधिं लोयस्स जाणित्ता, आयओ बहिया पास, तम्हा न हंता न विघायए, जमिणं अन्नमन्नवितिगिच्छाए पडिलेहाए न करेइ पावं कम्मं, किं तत्थ मुणी कारणं सिया? (सू. ११६)**



तत्र सन्धिर्द्रव्यतो भावतश्च, तत्र द्रव्यतः कुड्यादिविवरं भावतः कर्मविवरं, तत्र दर्शनमोहनीयं यदुदीर्णं तत्क्षीणं शेषमुपशान्तमित्ययं सम्यक्त्वावाप्तिलक्षणो भावसन्धिः, यदि वा ज्ञानावरणीयं विशिष्टक्षायोपशमिकभावमुपगतमिति अयं सम्यग्ज्ञानावाप्तिल-

श्री० २ उ०

क्षणः सन्धिः, अथवा चारित्रमोहनीयक्षयोपशमात्मकः सन्धिस्तं ज्ञात्वा न प्रमादः श्रेयानिति, यथा हि लोकस्य चारकाद्यवरुद्धस्य कुड्यनिगडादीनां सन्धि–छिद्रं ज्ञात्वोपलभ्य न प्रमादः श्रेयान्, एवं मुमुक्षोरपि कर्मविवरमासाद्य लवक्षणमपि पुत्रकलत्रसंसारसुखव्यामोहो न श्रेयसे भवतीति, यदिवा सन्धानं सन्धिः, स च भावसन्धिर्ज्ञानदर्शनचारित्राध्यवसायस्य कर्मोदयात् त्रुट्यतः पुनः सन्धानं–मीलनम्, एतत्क्षायोपशमिकादिभावलोकस्य विभक्तिपरिणामाद्वा लोके ज्ञानदर्शनचारित्रार्हं भावसन्धिं ज्ञात्वा तदक्षुण्णप्रतिपालनाय विधेयमिति, यदिवा सन्धिः–अवसरो धर्मानुष्ठानस्य तं ज्ञात्वा लोकस्य–भूतग्रामस्य दुःखोत्पादनानुष्ठानं न कुर्यात्। सर्वत्रात्मौपम्यं समाचरेदित्याह–'आयओ' इत्यादि, यथा ह्यात्मनः सुखमिष्टमितरत्त्वन्यथा तथा बहिरपि–आत्मनो व्यतिरिक्तानामपि जन्तूनां सुखप्रियत्वमसुखाप्रियत्वं च 'पश्य' अवधारय। तदेवमात्मसमतां सर्वप्राणिनामवधार्य किं कर्त्तव्यमित्याह–'तम्हा' इत्यादि, यस्मात्सर्वेऽपि जन्तवो दुःखद्विषः सुखलिप्सवस्तस्मात्तेषां 'न हन्ता' न व्यापादकः स्यात् नाप्यपरैस्तान् जन्तून् विविधैः–नानाप्रकारैरुपायैर्घातयेत् विघातयेदिति, यद्यपि कांश्चित् स्थूलान् सत्त्वान् स्वयं पाषण्डिनो न घ्नन्ति तथाऽप्यौद्देशिकसन्निध्यादिपरिभोगानुमतेरपरैर्घातयन्ति। न चैकान्तेन पापकर्माकरणमात्रतया श्रमणो भवतीति दर्शयति–'जमिणं' मित्यादि, यदिदं–यदेतत् पापकर्माकरणताकारणं, किं तद्?, दर्शयति–अन्योऽन्यस्य परस्परं या विचिकित्सा–आशङ्का परस्परतो भयं लज्जा वा तया तां वा प्रत्युपेक्ष्य परस्पराशङ्कयाऽपेक्षया वा पापं–पापोपादानं कर्म्मानुष्ठानं 'न करोति' न विधत्ते, किं प्रश्ने क्षेपे वा, 'तत्र' तस्मिन् पापकर्म्माकरणे किं मुनिः कारणं स्यात्?, किं मुनिरितिकृत्वा पापकर्म न करोति?, काक्वा पृच्छति, यदिवा–यदि नामासौ यथोक्तनिमित्तात्पापानुष्ठानविधायी न भवेत् किमेतावतैव मुनिरसौ?, नैव मुनिरित्यर्थः, अतोऽध्यवसायो हि मुनिभावकारणं, स च तत्र

सन्धिः

१५

२०

॥१४९॥

२७

न विद्यते, अपरोपाध्यावेशात्, विनेयो वा पृच्छति-यदिदं परस्पराशङ्कया आधाकर्म्मादिपरिहरणं तन्मुनिभावाङ्गतां यात्याहोस्वि-न्नेति ?, आचार्य आह-सौम्य ! निरस्तापरव्यापारः शृणु-'जमिणं' मित्यादि, अपरोपाधिनिरस्तहेयव्यापारत्वमेव मुनिभावकारण-मिति भावार्थः, यतः शुभान्तःकरणपरिणामव्यापारापादितक्रियस्य मुनिभावो, नान्यथेति, अयं तावन्निश्चयनयाभिप्रायो, व्यवहारा-भिप्रायेण तूच्यते-यो हि सम्यग्दृष्टिरुत्क्षिप्तपञ्चमहाव्रतभारस्तद्वहने प्रमाद्यन्नप्यपरसमानसाधुलज्जया गुर्व्वाद्याराध्यभयेन गौरवेण वा केनचिदाधाकर्म्मादि परिहरन् प्रत्युपेक्षणादिकाः क्रियाः करोति, यदि च तीर्थोद्भासनाय मासक्षपणातापनादिका जनविज्ञाताः क्रियाः करोति, तत्र तस्य मुनिभाव एव कारणं, तद्व्यापारापादितपारम्पर्ये शुभाध्यवसायोपपत्तेः ॥ तदेवं शुभान्तःकरणव्यापारवि-कलस्य मुनित्वे सदसद्भावः प्रदर्शितः, कथं तर्हि नैश्चयिको मुनिभाव इत्यत आह—

प्र. आ. १६५



समयं तत्थुवेहाए अप्पाणं विप्पसायए-अणन्नपरमं नाणी, नो पमाए कयाइवि । आय-गुत्ते सया वीरे, जायामायाइ जावए ॥१०॥ विरागं रूवेहिं गच्छिज्जा महया खुड्डएहि य, आगई गइं परिण्णाय दोहिवि अंतेहिं अदिस्समाणेहिं से न छिज्जइ न भिज्जइ न डज्झइ न हंमइ कंचणं सव्वलोए ( सू. ११७ )



समभावः समता तां तत्रोत्प्रेक्ष्य-पर्यालोच्य समताव्यवस्थितो यद्यत् करोति येन केनचित्प्रकारेणानेषणीयपरिहरणं लज्जादिना जनविदितं चोपवासादि तत्सर्वं मुनिभावकारणमिति, यदिवा समयम्-आगमं तत्रोत्प्रेक्ष्य यदागमोक्तविधिनाऽनुष्ठानं तत्सर्वं मुनि-

२६ १.
३ उद्दे०

अप्रमादः
१५

भावकारणमिति भावार्थः, तेन चागमोत्प्रेक्षणेन समतोत्प्रेक्षया वाऽऽत्मानं 'विप्रसादयेद्' विविधं प्रसादयेद् आगमपर्यालोचनेन समतादृष्ट्या वा आत्मानं विविधैरुपायैरिन्द्रियप्रणिधानाप्रमादादिभिः प्रसन्नं विदध्याद्। आत्मप्रसन्नता च संयमस्थस्य भवति, तत्राप्रमादवता भाव्यमित्याह च- 'अणण्णपरम'मित्याद्यनुष्टुप्, न विद्यतेऽन्यः परमः-प्रधानोऽस्मादित्यनन्यपरमः-संयमस्तं 'ज्ञानी' परमार्थवित् 'नो प्रमादयेत्' तस्य प्रमादं न कुर्यात्कदाचिदपि, यथा चाप्रमादवत्ता भवति तथा दर्शयितुमाह-'आयगुत्ते' इत्यादि, इन्द्रियनोइन्द्रियात्मना गुप्तः आत्मगुप्तः 'सदा' सर्वकालं यात्रा-संयमयात्रा तस्यांमात्रा यात्रामात्रा, मात्रा च 'अच्चाहारो न सहे' इत्यादि,तयाऽऽत्मानं यापयेद्,यथा विषयानुदीरणेन दीर्घकालं संयमाधारदेहप्रतिपालनं भवति तथा कुर्यादित्युक्तं भवति, उक्तं च-"आहारार्थं कर्म्म कुर्यादनिन्द्यं, स्यादाहारः प्राणसन्धारणार्थम्। प्राणा धार्यास्तत्त्वजिज्ञासनाय, तत्त्वं ज्ञेयं येन भूयो न भू(निष्ठां समे०)यात् ॥१॥" सैवात्मगुप्तता कथं स्यादिति चेदाह-'विराग' मित्यादि, विरजनं विरागस्तं विरागं रूपेषु मनोज्ञेषु चक्षुर्गोचरीभूतेषु 'गच्छेद्' यायात्, रूपमतीवाऽऽक्षेपकारि अतो रूपग्रहणम्, अन्यथा शेषविषयेष्वपि विरागं गच्छेदित्युक्तं स्यात्, महता-दिव्यभावेन यद्यथवस्थितं रूपं क्षुल्लकेषु वा-मनुष्यरूपेषु सर्वत्र विरागं कुर्यादिति, अथवा दिव्यादि प्रत्येकं महत् क्षुल्लं चेति, क्रिया पूर्ववत्, नागार्जुनीयास्तु पठन्ति-विसयंमि पंचगंमीवि, दुविहंमि तियं तियं। भावओ सुट्ठु जाणित्ता, से न लिप्पइ दोसुवि ॥१॥" शब्दादिविषयपञ्चकेऽपि इष्टानिष्टरूपतया द्विविधे(तियं)हीनमध्यमोत्कृष्टभेदमित्येतत् भावतः-परमार्थतः सुष्ठु ज्ञात्वा स मुनिः पापेन कर्म्मणा द्वाभ्यामपि-रागद्वेषाभ्यां न लिप्यते, तदकरणादिति भावः, स्यात्-किमालम्ब्यैतत्कर्त्तव्यमित्याह-'आगइ' मित्यादि, आगमनम्-आगतिः. सा च तिर्यङ्मनुष्ययोश्चतुर्द्धा, चतुर्विधनरकादिगत्यागमनसद्भावाद्, देवनारकयोर्द्वेधा, तिर्यग्मनुष्यगतिभ्यामेवागमनसद्भावाद्,

२०

एवं [देव]गतिरपि, मनुष्येषु तु पञ्चधा, तत्र मोक्षगतिसद्भावाद्, अतस्तामागतिं गतिं च परिज्ञाय संसारचक्रवालेऽरघट्टघटीयन्त्रन्यायमवेत्य मनुष्यत्वे च मोक्षगतिसद्भावमाकलय्यान्तहेतुत्वादन्तौ-रागद्वेषौ ताभ्यां द्वाभ्यामन्ताभ्यामदृश्यमानाभ्यामनपदिश्यमानाभ्यां वा, क्त्वाप्रत्ययस्योत्तरक्रियामाह—'से' इत्यादि, सः-आगतिगतिपरिज्ञाता रागद्वेषाभ्यामनपदिश्यमानो न छिद्यतेऽस्यादिना न भिद्यते कुन्तादिना न दह्यते पावकादिना न हन्यते नरकगत्यानुपूर्व्यादिना बहुशः, अथवा रागद्वेषाभावात् सिद्धयत्येव, तदवस्थस्य चैतानि छेदनादीनि विशेषणानि, 'कंचण' मिति विभक्तिपरिणामात् केनचित्सर्वस्मिन्नपि लोके न छिद्यते नापि भिद्यते रागद्वेषोपशमादिति, तदेनमागतिगतिपरिज्ञानाद्रागद्वेषपरित्यागस्तदभावाच्च छेदनादिसंसारदुःखाभावः। अपरे च साम्प्रतेक्षिणः कुतो वयमागताः? क्व यास्यामः? किं वा तत्र नः सम्पत्स्यते?, नैवं भावयन्त्यतः संसारभ्रमणपात्रतामनुभवन्तीति दर्शयितुमाह—

अवरेण पुव्विं न सरंति एगे, किमस्स तीयं? किं वाऽऽगमिस्सं?। भासंति एगे इह माणवाओ, जमस्स तीयं तमागमिस्सं ॥११॥ नाईयमट्ठं न य आगमिस्सं, अट्ठं नियच्छन्ति तहागया उ। विहुयकप्पे एयाणुपस्सी, निज्झोसइत्ता खवगे महेसी ॥१२॥





रूपकं, 'अपरेण' पश्चात्कालभाविना सह पूर्वमतिक्रान्तं न सरन्त्येके-अन्ये मोहाज्ञानावृतबुद्धयो यथा किमस्य जन्तोर्नरकादिभवोद्भूतं बालकुमारादिवयोपचितं वा दुःखायतीतं किं वाऽऽगमिस्संति-आगामिनि काले किमस्य सुखाभिलाषिणो दुःखद्विषो भावीति, यदि पुनरतीतागामिपर्यालोचनं स्यान्न तर्हि संसाररतिः स्याद्, उक्तं च—"केण ममेत्थुप्पत्ती? कहं इओ तह पुणोऽवि गंतव्वं?। जो

एत्तियंपि चिंतइ इत्थं सो को न निव्विण्णो ? ॥१॥" एके पुनर्महामिथ्याज्ञानिनो भाषन्ते–'इह' अस्मिन् संसारे मनुष्यलोके वा मानवा–मनुष्या यथा यदस्य जन्तोरतीतं स्त्रीपुंनपुंसकसुभगदुर्भगश्वगोमायुब्राह्मणक्षत्रियविट्शूद्रादि तदावेशात् पुनरप्यन्यजन्मानुभूवं तदेवागमिस्सं–आगामीति, यदिवा न विद्यते परः–प्रधानोऽस्मादित्यपरः–संयमस्तेन वासितविचाः सन्तः 'पूर्वं' पूर्वानुभूतं विषयसुखोपभोगादि 'न सरन्ति' न तदनुस्मृतिं कुर्वते एके–रागद्वेषविप्रमुक्ताः, तथाऽनागतदिव्याङ्गनाभोगमपि नाकाङ्क्षन्ति, किं च–यस्य जन्तोरतीतं सुखदुःखादि किं वाऽऽगमिष्यम्–आगामीत्येतदपि न सरन्ति, यदिवा कियान् कालोऽतिक्रान्तः?, कियानेष्यति?, लोकोत्तरास्तु भाषन्ते–एके रागद्वेषरहिताः केवलिनश्चतुर्दशपूर्वविदो वा यदस्य जन्तोरनादिनिधनत्वात् कालशरीरसुखाद्यतीतमागामिन्यपि तदेवेति, अपरे तु पठन्ति–"अवरेण पुव्वं किह से अतीतं, किह आगमिस्सं न सरंति एगे। भासन्ति एगे इह माणवाओ, जह स अईअं तह आगमिस्सं ॥१॥" अपरेण–जन्मादिना सार्द्धं पूर्वम्–अतिक्रान्तं जन्मादि न सरन्ति, 'कथं वा' केन वा प्रकारेणातीतं सुखदुःखादि, कथं चैष्यमित्येतदपि न सरन्ति, एके भाषन्ते–किमत्र ज्ञेयं ?, यथैवास्य रागद्वेषमोहसमुत्थैः कर्म्मभिर्बध्यमानस्य जन्तोस्तद्विपाकांश्चानुभवतः संसारस्य यदतिक्रान्तमागाम्यपि तत्प्रकारमेवेति, यदिवा प्रमादविषयकषायादिना कर्म्माण्युपचित्यैष्टानिष्टविषयाननुभवतः सर्वज्ञवाक्सुधास्वादान् संविदो यथा संसारोऽतिक्रान्तस्तथाऽऽगाम्यपि यास्यति, ये तु पुनः संसारार्णवतीरमाजस्ते पूर्वोत्तरवेदिन इत्येतद्दर्शयितुमाह–'नाईय' मित्यादि, तथैव–अपुनरावृत्त्या गतं–गमनं येषां ते तथागताः–सिद्धाः, यदिवा यथैव ज्ञेयं तथैव गतं–ज्ञानं येषां ते तथागताः–सर्वज्ञाः, ते तु नातीतमर्थमनागतरूपतयैव नियच्छन्ति–अवधारयन्ति,

१ तेन समारोप्यतिः केतः नत्रा पुनरपि गन्तव्यम्। य इयदपि चिन्तयति यत्र स कः न निर्विण्णः ? ॥१॥

अतीतानागतज्ञानं

नाप्यनागतमतिक्रान्तरूपतयैव, विचित्रत्वात् परिणतेः, पुनरर्थग्रहणं पर्यायरूपार्थार्थं, द्रव्यार्थतया त्वेकत्वमेवेति, यदिवा नातीतमर्थं विषयभोगादिकं नाप्यनागतं दिव्याङ्गनासङ्गादिकं स्मरन्त्यभिलपन्ति वा, के?, तथागताः-रागद्वेषाभावात् पुनराशृत्तिरहिताः, तुशब्दो विशेषमाह, यथा मोहोदयादेके पूर्वमागामि वाऽभिलपन्ति, सर्वज्ञास्तु नैवमिति। तन्मार्गानुयाय्यप्येवम्भूत एवेति दर्शयितुमाह- 'विहूयकप्पे' इत्यादि, विविधम्-अनेकधा धूतम्-अपनीतमष्टप्रकारं कर्म्म येन स विधूतः, कोऽसौ?-कल्पः-आचारो, विधूतः कल्पो यस्य साधोः स विधूतकल्पः स एतदनुदर्शी भवति, अतीतानागतसुखाभिलाषी न भवतीतियावत्, एतदनुदर्शी च किंगुणो भवतीत्याह-'निज्झोसे' इत्यादि, पूर्वोपचितकर्म्मणां निर्ज्झोषयिता-क्षपकः क्षपयिष्यति वा, तृजन्तमेतल्ल्युडन्तं वा॥ कर्म्मक्षपणायोद्यतस्य च धर्म्मध्यायिनः शुक्लध्यायिनो वा महायोगीश्वरस्य निरस्तसंसारसुखदुःखविकल्पाभासस्य यत्स्यात्तद्दर्शयति-..



**का अरई के आणंदे?, इत्थंपि अग्गहे चरे, सव्वं हासं परिच्चज्ज आलीणगुत्तो परिव्वए, पुरिसा!-तुममेव तुमं मित्तं, किं बहिया मित्तमिच्छसि? (सू. ११८)**



इष्टाप्राप्तिविनाशोत्थो मानसो विकारोऽरतिः, अभिलषितार्थावाप्तावानन्दः, योगिनश्चित्तस्य तु धर्म्मशुक्लध्यानावेशावष्टब्धध्येयान्तरावकाशस्यारत्यानन्दयोरुपादानकारणाभावादनुत्थानमेवेत्यतोऽपदिश्यते-केयमरतिर्नाम? को वाऽऽनन्द इति?, नास्त्येवेतरजनक्षुण्णोऽयं विकल्प इति। एवं तर्ह्यरतिरसंयमे संयमे चानन्द इत्येतदन्यत्रानुमतमनेनाभिप्रायेण न विधेयमित्येतदनिच्छतोऽप्यापन्नमिति चेत्, न, अभिप्रायापरिज्ञानाद्, यतोऽत्रारतिरतिविकल्पाध्यवसायो निषिषित्सितः, न प्रसज्ज्यपाते अप्यरतिरती, तदाह-'एत्थंपी'- त्यादि, अत्राप्यरतावानन्दे चोपसर्जनप्राये न विद्यते 'ग्रहो' गार्द्ध्यं तात्पर्यं यस्य सोऽग्रहः, स एवम्भूतश्चरेद्-अवतिष्ठेत, इदमुक्तं

भवति—शुक्लध्यानादारतोऽरत्यानन्दौ कुतश्चिन्निमित्तादायातौ तदाग्रहग्रहरहितस्तानप्यनुचरेदिति । पुनरप्युपदेशदानायाह—'सव्व'—मित्यादि, सर्वं हास्यं तदास्पदं वा परित्यज्याङ्—मर्यादयेन्द्रियनिरोधादिक्रया लीनः आलीनो गुप्तो मनोवाक्कायकर्म्मभिः कूर्मवद्वा संवृतगात्रः, आलीनश्चासौ गुप्तश्चालीनगुप्तः स एवम्भूतः परिः—समन्ताद्व्रजेत् परिव्रजेत्—संयमानुष्ठाननिधायी भवेदिति । तस्यं च मुमुक्षोरात्मसामर्थ्यात् संयमानुष्ठानं फलवद्भवति, न परोपरोधेनेति दर्शयति—'पुरिसा' इत्यादि, यदिवा त्यक्तगृहपुत्रकलत्रधनधान्यहिरण्यादितया अकिञ्चनस्य समतृणमणिमुक्तालेष्टुकाञ्चनस्य मुमुक्षोरुपसर्गव्याकुलितमतेः कदाचिन्मित्राद्याशंसा भवेत्तदपनोदार्थमाह—'पुरिसा' इत्यादि, पूर्णः सुखदुःखयोःपुरि शयनाद्वा पुरुषो—जन्तुः, पुरुषद्वारामन्त्रणं तु पुरुषस्यैवोपदेशार्हत्वात्तदनुष्ठानसमर्थत्वाच्चेति, कश्चित्संसारादुद्विग्नो विषमस्थितो वाऽऽत्मानमनुशास्ति, परेण वा साध्वादिनाऽनुशास्यते—यथा हे पुरुष—हे जीव ! त्वम सदनुष्ठानविधायित्वाच्चमेव मित्रं, विपर्ययाच्चामित्रः, किं मिति बहिर्मित्रमिच्छसि ?—मृगयसे, यतो ह्युपकारि मित्रं, स चोपकारः पारमार्थिकात्यन्तिकैकान्तिकगुणोपेतं सन्मार्गपतितमात्मानं विहाय नान्येन शक्यो विधातुं, योऽपि संसारमाहात्म्योपकारितया मित्राभामाभिमानस्तन्मोहविजृम्भितं, यतो महाव्यसनोपनिपातार्णवपतनहेतुत्वादमित्र एवासौ, इदमुक्तं भवति—आत्मैवात्मनोऽप्रमत्तो मित्रम्, आत्यन्तिकैकान्तिकपरमार्थसुखोत्पादनात्, विपर्ययाच्च विपर्ययो, न बहिर्मित्रमन्वेष्टव्यमिति, यस्त्वयं व ह्यो मित्रामित्रविकल्पः सोऽदृष्टोदयनिमित्तत्वादौपचारिक इति, उक्तं हि—"दुप्पत्थिओ अमित्तं अप्पा सुप्पत्थिओ अ ते मित्तं । सुहदुक्खकारणाओ अप्पा मित्तं अमित्तं च ॥१॥" तथा—"अप्येकं मरणं कुर्यात्, संक्रुद्धो बलवानरिः । मरणानि त्वनन्तानि, जन्मानि च करोत्य

१ दुष्प्रस्थितोऽमित्र आत्मा सुप्रस्थितश्च ते मित्रम् । सुखदुःखकारणात् आत्मा मित्रममित्रं च ॥१॥

२ शीतो० ३ उद्दे०

प्र. आ. १६८

१५ मित्रामित्रं

२०

२७

यम् ॥१॥" यो हि निर्वाणनिर्वर्त्तकं व्रतमाचरति स आत्मनो मित्रं, स चैवम्भूतः कुतोऽवगन्तव्यः ? किंफलश्चेत्याह—

जं जाणिज्जा उच्चालइयं तं जाणिज्जा दूरालइयं, जं जाणिज्जा दूरालइयं तं जाणिज्जा उच्चालइयं, पुरिसा ! अत्ताणमेवं अभिणिगिज्झ एवं दुक्खा पमुच्चसि, पुरिसा ! सच्चमेव समभिजाणाहि, सच्चस्स आणाए से उवट्ठिए मेहावी मारं तरइ, सहिओ धम्ममायाय सेयं समणुपस्सइ (सू. ११९)

'यं' पुरुषं 'जानीयात्' परिच्छिन्द्यात् कर्म्मणां विषयसङ्गानां चोच्चालयितारम्—अपनेतारं तं जानीयाद् 'दूरालयिक'मिति, दूरे सर्वहेयधर्म्मेभ्य इत्यालयो दूरालयः—मोक्षस्तन्मार्गो वा स विद्यते यस्येति मत्वर्थीयष्ठन् दूरालयिकस्तमिति, हेतुहेतुमद्भावं दर्शयितुं गतप्रत्यागतसूत्रमाह—'जं जाणेज्जे'त्यादि, यं जानीयाद्दूरालयिकं तं जानीयादुच्चालयितारमिति, एतदुक्तं भवति—यो हि कर्म्मणां तदास्रवद्वाराणां चोच्चालयिता—अपनेता स मोक्षमार्गव्यवस्थितो मुक्तो वेति, यो वा सन्मार्गानुष्ठायी स कर्म्मणामुच्चालयितेति । स च आत्मनो मित्रमतोऽपदिश्यते—'पुरिसा' इत्यादि, हे जीव ! आत्मानमेवाभिनिगृह्य धर्म्मध्यानाद्बहिर्विषयाभिष्वङ्गाय निःसरन्तमवरुध्य ततः 'एवम्' अनेन प्रकारेण दुःखात्सकाशादात्मानं प्रमोक्ष्यसि, एवमात्मा कर्म्मणां उच्चालयिताऽऽत्मनो मित्रं भवति । अपि च—'पुरिसा' इत्यादि, हे पुरुष ! सद्भ्यो हितः सत्यः—संयमस्तमेवापरव्यापारनिरपेक्षः समभिजानीहि—आसेवनापरिज्ञया समनुतिष्ठ, यदिवा सत्यमेव समभिजानीहि—गुरुसाक्षिगृहीतप्रतिज्ञानिर्वाहको भव, यदिवा सत्यः—आगमस्तत्परिज्ञानं च मुमुक्षोस्तदु-



५

१०

क्तप्रतिपालनं। किमर्थमेतदिति चेदाह—'सचस्से'त्यादि, सत्यस्य—आगमस्याज्ञयोपस्थितः सन् मेधावी 'मार'संसार तरति, किं च—'सही'त्यादि, सहितो—ज्ञानादियुक्तः सह हितेन वा युक्तः सहितः 'धर्म्मं' श्रुतचारित्राख्यं 'आदाय' गृहीत्वा, किं करोतीत्याह—'श्रेयः' पुण्यमात्महितं वा सम्यग्—अविपरीततयाऽनुपश्यति समनुपश्यति। उक्तोऽप्रमत्तः तद्गुणाश्च, तद्विपर्ययमाह—

दुहओ जीवियस्स परिवंदणमाणणपूयणाए, जंसि एगे पमायंति (सू. १२०)

द्विधा—रागद्वेषप्रकारद्वयेनात्मपरनिमित्तमैहिकामुष्मिकार्थं वा यदिवा द्वाभ्यां—रागद्वेषाभ्यां हतो द्विहतो दुष्टं हतो वा दुर्हतः, स किं कुर्याद्?—जीवितस्य कदलीगर्भनिःसारस्य तडिल्लतासमुल्लसितचञ्चलस्य परिवन्दनमाननपूजनार्थं हिंसादिषु प्रवर्त्तते, परिवन्दनं—परिसंस्तवस्तदर्थमाचेष्टते, लावकादिमांसोपभोगपुष्टसर्वाङ्गोपाङ्गसुन्दरमालोक्य मां जनाः सुखमेव परिवन्दिष्यन्ते, श्रीमान् जीयास्त्वं बहूनि वर्षशतसहस्राणीत्येवमादि परिवन्दनं, तथा माननार्थं कर्म्मोपचिनोति, दृष्टौरसबलपराक्रमं मामन्येऽभ्युत्थानविनयासनदानाञ्जलिप्रग्रहैर्मानयिष्यन्तीत्यादि माननं, तथा पूजनार्थमपि प्रवर्त्तमानाः कर्मास्रवैरात्मानं भावयन्ति, मम हि कृतविषयस्योपचितद्रव्यप्राग्भारस्य परो दानमानसत्कारप्रणामसेवाविशेषैः पूजां करिष्यतीत्यादि पूजनं, तदेवमर्थं कर्मोपचिनोति। किं च—'जंसि एगे'इत्यादि, यस्मिन् परिवन्दनादिनिमित्ते एके रागद्वेषोपहताः प्रमाद्यन्ति, न ते आत्मने हिताः॥ एतद्विपरीतं त्वाह—

सहिओ दुक्खमत्ताए पुट्ठो नो झंझाए, पासिमं दविए लोकालोकपवंचाओ मुच्चइ (सू० १२१)-त्तिबेमि ॥ तृतीय उद्देशो ३–३ ॥

सहितो-ज्ञानादिसमन्वितो हितयुक्तो वा दुःखमात्रया उपसर्गजनितया व्याध्युद्भवया वा स्पृष्टः सन् 'नो झंझाए'त्ति नो व्याकुलितमतिर्भवेत्, तदपनयनाय नोद्यच्छेद्, इष्टविषयावाप्तौ रागझञ्झा अनिष्टावाप्तौ च द्वेषझञ्झेति, तामुभयप्रकारामपि व्याकुलतां परित्यजेदिति भावः। किं च-'पासिम' मित्यादि, यदुक्तमुद्देशकादेरारभ्यानन्तरसूत्रं यावत् तमिममर्थं पश्य-परिच्छिन्द्धि कर्त्तव्याकर्त्तव्यतया विवेकेनावधारय, कोऽसौ ?-द्रव्यभूतो-मुक्तिगमनयोग्यः साधुरित्यर्थः, एवम्भूतश्च कं गुणमवाप्नोति ?-आलोक्यत इत्यालोकः, कर्म्मणि घञ्, लोके चतुर्दशरज्वात्मके आलोको लोकालोकस्तस्य प्रपञ्चः—पर्याप्तकापर्याप्तकसुभगादिद्वन्द्वविकल्पः, तद्यथा-नारको नारकत्वेनावलोक्यते, एकेन्द्रियादिरेकेन्द्रिय-(यादि)त्वेन, एवं पर्याप्तकापर्याप्तकाद्यपि वाच्यं, तदेवम्भूतात्प्रपञ्चान्मुच्यते-चतुर्दशजीवस्थानान्यतरव्यपदेशार्हो न भवतीतियावद्। इतिः परिसमाप्तौ, ब्रवीमीति पूर्ववत्॥ इति शीतोष्णीयाध्ययने तृतीयोद्देशकटीका समाप्ता॥



---

उक्तस्तृतीयोद्देशकः, साम्प्रतं चतुर्थ आरभ्यते, यस्य चायमभिसम्बन्धः-इहानन्तरोद्देशके पापकर्म्माकरणतया दुःखसहनादेव केवलाच्छ्रमणो न भवतीति अपि तु निष्प्रत्यूहसंयमानुष्ठानादित्येतत्प्रतिपादितं, निष्प्रत्यूहता च कषायवमनाद्भवति, तदधुना प्रागुद्देशार्थाधिकारनिर्दिष्टं प्रतिपाद्यते, तदनेन सम्बन्धेनायातस्यास्योद्देशकस्य सूत्रानुगमे सूत्रमुच्चारयितव्यं, तच्चेदम्—



**से वंता कोहं च माणं च मायं च लोभं च, एयं पासगस्स दंसणं, उवरयसत्थस्स पलि-**

यंतकरस्स, आयाणं सगडब्भि (सू. १२२)

'स' ज्ञानादिमहितो दुःखमात्रास्पृष्टोऽव्याकुलितमतिर्द्रव्यभूतो लोकालोकप्रपञ्चात् मुक्तदृश्यः स्वपरापकारिणं क्रोधं च वमिता 'टुवम् उद्गिरणे' इत्यस्मात्ताच्छीलिकस्तृन्, तद्योगे च षष्ठ्याः प्रतिषेधे क्रोधशब्दाद् द्वितीया, ल्युडन्तं वैतत्, यो हि यथोक्तसंयमानुष्ठायी सोऽचिरात् क्रोधं वमिष्यति, एवमुत्तरत्रापि यथासम्भवमायोज्यं, तत्रात्मात्मीयोपघातकारिणि क्रोधकर्म्मविपाकोदयात्क्रोधः, जातिकुलरूपबलादिसमुत्थो गर्वो मानः, परवञ्चनाध्यवसायो माया, तृष्णापरिग्रहपरिणामो लोभः, क्षपणोपशमक्रममाश्रित्य च क्रोधादिक्रमोपन्यासः, अनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणसञ्ज्वलनस्वगतभेदाविर्भावनाय व्यस्तनिर्देशः, चशब्दस्तु पर्वतपृथ्वीरेणुजलराजिलक्षणलक्षकः क्रोधस्य, शैलस्तम्भास्थिकाष्ठतिनिशलतालक्षणलक्षको मानस्य, वंशकुडङ्गीमेषशृङ्गगोमूत्रिकाऽवलेखकलक्षणलक्षको मायायाः, कृमिरागकर्दमखञ्जनहरिद्रालक्षणसूचको लोभस्य, तथा यावज्जीवसंवत्सरचतुर्मासपक्षस्थित्याविर्भावकश्चेति । तदेवं क्रोधमानमायालोभवमनादेव पारमार्थिकः श्रमणभावो, न तत्सम्भवे सति, यत उक्तम्—सामण्णमणुचरंतस्स कसाया जस्स उक्कडा हुंति । मन्नामि उच्छुपुष्फं व निप्फलं तस्स सामण्णं ॥१॥ जं अज्जिअं चरित्तं देसूणाएवि पुव्वकोडीए । तंपि कसाइयमेत्तो हारेइ नरो मुहुत्तेण ॥ २ ॥" । स्वमनीषिकापरिहारार्थं गौतमस्वाम्याह—'एय' मित्यादि, 'एतद्' यत्कषायवमनमनन्तरमुपादेशि तत् 'पश्यकस्यं दर्शनं' सर्वं निरावरणत्वात्पश्यति—उपलभत इति पश्यः स एव पश्यकः तीर्थकृत् श्रीवर्द्धमानस्वामी तस्य

१ श्रामण्यमनुचरतः कषाया यस्योत्कटा भवन्ति । मन्ये इक्षुपुष्पवत् निष्फलं तस्य श्रामण्यम् ॥१॥ यदर्जितं चारित्रं देशोनयाऽपि पूर्वकोट्या । तदपि कषायितमात्रो हारयति नरो मुहूर्तेन ॥२॥





१५

२०

२४

दर्शनम्—अभिप्रायो, यदिवा दृश्यते यथावस्थितं वस्तुतत्त्वमनेनेति दर्शनम्—उपदेशो, न स्वमनीषिका, किम्भूतस्य पश्यकस्य दर्शनमित्याह–'उवरय' इत्यादि, उपरतं द्रव्यभावशस्त्रं यस्यासावुपरतशस्त्र', शस्त्राद्वोपरतः शस्त्रोपरतः, भावे शस्त्रं त्वसंयमः कषाया वा, तस्मादुपरतः, इदमुक्तं भवति–तीर्थकृतोऽपि कषायवमनमृते न निरावरणसकलपदार्थग्राहिपरमज्ञानावाप्तिः, तदभावे च सिद्धिवधूसमागमसुखाभावः, एवमन्येनापि मुमुक्षुणा तदुपदेशवर्त्तिना तन्मार्गानुयायिना कषायवमनं विधेयमिति, शस्त्रोपरमकार्यं दर्शयन् पुनरपि तीर्थकरविशेषणमाह–'पलियंतकरस्स' पर्यन्तं कर्म्मणां संसारस्य वा करोति तच्छीलश्चेति पर्यन्तकरस्तस्यैतद् दर्शनमिति सण्टङ्कः। यथा च तीर्थकृत् संयमापकारिकषायशस्त्रोपरमात्कर्म्मपर्यन्तकृद् एवमन्योऽपि तदुक्तानुसारीति दर्शयितुमाह–'आयाण' मित्यादि, आदीयते–गृह्यते आत्मप्रदेशैः सह श्लिष्यतेऽष्टप्रकारं कर्म्म येन तदादानं–हिंसाद्याश्रवद्वारमष्टादशपापस्थानरूपं वा तत्स्थितेर्निमित्तत्वात्कषाया वाऽऽदानं तद्भिता स्वकृतभिद्भवति, स्वकृतम्–अनेकजन्मोपात्तं कर्म्म भिनत्तीति स्वकृतभित्, यो ह्यादानं कर्म्मणां कषायादि निरुणद्धि सोऽपूर्वकर्म्मप्रतिपिद्धप्रवेशः स्वकृतकर्म्मणां भेत्ता भवतीति भावः, तीर्थकरोपदेशेनापि परकृतकर्म्मक्षपणोपायाभावात् स्वकृतग्रहणं, तीर्थकरेणापि परकृतकर्म्मक्षपणोपायो न व्यज्ञायीति चेत्, तन्न, तज्ज्ञानस्य सकलपदार्थसत्ताव्यापित्वेनावस्थानात्, ननु च हेयोपादेयपदार्थहानोपादानोपदेशज्ञोऽसौ, न सर्वज्ञ इति सङ्गिरामहे, एतावतैव परोपकारकर्तृत्वेन तीर्थकरत्वोपपत्तेः, तदेतन्न सतां मनांस्यानन्दयति, युक्तिविकलत्वात्, यतः सम्यग्ज्ञानमन्तरेण हिताहितप्राप्तिपरिहारोपदेशासम्भवो, यथावस्थितैकपदार्थपरिच्छेदश्च न सर्वज्ञतामन्तरेणेति दर्शयितुमाह—





जे एगं जाणइ से सव्वं जाणइ, जे सव्वं जाणइ से एगं जाणइ (सू. १२३)

'यः' कश्चिदविशेपितः 'एकं' परमाण्वादि द्रव्यं पश्चात्पुरस्कृतपर्यायं स्वपरपर्यायं वा 'जानाति' परिच्छिनत्ति स सर्वं स्वपरपर्यायं जानाति, अतीतानागतपर्यायिद्रव्यपरिज्ञानस्य समस्तवस्तुपरिच्छेदाविनाभावित्वाद्, इदमेव हेतुहेतुमद्भावेन लगयितुमाह– 'जे सव्व' मित्यादि, यः सर्वं संसारोदरविवरवर्त्ति वस्तु जानाति स एकं घटादि वस्तु जानाति, तस्यैवातीतानागतपर्यायभेदैस्तत्तत्स्वभावापत्त्याऽनाद्यनन्तकालतया समस्तवस्तुस्वभावगमनादिति, तदुक्तम्–"एगदवियस्स जे अत्थपज्जवा वयणपज्जवा यावि। तीयाणागयभूया तावइयं तं हवइ दव्वं ॥१॥" तदेवं सर्वज्ञस्तीर्थकृत्, सर्वज्ञश्च सम्भविनमेव सर्वसत्त्वोपकारिणमुपदेशं ददातीति दर्शयति–

## सव्वओ पमत्तस्स भयं, सव्वओ अप्पमत्तस्स नत्थि भयं, जे एगं नामे से बहुं नामे, जे बहुं नामे से एगं नामे, दुक्खं लोगस्स जाणित्ता वंता लोगस्स संजोगं जंति धीरा महाजाणं, परेण परं जंति, नावकंखंति जीवियं (सू. १२४)

सर्वतः–सर्वप्रकारेण द्रव्यादिना यद्भयकारि कर्म्मोपादीयते ततः 'प्रमत्तस्य' मद्यादिप्रमादवतो 'भयं' भीतिः, तद्यथा–प्रमत्तो हि कर्म्मोपचिनोति द्रव्यतः सर्वैरात्मप्रदेशैः क्षेत्रतः षड्दिग्व्यवस्थितं कालतोऽनुसमयं भावतो हिंसादिभिः, यदि वा 'सर्वत्र' सर्वतो भयमिहामुत्र च, एतद्विपरीतस्य च नास्ति भयमिति, आह च—'सव्वओ' इत्यादि, 'सर्वतः' ऐहिकामुष्मिकापायाद् 'अप्रमत्तस्य' आत्महितेषु जाग्रतो नास्ति भयं संसारापसदात्सकाशात् कर्म्मणो वा, अप्रमत्तता च कषायाभावाद्भवति, तदभावाचाशेषमोहनीया-

१ एकद्रव्यस्य येऽर्थपर्याया वचनपर्यया वाऽपि। अतीतानागतभूता(वर्त्तमाना) तावत्तद् भवति द्रव्यम् ॥१॥

भावः, ततोऽप्यशेषकर्मक्षयः, तदेवमेकाभावे सति बहूनामभावसम्भवः, एकाभावोऽपि बह्वभावानान्तरीयक इत्येवं गतप्रत्यागतसूत्रेण हेतुहेतुमद्भावं दर्शयितुमाह–'जे एग' मित्यादि, यो हि प्रवर्द्धमानशुभाध्यवसायाधिरूढकण्डकः एकम्–अनन्तानुबन्धिनं क्रोधं 'नामयति' क्षपयति स बहूनपि मानादीन्नामयति–क्षपयति, अप्रत्याख्यानादीन् वा स्वभेदान्नामयति, मोहनीयं वैकं यो नामयति स शेषा अपि प्रकृतीर्नामयति, यो वा बहून् स्थितिशेषान्नामयति सोऽनन्तानुबन्धिनमेकं नामयति, मोहनीयं वा, तथाहि–एकोनसप्ततिभिर्मोहनीयकोटीकोटिभिः क्षयमुपागताभिः ज्ञानावरणीयदर्शनावरणीयवेदनीयान्तरायाणामेकोनत्रिंशद्भिः नामगोत्रयोरेकोनविंशतिभिः शेषकोटीकोट्याऽपि देशोनया मोहनीयक्षपणार्हो भवति, नान्य इति, अतोऽपदिश्यते–यो बहुनामः स एव परमार्थत एकनाम इति, नाम इति क्षपकोऽभिधीयते उपशामको वा, उपशमश्रेण्याश्रयेणैकबहूपशमता बह्वेकोपशमता वा वाच्येति, तदेवं बह्वेककर्म्माभावमन्तरेण मोहनीयक्षयस्योपशमस्य वाऽभावः, तदभावे च जन्तूनां बहुदुःखसम्भव इति दर्शयति–'दुक्ख'-मित्यादि, 'दुःखम्' असातोदयस्तत्कारणं वा कर्म्म तत् 'लोकस्य' भूतग्रामस्य ज्ञपरिज्ञया ज्ञात्वा प्रत्याख्यानपरिज्ञया च यथा तदभावो भवति तथा विदध्यात्, कथं तदभावे गुणावाप्तिरित्युभयमपि दर्शयितुमाह–'वंता' इत्यादि, 'वान्त्वा'त्यक्त्वा लोकस्य–आत्मव्यतिरिक्तस्य धनपुत्रशरीरादेः 'संयोगं' ममत्वपूर्वकं सम्बन्धं शारीरदुःखादिहेतुं तद्धेतुकर्मोपादानकारणं वा 'यान्ति' गच्छन्ति 'धीराः' कर्म्मविदारणसहिष्णवः यान्त्यनेन मोक्षमिति यानं–चारित्रं, तद्यानेकभवकोटिदुर्लभं, लब्धमपि प्रमादवतस्तथाविधकर्म्मोदयात् सम्भावासनिधिममतामवाप्नोत्यतो महच्छब्देन विशेष्यते, महच्च तद्यानं च महायानं, यदिवा महद्यानं–सम्यग्दर्शनादित्रयं यस्य स महायानो–मोक्षस्तं यान्तीति सम्बन्धः। स्यात्–किमेकेनैव भवेनावाप्तमहायानदेश्यचारित्रस्य मोक्षावाप्तिरुत पारम्पर्येण?, उभय-

थाऽपि ब्रूमः, तद्यथा-अवाप्ततद्योग्यक्षेत्रकालस्य लघुकर्म्मणस्तेनैव भवेन मुक्त्यवाप्तिः, अपरस्य त्वन्यथेति दर्शयति—'परेण पर'मित्यादि, सम्यक्त्वप्रतिपिद्धनरकगतितिर्य्यग्गतयो ज्ञानावाप्तियथाशक्तिप्रतिपालितसंयमा आयुषः क्षयात् सौधर्म्मादिकं देवलोकमवाप्नुवन्ति, ततोऽपि पुण्यशेषतया कर्म्मभूम्यार्यक्षेत्रसुकुलोत्पत्त्यारोग्यश्रद्धाश्रवणसंयमादिकमवाप्य विशिष्टतरं स्वर्गमनुत्तरोपपातिकपर्यन्तमधितिष्ठन्ति, पुनरपि ततश्च्युतस्यावाप्तमनुष्यादिसंयमभावस्याशेषकर्म्मक्षयान्मोक्षः, तदेवं परेण-संयमेनोद्दिष्टविधिना 'परं' स्वर्गं पारम्पर्येणापवर्गमपि यान्ति, यदिवा 'परेण' सम्यग्दृष्टिगुणस्थानेन 'परं' देशविरत्याद्ययोगिकेवलिपर्यन्तं गुणस्थानकमधितिष्ठन्ति, परेण वाऽनन्तानुबन्धिक्षयेणोत्क्रमत्कण्डकस्थानाः 'परं' दर्शनमोहनीयचारित्रमोहनीयक्षयं घातिभवोपग्राहिकर्म्मणां वा क्षयमवाप्नुवन्ति, एवंविधाश्च कर्म्मक्षपणोद्यता जीवितं कियद्गतं किं वा शेषमित्येवं नावकाङ्क्षन्ति, दीर्घजीवित्वं नाभिलषन्तीत्यर्थः, असंयमजीवितं वा नावकाङ्क्षन्तीति, यदिवा परेण परं यान्तीत्युत्तरोत्तरां तेजोलेश्यामवाप्नुवन्तीति, उक्तं च—"जे इमे अज्जत्ताए समणा निग्गंथा विहरंति एए णं कस्स तेयलेस्सं वीईवयंति?, गोयमा!, मासपरियाए समणे निग्गंथे वाणमंतराणं देवाणं तेयलेस्सं वीइवयइ, एवं





१ य इमे अद्यतया श्रमणा निर्ग्रन्था विहरन्ति, एते कस्य तेजोलेश्या व्यतिव्रजन्ति ?, गौतम ! मासपर्यायः श्रमणो निर्ग्रन्थो व्यन्तराणां देवानां तेजोलेश्यां व्यतिव्रजति, एवं द्विमासपर्यायः असुरेन्द्रवर्जितानां भवनवासिनां देवानां, त्रिमासपर्यायोऽसुरकुमाराणां देवानां, चतुर्मासपर्यायः ग्रहगणनक्षत्रतारारूपाणां ज्योतिष्काणां देवानां, पञ्चमासपर्यायः चन्द्रसूर्ययोर्ज्योतिष्केन्द्रयोर्ज्योतीराजयोस्तेजोलेश्यां, षण्मासपर्यायः सौधर्मेशानानां देवानां, सप्तमासपर्यायः सनत्कुमारमाहेन्द्राणां देवानां, अष्टमासपर्यायो ब्रह्मलोकलान्तकानां देवानां, नवमासपर्यायो महाशुक्रसहस्राराणां देवानां, दशमासपर्याय आनतप्राणतारणाच्युतानां देवानां एकादशमासपर्यायो ग्रैवेयकाणां, द्वादशमासः श्रमणो निर्ग्रन्थोऽनुत्तरोपपातिनां देवानां तेजोलेश्यां व्यतिव्रजति, ततः परं शुक्लः शुक्लाभिजातिर्भू(त्वो भू०)त्वा ततः पश्चात्सिध्यति.

दुमासपरियाए असुरिंदवज्जियाणं भवणवासीणं देवाणं, तिमासपरियाए असुरकुमाराणं देवाणं, चउमासपरियाए गहगणनक्खत्ततारारूवाणं जोइसियाणं देवाणं, पंचमासपरियाए चंदिमसूरियाणं जोइसिंदाणं जोइसराईणं तेउलेस्सं, छम्मासपरियाए सोहम्मीसाणाणं देवाणं, सत्तमासपरिआए सणंकुमारमाहिंदाणं देवाणं, अट्ठमासपरियाए बंभलोगलंतगाणं देवाणं, नवमासपरिआए महासुक्कसहस्साराणं देवाणं, दसमासपरियाए आणयपाणयआरणच्चुआणं देवाणं, एगारसमासपरियाए गेवेज्जाणं, बारसमासे समणे निग्गंथे अणुत्तरोववाइयाणं देवाणं तेयलेस्सं वीयवयइ, तेण परं सुक्के सुक्काभिजाई भवित्ता तओ पच्छा सिज्झइ।" यथानन्तानुबन्ध्यादिक्षपणोद्यतः स किमेकक्षयादेव प्रवर्त्तते उत नेत्याह—



## एगं विगिंचमाणे पुढो विगिंचइ, पुढोवि एगं, सड्ढी आणाए मेहावी लोगं च आणाए अभिसमिच्चा अकुओभयं, अत्थि सत्थं परेण परं, नत्थि असत्थं परेण परं (सू. १२५)

'एकम्' अनन्तानुबन्धिनं क्रोधं क्षपकश्रेण्यारूढः क्षपयन् 'पृथग्' अन्यदपि दर्शनादिकं क्षपयति, बद्धायुष्कोऽपि दर्शनसप्तकं यावत्क्षपयति, पृथगन्यदपि क्षपयन्नवश्यमनन्तानुबन्धिनामेकं क्षपयति, पृथक्क्षयान्यथानुपपत्तेः, किंगुणः क्षपकश्रेणियोग्यो भवतीत्याह-'सड्ढी' इत्यादि, श्रद्धा-मोक्षमार्गोद्यमेच्छा विद्यते यस्यासौ श्रद्धावान् 'आज्ञया' तीर्थकरप्रणीतागमानुसारेण यथोक्तानुष्ठानविधायी 'मेधावी' अप्रमत्तयतिः मर्यादाव्यवस्थितः श्रेण्यर्हो, नापर इति। किं च-'लोगं च' इत्यादि, चः समुच्चये 'लोकं' षड्जीवनिकायात्मकं कषायलोकं वा 'आज्ञया' मौनीन्द्रागमोपदेशेन 'अभिसमेत्य' ज्ञात्वा षड्जीवनिकायलोकस्य यथा न कुतश्चिन्निमित्ता-

५

१०

द्भयं भवति तथा विधेयं, कषायलोकप्रत्याख्यानपरिज्ञानाच्च तस्यैव परिहर्तुर्न कुतश्चिद्भयमुपजायत इति, लोकं वा चराचरमाज्ञया-आगमाभिप्रायेणाभिसमेत्य न कुतश्चिदैहिकामुष्मिकापायसन्दर्शनतो भयं भवति । तच्च भयं शस्त्राद्भवति, तस्य च शस्त्रस्य प्रकर्षगतिरस्त्युत नेति ?, अस्तीति दर्शयति—'अत्थि' इत्यादि, तत्र द्रव्यशस्त्रं कृपाणादि तत्परेणापि परमस्ति—तीक्ष्णादपि तीक्ष्णतरमस्ति, लोहकर्तृसंस्कारविशेषात्, यदिवा शस्त्रमित्युपघातकारि, तत एकस्मात्पीडाकारिणोऽन्यत् पीडाकार्युत्पद्यते, ततोऽप्यपरमिति, तद्यथा—कृपाणाभिघाताद्वातोत्कोपः, ततः शिरोऽर्त्तिः, तस्या ज्वरः, ततोऽपि मुखशोषमूर्च्छादय इति, भावशस्त्रपारम्पर्यं त्वेकसूत्रान्तरितं स्वत एव प्रत्याख्यानपरिज्ञाद्वारेण वक्ष्यति, यथा च शस्त्रस्य प्रकर्षगतिरस्ति पारम्पर्यं वा विद्यते अशस्त्रस्य तथा नास्तीति दर्शयितुमाह—'नत्थि' इत्यादि, 'नास्ति' न विद्यते, किं तद् ?—'अशस्त्रं' संयमः तत् 'परेण पर'मिति प्रकर्षगत्यापन्नमिति, तथाहि—पृथिव्यादीनां सर्वत्र तुल्यता कार्या, न मन्दतीव्रभेदोऽस्तीति, पृथिव्यादिषु समभावत्वात् सामायिकस्य, अथवा शैलेश्यवस्थासंयमादपि परः संयमो नास्ति, तदूर्द्ध्वं गुणस्थानाभावादिति भावः । यो हि क्रोधमुपादानतो बन्धतः स्थितितो विपाकतोऽनन्तानुबन्धिलक्षणतः क्षयमाश्रित्य प्रत्याख्यानपरिज्ञया जानाति सोऽपरमानादिदर्श्यपीत्येतदेव प्रतिसूत्रं लगयितव्यमित्याह—

जे कोहदंसी से माणदंसी, जे माणदंसी से मायादंसी, जे मायादंसी से लोभदंसी, जे लोभदंसी से पिज्जदंसी, जे पिज्जदंसी से दोसदंसी, जे दोसदंसी से मोहदंसी, जे मोहदंसी से गब्भदंसी, जे गब्भदंसी से जम्मदंसी, जे जम्मदंसी से मारदंसी, जे मारदंसी से नर-

यदंसी, जे नरयदंसी से तिरियदंसी, जे तिरियदंसी से दुक्खदंसी। से मेहावी अभिणिवट्टिज्जा कोहं च माणं च मायं च लोभं च पिज्जं च दोसं च मोहं च गब्भं च जम्मं च मारं च नरयं च तिरियं च दुक्खं च। एयं पासगस्स दंसणं उवरयसत्थस्स पलियंतकरस्स, आयाणं निसिद्धा सगडब्भि, किमत्थि ओवाही पासगस्स न विज्जइ?, नत्थि (सू. १२६) त्तिबेमि॥ शीतोष्णीयाध्ययनम् ३॥



५

यो हि क्रोधं स्वरूपतो वेत्ति अनर्थपरित्यागरूपत्वाज्ज्ञानस्य परिहरति च स मानमपि पश्यति परिहरति चेति, यदिवा यः क्रोधं पश्यत्याचरति स मानमपि पश्यति, मानाध्मातो भवतीत्यर्थः, एवमुत्तरत्रापि आयोज्यं, यावत् स दुःखदर्शीति, सुगमत्वान्न विव्रियते। साम्प्रतं क्रोधादेः साक्षान्निवर्त्तनमाह-'से' इत्यादि, स मेधावी 'अभिनिवर्त्तयेद्' व्यावर्त्तयेत्, किं तत्?—क्रोधमित्यादि यावद्दुःखं', सुगमत्वाद्व्याख्यानाभावः, स्वमनीषिकापरिहारार्थमाह-'एय' मित्यादि, 'एतद्' अनन्तरोक्तमुद्देशकादेरारभ्य पश्यकस्य-तीर्थकृतो दर्शनम्-अभिप्रायः, किम्भूतस्य?—उपरतशस्त्रस्य पर्यन्तकृतः, पुनरपि किम्भूतोऽसौ?—'आयाण'मित्यादि, आदानं कर्म्मोपादानं निषेध्य पूर्वस्वकृतकर्म्मभिदमावृति, किं चास्य भवतीत्याह-'किमत्थी'त्यादि, 'पश्यकस्य' केवलिनः 'उपाधिः' विशेषणं, उपाधीयत इति वोपाधिः, द्रव्यतो हिरण्यादिर्भावतोऽष्टप्रकारं कर्म्म, स द्विविधोऽप्युपाधिः किमस्त्याहोस्विन्न विद्यते?,

१०

नास्तीति, एतदहं ब्रवीमि, सुधर्मस्वामी जम्बूस्वामिनं कथयति, यथा सोऽहं ब्रवीमि येन मया भगवत्पादारविन्दमुपास(य)ता सर्वमेतदथावि तद्भवते तदुपदिष्टार्थानुसारितया कथयामि, न पुनः स्वमतिविकल्पशिल्परचनयेति । गतः सूत्रानुगमः, तद्गतौ च समाप्तश्चतुर्थोद्देशकः ॥ तत्समाप्तौ चातीतानागतनयविचारातिदेशात् समाप्तं शीतोष्णीयाध्ययनमिति ॥ ग्रन्थाग्रम् ७९० ॥



## अथ चतुर्थं सम्यक्त्वाख्यमध्ययनम् ।

उक्तं तृतीयमध्ययनं, साम्प्रतं चतुर्थमारभ्यते, अस्य चायमभिसम्बन्धः–इह शस्त्रपरिज्ञायामन्वयव्यतिरेकाभ्यां षड्जीवनिकायान् व्युत्पादयता जीवाजीवपदार्थद्वयं व्युदपादि, तद्वधे च बन्धं विरतिं च भणताऽऽस्रवसंवरपदार्थद्वयमूचे, तथा लोकविजयाध्ययने लोको यथा बध्यते यथा च मुच्यत इति वदता बन्धनिर्जरे गदिते, शीतोष्णीयाध्ययने तु शीतोष्णरूपाः परीषहाः सोढव्या इति भणता तत्फललक्षणो मोक्षोऽभिहितः, ततश्चाध्ययनत्रयेण सप्तपदार्थात्मकं तत्त्वमभिहितं, तत्त्वार्थश्रद्धानं च सम्यक्त्वमुच्यते, तदधुना प्रतिपाद्यते, अनेन सम्बन्धेनायातस्यास्याध्ययनस्य चत्वार्यनुयोगद्वाराणि व्यावर्ण्योपक्रमेऽर्थाधिकारो द्वेधा, तत्राध्ययनार्थाधिकारः सम्यक्त्वाख्यः शस्त्रपरिज्ञायां प्रागेवाभाणि, उद्देशकार्थाधिकारप्रतिपादनाय तु निर्युक्तिकार आह–

**पढमे सम्मावाओ १ बीए धम्मप्पवाइयपरिक्खा २। तइए अणवज्जतवो न हु बालतवेण मुक्खुत्ति ३ ॥२१४॥**
**उद्देसंमि चउत्थे समासवयणेण णियमणं भणियं ४ । तम्हा य नाणदंसणतवचरणे होइ जइयव्वं ॥२१५॥**



प्रथमोद्देशके सम्यग्वाद इत्ययमर्थाधिकारः, सम्यग्–अविपरीतो वादः सम्यग्वादो–यथावस्थितवस्त्वाविर्भावनं, द्वितीये तु धर्म-

प्रवादिकपरीक्षा, धर्म्मं प्रवदितुं शीलं येषां ते धर्म्मप्रवादिनस्त एव धर्म्मप्रवादिकाः, धर्म्मप्रावादुका इत्यर्थःतेषां परीक्षा—युक्तायुक्तविचारणमिति, तृतीयेऽनवद्यतपोव्यावर्णनं, न च बालतपसा—अज्ञानितपश्चरणेन मोक्ष इत्ययमर्थाधिकारः, चतुर्थोद्देशके तु 'समासवचनेन' सङ्क्षेपवचनेन 'नियमनं भणितं' संयत उक्त इति । तदेवं प्रथमोद्देशके सम्यग्दर्शनमुक्तं, द्वितीये तु सम्यग्ज्ञानं, तृतीये बालतपोव्युदासेन सम्यक्तपः, चतुर्थे तु सम्यक्चारित्रमिति, तस्मात्चशब्दो हेतौ, यतश्चतुष्टयमपि मोक्षाङ्गं प्रागुक्तं तस्मात् ज्ञानदर्शनतपश्चरणेषु 'मुमुक्षुणा यतितव्यं' तत्प्रतिपालनाय यावज्जीवं यत्नो विधेय इति गाथाद्वयार्थः ॥ अधुना नामनिष्पन्ननिक्षेपायातस्य सम्यक्त्वाभिधानस्य निक्षेपं चिकीर्षुराह—

नामंठवणासम्मं दव्वसम्मं च भावसम्मं च। एसो खलु सम्मस्सा निक्खेवो चउविहो होइ ॥२१६॥

अक्षरार्थः सुगमः, भावार्थं तु सुगमनामस्थापनाव्युदासेन द्रव्यभावगतं निर्युक्तिकारः प्रतिपिपादयिषुराह—

अह दव्वसम्म इच्छाणुलोमियं तेसु तेसु दव्वेसुं । कयसंखयसंजुत्तो पउत्त जढ भिण्ण छिण्णं वा ॥२१७॥

'अथे'त्यानन्तर्ये ज्ञशरीरभव्यशरीरव्यतिरिक्तं द्रव्यसम्यक्त्वमित्याह, 'ऐच्छानुलोमिकं' इच्छा—चेतःप्रवृत्तिः अभिप्रायस्तस्यानुलोमम्—अनुकूलं तत्र भवमैच्छानुलोमिकं, तच्च तेषु तेष्विच्छाभावानुकूल्यताभाक्षु द्रव्येषु कृताद्युपाधिभेदेन सप्तधा भवति, तद्यथा—कृतम्—अपूर्वमेव निर्वर्त्तितं रथादि, तस्य यथाऽवयवलक्षणनिष्पत्तेर्द्रव्यसम्यक् कर्तुस्तन्निमित्तचित्तस्वास्थ्योत्पत्तेः, यदर्थं वा कृतं तस्य शोभनाशुकरणतया समाधानहेतुत्वाद्वा द्रव्यसम्यग् १, एवं संस्कृतेऽपि योज्यं, तस्यैव रथादेर्भग्नजीर्णापोढादेरवयवसंस्कारादिति २, तथा ययोर्द्रव्ययोः संयोगो गुणान्तराधानाय नोपमर्दाय उपभोक्तुर्वा मनःप्रीत्यै पयःशर्करयोरिव तत्संयुक्तद्रव्यसम्यक् ३, तथा

५

१०

यत्प्रयुक्तं द्रव्यं लाभहेतुत्वादात्मनः समाधानाय प्रभवति तत्प्रयुक्तद्रव्यसम्यक् ४, पाठान्तरं वा-'उवउत्त'त्ति यदुपयुक्तम्-अभ्यवहृतं द्रव्यं मनःसमाधानाय प्रभवति तदुपयुक्तद्रव्यसम्यक् ४, तथा जढं-परित्यक्तं यद्भारादि तत्त्यक्तद्रव्यसम्यक् ५, तथा दधिभाजनादि भिन्नं सत् काकादिसमाधानोत्पत्तेर्भिन्नद्रव्यसम्यक् ६, तथाऽधिकमांसादिच्छेदाच्छिन्नसम्यक् ७, सर्वमप्येतत्समाधानकारणत्वाद्रव्यसम्यक्, विपर्ययादसम्यगिति गाथार्थः ॥ भावसम्यक्प्रतिपादनायाह—

तिविहं तु भावसम्मं दंसण नाणे तहा चरित्ते य। दंसणचरणे तिविहं नाणे दुविहं तु नायव्वं ॥ २१८ ॥

त्रिविधं भावसम्यक्-दर्शनज्ञानचारित्रभेदात्, पुनरप्येकैकं भेदत आचष्टे-तत्र दर्शनचरणे प्रत्येकं त्रिविधे, तद्यथा-अनादिमिथ्यादृष्टेरकृतत्रिपुञ्जस्य यथाप्रवृत्तकरणक्षीणशेषकर्मणो देशोनसागरोपमकोटीकोटीस्थितिकस्यापूर्वकरणभिन्नग्रन्थेर्मिथ्यात्वानुदयलक्षणमन्तरकरणं विधायानिवृत्तिकरणेन प्रथमं सम्यक्त्वमुत्पादयत औपशमिकं दर्शनम् १, उक्तं च-"ऊसरदेसं दड्ढेल्लयं च विज्झाइ वणदवो पप्प। इय मिच्छत्ताणुदए उवसमसम्मं लहइ जीवो ॥ १ ॥" उपशमश्रेण्यां चौपशमिकमिति १, तथा सम्यक्त्वपुद्गलोपष्टम्भजनिताध्यवसायः क्षायोपशमिकं २, दर्शनमोहनीयक्षयात् क्षायिकं ३। चारित्रमप्युपशमश्रेण्यामौपशमिकं १ कषायक्षयोपशमात् क्षायोपशमिकं चारित्रं २ चारित्रमोहनीयक्षयात् क्षायिकं ३। ज्ञाने तु भावसम्यग् द्विधा ज्ञातव्यं, तद्यथा-क्षायोपशमिकं क्षायिकं च, तत्र चतुर्विधज्ञानावरणीयक्षयोपशमात् मत्यादि चतुर्विधं क्षायोपशमिकं ज्ञानं, समस्तक्षयात् क्षायिकं केवलज्ञानमिति। तदेवं त्रिविधेऽपि भावसम्यक्त्वे दर्शिते सति परश्चोदयति-यद्येवं त्रयाणामपि सम्यक्त्वादसम्भवे कथं दर्शनस्यैव सम्यक्त्ववादो रूढो? यदिहाप्य-

२०

२७

---

१ ऊषरदेशं दग्धं च विध्याति वनदवः प्राप्य। एवं मिथ्यात्वानुदये औपशमिकसम्यक्त्वं लभते जीवः ॥ १ ॥

यते व्याख्यायते, उच्यते, तद्भावभावित्वादितरयोः, तथाहि—मिथ्यादृष्टेस्ते न स्तः, अत्र च सम्यक्त्वप्राधान्यख्यापनाय अन्धेतर-राजकुमारद्वयेन बालाङ्गनाद्यवबोधार्थं दृष्टान्तमाचक्षते—तद्यथा—उदयसेनराज्ञो वीरसेनसूरसेनकुमारद्वयं, तत्र वीरसेनोऽन्धः, स च तत्प्रायोग्या गान्धर्वादिकाः कला ग्राहितः, इतरस्त्वभ्यस्तधनुर्वेदो लोकश्लाघ्यां पदवीमगमत्, एतच्च समाकर्ण्य वीरसेनेनापि राजा विज्ञप्तो यथाऽहमपि धनुर्वेदाभ्यास विदधे, राज्ञाऽपि तदाग्रहमवगम्यानुज्ञातः, ततोऽसौ सम्यगुपाध्यायोपदेशात् प्रज्ञातिशयादभ्या-सविशेषाच्च शब्दवेधी सञ्जज्ञे, तेन चारूढयौवनेन स्वभ्यस्तधनुर्वेदविज्ञानक्रियेणागणितचक्षुर्दर्शनसदसद्भावेन शब्दवेधित्वावष्टम्भात्प-रबलोपस्थाने सति राजा युद्धायादेशं याचितः, तेनापि याच्यमानेन वितेरे, वीरसेनेन च शब्दानुवेधितया परानीके जजृम्भे, परै-श्चावगतकुमारान्धभावैर्मूकतामालम्ब्यासौ जगृहे, सूरसेनेन च विदितवृत्तान्तेन राजानमापृच्छ्य निशितशरशतजालावष्टब्धपरानीकेन मोचितः। तदेवमभ्यस्तविज्ञानक्रियोऽपि चक्षुर्विकलत्वान्नालमभिप्रेतकार्यसिद्धये इति। एतदेव निर्युक्तिकारो गाथयोपसंहर्तुमाह—



कुणमाणोऽवि य किरियं परिच्चयंतोऽवि सयणधणभोए। दितोऽवि दुहस्स उरं न जिणइ अंधो पराणीयं ॥२१९॥

कुर्वन्नपि क्रियां परित्यजन्नपि स्वजनधनभोगान् ददृदपि दुःखस्योरः न जयत्यन्धः परानीकमिति गाथार्थः॥ तदेवं दृष्टान्तमु-पदर्श्य दार्ष्टान्तिकमाह—



कुणमाणोऽवि निवित्तिं परिच्चयंतोऽवि सयणधणभोए। दितोऽवि दुहस्स उरं मिच्छद्दिट्ठी न सिज्झइ उ॥२२०॥

कुर्वन्नपि निवृत्तिम्—अन्यदर्शनाभिहिता, तद्यथा—पञ्च यमाः पञ्च नियमा इत्यादिका, तथा परित्यजन्नपि स्वजनधनभोगान्, पञ्चा-ग्नितपआदिना ददृदपि दुःखस्योरः, मिथ्यादृष्टिर्न सिध्यति, तुरवधारणे, नैव सिध्यति, दर्शनविकलत्वाद्, अन्धकुमारवत् असमर्थः

१०
४ सम्य०
१ उद्दे०

कार्यसिद्धये। यत एव ततः किं कर्त्तव्यमित्याह—

**तम्हा कम्माणीयं जेउमणो दंसणंमि पयइज्जा। दंसणवओ हि सफलाणि हुंति तवनाणचरणाइं ॥ २२१ ॥**

यस्मात्सिद्धिमार्गमूलास्पदं सम्यग्दर्शनमन्तरेण न कर्म्मक्षयः स्यात् तस्मात्कारणात् कर्म्मानीकं जेतुमनाः सम्यग्दर्शने प्रयतेत, तस्मिंश्च सति यद्भवति तद्दर्शयति–'दर्शनवतो हि' हिः–हेतौ यस्मात्सम्यग्दर्शनिनः सफलानि भवन्ति तपोज्ञानचरणानि अतस्तत्र यत्नवता भाव्यमिति गाथार्थः ॥ प्रकारान्तरेणापि सम्यग्दर्शनस्य तत्पूर्वकाणां च गुणस्थानकानां गुणमाविर्भावयितुमाह—

**सम्मत्तुप्पत्ती सावए य विरए अणंतकम्मंसे। दंसणमोहक्खवए उवसामन्ते य उवसंते ॥ २२२ ॥**

**खवए य खीणमोहे जिणे अ सेढी भवे असंखिज्जा। तव्विवरीओ कालो संखिज्जगुणाउ सेढीए ॥ २२३ ॥**

१५
असंख्येयनिर्जराश्रेणिः

सम्यक्त्वस्योत्पत्तिः सम्यक्त्वोत्पत्तिस्तस्यां विवक्षितायामसङ्ख्येयगुणा श्रेणिर्भवेदित्युत्तरगाथार्द्धान्ते क्रियामपेक्ष्य सम्बन्धो लगयितव्यः, कथमसङ्ख्येयगुणा श्रेणिर्भवेदिति ?, अत्रोच्यते, इह मिथ्यादृष्टयो देशोनकोटीकोटिकर्म्मस्थितिका ग्रन्थिकसत्त्वास्ते कर्म्मनिर्जरामाश्रित्य तुल्याः, धर्म्मप्रच्छनोत्पन्नसंज्ञास्तेभ्योऽसङ्ख्येयगुणनिर्जरकाः, ततोऽपि पिपृच्छिषुः सन् साधुसमीपं जिगमिषुः, तस्मादपि क्रियाविष्टः पृच्छन्, ततोऽपि धर्म्मं प्रतिपित्सुः, अस्मादपि क्रियाविष्टः प्रतिपद्यमानः,तस्मादपि पूर्वप्रतिपन्नोऽसङ्ख्येयगुणनिर्जरक इति सम्यक्त्वोत्पत्तिर्व्याख्याता, तदनन्तरं विरताविरतिं प्रतिपित्सुप्रतिपद्यमानपूर्वप्रतिपन्नानामुत्तरोत्तरस्यासङ्ख्येयगुणा निर्जरा योज्या, एवं सर्वविरतावपीति, ततोऽपि पूर्वप्रतिपन्नसर्वविरतेः सकाशात् 'अणंतकम्मंसे'त्ति 'पदैकदेशे पदप्रयोग' इति यथा भीमसेनो भीमः सत्यभामा भामा एवमनन्तशब्दोपलक्षिता अनन्तानुबन्धिनः, ते हि मोहनीयस्यांशाः—भागाः तान्क्षपयितुमुद्यत

२०

॥१६०॥
२५

ङ्ख्येयगुणनिर्जरकः, ततोऽपि क्षपकः, तस्मादपि क्षीणानन्तानुबन्धिकषायः, एतदेव दर्शनमोहनीयत्रयेऽभिमुखक्रियारूढापवर्गत्रय-मायोज्यं, ततोऽपि क्षीणसप्तकात् क्षीणसप्तक एवोपशमश्रेण्यारूढोऽसङ्ख्येयगुणनिर्जरकः, ततोऽप्युपशान्तमोहः, तस्मादपि चारित्रमो-हनीयक्षपकः, ततोऽपि क्षीणमोहः, अत्र चाभिमुखादित्रयं यथासम्भवमायोजनीयम्, अस्मादपि 'जिनो' भवस्थकेवली, तस्मादपि शैलेश्यवस्थोऽसङ्ख्येयगुणनिर्जरकः। तदेवं कर्मनिर्जरार्थं असङ्ख्येयलोकाकाशप्रदेशप्रमाणनिष्पादितसंयमस्थानप्रचयोपात्तश्रेणिः सोत्तरोत्तरेषामसङ्ख्येयगुणा, उत्तरोत्तरप्रवर्द्धमानाध्यवसायकण्डकोपपत्तेरिति, कालस्तु तद्विपरीतोऽयोगिकेवलिन आरभ्य प्रतिलो-मतया सङ्ख्येयगुणया श्रेण्या ज्ञेयः, इदमुक्तं भवति-यावत्कालेन यावत्कर्मायोगिकेवली क्षपयति तावन्मात्रं कर्म सयोगिकेवली सङ्ख्येयगुणेन कालेन क्षपयति, एवं प्रतिलोमतया यावद्धर्मं पिपृच्छिषुस्तावन्नेयमिति गाथाद्वयार्थः॥ एवमनन्तरोक्तया नीत्या दर्श-नवतः सफलानि तपोज्ञानचरणान्यभिहितानि, यदि पुनः केनचिदुपाधिना विदधाति ततः सफलत्वाभावः, कथमात्मुपाधिः?, तमाह—

आहारउवहिपूआइड्ढीसु य गारवेसु कइतवियं। एमेव बारसविहे तवंमि न हु कइतवे समणो ॥२२४॥



५

१०

से बेमि जे अईया जे य पडुप्पन्ना जे य आगमिस्सा अरहंता भगवंतो ते सव्वे एवमाइक्खन्ति एवं भासंति एवं पण्णविंति एवं परूविंति–सव्वे पाणा सव्वे भूया सव्वे जीवा सव्वे सत्ता न हंतव्वा न अज्जावेयव्वा न परिघित्तव्वा न परियावेयव्वा न उद्दवेयव्वा, एस धम्मे सुद्धे निइए सासए समिच्च लोयं खेयण्णेहिं पवेइए, तंजहा–उट्ठिएसु वा अणुट्ठिएसु वा उवट्ठिएसु वा अणुवट्ठिएसु वा उवरयदंडेसु वा अणुवरयदंडेसु वा सोवहिएसु वा अणोवहिएसु वा संजोगरएसु वा असंजोगरएसु वा, तच्चं चेयं तहा चेयं अस्सिं चेयं पवुच्चइ (सू. १२७)

२०

गौतमस्वाम्याह–यथा सोऽहं ब्रवीमि योऽहं तीर्थकरवचनावगततत्त्वः श्रद्धेयवचन इति, यदिवा शौद्धोदनिशिष्याभिमतक्षणिकत्वव्युदासेनाह–येन मया पूर्वमभाणि सोऽहमद्यापि ब्रवीमि नापरो, यदिवा सेशब्दस्तच्छब्दार्थे यच्छ्रद्धाने सम्यक्त्वं भवति तदहं तत्त्वं ब्रवीमीति, येऽतीताः–अतिक्रान्ता ये च प्रत्युत्पन्नाः—वर्त्तमानकालभाविनो ये चागामिनः त एवं प्ररूपयन्तीति सम्बन्धः, तत्रातिक्रान्तास्तीर्थकृतः कालस्यानादित्वादनन्ता अतिक्रान्ताः अनागता अप्यनंताः आगामिकालस्यानन्तत्वात्तेषां च सर्वदैव भावादिति, वर्त्तमानतीर्थकृतां च प्रज्ञापकापेक्षितया अनवस्थितत्वे सत्यप्युत्कृष्टजघन्यपदिन एव कथ्यन्ते, तत्रोत्सर्गतः समयक्षेत्रसम्भविनः सप्तत्युत्तरं शतं, तच्चैवं–पञ्चस्वपि विदेहेषु प्रत्येकं द्वात्रिंशत्क्षेत्रात्मकत्वादेकैकस्मिन् द्वात्रिंशत् द्वात्रिंशत् पञ्चस्वपि भरतेषु पञ्च

एवमैरावतेष्वपीति, तत्र द्वात्रिंशत्पञ्चभिर्गुणिताः षष्ट्युत्तरशतं(१६०)भरतैरावतदशप्रक्षेपेण सप्तत्यधिकं शतमिति, जघन्यतस्तु विंशतिः, सा चैवं-पञ्चस्वपि महाविदेहेषु महाविदेहान्तर्महानद्युभयतटसद्भावात्तीर्थकृतां प्रत्येकं चत्वारः, तेऽपि पञ्चभिर्गुणिता विंशतिः, भरतैरावतयोस्त्वेकान्तसुषमादावभाव एवेति, अन्ये तु व्याचक्षते—मेरोः पूर्वापरविदेहयोरेकैकसद्भावान्महाविदेहे द्वावेव, ततः पञ्चस्वपि दशैवेति, तथा च ते आहुः-"सत्तरिसयमुक्कोसं इअरे दस समयखेत्तजिणमाणं। चोत्तीसं पढमदीवे अणंतरऽद्धे य ते दुगुणा ॥१॥" के इमे ?-'अर्हन्तो' अर्हन्ति पूजासत्कारादिकमिति, तथा ऐश्वर्याद्युपेता भगवन्तः, ते सर्व एव परप्रश्नावसरे एवमाचक्षते यदुत्तरत्र वक्ष्यते, वर्त्तमाननिर्देशस्योपलक्षणार्थत्वादिदमपि द्रष्टव्यम्-एवमाचचक्षिरे एवमाख्यास्यन्ति, एवं सामान्यतः सदेवमनुजायां परिषदि अर्द्धमागधया सर्वसत्त्वस्वभाषानुगामिन्या भाषया भाषन्ते, एवं प्रकर्षेण संशीत्यवनोदायान्तेवासिनो जीवाजीवास्रवबन्धसंवरनिर्जरामोक्षपदार्थान् ज्ञापयन्ति, एवं सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः मिथ्यात्वाविरतिप्रमादकषाययोगा बन्धहेतवः स्वपरभावेन सदसती तत्त्वं सामान्यविशेषात्मकमित्यादिना प्रकारेण प्ररूपयन्ति, एकार्थिकानि वैतानीति, किं तदेवमाचक्षते इति दर्शयति-यथा 'सर्वे प्राणाः' सर्व एव पृथिव्यप्तेजोवायुवनस्पतयः द्वित्रिचतुःपञ्चेन्द्रियाश्चेन्द्रियबलोच्छ्वासनिश्वासायुष्कलक्षणप्राणधारणात् प्राणाः, तथा सर्वाणि भवन्ति भविष्यन्त्यभूवन्निति च भूतानि चतुर्दशभूतग्रामान्तःपातीनि, एवं सर्व एव जीवन्ति जीविष्यंति अजीविषुरिति जीवाः-नारकतिर्यङ्नरामरलक्षणाश्चतुर्गतिकाः, तथा सर्वे एव स्वकृतसातासातोदयसुखदुःखभाजः सत्त्वाः, एकार्था वैते शब्दाः 'तत्त्वभेदपर्यायैः प्रतिपादन'मितिकृत्वेति, एते च सर्वेऽपि प्राणिनः पर्यायशब्दावेदिता न हन्तव्याः दण्डकशादिभिः, नाज्ञापयितव्याः प्रसह्याभियोगदानतो, न परिग्राह्या भृत्यदासदास्यादिममत्वपरिग्रहतो, न परितापयितव्याः शारीरमानसपीडोत्पादनतो, नापद्रावयि-

उत्कृष्टादिजिताः

५

१०

तव्याः प्राणव्यपरोपणतः, 'एषः' अनन्तरोक्तो 'धर्म्मो' दुर्गत्यर्गलासुगतिसोपानदेश्यः, अस्य च प्रधानपुरुषार्थत्वाद्विशेषणं दर्शयति— 'शुद्धः' पापानुबन्धरहितः, न शाक्यधिग्जातीनामिवेन्द्रियपञ्चेन्द्रियवधानुमतिकलङ्काङ्कितः, तथा 'नित्यः' अप्रच्युतिरूपः, पञ्चस्वपि विदेहेषु सदाभवनात्, तथा 'शाश्वतः' शाश्वतगतिहेतुत्वात् यदिवा नित्यत्वाच्छाश्वतो, न तु नित्यं भूत्वा न भवति, भव्यत्ववत्, अभूत्वा न नित्यं भवति घटाभाववदिति, अयं तु त्रिकालावस्थायीति, अमुं च 'लोकं' जन्तुलोकं दुःखसागरावगाढं 'समेत्य' ज्ञात्वा तदुत्तरणाय 'खेदज्ञैः' जन्तुदुःखपरिच्छेत्तृभिः 'प्रवेदितः' प्रतिपादित इति, एतच्च गौतमस्वामी स्वमनीषिकापरिहारेण शिष्यमतिस्थैर्यार्थं बभाषे, एनमेव सूत्रोक्तार्थं निर्युक्तिकारः सूत्रसंस्पर्शकेन गाथाद्वयेन दर्शयति—

जे जिणवरा अईया जे संपइ जे अणागए काले। सव्वेऽवि ते अहिंसं वदिंसु वदिहिंति विवदिंति ॥२२५॥
छप्पिय जीवनिकाए णोवि हणे णोऽवि अ हणाविज्जा। नोऽवि अ अणुमन्निज्जा सम्मत्तस्सेस निज्जुत्ती ॥२२६॥

[ चतुर्थेऽध्ययने प्रथमोद्देशकनिर्युक्तिः ] गाथाद्वयमपि कण्ठ्यं। तीर्थकरोपदेशश्च परोपकारितया तत्स्वाभाव्यादेव प्रवर्त्तमानो भास्करोदय इव प्रयोज्यविशेषनिरपेक्षतया प्रवर्त्तते(तत्)तद्यथेत्यादिना दर्शयति—'तंजहा—उट्ठिएसु वा' इत्यादि, धर्म्मचरणायोद्यता उत्थिता—ज्ञानदर्शनचारित्रोद्योगवन्तः, तद्विपर्ययेणानुत्थिताः, तेषु निमित्तभूतेषु तानुद्दिश्य भगवता सर्ववेदिना त्रिजगत्पतिना धर्म्मः प्रवेदितः, एवं सर्वत्र लगयितव्यं, यदिवा उत्थितानुत्थितेषु द्रव्यतो निषण्णानिषण्णेषु, तत्रैकादशसु गणधरेषूत्थितेष्वेव वीरवर्द्धमानस्वामिना धर्म्मः प्रवेदितः, तत उपस्थिता धर्म्मं शुश्रूषवो जिघृक्षवो वा तद्विपर्ययेणानुपस्थितास्तेष्विति, निमित्तसप्तमी चेयं, यथा चर्म्मणि द्वीपिनं हन्तीति, ननु च भावोपस्थितेषु चिलातिपुत्रादिष्वेव धर्म्मकथा युक्तिमती, अनुपस्थितेषु तु कं गुणं पुष्णाति?, अनुपस्थितेष्व-

पीन्द्रनागादिषु विचित्रत्वात्कर्मपरिणतेः क्षयोपशमापादनाद्गुणवत्येवेति यत्किञ्चिदेतत्, प्राणिन आत्मानं वा दण्डयतीति दण्डः, स च मनोवाक्कायलक्षणः, उपरतो दण्डो येषां ते तथा, तद्विपर्ययेणानुपरतदण्डाः, तेषूभयरूपेष्वपि, तत्रोपरतदण्डेषु तत्स्थैर्यगुणान्तराधानार्थं देशना, इतरेषु तूपरतदण्डत्वार्थमिति, उपधीयते-मङ्गृह्यत इत्युपधिः, द्रव्यतो हिरण्यादिः भावतो माया, सह उपधिना वर्तन्त इति सोपधिकास्तद्विपर्ययेणानुपधिकास्तेष्विति, संयोगः-सम्बन्धः पुत्रकलत्रमित्रादिजनितस्तत्र रताः संयोगरतास्तद्विपर्ययेणैकत्वभावनाभाविता असंयोगरतास्तेष्विति, तदेवमुभयरूपेष्वपि यद्भगवता धर्मदेशनाऽकारि तत् 'तथ्यं' सत्यमेतदिति, चशब्दो नियमार्थः, तथ्यमेवैतद्भगवद्वचनं, यथाप्ररूपितवस्तुसद्भावात्तथ्यता वचसो भवतीत्यतो वाच्यमपि तथैवेति दर्शयति-तथा चैतद्वस्तु यथा भगवान् जगाद, यथा-सर्वे प्राणा न हन्तव्या इत्यादि, एवं सम्यग्दर्शनं श्रद्धानं विधेयम्, एतच्चास्मिन्नेव मौनीन्द्रप्रवचने सम्यग्मोक्षमार्गविधायिनि समस्तदम्भप्रबन्धोपरते प्रकर्षेणोच्यते प्रोच्यत इति, न तु यथा अन्यत्र 'न हिंस्यात्सर्वभूतानी'त्यभिधायान्यत्र वाक्ये यज्ञपशुवधाभ्यनुज्ञानात् पूर्वोत्तरबाधेति ॥ तदेवं सम्यक्त्वस्वरूपमभिधाय तदवाप्तौ यद्विधेयं तद्दर्शयितुमाह—

**तं आइत्तु न निहे न निक्खिवे जाणित्तु धम्मं जहा तहा, दिट्ठेहिं निव्वेयं गच्छिज्जा, नो लोगस्सेसणं चरे (सू. १२८)** १०

तत् तत्त्वार्थश्रद्धानलक्षणं सम्यग्दर्शनमादाय-गृहीत्वा तत्कार्याकरणतो 'न निहे'ति न गोपयेत्, तथाविधसंसर्गादिनिमित्तोत्थापितमिथ्यात्वोऽपि जीवसामर्थ्यगुणान्न त्यजेदपि, यथा वा शौचशाक्यादीनां गृहीत्वा व्रतानि पुनरपि व्रतेश्वरयागादिविधिना गुरुसमीपे निक्षिप्योत्प्रव्रजनं, एवं गुर्वादेः सकाशादवाप्य सम्यग्दर्शनं 'न निक्षिपेत्' न त्यजेत्, किं कृत्वा ?—यथा तथाऽवस्थितं धर्मं

ज्ञात्वा श्रुतचारित्रात्मकमवगम्य, वस्तूनां वा धर्म्मं-स्वभावमवबुध्येति। तदवगमे तु किं चापरं कुर्यादित्याह-'दिट्ठेहिं' इत्यादि, दृष्टैरिष्टानिष्टरूपैर्निर्वेदं गच्छेद्, विरागं कुर्यादित्यर्थः, तथाहि-शब्दैः श्रुतैः रसैरास्वादितैर्गन्धैराघ्रातैः स्पर्शैः स्पृष्टैः सद्भिरेवं भावयेत्-यथा शुभेतरता परिणामवशाद्भवतीत्यतः कस्तेषु रागो द्वेषो वेति। किं च-'नो लोयस्स' प्राणिगणस्यैषणा—अन्वेषणा इष्टेषु शब्दादिषु प्रवृत्तिःइतरेषु तु हेयबुद्धिस्तां न विदध्यात्॥ यस्य चैषा लोकैषणा नास्ति तस्यान्याप्यप्रशस्ता मतिर्नास्तीति दर्शयति—

जस्स नत्थि इमा जाई अण्णा तस्स कओ सिया?, दिट्ठं सुयं मयं विण्णायं जं एयं परिकहिज्जइ, समेमाणा पलेमाणा पुणो पुणो जाइं पकप्पंति (सू. १२९)

२०

यस्य मुमुक्षोरेषा जातिः-लोकैषणाबुद्धिः 'नास्ति' न विद्यते, तस्यान्या सावद्यारम्भप्रवृत्तिः कुतः स्यात्?, इदमुक्तं भवति-भोगेच्छारूपां लोकैषणां परिजिहीर्षोर्नैव सावद्यानुष्ठानप्रवृत्तिरुपजायते, तदर्थत्वात्तस्या इति, यदिवा 'इमा' अनन्तरोक्तत्वात् प्रत्यक्षा सम्यक्त्वज्ञातिः प्राणिनो न हन्तव्या इति वा यस्य न विद्यते तस्यान्या विवेकिनी बुद्धिः कुमार्गसावद्यानुष्ठानपरिहारद्वारेण कुतः स्यात्?। शिष्यमतिस्थैर्यार्थमाह-'दिट्ठ'मित्यादि, यदेतन्मया परिकथ्यते तत्सर्वज्ञैः केवलज्ञानावलोकेन दृष्टं, ततः शुश्रूषुभिः श्रुतं, लघुकर्म्मणां भव्यानां मतं, ज्ञानावरणीयक्षयोपशमाद्विशेषेण ज्ञातं विज्ञातम्, अतो भवताऽपि सम्यक्त्वादिके मत्कथिते यत्नवता भवितव्यमिति। ये पुनर्यथोक्तकारिणो न स्युः ते कथम्भूता भवेयुरित्याह-'समेमाणा' इत्यादि, तस्मिन्नेव मनुष्यादिजन्मनि 'श्राम्यन्तो' गार्ध्येनात्यर्थमासेवां कुर्वन्तः, तथा 'प्रलीयमानाः' मनोज्ञेन्द्रियार्थेषु पौनःपुन्येनैकेन्द्रियद्वीन्द्रियादिकां जातिं प्रकल्पयन्ति, संसारा-

विच्छित्तिं विदधतीत्यर्थः ॥ यद्येवमविदितवेद्याः साम्प्रतेक्षिणो यथाजन्मकृतरनय इन्द्रियार्थेषु प्रलीनाः पौनःपुन्येन जन्मादिकृत-सन्धाना जन्तवस्ततः किं कर्त्तव्यमित्याह—



**अहो अ राओ य जयमाणे धीरे सया आगयपण्णाणे पमत्ते बहिया पास अप्पमत्ते सया परिक्कमिज्जासित्ति बेमि (सू. १३०)॥ सम्यक्त्वाध्ययने प्रथमोद्देशकः ४—१॥**

५

अहश्च रात्रिं च यतमान एव—यत्नवानेव मोक्षाध्वनि 'धीरः' परीषहोपसर्गाक्षोभ्यः 'सदा' सर्वकालम् 'आगतं' स्वीकृतं 'प्रज्ञानं' सदसद्विवेको यस्य स तथा, 'प्रमत्तान्' असंयतान् परतीर्थिकान्वा धर्माद्बहिर्व्यवस्थितान् पश्य, तांश्च तथाभूतान् दृष्ट्वा किं कुर्या-दित्याह—'अप्पमत्ते' इत्यादि, अप्रमत्तः सन् निद्राविकथादिप्रमादरहितोऽक्षिनिमेषोन्मेषादावपि सदोपयुक्तः पराक्रमेथाः कर्मरिपून् मोक्षाध्वनि वा । इतिरधिकारसमाप्तौ, ब्रवीमीति पूर्ववत् । इति सम्यक्त्वाध्ययने प्रथमोद्देशकटीका परिसमाप्ता ।

---

उक्तः प्रथमोद्देशकः । साम्प्रतं द्वितीयव्याख्या प्रतन्यते, अस्य चायमभिसम्बन्धः—इह अनन्तरोद्देशके सम्यग्वादः प्रतिपादितः, स च प्रत्यनीकमिथ्यावादव्युदासेनात्मलाभं लभते, व्युदासश्च न परिज्ञानमन्तरेण, परिज्ञानं च न विचारमृते, अतो मिथ्यावाद-भूततीर्थिकमतविचारणायेदमुपक्रम्यते, अनेन सम्बन्धेनायातस्यास्योद्देशकस्येदमादिसूत्रं—'जे आसवा' इत्यादि, यदिवेह सम्यक्त्व-मधिकृतं, तच्च सप्तपदार्थश्रद्धानात्मकं, तत्र मुमुक्षुणाऽवगतशस्त्रपरिज्ञाजीवाजीवपदार्थेन संसारमोक्षकारणे निर्णेतव्ये, तत्र संसारका-

१०

रणमामवस्तद्ग्रहणाय बन्धग्रहणं, मोक्षकारणं तु निर्जरा तद्ग्रहणाच्च संवरस्तत्कार्यभूतश्च मोक्षः सूचितो भवतीत्यत आश्रवनिर्जरे संसारमोक्षकारणभूते सम्यक्त्वविचारायाते दर्शयितुमाह—

**जे आसवा ते परिस्सवा जे परिस्सवा ते आसवा, जे अणासवा ते अपरिस्सवा जे अपरिस्सवा ते अणासवा, एए पए संबुज्झमाणे लोयं च आणाए अभिसमिच्चा पुढो पवेइयं (सू० १३१)**

'य' इति सामान्यनिर्देशः, आश्रवत्यष्टप्रकारं कर्म्म यैरारम्भैस्ते आस्रवाः, परिः—समन्तात्स्रवति—गलति यैरनुष्ठानविशेषैस्ते परिस्रवाः, य एवास्रवाः—कर्म्मबन्धस्थानानि त एव परिस्रवाः—कर्म्मनिर्जरास्पदानि, इदमुक्तं भवति—यानि इतरजनाचरितानि स्रगङ्गनादीनि सुखकारणतया तानि कर्म्मबन्धहेतुत्वादास्रवाः, पुनस्तान्येव तत्त्वविदां विषयसुखपराङ्मुखानां निःसारतया संसारसरणिदेश्यानीतिकृत्वा वैराग्यजनकानि अतः परिस्रवाः—निर्जरास्थानानि। सर्ववस्तूनामनैकान्तिकतां दर्शयितुमेतदेव विपर्ययेणाह—'जे परिस्सवा' इत्यादि, य एव परिश्रवाः—निर्जरास्थानानि अर्हत्साधुतपश्चरणदशविधचक्रवालसामाचार्यनुष्ठानादीनि, तान्येव कर्म्मोदयावष्टब्धशुभाध्यवसायस्य दुर्गतिमार्गप्रवृत्तसार्थवाहस्य जन्तोर्महाशातनावतः सातर्द्धिरसगौरवप्रवणस्यास्रवा भवन्ति—पापोपादानकारणानि जायन्ते, इदमुक्तं भवति—यावन्ति कर्म्मनिर्जरार्थं संयमस्थानानि तद्बन्धनायासंयमस्थानान्यपि तावन्त्येव, उक्तं च—"यथाप्रकारा यावन्तः, संसारावेशहेतवः। तावन्तस्तद्विपर्यासान्निर्वाणसुखहेतवः ॥ १ ॥" तथाहि—रागद्वेषवासितान्तःकरणस्य विषयसुखोन्मुखस्य दुःखाशयत्वात्सर्वं संसाराय, पिचुमन्दरसवासितास्यस्य दुग्धशर्करादिकटुत्वावाप्तिवदिति, सम्यग्दृष्टेस्तु विदितसं-

२० प्र. आ. १८१

सारोदन्वतः न्यकृतविषयाभिलाषस्य सर्वमशुचि दुःखकारणमिति च भावयतः सञ्जातसंवेगस्येतरजनसंसारकारणमपि मोक्षायेति भावार्थः। पुनरेतदेव गतप्रत्यागतसूत्रं सप्रतिषेधमाह–'जे अणासवा' इत्यादि, प्रसज्यप्रतिषेधस्य क्रियाप्रतिषेधपर्यवसानतया परिस्रवा इत्यनेन सह सम्बन्धाभावात् पर्युदासोऽयम्, आस्रवेभ्योऽन्येऽनास्रवाः–व्रतविशेषाः, तेऽपि कर्मोदयादशुभाध्यवसायिनोऽपरिस्रवाः कर्मणः, कोङ्कणार्यप्रभृतीनामिवेति, तथाऽपरिस्रवाः–पापोपादानकारणानि केनचिदुपाधिना प्रवचनोपकारादिना क्रियमाणाः कणवीरलताभ्रामकक्षुल्लकस्येवानास्रवाः–कर्मबन्धनानि न भवन्ति, यदिवा आस्रवन्तीत्यास्रवाः, पचाद्यच्, एवं परिस्रवन्तीति परिस्रवाः, अत्र चतुर्भङ्गिका–तत्र मिथ्यात्वाविरतिप्रमादकषाययोगैर्य एव कर्मणामास्रवाः–बन्धकाः त एवापरेषां परिस्रवाः–निर्जरकाः, एते च प्रथमभङ्गपतिताः सर्वेऽपि संसारिणश्चतुर्गतिकाः, सर्वेषां प्रतिक्षणमुभयसद्भावात्, तथा ये आस्रवास्ते ऽपरिस्रवा इति शून्योऽयं द्वितीयभङ्गको, बन्धस्य शाटाविनाभावित्वाद्, एवं येऽनास्रवास्ते परिस्रवाः, एते चायोगिकेवलिनस्तृतीयभङ्गपतिताः, चतुर्थभङ्गपतितास्तु सिद्धाः, तेषामनास्रवत्वादपरिस्रवत्वाच्चेति, अत्र चाद्यन्तभङ्गकौ सूत्रोपात्तौ, तदुपादाने च मध्योपादानस्यावश्यंभावित्वात् मध्यभङ्गकद्वयग्रहणं द्रष्टव्यमिति। यद्येवं ततः किमित्याह–'एए पए' इत्यादि, एतानि–अनन्तरोक्तानि पद्यते–गम्यते येभ्योऽर्थस्तानि पदानि, तद्यथा–ये आस्रवा इत्यादीनि, परस्य चार्थावगत्यर्थं शब्दप्रयोगादेतत्पदवाच्यानर्थान् सम्यग्–अविपर्यासेन बुध्यमानः तथा 'लोकं' जन्तुगणमास्रवद्वारायातेन कर्मणा बध्यमानं तपश्चरणादिना च मुच्यमानमाज्ञया–तीर्थकरप्रणीतागमानुसारेणाभिसमेत्य–आभिमुख्येन सम्यक् परिच्छिद्य, चशब्दो भिन्नक्रमः, पृथक् प्रवेदितं चाभिसमेत्य पृथगास्रवोपादानं निर्जरोपादानं चेत्येतच्च ज्ञात्वा को नाम धर्मचरणं प्रति नोद्यच्छेदिति ?, कथं प्रवेदितमिति चेत् ?, तदुच्यते,

५

१०

४ सम्य. २ उद्दे०

आसवत्वाद्यज्ञानप्रत्यनीकतया ज्ञाननिह्नवेन ज्ञानान्तरायेण ज्ञानप्रद्वेषेण ज्ञानात्याशातनया ज्ञानविसंवादेन ज्ञानावरणीयं कर्म्म बध्यते, एवं दर्शनप्रत्यनीकतया यावद्दर्शनविसंवादेन दर्शनावरणीयं कर्म्म बध्यते, तथा प्राणिनामनुकम्पनतया भूतानुकम्पनतया जीवानुकम्पनतया सत्त्वानुकम्पनत्वेन बहूनां प्राणिनामदुःखोत्पादनतया अशोचनतया अजूरणतया अपीडनतया अपरितापनतया सातावेदनीयं कर्म्म बध्यते, एतद्विपर्ययाच्चासातावेदनीयमिति, तथाऽनन्तानुबन्ध्युत्कटतया तीव्रदर्शनमोहनीयतया प्रबलचारित्रमोहनीयाज्ज्ञानान्मोहनीयं कर्म्म बध्यते, महारम्भतया महापरिग्रहतया पञ्चेन्द्रियवधात् कुणिमाहारेण नरकायुष्कं बध्यते, मायाविनया अनृतवादेन कूटतुलाकूटमानव्यवहारात्तिर्यगायुर्बध्यते, प्रकृतिविनीततया सानुक्रोशतया अमात्सर्यान्मनुष्यायुष्कं, सरागसंयमेन देशविरत्या बालतपसा अकामनिर्जरया देवायुष्कमिति, कायर्जुतया भावर्जुतया भाषर्जुतया अविसंवादनयोगेन शुभनाम बध्यते, विपर्ययाच्च विपर्यय इति, जातिकुलबलरूपतपःश्रुतलाभैश्वर्यमदाभावादुच्चैर्गोत्रं, जात्यादिमदात् परपरिवादाच्च नीचैर्गोत्रं, दानलाभभोगोपभोगवीर्यान्तरायविधानादान्तरायिकं कर्म्म बध्यते, एते ह्यास्रवाः, साम्प्रतं परिस्रवाः प्रतिपाद्यन्ते—अनशनादि सबाह्याभ्यन्तरं तप इत्यादि, एवमास्रवकनिर्जरकाः सप्रभेदा अन्तयो वाच्याः, सर्वेऽपि च जीवादयः पदार्था मोक्षावसाना वाच्याः। एतानि च पदानि सम्बुध्यमानैस्तीर्थकरगणधरैर्लोकमभिसमेत्य पृथक् पृथक् प्रवेदितम्, अन्योऽपि तदाज्ञानुसारी चतुर्दशपूर्वविदादिः सत्त्वहिताय परेभ्य आवेदयतीत्येतद्दर्शयितुमाह—

प्र. आ. १८२

आघाइ नाणी इह माणवाणं संसारपडिवण्णाणं संबुज्झमाणाणं विन्नाणपत्ताणं, अट्टावि संता अदुवा पमत्ता अहासच्चमिणं तिबेमि. नाणागमो मच्चुमुहस्स अत्थि. इच्छापणीया

१५ ज्ञानावरणीयाद्याश्रवाः

२०



२८

वंकानिकेया कालगहीया निचयनिविट्ठा पुढो पुढो जाई पकप्पयंति (सू. १३२)

ज्ञानं मकलपदार्थाविर्भावकं विद्यते यस्यासौ ज्ञानी स 'आख्याति' आचष्टे 'इहे'ति प्रवचने, केषां ?—मानवानां, सर्वसंवरचारित्रा-र्हत्वात्तेषाम्, अथवोपलक्षणं चैतद्देवादीनां, तत्रापि केवल्यादिव्युदासाय विशेषणमाह—'संसार' इत्यादि, संसार—चतुर्गतिलक्षणं प्रति-पन्नाः संसारप्रतिपन्नाः, तत्रापि ये धर्म्मं भोत्स्यन्ते ग्रहीष्यन्ते च मुनिसुव्रतस्वामिघोटकदृष्टान्तेन तेषामेवाख्यातीत्येतद्दर्शयति—'सम्बुध्यमानानां' यथोपदिष्टं धर्म्मं सम्यगवबुध्यमानानां, छद्मस्थेन त्वज्ञातबुध्यमानेतरविशेषेण यादृग्भूतानां कथयितव्यं तान् सूत्रेणैव दर्शयति—'विज्ञानप्राप्ता' हिताहितप्राप्तिपरिहाराध्यवसायो विज्ञानं तत्प्राप्ता विज्ञानप्राप्ताः, समस्तपर्याप्तिभिः पर्याप्ताः, संज्ञिन इत्यर्थः, नागार्जुनीयास्तु पठन्ति—"आघाइ धम्मं खलु से जीवाणं, तंजहा—संसारपडिवन्नाणं माणुसभवत्थाणं आरंभ विणईणं दुक्खुव्वेअसुहेसगाणं धम्मसवणगवेसयाणं सुस्सूसमाणाणं पडिपुच्छमाणाणं विण्णाणपत्ताणं" एतच्च प्रायो गतार्थमेव, नव-रमारम्भविनयिनामित्यारम्भविनयः—आरम्भाभावः स विद्यते येषामिति मत्वर्थीयस्तेषामिति । यथा च ज्ञानी धर्म्ममाचष्टे तथा दर्शयति—'अट्टावि' इत्यादि, विज्ञानं प्राप्ता धर्म्मं कथ्यमानं कुतश्चिन्निमित्तादार्त्ता अपि सन्तः चिलातिपुत्रादय इव अथवा प्रमत्ता विषयाभिष्वङ्गादिना शालिभद्रादय इव तथाविधकर्म्मक्षयोपशमापत्तेर्यथा प्रतिपद्यन्ते तथाऽऽचष्टे, यदिवाऽऽर्त्ताः—दुःखिनः प्रमत्ताः—सुखिनः, तेऽपि प्रतिपद्यन्ते धर्म्मं, किं पुनरपरे ?, अथवा आर्त्ताः रागद्वेषोदयेन प्रमत्ता विषयैः, ते च तीर्थिका गृहस्था वा संसारकान्तारं विशन्तः कथं भवतां विज्ञातज्ञेयानां करुणास्पदाना रागद्वेषविषयाभिलाषोन्मूलनाय न प्रभवन्ति । एतच्चान्यथा

मा मंस्था इति दर्शयितुमाह–'अहामच' मित्यादि, इदं यन्मया कथितं कथ्यमानं च तद्यथामत्यं, याथातथ्यमित्यर्थः, इत्येतदहं ब्रवीमि, यथा दुर्लभमवाप्य सम्यक्त्वं चारित्रपरिणामं वा प्रमादो न कार्यः, स्यात्–किमालम्ब्य प्रमादो न कार्यस्तदाह–'नाणागमो' इत्यादि, न ह्यनागमो मृत्योर्मुखस्य कस्यचिदपि संसारोदरवर्त्तिनोऽस्तीति, उक्तं च–"वदत यदीह कश्चिदनुसंततसुखपरिभोगलालितः। प्रयत्नशतपरोऽपि विगतव्यथमायुरवाप्तवाचरः ॥ १ ॥ न खलु नरः सुरौघसिद्धासुरकिन्नरनायकोऽपि यः। सोऽपि कृतान्तदन्तकुलिशाक्रमेण कृशितो न नश्यति ॥२॥" तथोपायोऽपि मृत्युमुखप्रतिषेधस्य न कश्चिदस्तीति, उक्तं च–"नश्यति नौति याति वितनोति करोति रसायनक्रियां, चरति गुरुव्रतानि विवराण्यपि विशति विशेषकातरः। तपति तपांसि खादति मितानि करोति च मन्त्रसाधनं, तदपि कृतान्तदन्तयन्त्रकचक्रमर्णैर्विदार्यते ॥ १ ॥" ये पुनर्विषयकषायाभिष्वङ्गात् प्रभूता धर्म्मं नावबुध्यन्ते ते किम्भूता भवन्तीत्याह–'इच्छा' इत्यादि, इन्द्रियमनोविषयानुकूला प्रवृत्तिरिहेच्छा तया विषयाभिमुखमभिकर्म्मबन्धं संसाराभिमुखं वा प्रकर्षेण नीता इच्छाप्रणीताः, ये चैवम्भूतास्ते 'वंकानिकेता' वङ्कस्य–असंयमस्य आ–मर्यादया संयमावधिभूतया निकेतभूताः–आश्रया वङ्कानिकेताः, वङ्को वा निकेतो येषां ते वङ्कानिकेताः, पूर्वपदस्य दीर्घत्वं, ये चैवम्भूतास्ते 'कालगृहीताः' कालेन–मृत्युना गृहीताः कालगृहीताः, पौनःपुन्यमरणभाज इत्यर्थः, धर्मचरणाय वा गृहीतः–अभिसन्धितः कालो यैस्ते कालगृहीताः, आहिताग्निदर्शनादार्पत्वाद्वा निष्ठान्तस्य परनिपातः, तथाहि–पाश्चात्ये वयसि परुत्परारि वा अपत्यपरिणयनोत्तरकालं वा धर्म्मं करिष्याम इत्येवं गृहीतकालाः, ये चैवम्भूतास्ते निचये निविष्टा–निचये कर्म्मनिचये तदुपादाने वा सावद्यारम्भनिचये निविष्टाः–अध्युपपन्नाः, ये चेच्छाप्रणीता वङ्कानिकेताः कालगृहीता निचये निविष्टास्ते तद्धर्माणः किमपरं कुर्वन्तीति दर्शयितुमाह–'पुढो पुढो' इत्यादि, पृथ-

प्र. आ. १८२

२०

कृपृथगेकेन्द्रियद्वीन्द्रियादिका जातिमनेकशः 'प्रकल्पयन्ति' प्रकुर्वन्ति, पाठान्तरं वा 'एत्थ मोहे पुणो पुणो' 'अत्र' अस्मिन्निच्छाप्रणीतादिके हृषीकानुकूले मोहे कर्म्मरूपे वा मोहे निमग्नाः पुनः पुनस्तत्कुर्वन्ति येन तदप्रच्युतिः स्यात् ॥ तदप्रच्युतौ च किं स्यादित्याह–

इहमेगेसिं तत्थ तत्थ संथवो भवइ, अहोववाइए फासे पडिसंवेयंति, चिट्ठं कम्मेहिं कूरेहिं चिट्ठं परिचिट्ठइ, अचिट्ठं कूरेहिं कम्मेहिं नो चिट्ठं परिचिट्ठइ, एगे वयंति अदुवावि नाणी, नाणी वयंति अदुवावि एगे (सू. १३३)

'इह' अस्मिंश्चतुर्दशरज्ज्वात्मके लोके 'एकेषां' मिथ्यात्वाविरतिप्रमादकषायवतां 'तत्र तत्र' नरकतिर्यग्गत्यादिषु यातनास्थानकेषु 'संस्तवः' परिचयो भूयोभूयोगमनाद्भवति, ततः किमित्याह–'अहोववाइए' इत्यादि, त एवमिच्छया प्रणीतत्वादिन्द्रियवशगास्तद्वशित्वात्तदनुकूलमाचरन्तो नरकादियातनास्थानजातसंस्तवाः, तीर्थिका अप्यौद्देशिकादि निर्दोषमाचक्षाणा 'अधऔपपातिकान्' नरकादिभवान् 'स्पर्शान्' दुःखानुभवान् प्रतिसंवेदयन्ति, तथाहि–लोकायतिका ब्रुवते–"पिब खाद च चारुलोचने !, यदतीतं वरगात्रि ! तन्न ते । न हि भीरु ! गतं निवर्त्तते, समुदयमात्रमिदं कलेवरम् ॥१॥" वैशेषिका अपि सावद्ययोगारम्भिणः, तथाहि ते भाषन्ते–'अभिषेचनोपवासब्रह्मचर्यगुरुकुलवासवानप्रस्थयज्ञदानप्रो(प्रो)क्षणदिङ्नक्षत्रमन्त्रकालनियमाः' इत्यादि, अन्येऽपि सावद्ययोगानुष्ठायिनोऽनया दिशा वाच्याः, स्यात्–किं सर्वोऽपीच्छाप्रणीतादिर्यावत्तत्र तत्र कृतसंस्तवोऽधऔपपातिकान् स्पर्शान् प्रतिसंवेदयति आहोस्वित्कश्चिदेव तद्योग्यकर्म्मकार्येवानुभवति ?, न सर्व इति दर्शयति–'चिट्ठं' इत्यादि, चिट्ठं–भृशमत्यर्थं 'क्रूरैः' वधबन्धा-



५

१०

दिभिः 'कर्म्मभिः' क्रियाभिः 'चिट्ठ'मिति भृशमत्यर्थमेव विरूपां दशां वैतरणीतरणासिपत्रपाताभिघातशाल्मलीवृक्षालिङ्गनादिजनितामनुभवंस्तमस्तमादिस्थानेषु परितिष्ठति, यस्तु नात्यर्थं हिंसादिभिः कर्म्मभिर्वर्त्तते सोऽत्यन्तवेदनानिचितेष्वपि नरकेषु नोत्पद्यते, स्यात्—क एवं वदतीत्याह—'एगे वयंती' त्यादि, 'एके' चतुर्दशपूर्वविदादयो 'वदन्ति' ब्रुवते, अथवाऽपि ज्ञानी वदति, ज्ञानं—सकलपदार्थाविर्भावकम् अस्यास्तीति ज्ञानी, स चैतद् ब्रवीति, यद्दिव्यज्ञानी केवली भाषते श्रुतकेवलिनोऽपि तदेव भाषन्ते, यच्च श्रुतकेवलिनो भाषन्ते निरावरणज्ञानिनोऽपि तदेव वदन्तीत्येतद्गतप्रत्यागतसूत्रेण दर्शयति—'णाणी' इत्यादि, 'ज्ञानिनः'केवलिनो यद्वदन्ति अथवाऽप्येके—श्रुतकेवलिनो यद्वदन्ति तद्यथार्थभाषित्वादेकमेव, एकेषां सर्वार्थप्रत्यक्षत्वादपरेषां तदुपदेशप्रवृत्तेरिति, वक्ष्यमाणेऽप्येकवाक्यतेति। तदाह—

आवंति केयावंती लोयंसि समणा य माहणा य पुढो विवायं वयंति, से दिट्ठं च णे सुयं च णे मयं च णे विण्णायं च णे उड्ढं अहं तिरियं दिसासु सव्वओ सुपडिलेहियं च णे—सव्वे पाणा सव्वे जीवा सव्वे भूया सव्वे सत्ता हन्तव्वा अज्जावेयव्वा परियावेयव्वा परिघेत्तव्वा उद्दवेयव्वा, इत्थवि जाणह नत्थित्थ दोसो, अणारियवयणमेयं, तत्थ जे आरिआ ते एवं वयासी—से दुद्दिट्ठं च भे दुस्सुयं च भे दुम्मयं च भे दुव्विण्णायं च भे उड्ढं अहं तिरियं दिसासु

केवलि-श्रुत-केवलि-तुल्यता

सव्वओ दुप्पडिलेहियं च भे, जं णं तुब्भे एवं आइक्खह एवं भासह एवं परूवेह एवं पण्णवेह–सव्वे पाणा ४ हंतव्वा ५, इत्थवि जाणह नत्थित्थ दोसो, अणारियवयणमेयं, वयं पुण एवमाइक्खामो एवं भासामो एवं परूवेमो एवं पण्णवेमो–सव्वे पाणा ४ न हंतव्वा १ न अज्जावेयव्वा २ न परिघित्तव्वा ३ न परियावेयव्वा ४ न उद्दवेयव्वा ५, इत्थवि जाणह नत्थित्थ दोसो, आयरियवयणमेयं, पुव्वं निकाय समयं पत्तेयं पत्तेयं पुच्छिस्सामि, हंभो पवाइया ! किं भे सायं दुक्खं असायं ?, समिया पडिवण्णे यावि एवं बूया–सव्वेसिं पाणाणं सव्वेसिं भूयाणं सव्वेसिं जीवाणं सव्वेसिं सत्ताणं असायं अपरिनिव्वाणं महब्भयं दुक्खं-तिबेमि (सू. १३४) ॥ चतुर्थाध्ययने द्वितीय उद्देशकः ४–२ ॥

५

'आवन्ती'ति यावन्तः 'केआवन्ती' केचन 'लोके' मनुष्यलोके 'श्रमणाः' पाषण्डिकाः 'ब्राह्मणा' द्विजातयः पृथक्पृथग् विरुद्धो वादो विवादस्तं वदन्ति, एतदुक्तं भवति–यावन्तः केचन परलोकं झीप्सवस्ते आत्मीयदर्शनानुरागितया पाराक्यं दर्शनमपवदन्तो विवदन्ते, तथाहि–भागवता ब्रुवते–"पञ्चविंशतितत्त्वरिज्ञानान्मोक्षः, सर्वव्याप्यात्मा निष्क्रियो निर्गुणश्चैतन्यलक्षणो, निर्विशेषं

१०

सामान्य तत्त्व"मिति, वैशेषिकास्तु भाषन्ते—"द्रव्यादिषट्पदार्थपरिज्ञानान्मोक्षः,समवायिज्ञानगुणेनेच्छाप्रयत्नद्वेषादिभिश्च गुणैर्गुणवानात्मा, परस्परनिरपेक्षं सामान्यविशेषात्मकं तत्त्व"मिति, शाक्यास्तु वदन्ति—यथा "परलोकानुयाय्यात्मैव न विद्यते, निःसामान्यं वस्तु क्षणिकं चे"ति, मीमांसकास्तु मोक्षसर्वज्ञाभावेन व्यवस्थिता इति, तथा केषाञ्चित् पृथिव्यादय एकेन्द्रिया जीवा न भवन्ति, अपरे वनस्पतीनामप्यचेतनतामाहुः, तथा द्वीन्द्रियादीनामपि कृम्यादीनां न जन्तुस्वभावं प्रतिपद्यन्ते, तद्भावे वा न तद्वधे बन्धोऽल्पबन्धता वेति, तथा हिंसायामपि भिन्नवाक्यता, तदुक्तम्—"प्राणी प्राणिज्ञानं घातकचित्तं च तद्गता चेष्टा। प्राणैश्च विप्रयोगः पञ्चभिरापद्यते हिंसा ॥१॥" इत्येवमादिक औद्देशिकपरिभोगाभ्यनुज्ञादिकश्च विरुद्धो वादः स्वत एवाभ्यूह्यः । यदिवा ब्राह्मणाः श्रमणा धर्मविरुद्धं वादं यद्वदन्ति तत्सूत्रेणैव दर्शयति—'से दिट्ठं च णे' इत्यादि यावत् 'नत्थित्थ दोसो'त्ति, 'से'त्ति तच्छब्दार्थे यदहं वक्ष्ये तत् 'दृष्टम्' उपलब्धं दिव्यज्ञानेनास्माभिः अस्माकं वा सम्बन्धिना तीर्थकृता आगमप्रणायकेन,चशब्द उत्तरापेक्षया समुच्चयार्थः, श्रुतं चास्माभिर्गुर्वादेः सकाशात्, अस्मद्गुरुशिष्यैर्वा तदन्तेवासिभिर्वा, मतम्—अभिमतं युक्तियुक्तत्वादस्माकमस्मत्तीर्थकराणां वा, विज्ञातं च तत्त्वभेदपर्यायैरस्माभिरस्मत्तीर्थकरेण वा, स्वतो न परोपदेशदानेन, एतच्चोर्ध्वाधस्तिर्यक्षु दशस्वपि दिक्षु सर्वतः—सर्वैः प्रत्यक्षानुमानोपमानागमार्थापत्त्यादिभिः प्रकारैः सुष्ठु प्रत्युपेक्षितं च—पर्यालोचितं च, मनःप्रणिधानादिना अस्माभिरस्मत्तीर्थकरेण वा, किं तदित्याह—सर्वे प्राणाः सर्वे जीवाः सर्वे भूताः सर्वे सत्त्वा हन्तव्या आज्ञापयितव्याः परिग्रहीतव्याः परितापयितव्या अपद्रापयितव्याः, 'अत्रापि' धर्मचिन्तायामप्येवं जानीथ, यथा नास्त्यत्र यागार्थं देवतोपयाचितकतया वा प्राणिहननादौ 'दोषः' पापानुबन्ध इति, एवं यावन्तः केचन पाषण्डिका औद्देशिकभोजिनो ब्राह्मणा वा धर्मविरुद्धं परलोकविरुद्धं वादं भाषन्ते । अयं च जीवोपम-

र्दकत्वात् पापानुबन्धी अनार्यप्रणीत इति, आह च-आराद्याताः सर्वहेयधर्मेभ्यः इत्यार्यास्तद्विपर्यासादनार्याः-क्रूरकर्माणस्तेषा प्राण्युपघातकारीदं वचनं, ये तु तथाभूता न ते किम्भूतं प्रज्ञापयन्तीत्याह-'तत्थ' इत्यादि, 'तत्रे'ति वाक्योपन्यासार्थे निर्धारणे वा, ये ते आर्या देशभाषाचारित्रार्यास्त एवमवादिषुः, यथा यत्तदनन्तरोक्तं दुर्दृष्टमेतद्, दुष्टं दृष्टं दुर्दृष्टं 'भे' युष्माभिर्युष्मत्तीर्थकरेण वा, एवं यावद्दुष्प्रत्युपेक्षितमिति। तदेवं दुर्दृष्टादिकं प्रतिपाद्य दुष्प्रज्ञापनानुवादद्वारेण तदभ्युपगमे दोषाविष्करणमाह—'जं ण' मित्यादि, णमिति वाक्यालङ्कारे, यदेतद्वक्ष्यमाणं यूयमेवमाचढ्ध्वमित्यादि यावदत्रापि यागोपहारादौ जानीथ यूयं यथा नास्त्येवात्र-प्राण्युपमर्दानुष्ठाने दोषः—पापानुबन्ध इति, तदेवं परवादे दोषाविर्भावनेन धर्म्मविरुद्धतामाविर्भाव्य स्वमतवादमार्या आविर्भावयन्ति—'वय' मित्यादि, पुनःशब्दः पूर्वस्माद्विशेषमाह, वयं पुनर्यथा धर्म्मविरुद्धवादो न भवति तथा प्रज्ञापयाम इति, तान्येव पदानि सप्रतिषेधानि हन्तव्यादीनि यावत्र केवलमत्र-अस्मदीये वचनेनास्ति दोषः, अत्रापि-अधिकारे जानीथ यूयं यथा 'अत्र' हननादिप्रतिषेधविधौ नास्ति दोषः-पापानुबन्धः, सावधारणत्वाद्वाक्यस्य नास्त्येव दोषः, प्राण्युपघातप्रतिषेधादार्यवचनमेतत्, एवमुक्ते सति ते पाषण्डिका ऊचुः—भवदीयमार्यवचनमस्मदीयं त्वनार्यमित्येतन्निरन्तराः सुहृदः प्रत्येष्यन्ति, युक्तिविकलत्वात्, तदत्राचार्यो यथा परमतस्यानार्यता स्यात्तथा दिदर्शयिषुः स्ववाग्यन्त्रिता वादिनो न विचलयिष्यन्तीतिकृत्वा प्रत्येकमतप्रच्छनार्थमाह-'पुव्वं' मित्यादि, 'पूर्वम्' आदावेव 'समयम्' आगमं यद्यदीयागमेऽभिहितं तत् 'निकाच्य' व्यवस्थाप्य पुनस्तद्विरूपापादनेन परमतानार्यता प्रतिपाद्येत्यतस्तदेव परमतं प्रश्नयति, यदिवा पूर्वं प्राश्निकानिकाच्य ततः पाषण्डिकान् प्रश्नयितुमाह-'पत्तेयं' मित्यादि, एकमेकं प्रति प्रत्येकं भोः प्रावादुका! भवतः प्रश्नयिष्यामि, किं 'भे' युष्माकं 'सातं' मनआह्लादकारि दुःखम्? उतासातं-मनःप्रतिकूलं?, एवं पृष्टाः सन्तो

यदि सातमित्येवं ब्रूयुः ततः प्रत्यक्षागमलोकबाधा स्याद्, अथ चासातमित्येवं ब्रूयुः ततः 'समिया' सम्यक् प्रतिपन्नांस्तान् प्रावादुकान् स्ववाग्यत्रितानप्येवं ब्रूयात्—'अपिः' सम्भावने, सम्भाव्यते एतद्भणनं—यथा न केवलं भवतां दुःखमसातं, सर्वेषामपि प्राणिनां दुःखमसातं-मनसोऽनभिप्रेतम् अपरिनिर्वाणम्—अनिर्वृत्तिरूपं महद्भयं दुःखमित्येतत् परिगणय्य सर्वेऽपि प्राणिनो न हन्तव्या इत्यादि वाच्यं, तद्धनने च दोषः, यस्त्वदोषमाह तदनार्यवचनम् । इतिरधिकारपरिसमाप्तौ, ब्रवीमीति पूर्ववत्, तदेवं प्रावादुकानां स्ववाग्भियन्त्रणयाऽनार्यता प्रतिपादिता, अत्रैव रोहगुप्तमन्त्रिणा विदितागमसद्भावेन माध्यस्थ्यमवलम्बमानेन तीर्थिकपरीक्षाद्वारेण यथा निराकरणं चक्रे तथा निर्युक्तिकारो गाथाभिराचष्टे—



खुड्डग पायसमासं धम्मकहंपि य अजंपमाणेणं । छन्नेण अन्नलिंगी परिच्छिया रोहगुत्तेणं ॥२२७॥

अनया गाथया सङ्क्षेपतः सर्वं कथानकमावेदितं क्षुल्लकस्य, 'पादसमासो' गाथापादसङ्क्षेपः तमजल्पता धर्म्मकथां च 'छन्नेन' अप्रकटेन 'अन्यलिङ्गिनः' प्रावादुकाः 'परीक्षिताः' निरूपिताः 'रोहगुप्तेन' रोहगुप्तनाम्ना मन्त्रिणेति गाथासमासार्थः । भावार्थस्तु कथानकादवसेयः, तच्चेदम्—चम्पायां नगर्यां सिंहसेनस्य राज्ञो रोहगुप्तो नाम महामन्त्री, स चार्हद्दर्शनभावितान्तःकरणो विज्ञातसदसद्वादः, तत्र च कदाचिद्राजाऽऽस्थानस्थो धर्म्मविचारं प्रस्तावयति. तत्र यो यस्याभिमतः स तं शोभनमुवाच, स च तूष्णीभावं भजमानो राज्ञोक्तः—धर्म्मविचारं प्रति किमपि न ब्रूते भवान्?, स त्वाह—किमेभिः पक्षपातवचोभिः?, विमर्शमः स्वत एव धर्म्मं, परीक्षामहे तीर्थिकानित्यभिधाय राजानुमत्या 'सकुण्डलं' वा वदनं न व'त्ति, अयं गाथापादो नगरमध्ये आलम्ब्ये, सम्पूर्णा तु गाथा भाण्डागारिणा, नगर्यां चोद्घुष्टं, यथा—य एनं गाथापादं पूरयिष्यति तस्य राजा यथेप्सितं दानं दास्यति नञ्जरकश्च भविष्यतीति,

सुगमा, अत्र च क्षान्त्यादिकमपरिज्ञाने कारणमुपन्यस्तं, न पुनर्व्याक्षेप इत्यतो गाथासंवादात् क्षान्तिदमजितेन्द्रियत्वाध्यात्म-योगाधिगतेश्च कारणाद्राज्ञो धर्म्मं प्रति भावोल्लासोऽभूत्, क्षुल्लकेन च धर्म्मप्रश्नोत्तरकालं पूर्वगृहीतशुष्केतरकर्दमगोलकद्वयं भित्तौ निक्षिप्य गमनमारेभे, पुनर्गच्छन् राज्ञोक्तः-किमिति भवान् धर्म्मं पृष्टोऽपि न कथयति ?, स चावोचत्—हे मुग्ध ! ननु कथित एव धर्म्मो भवतः शुष्केतरगोलकदृष्टान्तेन । एतदेव गाथाद्वयेनाह—

**उल्लो सुक्खो य दो छूढा, गोलया मट्टियामया । दोऽवि आवडिया कुड्डे, जो उल्लो तत्थ (सोऽत्थ) लग्गइ ॥२३२॥**
**एवं लग्गंति दुम्मेहा, जे नरा कामलालसा । विरत्ता उ न लग्गंति, जहा से सुक्कगोलए ॥२३३॥**

अयमत्र भावार्थः-ये ह्यङ्गप्रत्यङ्गनिरीक्षणव्यासङ्गात् कामिनीनां मुखं न पश्यन्ति तदभावे तु पश्यन्ति ते कामगृध्नुतया सार्द्राः, सार्द्रतया च संसारपङ्के कर्मकर्दमे वा लगन्ति, ये तु पुनः क्षान्त्यादिगुणोपेताः संसारसुखपराङ्मुखाः काष्ठमुनयस्ते शुष्कगोल-कसन्निभा न क्वचिल्लगन्तीति गाथाद्वयार्थः । सम्यक्त्वाध्ययने द्वितीयोद्देशकनिर्युक्तिः । इति सम्यक्त्वाध्ययने द्वितीयोद्दे-शकः समाप्तः ॥४-२॥



---

उक्तो द्वितीयोद्देशकः, साम्प्रतं तृतीय आरभ्यते, अस्य चायमभिसम्बन्धः—इहानन्तरोद्देशके परमतव्युदासद्वारेण सम्यक्त्वमवि-चलं प्रतिपादयता तत्सहचरितं ज्ञानं तत्फलभूता च विरतिरभिहिता, सत्यपि चास्मिंस्त्रये न पूर्वोपात्तकर्म्मणो निरवद्यतपोऽनुष्ठान-मन्तरेण क्षयो भवतीत्यतस्तदधुना प्रतिपाद्यत इत्यनेन सम्बन्धेनायातस्यास्योद्देशकस्यादि सूत्रम्—

१० ४ सम्य. ३ उद्दे०

तेऽपि न सर्वे, अपि तु मृतार्चा-मृतेव मृता संस्काराभावादर्चा-शरीरं येषां ते तथा, निष्प्रतिकर्मशरीरा इत्यर्थः, यदिवा अर्चा-तेजः, स च क्रोधः, स च कषायोपलक्षणार्थः, ततश्चायमर्थो-मृता-विनष्टा अर्चा कषायरूपा येषां ते मृतार्चाः, अकषायिण इत्यर्थः, किं च-'धर्म्मं' श्रुतचारित्राख्यं विदन्तीति धर्म्मविदः, इति हेतौ, यत एव धर्म्मविदोऽत एव ऋजवः-कौटिल्यरहिताः। स्यादे-तत्-किमालम्ब्यैतद्विधेयमित्यत आह-'आरंभज' मित्यादि, सावद्यक्रियानुष्ठानमारम्भस्तस्माज्जातमारम्भजं, किं तद् ?-दुःखम् इद-मिति सकलप्राणिप्रत्यक्षं, तथाहि-कृषिसेवावाणिज्याद्यारम्भप्रवृत्तो यच्छारीरमानसं दुःखमनुभवति न तद्वाचामगोचरमित्यतः प्रत्य-क्षाभिधायिनेदमोक्तम्, 'इतिः' उपप्रदर्शने, इत्येतदनुभवसिद्धं दुःखं ज्ञात्वा मृतार्चा धर्म्मविद ऋजवश्च भवन्तीति। एतच्च समस्त-वेदिनो भाषन्त इति दर्शयति-'एव'मित्यादि, 'एवं' पूर्वोक्तप्रकारेण 'आहुः' उक्तवन्तः, के एवमाहुः ?-समत्वदर्शिनः सम्यक्त्व-दर्शिनः समस्तदर्शिनो वा, यदुद्देशकादेरारभ्योक्तं तदेवमूचुरित्यर्थः, कस्मात्त ऊचुरित्याह-'ते सव्वे' इत्यादि, यस्मात्ते सर्वेऽपि सर्वविदः 'प्रावादिकाः' प्रकर्षेण मर्यादया वदितुं शीलं येषां ते प्रावादिनः त एव प्रावादिकाः-यथावस्थितार्थस्य प्रतिपादनाय वावदूकाः, 'दुःखस्य' शारीरमानसलक्षणस्य तदुपादानस्य वा कर्म्मणः 'कुशला' निपुणास्तदपनोदोपायवेदिनः सन्तः ते सर्वेऽपि ज्ञप-रिज्ञया परिज्ञाय हेयार्थस्य प्रत्याख्यानपरिज्ञामुदाहरन्ति, 'इतिः' उपप्रदर्शने, इत्येवं पूर्वोक्तनीत्या कर्म्मबन्धोदयसत्कर्म्मताविधा-नतः परिज्ञाय 'सर्वशः' सर्वैः प्रकारैः कुशलाः प्रत्याख्यानपरिज्ञामुदाहरन्ति, यदिवा मूलोत्तरप्रकृतिप्रकारैः सर्वैः परिज्ञायेति मूल-प्रकारा अष्टौ उत्तरप्रकृतिप्रकारा अष्टपञ्चाशदुत्तरं शतम्, अथवा प्रकृतिस्थित्यनुभागप्रदेशप्रकारैः, यदिवोदयप्रकारैर्बन्धसत्कर्म्मताका-र्यभूतैरगामिबन्धसत्कर्म्मताकारणैश्च कर्म परिज्ञायेति, ते चामी उदयप्रकाराः, तद्यथा-मूलप्रकृतीनां त्रीण्युदयस्थानानि, अष्टविधं

मृतार्चो-पदेशः

१५

२०

॥१७१॥

२६

नानि एकत्रिंशत्पर्यन्तानि जीवगुणस्थानभेदादनेकभेदानि भवन्ति, तानि चेह ग्रन्थगौरवभयात् प्रत्येकं नोच्यन्त इत्यत एकैकभेदावेदनं क्रियते, तत्रैकविंशतिः गतिः १ जातिः २ आनुपूर्वी ३ त्रसं ४ बादरं ५ पर्याप्तापर्याप्तयोरन्यतरत् ६ सुभगदुर्भगयोरन्यतरत् ७ आदेयानादेययोरन्यतरत् ८ यशःकीर्त्ययशःकीर्त्योरन्यतरत् ९, एताश्च नव ध्रुवोदय १२ सहिता एकविंशतिः २१, चतुर्विंशतिस्तु तिर्यग्गतिः १ एकेन्द्रियजातिः २ औदारिकं ३ हुण्डसंस्थानं ४ उपघातं ५ प्रत्येकसाधारणयोरन्यतरत् ६ स्थावरं ७ सूक्ष्मबादरयोरन्यतरत् ८ दुर्भगं ९ अनादेयं १० अपर्याप्तकं ११ यशःकीर्त्ययशःकीर्त्योरन्यतर १२ दिति, तत्रैवापर्याप्तकापनयने पर्याप्तकपराघाताभ्यां प्रक्षिप्ताभ्यां पञ्चविंशतिः २५, षड्विंशतिस्तु याऽसौ केवलिनो विंशतिरभिहिता सैवौदारिकशरीराङ्गोपाङ्गद्वयान्यतरसंस्थानाद्यसंहननोपघातप्रत्येकसहिता वेदितव्या २६ मिश्रकाययोगे वर्त्तमानस्य सैव तीर्थकरनामसहिता केवलिसमुद्घातवतो मिश्रकाययोगिन एव सप्तविंशतिः २७, सैव प्रशस्तविहायोगतिसमन्विताऽष्टाविंशतिः २८, तत्र तीर्थकरनामापनयने उच्छ्वास १ सुस्वर २ पराघात ३ प्रक्षेपे सति त्रिंशद्भवति ३०, तत्र सुस्वरे निरुद्धे एकोनत्रिंशत् २९, सैव त्रिंशत्तीर्थकरनामसहिता एकत्रिंशत् ३१, नवोदयस्तु मनुष्यगतिः १ पञ्चेन्द्रियजातिः २ त्रसं ३ बादरं ४ पर्याप्तकं ५ सुभगं ६ आदेयं ७ यशःकीर्त्ति ८ स्तीर्थकरमिति ९, एता अयोगितीर्थकरकेवलिनः, एता एव तीर्थकरनामरहिता अष्टाविति ८, गोत्रस्यैकमेव सामान्येनोदयस्थानं, उच्चनीचयोरन्यतरद्, यौगपद्येनोदयाभावो विरोधादिति, तदेवमुदयभेदैरनेकप्रकारतां कर्म्मणः परिज्ञाय प्रत्याख्यानपरिज्ञामुदाहरन्तीति ॥ यदि नाम कर्म्मपरिज्ञामुदाहरन्ति ततः किं कार्यमित्याह—

इह आणाकंखी पंडिए अणिहे, एगमप्पाणं संपेहाए धुणे सरीरं. कसेहि अप्पाणं जरेहि ॥१७२॥

३ उद्दे०

१५ उदय-स्थानानि

२०

२७

अप्पाणं-जहा जुन्नाइं कट्ठाइं हव्ववाहो पमत्थइ एवं अत्तसमाहिए अणिहे, विगिंच कोहं अविकंपमाणे (सू. १३६)

'इह' अस्मिन् प्रवचने आज्ञामाकाङ्क्षितुं शीलमस्येति आज्ञाकाङ्क्षी–सर्वज्ञोपदेशानुष्ठायी, यश्चैवम्भूतः स 'पण्डितो' विदितवेद्यः अस्निहो भवति, स्निह्यते–श्लिष्यतेऽष्टप्रकारेण कर्म्मणेति स्निहो न स्निहोऽस्निहः, यदिवा स्निह्यतीति स्निहो—रागवान् यो न तथा सोऽस्निहः, उपलक्षणार्थत्वाच्चास्य रागद्वेषरहित इत्यर्थः, अथवा निश्चयेन हन्यत इति निहतः भावरिपुभिरिन्द्रियकषायकर्म्मभिः यो न तथा सोऽनिहतः, इह प्रवचने आज्ञाकाङ्क्षी पण्डितो भावरिपुभिरनिहतो, नान्यत्र, यथानिहतः स परमार्थतः कर्म्मणः परिज्ञाता। यश्चैवम्भूतः स किं कुर्यादित्याह–'एगमप्पाण' मित्यादि, सोऽनिहतोऽस्निहो वा आत्मानमेकं धनधान्यहिरण्यपुत्रकलत्रशरीरादिव्यतिरिक्तं 'संप्रेक्ष्य' पर्यालोच्य धुनीयाच्छरीरकं, सम्भावनायां लिङ्, सर्वस्मादात्मानं व्यतिरिक्तं पश्यतः सम्भाव्यत एतच्छरीरविधूननमिति, तच्च कुर्वता संसारस्वभावैकत्वभावनैवंरूपा भावयितव्येति—"संसार एवायमनर्थसारः, कः कस्य कोऽत्र स्वजनः परो वा?। सर्वे भ्रमन्तः स्वजनाः परे च, भवन्ति भूत्वा न भवन्ति भूयः ॥१॥ विचिन्त्यमेतद्भवताऽहमेको, न मेऽस्ति कश्चित्पुरतो न पश्चात्। स्वकर्म्मभिर्भ्रान्तिरियं ममैव, अहं पुरस्तादहमेव पश्चात् ॥ २ ॥ सदैकोऽहं न मे कश्चित्, नाहमन्यस्य कस्यचित्। न तं पश्यामि यस्याहं, नासौ भावीति यो मम ॥३॥" तथा–एकः प्रकुरुते कर्म्म, भुनक्त्येकश्च तत्फलम्। जायते म्रियते चैक, एको याति भवान्तरम् ॥१॥ इत्यादि, किं च—'कसेहि अप्पाणं जरेहि अप्पाणं' परव्यतिरिक्त आत्मा–शरीरं तत् कष्टतपश्चरणादिना कृशं कुरु, यदिवा 'कस' कसी कर्म्मणेऽलमित्येवं पर्यालोच्य यच्छक्तोपि तत्र नियोजयेरित्यर्थः, तथा 'जर' शरीरकं जरीकुरु, तपसा तथा कुरु

यथा जराजीर्णमिव प्रतिभासते, विकृतिपरित्यागद्वारेणात्मानं निःसारतामापादयेरित्यर्थः, किमर्थमित्येतदिति चेदाह–'जहा' इत्यादि, यथा 'जीर्णानि' निःसाराणि काष्ठानि 'हव्यवाहो'हुतभुक् प्रमथ्नाति–शीघ्रं भस्मसात् करोति, दृष्टान्तं प्रदर्श्य दार्ष्टान्तिकमाह–'एवं अत्तसमाहिए' एवम्' अनन्तरोक्तदृष्टान्तप्रकारेणात्मना समाहितः आत्मसमाहितः, ज्ञानदर्शनचारित्रोपयोगेन सदोपयुक्त इत्यर्थः, आत्मा वा समाहितोऽस्येत्यात्मसमाहितः,सदा शुभव्यापारवानित्यर्थः, आहिताग्न्यादिदर्शनादार्षत्वाद्वा निष्ठान्तस्य परनिपातः, यदिवा प्राकृते पूर्वोत्तरनिपातोऽतन्त्रः, समाहितात्मेत्यर्थः, 'अस्निहः' स्नेहरहितः संस्तपोऽग्निना कर्म्मकाष्ठं दहतीति भावार्थः ॥ एतदेव दृष्टान्तदार्ष्टान्तिकगतमर्थं निर्युक्तिकारो गाथयोपमञ्जिघृक्षुराह—



जह खलु झुसिरं कट्ठं सुचिरं सुक्कं लहुं डहइ अग्गी। तह खलु खवंति कम्मं सम्मचरणे ठिया साहू ॥२३४॥

गतार्था । अत्र चास्निहपदेन रागनिवृत्तिं विधाय द्वेषनिवृत्तिं विधित्सुराह–'विगिंच कोह'मित्यादि, कारणेऽकारणे वाऽतिक्रूराध्यवसायः क्रोधः तं परित्यज, तस्य च कार्यं कम्पनं तत्प्रतिषेधं दर्शयति–अविकम्पमानः ॥ किं विगणय्यैतत्कुर्यादित्याह—

इमं निरुद्धाउयं संपेहाए, दुक्खं च जाण अदु आगमेस्सं, पुढो फासाइं च फासे, लोयं च पास विफंदमाणं, जे निव्वुडा पावेहिं कम्मेहिं अणियाणा ते वियाहिया, तम्हा अतिविज्जो नो पडिसंजलिज्जासित्ति बेमि (सू. १३७) चतुर्थे तृतीयः ॥ ४–३ ॥

'इदं' मनुष्यत्वं 'निरुद्धायुष्कं' निरुद्धं–परिगलितमायुष्कं(यत्र तत्)'सम्प्रेक्ष्य' पर्यालोच्य क्रोधादिपरित्यागं विदध्यात्, किं च–'दुक्ख'मि

त्यादि, क्रोधादिना दन्दह्यमानस्य यन्मानसं दुःखमुत्पद्यते तज्जानीहि, तज्जनितकर्म्मविपाकापादितं चागामि दुःखं सम्प्रेक्ष्य क्रोधादिकं प्रत्याख्यानपरिज्ञया जानीहि, परित्यजेरित्यर्थः, आगामिदुःखस्वरूपमाह–'पुढो' इत्यादि, पृथक् सप्तनरकपृथिवीसम्भवशीतोष्णवेदनाकुम्भीपाकादियातनास्थानेषु 'स्पर्शान्' दुःखानि, चः समुच्चये, न केवलं क्रोधाध्मातस्तस्मिन्नेव क्षणे दुःखमनुभवतीति आगामीनि पृथग् दुःखानि च स्पृशेद्–अनुभवेत्, तेन चातिदुःखेनापरोऽपि लोको दुःखित इत्येतदाह–'लोयं च' इत्यादि, न केवलं क्रोधादिविपाकादात्मा दुःखान्यनुभवति, लोकं च शारीरमानसदुःखापन्नं विस्पन्दमानमस्ततश्चेतश्च दुःखप्रतीकाराय धावन्तं 'पश्य' विवेकचक्षुषाऽवलोकय। ये त्वेवं न ते किम्भूता भवन्तीत्यत आह–'जे निव्वुडा' इत्यादि, ये तीर्थकरोपदेशवासितान्तःकरणा विषयकषायाग्न्युपशमान्निर्वृताः–शीतीभूताः पापेषु कर्म्मसु 'अनिदानाः' निदानरहितास्ते परमसुखास्पदतया व्याख्याताः, औपशमिकसुखभाक्त्वेन प्रसिद्धा इत्यर्थः, यतः एवं ततः किमित्याह–'तम्हा' इत्यादि, यस्माद्रागद्वेषाभिभूतो दुःखभाग्भवति तस्मादतिविद्वान्–विदितागमसद्भावः सन्न प्रतिसञ्ज्वलेः–क्रोधाग्निनाऽऽत्मानं नोद्दीपयेः, कषायोपशमं कुर्वित्यर्थः। इतिरधिकारपरिसमाप्तौ, ब्रवीमीति पूर्ववत्॥ सम्यक्त्वाध्ययने तृतीयोद्देशकटीका समाप्तेति।





---

उक्तस्तृतीयोद्देशकः, साम्प्रतं चतुर्थ आरभ्यते, अस्य चायमभिसम्बन्धः–इहानन्तरोद्देशके निरवद्यं तपोऽभिहितं, तच्चाविकलं सत्संयमव्यवस्थितस्य भवतीत्यतः संयमप्रतिपादनाय चतुर्थोद्देशक इति, अनेन सम्बन्धेनायातस्यास्योद्देशस्यादि सूत्रम्—

आवीलए पवीलए निप्पीलए जहित्ता पुव्वसंजोगं हिच्चा उवसमं, तम्हा अविमणे वीरे,

सारए समिए सहिए सया जए, दुरणुचरो मग्गो वीराणं अनियट्टगामीणं, विगिंच मंससोणियं, एस पुरिसे दविए वीरे, आयाणिज्जे वियाहिए. जे धुणाइ समुस्सयं वसित्ता बंभचेरंसि (सू. १३८)

आङीषदर्थे, ईषत्पीडयेद् अविकृष्टेन तपसा शरीरकमापीडयेद्, एतच्च प्रथमप्रव्रज्यावसरे, तत ऊर्द्धमधीतागमः परिणतार्थसद्भावः सन् प्रकर्षेण विकृष्टतपसा पीडयेत् प्रपीडयेत्, पुनरध्यापितान्तेवासिवर्गः सङ्क्रामितार्थसारः शरीरं तित्यक्षुर्मासार्द्धमासक्षपणादिभिः शरीरं निश्चयेन पीडयेन्निष्पीडयेत्, स्यात्—कर्म्मक्षयार्थं तपोऽनुष्ठीयते, स च पूजालाभख्यात्यर्थेन तपसा न भवत्यतो निरर्थक एव शरीरपीडनोपदेश इत्यतोऽन्यथा व्याख्यायते—कर्म्मैव कार्मणशरीरं वा आपीडयेत्प्रपीडयेन्निष्पीडयेत्, अत्रापीषदर्थादिका प्रकर्षगतिरवसेया, यदिवा आपीडयेत्कर्म अपूर्वकरणादिकेषु सम्यग्दृष्ट्यादिषु गुणस्थानकेषु, ततोऽपूर्वकरणानिवृत्तिबादरयोः प्रपीडयेत्, सूक्ष्मसम्परायावस्थायां तु निष्पीडयेत्, अथवा आपीडनमुपशमश्रेण्यां प्रपीडनं क्षपकश्रेण्यां निष्पीडनं तु शैलेश्यवस्थायामिति। किं कृत्वैतत्कुर्यादित्याह—'जहित्ता' इत्यादि, पूर्वः संयोगः पूर्वसंयोगो—धनधान्यहिरण्यपुत्रकलत्रादिकृतस्तं त्यक्त्वा, यदिवा पूर्वः—असंयमोऽनादिभवाभ्यासात् तेन संयोगः पूर्वसंयोगस्तं त्यक्त्वा 'आवीलये'दित्यादिसम्बन्धः, किं च—'हिच्चा' इत्यादि, 'हि गतौ' वित्यस्मात् पूर्वकाले क्त्वा 'हित्वा' गत्वा, किं तत्?—उपशमं—इन्द्रियजयरूपं संयमं वा 'गत्वा' प्रतिपद्यापीडयेदिति वर्त्तते, इदमुक्तं भवति—असंयमं त्यक्त्वा संयमं प्रतिपद्य तपश्चरणादिनाऽऽत्मानं कर्म्म वाऽऽपीडयेत् प्रपीडयेन्निष्पीडयेदिति, यतः कर्म्मापीडनार्थमुपशमप्रतिपत्तिस्तत्प्रतिपत्तौ चाविमनस्कतेत्याह—'तम्हा' इत्यादि, यस्मात्कर्म्मक्षयायासंयमपरित्यागस्तत्परित्यागे चावश्यंभावी संयमस्तत्र च न चित्त-

कर्मापीडनादिः १५ २० २५

वैमनस्यमिति, तस्मादविमना विगतं भोगकषायादिषु अरतौ वा मनो यस्य स विमना यो न तथा सोऽविमनाः, कोऽसौ ?,वीरः—कर्म्म-विदारणसमर्थः। अविमनस्कत्वाच्च यत्स्यात्तदाह-'सारए' इत्यादि, सुष्ठु आ–जीवनमर्यादया संयमानुष्ठाने रतः स्वारतः,पञ्चभिः समितिभिः समितः, सह हितेन सहितो ज्ञानादिसमन्वितो वा सहितः, 'सदा' सर्वकालं सकृदारोपितसंयमभारः संस्तत्र 'यतेत' यत्नवान् भवेदिति। किमर्थं पुनः पौनःपुन्येन संयमानुष्ठानं प्रत्युपदेशो दीयते? इत्याह–'दुरनुचरो' इत्यादि, दुःखेनानुचर्यत इति दुरनुचरः, कोऽसौ ?-मार्गः–संयमानुष्ठानविधिः, केषां ?-'वीराणाम्' अप्रमत्तयतीनां, किम्भूतानामित्याह-'अणियट्ट' इत्यादि, अनिवर्त्तो-मोक्षस्तत्र गन्तुं शीलं येषां ते तथा तेषामिति, यथा च तन्मार्गानुचरणं कृतं भवति तद्दर्शयति—'विगिंच' इत्यादि, मांसशोणितं दर्प्पकारि विकृष्टतपोऽनुष्ठानादिना 'विवेचय' पृथक्कुरु, तद्ह्रासं विधेहीतियावत्, एवं वीराणां मार्गानुचरणं कृतं भवतीति भावः। यश्चैवम्भूतः स कं गुणमवाप्नुयादित्याह—'एस' इत्यादि, 'एष' मांसशोणितयोरपनेता पुरि शयनात् पुरुषः द्रवः—संयमः स विद्यते यस्यासौ द्रविकः, मत्वर्थीयष्ठन्, द्रव्यभूतो वा मुक्तिगमनयोग्यत्वात्, कर्मरिपुविदारणसहिष्णुत्वाद्वीर इति, मांसशोणितापचयप्रतिपादनाच्च तदुत्तरेषामपि मेदआदीनामपचय उक्त एव द्रष्टव्यः, तद्भावभावित्वात्तेषामिति। किं च—'आयाणिज्जे' इत्यादि, स वीराणां मार्गं प्रतिपन्नः मांसशोणितयोरपनेता मुमुक्षूणामादानीयो–ग्राह्य आदेयवचनश्च व्याख्यात इति। कश्चैवम्भूत इत्याह–'जे धुणाइ' इत्यादि, 'ब्रह्मचर्ये' संयमे मदनपरित्यागे वोषित्वा यः 'समुच्छ्रयं' शरीरकं कर्म्मोपचयं वा तपश्चरणादिना 'धुनाति' कृशीकरोति स आदानीय इति विविधमाख्यातो व्याख्यात इति सम्बन्धः॥ उक्ता अप्रमत्ताः, तद्विधर्म्मणस्तु प्रमत्तानभिधित्सुराह—

**नित्तेहिं पलिच्छिन्नेहिं आयाणसोयगढिए बाले, अव्वोच्छिन्नबंधणे अणभिक्कंतसंजोए तमंसि**



५

१०

अवियाणओ आणाए लंभो नत्थित्तिबेमि (सू. १३९)

नयंत्यर्थदेशम्-अर्थक्रियासमर्थमर्थमाविर्भावयन्तीति नेत्राणि-चक्षुरादीनीन्द्रियाणि तैः परिच्छिन्नैः—यथास्वं विषयग्रहणं प्रति निरुद्धैः सद्भिरादानीयोऽपि भूत्वोषित्वा ब्रह्मचर्ये पुनर्मोहोदयादादानस्रोतोगृद्धः-आदीयते-सावद्यानुष्ठानेन स्वीक्रियत इत्यादानं-कर्म्म संसारबीजभूतं तस्य स्रोतांसि-इन्द्रियविषया मिथ्यात्वाविरतिप्रमादकषाययोगा वा तेषु गृद्धः-अध्युपपन्नः स्यात्, कोऽसौ ?-'बालः' अज्ञः रागद्वेषमहामोहाभिभूतान्तःकरणः। यश्चादानस्रोतोगृद्धः स किम्भूतः स्यादित्याह-'अव्वोच्छिन्नबंधणे' इत्यादि, अव्यविच्छिन्नं-जन्मशतानुवृत्ति बन्धनम्-अष्टप्रकारं कर्म्म यस्य स तथा, किंच—'अणभिक्कंत' इत्यादि, अनभिक्रान्तः—अनतिलङ्घितः संयोगो धनधान्यहिरण्यपुत्रकलत्रादिकृतोऽसंयमसंयोगो वा येनासावनभिक्रान्तसंयोगः, तस्य चैवम्भूतस्येन्द्रियानुकूल्यरूपे मोहात्मके वा तमसि वर्त्तमानस्यात्महितं मोक्षोपायं वाऽविजानत आज्ञायाः—तीर्थकरोपदेशस्य लाभो नास्तीत्येतदहं ब्रवीमि तीर्थकरवचनोपलब्धसद्भाव इति, यदिवाऽऽज्ञा बोधिः सम्यक्त्वम्, अस्तिशब्दश्चायं निपातस्त्रिकालविषयी, तेनायमर्थः-तस्यानभिक्रान्तसंयोगस्य भावतमसि वर्त्तमानस्य बोधिलाभो नासीन्नास्ति न भावीति। एतदेवाह—

२०

प्र. आ. ११२

जस्स नत्थि पुरा पच्छा मज्झे तस्स कुओ सिया ?, से हु पन्नाणमंते बुद्धे आरंभोवरए, संममेयंति पासह, जेण बंधं वहं घोरं परियावं च दारुणं पलिछिंदिय बाहिरगं च सोयं, निक्कम्मदंसी इह मच्चिएहिं, कम्माणं सफलं दट्ठूण तओ निज्जाइ वेयवी ( सू. १४० )

यस्य कस्यचिदविशेषितस्य कर्म्मादानस्रोतोगृद्धस्य बालस्य अव्यवच्छिन्नबन्धस्यानभिक्रान्तसंयोगस्याज्ञानतमसि वर्त्तमानस्य 'पुरा' पूर्वजन्मनि बोधिलाभो नास्ति–सम्यक्त्वं नासीत्, 'पश्चादपि' एष्येऽपि जन्मनि न भावि, 'मध्ये' मध्यजन्मनि तस्य कुतः स्यात् इति ?, एतदुक्तं भवति—यस्यैव पूर्वं बोधिलाभः संवृत्तो भविष्यति वा तस्यैव वर्त्तमानकाले भवति, येन हि सम्यक्त्वमास्वादितं पुनर्मिथ्यात्वोदयात् तत् प्रच्यवते तस्यापार्द्धपुद्गलपरावर्त्तेनापि कालेनावश्यं तत्सद्भावात्, न ह्ययं सम्भवोऽस्ति प्रच्युतस्य सम्यक्त्वस्य पुनरसम्भव एवेति, अथवा निरुद्धेन्द्रियोऽपि आदानस्रोतोगृद्ध इत्युक्तः, तद्विपर्ययभूतस्य त्वतिक्रान्तसुखस्मरणमकुर्वतः आगामि च दिव्याङ्गनाभोगमनभिकाङ्क्षतो वर्त्तमानसुखाभिष्वङ्गोऽपि नैव स्यादित्येतद्दर्शयितुमाह–'जस्स नत्थि' इत्यादि, यस्य भोगविपाकवेदिनः पूर्वभुक्तानुस्मृतिर्नास्ति नापि पाश्चात्यकालभोगाभिलाषिता विद्यते तस्य व्याधिचिकित्सारूपान् भोगान् भावयतो 'मध्ये' वर्त्तमानकाले कुतो भोगेच्छा स्यात् ?, मोहनीयोपशमात्नैव स्यादित्यर्थः। यस्य तु त्रिकालविषया भोगेच्छा निवृत्ता स किम्भूतः स्यादित्याह–'से हु' इत्यादि, 'हुः' यस्मादर्थे यस्मान्निवृत्तभोगाभिलाषस्तस्मात्स प्रज्ञानवान्–प्रकृष्टं ज्ञानं प्रज्ञानं—जीवाजीवादिपरिच्छेत्तृ तद्विद्यते यस्यासौ प्रज्ञानवान्, यत एव प्रज्ञानवान् अत एव बुद्धः–अवगततत्त्वो, यत एवम्भूतोऽत एवाह–'आरंभोवरए' सावद्यानुष्ठानमारम्भस्तस्मादुपरत आरम्भोपरतः। एतच्चारम्भोपरमणं शोभनमिति दर्शयन्नाह–'सम्म'मित्यादि, यदिदं सावद्यारम्भोपरमणं सम्यगेतत्–शोभनमेतत् सम्यक्त्वकार्यत्वाद्वा सम्यक्त्वमेतदित्येवं पश्यत–एवं गृह्णीत यूयमिति। किमित्यारम्भोपरमणं सम्यगिति चेदाह–'जेण' इत्यादि, येन कारणेन सावद्यारम्भप्रवृत्तो बन्धं निगडादिभिः वधं कशादिभिः 'घोरं' प्राणसंशयरूपं 'परितापं' शारीरमानसं 'दारुणं' असह्यमवाप्नोति अत आरम्भोपरमणं सम्यग्भूतं कुर्यात्, किं कृत्वेत्याह–'पलिच्छिन्दि'इत्यादि, 'परिच्छिन्द्य' अप-

५

१०

नीय, किं तत् ?—स्रोतः पापोपादानं, तच्च बाह्यं धनधान्यहिरण्यपुत्रकलत्रादिरूपं हिंसाद्याश्रवद्वारात्मकं वा, चशब्दादान्तरं च रागद्वेषात्मकं विषयपिपासारूपं वेति, किं च–'णिक्कम्मदंसी'त्यादि, निष्क्रान्तः कर्म्मणो निष्कर्म्मा–मोक्षः संवरो वा तं द्रष्टुं शीलमस्येति निष्कर्म्मदर्शी, 'इहे'ति संसारे मर्त्त्येषु मध्ये य एव निष्कर्मदर्शी स एव बाह्याभ्यन्तरस्रोतश्छेत्तेति स्यात्। किमभिसन्धय स बाह्याभ्यन्तरसंयोगस्य छेत्ता निष्कर्म्मदर्शी वा भवेत् इत्यत आह–'कम्माणं'इत्यादि, मिथ्यात्वाविरतिप्रमादकषाययोगैः क्रियन्ते–बध्यन्त इति कर्म्माणि–ज्ञानावरणीयादीनि तेषां सफलत्वं दृष्ट्वा, स वा निष्कर्म्मदर्शी वेदविद्वा कर्म्मणां फलं दृष्ट्वा, तेषां च फलं–ज्ञानावरणीयस्य ज्ञानावृतिः दर्शनावरणस्य दर्शनाच्छादनं वेदनीयस्य विपाकोदयजनिता वेदनेत्यादि, ननु च न सर्वेषां कर्म्मणां विपाकोदयमिच्छन्ति, प्रदेशानुभवस्यापि सद्भावात्, तपसा च क्षयोपपत्तेरित्यतः कथं कर्म्मणां सफलत्वं ?, नैष दोषो, नात्र प्रकारकार्त्स्न्यमभिप्रेतम्, अपितु द्रव्यकार्त्स्न्यं, तच्चास्त्येव, तथाहि–यद्यपि प्रतिबन्धव्यक्ति न विपाकोदयस्तथाप्यष्टानामपि कर्म्मणां सामान्येन सोऽस्त्येवेत्यतः कर्म्मणां सफलत्वमुपलभ्यते, तस्मात् कर्म्मणस्तदुपादानाद्वास्रवाद्वा निश्चयेन याति निर्याति–निर्गच्छति, तत्र विधत्त इतियावत्, कोऽसौ ?–'वेदविद्' वेद्यते सकलं चराचरमनेनेति वेदः–आगमस्तं वेत्तीति वेदवित्, सर्वज्ञोपदेशवर्त्तीत्यर्थः ॥ न केवलस्य ममैवायमभिप्रायः, सर्वेषामेव तीर्थंकराणामयमाशय इति दर्शयितुमाह—

**जे खलु भो! वीरा ते समिया सहिया सया जया संघडदंसिणो आओवरया अहातहं लोयं उवेहमाणा पाईणं पडिणं दाहिणं उईणं इय सच्चंसि परि (चिए)चिट्ठिंसु, साहिस्सामो नाणं, वीराणं** ॥१७६॥

सामयाणं सहियाणं सया जयाणं संघडदंसीणं आओवरयाणं अहातहं लोयं समुवेहमाणाणं किमत्थि उवाही ?, पासगस्स न विज्जइ, नत्थित्तिबेमि(सू.१४१)॥इति सम्यक्त्वाध्ययनम् ॥

यदिवा उक्तः सम्यग्वादो निरवद्यं तपश्चारित्रं च, अधुना तत्फलमुच्यते–'जे खलु' इत्यादि, खलुशब्दो वाक्यालङ्कारे, ये केचनातीतानागतवर्त्तमानाः 'भो' इत्यामन्त्रणे 'वीराः' कर्म्मविदारणसहिष्णवः समिताः समितिभिः सहिता ज्ञानादिभिः सदा यताः सत्संयमेन 'संघडदंसिणो'त्ति निरन्तरदर्शिनः शुभाशुभस्य आत्मोपरताः पापकर्म्मभ्यो यथा तथा अवस्थितं 'लोकं' चतुर्दशरज्ज्वात्मकं कर्म्मलोकं वोपेक्षमाणाः–पश्यन्तः सर्वासु प्राच्यादिषु दिक्षु व्यवस्थिता इत्येवंप्रकाराः 'सत्य'मिति ऋतं तपः संयमो वा तत्र परिचिते–स्थिरे तस्थुः–स्थितवन्तः, उपलक्षणार्थत्वात् त्रिकालविषयता द्रष्टव्या, तत्रातीते काले अनन्ता अपि सत्ये तस्थुः वर्त्तमाने पञ्चदशसु कर्म्मभूमिषु सङ्ख्येयास्तिष्ठन्ति अनागते अनन्ता अपि स्थास्यन्ति, तेषां चातीतानागतवर्त्तमानानां सत्यव्रतां यज्ज्ञानं–योऽभिप्रायस्तदहं कथयिष्यामि भवतां शृणुत यूयं, किम्भूतानां तेषां ?—'वीराण'मित्यादीनि विशेषणानि गतार्थानि, किम्भूतं ज्ञानमिति चेदाह–किं प्रश्ने 'अस्ति' विद्यते ?, कोऽसौ ?–'उपाधिः' कर्म्मजनितं विशेषणं, तद्यथा–नारकस्तिर्यग्योनः सुखी दुःखी सुभगो दुर्भगः पर्याप्तकोऽपर्याप्त इत्यादि, आहोस्विन्न विद्यत इति परमताशङ्क्य त ऊचुः–'पश्यकस्स' सम्यग्वादादिकमर्थं पूर्वोपात्तं पश्यतीति पश्यः स एव पश्यकस्तस्य कर्म्मजनितोपाधिर्न विद्यते, इत्येतदनुसारेणाहमपि ब्रवीमि, न स्वमनीषिकयेति । गतः सूत्रानुगमः, तद्गतौ च समाप्तश्चतुर्थोद्देशको, नयविचारातिदेशात् समाप्तं सम्यक्त्वाध्ययनं चतुर्थमिति ॥ग्रं०६२०॥

# अथ लोकसाराख्यं पञ्चममध्ययनम् ।



उक्तं चतुर्थमध्ययनं, साम्प्रतं पञ्चममारभ्यते, अस्य चायमभिसम्बन्धः—इहानन्तराध्ययने सम्यक्त्वं प्रतिपादितं तदन्तर्गतं च ज्ञानं, तदुभयस्य च चारित्रफलत्वात् तस्यैव च प्रधानमोक्षाङ्गतया लोकसारत्वात् तत्प्रतिपादनार्थमिदमुपक्रम्यत इत्यनेन सम्बन्धेनायातस्यास्याध्ययनस्योपक्रमादीनि चत्वार्यनुयोगद्वाराणि भवन्ति, तत्रोपक्रमेऽर्थाधिकारो द्वेधा, तत्राप्यध्ययनार्थाधिकारोऽभिहितः, उद्देशार्थाधिकारं तु निर्युक्तिकारः प्रतिपिपादयिषुराह—

**हिंसगविसयारंभग एगचरुत्ति न मुणी पढमगंमि १। विरओ मुणित्ति बिइए अविरयवाई परिग्गहिओ २ ॥२३५॥**
**तईए एसो अपरिग्गहो य निव्विन्नकामभोगो य ३। अव्वत्तस्सेगचरस्स पच्चवाया चउत्थंमि ४ ॥२३६॥**
**हरउवमो तवसंयमगुत्ती निस्संगया य पंचमए ५। उम्मग्गवज्जणा छट्ठगंमि तह रागदोसे य ६ ॥२३७॥**

हिनस्तीति हिंसकः आरम्भणमारंभो, विषयाणामारम्भोऽस्येति विषयारम्भकः, व्यधिकरणस्यापि गमकत्वात्समासः, ण्वुलन्तस्य वा याजकादिदर्शनात् समासो, विषयाणामारम्भको विषयारम्भक इति, हिंसकश्च विषयारम्भकश्चेति विगृह्य समाहारद्वन्द्वः, प्राकृतत्वात्पुंल्लिङ्गता, अयमर्थो—हिंसकः प्राणिनां विषयारम्भकश्च—विषयार्थं सावद्यारम्भप्रवृत्तश्च न मुनिः, तथा विषयार्थमेव एक एव चरतीत्येकचरः स च न मुनिरिति, एतदधिकारत्रयं प्रथमोद्देशके १, द्वितीये तु हिंसादिपापस्थानकेभ्यो विरतो मुनिर्भवतीत्ययमर्थाधिकारः, वदनशीलो वादी अविरतस्य वादी अविरतवादी परिग्रहवान् भवतीत्येतच्चात्रोद्देशके प्रतिपादयिष्यत इति २, तृतीये त्वेष एव विरतो मुनिरपरिग्रहो भवतीति निर्विण्णकामभोगश्चेत्ययमर्थाधिकारः ३, चतुर्थे त्वव्यक्तस्य—अगीतार्थस्य सूत्रार्थापरिनि-

ष्ठितस्य प्रत्यपाया भवन्तीत्ययमर्थाधिकारः ४, पञ्चमके तु ह्रदोपमेन साधुना भाव्यं, यथा हि ह्रदो जलभृतोऽप्रतिस्रवः प्रशस्यो भवति एवं साधुरपि ज्ञानदर्शनचारित्रभृतो विस्रोतसिकारहित इति, तथा तपःसंयमगुप्तयो निःसङ्गता चेत्ययमर्थाधिकारः ५, षष्ठे तून्मार्गवर्जना-कुदृष्टिपरित्यागः, तथा रागद्वेषौ च त्याज्यावित्ययमर्थाधिकारः ६, इति गाथात्रयार्थः ॥ नामनिष्पन्ने तु निक्षेपेऽत्र द्विधा नाम-आदानपदेन गौणं चेति, एतत् द्विविधमपि निर्युक्तिकारः प्रतिपादयितुमाह—

आयाणपएणावंति गोण्णनामेण लोगसारुत्ति। लोगस्स य सारस्स य चउक्कओ होइ निक्खेवो ॥ २३८ ॥ ५

आदीयते-प्रथममेव गृह्यत इत्यादानं तच्च तत्पदं च आदानपदं तेन करणभूतेनावन्तीत्येतन्नाम, अध्ययनादावावन्तीशब्दस्योच्चारणाद्, गुणैर्निष्पन्नं गौणं तच्च तन्नाम च गौणनाम तेन हेतुना लोकसार इति, लोकस्य-चतुर्दशरज्ज्वात्मकस्य सारः-परमार्थो लोकसारः, द्विपदं नामेत्यतः लोकस्य सारस्य च प्रत्येकं चतुष्कको निक्षेपो भवति, तद्यथा-नामलोको यस्य कस्यचिल्लोक इति नाम क्रियते, स्थापनालोकश्चतुर्दशरज्ज्वात्मकस्य लोकस्य स्थापना,(सा)गाथात्रयादवसेया, तच्चेतत्-तिरिअं चउरो दोसुं छद्दोसुं अट्ठ दस य एक्केक्के। बारस दोसुं सोलस दोसुं वीसा य चउसुं तु ॥ १ ॥ पुणरवि सोलस दोसुं बारस दोसुं तु हुंति नायव्वा। तिसु दस तिसु अट्ठच्छ य दोसुं दोसुं तु चत्तारि॥२॥ ओयरिअ लोअमज्झा चउरो चउरो य सव्वहिं णेया। तिअ तिग दुग दुग एक्केक्कगं च जा सत्तमीए उ ॥३॥ द्रव्यलोको जीवपुद्गलधर्म्माधर्म्माकाशकालात्मकः षड्विधः, भावलोकस्त्वौदयिकादिषड्भावात्मकः सर्वद्रव्यपर्यायात्मको वा। सारोऽपि नामादि चतुर्विधः, तत्र नामस्थापने सुगमत्वादनादृत्य द्रव्यसारप्रतिपादनाह— १०



सव्वरस थूल गुरुए मज्झे देसप्पहाण सरिराई। धण एरंडे वइरे खइरं च जिणादुरालाई ॥२३९॥

अत्र पूर्वार्द्धपश्चार्द्धयोर्यथासङ्ख्यं लगनीयं, सर्वस्वे धनं सारभूतं, तद्यथा—कोटिसारोऽयं पञ्चकपर्दकसारो वा, स्थूले एरण्डः सारः, सारशब्दोऽत्र प्रकर्षवाची, स्थूलानां मध्ये एरण्डो भिण्डो वा प्रकर्षभूतः, गुरुत्वे वज्रं, मध्ये खदिरः, देशे आम्रवृक्षो वेणुर्वा, प्रधाने यो यत्र प्रधानभावमनुभवति सचित्तोऽचित्तो मिश्रश्चेति, सचित्तो द्विपदश्चतुष्पदोऽपदश्चेति, द्विपदेषु जिनः चतुष्पदेषु सिंहः अपदेषु कल्पवृक्षः, अचित्तेषु वैडूर्यो मणिः, मिश्रेषु तीर्थकर एव विभूषितः, शरीरेष्वौदारिकं मुक्तिगमनयोग्यत्वाद्विशिष्टरूपापत्तेश्च, आदि-ग्रहणात् स्वामित्वकरणाधिकरणेषु सारता योज्या, तद्यथा—स्वामित्वे गोरसस्य घृतं सारभूतं, करणत्वे मणिसारेण मुकुटेन शोभते राजा, अधिकरणे दध्नि घृतं जले पद्मसुत्थितमित्यादिगाथार्थः ॥ भावसारप्रतिपादनायाह—



भावे फलसाहणया फलओ सिद्धी सुहुत्तमवरिट्ठा । साहणय नाणदंसणसंजमतवसा तहिं पगयं ॥२४०॥

'भावे' भावविषये सारे चिन्त्यमाने फलसाधनता सारः फलम्—अर्थक्रियावाप्तिस्तस्य साधनता फलसाधनता—फलार्थमारम्भे प्रवर्त्तनं ततः फलावाप्तिः प्रधानं, फलतोऽप्यनैकान्तिकानात्यन्तिकरूपात् सांसारिकात्सकाशात्तद्विपर्यस्तं फलं सारः, किं तत् ?—सिद्धिः, किम्भूताऽसौ ?—'उत्तमसुखवरिष्ठा' उत्तमं च तदात्यन्तिकैकान्तिकानाबाधत्वात् सुखं च उत्तमसुखं तेन वरिष्ठा—वरतमा, तत्साधनानि च गाथाशकलेनदर्शयति—'साधनकानि' प्रकृष्टोपकारकाणि ज्ञानदर्शनसंयमतपांसि,तस्मिश्च भावसारे सिद्ध्याख्यफलसाधने ज्ञानादिके प्रकृतं, ज्ञानदर्शनचारित्रेण भावसाररूपेणात्राधिकार इति गाथार्थः॥ तस्यैव ज्ञानादेः सिद्ध्युपायस्य भावसारतां प्रतिपादयन्नाह—



लोगंमि कुसमएसु य कामपरिग्गहकुमग्गलग्गेसुं । सारो हु नाणदंसणतवचरणगुणा हियट्ठाए ॥२४१॥

'लोके' गृहस्थलोके कुत्सिताः समयाः कुसमयाः तेषु च, किम्भूतेषु ?—कामपरिग्रहेण ये कुत्सिता मार्गास्तेषु लग्नेषु, इहैतो,

यस्माल्लोकः कामपरिग्रहाग्रही गृहस्थभावमेव प्रशंसति, वक्ति च—'गृहाश्रमसमो धर्म्मो, न भूतो न भविष्यति। पालयन्ति नराः शूराः, क्लीवाः पाषण्डमाश्रिताः ॥ १ ॥' गृहाश्रमाधाराश्च सर्वेऽपि पाषण्डिन इत्येवं महामोहमोहित इच्छामदनकामेषु प्रवर्त्तते, तथा तीर्थिका अप्यनिरुद्धेन्द्रियप्रसरा द्विरूपकामाभिष्वङ्गिणः इत्यतस्तेषु सारो ज्ञानदर्शनतपश्चरणगुणाः, उत्तमसुखवरिष्ठसिद्धिहेतुत्वात्, हिता-सिद्धिस्तदर्थत्वादिति गाथार्थः ॥ यतो ज्ञानदर्शनतपश्चरणगुणा हितार्थतया सारस्तस्मात्किं कर्त्तव्यमित्याह—

चइऊणं संकपयं सारपयमिणं दढेण घित्तव्वं । अत्थि जिओ परमपयं जयणा जा रागदोसेहिं ॥२४२॥

'त्यक्त्वा' प्रोज्झ्य, किं तत् ?–'शङ्कापदं' किमेतन्मदारब्धमनुष्ठानं निष्फलं स्यादित्येवम्भूतो विकल्पः शङ्का तस्याः पदं–निमित्तकारणं तच्चार्हत्प्रोक्तेष्वत्यन्तसूक्ष्मेष्वतीन्द्रियेषु केवलागमग्राह्येष्वर्थेषु या संशीतिः–सन्देह इत्येतद्रूपं तच्छङ्कापदं विहाय सारपदं–इदं ज्ञानादिकं प्रागुपन्यस्तं दृढेन—अनन्यमनस्केन तीर्थिकदम्भप्रतारणाक्षोभ्येन ग्राह्यं, तदेव शङ्कापदव्युदासकार्यं गाथाशकलेन दर्शयति–अस्ति जीवः, अस्य च पदार्थानामादावुपन्यासात् जीवपदार्थस्य च प्राधान्यादुपलक्षणार्थत्वाद्वा शेषपदार्थग्रहणं, अस्ति–विद्यते जीवितवान् जीवति जीविष्यतीति वा जीवः शुभाशुभफलभोक्तेति, स च प्रत्यक्ष एवाहंप्रत्ययसाध्यः, इच्छाद्वेषप्रयत्नादिकार्यानुमानसाध्यो वा, तथा अजीवा अपि धर्म्माधर्म्माकाशपुद्गला गतिस्थित्यवगाहद्व्यणुकादिस्कन्धहेतवः सन्ति, एवमास्रवसंवरबन्धनिर्जरा अपि विद्यन्ते, प्रधानपुरुषार्थत्वाद् आद्यन्तग्रहणे मध्यग्रहणस्यावश्यंभावित्वादाद्यं जीवपदार्थं साक्षादुपन्यस्यान्त्यं मोक्षपदार्थमुपन्यस्यति–परमं च तत्पदं च परमपदं, तच्चास्तीति सम्बन्ध इति, अस्ति मोक्षः शुद्धपदवाच्यत्वाद् बन्धस्य सप्रतिपक्षत्वान्मोक्षाविनाभावित्वाद्वा बन्धस्येति, सत्यपि मोक्षे यदि तदवाप्तावुपायो न स्यात्ततो जनाः किं कुर्युरित्यतस्तत्कारणास्तित्वं दर्शयति—

'यतना'यत्रो रागद्वेषेषु, रागद्वेषोपशमाद्यः संयमोऽसावप्यस्तीति ॥ तदेवं सति जीवे परमपदे च शङ्कापदव्युदासेन ज्ञानादिकं सारपदं दृढेन ग्राह्यमिति गाथार्थः ॥ ततोऽप्यपरापरसारप्रकर्षगतिरस्तीति दर्शयन्नुपक्षेपमाह—

लोगस्स उ को सारो? तस्स य सारस्स को हवइ सारो?। तस्स य सारो सारं जइ जाणसि पुच्छिओ साह ॥२४३॥

'लोकस्स' चतुर्दशरज्ज्वात्मकस्य कः सारः?, तस्यापि सारस्य कोऽपरः सारः?, तस्यापि-सारसारस्य सारः?, सारं यदि जानासि ततः पृष्टो मया कथयेति गाथार्थः ॥ प्रश्नप्रतिवचनार्थमाह—

लोगस्स सार धम्मो धम्मंपि य नाणसारियं बिंति । नाणं संजमसारं संजमसारं च निव्वाणं ॥ २४४ ॥

समस्तस्यापि लोकस्य तावद्धर्मः सारो, धर्ममपि ज्ञानसारं ब्रुवते, ज्ञानमपि संयमसारं, संयमस्यापि सारभूतं निर्वाणमिति गाथार्थः ॥ उक्तो नामनिष्पन्नो निक्षेपः, साम्प्रतं (सूत्रानुगमे) सूत्रमुच्चारयितव्यं, तच्चेदम्—

आवंती केयावंती लोयंसि विप्परामुसंति अट्ठाए अणट्ठाए, एएसु चेव विप्परामुसंति, गुरू से कामा, तओ से मारंते, जओ से मारंते तओ से दूरे, नेव से अंतो नेव दूरे (सू. १४२)

'आवन्ती'ति यावन्तो जीवा मनुष्या असंयता वा स्युः, 'केआवंति'त्ति केचन 'लोके' चतुर्दशरज्ज्वात्मके गृहस्थान्यतीर्थिकलोके वा षड्जीवनिकायान् आरम्भप्रवृत्ता विविधम्-अनेकप्रकारं विषयाभिलाषितया 'परामृशन्ति' उपतापयन्ति, दण्डकशताडनादिभिर्घातयन्तीत्यर्थः, किमर्थं विपरामृशन्तीति दर्शयति-'अर्थाय' अर्थार्थं अर्थाद्वा, अर्थः-प्रयोजनं धर्मार्थकामरूपं, कर्मणि ल्यब्लोपे पञ्चमी,अर्थमुद्दिश्य-प्रयोजनमुत्प्रेक्ष्य प्राणिनो घातयन्ति, तथाहि-धर्मनिमित्तं शौचार्थं पृथिवीकायं समारभन्ते, अर्थार्थं कृष्यादि

करोति, कामार्थमाभरणादि, एवं शेषेष्वपि कायेषु यथायोगं वाच्यं, अनर्थाद्वा-प्रयोजनमनुद्दिश्यैव तच्छीलतयैव मृगयाद्याः प्राण्युपघातकारिणीः क्रियाः कुर्वन्ति, तदेवमर्थादनर्थाद्वा प्राणिनो हत्वा एतेष्वेव-षड्जीवनिकायस्थानेषु विविधम्-अनेकप्रकारं सूक्ष्मबादरपर्याप्तकापर्याप्तकादिभेदेन तानेकेन्द्रियादीन् प्राणिनस्तदुपघातकारिणः परामृशन्ति, तान् प्रपीड्य तेष्वेवानेकश उत्पद्यन्त इतियावत्, यदिवा तत्षड्जीवनिकायबाधाऽऽप्तं कर्म तेष्वेव कायेषूत्पद्य ते तैस्तैः प्रकारैरुदीर्णं विपरामृशन्ति-अनुभवन्तीति। नागार्जुनीयास्तु पठन्ति-"जाणंति केइ लोए छक्कायवहं समारभंति अट्ठाए अणट्ठाए वा" इत्यादि, गतार्थं, स्याद्-असौ किमर्थमेवंविधानि कर्माणि कुरुते यान्यस्य कायगतस्य विपच्यन्ते ?, तदुच्यते-'गुरू से कामा' 'से' तस्यापरमार्थविदः काम्यन्त इति कामाः-शब्दादयस्ते गुरवो, दुस्त्यजत्वात्, कामा ह्यल्पसत्त्वैरनवाप्तपुण्योपचयैरुल्लङ्घयितुं दुष्करमित्यतस्तदर्थं कायेषु प्रवर्त्तते। तत्प्रवृत्तौ च पापोपचयः तदुपचयाच्च यत्स्यात्तदाह-'ततः' षड्जीवनिकायविपरामर्शात् परमकामगुरुत्वाद्वाऽसौ मरणं मारः-आयुषः क्षयस्तस्यान्तर्वर्त्तते, मृतस्य च पुनर्जन्म जन्मनि चावश्यंभावी मृत्युरेवं जन्ममरणात् संसारोदन्वति मज्जनोन्मज्जनरूपान्न मुच्यते। ततः किमपरमित्याह-'जओ से' इत्यादि, यतोऽसौ मृत्योरन्तस्ततोऽसौ 'दूरे' परमपदोपायात् ज्ञानादित्रयात् तत्कार्याद्वा मोक्षाद्, यदिवा सुखार्थी कामान्न परित्यजति, तदपरित्यागे च मारान्तर्वर्त्ती, यतश्च मारान्तर्वर्त्ती ततो जातिजरामरणरोगशोकाभिभूतत्वादसौ सुखाद्दूरे। यस्मादसौ कामगुरुस्तद्गुरुत्वान्मारान्तर्वर्त्ती तदन्तर्वर्तित्वात्किम्भूतो भवतीत्यत आह-'नेव से' इत्यादि, नैवासौ विषयसुखस्यान्तर्वर्त्तते, तदभिलाषापरित्यागाच्च नैवासौ दूरे, यदिवा यस्य गुरवः कामाः स किं कर्मणोऽन्तर्बहिर्वेति प्रश्नावसरे सत्याह-'णेव से' इत्यादि, नैवासौ कर्मणोऽन्तः-मध्ये भिन्नग्रन्थित्वात्सम्भावितावश्यंभाविकर्मक्षयोपपत्तेः, नाप्यसौ दूरे देशोनकोटीकोटीकर्म-



५

१०

शितिकरात्, चारित्रानाशावपि नैवान्तर्नैव च दूरे इत्येतच्छक्यते वक्तुं, पूर्वोक्तादेव कारणादिति, अथवा येनेदं प्राणायि किमसावन्तर्भूतः संसारस्याहोश्विद्बहिर्वर्तते इत्याशङ्क्याह—'णेव से'इत्यादि, नैवासौ संसारान्तः घातिकर्मक्षयात् नापि दूरे अद्यापि भवोपग्राहिकर्म्मसद्भावादिति ॥ यो हि भिन्नग्रन्थिको दुरापावाप्तसम्यक्त्वः संसारारातीयतीरवर्ती स किमध्यवसायी स्यादित्याह—

**से पासइ फुसियमिव कुसग्गे पणुन्नं निवइयं वाएरियं, एवं बालस्स जीवियं मंदस्स अवियाणओ, कूराइं कम्माइं बाले पकुव्वमाणे तेण दुक्खेण मूढे विप्परिआसमुवेइ, मोहेण गब्भं मरणाइ एइ, एत्थ मोहे पुणो पुणो (सू. १४३)**

'से' पासई'त्यादि, 'सः' अपगतमिथ्यात्वपटलः सम्यक्त्वप्रभावावगतसंसारासारः 'पश्यति' दृशिरुपलब्धिक्रिय इत्यत उपलभते-अवगच्छति, किं तत् ?—'फुसियमिव'त्ति कुशाग्र उदकबिन्दुमिव बालस्य जीवितमिति सम्बन्धः, तत्किम्भूतमित्याह—'पणुन्न'-मित्यादि, प्रणुन्नम्—अनवरतापरापरोदकपरमाणूपचयात् प्रणुन्नं—प्रेरितं वातेनेरितं सन्निपतितं भाविनि भूतवदुपचारान्निपतदेव (वा) निपतितं, दार्ष्टान्तिकं दर्शयति—'एव'मिति यथा कुशाग्रे बिन्दुः क्षणसम्भावितस्थितिकः एवं बालस्यापि जीवितम्, अवगततत्त्वो हि स्वयमेवावगच्छति नाप्यसौ तदभिकाङ्क्षति अतो बालग्रहणं, बालो ह्यज्ञः, स चाज्ञानत्वादेव जीवितं बहु मन्यते, यत एव बालोऽत एव मन्दः—सदसद्विवेकापटुः, यत एव बुद्धिमन्दोऽत एव परमार्थं न जानाति, अतः परमार्थमविजानत एवम्भूतं जीवितमित्येवं पश्यति । परमार्थमजानंश्च यत्कुर्यात्तदाह—'क्रूराणि'इत्यादि, 'क्रूराणि' निर्दयानि निरनुक्रोशानि 'कर्म्माणि' अनुष्ठानानि हिंसानृत-

१५ कुशाग्रबद्बाल-जीवितं

२०

॥१८०॥

२७

स्तेयादीनि सकललोकचमत्कृतिकारीणि अष्टादश वा पापस्थानानि 'बालः' अज्ञः प्रकर्षेण कुर्वाणः। कर्त्रभिप्राये क्रियाफले आत्मनेपदविधानात्तस्यैव तत्क्रियाफलविपाकं दर्शयति—'तेन' क्रूरकर्म्मविपाकापादितेन दुःखेन 'मूढः' किंकर्त्तव्यताऽऽकुलः, केन कृतेन ममैतद्दुःखमुपशमं यायादिति मोहमोहितो विपर्यासमुपैति—यदेव प्राण्युपघातादि दुःखोत्पादने कारणं तदुपशमाय तदेव विदधातीति। किं च—'मोहेण'इत्यादि, 'मोहः' अज्ञानं मोहनीयं वा मिथ्यात्वकषायविषयाभिलाषमयं तेन मोहेन मोहितः सन् कर्म बध्नाति, तेन च गर्भमवाप्नोति, ततोऽपि जन्म पुनर्बालकुमारयौवनादिवयोविशेषाः, पुनर्विषयकषायादिना कर्म्मोपादायायुषः क्षयात् मरणमवाप्नोति, आदिग्रहणात्पुनर्गर्भमित्यादि, नरकादियातनास्थानमेतीत्यतोऽभिधीयते—'एत्थ'इत्यादि, 'अत्र' अस्मिन्ननन्तरोक्ते 'मोहे' मोहकार्ये गर्भमरणादिके पौनःपुन्येनानादिकमपर्यन्तं चतुर्गतिकं संसारकान्तारं पर्यटति, नास्मादपैतीतियावत्, कथं पुनः संसारे न बम्भ्रम्यात्?, तदुच्यते—मिथ्यात्वकषायविषयाभिलाषाभावाद्, अभावेव कुतो?, विशिष्टज्ञानोत्पत्तेः?, सैव कुतो?, मोहाभावात्, यद्येवमितरेतराश्रयत्वं, तथाहि—मोहोऽज्ञानं मोहनीयं वा, तदभावो विशिष्टज्ञानोत्पत्तेः, साऽपि तदभावादिति भणता स्पष्टमेव इतरेतराश्रयत्वमुक्तं, ततश्च न यावद्विशिष्टज्ञानोत्पत्तिः संवृत्ता न तावत्कर्म्मशमनाय प्रवृत्तिः स्यात्, नैष दोषः, अर्थसंशयेनापि प्रवृत्तिदर्शनादिति। आह च—

संसयं परिआणओ संसारे परिन्नाए भवइ, संसयं अपरियाणओ संसारे अपरिन्नाए भवइ (सू. १४४)

'संसय'मित्यादि, संशीतिः संशयः–उभयांशावलम्बा प्रतीतिः संशयः, स चार्थसंशयोऽनर्थसंशयश्च, इह चार्थो मोक्षो मोक्षोपायश्च, तत्र मोक्षे न संशयोऽस्ति, परमपदमितिप्रतिपादनात्, तदुपाये तु संशयेऽपि प्रवृत्तिर्भवत्येव, अर्थसंशयस्य प्रवृत्त्यङ्गत्वात्। अनर्थस्तु संसारः संसारकारणं च, तत्सन्देहेऽपि निवृत्तिः स्यादेव, अनर्थसंशयस्य निवृत्त्यङ्गत्वात् अतः संशयमर्थानर्थगतं परिजानतो हेयोपादेयप्रवृत्तिः स्यादित्येतदेव परमार्थतः संसारपरिज्ञानमिति दर्शयति—तेन संशयं परिजानता संसारश्चतुर्गतिकः तदुपादानं वा मिथ्यात्वाविरत्यादि अनर्थरूपतया परिज्ञातं भवति ज्ञपरिज्ञया, प्रत्याख्यानपरिज्ञया तु परिहृतमिति, यस्तु पुनः संशयं न जानीते स संसारमपि न जानातीति दर्शयितुमाह–'संसयं' इत्यादि, 'संशयं' सन्देहं द्विविधमप्यपरिजानतो हेयोपादेयप्रवृत्तिर्न स्यात्, तदप्रवृत्तौ च संसारोऽनित्याशुचिरूपो व्यसनोपनिपातबहुलो निःसारो न ज्ञातो भवति॥ कुतः पुनरेतन्निश्चीयते? यथा तेन संशयवेदिना संसारः परिज्ञात इति?, किमत्र निश्चेतव्यं?, संसारपरिज्ञानकार्यविरत्युपलब्धेः, तत्र सर्वविरतिप्रष्ठां विरतिं निर्दिदिक्षुराह–

जे छेए से सागारियं न सेवइ, कट्टु एवमवियाणओ विइया मंदस्स बालया, लद्धा हुरत्था पडिलेहाए आगमित्ता आणविज्जा अणासेवणयत्तिबेमि ( सू. १४५ )

'जे छेए' इत्यादि यश्छेको–निपुण उपलब्धपुण्यपापः स 'सागारियं'ति मैथुनं न सेवते मनोवाक्कायकर्म्मभिः, स एव यथावस्थितसंसारवेदी, यस्तु पुनर्मोहनीयोदयात्पार्श्वस्थादि तत्सेवते, सेवित्वा च सातगौरवभयात् किं कुर्यादित्याह–'कट्टु'इत्यादि, रहसि मैथुनप्रसङ्गं कृत्वा पुनर्गुर्वादिना पृष्टः सन्नपलपति, तस्य चैवमकार्यमपलपतोऽविज्ञापयतो वा किं स्यादित्याह—'विइया' इत्यादि,

१०
५लोक०
१ उद्दे०
प्र. आ.
२००

संशय-
१५
ज्ञानं
२०

२६

'मन्दस' अबुद्धिमत एकमकार्यासेवनमियं बालता-अज्ञानता, द्वितीया तदपह्नवनं मृषावादः, तदकरणतया वा पुनरनुत्थानमिति, नागार्जुनीयास्तु पठन्ति-"जे खलु विसए सेवई सेवित्ता वा णालोएइ, परेण वा पुट्ठो निण्हवइ, अहवा तं परं सएण वा दोसेण पाविट्ठयरेण वा दोसेण उवलिंपिजत्ति" सुगमं । यद्येवं ततः किं कुर्यादित्याह-'लद्धा हु' इत्यादि, लब्धानपि कामान् 'हुरत्थे'ति वहिश्चित्रक्षुल्लकादिवत्तद्विपाकं प्रत्युपेक्ष्य चित्ताद्बहिः कुर्यात्, यदिवा हुशब्दोऽपिशब्दार्थे, रेफागमः सुब्व्यत्ययेन द्वितीयार्थे प्रथमा, ततोऽयमर्थो-लब्धानप्यर्थ्यन्ते-अभिलष्यन्त इत्यर्थाः-शब्दादयस्ताननुपनतानपि तद्विपाकद्वारेण 'प्रत्युपेक्ष्य' पर्यालोच्य ततः 'आगम्य' ज्ञात्वा दुरन्तं शब्दादिविषयानुषङ्गं, क्त्वाप्रत्ययस्योत्तरक्रियासव्यपेक्षत्वात्तां दर्शयति-तदनासेवनतया परानाज्ञापयेत्, स्वतोऽपि परिहरेदिति, एतदहं ब्रवीमि येन मया पूर्वार्थव्यावर्णनमकारि स एवाहमव्यवच्छिन्नसम्यग्ज्ञानप्रवाहः शब्दादिविषयस्वरूपोपलम्भात् समुपजनितजिनवचनसंमद इति । एतच्च वक्ष्यमाणं ब्रवीमीति, तदाह—



पासह एगे रूवेसु गिद्धे परिणिज्जमाणे, इत्थ फासे पुणो पुणो, आवंती केयावंती लोयंसि आरंभजीवी, एएसु चेव आरंभजीवी, इत्थवि बाले परिपच्चमाणे रमई पावेहिं कम्मेहिं असरणे सरणंति मन्नमाणे, इहमेगेसिं एगचरिया भवइ, से बहुकोहे बहुमाणे बहुलोभे बहुरए बहुनडे बहुसढे बहुसंकप्पे आसवसत्ती पलिउच्छन्ने उट्ठियवायं पवयमाणे, मा मे केइ अदक्खू अन्नाणपमायदोसेणं, सययं मूढे धम्मं नाभिजाणइ, अट्टा पया माणव ! कंमकोविया जे

५

१०

अणुवरया अविजाए पलिमुक्खमाहु आवट्टमेव अणुपरियट्टंतित्तिबेमि (सू. १४६) ॥ लोकसारे प्रथमोद्देशकः ५-१ ॥



'पासह'इत्यादि, हे जनाः! पश्यत यूयमेकान्तपुष्टधर्म्माणो, बहुवचननिर्देशादाद्यर्थो गम्यते, 'रूवेसु' रूपादिष्विन्द्रियविषयेषु निःसारकटुफलेषु 'गृद्धान्' अध्युपपन्नान् मतः इन्द्रियैर्विषयाभिमुखं संसाराभिमुखं वा नरकादियातनास्थानकेषु वा परिणीयमानान् प्राणिन इति। ते च विषयगृद्धव इन्द्रियवशगाः संसारार्णवे किमाप्नुयुरित्याह-'एत्थ फासे'इत्यादि, 'अत्र' अस्मिन् संसारे हृषीकवशगः सन् कर्म्मपरिणतिरूपान् स्पर्शान् पौनःपुन्येन—आवृत्त्या तानेव तेषु तेष्वेव स्थानेषु प्राप्नुयादिति। पाठान्तरं वा 'एत्थ मोहे पुणो पुणो' 'अत्र' अस्मिन् संसारे 'मोहे' अज्ञाने चारित्रमोहे वा पुनः पुनर्भवतीति। कोऽसावेवम्भूतः स्यादित्याह-'आवंती'-त्यादि, यावन्तः केचन 'लोके' गृहस्थलोके 'आरम्भजीविनः' सावद्यानुष्ठानस्थितिकाः, ते पौनःपुन्येन दुःखान्यनुभवेयुरिति। येऽपि गृहस्थाश्रिताः सारम्भास्तीर्थिकादयस्तेऽपि तद्दुःखभाजिन इति दर्शयति-'एएसु'इत्यादि, 'एतेषु' सावद्यारम्भप्रवृत्तेषु गृहस्थेषु शरीरयापनार्थं वर्त्तमानस्तीर्थिकः पार्श्वस्थादिर्वा 'आरम्भजीवी' सावद्यानुष्ठानवृत्तिः पूर्वोक्तदुःखभाग् भवति। आस्तां तावद्गृहस्थस्तीर्थिको वा, योऽपि संसारार्णवतटदेशमवाप्य सम्यक्त्वरत्नं लब्ध्वाऽपि मोक्षैककारणं विरतिपरिणामं सफलतामनीत्वा कर्म्मोदयात् सोऽपि सावद्यानुष्ठायी स्यादित्याह-'एत्थवि बाले'इत्यादि, अत्र अस्मिन्नप्यर्हत्प्रणीतसंयमाभ्युपगमे 'बालो' रागद्वेषाकुलितः परितप्यमानः परिपच्यमानो वा विषयपिपासया रमते, कैः?-पापैः कर्म्मभिः, विषयार्थं सावद्यानुष्ठाने धृतिं विधत्ते, किं कुर्वाण इत्याह-'असरण'मित्यादि, कामाग्निना पापैर्वा कर्म्मभिः परिपच्यमानः सावद्यानुष्ठानमशरणमेव शरणमिति मन्यमानो मोगेच्छाऽज्ञानतमिसाच्छा-

दितदृष्टिर्विपर्यस्यन् भूयो भूयो नानारूपा वेदना अनुभवेदिति । आस्तां तावदन्ये, प्रव्रज्यामप्यभ्युपेत्य केचिद्विषयपिपासार्त्तास्तांस्तान् कल्काचारानाचरन्तीति दर्शयितुमाह—'इहमेगेसिं'मित्यादि, 'इह' मनुष्यलोके एकेषां, न सर्वेषा, चरणं चर्यते वा चर्या एकस्य चर्या एकचर्या, सा च प्रशस्तेतरभेदेन द्विधा, साऽपि द्रव्यभावभेदात् प्रत्येकं द्विधा, तत्र द्रव्यतो गृहस्थपाषण्डिकादेर्विषयकषायनिमित्तमेकाकिनो विहरणं, भावतस्तु अप्रशस्ता न विद्यते, सा हि रागद्वेषविरहाद्भवति, न च तद्रहितस्याप्रशस्ततेति । प्रशस्ता तु द्रव्यतः प्रतिमाप्रतिपन्नस्य गच्छनिर्गतस्य स्थविरकल्पिकस्य चैकाकिनः सङ्घादिकार्यनिमित्तान्निर्गतस्य, भावतस्तु पुना रागद्वेषविरहाद्भवति, तत्र द्रव्यतो भावतश्चैकचर्या अनुत्पन्नज्ञानानां तीर्थकृतां प्रतिपन्नसंयमानाम् , अन्ये तु चतुर्भङ्गपतिताः, तत्राप्रशस्तद्रव्यैकचर्योदाहरण, तद्यथा—पूर्वदेशे धान्यपूरकाभिधाने सन्निवेशे एकस्तापसः प्रथमवयसि देवकुमारसदृशनिग्रहः षष्ठभक्तेन तद्ग्रामनिर्गमपथे तपस्तेपे, द्वितीयोऽप्युपग्रामं गिरिगह्वरेऽष्टमभक्तेन तपःकर्मणाऽऽतापनां विधत्ते, तस्मै च ग्रामनिर्गमपथवर्त्तिने शीतोष्णमहिष्णवे गुणैराकृष्टो लोक आहारादिभिः सपर्ययोपतिष्ठते, स च तथा लोकेन पूज्यमानो वाग्भिरभिष्टूयमानः आहारादिनोपचर्यमाणो जनमूचे—मत्तोऽपि गिरिपरिसरतापी दुष्करकारकः, ततोऽसौ लोकस्तेन भूयो भूयः प्रोच्यमानस्तमेकाकिनं तापसमद्रिकुहरवासिनं पर्यपूजयद् , दुष्कर च परगुणोत्कीर्त्तनमितिकृत्वा तस्यापि सपर्यादिकं व्यधात् , तदेवमाभ्यां पूजाख्यात्यर्थमेकचर्या विदधे, अतोऽप्रशस्ता, एवमनया दिशाऽन्येऽप्यप्रशस्तैकचर्याश्रिता दृष्टान्ता यथासम्भवमायोज्या इति । तदेवं सूत्रार्थे व्याख्याते सूत्रस्पर्शिकनिर्युक्त्या निर्युक्तिकारो व्याचिख्यासुराह—

चारो चरिया चरण एगट्ठं वंजणं तहिं छक्कं । दव्वं तु दारुसंकमजलथलचाराइयं बहुहा ॥ २४५ ॥

५

१०

'चार' इति 'चर गतिभक्षणयोः' भावे घञ्, चर्येति 'गदमदचरयमश्चानुपसर्गे' (पा० ३-१-१००) इत्यनेन कर्मणि भावे वा यत्, चरणमिति वा, भावे ल्युट्, एकः-अभिन्नोऽर्थोऽस्येत्येकार्थं, किं तत्?-'व्यञ्जनं' व्यज्यते—आविष्क्रियतेऽर्थोऽनेनेति व्यञ्जनं-शब्दः इत्येतत्पूर्वोक्तं शब्दत्रयमेकार्थं, एकार्थत्वाच्च न पृथग् निक्षेपः, 'तत्र' चारनिक्षेपे षट्कं, चारस्य षट्प्रकारो निक्षेप इत्यर्थः, तद्यथा-नामस्थापनेत्यादि, तत्र सुगमत्वान्नामस्थापने अनादृत्य ज्ञशरीरभव्यशरीरव्यतिरिक्तं द्रव्यचारं गाथाशकलेन दर्शयति-'दव्वं तु'त्ति तुशब्दः पुनःशब्दार्थे, द्रव्यं पुनरेवम्भूतं भवति, दारुसङ्क्रमश्च जलस्थलचारश्च दारुसङ्क्रमजलस्थलचारौ तावादी यस्य तद्दारुसङ्क्रमजलस्थलचारादिकं 'बहुधा' अनेकधा, तत्र दारुसङ्क्रमो जले सेत्वादिः क्रियते, स्थले वा गर्त्तलङ्घनादिकः, जलचारो नावादिना, स्थलचारो रथादिना, आदिग्रहणात् प्रासादादौ सोपानपङ्क्त्यादिरिति, यद्यद्देशाद्देशान्तरावाप्तये द्रव्यं स स द्रव्यचार इति गाथार्थः ॥ साम्प्रतं क्षेत्रादिकमाह—

खित्तं तु जंमि खित्ते कालो काले जहिं भवे चारो। भावंमि नाणदंसणचरणं तु पसत्थमपसत्थं ॥ २४६ ॥

क्षेत्रं पुनर्यस्मिन् क्षेत्रे चारः क्रियते यावद्वा क्षेत्रं चर्यते स क्षेत्रचारः, कालस्तु यस्मिन् काले चरति यावन्तं वा कालं स कालचारः, भावे तु द्विधा चरणं-प्रशस्तमप्रशस्तं च, तत्र प्रशस्तं ज्ञानदर्शनचरणानि, अतोऽन्यदप्रशस्तं गृहस्थान्यतीर्थिकानामिति गाथार्थः॥ तदेवं सामान्यतो द्रव्यादिकं चारं प्रदर्श्य प्रकृतोपयोगितया यतेर्भावचारं प्रशस्तं प्रश्नद्वारेण दर्शयितुमाह—

लोगे चउव्विहंमी समणस्स चउव्विहो कहं चारो?। होइ थिई अहिगारो विसेसओ खित्तकालेसुं ॥२४७॥

लोके चतुर्विधे-द्रव्यक्षेत्रकालभावरूपे 'श्रमणस्य' श्राम्यतीति श्रमणो-यतिस्तस्य कथम्भूतो द्रव्यादिश्चतुर्विधश्चारः स्यात्?, इति

श्लोका० १ उद्दे० | १. आ. २०२ | १५ चर्यानिक्षेपः | २० | ॥१८३॥ २८

प्रश्ने निर्वचनमाह–भवति धृतिरित्येषोऽधिकारः, द्रव्ये तावदरसविरसप्रान्तरूक्षादिके धृतिर्भावयितव्या, क्षेत्रेऽपि कुतीर्थिकभाविते प्रकृत्यभद्रके वा नोद्वेगः कार्यः, कालेऽपि दुष्कालादौ यथालाभं सन्तोषिणा भाव्यं, भावेऽप्याक्रोशोपहसनादौ नोद्दीपितव्यं, विशेषतस्तु क्षेत्रकालयोरुभयोरपि धृतिर्भाव्या, द्रव्यभावयोरपि प्रायस्तन्निमित्तत्वात् ॥ पुनरपि द्रव्यादिकं विशेषतो यतेश्चारमाह—

पावोवरए अपरिग्गहे अ गुरुकुलनिसेवए जुत्ते । उम्मग्गवज्जए रागदोसविरए य से विहरे ॥२४८॥

'पापोपरतः' पापात्–पापहेतोः सावद्यानुष्ठानाद्धिंसाऽनृतादत्तादानाब्रह्मरूपादुपरतः पापोपरतः, तथा न विद्यते परिग्रहोऽस्येत्यपरिग्रहः, पापोपरतोऽपरिग्रहश्चेति द्रव्यचारः, क्षेत्रचारमाह–गुरोः कुलं गुरुकुलं–गुरुसान्निध्यं तत्सेवको–युक्तः, समन्वितो यावज्जीवं गुरूपदेशादिनेति, अनेन कालचारः प्रदर्शितः, सर्वकालं गुरूपदेशविधायित्वोपदेशाद्, भावचारमाह–उद्गतो मार्गादुन्मार्गः–अकार्याचरणं तद्वर्जकः, तथा रागद्वेषविरतः स साधुर्विहरेत्—संयमानुष्ठानं कुर्यादिति, गता निर्युक्तिः । साम्प्रतं सूत्रमनुश्रियते–तत्र विषयकषायनिमित्तं यस्यैकचर्या स्यात् स किम्भूतः स्यादित्याह–'से बहुकोहे' इत्यादि, 'स' विषयगृध्नुरिन्द्रियानुकूलवर्त्त्यैकचर्याप्रतिपन्नस्तीर्थिको गृहस्थो वा परैः परिभूयमानो बहुः क्रोधोऽस्येति बहुक्रोधः, तथा वन्द्यमानो मानमुद्वहत इति बहुमानः, तथा कुरुकुचादिभिः कल्कतपसा च बहुमायी, सर्वमेतदाहारादिलोभात्करोतीत्यतो बहुलोभः, यत एवमतो बहुरजाः—बहुपापो बहुषु वाऽऽरम्भादिषु रतो बहुरतः, तथा नटवद्भोगार्थं बहून् वेषान् विधत्त इति बहुनटः, तथा बहुभिः प्रकारैः शठो बहुशठः, तथा बहवः सङ्कल्पाः–कर्त्तव्याध्यवसाया यस्य स बहुसङ्कल्पः, इत्येवमन्येषामपि चौरादीनामेकचर्या वाच्येति, स एवम्भूतः किमवस्थः स्यादित्याह–'आसव' इत्यादि, आस्रवाः—हिंसादयस्तेषु सक्तं–सङ्गः आश्रवसक्तं तद्विद्यते यस्यासावाश्रवसक्ती–हिंसाद्यनुषङ्ग्यात् पलितं–

पा० ५८ रू० १ उ२०

कर्म्म तेनानवबद्धः, कर्माबन्ध इतियावत्, स चैवम्भूतोऽपि किं ब्रूयादित्याह–'उट्ठिय'इत्यादि, धर्म्मचरणायोद्युक्तः उत्थितस्तद्वाद उत्थितवादस्तं प्रवदन्, तीर्थिकोऽप्येवमाह–यथा अहमपि प्रव्रजितो धर्म्मचरणायोद्यत इत्येवं प्रवदन् कर्म्मणाऽवच्छाद्यत इति । स चोत्थितवादी आस्रवेषु प्रवर्त्तमानः आजीविकाभयात् कथं प्रवर्त्तत इत्याह–'मा मे'इत्यादि, मा मां 'केचन' अन्येऽद्राक्षुरवद्यकारिणमित्यतः प्रच्छन्नमकार्यं विदधाति, एतच्चाज्ञानदोषेण प्रमाददोषेण वा विधत्त इति । किंच–'सयय'मित्यादि, 'सततम्' अनवरतं मूढो मोहनीयोदयादज्ञानाद्वा 'धर्म्मं' श्रुतचारित्राख्यं नाभिजानाति, न विवेचयतीत्यर्थः । यद्येवं ततः किमित्याह–'अट्टा' इत्यादि, आर्त्ता विषयकषायैः 'प्रजायन्त' इति प्रजाः–जन्तवः हे मानव !, मनुजस्यैवोपदेशार्हत्वान्मानवग्रहणं, 'कर्म्मणि' अष्टप्रकारे विर्मल्गिने 'कोविदाः' कुशलाः, न धर्म्मानुष्ठान इति, के पुनः ते ये सततं धर्म्मं नाभिजानन्ति कर्म्मबन्धकोविदाश्चेति ?, अत आह–'जे अणुवरया' इत्यादि, ये केचनानिर्दिष्टस्वरूपाः 'अनुपरताः' पापानुष्ठानेभ्योऽनिवृत्ता ज्ञानदर्शनचारित्राणि मोक्षमार्ग इत्येषा विद्या अतो विपर्ययेणाविद्या तया परि–समन्तात् मोक्षमाहुः ते धर्म्मं नाभिजानन्ति इति सम्बन्धः, धर्म्ममजानानाश्च किमापुरित्याह–'आवट्टं' इत्यादि, भावावर्त्तः–संसारस्तमरघट्टघटीयन्त्रन्यायेनानुपरिवर्त्तन्ते, तास्वेव नरकादिगतिषु भूयो भूयो भवन्तीतियावत् । इतिरधिकारपरिसमाप्तौ, ब्रवीमीति पूर्ववत् । लोकसाराध्ययने प्रथमोद्देशक इति ॥५–१॥

प्र. आ. २०२

उक्तः प्रथमोद्देशकः, साम्प्रतं द्वितीयः समारभ्यते, अस्य चायमभिसम्बन्धः–इह प्रागुद्देशके एकचर्याप्रतिपन्नोऽपि सावद्यानुष्ठानादविरतेरभावाच्च न मुनिरित्युक्तम्, इह तु तद्विपर्ययेण यथा मुनिभावः स्यात्तथोच्यते, इत्यनेन सम्बन्धेनायातस्यास्योद्देशकस्यादि सूत्रम्—

१५ प्रच्छन्नपापता

२०

२७

**आवन्ती केयावन्ती लोए अणारंभजीविणो तेसु, एत्थोवरए तं झोसमाणे, अयं संधीति अदक्खू, जे इमस्स विग्गहस्स अयं खणेत्ति अन्नेसी एस मग्गे आरिएहिं पवेइए, उट्ठिए नो पमायए, जाणित्तु दुक्खं पत्तेयं सायं, पुढोछंदा इह माणवा पुढो दुक्खं पवेइयं से अविहिंसमाणे अणवयमाणे, पुट्ठो फासे विपणुन्नए (सू. १४७)**

यावन्तः केचन 'लोके' मनुष्यलोके 'अनारम्भजीविनः' आरम्भः–सावद्यानुष्ठानं प्रमत्तयोगो वा, उक्तं च–"[1]आदाणे निक्खेवे भासुस्सग्गे अ ठाणगमणाई। सव्वो पमत्तजोगो समणस्सऽवि होइ आरंभो ॥१॥" तद्विपर्ययेण त्वनारम्भस्तेन जीवितुं शीलं येषां इत्यनारम्भजीविनो यतयः समस्तारम्भनिवृत्ताः तेष्वेव–गृहिषु पुत्रकलत्रस्वशरीराद्यर्थमारम्भप्रवृत्तेष्वनारम्भजीविनो भवन्ति, एतदुक्तं भवति–सावद्यानुष्ठानप्रवृत्तेषु गृहस्थेषु देहसाधनार्थमनवद्यारम्भजीविनः साधवः पङ्काधारपङ्कजवन्निर्लेपा एव भवन्ति। यद्येवं ततः किमित्याह—'अत्र' अस्मिन् सावद्यारम्भे कर्त्तव्ये 'उपरतः' सङ्कुचितगात्रः, अत्र वाऽर्हते धर्म्मे व्यवस्थित उपरतः पापारम्भात्, किं कुर्यात् सः ?–'तत्' सावद्यानुष्ठानायातं कर्म्म 'झोपयन्' क्षपयन् मुनिभावं भजत इति। किमभिसन्धायात्रोपरतः स्यादित्याह–'अयं संधी' इत्यादि, अविवक्षितकर्म्मका अप्यकर्मका धातवो, यथा पश्य मृगो धावति, एवमत्राप्यद्राक्षीदित्येतत्क्रियायोगेऽप्ययं सन्धिरिति प्रथमा कृतेति 'अय'मिति प्रत्यक्षगोचरापन्न आर्यक्षेत्रसुकुलोत्पत्तीन्द्रियनिर्वृत्तिश्रद्धासंवेगलक्षणः 'सन्धिः' अव-

५

१०

१ आदाने निक्षेपे भाषायामुत्सर्गे च स्थाने गमनादौ। सर्वः प्रमत्तयोगः श्रमणस्यापि भवत्यारम्भः ॥१॥

सरो मिथ्यात्वक्षयाद्युदयलक्षणो वा सम्यक्त्वावाप्तिहेतुभूतकर्म्मविवरलक्षणः सन्धिः शुभाध्यवसायसन्धानभूतो वा सन्धिरित्येनं स्वात्मनि व्यवस्थापितमद्राक्षीद्भवानित्यतः क्षणमप्येकं न प्रमादयेत्, न विषयादिप्रमादवशगो भूयात्। कथं न प्रमत्तः स्यादित्याह– 'जे इमस्स' इत्यादि, 'य' इत्युपलब्धतत्त्वः 'अस्य' अध्यक्षस्य विशेषेण गृह्यते अनेनाष्टप्रकारं कर्म्म तद्वेतरशरीरविशिष्टं वाह्येन्द्रियेण गृह्यत इति विग्रहः—औदारिकं शरीरं तस्य 'अयं' वार्त्तमानिकक्षणः एवम्भूतः सुखदुःखान्यतररूपश्च गतः एवम्भूतश्च भावीत्येवं यः क्षणान्वेषणशीलः सोऽन्वेषी सदाऽप्रमत्तः स्यादिति। स्वमनीषिकापरिहारार्थमाह—'एस मग्गे' इत्यादि, 'एषः' अनन्तरोक्तो 'मार्गो' मोक्षपथः 'आर्यैः' सर्वहेयधर्म्मारातीय(तीर)वर्त्तिभिस्तीर्थकरगणधरैः प्रकर्षेणादौ वा वेदितः–कथितः प्रवेदित इति। न केवलमनन्तरोक्तो वक्ष्यमाणश्च तीर्थकरैः प्रवेदित इति तदाह–'उट्ठिए' इत्यादि, सन्धिमधिगम्योत्थितो धर्म्मचरणाय क्षणमप्येकं न प्रमादयेत्। किं चापरमधिगम्येत्याह–'जाणित्तु' इत्यादि, ज्ञात्वा प्राणिनां प्रत्येकं दुःखं तदुपादानं वा कर्म्म तथा प्रत्येकं सातं च–मनआह्लादि ज्ञात्वा समुत्थितो न प्रमादयेत्। न केवलं दुःखं कर्म्म वा प्रत्येकं, तदुपादानभूतोऽध्यवसायोऽपि प्राणिनां भिन्न एवेति दर्शयितुमाह–'पुढो' इत्यादि, पृथग्–भिन्नः छन्दः–अभिप्रायो येषां ते पृथक्छन्दाः, नानाभूतबन्धाध्यवसायस्थाना इत्यर्थः, 'इह'ति संसारे संज्ञिलोके वा, के ते?—'मानवाः' मनुष्याः, उपलक्षणार्थत्वादन्येऽपि, संज्ञिनां पृथक्सङ्कल्पत्वाच्च तत्कार्यमपि कर्म्म पृथगेव, तत्कारणमपि दुःखं नानारूपमिति, कारणभेदे कार्यभेदस्य अवश्यंभावित्वादिति, अतः पूर्वोक्तं स्मारयन्नाह–'पुढो' इत्यादि, दुःखोपादानभेदाद् दुःखमपि प्राणिनां पृथक् प्रवेदितं, सर्वस्य स्वकृतकर्म्मफलेश्वरत्वात् नान्यकृतमन्य उपभुङ्क्ते इति। एतन्मत्वा किं कुर्यादित्याह–'से' इत्यादि, 'सः' अनारम्भजीवी प्रत्येकसुखदुःखाध्यवसायी प्राणिनो विविधैरुपायैरहिंसन् तदाऽन-

त्रा० ५ लो० ८० २ उ० ९० प्र. आ. २०४

संधिक्षण विचारः

१५ २० ॥१८५॥ २६

आ०
श्रु०१
५ अ०
२ उद्दे०
प्र. आ.
२०५

इत्यादि, 'इति' एतद्वक्ष्यमाणमुदाहृतवान्-व्याहृतवान्, कोऽसौ ?-धीरो' धीः—बुद्धिस्तया राजते, स च तीर्थकृद्गणधरो वा, किं तदुदाहृतवान् ?-तैरातङ्कैः स्पृष्टः सन् तान् स्पर्शान्-दुःखानुभवान् व्याधिविशेषापादितानध्यासयेत्-सहेत । किमाकलय्येत्याह—'से पुव्व' मित्यादि, स स्पृष्टः पीडितः आशुकारिभिरातङ्कैरेतद्भावयेद्-असातावेदनीयविपाकजनितं दुःखं मयैव सोढव्यं, पश्चाद्-प्येतन्मयैव सहनीयं, यतः संसारोदरविवरवर्त्ती न विद्यत एवासौ यस्यासातावेदनीयविपाकापादिता रोगातङ्का न भवेयुः, तथाहि-केवलिनोऽपि मोहनीयादिघातिचतुष्टयक्षयादुत्पन्नज्ञानस्य वेदनीयसद्भावेन तदुदयात्तत्सम्भव इति, यतश्च तीर्थकरैरप्येतद्बद्धस्पृष्ट-निधत्तनिकाचनावस्थायातं कर्म्मावश्यं वेद्यं, नान्यथा तन्मोक्षः, अतोऽन्येनाप्यसातावेदनीयोदये सनत्कुमारदृष्टान्तेन मयैवैतत्सोढ-व्यमित्याकलय्य नोद्विजितव्यमिति, उक्तं च-"स्वकृतपरिणतानां दुर्नयानां विपाकः, पुनरपि सहनीयोऽन्यत्र ते निर्गुणस्य । स्वय-

रोगादि-
सहनं

१५

२०

॥१८६॥

---

१-२-३-४ कर्मबन्धश्चतुर्विधः, तद्यथा-प्रकृतिबन्धः १ स्थितिबन्धः २ अनुभागबन्धः ३ प्रदेशबन्धः ४, तत्र प्रकृतिबन्धोऽष्टविधः, ज्ञानावरणीयाद्यन्त-रायान्तः, एतेऽष्टावपि मूलभेदाः, उत्तरभेदास्तु ज्ञानावरणीये पञ्च, दर्शनावरणीये नव, वेदनीये द्वौ, मोहनीयेऽष्टाविंशतिः, आयुष्यश्चत्वारः, नाम्नः द्विचत्वारिंशत्, सप्तषष्टिर्वा त्रिनवतिर्वा त्र्युत्तरशतं वा, गोत्रे द्वौ, अन्तराये पञ्च, इति मूलोत्तरप्रकृतिबन्धः। स्थितिबन्धे ज्ञानावरणीयदर्शनावरणीयवेदनीयान्तरायेषु त्रिंशत्कोटीकोट्य उत्कृष्टा स्थितिः, मोहनीये सप्ततिकोटीकोट्यः, नामगोत्रयोर्विंशतिः, आयुषि ३३ सागरोपमाणि पूर्वकोटित्रिभागोनानि, नामगोत्रयोर्जघन्या स्थितिरष्टौ मुहूर्त्ताः, वेदनीयस्य द्वादशमुहुर्त्ता, अंतो-मुहुत्ता सेसाणं इति स्थितिबन्धः, शुभाशुभकर्म्मपुद्गलेषु-"जो रसो अणुभागो वुच्चइ तत्थ सुभेसु महुरो असुभेसु अमहुरो रसो, तस्स बन्धो अणुभागबंधो" अणुभागबन्धो गमत्तो । प्रदेशाः-कर्म्मवर्गणास्कन्धाः तेषां बन्धः जीवप्रदेशैः सम वह्न्ययःपिण्डवत्क्षीरनीरसम्बन्धवद्वा, उक्तं च-"जीवकर्मप्रदेशानां, यः सम्बन्धः परस्परम् । कृशानु-लोहवद्वेत्तोः, न बन्धः जगदुर्बुधाः ॥१॥ स्पृष्टबद्धनिधत्तनिकाचितकारणभेदात् स पुनश्चतुर्विधः, तथाहि-समुद्गताय.सूचिसम्बन्धवत् स्पृष्टकर्मबन्धः, दवरकबद्धसूचिसम्ब-न्धवद् बद्धकर्मबन्धः, सर्वान्तरितदवरकबद्धसूचिसम्बन्धवन्निधत्तकर्म्मबन्धः, अग्निध्मातसूचिसमवायमेलकवन्निकाचितकर्मबन्धः.

अनिर्गमनमार्गगमनमेवाध्यवसाये तस्य, किं न–'इह' शरीरे जन्मनि वा विविधं परमार्थभावनया शरीरानुबन्धात् प्रमुक्तो विप्रमुक्तस्तस्य 'नास्ति' न विद्यते, कोऽसौ ?–'मार्गो' नरकतिर्यग्मनुष्यगमनपद्धतिः, वर्त्तमानसामीप्ये वर्त्तमानदर्शनान्न भविष्यतीति नास्तीत्युक्तं, यदिवा तस्मिन्नेव जन्मनि समस्तकर्म्मक्षयोपपत्तेर्नास्ति नरकादिमार्गः, कस्येति दर्शयति–'विरतस्य' हिंसाद्याश्रवद्वारेभ्यो निवृत्तस्य, इतिरधिकारपरिसमाप्तौ, ब्रवीमीति पूर्ववत् सुधर्म्मस्वाम्यात्मा(मी जम्बूस्वामि)नमाह, यद्भगवता वीरवर्द्धमानस्वामिना दिव्यज्ञानेनार्थानुपलभ्य वाग्योगेनोक्तं तदहं भवतां ब्रवीमि, न स्वमतिविरचनेनेति ॥ विरत एव मुनिर्भवत्येतत्प्रतिपाद्य साम्प्रतम् 'अविरतवादी परिग्रहवानि'ति यदुक्तं तत् प्रतिपादयन्नाह—

आवंती केयावंती लोगंसि परिग्गहावंती, से अप्पं वा बहुं वा अणुं वा थूलं वा चित्तमंतं वा अचित्तमंतं वा एएसु चेव परिग्गहावंती, एतदेव एगेसिं महब्भयं भवइ, लोगवित्तं च णं उवेहाए, एए संगे अवियाणओ (सू. १५०)

यावन्तः केचन लोके 'परिग्रहवन्तः' परिग्रहयुक्ताः स्युस्तदा (त्र)एवम्भूतपरिग्रहसद्भावादित्याह–'से अप्पं वा' इत्यादि, तद्द्रव्यं परिगृह्णन्ति तदल्पं वा–स्तोकं वा स्यात् कपर्दकादि, बहु वा स्यात् धनधान्यहिरण्यग्रामजनपदादि, अणु वा स्यात् मूल्यतस्तृणकाष्ठादि प्रमाणतो रत्नादि, स्थूलं वा स्यात् मूल्यतः प्रमाणतश्च हस्त्यश्वादि, एतच्च चित्तवद्वा स्यादचित्तवद्वेति । एतेन च परिग्रहेण परिग्रहवन्तः सन्त एतेष्वेव परिग्रहवत्सु गृहस्थेष्वन्तर्भाविनो व्रतिनोऽपि स्युः, यदिवा एतेष्वेव षट्सु जीवनिकायेषु निमित्तभूतेष्वल्पादि

१५ विरत-सामार्गः अविरतः परिग्रही

२०



२७

वा द्रव्येषु मूर्च्छां कुर्व्वन्तः परिग्रहवन्तो भवन्ति, तथा चाविरतो विरतिवादं वदन्नल्पादपि परिग्रहात् परिग्रहवान् भवति, एवं शेषेष्वपि व्रतेष्वायोज्यम्, एकदेशापराधादपि सर्वापराधितासम्भवः, अनिवारितास्रवत्वात् । यद्येवमल्पेनापि परिग्रहेण परिग्रहवत्त्वमतः पाणिपुटभोजिनो दिगम्बराः सरजस्कबोटिकादयोऽपरिग्रहाः स्युः, तेषां तदभावात्, नैतदस्ति, तदभावादित्यसिद्धो हेतुः, तथाहि—सरजस्कानामस्थ्यादिपरिग्रहाद् बोटिकानामपि पिच्छिकादिपरिग्रहाद् अन्त(न्ततश्च)शरीराहारादिपरिग्रहसद्भावात्, धर्मोपष्टम्भकत्वाददोष इति चेद् तद् इतरत्रापि समानं, किं दिगम्बराग्रहग्रहेणेति । एतच्चाल्पादिपरिग्रहेण परिग्रहवत्त्वमपरिग्रहाभिमानिनां चाहारशरीरादिकं महतेऽनर्थायेति दर्शयन्नाह—'एतदेवे'त्यादि, एतदेव—अल्पबहुत्वादिपरिग्रहेण परिग्रहवत्त्वमेकेषां—परिग्रहवतां नरकादिगमनहेतुत्वात् सर्वस्याविश्वासकारणाद्वा महाभयं भवति, प्रकृतिरियं परिग्रहस्य, यदुत—तद्वान् सर्व्वस्याशङ्कते, यदिवैतदेव शरीराहारादिकमपरस्याल्पस्यापि पात्रवस्त्राणादेर्द्धर्म्मोपकरणस्याभावाद् गृहिगृहे सम्यगुपायाभावादविधिनाऽशुद्धमाहारादिकं भुञ्जानस्य कर्म्मबन्धजनितमहाभयहेतुत्वान्महाभयं, तथैतद्धर्मशरीरं समस्ताच्छादनाभावाद् बीभत्सं परेषां महाभयं, तन्निरवद्यविधिपालनाभावाच्च महाभयमिति । यतः परिग्रहो महाभयमतोऽपदिश्यते—'लोगं' इत्यादि, 'लोकस्य' असंयतलोकस्य 'वित्तं' द्रव्यमल्पादिविशेषणविशिष्टं, चशब्दः पुनःशब्दार्थे, णमिति वाक्यालङ्कारे, लोकवित्तं लोकवृत्तं वा आहारभयमैथुनपरिग्रहोत्कटसंज्ञात्मकं महते भयाय पुनरुत्प्रेक्ष्य—ज्ञात्वा ज्ञपरिज्ञया प्रत्याख्यानपरिज्ञया परिहरेत् । तत्परिहर्त्तुश्च यत्स्यात्तदाह—'एए संगे' इत्यादि, 'एतान्' अल्पादिद्रव्यपरिग्रहसङ्गान् शरीराहारादिसङ्गान् वा अविजानतः अकुर्वाणस्य वा तत्परिग्रहजनितं महाभयं न स्यात् ॥ किंच—

५

१०

से सुपडिबद्धं सूवणीयंति नच्चा पुरिसा परमचक्खू विपरिक्कमा, एएसु चेव बंभचेरंतिबेमि,

से सुयं च मे अज्झत्थयं च मे–वंधप्पमुक्खो अज्झत्थेव, इत्थ विरए अणगारे दीहरायं तितिक्खए, पमत्ते वहिया पास, अप्पमत्तो परिव्वए, एयं मोणं सम्मं अणुवासिज्जासित्तिबेमि (सू. १५१) लोकसाराध्ययने द्वितीयोद्देशकः ५–२ ॥



'से' तस्य परिग्रहपरिहर्तुः सुष्ठ्र प्रतिबद्धं सुप्रतिबद्धं सुष्ठूपनीतं सूपनीतं ज्ञानादि इत्येतत् ज्ञात्वा 'हे पुरुष !' मानव ! परमं ज्ञानं चक्षुर्यस्यासौ परमचक्षुः मोक्षैकदृष्टिर्वा सन् विविधं तपोऽनुष्ठानविधिना संयमे कर्म्मणि वा पराक्रमस्वेति। अथ किमर्थं पराक्रमणोपदेश इत्यत आह–'एएसु चेवे'त्यादि, य इमे परिग्रहविरताः परमचक्षुषश्चैतेष्वेव परमार्थतो ब्रह्मचर्यं, नान्येषु, नवविधब्रह्मचर्यगुप्त्यभावात्, यदिवा ब्रह्मचर्याख्योऽयं श्रुतस्कन्धः, एतद्वाच्यमपि ब्रह्मचर्यं तदेतेष्वेवापरिग्रहवत्सु, इतिरधिकारपरिसमाप्तौ, ब्रवीम्यहं यदुक्तं वक्ष्यमाणं च सर्वज्ञोपदेशादित्याह–'से सुअं च मे' इत्यादि, तद्यत् कथितं यच्च कथयिष्यामि तच्छ्रुतं च मया तीर्थकरसकाशात्। तथा आत्मन्यधि अध्यात्मं–ममैतच्चेतसि व्यवस्थितं, किं तदध्यात्मनि स्थितमिति दर्शयति–बन्धात्सकाशात्प्रमोक्षः बन्धप्रमोक्षः, तथा 'अध्यात्मन्येव' ब्रह्मचर्ये व्यवस्थितस्यैवेति। किं च–'इत्थ' इत्यादि, 'अत्र' अस्मिन् परिग्रहे जिघृक्षिते विरतः, कोऽसौ ?–नास्यागारं–गृहं विद्यत इत्यनगारः, स एवम्भूतो 'दीर्घरात्रं' यावज्जीवं परिग्रहाभावात् यत् क्षुत्पिपासादिकमागच्छति तत् 'तितिक्षेत' सहेत। पुनरप्युपदेशदानायाह–'पमत्ते' इत्यादि, प्रमत्तान्–विषयादिभिः प्रमादैर्बहिर्द्धर्म्माद्व्यवस्थितान् पश्य गृहस्थतीर्थिकादीन्। दृष्ट्वा च किं कुर्यादिति दर्शयति–अप्रमत्तः सन् संयमानुष्ठाने परिव्रजेदिति। किंच–'एय'मित्यादि, 'एतत्' पूर्वोक्तं संयमानुष्ठानं मुनेरिदं मौनं–

सर्वज्ञोक्तं सम्यग् 'अनुवासयेः' प्रतिपालयेः 'इतिः' अधिकारपरिसमाप्तौ, ब्रवीमीति पूर्ववत् ॥ लोकसाराध्ययने द्वितीयोद्देशकः समाप्तः ॥

---

उक्तो द्वितीयोद्देशकः, साम्प्रतं तृतीय आरभ्यते—अस्य चायमभिसम्बन्धः—इहानन्तरोक्तोद्देशकेऽविरतवादी परिग्रहवानित्यभिहितम्, इह तु तद्विपर्यय उच्यतेइति, अनेन सम्बन्धेनायातस्यास्योद्देशकस्यादिसूत्रम्—



**आवंती केयावंती लोयंसि अपरिग्गहावंती एएसु चेव अपरिग्गहावंती, सुच्चा वई मेहावी पंडियाण निसामिया समियाए धम्मे आरिएहिं पवेइए जहित्थ मए संधी झोसिए एवमन्नत्थ संधी दुज्झोसए भवइ, तम्हा बेमि नो निह्णिज्ज वीरियं। (सू. १५२)**

प्र. आ. २०८

यावन्तः केचन लोकेऽपरिग्रहवन्तो, विरता यतय इत्यर्थः, ते सर्वे एतेष्वेव—अल्पादिषु द्रव्येषु त्यक्तेषु सत्स्वपरिग्रहवन्तो भवन्ति, यदिवैतेष्वेव षट्सु जीवनिकायेषु ममत्वाभावादपरिग्रहा भवन्ति। स्यात्—कथमपरिग्रहभावः स्यादित्याह—'सोच्चा' इत्यादि, 'वई'त्ति सुब्व्यत्ययेन द्वितीयार्थे प्रथमाऽतो वाचं—तीर्थकराज्ञामागमरूपां 'श्रुत्वा' आकर्ण्य 'मेधावी' मर्यादाव्यवस्थितः सश्रुतिको हेयोपादेयपरिहारप्रवृत्तिज्ञः, तथा 'पण्डितानां' गणधराचार्यादीनां विधिनियमात्मकं वचनं निशम्य सचित्ताचित्तपरित्यागादपरिग्रहो भवति। स्यादेतत्—कदा पुनरुत्पन्ननिरावरणज्ञानानां तीर्थकृतां वाग्योगो भवति येनासावाकर्ण्यते ?, उच्यते, धर्म्मकथाऽवसरे, किम्भूतस्तैः पुनर्धर्म्मः प्रवेदित इत्याशङ्कापनोदार्थमाह—'समिय'त्ति 'समता' समशत्रुमित्रता तयाऽऽर्यैर्धर्म्मः प्रवेदित इति, उक्तं

५

१०

10 —५लो॰ ३ उ॰

स–"जो चंदणेण बाहुं आलिंपइ वासिणा व तच्छेति। संथुणइ जो अ णिंदति महेसिणो तत्थ समभावा ॥१॥" यदिवाऽऽर्येषु–देशभाषाचरित्राऽऽर्येषु समतया भगवता धर्म्मः प्रवेदितः,तथा चोक्तम्–"जहा पुण्णस्स कत्थई तहा तुच्छस्स कत्थई"त्यादि,अथवा शमिनो भावः शमिता तया सर्वहेयधर्म्मारातीयवर्त्तिभिः आर्यैः प्रकर्षेणादौ वा धर्म्मो वेदितः प्रवेदितः, इन्द्रियनोइन्द्रियोपशमेन तीर्थकृद्भिर्द्धर्म्मः प्रज्ञापित इतियावत्। स्याद्–अन्यैरपि स्वाभिप्रायेण धर्म्माः प्रवेदिता एवेत्यतस्तद्व्युदासार्थं भगवानेवाह–'जहेत्थे'त्यादि, सदेवमनुजायां पर्षदि भगवानेवमाह–यथाऽत्र मया ज्ञानादिको मोक्षसन्धिः 'झोसिओ'त्ति सेवित इति, यदिवा 'अत्र' अस्मिन् ज्ञानदर्शनचारित्रात्मके मोक्षमार्गे समभावात्मके इन्द्रियनोइन्द्रियोपशमरूपे मया मुमुक्षुणा स्वत एव सन्धानं सन्धिः–कर्म्मसन्ततिः सन्धीयत इति वा भवाद्भवान्तरमनेनेति सन्धिः–अष्टप्रकारकर्म्मसन्ततिरूपः स झोषितः–क्षपितः,अतो य एव तीर्थकृद्भिर्द्धर्म्मोऽभिहितः स एव मोक्षमार्गो,नापर इति, एतदेवाह–यथाऽत्र मया सन्धिर्झोषितः एवमन्यत्र-अन्यतीर्थिकप्रणीते मोक्षमार्गे सन्धिः-कर्म्मसन्ततिरूपः दुर्झोष्यो भवति–दुःक्षयो भवति, असमीचीनतया तदुपायाभावाद्, यदि नाम भगवताऽत्र कर्म्मसन्धिर्झोषितस्ततः किमित्याह यस्माद्स्मिन्नेव मार्गे व्यवस्थितेन मयाऽपि विकृष्टतरेण तपसा कर्म्म क्षपितं ततोऽन्योऽपि मुमुक्षुः संयमानुष्ठाने तपसि च वीर्यं 'नो निहन्यात्' नो निगूहयेद्, अनिगूहितबलवीर्यो भूयाद्, एतदहं ब्रवीमि परमकारुण्याकृष्टहृदयः परहितैकोपदेशदायीत्येतद्वीरवर्द्धमानस्वाम्याह, सुधर्मस्वामी स्वशिष्याणां कथयति स्म ॥ कथंवम्भूतः स्यादित्याह—

संधि-
१५
सेवा

२०

जे पुव्वुट्ठाई नो पच्छानिवाई, जे पुव्वुट्ठाई पच्छानिवाई, जे नो पुव्वुट्ठायी नो पच्छानिवाई,

२६

॥१८९॥

---

१ यश्चन्दनेन बाहू आलिम्पति वास्या वा तक्ष्णोति। संस्तौति यश्च निन्दति महर्षयस्तत्र समभावाः ॥ १ ॥

## सेऽवि तारिसिए सिया, जे परिन्नाय लोगमन्नेसयंति । (सू. १५३)

यः कश्चिद्विदितसंसारस्वभावतया धर्म्मचरणैकप्रवणमनाः पूर्वं-प्रव्रज्याऽवसरे संयमानुष्ठानेनोत्थातुं शीलमस्येति पूर्वोत्थायी पश्चाच्च श्रद्धासंवेगत(वश)या विशेषेण वर्द्धमानपरिणामो नो निपाती,निपतितुं शीलमस्येति विगृह्य णिनिः,निपतनं वा निपातः सोऽस्यास्तीति निपाती, सिंहतया निष्क्रान्तः सिंहतया विहारी च गणधरादिवत् प्रथमो भङ्गः। द्वितीयभङ्गं सूत्रेणैव दर्शयन्नाह-पूर्वमुत्थातुं शील- मस्येति पूर्वोत्थायी, पुनर्विचित्रत्वात् कर्म्मपरिणतेस्तथाविधभवितव्यतानियोगात्पश्चान्निपाती स्यात्, नन्दिषेणवत्, कश्चिद्दर्शन- तोऽपि गोष्ठामाहिलवदिति। तृतीयभङ्गस्य चाभावादनुपादानं, स चायम्—'जे नो पुव्वुट्ठायी पच्छानिवाती', तथाहि—उत्थाने सति निपातोऽनिपातो वा चिन्त्यते, मति धर्म्मिणि धर्म्मचिन्ता, तदुत्थानप्रतिषेधे च दूरोत्सादितैव निपातचिन्तेति। चतुर्थभङ्गद- र्शनाय त्वाह-यो हि नो पूर्वोत्थायी न च पश्चान्निपाती,सोऽविरत एव गृहस्थः सन्नोत्थायी भवति,सम्यग्विरतेरभावात्, नापि पश्चा- न्निपाती, उत्थानाविनाभावित्वान्निपातस्य, शाक्यादयो वा चतुर्थभङ्गपतिता द्रष्टव्याः, तेषामप्युभयासद्भावादिति। ननु च गृहस्था एव चतुर्थभङ्गपतिता युक्ता वक्तुं, तथाहि-तेषां सावद्ययोगानुष्ठानेनानुत्थानतया प्रतिज्ञामन्दरारोपाभावान्निपाताभावः, शाक्यादि- रपि चतुर्थभङ्गपतित इत्यत आह-'सोऽपि' शाक्यादिर्गणः पञ्चमहाव्रतभारारोपणाभावेन सावद्ययोगानुष्ठानतया नो पूर्वोत्थायी, निपातस्य च तत्पूर्वकत्वान्नो पश्चान्निपातीति,अतस्तादृशः एव-गृहस्थतुल्य एव स्यात्,आस्रवद्वाराणामुभयेषामप्यसंवृतत्वात्,उदायि- नृपमारकवत्। अन्येऽपि ये सावद्यानुष्ठायिनस्तेऽपि तादृक्षा एवेति दर्शयन्नाह-येऽपि स्वयूथ्याः पार्श्वस्थादयो द्विविधयाऽपि परिज्ञया लोकं परिज्ञाय पुनः पचनपाचनाद्यर्थं तमेव लोकमन्वाश्रिता अन्वेषयन्ति वा तेऽपि गृहस्थतुल्या एव भवेयुः॥ स्वमनीषिकापरिहारार्थमाह-

५

प्र. आ.
२०१

१०

एयं नियाय मुणिणा पवेइयं, इह आणाकंखी पंडिए अणिहे, पुव्वावररायं जयमाणे, सया सीलं सुपेहाए सुणिया भवे अकामे अझंझे, इमेण चेव जुज्झाहि, किं ते जुज्झेण वज्झओ? (सू. १५४)



'एतद्' यदुत्थाननिपातादिकं प्रागुपन्यस्तं तत् केवलज्ञानावलोकनेन 'नियाय'त्ति ज्ञात्वा 'मुनिना' तीर्थकृता 'प्रवेदितं' कथितम्। इदं चान्यत्प्रवेदितमित्याह–'इह' अस्मिन् मौनीन्द्रे प्रवचने व्यवस्थितः सन् 'आज्ञां' तीर्थकरोपदेशमाकाङ्क्षितुं शीलमस्येत्याज्ञाकाङ्क्षी आगमानुसारप्रवृत्तिकः, कथंभूतः?–'पण्डितः' सदसद्विवेकज्ञः 'अस्निहः' स्नेहरहितः। रागद्वेषविप्रमुक्तोऽहर्निशं गुरुनिर्देशवर्ती यत्नवान् स्यादित्येतदाह–पूर्वरात्रं–रात्रेः प्रथमो यामोऽपररात्रं–रात्रेः पाश्चात्यः एतद्यामद्वयमपि 'यतमानः' सदाचारमाचरेत्, मध्यवर्तियामद्वयमपि यथोक्तविधिना स्वपन् वैरात्रादिकं विदध्यात्, रात्रियतनाप्रतिपादनेन चाह्न्यपि प्रतिपादितैव भवति, आद्यन्तग्रहणे मध्यग्रहणस्यावश्यंभावित्वात्। किं च–'सदा' सर्वकालं 'शीलम्' अष्टादशभेदसहस्रसङ्ख्यं संयमं वा यदिवा चतुर्द्धा शीलं–महाव्रतसाधनं तिस्रो गुप्तयः पञ्चेन्द्रियदमः कषायनिग्रहश्चेत्येतच्छीलं सम्प्रेक्ष्य मोक्षाङ्गतयाऽनुपालयेत् नाक्षिनिमेषमात्रमपि कालं प्रमादवशगो भूयात्। कश्च शीलसम्प्रेक्षकः स्यादित्याह–यो हि श्रुत्वा शीलसम्प्रेक्षणफलं निःशीलतानां च नरकादिपातविपाकमाकर्ण्यागमात् 'भवेत्' स्यात् 'अकाम' इच्छामदनकामरहित इति, तथा नास्य 'झञ्झा' माया लोभेच्छा वा विद्यत इत्यझञ्झः, कामझञ्झाप्रतिषेधाच्च मोहनीयोदयः प्रतिषिद्धः, तत्प्रतिषेधाच्च शीलवान् स्यादिति, एतदुक्तं भवति–धर्मं श्रुत्वा स्यात् अकामोऽझ-

ञ्चश्चेत्यनेन चोत्तरगुणा गृहीताः, उपलक्षणार्थत्वाच्च मूलगुणा अपि गृहीताः, ततः स्यात् अहिंसकः सत्यवादीत्याद्यपि द्रष्टव्यं, ननु नान्यज्जीवाच्छरीरमित्येवंभावनायुक्तस्यानिगूहितबलवीर्यस्य पराक्रममाणस्याष्टादशशीलाङ्गसहस्रधारिणोऽपि मे यथोपदेशं प्रवर्त्तमानस्यापि नाशेषकर्म्ममलापगमोऽद्यापि भवतीत्यतस्तथाभूतमसाधारणकारणमाचक्ष्व येनाहमाश्वेवाशेषमलकलङ्करहितः स्याम्, अहं च भवदुपदेशाद् अपि सिंहेनापि सह युद्ध्ये, न मे कर्म्मक्षयार्थं प्रवृत्तस्य किञ्चिदशक्यमस्तीत्यत्रोत्तरं सूत्रेणैवाह–अनेनैवौदारिकेण शरीरेणेन्द्रियनोइन्द्रियात्मकेन विषयसुखपिपासुना स्वैरिणा सार्द्धं युध्यस्व, इदमेव सन्मार्गावतारणतो वशीकुरु, किमपरेण बाह्यतस्ते युद्धेन ?, अन्तरारिषड्वर्गकर्मरिपुजयाद्धा सर्वं सेत्स्यति भवतो, नातोऽपरं दुष्करमस्तीति ॥ किंत्वियमेव सामग्री अगाधसंसारार्णवे पर्यटतो भवकोटिसहस्रेष्वपि दुष्प्रापेति दर्शयितुमाह—

जुद्धारिहं खलु दुल्लहं, जहित्थ कुसलेहिं परिन्नाविवेगे भासिए, चुए हु बाले गब्भाइसु रज्जइ, अस्सिं चेयं पवुच्चइ, रूवंसि वा छणंसि वा, से हु एगे संविद्धपहे मुणी, अन्नहा लोगमुवेहमाणे, इय कम्म परिण्णाय सव्वसो से न हिंसइ, संजमई नो पगब्भइ, उवेहमाणो पत्तेयं सायं, वण्णाएसी नारभे कंचणं सव्वलोए एगप्पमुहे विदिसप्पइन्ने निव्विण्णचारी अरए पयासु ( सू. १५५ )

शरीर-
युद्धं

५

१०

एतदौदारिकं शरीरं भावयुद्धार्हं, खलुरवधारणे, स च भिन्नक्रमो, दुर्लभमेव–दुष्प्रापमेव, उक्तं च–"ननु पुनरिदमतिदुर्लभमगाधसंसारजलधिविभ्रष्टम् । मानुष्यं खद्योतकतडिल्लताविलसितप्रतिमम् ॥१॥" इत्यादि, पाठान्तरं वा–"जुद्धारियं च दुल्लहं" तत्रानार्यं सङ्ग्रामयुद्धं परीषहादिरिपुयुद्धं त्वार्यं तद् दुर्लभमेव तेन युद्ध्यस्व, ततो भवतोऽशेषकर्म्मक्षयलक्षणो मोक्षोऽचिरादेव भावीति भावार्थः । तच्च भावयुद्धार्हं शरीरं लब्ध्वा कश्चित्तेनैव भवेनाशेषकर्म्मक्षयं विधत्ते, मरुदेवीस्वामिनीव, कश्चित् सप्तभिरष्टभिर्वा भवैर्भरतवत्, कश्चिदपार्द्धपुद्गलपरावर्त्तेन, अपरो न सेत्स्यत्येव, किमित्येवं ?, यत आह—'यथा' येन प्रकारेण 'अत्र' अस्मिन् संसारे 'कुशलैः' तीर्थकृद्भिः 'परिज्ञाविवेकः' परिज्ञानविशिष्टता, कस्यचित् कोऽप्यध्यवसायः संसारवैचित्र्यहेतुः 'भाषितः' प्रज्ञापितः, स च मतिमता तथैवाभ्युपगन्तव्य इति । तदेव परिज्ञानानात्वं दर्शयन्नाह—लब्ध्वाऽपि दुर्लभं मनुजत्वं प्राप्य च मोक्षैकगमनहेतुं धर्म्मं पुनरपि कर्म्मोदयात् तस्मात् च्युतो 'बालः' अज्ञः 'गर्भादिषु रज्यते' गर्भ आदिर्येषां कुमारयौवनावस्थाविशेषाणां ते गर्भादयः तेष्वेव गार्द्ध्यमुपयाति, यथैभिः सार्द्धं मम वियोगो मा भूत् इत्यध्यवसायी भवति, यदिवा धर्म्माच्च्युतस्तत्करोति येन गर्भादिषु यातनास्थानेषु सङ्गमुपयाति, 'रिज्जइ'त्ति वा क्वचित्पाठः, रीयते–गच्छतीत्यर्थः । स्यात्–क्वोक्तमिदं ? यत् प्राग् व्यावर्णितमित्याह–'अस्मिन्नि'ति आर्हते प्रवचने 'एतत्' पूर्वोक्तं प्रकर्षेणोच्यते प्रोच्यते । एतच्च वक्ष्यमाणमत्रैवोच्यते इति दर्शयन्नाह–'रूपे' चक्षुरिन्द्रियविषयेऽप्युपपन्नो,चाशब्दादन्यत्र वा स्पर्शरसादौ 'क्षणे' प्रवर्त्तते,'क्षणु हिंसायां क्षणनं क्षणः-हिंसा तस्यां प्रवर्त्तते,चाशब्दादन्यत्र चानृतस्तेयादाविति, रूपप्रधानत्वाद्विषयाणां रूपित्वाच्च रूपोपादानं, आस्रवद्वाराणां च हिंसाप्रधानत्वात्तदादित्वाच्च तदुपादानमिति । बालो रूपादिविषयनिमित्तं धर्माच्च्युतः सन् गर्भादिषु रज्यते, अत्रार्हते मार्गे इदमुच्यते, यस्तु पुनर्गर्भादिगमनहेतुं ज्ञात्वा विषयगृद्धं धर्म्माद-

गर्भादिभ्रमणं

१५

२०

॥१९१॥

२६

च्युतो हिंसाद्याश्रवद्वारेभ्यो निवर्त्तते स किंभूतः स्यादित्याह–'स' जितेन्द्रियो, दुश्चर्यचारणो, स एवैकः–अद्वितीयो 'मुनिः' जगत्त्रयमन्ता 'संविद्धपथः' सम्यग्विद्धः–ताडितः–क्षुण्णः पन्थाः–मोक्षमार्गो ज्ञानदर्शनचारित्राख्यो येन स तथा, 'संविद्धभये'त्ति वा पाठः, संदिद्धभयो दृष्टभय इत्यर्थः, यो ह्यास्रवद्वारेभ्यो हिंसादिभ्यो निवृत्तः स एव मुनिः क्षुण्णमोक्षमार्ग इति भावार्थः। किंच—अन्येन प्रकारेणान्यथा–विषयकषायाभिभूतं हिंसादिकर्म्मसु प्रवृत्तं 'लोकं' गृहस्थलोकं पाखण्डिलोकं वा पचनपाचनौद्देशिकसचित्ताहारादिप्रवृत्तमुत्प्रेक्षमाणोऽन्यथा वा आत्मानं निवृत्ताशुभव्यापारमुत्प्रेक्षमाणः संविद्धपथो मुनिः स्यात् इति। लोकं चान्यथोत्प्रेक्ष्य किं कुर्यादित्याह–'इति' पूर्वोक्तैर्हेतुभिर्यद्बद्धं कर्म्म तदुपादानं च सर्वतः परिज्ञाय ज्ञपरिज्ञया प्रत्याख्यानपरिज्ञयाऽपि सर्वतः परिहरेत्। कथं परिहरतीत्याह–'स' कर्म्मपरिहर्त्ता कायवाङ्मनोभिर्न हिनस्ति जन्तून् न घातयत्यपरैर्नाप्यनुमन्यते च। किं च–पापोपादानप्रवृत्तमात्मानं संयमयति, सप्तदशप्रकारं वा संयमं करोति संयमयति, आचारक्विबन्तं चैतत् संयम इवाचरति संयमयति। किं च–'नो पगब्भइ' 'गल्भ धाष्टर्ये' असंयमकर्म्मसु प्रवृत्तः सन् न प्रगल्भत्वमायाति, रहस्यप्यकार्यप्रवृत्तौ जिह्रेति–न धृष्टतां अवलम्बत इति, उपलक्षणार्थत्वादस्य क्षुण्णमोक्षपथो मुनिर्न क्रुध्यति, न जात्यादिमानमुद्वहति, न वञ्चनां विधत्ते, न लुभ्यति। किमाकलय्यैतत्कुर्यादित्याह–'उत्प्रेक्षमाणः' अवगच्छन् प्रत्येकं प्राणिनां सातं मनोऽनुकूलं, नान्यसुखेनान्यः सुखीति नापि परदुःखेन दुःखीत्यतः प्राणिनो न हिंस्यादिति। प्राणिनां प्रत्येकं सातमुत्प्रेक्षमाणश्च किं कुर्यादित्याह–वर्ण्यते–प्रशस्यते येन स वर्णः–साधुकारस्तदादेशी वर्णादेशी—वर्णाभिलाषी सन् नारभते कञ्चन पापारम्भं सर्वस्मिन्नपि लोके, यदिवा–तपःसंयमादिकमप्यारम्भं यशःकीर्त्यर्थं नारभते, प्रवचनोद्भावनार्थं त्वारभते, तदुद्भावकाश्चामी–"प्रावचनी धर्म्मकथी वादी नैमित्तिकस्तपस्वी च। विद्यासिद्धः ख्यातः कविरपि चोद्भाव-

कास्त्वष्टौ ॥ १ ॥" यदिवा वर्णो–रूपं तदादेशी–तदभिलाषुकः नोद्वर्त्तनादिकाः क्रिया आरभेत, किम्भूतः सन्नेतत्कुर्यादित्याह– 'एको' मोक्षोऽशेषमलकलङ्करहितत्वात् संयमो वा रागद्वेषरहितत्वात् तत्र प्रगतं मुखं यस्य स तथा, मोक्षे तदुपाये वा दत्तैकदृष्टिर्न कञ्चन पापारम्भमारभेत इति. किं च—मोक्षसंयमाभिमुखा दिक् ततोऽन्या विदिक् तां प्रकर्षेण तीर्णो विदिक्प्रतीर्णः, स चैवम्भूतः सन्नारम्भी स्यात्, कुमार्गपरित्यागेन न पापारम्भान्वेषी भवतीत्यर्थः, किं च–चरणं चारः–अनुष्ठानं निर्विण्णस्य चारो निर्विण्णचारः सोऽस्यास्तीति निर्विण्णचारी, कुत इति चेत्, यतः 'प्रजास्वरतः' प्रजायन्त इति प्रजाः–प्राणिनस्तत्रारतः–तदारम्भाप्रवृत्तो निर्ममत्वो वा, यश्च शरीरादिष्वपि ममत्वरहितः स निर्विण्णचार्येव भवति, यदिवा प्रजाः–स्त्रियस्तास्वरतः आरम्भेऽपि निर्वेदमागच्छति, कारणाभावे कार्यस्याप्यभावादिति ॥ यश्च प्रजास्वरक्तः आरम्भरहितः स किम्भूतः स्यादित्याह—



से वसुमं सव्वसमन्नागयपन्नाणेणं अप्पाणेणं अकरणिज्जं पावकम्मं तं नो अन्नेसी, जं संमंति पासहा तं मोणंति पासहा जं मोणंति पासहा तं संमंति पासहा, न इमं सक्कं सिढिलेहिं अद्दिज्जमाणेहिं गुणासाएहिं वंकसमायारेहिं पमत्तेहिं गारमावसंतेहिं, मुणी मोणं समायाए धुणे सरीरगं, पंतं लूहं सेवंति वीरा सम्मत्तदंसिणो एस ओहन्तरे मुणी, तिण्णे मुत्ते विरए वियाहिएत्तिबेमि (सू. १५६) ॥ लोकसारे तृतीयोद्देशकः ॥५–३॥

वसु-द्रव्यं, स चात्र संयमः तद्विद्यते यस्य स निवृत्तारम्भो मुनिर्वसुमान्, समं सम्यग् अन्वागतं प्रज्ञानं पदार्थाविर्भावकं यस्यात्मनस्तेनात्मना सर्वसमन्वागतप्रज्ञानरूपापन्नेन यदकर्त्तव्यं पापकर्म्म तन्नो कदाचिदप्यन्वेषति, उपलब्धपरमार्थरूपेणात्मना न सावद्यानुष्ठानविधायी स्यादिति भावार्थः। यदेव सम्यक् प्रज्ञानं तदेव पापकर्मवर्जनं, यदेव च पापकर्म्मवर्जनं तदेव च सम्यक् प्रज्ञानमित्येतद्गतप्रत्यागतसूत्रेणैव दर्शयितुमाह—सम्यगिति-सम्यग्ज्ञानं सम्यक्त्वं वा तत्सहचरितं, अनयोः सहभावादेकग्रहणे द्वितीयग्रहणं न्याय्यं, यदिदं सम्यग्ज्ञानं सम्यक्त्वं वेत्येतत् पश्यत तन्मुनेर्भावो मौनं—संयमानुष्ठानमित्येतत्पश्यत, यच्च मौनमित्येतत् पश्यत तत्सम्यग्ज्ञानं नैश्चयिकसम्यक्त्वं वा पश्यत, ज्ञानस्य विरतिफलत्वात् सम्यक्त्वस्य चाभिव्यक्तिकारणत्वात्, सम्यक्त्वज्ञानचरणानामेकताऽध्यवसेयेति भावार्थः। एतच्च,न येन केनचिच्छक्यमनुष्ठातुमित्याह-नैतत् सम्यक्त्वादित्रयं सम्यगनुष्ठातुं शक्यं,कैः?—'शिथिलैः' अल्पपरिणामतया मन्दवीर्यैः संयमतपसोर्धृतिदृढिमरहितैरिति, किंच-आर्द्रैः—पुत्रकलत्राद्यनुषङ्गजनितस्नेहादार्द्रीक्रियमाणैरेतत्पूर्वोक्तमशक्यमिति सम्बन्धः, किंच-गुणाः—शब्दादयस्तेष्वास्वादो येषां ते गुणास्वादास्तैरिति, किंच-वक्रः समाचारो येषां ते तथा तैः, मायाविभिरित्यर्थः, तथा विषयकषायादिप्रमादैः प्रमत्तैरिति, किंच-अगारं-गृहं तद् आद्यक्षरलोपाद्गारमित्युक्तं तदगारमावसद्भिः-सेवमानैः, पापकर्मवर्जनरूपं मौनमनुष्ठानमशक्यमिति सर्वत्र योजनीयं। कथं तर्हि शक्यमित्याह-'मुनिः' जगत्त्रयस्य मन्ता मौनं-मुनित्वमशेषसावद्यानुष्ठानवर्जनरूपं 'समादाय' गृहीत्वा धुनीयाच्छरीरकमौदारिकं कर्म्मशरीरं वेति। कथं च तद्धुननमित्याह-प्रान्तं-पर्युषितं वल्लचनकादि अल्पं वा, तदपि रूक्षं विकृतेरभावात्, तत् 'सेवन्ते' तदभ्यवहरन्ति, के ते ?-'वीराः' कर्मविदारणसहिष्णवः, किंभूताः ?-समत्वदर्शिनः सम्यक्त्वदर्शिनो वा। यश्च प्रान्तरूक्षसेवी स किंगुणः स्यादित्याह-'एषः' अन-

५

१०

न्तरोक्तविशेषणविशिष्टः ओघो–भावौघः संसारस्तं तरतीति, कोऽसौ ?–मुनिः, वर्त्तमानसामीप्ये वा वर्त्तमानवद्वेति तीर्ण एवासौ, सबाह्याभ्यन्तरसङ्गाभावान्मुक्तवन्मुक्तः, कश्चैवम्भूतो ?—यः सावद्यानुष्ठानाद्विरत इत्येवं व्याख्यातः । इतिरधिकारपरिसमाप्तौ, ब्रवीमीति पूर्ववत्। लोकसाराध्ययने तृतीयोद्देशकः परिसमाप्त इति ॥

उक्तस्तृतीयोद्देशकः, साम्प्रतं चतुर्थ आरभ्यते, अस्य चायमभिसम्बन्धः–इहाद्योद्देशके हिंसकस्य विषयारम्भकस्यैकचरस्य मुनित्वाभावः प्रदर्शितो, द्वितीयतृतीययोस्तु हिंसाविषयारम्भपरिग्रहव्युदासेन तद्वतो दोषं प्रदर्श्य विरत एव मुनिर्भवतीत्येतत्प्रतिपादितम्, अस्मिंश्च एकचरस्याप्युनिभावे दोषोद्भावनतः कारणमाह, इत्यनेन सम्बन्धेनायातस्यास्योद्देशकस्यादिसूत्रम्—

गामाणुगामं दूइज्जमाणस्स दुज्जायं दुप्परक्कंतं भवइ अवियत्तस्स भिक्खुणो (सू. १५७)

ग्रसति बुद्ध्यादीन् गुणानिति ग्रामः, ग्रामादनु–पश्चादपरो ग्रामो ग्रामानुग्रामस्तं, 'दूयमानस्य' अनेकार्थत्वाद्धातूनां विरहतः एकाकिनः साधोर्यत्स्यात् तद्दर्शयति–दुष्टं यातं दुर्यातं, गमनक्रियाया गर्हा,गच्छत एवानुकूलप्रतिकूलोपसर्गसद्भावादर्हन्नकस्येव कृतगतिभेदस्य दुष्टव्यन्तरीजङ्घाच्छेदवत्, तथा दुष्टं पराक्रान्तम्–आक्रान्तं स्थानमेकाकिनो भवति, स्थूलभद्रेर्ष्याश्रितोपकोशागृहसाधोरिवेति, यदिवा चतुष्प्रोषितभर्तृकागृहोषितसाधोरिव, तस्य महासत्त्वतया अक्षोभेऽपि दुष्पराक्रान्तमेवेति, एतच्च न सर्वस्यैव दुर्यातं दुष्पराक्रान्तं च भवतीत्यतो विशिनष्टि–अव्यक्तस्य भिक्षोरिति, भिक्षणशीलो भिक्षुस्तस्य, किम्भूतस्य ?—अव्यक्तस्य, स चाव्यक्तः श्रुतवयोभ्यां स्यात्, तत्र श्रुताव्यक्तो येनाचारप्रकल्पोऽर्थतो नाधिगतो भवति गच्छगतानां, तन्निर्गतानां तु नवमपू-

र्वतृतीयवस्त्वित, वयसा चाव्यक्त आषोडशवर्षाद्गच्छगतानां तन्निर्गतानां च त्रिशत इति, अत्र चतुर्भङ्गिका, श्रुतवयोभ्यामव्यक्तस्यैकचर्या न कल्पते, संयमात्मविराधनातः इत्याद्यो भङ्गः, तथा श्रुतेनाव्यक्तो वयसा च व्यक्तः, अस्याप्येकचर्या न कल्पते, अगीतार्थत्वादुभयविराधनासद्भावादिति द्वितीयः, तथा श्रुतेन व्यक्तो वयसा चाव्यक्तः, तस्यापि न कल्पते, बालतया सर्वपरिभवास्पदत्वाद्, विशेषतः स्तेनकुलिङ्गादीनामिति तृतीयः, यस्तूभयव्यक्तः स सति कारणे प्रतिमामेकाकिविहारित्वमभ्युद्यतविहार वा प्रतिपद्यताम्, अस्यापि कारणाभावे एकचर्या नानुमता, यतस्तस्यां गुप्तीर्याभाषैषणादिविषया बहवो दोषाः प्रादुष्पन्ति, तथाहि-एकाकी पर्यटन् यदीर्यापथं शोधयति ततः श्वाद्युपयोगाद्भ्रश्यति, तदुपयुक्तश्चेन्नेर्यापथं शोधयेदित्यादिकाः शेषा अपि समितयो वाच्याः, अन्यच्च-अजीर्णेन वातादिक्षोभेण वा व्याध्युद्भवे संयमात्मविराधना प्रवचनहीलना च, तत्र यदि करुणापन्ना गृहस्थाः प्रतिजागरणं कुर्युस्तदज्ञानतया षट्कायोपमर्दनं कुर्वाणाः संयमबाधामापादयेयुः, अथ न कश्चित्तत्र तथाभूतः कर्त्तव्योद्यतः स्यात् तत आत्मविराधना, तथाऽतिसारादौ मूत्रपुरीषजम्बालान्तर्वर्त्तित्वात् प्रवचनहीलना, अपिच-ग्रामादिष्वनस्थितः सन् धिग्जात्यादिना केशलुञ्चिताद्यधिक्षेपणाधिक्षिप्तः सन् परस्परोपमर्दकारि दण्डादण्डि भण्डनं विदध्यात्, तच्च गच्छगतस्य न सम्भवति, गुर्वाद्युपदेशसम्भवात्, तदुक्तं च-"अंक्कोसहणणमारणधम्मब्भंसाण बालसुलभाणं। लाभं मण्णइ धीरो जहुत्तराणं अभावंमि ॥ १ ॥" इत्येवमादिनोपदेशेन गच्छान्तर्गतो गुरुणाऽनुशास्यते, गच्छनिर्गतस्य पुनर्दोषा एव केवला इति, उक्तं च-"साहंमिएहि सम्मुज्जएहि

१ आक्रोशहननमारणधर्मभ्रंशानां बालसुलभानाम्। लाभं मन्यते धीरः यथोत्तरमभावे ॥ १ ॥ २ साधर्मिकेषु सम्युद्यतेषु [illegible] न यो विहरेत्। [illegible] प्रचुरायां [illegible] न पतति ॥१॥

अव्यक्तस्वरूपं

५

१०

एगागिओ अ जो विहरे। आयंकपउरयाए छक्कायवहंमि आवडइ ॥१॥ एगागिअस्स दोसा इत्थी साणे तहेव पडिणीए। भिक्खऽविसोहि महव्वय तम्हा सविइज्जए गमणं ॥२॥" इत्यादि, गच्छान्तर्वर्त्तिनस्तु बहवो गुणाः, तन्निश्रया अपरस्यापि बालवृद्धादेरुद्यतविहाराभ्युपगमात्, यथा हि उदके समर्थस्तरन्नपरमपि काष्ठादि विलग्नं तारयति, एवं गच्छेऽप्युद्यतविहार्यपरं सीदन्तमुद्यमयति, तदेवमेकाकिनो दोषान् वीक्ष्य गच्छान्तर्विहारिणश्च गुणान् कारणाभावे व्यक्तेनापि नैकचर्या विधेया, कुतः पुनरव्यक्तेनेति स्थितं। ननु च सति सम्भवे प्रतिषेधो युक्तो, न चास्ति सम्भवः एकाकिविहारितायाः, को हि नाम बालिशः सहायान् विहाय समस्तापायास्पदमेकाकिविहारितामभ्युपेयादिति, अत्रोच्यते, न किञ्चिदपि कर्म्मपरिणतेरशक्यमस्ति, तथाहि—स्वातन्त्र्यगदागदकल्पस्य समस्तव्यसनप्रवाहसेतुभूतस्याशेषकल्याणनिकेतनस्य शुभाचाराधारस्य गच्छस्यान्तर्वर्त्तिनः क्वचित्प्रमादस्खलिते चोदिताः अवगणय्य सदुपदेशं अपर्यालोच्य सद्धर्मं अविचार्य कषायविपाककटुकतां अनवधार्य परमार्थं पृष्ठतः कृत्वा कुलपुत्रतां वाङ्मात्रादपि केचित्कोपनिघ्नाः सुखैषिणोऽगणितापदो गच्छान्निर्गच्छन्ति, तत्र चैहिकामुष्मिकापायानवाप्नुवन्तीति, उक्तं च—"जह सायरंमि मीणा संखोहं साअरस्स असहंता। णिंति तओ सुहकामी णिग्गयमित्ता विणस्संति ॥१॥ एवं गच्छसमुद्दे सारणवीईहिं चोइया संता। णिंति तओ सुहकामी





---

१ एकाकिनो दोषाः स्त्री श्वा तथैव प्रत्यनीकः। भिक्षाऽविशोधिः महाव्रतेषु तस्मात्सद्वितीयेन गमनम् ॥२॥ २ यथा सागरे मीनाः संक्षोभं सागरस्यासहमानाः। निर्गच्छन्ति ततः सुखकामिनो निर्गतमात्रा विनश्यन्ति ॥१॥ एवं गच्छसमुद्रे स्मारणवीचिभिर्नोदिताः सन्तः। निर्गच्छन्ति ततः सुखकामिनो मीना इव यथा विनश्यन्ति ॥२॥ गच्छे केचित् पुरुषाः शकुनयो यथा पञ्जरान्तरनिरुद्धाः। स्मारणवारणचोदिताः पार्श्वस्थतां गताः परित्यजन्ति ॥३॥ यथा द्विजपोतमजातपक्षं स्वकाद्वासकात् प्रविभ्रमन्तं मनाग्। ततस्तं तरुणमजातपत्र, ढङ्कादयोऽव्यक्तगमं हरेयुः(रन्ति)॥४॥

मीणा य जहा विणस्संति ॥२॥ गच्छंमि केइ पुरिसा सउणी जह पंजरंतरणिरुद्धा । सारणवारणचोइय पासत्थगया परिहरंति ॥३॥ जहा दियापोयमपक्खजायं, सवासया पविउमणं मणागं । तमचाइया तरुणमपत्तजायं, ढंकादि अव्वत्तगमं हरेज्जा ॥४॥" एवमजातपक्षवयःपक्षस्तीर्थिकध्वाङ्क्षादिभिर्विलुप्यते गच्छालयान्निर्गतो वाङ्मात्रेणापि चोदितः सन् इति ॥ एतद्दर्शयितुमाह—

वयसावि एगे बुइया कुप्पंति माणवा, उन्नयमाणे य नरे महया मोहेण मुज्झइ, संबाहा बहवे भुज्जो २ दुरइक्कम्मा अजाणओ अपासओ, एयं ते मा होउ, एयं कुसलस्स दंसणं, तद्दिट्ठीए तम्मुत्तीए तप्पुरक्कारे तस्सन्नी तन्निवेसणे, जयं विहारी चित्तनिवाई पंथनिज्झाई पलिबाहिरे, पासिय पाणे गच्छिज्जा (सू. १५८)

कश्चित्तपःसंयमानुष्ठानादाववसीदन्तः प्रमादस्खलिता वा गुर्वादिना धर्मेण वचसाऽपि 'एके' अपुष्टधर्माणः अनवगतपरमार्थाः 'उक्ताः' चोदिताः कुप्यन्ति, के ते ?—'मानवा' मनुजाः क्रोधवशगा भवन्ति, ब्रुवते च—कथमहमनेनेयतां साधूनां मध्ये तिरस्कृतः?, किं मया कृतम् ?, अथवाऽन्येऽप्येतत्कारिणः सन्त्येव, ममाप्येवम्भूतोऽधिकारोऽभूत् , धिग्मे जीवितमित्यादिमहामोहोदयेन क्रोधतमिस्राच्छादितदृष्टयः उज्झितसमुचिताचारा उभयान्यतरात्यक्ता मीना इव गच्छसमुद्रान्निर्गत्य विनाशमाप्नुवन्ति, यदिवा वचसाऽपि यथा क इमे लुञ्चिताः मलोपहतगात्रयष्टयः प्रगेतनावसर एवास्माभिर्द्रष्टव्या इत्यादिनोक्ता एके क्रोधान्धाः कुप्यन्ति मानवाः, आपि-

शब्दात् कायेनापि स्पृष्टाः कुप्यन्ति कुपिताश्चाधिकरणादि कुर्वन्तीत्येवमादयो दोषा अव्यक्तैकचर्यायां गुर्वादिनियामकाभावात्प्रादुःष्युरिति, गुरुसान्निध्ये चैवम्भूत उपदेशः सम्भवेत्, तद्यथा—"आक्रुष्टेन मतिमता तत्त्वार्थान्वेषणे मतिः कार्या। यदि सत्यं कः कोपः? स्यादनृतं किंनु कोपेन? ॥१॥" तथा—"अपकारिणि कोपश्चेत्, कोपे कोपः कथं न ते?। धर्मार्थकाममोक्षाणां, प्रसह्य परिपन्थिनि ॥२॥" इत्यादि, किं पुनः कारणं वचसाऽप्यभिहिता ऐहिकामुष्मिकापकारकारिणः स्वपरबाधकस्य क्रोधस्यावकाशं ददतीत्याह—उन्नतो मानोऽस्येत्युन्नतमानः, उन्नतं वाऽऽत्मानं मन्यत इति, स चैवम्भूतो 'नरो' मनुष्यो महता मोहेन—प्रबलमोहनीयोदयेन अज्ञानोदयेन वा 'मुह्यति' कार्याकार्यविचारविवेकविकलो भवति, स च मोहमोहितः केनचिच्छिक्षणार्थमभिहितो मिथ्यादृष्टिना वा वाचा तिरस्कृतो जात्यादिमदस्थानान्यतरसद्भावेनोन्नतमानमन्दराख्ढः कुप्यति, मामप्येवमयं तिरस्करोति?, धिग्मे जातिं पौरुषं विज्ञानं चेत्येवमभिमानग्रहगृहीतो वाङ्मात्रादपि गच्छान्निर्गच्छति, तन्निर्गतो वाऽधिकरणादिविडम्बनयाऽऽत्मानं विडम्बयति, अथचोन्नम्यमानः केनचित् दुर्विदग्धेनाहोऽयं महाकुलप्रसूत आकृतिमान् पटुप्रज्ञो मृष्टवाक् समस्तशास्त्रवेत्ता सुभगः सुखसेव्यो वेत्यादिना वचसा तथ्येनातथ्येन वोत्प्रास्यमान उन्नतमानो गर्वाध्मातो महता चारित्रमोहेन मुह्यति संसारमोहेन वोह्यत इति। तस्य चोन्नतमानतया महामोहेन मुह्यतो मोहाच्च शब्दमात्रेणापि कुप्यतः कोपाच्च गच्छनिर्गतस्यानभिव्यक्तस्य भिक्षोर्ग्रामानुग्राममेकाकिनः पर्यटतो यत्स्यात्तदाह—तस्याव्यक्तस्यैकचरस्य पर्यटतः सम्बाधयन्तीति सम्बाधाः—पीडाः उपसर्गजनिता नानाप्रकारातङ्कजनिता वा भूयो भूयो बह्वयः स्युः, ताश्चैकाकिनाऽव्यक्तेन निरवद्यविधिना 'दुरतिक्रमा' दुरतिलङ्घनीयाः, किम्भूतस्य दुरतिक्रमा इत्याह—तासां नानाप्रकारनिमित्तोत्थापितानां बाधानामतिसहनोपायमजानानस्य सम्यक्करणसहनफलं चापश्यतो दुरतिक्रमणीयाः पीडा भवन्ति, ततश्चायं

पीडाकुलीभूतः सन्नेषणामपि लङ्घयेत्, प्राण्युपमर्दमप्यनुमन्येत, वाकण्टकनुदितः सन्नव्यक्ततया प्रज्वलेत्,नैतद्भावयेद् यथा मत्क र्म्मविपाकापादिता एताः पीडाः,परोऽत्र केवलं निमित्तभूतः, किंच–"आत्मद्रोहममर्यादं, मूढमुज्झितसत्पथम्। सुतरामनुकम्पेत,नरकार्चिष्मदिन्धनम् ॥१॥" इत्यादिका भावना आगमापरिमलितमतेर्न भवेदिति। एतत्प्रदर्श भगवान् विनेयमाह–'एतद्' एकचर्याप्रतिपन्नस्य बाधादुरतिक्रमणीयत्वमजानानस्यापश्यतश्च 'ते' तव मदुपदेशवर्त्तिनो मा भवतु, आगमानुसारितया सदा गच्छान्तर्वर्त्ती भवेत्यर्थः। सुधर्मस्वाम्याह–'एतत्' पूर्वोक्तं तत् 'कुशलस्य' श्रीवर्द्धमानस्वामिनो 'दर्शनम्' अभिप्रायो यथाऽव्यक्तस्यैकचरस्य दोषाः सततमाचार्यसमीपवर्त्तिनश्च गुणा इति। आचार्यसमीपवर्त्तिना च किं विधेयमित्याह–तस्य–आचार्यस्य दृष्टिस्तद्दृष्टिस्तया सततं वार्त्तितव्यं हेयोपादेयार्थेषु,यदिवा तस्मिन् संयमे दृष्टिस्तद्दृष्टिः, स एव वाऽऽगमो दृष्टिस्तद्दृष्टिस्तया सर्वकार्येषु व्यवहर्त्तव्यम्, तथा तेनोक्ता सर्वसङ्गेभ्यो विरतिर्मुक्तिस्तया सदा यतितव्यम्, तथा पुरस्करणं पुरस्कारः—सर्वकार्येष्वग्रतः स्थापनं तस्य—आचार्यस्य पुरस्कारस्तत्पुरस्कारस्तस्मिन्—तद्विषये यतितव्यम्, तथा तस्य संज्ञा तत्संज्ञा–तज्ज्ञानं तद्वांस्तत्संज्ञी सर्वकार्येषु स्यात्, न स्वमतिविरचनया कार्यं विदध्यात्, तथा तस्य—गुरोर्निवेशनं—स्थानं यस्यासौ तन्निवेशनः, सदागुरुकुलवासी स्यादिति भावः। तत्र गुरुकुले निवसन् किम्भूतः स्यादित्याह—यतमानो—यतनया विहरणशीलो विहारी स्यात्, यतमानः प्राण्युपमर्दनमकुर्वन् प्रत्युपेक्षणादिकाः क्रियाः कुर्यादिति, किंच—चित्तम्–आचार्याभिप्रायस्तेन निपतितुं–क्रियायां प्रवर्त्तितुं शीलमस्येति चित्तनिपाती सदा स्यादिति, तथा गुरोः क्वचिद्गतस्य पन्थानं निध्यातुं–प्रलोकितुं शीलमस्येति पथनिध्यायी, उपलक्षणं चैतत् तेन सुषुप्सोः संस्तारकप्रलोकी बुभुक्षोराहारान्वेषीत्यादिना गुरोराराधकः सदा स्यात्, किंच–परिः–समन्तात् गुरोरवग्रहात् पुरतः पृष्ठतो वाऽवस्था

५

१०

शब्दान् कायेनापि स्पृष्टाः कुप्यन्ति कुपिताश्चाधिकरणादि कुर्वन्तीत्येवमादयो दोषा अव्यक्तैकचर्यायां गुर्वादिनियामकाभावात्प्रादुःष्युरिति, गुरुसान्निध्ये चैवम्भूत उपदेशः सम्भवेत्, तद्यथा—"आक्रुष्टेन मतिमता तत्त्वार्थान्वेषणे मतिः कार्या । यदि सत्यं कः कोपः? स्यादनृतं किंनु कोपेन? ॥१॥" तथा—"अपकारिणि कोपश्चेत्, कोपे कोपः कथं न ते? । धर्मार्थकाममोक्षाणां, प्रसह्य परिपन्थिनि ॥२॥" इत्यादि, किं पुनः कारणं वचमाऽप्यभिहिता ऐहिकामुष्मिकापकारकारिणः स्वपरबाधकस्य क्रोधस्यावकाशं ददतीत्याह—उन्नतो मानोऽस्येत्युन्नतमानः, उन्नतं वाऽऽत्मानं मन्यत इति, स चैवम्भूतो 'नरो' मनुष्यो महता मोहेन—प्रबलमोहनीयोदयेन अज्ञानोदयेन वा 'मुह्यति' कार्याकार्यविचारविवेकविकलो भवति, स च मोहमोहितः केनचिच्छिक्षणार्थमभिहितो मिथ्यादृष्टिना वा वाचा तिरस्कृतो जात्यादिमदस्थानान्यतरसद्भावनोन्नतमानमन्दरारूढः कुप्यति, मामप्येवमयं तिरस्करोतीति?, धिग्मे जातिं पौरुषं विज्ञानं चेत्येवमभिमानग्रहगृहीतो वाक्मात्रादपि गच्छान्निर्गच्छति, तन्निर्गतो वाऽधिकरणादिविडम्बनयाऽऽत्मानं विडम्बयति, अथवोन्नम्यमानः केनचित् दुर्विदग्धेनाहोऽयं महाकुलप्रसूत आकृतिमान् पटुप्रज्ञो मृष्टवाक् समस्तशास्त्रवेत्ता सुभगः सुखसेव्यो वेत्यादिना वचसा तथ्येनातथ्येन वोत्प्रास्यमान उन्नतमानो गर्वाध्मातो महता चारित्रमोहेन मुह्यति संसारमोहेन मोह्यत इति । तस्य चोन्नतमानतया महामोहेन मुह्यतो मोहाच्च वाङ्मात्रेणापि कुप्यतः कोपाच्च गच्छनिर्गतस्यानभिव्यक्तस्य भिक्षोर्ग्रामानुग्राममेकाकिनः पर्यटतो यत्स्यात्तदाह—तस्याव्यक्तस्यैकचरस्य पर्यटतः सम्बाधयन्तीति सम्बाधाः—पीडाः उपसर्गजनिता नानाप्रकारातङ्कजनिता वा भूयो भूयो बहवः स्युः, ताश्चैकाकिनाऽव्यक्तेन निरवद्यविधिना 'दुरतिक्रमा' दुरतिलङ्घनीयाः, किम्भूतस्य दुरतिक्रमा इत्याह—तासां नानाप्रकारनिमित्तोत्थापितानां बाधानामतिमहनोपायमजानानस्य सम्यकरणमहनफलं चापश्यतो दुरतिक्रमणीयाः पीडा भवन्ति, ततश्चायं



१५ गुरुदृष्टिमूर्त्यादि

२०

॥१९५॥

२८

पीडाकुलीभूतः सन्नेषणामपि लङ्घयेत्, प्राण्युपमर्दमप्यनुमन्येत, वाकण्टकनुदितः सन्नव्यक्ततया प्रज्वलेत्, नैतद्भावयेद् यथा मत्क-र्मविपाकापादिता एताः पीडाः, परोऽत्र केवलं निमित्तभूतः, किंच-"आत्मद्रोहममर्यादं, मूढमुज्झितसत्पथम्। सुतरामनुकम्प्येत, नर-कार्चिष्मदिन्धनम्॥१॥" इत्यादिका भावना आगमापरिमलितमतेर्न भवेदिति। एतत्प्रदर्श्य भगवान् विनेयमाह-'एतद्' एकचर्या-प्रतिपन्नस्य बाधादुरतिक्रमणीयत्वमजानानस्यापश्यतश्च 'ते' तव मदुपदेशवर्त्तिनो मा भवतु, आगमानुसारितया सदा गच्छान्तर्वर्त्ती भवेत्यर्थः। सुधर्मस्वाम्याह-'एतत्' पूर्वोक्तं तत् 'कुशलस्य' श्रीवर्द्धमानस्वामिनो 'दर्शनम्' अभिप्रायो यथाऽव्यक्तस्यैकचरस्य दोषाः सततमाचार्यसमीपवर्त्तिनश्च गुणा इति। आचार्यसमीपवर्त्तिना च किं विधेयमित्याह-तस्य-आचार्यस्य दृष्टिस्तद्दृष्टिस्तया सततं वर्त्ति-तव्यं हेयोपादेयार्थेषु, यदिवा तस्मिन् संयमे दृष्टिस्तद्दृष्टिः, स एव चाऽऽगमो दृष्टिस्तद्दृष्टिस्तया सर्वकार्येषु व्यवहर्त्तव्यम्, तथा तेनोक्ता सर्वसङ्गेभ्यो विरतिर्मुक्तिस्तया सदा यतितव्यम्, तथा पुरस्करणं पुरस्कारः—सर्वकार्येष्वग्रतः स्थापनं तस्य—आचार्यस्य पुरस्का-रस्तत्पुरस्कारस्तस्मिन्—तद्विषये यतितव्यम्, तथा तस्य संज्ञा तत्संज्ञा-तज्ज्ञानं तद्वांस्तत्संज्ञी सर्वकार्येषु स्यात्, न समतिविर-चनया कार्यं विदध्यात्, तथा तस्य—गुरोर्निवेशनं—स्थानं यस्यासौ तन्निवेशनः, सदागुरुकुलवासी स्यादिति भावः। तत्र गुरु-कुले निवसन् किम्भूतः स्यादित्याह—यतमानो—यतनया विहरणशीलो विहारी स्यात्, यतमानः प्राण्युपमर्दनमकुर्वन् प्रत्युपेक्ष-णादिकाः क्रियाः कुर्यादिति, किंच—चित्तम्-आचार्याभिप्रायस्तेन निपातितुं-क्रियायां प्रवर्त्तितुं शीलमस्येति चित्तनिपाती सदा स्यादिति, तथा गुरोः क्वचिद्गतस्य पन्थानं निध्यातुं-प्रलोकितुं शीलमस्येति पथनिध्यायी, उपलक्षणं चैतत् तेन सुषुप्सोः संस्ता-रकप्रलोकी बुभुक्षोराहारान्वेषीत्यादिना गुरोराराधकः सदा स्यात्, किंच-परिः-समन्तात् गुरोरवग्रहात् पुरतः पृष्ठतो वाऽवस्था-



५

१०

नान् सदा कार्यमृतेऽन्याय: स्याद्, एतस्माच्च सूत्रात्रय ईर्योद्देशका निर्गता इति। किंच–क्वचित्कार्यादौ गुर्वादिना प्रेषितः सन् दृष्ट्वा प्राणिनो युगमात्रदृष्टिस्तदुपघातं परिहरन् गच्छेत्॥ किंच—



से अभिक्कममाणे पडिक्कममाणे संकुचमाणे पसारेमाणे विणिवट्टमाणे संपलिमज्जमाणे, एगया गुणसमियस्स रीयओ कायसंफासं समणुचिन्ना एगतिया पाणा उद्दायंति, इहलोगवेयणविज्जावडियं, जं आउट्टिकयं कंमं तं परिन्नाय विवेगमेइ, एवं से अप्पमाएण विवेगं किट्टइ वेयवी (सू. १५९)



'स' भिक्षुः सदा गुर्वादेशविधायी एतद्व्यापारवान् भवति, तद्यथा–अभिक्रामन्–गच्छन् प्रतिक्रामन्–निवर्त्तमानः सङ्कुचन् हस्तपादादिसङ्कोचनतः प्रसारयन् हस्तादीनवयवान् विनिवर्त्तमानः समस्ताशुभव्यापारात्, सम्यक् परिः–समन्ताद्धस्तपादादीनवयवांस्तन्निक्षेपस्थानानि वा रजोहरणादिना मृजन्–परिमृजन्, गुरुकुलवासे वसेदिति सर्वत्र सम्बन्धनीयं, तत्र निविष्टस्य विधिः–भूम्यामेकमूरुं व्यवस्थाप्य द्वितीयमुत्क्षिप्य तिष्ठेत्, निश्चलस्थानासहिष्णुतया भूमौ प्रत्युपेक्ष्य प्रमार्ज्य च कुक्कुटीविजृम्भितदृष्टान्तेन सङ्कोचयेत् प्रसारयेद्वा, स्वपन्नपि मयूरवत्स्वपिति, स किलान्यसत्त्वभयादेकपार्श्वशायी सचेतनश्च स्वपिति, निरीक्ष्य च परिवर्त्तनादिकाः क्रिया विधत्ते, इत्येवमादि संपरिमृजन् सर्वाः क्रियाः करोति। एवं चाप्रमत्ततया पूर्वोक्ताः क्रियाः कुर्वतोऽपि कदाचिदवश्यंभावितया यत्स्यात्तदाह–'एकदा' कदाचित्, 'गुणसमितस्य' गुणयुक्तस्याप्रमत्ततया यतेः 'रीयमाणस्य' सम्यगुत्थानवतोऽभिक्रामतः

परिक्रामतः सङ्कुचतः प्रसारयतो विनिवर्त्तमानस्य संपरिमृजतः कस्याञ्चिदवस्थायां कायः—शरीरं तत्संस्पर्शमनुचीर्णाः—कायसङ्गमागता सम्पातिमादयः प्राणिनः एके परितापमाप्नुवन्ति एके ग्लानतामुपयान्ति एकेऽवयवविध्वंसमापद्यन्ते, अपश्चिमावस्थां तु सूत्रेणैव दर्शयति—एके 'प्राणाः' प्राणिनः 'अपद्रान्ति' प्राणैर्विमुच्यन्ते, अत्र च कर्म्मबन्धं प्रति विचित्रता, तथाहि—शैलेश्यवस्थायां मशकादीनां कायसंस्पर्शेन प्राणत्यागेऽपि बन्धोपादानकारणयोगाभावान्नास्ति बन्धः, उपशान्तक्षीणमोहसयोगिकेवलिनां स्थितिनिमित्तकषायाभावात् सामयिकः, अप्रमत्तयतेर्जघन्यतोऽन्तर्मुहूर्त्तमुत्कृष्टतश्चान्तःकोटीकोटीस्थितिरिति, प्रमत्तस्य त्वनाकुट्टिकयाऽनुपेत्यप्रवृत्तस्य क्वचित्पाण्याद्यवयवसंस्पर्शात् प्राण्युपतापनादौ जघन्यतः कर्म्मबन्ध उत्कृष्टतश्च प्राक्तन एव विशेषिततरः। स च तेनैव भवेन क्षिप्यत इति सूत्रेणैव दर्शयितुमाह—इह—अस्मिन् लोके—जन्मनि वेदनम्—अनुभवनमिहलोकवेदनं तेन वेद्यम्—अनुभवनीयमिहलोकवेदनवेद्यं तत्रापतितमिहलोकवेदनवेद्यापतितं, इदमुक्तं भवति—प्रमत्तयतिनाऽपि यदकामतः कृतं कर्म्म कायसङ्घट्टनादिना तदैहिकभवानुबन्धि, तेनैव भवेन क्षप्यमाणत्वाद्, आकुट्टीकृतकर्मणि तु यद्विधेयं तदाह—यत्तु पुनः कर्म्माकुट्टया कृतम्—आगमोक्तकारणमन्तरेणोपेत्य प्राण्युपमर्देन विहितं तत्परिज्ञाय ज्ञपरिज्ञया 'विवेकमेति' विविच्यतेऽनेनेति विवेकः—प्रायश्चित्तं दशविधं तस्यान्यतरं भेदमुपैति, तद्विवेकं वा—अभावाख्यमुपैति, तत्करोति येन कर्म्मणोऽभावो भवति। यथा च कर्म्मणो विवेको भवति तथा दर्शयितुमाह—'एव'मिति वक्ष्यमाणेन प्रकारेण 'से' तस्य कर्म्मणः साम्परायिकस्य सदा वेदविद् 'अप्रमादेन' प्रमादाभावेन दशविधप्रायश्चित्तान्यतरभेदसम्यगनुष्ठानेन 'विवेकम्' अभावं कीर्त्तयति 'वेदवित्' तीर्थकरो वेदविद्वा—आगमविद्गणधरश्चतुर्दशपूर्वविद्वेति ॥ किम्भूतः पुनरप्रमादवान् भवतीत्याह—



५

१०

से पभूयदंसी पभूयपरिन्नाणे उवसंते समिए सहिए सयाजए, दट्ठुं विप्पडिवेएइ अप्पाणं, किमेस जणो करिस्सइ ?, एस से परमारामो जाओ लोगंमि इत्थीओ, मुणिणा हु एयं पवेइयं, उब्बाहिज्जमाणे गामधम्मेहिं अवि निब्बलासए अवि ओमोयरियं कुज्जा अवि उड्ढं ठाणं ठाइज्जा अवि गामाणुगामं दूइज्जिज्जा अवि आहारं वुच्छिंदिज्जा अवि चए इत्थीसु मणं, पुव्वं दंडा पच्छा फासा पुव्वं फासा पच्छा दंडा, इच्चेए कलहासंगकरा भवंति, पडिलेहाए आगमित्ता आणविज्जा अणासेवणाएत्तिबेमि, से नो काहिए नो पासणिए नो मामए णो कयकिरिए वइगुत्ते अज्झप्पसंवुडे परिवज्जइ सया पावं एयं मोणं समणुवासिज्जासित्तिबेमि (सू. १६०) ॥ ५-४ ॥ लोकसारे चतुर्थः ॥

१५ ग्रामधर्मबाधाऽपनयनं

'स' साधुः प्रभूतं प्रमादविपाकादिकमतीतानागतवर्त्तमानं वा कर्म्मविपाकं द्रष्टुं शीलमस्येति प्रभूतदर्शी, साम्प्रतेक्षितया न यत्किञ्चिनकारीत्यर्थः, तथा प्रभूतं सत्त्वरक्षणोपायपरिज्ञानं संसारमोक्षकारणपरिज्ञानं वा यस्य स प्रभूतपरिज्ञानः, यथावस्थितसंसारस्वरूपदर्शीत्यर्थः, किं च—उपशान्तः कषायानुदयादिन्द्रियनोइन्द्रियोपशमाद्वा, तथा पञ्चभिः समितिभिः समितः सम्यग्वा

मोक्षमार्गमितः समितः, तथा ज्ञानादिभिः सहितः-समन्वितः सह हितेन वा सहितः, 'सदा' सर्वकालं यतः सदायतः, स एवम्भूतोऽप्रमत्तो गुरोरन्तिकमावसन् प्रमादजनितस्य कर्म्मणोऽन्तं विधत्ते । स च क्वाद्यनुकूलपरीषहोपपत्तौ किं विदध्यादित्याह— 'दृष्ट्वा' अवलोक्य स्त्रीजनमुपसर्गकरणायोद्यतमात्मानं 'विप्रतिवेदयति' पर्यालोचयति, तद्यथा-सम्यग्दृष्टिरसि, तथोत्क्षिप्तमहाव्रतभारः शरच्छशाङ्कनिर्म्मलकुललब्धजन्मा अकार्याकरणतयोत्थित इत्येवमात्मानं पर्यालोचयति, तं च स्त्रीजनं किमेष स्त्रीजनो मम त्यक्तजीविताशस्योज्झितैहिकसुखाभिलाषस्योपसर्गादिकं कुर्यात् ?, अथवा वैषयिकसुखस्य दुःखप्रतीकाररूपत्वात् किमेष स्त्रीजनः सुखं विदध्याद् ? अयो वा पुत्रकलत्रादिको जनो मम मृत्युना जिघृक्षितस्य व्याधिना वाऽऽदित्सितस्य किं तत्प्रतीकारादिकं कुर्यादिति ? । यदिवैवं स्त्रीजनस्वभावं चिन्तयेदिति सूत्रेणैव दर्शयति-स एष स्त्रीजन आरमयतीत्यारामः परमश्चासावारामश्च परमारामः, ज्ञाततत्त्वमपि जनं हावविलासोपाङ्गनिरीक्षणादिभिर्बिब्बोकैर्मोहयतीत्यर्थः, याः काश्चनास्मिन् लोके स्त्रियः ता मोहरूपा विज्ञाय यावन्न परित्यजन्ति तावत्स्वत एव परित्यजेत् । एतच्च तीर्थकरेण प्रवेदितमिति दर्शयितुमाह-'मुनिना' श्रीवर्द्धमानस्वामिनोत्पन्नज्ञानेनैव 'एतत्' पूर्वोक्तं, यथा स्त्रियो भावबन्धनरूपाः, 'प्रवेदितं' प्रकर्षेणादौ वा व्याख्यातमिति । एतच्च वक्ष्यमाणं प्रवेदितमित्याह-उत्-प्राबल्येन मोहोदयाद् बाध्यमानः-पीड्यमानः उद्बाध्यमानः, कैः ?-ग्रामधर्म्मैः ग्रामाः-इन्द्रियग्रामास्तेषां धर्म्माः— स्वभावा यथास्वं विषयेषु प्रवर्त्तनं तैरुद्बाध्यमानो गच्छान्तर्गतः सन् गुर्वादिनाऽनुशास्यते, कथमनुशास्यत इत्यत आह-अपि सम्भावनायां, निर्बलं-निःसारमन्तप्रान्तादिकं यद्द्रव्यं तदाशकः-तद्भोजी स्यात्, यदिवा निर्गतं बलं-सामर्थ्यमस्येति निर्बलः एवम्भूतः सन्नाशीत, बलाभावे च ग्रामधर्म्मोपशमदर्शनाद्, बलाभावश्चाहारहान्या स्यादिति दर्शयति-अप्यवमौदर्यं कुर्याद्, यदि वान्तप्रान्ता-

५

१०

ग्रिनोऽपि न मोहोपशमः स्यात् ततस्तदपि वल्लचनकादि न द्वात्रिंशत्कवलमात्रं गृह्णीयात्, तेनाप्यनुपशमे कायोत्सर्गादिना कायक्लेशं कुर्यादित्येतद्दर्शयति-अप्यूर्ध्वं स्थानं तिष्ठेत्, शीतोष्णादौ कायोत्सर्गेणातापनां कुर्यात्, तेनाप्यनुपशमे ग्रामानुग्राममपि विहरेत्, निष्कारणे विहारो निषिद्धो मोहोपशमनार्थं तु कुर्यात्, किं बहुना?, येन येनोपायेन विषयेच्छा निवर्तते तत्तत्कुर्यात्, पर्यन्ते आहारमपि व्यवच्छिन्द्यात्, अपि पातं विदध्यात्, अप्युद्बन्धनं कुर्यात्, न च स्त्रीषु मनः कुर्यादिति, आह च-अपिः समुच्चये, स्त्रीषु यन्मनः प्रवृत्तं तत् परित्यजेत्, तत्परित्यागे हि कामा द्विरूपा अपि दूरत एव परित्यक्ता भवन्तीति, उक्तं च-"काम! जानामि ते रूपं, संकल्पात्किल जायसे। न त्वां संकल्पयिष्यामि, ततो मे न भविष्यसि ॥१॥" किं पुनः कारणं स्त्रीषु मनो न विधेयमित्याह-स्त्रीसङ्गप्रवृत्तानामपरमार्थदृशां 'पूर्वं' प्रथममेव तत्सङ्गाविच्छेदार्थमर्थोपार्जनप्रवृत्तस्य कृषिवाणिज्यादिक्रियाः कुर्वतोऽगणितक्षुत्पिपासाशीतोष्णादिपरीषहस्यैहिकदुःखरूपा दण्डाः, ते च स्त्रीसम्भोगात्प्रथममेव क्रियन्त इति पूर्वमित्युक्तं, पश्चाच्च विषयनिमित्तजनितकर्मविपाकापादितनरकादिदुःखविशेषाः स्पर्शा भवन्ति, यदिवा स्त्र्याद्यकार्यप्रवृत्तस्य पूर्वं दण्डपाताः पश्चाद्धस्तपादच्छेदादिकाः स्पर्शा भवन्ति, यदिवा पूर्वं स्पर्शाः पश्चाद्दण्डपाता इति, अथवा पूर्वं दण्डाः-ताडनादिकाः पश्चात्स्पर्शाः-सम्बाधनालिङ्गनचुम्बनादिकाः, तद्यथा-स्वस्थानीतास्कन्दराजकुमारीगवाक्षक्षिप्तपत्रदातीलग्रहणाद्राजपुरुषावलोकनताडनेन मूर्च्छितराजकुमारीतद्दर्शनतो वणिगिन्द्रदत्तस्याग्रतो दण्डाः पश्चात्स्पर्शा इति, पूर्वं वा सुखादिस्पर्शाः पश्चाद्दण्डा ललिताङ्गकस्येवान्येषां चोपपतीनामिति। किं च-इत्येते स्त्रीसम्बन्धाः कलहः-सद्भावस्तथासङ्गः-संबन्धस्तत्करा भवन्ति, यदिवा कलहः-क्रोधः आसङ्गो-राग इत्यतो रागद्वेषकारिणो भवन्ति, यद्येवं ततः किं कुर्यादित्याह-ऐहिकामुष्मिकापायतः स्त्रीसङ्गप्रत्युपेक्षया 'आगमेन'त्ति ज्ञात्वा आज्ञापयेदात्मानमनासेवन-

ग्रामधर्म-
बाधाऽपनयनं

येति, इतिरधिकारपरिसमाप्तौ, ब्रवीम्यहं तीर्थकरवचनानुसारेण–दुःखं च ताः परिहर्तुमिति। पुनरपि तत्परिहरणोपायमाह–'म' स्त्रीसङ्गपरित्यागी स्त्रीनेपथ्यकथां शृङ्गारकथां वा नो कुर्यात्, एवं च तास्त्यक्ता भवन्ति, तथा तासां नरकवीथीनां स्वर्गापवर्ग-मार्गार्गलानामङ्गप्रत्यङ्गादिकं न पश्येत्, यतस्तन्निरीक्ष्यमाणं महतेऽनर्थाय भवतीति, उक्तं च–"सन्मार्गे तावदास्ते प्रभवति पुरु-षस्तावदेवेन्द्रियाणां, लज्जां तावद्विधत्ते विनयमपि समालम्बते तावदेव। भ्रूचापाकृष्टमुक्ताः श्रवणपथजुषो नीलपक्ष्माण एते, याव-ल्लीलावतीनां न हृदि धृतिमुषो दृष्टिबाणाः पतन्ति ॥१॥" तथा–ताभिर्नरकविस्रम्भभूमिभिः सार्द्धं न सम्प्रसारणं–पर्यालोचनमे-कान्ते निजस्वसादिभिरपि कुर्यादिति, उक्तं च–"मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो भवेत्। बलवानिन्द्रियग्रामः, पण्डि-तोऽप्यत्र मुह्यति ॥१॥" इत्येवमादि, तथा न तासु स्वार्थपरासु ममत्वं कुर्यात्, तथा कृता–अनुष्ठिता तदुपकारिणी मण्डनादिका क्रिया येन स कृतक्रिय इत्येवम्भूतो न भूयात्, न स्त्रीणां वैयावृत्त्यं कुर्यात्, काययोगनिरोध इति भावः, तथा तथैताः शुभानु-ष्ठानपरिपन्थिनीर्न वाङ्मात्रेणाप्यालपेदिति वाग्योगनिरोधः, तथा आत्मन्यधि अध्यात्मं–मनस्तेन संवृत्तोऽध्यात्मसंवृत्तः–स्त्रीमो-गादत्तमनाः सूत्रार्थोपयुक्तनिरुद्धमनोयोगः, एवम्भूतश्च किमपरं कुर्यादित्याह–परिः–समन्तात् वर्जयेत्–परिहरेत् 'सदा' सर्वकालं 'पापं' किल्बिषं तदुपादानं वा कर्म, उपसंहरणार्थमाह–'एतद्' यदुद्देशकादेरारभ्योक्तं, मुनेरिदं मौनं मुनिभावो वा तदात्मनि सम-नुवासयेः–आत्मनि विदध्याः ॥ इतिरधिकारपरिसमाप्तौ, ब्रवीमीति पूर्ववत्। लोकसाराध्ययने चतुर्थोद्देशकः परिसमाप्तः ॥



५

१०

---

श्लोक० ५ उद्दे०

उक्तश्चतुर्थोद्देशकः, साम्प्रतं पञ्चम आरभ्यते, अस्य चायमभिसम्बन्धः—इहानन्तरोद्देशकेऽव्यक्तस्यैकचरस्य प्रत्यपायाः प्रदर्शिताः, अतस्तान् परिजिहीर्षुणा सदाऽऽचार्यसेविना भवितव्यम्, आचार्येण च ह्रदोपमेन भाव्यं, तदन्तेवासिना च तपःसंयमगुप्तेन निःसङ्गेन च विहर्त्तव्यमिति, एतत्प्रतिपादनसम्बन्धेनायातस्यास्योद्देशकस्यादिसूत्रम्—

**से बेमि तंजहा—अवि हरए पडिपुण्णे समंसि भोमे चिट्ठइ उवसंतरए सारक्खमाणे, से चिट्ठइ सोयमज्झगए से पास सव्वओ गुत्ते, पास लोए महेसिणो जे य पन्नाणमंता पबुद्धा आरम्भोवरया सम्ममेयंति पासह, कालस्स कंखाए परिव्वयंतित्तिबेमि ( सू. १६१)**

सेशब्दस्तच्छब्दार्थे, यद्गुण आचार्यो भवति तदहं तीर्थकरोपदेशानुसारेण ब्रवीमीति, तद्यथेति वाक्योपन्यासार्थे, अपिशब्दो भङ्गसमुच्चयार्थः, ते चामी भङ्गाः—एको ह्रदो—जलाशयः परिगलत्स्रोताः पर्यागलत्स्रोताश्च, सीतासीतोदाप्रवाहह्रदवत्, अपरस्तु परिगलत्स्रोताः नो पर्यागलत्स्रोताः, पद्मह्रदवत्, तथा परो नो परिगलत्स्रोताः पर्यागलत्स्रोताश्च, लवणोदधिवत्, अपरस्तु नो परिगलत्स्रोता नो पर्यागलत्स्रोताश्च, मनुष्यलोकाद्बहिः समुद्रवत् । तत्राचार्यः श्रुतमङ्गीकृत्य प्रथमभङ्गपतितः, श्रुतस्य दानग्रहणसद्भावात्, साम्परायिककर्मापेक्षया तु द्वितीयभङ्गपतितः, कषायोदयाभावेन ग्रहणाभावात्तपःकायोत्सर्गादिना क्षपणोपपत्तेश्चेति, आलोचनामङ्गीकृत्य तृतीयभङ्गपतितः, आलोचनाया अप्रतिश्राविल्वात्, कुमार्गं प्रति चतुर्थभङ्गपतितः, कुमार्गस्य हि प्रवेशनिर्गमाभावात्, यदिवा धर्मभेदेन भङ्गा योज्यन्ते—तत्र स्थविरकल्पिकाचार्याः प्रथमभङ्गपतिताः, द्वितीयभङ्गपतितस्तीर्थकृत्, तृती-

ह्रदोपमा

१५

२०

॥१९९॥

२५

यभङ्गस्थस्तथाहालन्दिकः, स च क्वचिदर्थापरिसमाप्तावाचार्यादेर्निर्णयसद्भावात् , प्रत्येकबुद्धास्तूभयाभावाच्चतुर्थभङ्गस्था इति, इह पुनः प्रथमभङ्गपतितेनोभयसद्भाविनाऽधिकारः, तथाभूतस्यैवायं ह्रदृष्टान्तः, स च ह्रदो निर्म्मलजलस्य 'प्रतिपूर्णो' जलजैः सर्वर्तुजैरुपशोभितः समे भूभागे निर्यमाणोदकनिर्गमप्रवेशो नित्यमेव तिष्ठति, न कदाचिच्छोषमुपयाति, सुखोत्तारावतारसमन्वितः, उपशान्तम्- अपगतं रजः कालुष्यापादकं यस्य स तथा, नानाविधांश्च यादसां गणान् संरक्षन् सह वा यादोगणैरात्मानमारक्षन्-प्रतिपालयन् संरक्षन्, तिष्ठतीत्येषा क्रिया प्रकृतैव। यथा चासौ ह्रदस्तथाऽऽचार्योऽपीति दर्शयति 'स' आचार्यः प्रथमभङ्गपतितः पञ्चविधाचारसमन्वितोऽष्टविधाचार्यसम्पदुपेतः, [ तद्यथा—"आयार सुअ सरीरे वयणे वायण मई पओगमई। एए सुसंपया खलु अट्ठमिआ सङ्गहपरिन्ना ॥१॥" ] षट्त्रिंशद्गुणगणाधारो ह्रदकल्पो निर्म्मलज्ञानप्रतिपूर्णः समे भूभाग इति संसक्तादिदोषरहिते सुखविहारे क्षेत्रे समो वा ज्ञानदर्शनचारित्राख्यो मोक्षमार्गः उपशमवता तत्र तिष्ठति-समध्यास्ते, किंभूतः?-'उपशान्तरजा' उपशान्तमोहनीय इति, किं कुर्वन्? जीवनिकायान् रक्षन् स्वतः परतश्च सदुपदेशदानतो नरकादिपाताद्वेति, 'स्रोतोमध्यगत' इत्यनेन प्रथमभङ्गपतितं स्थविराचार्यमाह, तस्य हि श्रुतार्थदानग्रहणसद्भावात् स्रोतोमध्यगतत्वम्, स च किम्भूतः स्यादित्याह-'सः' आचार्योऽक्षोभ्यह्रदकल्पः 'सर्वतः' सर्वप्रकारतयेन्द्रियनोइन्द्रियरूपया गुप्त्या गुप्त इत्येतत्पश्य, आचार्यव्यतिरेकेणान्येऽप्येवम्भूता बहवः साधवः सम्भवन्तीत्येतन्निर्दिदिक्षुराह-इह मनुष्यलोके पूर्वव्यावर्णितस्वरूपाः 'महर्षयो' महामुनयः सन्ति इत्येतत्पश्य, किम्भूतास्ते मह-





१ उदकार्द्रे करो यावता कालेन शुष्यति तज्जघन्यं लन्द, तत आरभ्योत्कृष्ट पञ्चरात्रिंदिवलक्षण लन्द तदत्र ग्राह्यम् उत्कृष्टलन्दस्यानतिक्रमेण चरन्तीति यथालन्दिका, पञ्चको गणोऽमुं कल्पं प्रतिपद्यते, मासकल्पक्षेत्रं च गृहपङ्क्तिभिः षड्भिर्वीथीर्जिनकल्पिकवत्परिकल्पयन्ति २ पर्यायतः स्रोतोवदर्थापेक्षया ग्राहकत्वात् द्वतीयभङ्गपतित इति गम्यम् ३ आचार श्रुत शरीर वचन वाचना मति प्रयोगमति। एता सुसंपद् खलु अष्टमी सङ्ग्रहपरिज्ञा ॥१॥

१० पंचाशक, ५ उ०

पंप इत्यत आह–न केवलमाचार्या ह्रदकल्पा ये चान्ये साधवस्तेऽपि ह्रदकल्पाः, किम्भूताः ?–प्रकर्षेण ज्ञायतेऽनेनेति प्रज्ञानं–स्वपरावभागकृतादागमस्तद्वन्तः प्रज्ञानवन्तः आगमस्य वेत्तार इत्यर्थः, तज्ज्ञा अपि मोहोदयात् क्वचिद्धेतूदाहरणासम्भवे ज्ञेयगहनतया संशयानाः न सम्यक् श्रद्धानं विदध्युरित्यतो विशिनष्टि–'प्रबुद्धाः' प्रकर्षेण यथैव तीर्थकृदाह तथैवावगततत्त्वाः प्रबुद्धाः, तथाभूता अपि कर्मगुरुत्वान्न सावद्यानुष्ठानविरतिं कुर्युरित्यतो विशेषयति–'आरम्भोपरताः' आरम्भः–सावद्यो योगस्तस्मादुपरता आरम्भोपरताः, एतच्च न मदुपरोधेन ग्राह्यम्, अपि तु स्वत एव कुशाग्रीयया बुद्ध्या विचार्यमित्याह–एतद्यन्मया प्रोक्तं तत्सम्यग् मध्यस्था भूत्वा समर्यादं यूयमपि पश्यत। अपि चैतत्पश्यत—'कालः' समाधिकालस्तदभिकाङ्क्षया साधवो मोक्षाध्वनि संयमे परि—समन्ताद्व्रजन्ति परिव्रजन्ति—उद्यच्छन्ति, इतिरधिकारपरिसमाप्तौ, ब्रवीमीत्येतत्प्रकरणोद्देशकाध्ययनश्रुतस्कन्धाङ्गपरिसमाप्तौ प्रयुज्यते, तदिहाधिकारपरिसमाप्तौ द्रष्टव्यमिति ॥ आचार्याधिकारं परिसमाप्य विनेयवक्तव्यतामाह—

**वितिगिच्छसमावन्नेणं अप्पाणेणं नो लहइ समाहिं, सिया वेगे अणुगच्छंति असिता वेगे अनुगच्छंति, अणुगच्छमाणेहिं अणणुगच्छमाणे कहं न निव्विज्जे ? (सू० १६२)**

विचिकित्सा या चित्तविप्लुतिः यथा इदमप्यस्तीत्येवमाकारा युक्त्या समुपपन्नेऽप्यर्थे मतिविभ्रमो मोहोदयाद्भवति, तथाहि–अस्य महतस्तपःक्लेशस्य सिकताकणकवलनिःस्वादस्य स्यात् सफलता न वेति ? कृषीवलादिक्रियाया उभयथाऽप्युपलब्धेरिति, इयं च मतिर्मिथ्यात्वांशानुवेधाद्भवति ज्ञेयगहनत्वाच्च, तथाहि–अर्थस्त्रिविधः–सुखाधिगमो दुरधिगमोऽनधिगमश्च श्रोतारं प्रति भिद्यते, तत्र सुखाधिगमो यथा चक्षुष्मतश्चित्रकर्मनिपुणस्य रूपसिद्धिः, दुरधिगमस्त्वनिपुणस्य, अनधिगमस्त्वन्धस्य, तत्रानधिगमरूपोऽवस्त्वेव,

विचिकित्सा १५ उपनयः

२०

॥२००॥

२६

सुखाधिगमस्तु विचिकित्साया विषय एव न भवति, देशकालस्वभावविप्रकृष्टस्तु विचिकित्सागोचरीभवति, तस्मिन् धर्माधर्माकाशादौ या विचिकित्सेति, यदिवा 'विइगिच्छ'त्ति विद्वज्जुगुप्सा, विद्वांसः-साधवो विदितसंसारस्वभावाः परित्यक्तसमस्तसङ्गास्तेषां जुगुप्सा-निन्दा, अस्नानात् प्रस्वेदजलक्लिन्नमलत्वाद्दुर्गन्धिवपुषस्तान्निन्दति-को दोषः स्याद्यदि प्रासुकेन वारिणाऽङ्गक्षालनं कुर्वीरन्नित्यादि जुगुप्सा तां विचिकित्सां विद्वज्जुगुप्सां वा सम्यगापन्नः-प्राप्तः आत्मा यस्य स तथा तेन विचिकित्सासमापन्नेनात्मना नोपलभते 'समाधिं' चित्तस्वास्थ्यं, ज्ञानदर्शनचारित्रात्मको वा समाधिस्तं न लभते, विचिकित्साकलुषितान्तःकरणो हि कथयतोऽप्याचार्यस्य सम्यक्त्वाख्यां बोधिं नावाप्नोति । यश्चावाप्नोति स गृहस्थो वा स्याद् यतिर्वेति दर्शयितुमाह-'सिताः' पुत्रकलत्रादिभिरवबद्धाः, वाशब्द उत्तरापेक्षया पक्षान्तरमाह, 'एके' लघुकर्म्माणः सम्यक्त्वं प्रतिपादयन्तमाचार्यमनुगच्छन्ति-आचार्योक्तं प्रतिपद्यन्ते, तथा 'असिता वा' गृहवासविमुक्ता वा 'एके' विचिकित्सादिरहिता आचार्यमार्गमनुगच्छन्ति। तेषां च मध्ये यदि कश्चित् कङ्कटुकदेश्यः स्यात् स तान् प्रभूताननपाचीनमार्गप्रतिपन्नानवलोक्यासावपि कर्मविवरतः प्रतिपद्येतापीति दर्शयितुमाह-आचार्योक्तं सम्यक्त्वमनुगच्छद्भिर्विरतैर्विरताविरतैः सह संवसंस्तैर्वा चोद्यमानोऽननुगच्छन्-अप्रतिपद्यमानः कथं न निर्वेदं गच्छेद्?, असदनुष्ठानस्य मिथ्यात्वादिरूपां विचिकित्सां परित्यज्याचार्योक्तं सम्यक्त्वमेव प्रतिपद्येतेत्यर्थः, यदिवा सितासितैराचार्योक्तमनुगच्छद्भिः-अवगच्छद्भिर्बुध्यमानैः सद्भिः कश्चिदज्ञानोदयान्मतिजाड्यतया क्षपकादिश्चिरप्रव्रजितोऽप्यननुगच्छन्-अनवधारयन् कथं न निर्विद्येत?, स निर्वेदं तपःसंयमयोर्गच्छेत्, निर्विण्णश्चेदमपि भावयेत्, यथा-नाहं भव्यः स्यां, न च मे संयतभावोऽप्यस्तीति, यतः स्फुटविकटमपि कथितं नावगच्छामि, एवं च निर्विण्णस्याचार्याः समाधिमाहुः-यथा-भोः साधो! मा विषादमवलम्बिष्ठाः, भव्यो भवान्,

विचिकित्सात्यागः

५

१०

यतो भवता सम्यक्त्वमभ्युपगतं, तच्च न ग्रन्थिभेदमृते, तद्भेदश्च न भव्यत्वमृते, अभव्यस्य हि भव्याभव्यशङ्काया अभावादिति भावः ॥ किंच—अयं विरतिपरिणामो द्वादशकषायक्षयोपशमाद्यन्यतमसद्भावे सति भवति, स च भवताऽवाप्तः, तदेवं दर्शनचारित्रमोहनीये भवतः क्षयोपशमं समागते, दर्शनचारित्रान्यथानुपपत्तेः, यत्पुनः कथ्यमानेऽपि समस्तपदार्थावगतिर्न भवति तज्ज्ञानावरणीयविजृम्भितं, तत्र च श्रद्धानरूपं सम्यक्त्वमालम्बनमित्याह—



## तमेव सच्चं नीसंकं जं जिणेहिं पवेइयं (सू. १६३)



यत्र कश्चित् स्वसमयपरसमयज्ञाचार्याभावात् सूक्ष्मव्यवहितातीन्द्रियपदार्थेषूभयसिद्धदृष्टान्तसम्यग्हेत्वभावाच्च ज्ञानावरणीयोदयेन सम्यग्ज्ञानाभावेऽपि शङ्काविचिकित्सादिरहित इदं भावयेत्, यथा—तदेवैकं सत्यम्—अवितथं, 'निःशङ्क'मिति, अर्हदुक्तेष्वत्यन्तसूक्ष्मेष्वतीन्द्रियेषु केवलागमग्राह्येष्वर्थेष्वेवं स्यात्? एवं वा? इत्येवमाकारा संशीतिः शङ्का निर्गता शङ्का यस्मिन् प्रवेदने तन्निःशङ्कं, यत्किमपि धर्माधर्माकाशपुद्गलादि प्रवेदितं, कैः?—'जिनैः' तीर्थकरै रागद्वेषजयनशीलैः, तत्तथ्यमेवेत्येवम्भूतं श्रद्धानं विधेयं, सम्यक्पदार्थानवगमेऽपि न पुनर्विचिकित्सा कार्येति। किं यतैरपि विचिकित्सा स्याद्येनेदमभिधीयते?, संसारान्तर्वर्त्तिनो मोहोदयात्तत्किं यन्न स्यादिति, तथा चागमः—"अत्थि णं भंते! समणावि निग्गंथा कंखामोहणिज्जं कम्मं वेदेंति?, हंता अत्थि, कहन्नं समणावि



१ अस्ति भदन्त! श्रमणा अपि निर्ग्रन्थाः काङ्क्षामोहनीयं कर्म वेदयन्ति?, हन्त अस्ति, कथं श्रमणा अपि निर्ग्रन्थाः काङ्क्षामोहनीयं कर्म वेदयन्ति?, गौतम! तेषु तेषु ज्ञानान्तरेषु चारित्रान्तरेषु० शङ्किताः काङ्क्षिता विचिकित्सामापन्नाः भेदमापन्नाः कालुष्यमापन्नाः, एवं खलु गौतम! श्रमणा अपि निर्ग्रन्थाः काङ्क्षामोहनीयं कर्म वेदयन्ति, तत्रालम्बनं 'तदेव सत्यं निःशङ्कं यज्जिनैः प्रवेदितम्'। अथ नूनं भदन्त! एवं मनो धारयन् आज्ञाया आराधको भवति?, हन्त गौतम! एवं मनो धारयन् आज्ञाया आराधको भवति.

णिग्गंथा कंखामोहणिज्जं कम्मं वेयंति ?, गोअमा ! तेसु तेसु नाणन्तरेसु चरित्तंतरेसु २ संकिया कंखिया विइगिच्छासमावन्ना भेयसमावन्ना कलुससमावन्ना, एवं खलु गोयमा ! समणावि निग्गंथा कंखामोहणिज्जं कम्मं वेदंति, तत्थालंबणं 'तमेव सच्चं णीसंकं जं जिणेहिं पवेइयं,' से णूणं भंते ! एवं मणं धारेमाणे आणाए आराहए भवति ?, हंता गोअमा ! एवं मणं धारेमाणे आणाए आराहए भवति" किंचान्यत् ?—"वीतरागा हि सर्वज्ञा, मिथ्या न ब्रुवते क्वचित् । यस्मात्तस्माद्वचस्तेषां, तथ्यं भूतार्थदर्शनम् ॥१॥" इत्यादि ॥ सा पुनर्विचिकित्सा प्रविव्रजिषोर्भवत्यागमापरिकर्म्मितमतेः, तत्राप्येतत्पूर्वोक्तं भावयितव्यमित्याह—

सड्ढिस्स णं समणुन्नस्स संपव्वयमाणस्स समियंति मन्नमाणस्स एगया समिया होइ १, समियंति मन्नमाणस्स एगया असमिया होइ २, असमियंति मन्नमाणस्स एगया समिया होइ ३, असमियंति मन्नमाणस्स एगया असमिया होइ ४, समियंति मन्नमाणस्स समिया वा असमिया वा समिआ होइ उवेहाए ५, असमियंति मन्नमाणस्स समिया वा असमिया वा असमिया होइ उवेहाए ६, उवेहमाणो अणुवेहमाणं बूया—उवेहाहि समियाए, इच्चेवं तत्थ संधी झोसिओ भवइ, से उट्ठियस्स ठियस्स गइं समणुपासह, इत्थवि बालभावे अप्पाणं नो उवदंसिज्जा (सू. १६४)



५

१०

श्रद्धा-धर्म्मेच्छा सा विद्यते यस्यासौ श्रद्धावांस्तस्य 'समनुज्ञस्य' संविग्नविहारिभिर्भावितस्य संविग्नादिभिर्वा गुणैः प्रव्रज्यार्हस्य 'संप्रव्रजतः' सम्यक्प्रव्रज्यामभ्युपगच्छतो विचिकित्सा-शङ्का भवेत्, तत्रैतस्य सम्यग्जीवादिपदार्थावधारणाशक्तस्येदमुपदेष्टव्यम्, यथा-तदेव सत्यं निःशङ्कं यज्जिनैः प्रवेदितमिति, तदेवं प्रव्रज्यावसरे तदेव सत्यं निःशङ्कं यज्जिनैः प्रवेदितमित्येवं यथोपदेशं प्रवर्त्तमानस्य प्रवर्द्धमानकण्डकस्य सत उत्तरकालमपि तदधिकता तत्समता तन्न्यूनता तदभावो वा स्यादित्येवंरूपां विचित्रपरिणामतां दर्शयितुमाह-तस्य श्रद्धावतः समनुज्ञस्य संप्रव्रजतस्तदेव सत्यं निःशङ्कं यज्जिनैः प्रवेदितमित्येतत्सम्यगित्येवं मन्यमानस्य 'एकदा' इत्युत्तरकालमपि शङ्काकाङ्क्षाविचिकित्सादिरहिततया सम्यगेव भवति-न तीर्थकरभाषिते शङ्काद्युत्पद्यत इति १। कस्यचित्तु प्रव्रज्यावसरे श्रद्धानुसारितया सम्यगिति मन्यमानस्य तदुत्तरकालमधीतान्वीक्षिकीकस्य दुर्गृहीतहेतुदृष्टान्तलेशस्य ज्ञेयगहनताव्याकुलितमतेः 'एकदे'ति मिथ्यात्वांशोदयेऽसम्यगिति भवति, तथाहि-असौ सर्वनयसमूहाभिप्रायतया अनन्तधर्माध्यासितवस्तुप्रसाधने सति मोहादेकनयाभिप्रायेणांशसाधनाय प्रक्रमते, यदि नित्यं कथमनित्यं अनित्यं चेत्कथं नित्यमिति, परस्परपरिहारलक्षणतयाऽनयोरवस्थानात्, तथाहि-अप्रच्युतानुत्पन्नस्थिरैकस्वभावं हि नित्यम् अतोऽन्यत्प्रतिक्षणविशरारुरूपमनित्यमित्येवमादिकमसम्यग्भावमुपयाति, न पुनर्विवेचयति, यथा अनन्तधर्माध्यासितं वस्तु सर्वनयसमूहात्मकं च दर्शनमतिगहनं मन्दधियां श्रद्धागम्यमेव, न हेतुक्षोभ्यमिति, उक्तं च-"सर्वैर्नयैर्निपतनैगमसङ्ग्रहाद्यैरेकैकशो विहिततीर्थिकशासनैर्यत्। निष्ठां गतं बहुविधैर्गमपर्ययैस्ते, श्रद्धेयमेव वचनं न तु हेतुगम्यम् ॥१॥" इत्यादि, यतो हेतुः प्रवर्त्तमान एकनयाभिप्रायेण प्रवर्त्तते, एकं च धर्म्मं साधयेत्, सर्वधर्म्मप्रसाधकस्य हेतोरसम्भवादिति २। पुनरपि विचित्रभावनामाह-कस्यचित् मिथ्यात्वलेशानुविद्धस्य कथं पौद्गलिकः शब्द इत्यादिकमसम्यगिति मन्य-

मानस्य 'एकदे'ति मिथ्यात्वपरमाणूपशमतया शङ्काविचिकित्साद्यभावे गुर्वाद्युपदेशतः सम्यगिति भवति, यदि हि पौद्गलिकः शब्दो न स्यात् ततस्तत्कृतावनुग्रहोपघातौ श्रवणेन्द्रियस्य न स्याताम्, अमूर्त्तत्वादाकाशवदित्यादिकं सम्यग् भवति ३। कस्यचित्त्वागमापरिमिलितमतेः कथमेकेनैव समयेन परमाणोर्लोकान्तगमनमित्यादिकमसम्यगिति मन्यमानस्यैकदेति—कुहेतुवितर्काविर्भावनसरे नितरामसम्यगेव भवति, तथाहि—चतुर्दशरज्ज्वात्मकस्य लोकस्याद्यन्ताकाशप्रदेशयोः समयाभेदतया यौगपद्यसंस्पर्शात् तावन्मात्रता परमाणोः स्यात्, प्रदेशयोर्लोकान्तद्वयगतयोरैक्यमित्यादिकमसम्यगिति भवति, न त्वसौ स्वाग्रहाविष्ट एतद्भावयति, यथा—विस्रसापरिणामेन शीघ्रगतित्वात् परमाणोरेकसमयेनासङ्ख्येयप्रदेशातिक्रमणं, यथा हि अङ्गुलिद्रव्यमेकसमयेनासङ्ख्येयान्याकाशप्रदेशानतिलङ्घयति, एतदेव कुत इति चेत्, न हि दृष्टेऽनुपपन्नं नाम, न च सकलप्रमाणप्रष्ठप्रत्यक्षसिद्धेऽर्थेऽनुमानमन्वेष्टव्यं, तथाहि—यद्यनेकप्रदेशातिक्रमणं सामयिकं न भवेत् ततोऽङ्गुलमात्रमपि क्षेत्रमसङ्ख्येयसमयातिक्रमणीयं स्यात्, तथा च सति दृष्टबाधाऽऽपद्येतेति यत्किञ्चिदेतत् ४। साम्प्रतं भङ्गकोपसंहारद्वारेण परमार्थमाविर्भावयन्नाह—सम्यगित्येवं मन्यमानस्य शङ्काविचिकित्सादिरहितस्य सतस्तद्वस्तु यदेन तथारूपतयैव भावितं तत् सम्यग्वा स्यादसम्यग्वा, तथापि तस्य तत्र सम्यगुत्प्रेक्षया—पर्यालोचनया सम्यगेव भवति, ईर्यापथोपयुक्तस्य क्वचित्प्राण्युपमर्दवत् ५। साम्प्रतमेतद्विपर्ययमाह—असम्यगिति किञ्चिद्वस्तु मन्यमानस्य शङ्का स्याद् अर्वाग्दर्शितया छद्मस्थस्य सतस्तद्वस्तु सम्यग्वा स्यादसम्यग्वा,तस्य तदसम्यगेवोत्प्रेक्षया—असम्यग्पर्यालोचनतयाऽशुद्धाध्यवसायतयेतियावत्, 'यद्यथा शङ्कयेत्तत्तथैव समापद्येते'ति वचनादिति ६॥ यद्वा—"समियंति मन्नमाणस्स" इत्याद्यन्यथा व्याख्यायते—शमिनो भावः शमिता 'इतिः' उपप्रदर्शने तामेतां शमितां मन्यमानस्य शुभाध्यवसायिनः 'एकदे'त्युत्तरका-

५

१०

रूमपि शमितैव भवति–उपशमवत्त्वोपजायते, अन्यस्य तु शमितामपि मन्यमानस्य कषायोदयादशमितोपजायत इति, अनया दिशोत्तरभङ्गेष्वपि सम्यगुपयुज्यायोज्यमिति । तदेवं सम्यगसम्यगित्येवं पर्यालोचयन्नपरस्याप्युपदेशदानायालमिति, आह च— आगमपरिकर्म्मितमतित्वाद्यथावस्थितपदार्थस्वभावदर्शितया सम्यगसम्यगिति चोत्प्रेक्षमाणः–पर्यालोचयन्नपरमनुत्प्रेक्षमाणं–गड्डरिकाप्रवाहप्रवृत्तं गतानुगतिकन्यायानुसारिणं शङ्कया वाऽपधावन्तं ब्रूयात्, यथा–'उत्प्रेक्षस्व' पर्यालोचय सम्यग्भावेन माध्यस्थ्यमवलम्ब्य किमेतदर्हदुक्तं जीवादितत्त्वं घटामियर्त्याहोस्विन्नेत्यक्षिणी निमील्य चिन्तयेति भावः । यदिवा उत्प्रेक्षमाणः संयममुत्–प्राबल्येनेक्षमाणः–संयमे उद्यच्छन् अनुत्प्रेक्षमाणं ब्रूयात्, यथा–सम्यग्भावापन्नः सन् संयममुत्प्रेक्षस्व–संयमे उद्योगं कुरु । किमवलम्ब्येत्याह—'इत्येवं' पूर्वोक्तेन प्रकारेण 'तत्र' तस्मिन् संयमे 'सन्धिः' कर्म्मसन्ततिरूपो 'झोषितः' क्षपितो भवति यदि संयमे सम्यग्भावे चोत्प्रेक्षणं स्यात्, नान्यथेति । सम्यगुत्प्रेक्षमाणस्य च यत्स्यात्तदाह—'से' तस्य सम्यगुत्थानेनोत्थितस्य निःशङ्कस्य श्रद्धावतः स्थितस्य गुरुकुले गुरोराज्ञायां वा या गतिर्भवति—या पदवी भवति तां सम्यगनुपश्यत यूयं, तद्यथा–सकललोकश्लाघ्यता ज्ञानदर्शनस्थैर्यं चारित्रे निष्प्रकम्पता श्रुतज्ञानाधारता च स्यादिति, यदिवा स्वर्गापवर्गादिका गतिः स्यात्, तां पश्यतेति सम्बन्धः, अथवा उत्थितस्य–संयमोद्योगवतः तदभावेन च स्थितस्य पार्श्वस्थादेर्गतिं—सकलजनोपहास्यरूपामधमस्थानगतिं वा पश्यतेति । तदेवममुयुक्तेतरयोर्गतिमुपलभ्य पञ्चविधाचारभारे प्रक्रमितव्यं, यदि नामानुपस्थितस्य विरूपा गतिर्भवति ततः किमित्याह–'अत्रापि' असंयमे बालभावरूपे इतरजनाचरिते आत्मानं सकलकल्याणास्पदं नोपदर्शयेत्, बालानुष्ठानविधायी मा भूदितिपावत्, तथाहि—बालाः शाक्यकापिलादयस्तद्भावितो बालभावमाचरति, वक्ति च—नित्यत्वादमूर्त्तत्वादात्मनः प्राणातिपात एव

नास्ति, आकाशस्येव, न हि वृक्षादिच्छेदे दाहे वाऽऽकाशस्य भिदा शोषो वा स्यात्, एवमात्मनोऽपि शरीरविकारेऽविकारित्वम्, उक्तं च–"न जायते न म्रियते कदाचिन्नायं भूत्वा भवितेति (भूयः)॥ नैनं छिन्दन्ति शस्त्राणि, नैनं दहति पावकः। न चैनं क्लेदयन्त्यापो, न शोषयति मारुतः ॥१॥ अच्छेद्योऽयमभेद्योऽयमविकारी स उच्यते। नित्यः सततगः स्थाणुरचलोऽयं सनातनः ॥२॥" इत्याद्यध्यवसायात्तद्धननादौ प्रवृत्तस्य तत्प्रतिषेधार्थमाह—

तुमंसि नाम सच्चेव जं हंतव्वंति मन्नसि, तुमंसि नाम सच्चेव जं अज्जावेयव्वंति मन्नसि. तुमंसि नाम सच्चेव जं परियावेयव्वंति मन्नसि, एवं जं परिघित्तव्वंति मनसि, जं उद्दवेयव्वंति मन्नसि. अंजू चेयपडिबुद्धजीवी, तम्हा न हंता नवि घायए, अणुसंवेयणमप्पाणेणं जं हंतव्वं नाभिपत्थए (सू. १६५)

५

योऽयं हन्तव्यत्वेन भवताऽध्यवसितः स त्वमेव, नामशब्दः सम्भावनायां, यथा भवान् शिरःपाणिपादपार्श्वपृष्ठोरूदरवान् एवमसावपि यं हन्तव्यमिति मन्यसे, यथा च भवतो हननोद्यतं दृष्ट्वा दुःखमुत्पद्यते एवमन्येषामपि, तद्दुःखापादनाच्च किल्बिषानुषङ्गः, इदमुक्तं भवति—नात्रान्तरात्मनः आकाशदेशस्य व्यापादनेन हिंसा, अपि तु शरीरात्मनः, तस्य हि यत्र क्वचित्स्वाधारं शरीरं नितरां दयितं तद्वियोजीकरणमेव हिंसेति, उक्तं च–"पञ्चेन्द्रियाणि त्रिविधं बलं च, उच्छ्वासनिःश्वासमथान्यदायुः। प्राणा दशैते भगवद्भिरुक्तास्तेषां वियोजीकरणं तु हिंसा ॥१॥" न च संसारस्थस्य सर्वथा अमूर्त्तत्वावाप्तिः, येनाकाशस्येव विकारो न स्यात्,

१०

आचा० ५लोक० ५ उद्दे०

वध्यवध-कार्यैक्यं

मरणेऽपि न प्राप्युपमर्दचिकीर्षायामात्मतुल्यता भावयितव्येत्येतदुत्तरसूत्रेण दर्शयितुमाह-त्वमपि नाम स एव यं प्रेषणादिना आज्ञापयितव्यमिति मन्यसे, तथा त्वमपि नाम स एव यं परितापयितव्यमिति मन्यसे, एवं यं परिग्रहीतव्यमिति मन्यसे, यमपद्रावयितव्यमिति मन्यसे असौ त्वमेव, यथा भवतोऽनिष्टापादनेन दुःखमुत्पद्यते एवमस्यापीत्यर्थः, यदिवा यं कायं हन्तव्यादितयाऽध्यवस्यसि तत्रानेकशो भवतोऽपि भावात्त्वमेवासौ, एवं मृषावादादावप्यायोज्यम् । यदि नाम हन्तव्यघातकयोरुक्तक्रमेणैक्यं ततः किमित्याह 'अञ्जु'रिति ऋजुः-प्रगुणः साधुरितियावत्, चशब्दोऽवधारणे, एतस्य-हन्तव्यघातकैकत्वस्य प्रतिबोधः प्रतिबुद्धमेतत्प्रतिबुद्धं तेन जीवितुं शीलमस्येत्येतत्प्रतिबुद्धजीवी, साधुरेव तत्परिज्ञानेन जीवति नापर इत्युक्तं भवति । यदि नामैवं ततः किमित्याह-'तम्माद्' हन्यमानस्यात्मन इव महद्दुःखमुत्पद्यते तस्मादात्मौपम्यादन्येषां जन्तूनां न हन्ता स्यात्, नाप्यपरैर्घातयेत् न च घ्नतोऽनुमन्येत, किंच-संवेदनम्-अनुभवनं अनु-पश्चात्संवेदनं, केन ?-आत्मना, यत्परेषां मोहोदयाद्धननादिना दुःखोत्पादनं विधीयते तत्पश्चादात्मना संवेद्यमित्याकलय्य यत्किमपि हन्तव्यमिति चिकीर्षितं तन्नाभिप्रार्थयेत्-नाभिलपेत् । ननु चात्मनाऽनुसंवेदनमित्युक्तं, संवेदनं च मतामातरूपं, तच्च यथा नैयायिकवैशेषिकाणामात्मनो भिन्नेन गुणभूतेनैकार्थसमवायिना ज्ञानेन भवति तथा भवतामपि ! आहोस्विदभिन्नेनात्मन इत्यस्य प्रतिवचनमाह—

**जे आया से विन्नाया जे विन्नाया से आया जेण वियाणइ से आया तं पडुच्च पडिसंखाए, एस आयावाई समियाए परियाए वियाहिएत्तिबेमि (सू. १६६) ॥ पञ्चमाध्ययने पंचमः ५-५॥**

प्र. आ. २२५

य आत्मा नित्य उपयोगलक्षणः विज्ञाताऽप्यसावेव, न तु पुनस्तस्मादात्मनो भिन्नं ज्ञानं पदार्थसंवेदकं, यश्च विज्ञाता–पदार्थानां परिच्छेदक उपयोगः आत्माऽप्यसावेव,उपयोगलक्षणत्वाज्जीवस्य,उपयोगस्य च ज्ञानात्मकत्वादिति । ज्ञानात्मनोरभेदाभिधानाद्बौद्धाभिमतं ज्ञानमेवैकं स्यादिति चेत् ,तन्न, भेदाभावोऽत्र केवलं चिकीर्षितो, नैक्यं,एतदेवैक्यं यो भेदाभाव इति चेद् ,वार्त्तमेतत्,तथाहि–पटशुक्लत्वयोर्भेदेनावस्थानाभावेऽपि नैकत्वापत्तिः, अत्रापि शुक्लत्वव्यतिरेकेण नापरः पटः कश्चिदप्यस्तीति चेद् , अशिक्षितस्योल्लापो, यतः शुक्लगुणविनाशे सर्वथा पटाभावापत्तिः स्यात् , तदात्मना विनष्ट एवेति चेत् , भवतु का नो हानिः ?, अनन्तधर्म्मात्मकत्वाद्वस्तुनोऽपरमृद्वादिधर्म्मसद्भावे तद्धर्मविनाशेऽप्यविनष्ट एव, इत्येवमात्मनोऽपि प्रत्युत्पन्नज्ञानात्मकतया विनाशेऽप्यपरामूर्त्तत्वासङ्ख्येयप्रदेशताऽगुरुलघ्वादिधर्म्मसद्भावादविनाश एवेत्यलं प्रसङ्गेन । ननु च य आत्मा स विज्ञातेत्यत्र तृजन्तेन कर्तुरभिधानादात्मनश्च कर्तृत्वात् ततश्च य एवात्मा स एव विज्ञातेत्यत्र विप्रतिपत्त्यभावो,येन चासौ जानाति तद्भिन्नमपि स्यात् ,तथाहि–तत् करणं क्रिया वा भवेद् ?, यदि करणं तद्दात्रादिवद्भिन्नं स्यात् , अथ क्रिया सा यथा कर्तृस्था सम्भवत्येवं कर्मस्थिताऽपीत्येवं भेदसम्भवे कुत ऐक्यमिति यश्चोदयेत्तं प्रति स्पष्टतरमाह–'येन' मत्यादिना ज्ञानेन करणभूतेन क्रियारूपेण वा विविधं–सामान्यविशेषाकारतया वस्तु जानाति विजानाति स आत्मा, न तस्मादात्मनो भिन्नं ज्ञानं, तथाहि–न करणतया भेदः, एकस्यापि कर्तृकर्म्मकरणभेदेनोपलब्धेः, तद्यथा–देवदत्त आत्मानमात्मना परिच्छिनत्ति, क्रियापक्षे पाक्षिको ह्यभेदो भवताऽप्यभ्युपगत एव, अपि च–'भूतिर्येषां क्रिया सैव. कारकं सैव चोच्यते' इत्यादिनैकत्वमेवेति । ज्ञानात्मनोश्चैकत्वे यद्भवति तद्दर्शयितुमाह–'तं' ज्ञानपरिणामं 'प्रतीत्य'आश्रित्यात्मा तेनैव 'प्रतिसङ्ख्यायते' व्यपदिश्यते, तद्यथा–इन्द्रोपयुक्त इन्द्र इत्यादि, यदिवा मतिज्ञानी श्रुतज्ञानी यावत्केवलज्ञानीति, यश्च ज्ञानात्मनोरेक-

ज्ञानात्मनोरैक्यं

५

१०

त्वमभ्युपगच्छति स किंगुणः स्यादित्याह–'एषः' अनन्तरोक्तया नीत्या यथावस्थितात्मवादी स्यात्, तस्य च सम्यग्भावेन शमितया वा 'पर्यायः' संयमानुष्ठानरूपो व्याख्यातः। इत्यधिकारपरिसमाप्तौ, ब्रवीमीति पूर्ववत्॥ लोकसाराध्ययने पञ्चमोद्देशकः॥

उक्तः पञ्चमोद्देशकः, साम्प्रतं षष्ठ आरभ्यते, अस्य चायमभिसम्बन्धः—इहानन्तरोद्देशके ह्रदोपमेनाचार्येण भाव्यमित्येतदुक्तं, तथाभूताचार्यसंपर्काच्च कुमार्गपरित्यागो रागद्वेषहानिश्चावश्यंभाविनीत्यतस्तत्प्रतिपादनसम्बन्धेनागतस्यास्योद्देशकस्यादिसूत्रम्—

**अणाणाए एगे सोवट्ठाणा आणाए एगे निरुवट्ठाणा, एयं ते मा होउ, एयं कुसलस्स दंसणं, तद्दिट्ठीए तम्मुत्तीए तप्पुरक्कारे तस्सन्नी तन्निवेसणे (सू. १६७)**

इह तीर्थकरगणधरादिनोपदेशगोचरीभूतो विनेयोऽभिधीयते, यदिवा सर्वभावसम्भवित्वाद्भावस्य सामान्यतोऽभिधानम्, अनाज्ञा–अनुपदेशः स्वमनीषिकाऽऽचरितोऽनाचारस्तयाऽनाज्ञया तस्यां वा 'एके' इन्द्रियवशगा दुर्गतिं जिगमिषवः स्वाभिमानग्रहग्रस्ताः सह उपस्थानेन–धर्मचरणाभासोद्यमेन वर्त्तन्त इति सोपस्थानाः, किल वयमपि प्रव्रजिताः, सदसद्धर्मविशेषविवेकविकलाः सावद्यारम्भतया प्रवर्त्तन्ते, एके तु न कुमार्गवासितान्तःकरणाः, किन्तु आलस्यावर्णस्तम्भाद्युपबृंहितबुद्धयः, 'आज्ञायां' तीर्थंकरोपदेशप्रणीते सदाचारे निर्गतमुपस्थानम्–उद्यमो येषां ते निरुपस्थानाः–सर्वज्ञप्रणीतसदाचारानुष्ठानविकलाः। एतत्कुमार्गानुष्ठानं सन्मार्गावसीदनं च द्वयमपि 'ते' तव गुरुविनयोपगतस्य दुर्गतिहेतुत्वान्मा भूदिति। सुधर्मस्वामी स्वमनीषिकापरिहारार्थमाह–'एतद्' यत्पूर्वोक्तं यदिवा अनाज्ञायां निरुपस्थानं आज्ञायां च सोपस्थानत्वमित्येतत् 'कुशलस्य' तीर्थकृतो दर्शनम्–अभिप्रायः, यदिवैतद्वक्ष्यमाणं कुशलस्य दर्शनमित्याह–

कुमार्गं परित्यज्य सदाऽऽचार्यान्तेवासिना एवंभूतेन भाव्यं, तस्य-आचार्यस्य दृष्टिस्तदृष्टिस्तया वर्तितव्यं, सा वा तीर्थकरप्रणीताऽऽगमदृष्टिस्तदृष्टिस्तयेति, तथा तस्य-आचार्यस्य तीर्थकृतो वा मुक्तिस्तन्मुक्तिस्तया, तथा तमाचार्यं सर्वकार्येषु पुरः करोतीति तत्पुरस्कारः, आचार्यानुमत्या क्रियानुष्ठायीत्यर्थः, तथा तत्संज्ञी—तज्ज्ञानोपयुक्तः, तथा तन्निवेशनः-सदा गुरुकुलनिवासी ॥ स एवंभूतः किंगुणः स्यादित्याह—



अभिभूय अदक्खू अणभिभूए पभू निरालंबणयाए जे महं अबहिमणे, पवाएण पवायं जाणिज्जा, सहसंमइयाए परवागरणेणं अन्नेसिं वा अंतिए सुच्चा (सू. १६८)

'अभिभूय' पराजित्य परीषहोपसर्गान् घातिचतुष्टयं वा तत्त्वमद्राक्षीत्, किं च—नाभिभूतोऽनभिभूतः अनुकूलप्रतिकूलोपसर्गैः परतीर्थिकैर्वा, स एवम्भूतः 'प्रभुः' समर्थो निरालम्बनतायाः-नात्र संसारे मातापितृकलत्रादिकमालम्बनमस्तीति तीर्थकृद्वचनमन्तरेण नरकादौ पततामित्येवम्भूतभावनायाः समर्थो भवति, कः पुनः परीषहोपसर्गाणां जेता केनचिदनभिभूतो निरालम्बनतायाः प्रभुर्भवति ? इत्येवं पृष्टे तीर्थकृत् सुधर्मस्वाम्यादिको वाऽऽचार्योऽन्तेवासिनमाह-यः पुरस्कृतमोक्षो 'महान्' महापुरुषो लघुकर्म्मा ममाभिप्रायान्न विद्यते बहिर्मनो यस्यासावबहिर्म्मनाः, सर्वज्ञोपदेशवर्त्तीतियावत्, कुतः पुनस्तदुपदेशनिश्चय इति चेदाह-प्रकृष्टो वादः प्रवादः-आचार्यपारम्पर्योपदेशः प्रवादस्तेन प्रवादेन प्रवादं-सर्वज्ञोपदेशं 'जानीयात्' परिच्छिन्द्यादिति । यदिवाऽणिमाद्यष्टविधैश्वर्यदर्शनादपि न तीर्थकृद्वचनाद्बहिर्मनो विधत्ते, तीर्थिकानिन्द्रजालिककल्पानिति मत्वा तदनुष्ठानं तद्वादांश्च पर्यालोचयति,

५

१०

कथमित्याह–'पवाएण पवायं जाणिज्जा' प्रकृष्टो वादः प्रवादः–सर्वज्ञवाक्यं तेन मौनीन्द्रेण प्रवादेन तीर्थिकप्रवादं 'जानीयात्' परीक्षेत्, तद्यथा–वैशेषिकाः तनुभुवनकरणादिकमीश्वरकर्तृकमिति प्रतिपन्नाः, तदुक्तम्–"अन्यो जन्तुरनीशः स्यादात्मनः सुखदुःखयोः। ईश्वरप्रेरितो गच्छेत्, स्वर्गं वा श्वभ्रमेव च ॥१॥" इत्यादिकं प्रवादमात्मीयप्रवादेन पर्यालोचयेत्, तद्यथा–अभ्रेन्द्रधनुरादीनां विस्रसापरिणामलब्धात्मलाभानां तदतिरिक्तेश्वरादिकारणपरिकल्पनायामतिप्रसङ्गः स्यात्, तथा घटपटादीनां दण्डचक्रचीवरसलिलकुलालतुरीवेमशलाकाकुविन्दादिव्यापारानन्तरावाप्तात्मलाभानां तदनुपलब्धव्यापारेश्वरस्य कारणपरिकल्पनायां रासभादेरपि किं न स्यात्?, तनुकरणादीनामप्यवन्ध्यस्वकृतकर्मापादितं वैचित्र्यं, कर्मणोऽनुपलब्धेः कुत एतदिति चेत्, समानः पर्यनुयोगः, अपि च–तुल्ये मातापित्रादिके कारणेऽपत्यवैचित्र्यदर्शनात् तदधिकेन निमित्तेन भाव्यं, तच्चेश्वराभ्युपगमेऽप्यदृष्टमेवेष्टव्यं, नान्यथा सुखदुःखसुभगदुर्भगादि जगद्वैचित्र्यं स्यादिति। तथा साङ्ख्या एवमाहुः–यथा 'सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः, प्रकृतेर्महान् ततोऽहङ्कारः, तस्मादेकादशेन्द्रियाणि, पञ्च तन्मात्राणि, तन्मात्रेभ्यः पञ्च भूतानि, बुद्ध्यध्यवसितमर्थं पुरुषश्चेतयते, स चाकर्त्ता निर्गुणश्चे'ति, तथा 'प्रकृतिः करोति पुरुष उपभुङ्क्ते' ततः 'कैवल्यावस्थायां दृष्टाऽसीति निवर्त्तते' इत्यादिकं युक्तिविकलत्वान्निरन्तराः सुहृदः प्रत्येष्यन्ति, तथाहि—प्रकृतेरचेतनत्वात् कुत आत्मोपकाराय क्रियाप्रवृत्तिः स्यात्?, कुतो वा दृष्टेत्यात्मोपकाराय प्रवृत्तिर्न स्यात्?, अचेतनायास्तद्विकल्पासम्भवात्, नित्यायाश्च प्रवृत्तिनिवृत्त्यभावात्, पुरुषस्याप्यकर्तृत्वे संसारोद्वेगमोक्षौत्सुक्यभोक्तृत्वाद्यभावः स्यादिति, उक्तं च–"न विरक्तो न निर्विण्णो, न भीतो भवबन्धनात्। न मोक्षसुखकाङ्क्षी वा, पुरुषो निष्क्रियात्मकः ॥१॥ कः प्रव्रजति मादृग्रूपाणां, निष्क्रिये क्षेत्रभोक्तरि। निष्क्रियत्वात्कथं वाऽस्य, क्षेत्रभोक्तृत्वमिष्यते? ॥२॥' इति। तथा शौद्धोदनिशि-

वैशेषि-
१५
कायाः

२०

व्यक्ता यस्तत्तत्सर्वं क्षणिकमित्येवं व्यवस्थिताः, तत्रोत्तरम्, यदि निरन्वयो विनाशः स्यात् ततः प्रतिनियतः कार्यकारणभाव एव न स्यात्, एकसन्तानान्तर्गतत्वात् स्यादिति चेत्, अशिक्षितस्योल्लापः, तथाहि—न सन्तानिव्यतिरेकेण कश्चित्सन्तानोऽस्ति, तथा च सति पूर्वकालक्षणावस्थायित्वमेव कारणत्वम्, एवं च सर्वं सर्वस्य कारणं स्यात्, सर्वस्य पूर्वकालक्षणावस्थायित्वाद्, यत्किञ्चिदेतदिति, किं च—"यज्जातमात्रमेव प्रध्वस्तं तस्य का क्रिया कुम्भे?। नोत्पन्नमात्रभग्ने क्षिप्तं सन्तिष्ठते वारि ॥१॥ कर्त्तरि जातविनष्टे धर्माधर्म्मक्रिया न सम्भवति। तदभावे बन्धः को? बन्धाभावे च को मोक्षः? ॥२॥" इत्यादि। बार्हस्पत्यानां तु भूतवादेनात्मपुण्यपापपरलोकाभाववादिनां निर्म्मर्यादतया जनतातिगानां न्यक्कारपदव्याधानमनुत्तरमेवोत्तरमिति। अपि च—"अब्रह्मचर्यरक्तैर्मूढैः परदारधर्षणाभिरतैः। मायेन्द्रजालविषवत् प्रवर्त्तितमसत्किमप्येतत् ॥१॥" तथा—"मिथ्या च दृष्टिर्भवदुःखधात्री, मिथ्या मतिश्चापि विवेकशून्या। धर्म्माय येषां पुरुषाधमानां, तेषामधर्मो भुवि कीदृशोऽन्यः? ॥२॥" इत्यनया दिशा सर्वेऽपि तीर्थिकवादाः सर्वज्ञवादमनुश्रित्य निराकार्या इति स्थितं। तन्निराकरणं च सर्वज्ञप्रवादं निराकार्यं च तीर्थिकप्रवादमेभिस्त्रिभिः प्रकारैर्जानीयादित्याह—मननं मतिः—ज्ञानं ज्ञानावरणीयक्षयक्षयोपशमान्यतरसद्भावानन्तरमेव सहसा—तत्क्षणमेव मत्या प्रातिभबोधावध्यादिज्ञानेन परिच्छिन्द्यात्, सह वा ज्ञानेन ज्ञेयं सच्छोभनया मिथ्यात्वकलङ्काङ्करहितया मत्याऽवगच्छेत्, स्वपरावभासकत्वान्मतेरिति, कदाचित्परव्याकरणेनाप्यवगच्छेत् परः—तीर्थकृत्तस्य तेन वा व्याकरणं—यथावस्थितार्थप्रज्ञापनम् आगमः परव्याकरणं तेन वा जानीयात्, तथाऽप्यनवगमेऽन्येषामाचार्यादीनां अन्तिके श्रुत्वा यथावस्थितवस्तुसद्भावमवधारयेद् ॥ अवधार्य च किं कुर्यादित्याह—

प्रवाद-निरासः ५ १०



निद्देसं नाइवट्टेज्जा मेहावी सुपडिलेहिया सव्वओ सव्वप्पणा सम्मं समभिण्णाय, इह

आरामं परिण्णाय अल्लीणे गुत्ते आरामो परिव्वए निट्ठीयट्ठी वीरे आगमेण सया परक्कमेज्जासित्तिबेमि (सू. १६९)

निर्दिश्यत इति निर्देशः-तीर्थकराद्युपदेशस्तं नातिवर्तेत 'मेधावी' मर्यादावानिति, किं कृत्वा निर्देशं नातिवर्ततेत्यत आह-सुष्ठु प्रत्युपेक्ष्य हेयोपादेयतया तीर्थिकवादान् सर्वज्ञवादं च 'सर्वतः' सर्वैः प्रकारैर्द्रव्यक्षेत्रकालभावरूपैः सर्वात्मना सामान्यविशेषात्मकतया पदार्थान् पर्यालोच्य सहसन्मत्यादित्रिकेण परिच्छिद्य सदाऽऽचार्यनिर्देशवर्ती तीर्थिकप्रवादनिराकरणं कुर्यात्, किं च कृत्वेत्यत आह-सम्यगेव स्वपरतीर्थिकवादान् 'समभिज्ञाय' बुद्ध्वा ततो निराकरणं कुर्यात्। किं च 'इह' अस्मिन् मनुष्यलोके आरमणमारामो, रतिरित्यर्थः, स चारामः परमार्थचिन्तायामात्यन्तिकैकान्तिकरतिरूपः संयमः तमासेवनपरिज्ञया परिज्ञाय आलीनो गुप्तश्च 'परिव्रजेत्' संयमानुष्ठाने विहरेत्, किंभूत इत्याह-निष्ठितो-मोक्षस्तेनार्थी, यदिवा निष्ठितः-परिसमाप्तः अर्थः-प्रयोजनं यस्य स निष्ठितार्थः 'वीरः' कर्मविदारणसहिष्णुः सन् 'आगमेन' सर्वज्ञप्रणीताचारादिना 'सदा' सर्वकालं 'पराक्रमेथाः' कर्मरिपून् प्रति मोक्षाध्वनि वा गच्छेः। इत्यधिकारपरिसमाप्तौ, ब्रवीमीति पूर्ववत्। किमर्थं पुनः पौनःपुन्येनोपदेशदानमित्याह—

उड्ढं सोया अहे सोया, तिरियं सोया वियाहिया। एए सोया विअक्खाया, जेहिं संगंति पासहा॥१॥

श्रोतांसि-कर्माश्रवद्वाराणि तानि च प्रतिभवाभ्यासाद्विषयानुबन्धादीनि गृह्यन्ते, तत्र ऊर्ध्वं श्रोतांसि-वैमानिकाङ्गनाऽभिलाषेच्छा वैमानिकसुखनिदानं वा, अधो भवनपतिसुखाभिलाषिता, तिर्यग् व्यन्तरमनुष्यतिर्यग्विषयेच्छा, यदिवा प्रज्ञापकापेक्षया ऊर्ध्वं गिरिशि-

१५
आत्मारामता

२०

खरप्राग्भारनितम्बप्रपातोदकादीनि अधोऽपि श्वभ्रनदीकूलगुहालयनादीनि तिर्यगप्यारामसभाऽऽवसथादीनि प्राणिनां विषयोपभोगस्थानानि विविधमाहितानि–प्रयोगविस्रसाभ्यां स्वकर्मपरिणत्या वा जनितानि व्याहितानि, एतानि च कर्म्मास्रवद्वाराणीतिकृत्वा श्रोतांसीव स्रोतांसि, एभिश्च त्रिभिः प्रकारैरपि अन्यैश्च पापोपादानहेतुभूतैर्यैः 'सङ्गं' प्राणिनामासक्तिं कर्म्मानुषङ्गं वा पश्यत,इतिहेतौ, तस्मात् कर्मानुषङ्गात् कारणादेतानि स्रोतांसीत्यतोऽपदिश्यते–आगमेन सदा पराक्रमेथा इति ॥ किं च—

" आवट्टं तु पेहाए इत्थ विरमिज्ज वेयवी, विणइत्तु सोयं निक्खम्म एसमहं अकम्मा जाणइ पासइ पडिलेहाए नावकंखइ इह आगइं गइं परिन्नाय (सू. १७०)



रागद्वेषकषायविषयावर्त्तं कर्म्मबन्धावर्त्तं वा तुशब्दः पुनःशब्दार्थे भावावर्त्तं पुनरुत्प्रेक्ष्य 'अत्र' अस्मिन् भावावर्त्ते विषयरूपे 'वेदविद्' आगमविद् 'विरमेद्' आस्रवद्वारनिरोधं विदध्यात्, पाठान्तरं वा "विवेगं किट्टइ वेदवी" आस्रवद्वारनिरोधेन तज्जनितकर्म्मविवेकम्–अभावं 'कीर्त्तयति' प्रतिपादयति वेदविदिति । आस्रवद्वारनिरोधेन च यत्स्यात्तदाह–स्रोतः–आस्रवद्वारं तद्विनेतुम्–अपनेतुं 'निष्क्रम्य' प्रव्रज्य 'एष' इति प्रत्यक्षः, प्रस्तुतार्थस्य चावश्यंभावित्वादेष इति प्रत्यक्षवाचिना सर्वनाम्नोक्तो, यः कश्चिदित्यर्थः, 'महान्' महापुरुषः अतिशयितकर्म्मविधायी, एवम्भूतश्च किंविशिष्टः स्यादिति दर्शयति–'अकर्म्मा'नास्य कर्म्म विद्यत इत्यकर्म्मा, कर्म्मशब्देन चात्र घातिकर्म्म विवक्षितं, तदभावाच्च जानाति विशेषतः पश्यति च सामान्यतः, सर्वाश्च लब्धयो विशेषोपयुक्तस्य भवन्तीत्यतः पूर्वं जानाति पश्चाच्च पश्यति, अनेन च क्रमोपयोग आविष्कृतः, स चोत्पन्नदिव्यज्ञानस्त्रैलोक्यललामचूडामणिः सुरा-

गुरुनरेन्द्रैकपूज्यः संसारार्णवपारवर्त्ती विदितवेद्यः सन् किं कुर्यादित्याह—स हि ज्ञातज्ञेयः सुरासुरनरोपहितां पूजामुपलभ्य कृत्रिमामनित्याममगारां सोपाधिकां च 'प्रत्युपेक्ष्य' पर्यालोच्य हृषीकविषयजनितसुखनिःस्पृहतया तां नाकाङ्क्षति—नाभिलषतीति । किं च—'इह' अस्मिन् मनुष्यलोके व्यवस्थितः सन् उत्पन्नज्ञानः प्राणिनामागतिं गतिं च संसारभ्रमणं तत्कारणं च ज्ञपरिज्ञया ज्ञात्वा प्रत्याख्यानपरिज्ञया निराकरोति ॥ तन्निराकरणे च यत्स्यात्तदाह—

अच्चेइ जाईमरणस्स वट्टमग्गं विक्खायरए, सव्वे सरा नियट्टंति, तक्का जत्थ न विज्जइ, मई तत्थ न गाहिया, ओए, अप्पइट्ठाणस्स खेयन्ने, से न दीहे न हस्से न वट्टे न तंसे न चउरंसे न परिमंडले न किण्हे न नीले न लोहिए न हालिद्दे न सुक्किल्ले न सुरभिगंधे न दुरभिगंधे न तित्ते न कडुए न कसाए न अंबिले न महुरे न कक्खडे न मउए न गरुए न लहुए न उण्हे न निद्धे न लुक्खे न काऊ न रुहे न संगे न इत्थी न पुरिसे न अन्नहा परिन्ने सन्ने उवमा न विज्जए, अरूवी सत्ता, अपयस्स पयं नत्थि (सू. १७१-७२)

'अत्येति' अतिक्रामति जातिश्च मरणं च जातिमरणं तस्य 'वट्टमग्गं'ति पन्थानं मार्गं उपादानं कर्मेतियावत्, तदत्येति—अशेषकर्मक्षयं विधत्ते, तत्क्षयाच्च किंगुणः स्यादित्याह—विविधम्—अनेकप्रकारं प्रधानपुरुषार्थतयाऽऽरब्धशास्त्रार्थतया तपःसंयमानुष्ठा-



२०

२५

नार्थत्वेन (आख्यातो) व्याख्यातो मोक्षः–अशेषकर्म्मक्षयलक्षणो विशिष्टाकाशप्रदेशाख्यो वा तत्र रतो व्याख्यानरतः, आत्यन्तिकैकान्तिकानाबाधसुखक्षायिकज्ञानदर्शनसंपदुपेतोऽनन्तमपि कालं सतिष्ठते। किम्भूत इति चेत्, न तत्र शब्दाना प्रवृत्तिः, न च सा काचिदवस्थाऽस्ति या शब्दैरभिधीयेत इत्येतत्प्रतिपादयितुमाह–'सव्वे' निरवशेषाः 'सरा' ध्वनयस्तस्मान्निवर्त्तन्ते, तद्वाच्यवाचकसम्बन्धे न प्रवर्त्तन्ते, तथाहि—शब्दाः प्रवर्त्तमाना रूपरसगन्धस्पर्शानामन्यतमे विशेषे सङ्केतकालगृहीते तत्तुल्ये वा प्रवर्त्तेरन्, न चैतत्तत्र शब्दादीनां प्रवृत्तिनिमित्तमस्ति, अतः शब्दानभिधेया मोक्षावस्थेति। न केवलं शब्दानभिधेया, उत्प्रेक्षणीयाऽपि न सम्भवतीत्याह–सम्भवत्पदार्थविशेषास्तित्वाध्यवसाय ऊहस्तर्कः—एवमेवं चैतत्स्यात्, स च यत्र न विद्यते, ततः शब्दानां कुतः प्रवृत्तिः स्यात्?। किमिति तत्र तर्काभाव इति चेदाह–मननं मतिः–मनसो व्यापारः पदार्थचिन्ता औत्पत्तिक्यादिका चतुर्विधाऽपि मतिस्तत्र न ग्राहिका, मोक्षावस्थायाः सकलविकल्पातीतत्वात्, तत्र च मोक्षे कर्म्मांशसमन्वितस्य गमनमाहोश्विन्निष्कर्म्मणः?, न तत्र कर्मसमन्वितस्य गमनमस्तीत्येतद्दर्शयितुमाह–'ओजः' एकोऽशेषमलकलङ्काङ्करहितः, किं च–न विद्यते प्रतिष्ठानमौदारिकशरीरादेः कर्म्मणो वा यत्र सोऽप्रतिष्ठानो–मोक्षस्तस्य 'खेदज्ञो' निपुणो, यदिवा अप्रतिष्ठानो–नरकस्तत्र स्थित्यादिपरिज्ञानतया खेदज्ञो, लोकनाडिपर्यन्तपरिज्ञानावेदनेन च समस्तलोकखेदज्ञता आवेदिता भवति। सर्वस्वरनिवर्त्तनं च येनाभिप्रायेणोक्तं तमभिप्रायमाविष्कुर्वन्नाह–'स' परमपदाध्यासी लोकान्तक्षेत्रपद्भागक्षेत्रावस्थानोऽनन्तज्ञानदर्शनोपयुक्तः संस्थानमाश्रित्य न दीर्घो न ह्रस्वो न वृत्तो न त्र्यस्रो न चतुरस्रो न परिमण्डलो, वर्णमाश्रित्य न कृष्णो न नीलो न लोहितो न हारिद्रो न शुक्लो, गन्धमाश्रित्य न सुरभिगन्धो न दुरभिगन्धो, रसमाश्रित्य न तिक्तो न कटुको न कषायो नाम्लो न मधुरः, स्पर्शमाश्रित्य न कर्कशो न मृदुर्न लघुर्न गुरुर्न शीतो

नोष्णो न स्निग्धो न रूक्षो, 'न काऊ' इत्यनेन लेश्या गृहीता, यदिवा न कायवान्, यथा वेदान्तवादिनाम्–'एक एव मुक्तात्मा तत्कायमपरे क्षीणक्लेशा अनुप्रविशन्ति, आदित्यरश्मय इवांशुमन्त'मिति, तथा न 'रुह बीजजन्मनि प्रादुर्भावे च' रोहतीति रुहः, न रुहोऽरुहः, कर्मबीजाभावादपुनर्भावीत्यर्थः, न पुनर्यथा शाक्यानां दर्शननिकारतो मुक्तात्मनोऽपि पुनर्भवोपादानमिति, उक्तं च– "दग्धेन्धनः पुनरुपैति भवं प्रमथ्य, निर्वाणमप्यनवधारितभीरुनिष्ठम्। मुक्तः स्वयंकृतभवश्च परार्थशूरस्त्वच्छासनप्रतिहतेष्विह मोहराज्यम् ॥१॥" तथा च न विद्यते सङ्गोऽमूर्त्तत्वाद्यस्य स तथा, तथा न स्त्री न पुरुषो नान्यथेति–न नपुंसकः, केवलं सर्वैरात्मप्रदेशैः परिः–समन्ताद्विशेषतो जानातीति परिज्ञः, तथा सामान्यतः सम्यग्जानाति–पश्यतीति संज्ञः, ज्ञानदर्शनयुक्त इत्यर्थः, यदि नाम स्वरूपतो न ज्ञायते मुक्तात्मा तथाऽप्युपमाद्वारेणादित्यगतिरिव ज्ञायत एवेति चेत्, तन्न, यत आह–उपमीयते–सादृश्यात् परिच्छिद्यते यया सोपमा–तुल्यता सा मुक्तात्मनस्तज्ज्ञानसुखयोर्वा न विद्यते, लोकातिगत्वात्तेषां, कुत एतदिति चेदाह–तेषां मुक्तात्मनां या सत्ता सा अरूपिणी, अरूपित्वं च दीर्घादिप्रतिषेधेन प्रतिपादितमेव। किं च–न विद्यते पदम्–अवस्थाविशेषो यस्य सोऽपदः, तस्य पद्यते–गम्यते येनार्थस्तत्पदम्–अभिधानं तच्च 'नास्ति' न विद्यते, वाच्यविशेषाभावात्, तथाहि-योऽभिधीयते स शब्दरूपगन्धरसस्पर्शान्यतरविशेषेणाभिधीयते, तस्य च तदभाव इत्येतद्दर्शयितुमाह, यदिवा दीर्घ इत्यादिविशेषनिराकरणं कृतं, इह तु तत्सामान्यनिराकरणं कर्तुकाम आह–से न सद्दे न रूवे न गंधे न रसे न फासे, इच्चेवत्तिबेमि (सू. १७२) ५–६। लोकसाराध्ययनं समाप्तं।

'स' मुक्तात्मा न शब्दरूपः न रूपात्मा न गन्धः न रसः न स्पर्श इत्येतावन्त एव वस्तुनो भेदाः स्युः, तत्प्रतिषेधाच्च नापरः कश्चिद्विशेषः सम्भाव्यते येनासौ व्यपदिश्येतेति भावार्थः। इतिरधिकारपरिसमाप्तौ, ब्रवीमीति पूर्ववत्। गतः सूत्रानुगमः, तद्गतौ चापवर्गमाप्त उद्देशकः, तदपवर्गावाप्तौ च नयवक्तव्यताऽतिदेशात समाप्तं लोकसाराख्यं पञ्चममध्ययनमिति ॥ग्रन्थाग्रं० १११५॥



२०

# अथ धुताख्यं षष्ठमध्ययनम्



उक्तं पञ्चममध्ययनं, साम्प्रतं षष्ठमारभ्यते, अस्य चायमभिसम्बन्धः-इहानन्तराध्ययने लोकसारभूतः संयमो मोक्षश्च प्रतिपादितः, स च निःसङ्गताव्यतिरेकेण कर्मधुननमन्तरेण च न भवतीत्यतस्तत्प्रतिपादनार्थमिदमुपक्रम्यत इत्यनेन सम्बन्धेनायातस्यास्याध्ययनस्य चत्वार्यनुयोगद्वाराणि भवन्ति, तत्रोपक्रमेऽर्थाधिकारो द्वेधा-अध्ययनार्थाधिकार उद्देशार्थाधिकारश्च, तत्राध्ययनार्थाधिकारः प्रागभाणि, उद्देशार्थाधिकारं तु निर्युक्तिकारो बिभणिषुराह—

पढमे नियगविहुणणा कम्माणं बितिगए तइयगंमि। उवगरणसरीराणं चउत्थए गारवतिगस्स ॥२४९॥ ५

१०

धूतं द्रव्यं च तद्वस्त्रादि धूतं च रजोऽपनयनार्थं द्रव्यधूतं, आदिग्रहणाद्वृक्षादि फलार्थं, भावधूतं कर्म्माष्टविधं, तद्विमोक्षार्थं धूयत इति गाथाशकलार्थः ॥ पुनरप्येनमेवार्थं विशेषतः प्रतिपादयितुमाह—

अहियासित्तुवसग्गे दिव्वे माणुस्सए तिरिच्छे य। जो विहुणइ कम्माइं भावधुयं तं वियाणाहि ॥२५१॥

अधिकमामह्य–अत्यर्थं सोढ्वा, कानतिसह्य ?–उपसर्गान्, किंभूतान् ?–दिव्यान्मानुषांस्तैरश्चांश्च यः कर्म्माणि संसारतरुबीजानि विधुनाति–अपनयति तद्भावधुतमित्येवं जानीहि, क्रियाकारकयोरभेदाद्वा कर्म्मधूननं भावधूतं जानीहीति भावार्थः ॥ गतो नामनिष्पन्नो निक्षेपः, साम्प्रतं सूत्रानुगमेऽस्खलितादिगुणोपेतं सूत्रमुच्चारयितव्यं, तच्चेदम्—

ओबुज्झमाणे इह माणवेसु आघाइ से नरे, जस्स इमाओ जाइओ सव्वओ सुपडिलेहियाओ भवंति, आघाइ से नाणमणेलिसं, से किट्टइ तेसिं समुट्ठियाणं निक्खित्तदण्डाणं समाहियाणं पन्नाणमंताणं इह मुत्तिमग्गं, एवं (अवि) एगे महावीरा विप्परिक्कमंति, पासह एगे अवसीयमाणे अणत्तपन्ने से बेमि, से जहावि (सेवि) कुंमे हरए विणिविट्ठचित्ते पच्छन्नपंलासे उम्मग्गं से नो लहइ भंजगा इव संनिवेसं नो चयंति एवं (अवि) एगे अणेगरूवेहिं कुलेहिं जाया रूवेहिं सत्ता कलुणं थणंति नियाणओ ते न लभंति मुक्खं, अह पास



२०

तेहिं कुलेहिं आयत्ताए जाया,—गंडी अहवा कोढी. गयंसी अवमारियं। काणियं झिमियं चेव, कुणियं खुज्जियं तहा ॥१४॥ उदरिं च पास मूयं च, सूणीयं च गिलासणिं। वेवइं पीढसप्पिं च. सिलिवयं महुमेहणिं ॥१५॥ सोलस एए रोगा, अक्खाया अणुपुव्वसो। अह णं फुसंति आयंका. फासा य असमंजसा ॥१६॥ मरणं तेसिं संपेहाए उववायं चवणं च नच्चा, परियागं च संपेहाए (सू. १७३)

स्वर्गापवर्गौ तत्कारणानि च तथा संसारं तत्कारणानि च अवबुध्यमानोऽनावारकज्ञानसद्भावाद् 'इहे'ति मर्त्यलोके मानवेषु विपयभूतेषु धर्म्ममाख्याति स नरो, भवोपग्राहिकर्म्मसद्भावात् मनुष्यभावव्यवस्थितः सन् धर्म्ममाचष्टे, न पुनर्यथा शाक्यानां कुड्यादिभ्योऽपि धर्म्मदेशनाः प्रादुष्यन्ति यथा वा वैशेषिकाणामुलूकभावेन पदार्थाविर्भावनम् एवमस्माकं न, कथं ?—घातिकर्म्मक्षये समुत्पन्नदिव्यज्ञानो मनुष्यभावापन्न एवं कृतार्थोऽपि सत्त्वहिताय सदेवमनुजायां पर्षदि कथयतीति। किं तीर्थकर एव धर्म्ममाचष्टे उतान्योऽपि ?, अन्योऽपि यो विशिष्टज्ञानः सम्यक्पदार्थपरिच्छेदी स धर्माविर्भावनं करोतीति दर्शयितुमाह—यस्यातीन्द्रियज्ञानिनः श्रुतकेवलिनो वा 'इमाः' शस्त्रपरिज्ञायां साधितत्वात् प्रत्यक्षवाचिनेदमाऽभिहिताः 'जातयः' एकेन्द्रियादयः 'सर्वतः' सर्वैः प्रकारैः सूक्ष्मबादरपर्याप्तकापर्याप्तकादिभिः सुष्ठु—शङ्कादिव्युदासेन 'प्रत्युपेक्षिताः' प्रति उप—सामीप्येन ईक्षिताः—ज्ञाता भवन्ति स धर्म्म-

५

१०

माचष्टे नापर इति । इदमेवाह–'आख्याति' कथयति 'स' तीर्थकृत् सामान्यकेवली अपरो वाऽतिशयज्ञानी श्रुतकेवली वा, किमाख्याति ?–'ज्ञानं' ज्ञायन्ते–परिच्छिद्यन्ते जीवादयः पदार्थाः येन तज्ज्ञानं–मत्यादि पञ्चधा, किम्भूतं ज्ञानमाख्याति ?–'अनीदृशं' नान्यत्रेदृशमस्तीत्यनीदृशं, यदिवा सकलसंशयापनयनेन धर्म्ममाचक्षाण एव स आत्मनो ज्ञानमनन्यसदृशमाख्याति । केषां पुनः स धर्म्ममाचष्ट इत्यत आह–'स' तीर्थकृद्गणधरादिः 'कीर्त्तयति' यथावस्थितान् भावान् प्रतिपादयति 'तेषां' धर्म्मचरणाय सम्यगुत्थितानां, यदिवा उत्थिता द्रव्यतो भावतश्च, तत्र द्रव्यतः शरीरेण भावतो ज्ञानादिभिः, तत्र स्त्रियः समवसरणस्था उभयथाऽप्युत्थिताः शृण्वन्ति, पुरुषास्तु द्रव्यतो भाज्याः, भावोत्थितानां तु धर्म्ममावेदयति, उत्तिष्ठासूनां च देवानां तिरश्चां च, येऽपि कौतुकादिना शृण्वन्ति तेभ्योऽप्याचष्टे, भावसमुत्थितान् विशिशेषयिषुराह–निक्षिप्ताः–संयमिताः मनोवाक्कायरूपाः प्राण्युपमर्दकारित्वाद्दण्डा इव दंडा यैस्ते तथा तेषां निक्षिप्तदण्डानां, तथा 'समाहिताणं' सम्यग् आहिताः–तपःसंयम उद्युक्ताः समाहिता–अनन्यमनस्कास्तेषां, तथा प्रकर्षेण ज्ञायतेऽनेनेति प्रज्ञानं तद्वतां–सश्रुतिकानाम् 'इह' अस्मिन् मनुष्यलोके 'मुक्तिमार्गं' ज्ञानदर्शनचारित्रात्मकं, कीर्त्तयतीति सम्बन्धः । तस्य च तीर्थकृतः साक्षाद्धर्ममावेदयतः केचन लघुकर्म्माणस्तथैव प्रतिपद्य धर्मचरणायोद्यच्छन्ति अपरे त्वन्यथेत्येतत्प्रतिपादयितुमाह–अपिशब्दश्चार्थे, चशब्दश्च वाक्योपन्यासार्थे, एवं च तीर्थकृताऽऽवेदिते सत्येके–लब्धकर्म्मविवरा विविधं संयमसङ्ग्रामशिरसि पराक्रमन्ते, परान् वा–इन्द्रियकर्म्मरिपून् आक्रमन्ते पराक्रमन्त इति । एतद्विपर्ययमाह–साक्षात्तीर्थंकरे सकलसंशयच्छेत्तरि धर्म्ममावेदयति गत्येकान् प्रबलमोहोदयावृतान् संयमेऽवसीदतः पश्यत यूयं, किम्भूतानित्याह–नात्मने हिता प्रज्ञा येषां ते अनात्मप्रज्ञास्तानिति, कुतः पुनः संयमानुष्ठानेऽवमीदन्ति इत्यारेकायां सोऽहं ब्रवीमि । अत्र दृष्टान्तद्वारेण सोपपत्ति किं कारणमित्याह–

धर्मकथाऽर्हाः

१५

२०

॥२११॥

२६

सेशब्दस्तच्छब्दार्थे, अपिशब्दश्चार्थे, स च वाक्योपन्यासार्थः, तद्यथा च कूर्म्मो महाह्रदे विनिविष्टं चित्तं यस्यासौ विनिविष्टचित्तो-गार्द्ध्यमुपगतः पलाशैः-पत्रैः प्रच्छन्नः पलाशप्रच्छन्नः, सूत्रे तु प्राकृतत्वाद्व्यत्ययः, 'उम्मग्गं'ति विवरं उन्मज्जयतेऽनेनेति वोन्मज्ज्यम्, ऊर्द्ध्वं वा मार्गमुन्मार्गं, सर्वथा अरन्ध्रमित्यर्थः, तदसौ न लभत इत्यक्षरार्थः। भावार्थस्त्वयम्-कश्चिद् ह्रदो योजनशतसहस्रविस्तीर्णः प्रचलशेवालघनकठिनवितानाच्छादितो नानारूपकरिमकरमत्स्यकच्छपादिजलचराश्रयः, तन्मध्ये चैकं विस्रसापरिणामापादितं कच्छपग्रीवामात्रप्रमाणं विवरमभूत्, तत्र चैकेन कूर्म्मेण निजयूथात् प्रभ्रष्टेन वियोगाकुलतयेतस्ततश्च शिरोधरां प्रक्षिपता कुतश्चिनथाविधभवितव्यतानियोगेन तद्रन्ध्रे ग्रीवानिर्गमनमाप्तं, तत्र चासौ शरच्चन्द्रचन्द्रिकया क्षीरोदसलिलप्रवाहकल्पयोपशोभितं विकचकुमुदनिकरकृतोपचारमिव तारकाकीर्णं नभस्तलमीक्षाञ्चक्रे, दृष्ट्वा चातीव मुमुदे, आसीच्चास्य मनसि-यदि तानि मद्वर्ग्याण्येतत्स्वर्गदेश्यमदृष्टपूर्वं मनोरथानामप्यविषयभूतं पश्यन्ति ततः शोभनमापद्यत इत्येतदवधार्य तूर्णमन्वेषणाय बन्धूनामितश्चेतश्च बभ्राम, अवाप्य च निजान् पुनरपि तद्विवरान्वेषणार्थं सर्वतः पर्यटति, न च तद्विवरं विस्तीर्णतया ह्रदस्य प्रचुरतया यादसामीक्षते, तत्रैव च विनाशमुपयात(ति)इति। अस्यायमर्थोपनयः-संसारह्रदे जीवकूर्म्मः कर्मशेवालविवरतो मनुष्यार्यक्षेत्रसुकुलोत्पत्तिमभ्यक्त्वावमाननभस्तलमासाद्य मोहोदयात् ज्ञात्यर्थं विषयोपभोगाय वा तदनुष्ठानविकलो न सफलतां नयति, तत्त्यागे कुतः पुनः संसारह्रदान्तर्वर्त्तिनस्तदवाप्तिः?, तस्मादवाप्य भवशतदुरापं कर्म्मविवरभूतं सम्यक्त्वं क्षणमप्येकं तत्र न प्रमादवता भाव्यमिति तात्पर्यार्थः। पुनरपि संसारानुषङ्गिणां दृष्टान्तान्तरमाह-'भञ्जगा' वृक्षास्त इव शीतोष्णप्रकम्पनच्छेदनशाखाकर्षणक्षोभामोटनभञ्जनरूपानुपद्रवान् सहमाना अपि 'सन्निवेशं' स्थानं कर्म्मपरतया न त्यजन्ति, एवमित्यादिना दार्ष्टान्तिकमर्थं दर्शयति-'एव'मिति वृक्षोपमया 'अपिः'

सम्भावने, 'एके' कर्म्मगुरवोऽनेकरूपेषु कुलेषूच्चावचेषु जाता धर्म्मचरणयोग्या अपि रूपेषु चक्षुरिन्द्रियानुकूलेषु उपलक्षणार्थत्वाच्छब्दादिषु च विषयेषु 'सक्ताः' अध्युपपन्नाः शारीरमानसदुःखदुःखिता राजोपद्रवोपद्रुताः अग्निदाहदग्धसर्वस्वा नानानिमित्ताऽऽहिताऽऽधयोऽपि न सकलदुःखावासं गृहवासं कर्म्मनिघ्नास्त्यक्तुमलम्, अपि तु तत्स्था एव तेषु तेषु व्यसनोपनिपातेषु सत्सु 'करुणं स्तनन्ति' दीनमाक्रोशन्ति, तद्यथा–हा तात! हा मातः हा दैव! न युज्यते भवत एवंविधेऽवसरे एवम्भूतं व्यसनमापादयितुं, तदुक्तम्—"किमिदमचिन्तितमसदृशमनिष्टमतिकष्टमनुपमं दुःखम्। सहसैवोपनतं मे नैरयिकस्येव सत्त्वस्य? ॥१॥" इत्यादि, यदिवा रूपादिविषयासक्ता उपचितकर्म्माणो नरकादिवेदनामनुभवन्तः करुणं स्तनन्तीति, न च करुणं स्तनन्तोऽप्येतस्मात् दुःखान्मुच्यन्ते इत्येतद्दर्शयितुमाह–दुःखस्य निदानम्–उपादानं कर्म्म ततस्ते विलपन्तोऽपि न लभन्ते 'मोक्षं' दुःखापगमं मोक्षकारणं वा संयमानुष्ठानमिति। दुःखविमोक्षाभावे च यथा नानाव्याध्युपसृष्टाः संसारोदरे प्राणिनो विवर्त्तन्ते तथा दर्शयितुमाह—'अथ' इति वाक्योपन्यासार्थे पश्य त्वं तेषूच्चावचेषु कुलेषु, आत्मत्वाय–आत्मीयकर्म्मानुभवाय जाताः, तदुदयाच्चेमां अवस्थामनुभवन्तीत्याह–षोडशरोगवक्तव्यतानुगतं श्लोकत्रयं, वातपित्तश्लेष्मसन्निपातजं चतुर्द्धा गण्डं, तदस्यास्तीति गण्डी–गण्डमालावानित्यादि, अथवेत्येतत् प्रतिरोगमभिसम्बध्यते, अथवा राजांसी अपस्मारीत्यादि, अथवा तथा–'कुष्ठी' कुष्ठमष्टादशभेदं तदस्यास्तीति कुष्ठी, तत्र सप्त महाकुष्ठानि, तद्यथा–अरुणोदुम्बरनिश्यजिह्वकपालकाकनादपौण्डरीकदद्रुकुष्ठानीति, महत्त्वं चैषां सर्वधात्वनुप्रवेशादसाध्यत्वाच्चेति, एकादश क्षुद्रकुष्ठानि, तद्यथा–स्थूलारुष्क १ महाकुष्ठ २ ककुष्ठ ३ चर्मदल ४ परिसर्प्प ५ विसर्प्प ६ सिध्म ७ विचर्चिका ८ किटिभ ९ पामा १० शतारुक ११ संज्ञानीति, सर्वाण्यप्यष्टादश, सामान्यतः कुष्ठं सर्वं सन्निपातजमपि वातादिदोषोत्कटतया तु भेदभाग्भवतीति।

२१

प्र. आ.
२३४

तथा–राजांसो–राजयक्ष्मा सोऽस्यास्तीति राजांसी, क्षयीत्यर्थः, स च क्षयः सन्निपातजश्चतुर्भ्यः कारणेभ्यो भवति इति, उक्तं च– "त्रिदोषो जायते यक्ष्मा, गदो हेतुचतुष्टयात् । वेगरोधात् क्षयाच्चैव, साहसाद्विषमाशनात् ॥१॥" तथा—अपस्मारो वातपित्तश्लेष्म-सन्निपातजश्चतुर्द्धा, तद्वानपगतसदसद्विवेकः भ्रममूर्च्छादिकामवस्थामनुभवति प्राणीति, उक्तं च–"भ्रमावेशः ससंरम्भो, द्वेषोद्रेको हृतस्मृतिः। अपस्मार इति ज्ञेयो, गदो घोरश्चतुर्विधः ॥१॥" तथा 'काणियं'ति अक्षिरोगः, स च द्विधा–गर्भगतस्योत्पद्यते जातस्य च, तत्र गर्भस्थस्य दृष्टिभागमप्रतिपन्नं तेजो जात्यन्धं करोति, तदेवैकाक्षिगतं काणं विधत्ते, तदेव रक्तानुगतं रक्ताक्षं पित्तानुगतं पिङ्गाक्षं श्लेष्मानुगतं शुक्लाक्षं वातानुगतं विकृताक्षं, जातस्य च वातादिजनितोऽभिष्यन्दो भवति, तस्माच्च सर्वे रोगाः प्रादुष्ष्यन्तीति, उक्तं च– "वातात्पित्तात्कफाद्रक्तादभिष्यन्दश्चतुर्विधः। प्रायेण जायते घोरः, सर्वनेत्रामयाकरः ॥१॥" इति, तथा–"झिमियं'ति जाड्यता सर्वशरीरावयवानामवशित्वमिति, तथा 'कुणियं'ति गर्भाधानदोषाद् हस्वैकपादो न्यूनैकपाणिर्वा कुणिः, तथा 'खुजियं'ति कुब्जं पृष्ठादावस्यास्तीति कुब्जी, मातापितृशोणितशुक्रदोषेण गर्भस्थदोषोद्भवाः कुब्जवामनकादयो दोषा भवन्तीति, उक्तं च–"गर्भे वातप्रकोपेन, दौर्हृदे वाऽपमानिते । भवेत् कुब्जः कुणिः पङ्गुर्मूको मन्मन एव वा ॥१॥" मूको मन्मन एवेत्येतदेकान्तरिते सुखदोषे लगनीयमिति । तथा–'उदरिं च'त्ति चः समुच्चये,वातपित्तादिसमुत्थमष्टधोदरं,तदस्यास्तीत्युदरी, तत्र जलोदर्यसाध्यः, शेषास्त्वचि-रोत्थिताः साध्या इति, ते चामी भेदाः–"पृथक् समस्तैरपि चानिलाद्यैः, प्लीहोदरं बद्धगुदं तथैव । आगन्तुकं सप्तममष्टमं तु, जलो-दरं चेति भवन्ति तानि ॥१॥" इति, तथा 'पास मूयं च'त्ति पश्य–अवधारय मूकं मन्मनभाषिणं वा. गर्भदोषादेव जातं तदुत्तरकालं

५

१०

१ अपगतः स्मारः स्मरणं यस्मात् सः अपस्मारः, तस्मिन् सति तद्रोगिणः सर्वविषया स्मृतिः नश्यति.

च, पञ्चपष्टिर्मुखे रोगाः सप्तस्वायतनेषु जायन्ते, तत्रायतनानि ओष्ठौ दन्तमूलानि दन्ता जिह्वा तालु कण्ठः सर्वाणि चेति, तत्राप्योष्ठयोः पञ्चदश दन्तमूलेषु अष्टौ दन्तेषु पञ्च जिह्वायां नव तालुनि सप्तदश कण्ठे त्रयः सर्वेष्वायतनेष्विति, 'खणियं च' त्ति शूनत्वं-श्वयथुर्वातपित्तश्लेष्मसन्निपातरक्ताभिघातजोऽयं षोढेति, उक्तं च-"शोफः स्यात् षड्विधो घोरो, दोषैरुत्सेधलक्षणः। व्यस्तैः समस्तैश्चापीह, तथा रक्ताभिघातजः ॥१॥" इति, तथा 'गिलासणिं'ति भस्मको व्याधिः, स च वातपित्तोत्कटतया श्लेष्मन्यूनतयोपजायत इति, तथा 'वेवइं'ति वातसमुत्थः शरीरावयवानां कम्प इति, उक्तं च-"प्रकामं वेपते यस्तु, कम्पमानश्च गच्छति। कलापखञ्जं तं विद्यान्मुक्तसन्धिनिबन्धनम् ॥१॥" इति, तथा 'पीढसप्पिं च'त्ति जन्तुर्गर्भदोषात् पीठसर्पित्वेनोत्पद्यते, जातो वा कर्म्मदोषाद्भवति, स किल पाणिगृहीतकाष्ठः प्रसर्पतीति, तथा 'सिलिवयं'ति श्लीपदं-पादादौ काठिन्यं, तद्यथा-प्रकुपितवातपित्तश्लेष्माणोऽधः प्रपन्ना वङ्क्ष्णो(वंक्षो) रुजङ्घास्ववतिष्ठमानाः कालान्तरेण पादमाश्रित्य शनैः शनैः शोफमुपजनयन्ति तच्छ्लीपदमित्याचक्षते, "पुराणोदकभूमिष्ठाः, सर्वर्तुषु च शीतलाः। ये देशास्तेषु जायन्ते, श्लीपदानि विशेषतः ॥१॥ पादयोर्हस्तयोश्चापि, श्लीपदं जायते नृणाम्। कर्णोष्ठनासास्वपि च, केचिदिच्छन्ति तद्विदः ॥२॥" तथा 'महुमेहणिं'ति मधुमेहो-बस्तिरोगः स विद्यते यस्यासौ मधुमेही, मधुतुल्यप्रस्रावबानित्यर्थः, तत्र प्रमेहाणां विंशतिर्भेदाः, तत्रास्यासाध्यत्वेनोपन्यासः, तत्र सर्व एव प्रमेहाः प्रायशः सर्वदोषोत्थास्तथापि वाताद्युत्कटभेदाद्विंशतिर्भेदा भवन्ति, तत्र कफाद्दश षट् पित्तात् वातजाश्चत्वार इति, सर्वेऽपि चैतेऽसाध्यावस्थायां मधुमेहत्वमुपयान्तीति, उक्तं च-"सर्व एव प्रमेहास्तु, कालेनाप्रतिकारिणः। मधुमेहत्वमायान्ति, तदाऽसाध्या भवन्ति ते ॥१॥" इति, तदेवं षोडशाप्येते-अनन्तरोक्ताः 'रोगा' व्याधयो व्याख्याताः 'अनुपूर्वशो' अनुक्रमेण 'अथ' अनन्तरं 'णं' इति वाक्याल-

षोडश-
१५
रोगाः

२०

॥२१३॥
२७

ङ्गारे 'स्पृशन्ति' अभिभवन्ति' 'आतङ्का' आशुजीवितापहारिणः शूलादयो व्याधिविशेषाः 'स्पर्शाश्च' गाढप्रहारादिजनिता दुःखविशेषाः 'असमञ्जसाः' क्रमयौगपद्यनिमित्तानिमित्तोत्पन्नाः स्पृशन्तीति सम्बन्धः । न रोगातङ्कैरेव केवलैर्मुच्यते, अन्यदपि यत् संसारिणोऽधिकं स्यात्तदाह–तेषां कर्म्मगुरूणां गृहवासासक्तमनसामसमञ्जसरोगैः क्लेशितानां 'मरणं' प्राणत्यागलक्षणं 'संप्रेक्ष्य' पर्यालोच्य पुनरुपपातं च्यवनं च देवानां कर्मोदयात् सञ्चितं ज्ञात्वा तद्विधेयं येन गण्डादिरोगाणां मरणोपपातयोश्चात्यन्तिकोऽभावो भवति, किं च–कर्म्मणां मिथ्यात्वाविरतिप्रमादकषाययोगाहितानामबाधोत्तरकालमुदयावस्थायां परिपाकं च 'सम्प्रेक्ष्य' शारीरमानसदुःखोत्पादकं पर्यालोच्य तदुच्छित्तये यतितव्यं ॥ स च करुणं स्तनन्तीत्यादिना ग्रन्थेनोपपातच्यवनावसानेनावेदितोऽपि पुनरपि तद्गरीयस्त्वख्यापनाय प्राणिनां संसारे निर्वेदवैराग्योत्पत्त्यर्थमभिधित्सुकाम आह—



तं सुणेह जहा तहा संति पाणा अंधा तमसि वियाहिया, तमेव सइं असइं अइअच्च उच्चावयफासे पडिसंवेएइ, बुद्धेहिं एयं पवेइयं–संति पाणा वासगा रसगा उदए उदएचरा आगासगामिणो पाणा पाणे किलेसंति, पास लोए महब्भयं (सू० १७४)



'तं' कर्म्मविपाकं यथावस्थितं तथैव ममावेदयतः शृणुत यूयं, तद्यथा–नारकतिर्यङ्नरामरलक्षणाश्चतस्रो गतयः, तत्र नरकगतौ चत्वारो योनिलक्षाः पञ्चविंशतिकुलकोटिलक्षाः त्रयस्त्रिंशत्सागरोपमाण्युत्कृष्टा स्थितिः, वेदनाश्च परमाधार्मिकपरस्परोदीरितस्वाभाविकदुःखानां नारकाणां या भवन्ति ता वाचामगोचराः, यद्यपि लेशतश्चिकथयिषोरभिधेयविषयं न वागवतरति तथाऽपि कर्म्मविपा-

कारेदनेन प्राणिनां वैराग्यं यथा स्यादित्येवमर्थं श्लोकैरेव किञ्चिदभिधीयते—"श्रवणलवनं नेत्रोद्धारं करक्रमपाटनं, हृदयदहनं नासाच्छेदं प्रतिक्षणदारुणम् । कटविदहनं तीक्ष्णापातत्रिशूलविभेदनं, दहनवदनैः कङ्कैर्घोरैः समन्तविभक्षणम् ॥१॥ तीक्ष्णैरसिभिर्दीप्तैः कुन्तैर्विषमैः परश्वधैश्चक्रैः । परशुत्रिशूलमुद्गरतोमरवासीमुषण्ढीभिः ॥२॥ सम्भिन्नतालुशिरसश्छिन्नभुजाश्छिन्नकर्णनासौष्ठाः । भिन्नहृदयोदरान्त्रा भिन्नाक्षिपुटाः सुदुःखार्त्ताः ॥३॥ निपतन्त उत्पतन्तो विचेष्टमाना महीतले दीनाः । नेक्षन्ते त्रातारं नैरयिकाः कर्म्मपटलान्धाः ॥४॥ छिद्यन्ते कृपणाः कृतान्तपरशोस्तीक्ष्णेन धारासिना, क्रन्दन्तो विषवीचि(वच्छ्र)भिः परिवृताः संभक्षणव्यापृतैः । पाट्यन्ते क्रकचेन दारुवदसिना(वदनैः)प्रच्छिन्नबाहुद्वयाः, कुम्भीषु त्रपुपानदग्धतनवो मूषासु चान्तर्गताः ॥५॥ भृज्ज्यन्ते ज्वलदम्बरीषहुतभुग्ज्वालाभिराराविणो, दीप्ताङ्गारनिभेषु वज्रभवनेष्वङ्गारकेषूत्थिताः । दह्यन्ते विकृतोर्ध्वबाहुवदनाः क्रन्दन्त आर्त्तस्वनाः, पश्यन्तः कृपणा दिशो विशरणास्त्राणाय को नो भवेत् ? ॥६॥" इत्यादि । तथा तिर्यग्गतौ पृथिवीकायजन्तूनां सप्तयोनिलक्षा द्वादश कुलकोटिलक्षाः स्वकायपरकायशस्त्राणि शीतोष्णादिका वेदनाः, तथाऽप्कायस्यापि सप्त योनिलक्षाः सप्त च कुलकोटिलक्षाः वेदना अपि नानारूपा एव, तथा तेजस्कायस्य सप्त योनिलक्षाः त्रयः कुलकोटीलक्षाः पूर्ववद्वेदनादिकं, वायोरपि सप्त योनिलक्षाः सप्त च कुलकोटीलक्षाः वेदना अपि शीतोष्णादिजनिता नानारूपा एव, प्रत्येकवनस्पतेर्दश योनिलक्षाः साधारणवनस्पतेश्चतुर्दश उभयरूपस्याप्यष्टाविंशतिकुलकोटीलक्षाः, तत्र च गतोऽसुमाननन्तमपि कालं छेदनभेदनमोटनादिजनिता नानारूपा वेदना अनुभवन्नास्ते, विकलेन्द्रियाणामपि द्वौ द्वौ योनिलक्षौ कुलकोट्यस्तु द्वीन्द्रियाणां सप्त त्रीन्द्रियाणामष्टौ चतुरिन्द्रियाणां नव, दुःखं तु क्षुत्पिपासाशीतोष्णादिजनितमनेकधाऽध्यक्षमेव तेषामिति, पञ्चेन्द्रियतिरश्चामपि चत्वारो योनिलक्षाः कुलकोटीलक्षास्तु जलचराणामर्द्धत्रयोदश

प्र. आ.
२३६

२०

॥२१४॥
२७

पक्षिणां द्वादश चतुष्पदानां दश उरःपरिसर्पाणां दश भुजपरिसर्पाणां नव, वेदनाश्च नानारूपा याः तिरश्चां सम्भवन्ति ताः प्रत्यक्षा एवेति, उक्तं च–"क्षुत्तृड्हिमात्युष्णभयार्दितानां, पराभियोगव्यसनातुराणाम् । अहो! तिरश्चामतिदुःखितानां, सुखानुषङ्गः किल वार्त्तमेतत् ॥१॥" इत्यादि । मनुष्यगतावपि चतुर्दश योनिलक्षा द्वादश कुलकोटीलक्षाः, वेदनास्त्वेवम्भूता इति–"दुःखं स्त्रीकुक्षिमध्ये प्रथममिह भवे गर्भवासे नराणां, बालत्वे चापि दुःखं मललुलिततनुस्त्रीपयःपानमिश्रम् । तारुण्ये चापि दुःखं भवति विरहजं वृद्धभावोऽप्यसारः, संसारे रे मनुष्या! वदत यदि सुखं स्वल्पमप्यस्ति किञ्चित् ॥ १ ॥ बाल्यात्प्रभृति च रोगैर्दष्टोऽभिभवश्च यावदिह मृत्युः । शोकवियोगायोगैर्दुर्गतदोषैश्च नैकविधैः ॥२॥ क्षुत्तृड्हिमोष्णानिलशीतदाहदारिद्र्यशोकप्रियविप्रयोगैः । दौर्भाग्यमौर्ख्यानभिजात्यदास्यवैरूप्यरोगादिभिरस्वतन्त्रः ॥ ३ ॥" इत्यादि । देवगतावपि चत्वारो योनिलक्षाः षड्विंशतिः कुलकोटीलक्षाः, तेषामपीर्ष्याविषादमत्सरच्यवनभयशल्यवितुद्यमानमनसां दुःखानुषङ्ग एव, सुखाभासाभिमानस्तु केवलमिति, उक्तं च–"देवेषु च्यवनवियोगदुःखितेषु, क्रोधेर्ष्यामदमदनातितापितेषु । आर्या! नस्तदिह विचार्य संगिरन्तु, यत्सौख्यं किमपि निवेदनीयमस्ति ॥१॥" इत्यादि । तदेवं चतुर्गतिपतिताः संसारिणो नानारूपं कर्म्मविपाकमनुभवन्तीत्येतदेव सूत्रेण दर्शयितुमाह–'सन्ति' विद्यन्ते 'प्राणाः' प्राणिनः 'अन्धाः' चक्षुरिन्द्रियविकलाः, भावान्धा अपि सद्विवेकविकलाः, 'तमसि' अन्धकारे नरकगत्यादौ भावान्धकारेऽपि च मिथ्यात्वाविरतिप्रमादकषायादिके कर्म्मविपाकापादिते व्यवस्थिता व्याख्याताः। किं च–तामेवावस्थां कुष्ठाद्यापादितामेकेन्द्रियापर्याप्तकादिकां वा सकृदनुभूय कर्म्मोदयात्तामेव असकृत्–अनेकशोऽतिगत्योच्चावचान्–तीव्रमन्दान् स्पर्शान्–दुःखविशेषान् 'प्रतिसंवेदयति' अनुभवति । एतच्च तीर्थकृद्भिरावेदितमित्याह–'बुद्धैः' तीर्थकृद्भिः 'एतत्' अनन्तरोक्तं प्रकर्षेणादौ वा वेदितं प्रवेदितम् । एतच्च वक्ष्य-

५

१०

माणं प्रवेदितमित्याह—'सन्ति' विद्यन्ते प्राणाः' प्राणिनो 'वासकाः' 'वासृ शब्दकुत्सायां' वासन्तीति वासकाः–भाषालब्धिसम्पन्ना द्वीन्द्रियादयः, तथा रसमनुगच्छन्तीति रसगाः–कटुतिक्तकषायादिरसवेदिनः, संज्ञिन इत्यर्थः, इत्येवम्भूतः कर्म्मविपाकः संसारिणां सम्प्रेक्ष्य इति सम्बन्धः, तथा—'उदके' उदकरूपा एकेन्द्रिया जन्तवः पर्याप्तकापर्याप्तकभेदेन व्यवस्थिताः, तथा उदके चरन्तीत्युदकचराः–पूतरकच्छेदनकलोड्डणकत्रसा मत्स्यकच्छपादयः, तथा स्थलजा अपि केचन जलाश्रिता महोरगादयः पक्षिणश्च केचन तद्गतवृत्तयो द्रष्टव्याः, अपरे तु आकाशगामिनः पक्षिणः, इत्येवं सर्वेऽपि 'प्राणाः' प्राणिनोऽपरान् प्राणिनः आहाराद्यर्थं मत्सरादिना वा 'क्लेशयन्ति' उपतापयन्ति । यद्येवं ततः किमित्यत आह—'पश्य' अवधारय 'लोके' चतुर्दशरज्ज्वात्मके, कर्म्मविपाकात्सकाशात् 'महद्भयं' नानागतिदुःखक्लेशविपाकात्मकमिति ॥ किमिति कर्म्मविपाकान्महद्भयमित्याह—



बहुदुक्खा हु जन्तवो, सत्ता कामेसु माणवा, अबलेण वहं गच्छन्ति सरीरेणं पभंगुरेण, अट्टे से बहुदुक्खे इइ बाले पकुव्वइ, एए रोगा बहू नच्चा आउरा परियावए नालं पास, अलं तवेएहिं, एयं पास मुणी! महब्भयं नाइवाइज्ज कंचणं (सू० १७५)

बहूनि दुःखानि कर्म्मविपाकापादितानि येषां जन्तूनां ते तथा, हुः यस्मादेवं तस्मात्तत्राप्रमादवता भाव्यं। किमित्येवं भूयो भूयोऽपदिश्यत इत्यत आह–यस्मादनादिभवाभ्यासेनागणितोत्तरपरिणामाः 'सक्ताः' गृद्धाः 'कामेषु' इच्छामदनरूपेषु 'मानवाः' पुरुषा इत्यतो न पुनरुक्तदोषानुषङ्गः। कामासक्ताश्च यदवाप्नुवन्ति तदाह–बलरहितेन–निःसारेण तुषमुष्टिकल्पेनौदारिकेण शरीरेण 'प्रभ-

दुरेण' मत एव भङ्गशीलेन तत्सुखाधानाय कर्म्मोपचित्याऽनेकशो वधं गच्छन्ति, कः पुनरसौ विपाककटुकेषु कामेषु यो रतिं विद-
ध्यादित्याह–मोहोदयादार्त्तः-अगणितकार्याकार्यविवेकः सोऽसुमान् बहु दुःखं प्राप्तव्यमनेनेति बहुदुःखः इति एवं कामानुषङ्गं प्राणिनां
क्लेशं वा 'बालो' रागद्वेषाकुलितः प्रकर्षेण करोति प्रकरोति, तज्जनितकर्म्मविपाकाच्च अनेकशो वधं गच्छति, यदिवा रोगेषु सत्सु
इत्येतद्वक्ष्यमाणं बालः–अज्ञः प्रकरोति, तदाह–एतान्–गण्डकुष्ठराजयक्ष्मादीन् रोगान् बहूनुत्पन्नानिति ज्ञात्वा तद्रोगवेदनया आतुराः
सन्तः चिकित्सार्थं प्राणिनः परितापयेयुः, 'लावकादिपिशिताशिनः किल क्षयव्याध्युपशमः स्यादि'त्यादिवाक्याकर्णनाज्जीविता-
शया गरीयस्यपि प्राण्युपमर्दे प्रवर्त्तेरन्, नैतदवधारयेयुः यथा–स्वकृतावन्ध्यकर्म्मविपाकोदयादेतत्, तदुपशमाच्चोपशमः, प्राण्युपमर्द-
चिकित्सया च किल्बिषानुषङ्ग एवेति, एतदेवाह–पश्यैतद्विमलविवेकावलोकनेन यथा 'नालं' न समर्थाः चिकित्साविधयः कर्म्मो-
दयोपशमं विधातुं, यद्येवं ततः किं कर्त्तव्यमिति दर्शयति—'अलं' पर्याप्तं 'तव' सदसद्विवेकिनः 'एभिः' पापोपादानभूतैश्चिकि-
त्साविधिभिरिति। किं च–'एतत्' प्राण्युपमर्दादिकं 'पश्य' अवधारय हे 'मुने' ' जगत्त्रयस्वभाववेदिन्, महद्–बृहद् भयहेतुत्वाद्भयं,
यद्येवं ततः किं कुर्यादिति दर्शयति—'नातिपातयेत्' न हन्यात् कञ्चन प्राणिनं, यत एकस्मिन्नपि प्राणिनि–हन्यमानेऽष्टप्रकारमपि
कर्म बध्यते, तच्चानुत्तारसंसारगमनायेत्यतो महाभयमिति, यदिवा 'एए रोगे बहू णच्चे'त्यादिको ग्रन्थः कामानधिकृत्य नेयः, एतान्
रोगरूपान् कामान् बहून् ज्ञात्वा आसेवनाप्रज्ञयेति आतुराः–कामेच्छान्धा अपरान् प्राणिनः परितापयेयुः इत्यादिना प्रक्रमेणेति ॥
तदेवं रोगकामातुरतया सावद्यानुष्ठानप्रवृत्तानामुपदेशदानपुरस्सरं महाभयं प्रदर्श्य तद्विपर्यस्तानां सत्स्वरूपां गुणवत्तां दिदर्शयिषुः
प्रस्तावमारचयन्नाह—

५

१०

आयाण भो सुस्सूस ! भो धूयवायं पवेयइस्सामि—इह खलु अत्तत्ताए तेहिं तेहिं कुलेहिं अभिसेएण अभिसंभूया अभिसंजाया अभिनिव्वुडा अभिसंवुड्ढा अभिसंबुद्धा अभिनिक्कंता अणुपुव्वेण महामुणी (सू. १७६)



'भोः' इति शिष्यामन्त्रणं, यदहमुत्तरत्रावेदयिष्यामि भवतस्तद् 'आजानीहि' अवधारय, 'शुश्रूषस्व' श्रवणेच्छां विधेहि 'भोः' इति पुनरप्यामन्त्रणमर्थगरीयस्त्वख्यापनाय, नात्र भवता प्रमादो विधेयो, धूतवादं प्रवेदयिष्याम्यहं, धूतम्—अष्टप्रकारकर्म्मधूननं ज्ञातिपरित्यागो वा तस्य वादो धूतवादः तं प्रवेदयिष्यामि, अवहितेन च भवता भाव्यमिति। नागार्ज्जुनीयास्तु पठन्ति—"धुतोवायं पवेयंति" अष्टप्रकारकर्म्मधूननोपायं वा प्रवेदयन्ति तीर्थकरादयः। कोऽसावुपाय इत्यत आह—'इह' अस्मिन् संसारे 'खलुः' वाक्यालङ्कारे आत्मनो भाव आत्मता—जीवास्तिता स्वकृतकर्म्मपरिणतिर्वा तयाऽभिसम्भूताः—सञ्जाताः, न पुनः पृथिव्यादिभूतानां कायाकारपरिणामतया ईश्वरप्रजापतिनियोगेन वेति, तेपु तेपूच्चावचेषु कुलेषु यथास्वं कर्म्मोदयापादितेषु 'अभिषेकेण' शुक्रशोणितनिषेकादिक्रमेणेति, तत्रायं क्रमः—सप्ताहं कललं विद्यात्ततः सप्ताहमर्बुदम्। अर्बुदाज्जायते पेशी, पेशीतोऽपि घनं भवेत् ॥१॥" इति, तत्र यावत्कललं तावदभिसम्भूताः, पेशीं यावदभिसञ्जाताः, ततः साङ्गोपाङ्गस्नायुशिरोरोमादिक्रमाभिनिवर्त्तनादभिनिर्वृत्ताः, ततः प्रसूताः सन्तोऽभिसंवृद्धाः, धर्म्मश्रवणयोग्यावस्थायां वर्त्तमाना धर्म्मकथादिकं निमित्तमासाद्योपलब्धपुण्यपापतयाऽभिसम्बुद्धाः, ततः सदसद्विवेकं जानानाः अभिनिष्क्रान्ताः, ततोऽधीताचारादिशास्त्रास्तदर्थभावनोपबृंहितचरणपरिणामा अनुपूर्व्वेण शिक्षकगीता-

र्थक्षपकपरिहारविशुद्धिकैकाकिविहारिजिनकल्पिकावसाना मुनयोऽभूवन्निति ॥ अभिसम्बुद्धं च प्रवित्रजिषुमुपलभ्य यन्निजाः कुर्युस्तद्दर्शयितुमाह—



तं परिक्कमंतं परिदेवमाणा मा चयाहि इय ते वयंति–छंदोवणीया अज्झोववन्ना अक्कंदकारी जणगा रुयंति, अतारिसे मुणी (ण य) ओहं तरए जणगा जेण विप्पजढा, सरणं तत्थ नो समेइ, कहं नु नाम से तत्थ रमइ?, एयं नाणं सया समणुवासिज्जासित्तिबेमि (सू. १७७) धूताध्ययने प्रथम उद्देशकः ६–१ ॥

५

'तम्' अवगततत्त्वं गृहवासपराङ्मुखं महापुरुषसेवितं पन्थानं पराक्रममाणमुपलभ्य मातापितृपुत्रकलत्रादयः परिदेवमाना माऽस्मान् परित्यज 'इति' एतत् ते कृपामापादयन्तो वदन्ति, किं चापरं वदन्तीत्याह–छन्देनोपनीताः छन्दोपनीताः–तवाभिप्रायानुवर्त्तिनस्त्वयि चाभ्युपपन्नाः, तदेवम्भूतानस्मान् माऽवमंस्था इत्येवमाक्रन्दकारिणो 'जनका' मातापित्रादयो जना वा रुदन्ति। एवं च वदेयुरित्याह–न तादृशो मुनिर्भवति, न चौघं–संसारं तरति, येन पाखण्डविप्रलब्धेन 'जनका' मातापित्रादयः 'अपोढाः' त्यक्ता इति। स चावगतसंसारस्वभावो यत्करोति तदाह–न ह्यसावनुरक्तमपि बन्धुवर्गं 'तत्र' तस्मिन्नवसरे शरणं ममेति, न तदभ्युपगमं करोतीत्यर्थः। किमित्यसौ शरणं नैतीत्याह–कथं नु नामासौ 'तत्र' तस्मिन् गृहवासे सर्वनिकारास्पदे नरकप्रतिनिधौ शुभद्वारपरिघे

१०

वत्थं पडिग्गहं कंबलं पायपुंछणं विउसिज्जा, अणुपुव्वेण अणहियासेमाणा परीसहे दुरहियासए, कामे ममायमाणस्स इयाणिं मुहुत्तेण वा अपरिमाणाए भेए, एवं से अंतराएहिं कामेहिं आकेवलिएहिं अवइन्ना चेए (सू. १७९)



केचिद्भवशतकोटिदुरापमवाप्य मानुषं जन्म समासाद्यालब्धपूर्वां संसारार्णवोत्तरणप्रत्यलां बोधिद्रोणीमङ्गीकृत्य मोक्षतरुबीजं सर्वविरतिलक्षणं चरणं पुनर्दुर्निवारतया मन्मथस्य परिप्लवतया मनसो लोलुपतयेन्द्रियग्रामस्यानेकभवाभ्यासापादितविषयमधुरतया प्रबलमोहनीयोदयादशुभवेदनीयोदयासन्नप्रादुर्भावादयशःकीर्त्युत्कटतया अवगणय्याऽऽयतिमविचार्य कार्याकार्यं उररीकृत्य महाव्यसनसागरं साम्प्रतेक्षितयाऽधःकृतकुलक्रमाचारास्तत्त्यजेयुः, तत्त्यागश्च धर्मोपकरणपरित्यागाद्भवतीत्यतस्तद्दर्शयति—वस्त्रमित्यनेन क्षौमिकः कल्पो गृहीतः, तथा 'पतद्ग्रहः' पात्रं 'कम्बलं' और्णिकं कल्पं पात्रनिर्योगं वा 'पादपुञ्छनकं' रजोहरणं, एतानि निरपेक्षतया व्युत्सृज्य कश्चिद्देशविरतिमभ्युपगच्छति, कश्चिद्दर्शनमेवालम्बते, कश्चित्ततोऽपि भ्रश्यति । कथं पुनर्दुर्लभं चारित्रमवाप्य पुनस्तत्त्यजेदित्याह—परीषहान् दुरधिसहनीयान् 'अनुक्रमेण' परिपाट्या यौगपद्येन वोदीर्णाननधिसहमानाः—परीषहैर्भग्ना मोहपरवशतया पुरस्कृतदुर्गतयो मोक्षमार्गं परित्यजन्ति । भोगार्थं त्यक्तवतामपि पापोदयाद्यत्स्यात्तदाह—'कामान्' विरूपानपि 'ममायमाणस्स'त्ति स्वीकुर्वतो भोगाध्यवसायिनोऽन्तरायोदयात् 'इदानीं' तत्क्षणमेव प्रव्रज्यापरित्यागानन्तरमेव भोगप्राप्तिसमनन्तरमेव वा अन्तर्मुहूर्तेन वा कण्डरीकस्येवाहोरात्रेण वा ततोऽप्यूर्ध्वं शरीरभेदो भवत्यपरिमाणाय, एवम्भूत आत्मना सार्द्धं विवक्षितशरीरभेदो भवति



५

१०

रमते ?, कथं गृहवासे द्वन्द्वैकहेतौ विघटितमोहकपाटः सन् रतिं कुर्यादिति ? । उपसंहारमाह–'एतत्' पूर्वोक्तं ज्ञानं सदा आत्मनि 'सम्यगनुवासयेः' व्यवस्थापयेः, इतिरधिकारपरिसमाप्तौ, ब्रवीमीति पूर्ववत् । धूताध्ययनस्य प्रथमोद्देशकः समाप्तः ॥



उक्तः प्रथमोद्देशकः, साम्प्रतं द्वितीय आरभ्यते, अस्य चायमभिसम्बन्धः, इहानन्तरोद्देशके निजकविधूनना प्रतिपादिता, सा नैवं फलवती स्याद् यदि कर्म्मविधूननं स्याद्, अतः कर्म्मविधूननार्थमिदमुपक्रम्यत इत्यनेन सम्बन्धेनायातस्यास्योद्देशकस्यादि सूत्रम्–

१५

**आउरं लोगमायाए चइत्ता पुव्वसंजोगं हिच्चा उवसमं वसित्ता बंभचेरंसि वसु वा अणुवसु वा जाणित्तु धम्मं अहा तहा अहेगे तमचाइ कुसीला (सू. १७८)**

'लोकं' मातापितृपुत्रकलत्रादिकं तमातुरं स्नेहानुषङ्गतया वियोगात् कार्यावसादेन वा यदिवा जन्तुलोकं कामरागातुरम् 'आदाय' ज्ञानेन 'गृहीत्वा' परिच्छिद्य तथा त्यक्त्वा च 'पूर्वसंयोगं' मातापित्रादिसम्बन्धं, तथा 'हित्वा' गत्वा उपशमं उषित्वापि ब्रह्मचर्ये, किम्भूतः सन्निति दर्शयति–वसु–द्रव्यं तद्भूतः, कषायकालिकादिमलापगमाद्वीतराग इत्यर्थः, तद्विपर्ययेणानुवसु, सराग इत्यर्थः, यदिवा वसुः–साधुः अनुवसुः–श्रावकः, तदुक्तम्–"वीतरागो वसुर्ज्ञेयो, जिनो वा संयतोऽथवा। सरागो ह्यनुवसुः प्रोक्तः, स्थविरः श्रावकोऽपि वा ॥१॥" तथा ज्ञात्वा 'धर्म्मं' अपि श्रुतचारित्राख्यं यथा तथाऽवस्थितं धर्म्मं प्रतिपद्याप्यथैके मोहोदयात्तथाभवितव्यतानियोगेन 'तं' धर्म्मं प्रतिपालयितुं न शक्नुवन्ति, किम्भूताः ?–कुत्सितं शीलं येषां ते कुशीला इति, यत एव धर्मपालनाशक्ताः अत एव कुशीलाः ॥ एवम्भूताश्च सन्तः किं कुर्युरित्याह–

२०



२५

वेप-
त्याग
कारणानि

वत्थं पडिग्गहं कंबलं पायपुंछणं विउसिज्जा, अणुपुव्वेण अणहियासेमाणा परीसहे दुरहियासए, कामे ममायमाणस्स इयाणिं मुहुत्तेण वा अपरिमाणाए भेए, एवं से अंतराएहिं कामेहिं आकेवलिएहिं अवइन्ना चेए (सू. १७९)

केचिद्भवशतकोटिदुरापमवाप्य मानुषं जन्म समासाद्यालब्धपूर्वां संसारार्णवोत्तरणप्रत्यलां बोधिद्रोणीमङ्गीकृत्य मोक्षतरुबीजं सर्वविरतिलक्षणं चरणं पुनर्दुर्न्निवारतया मन्मथस्य परिप्लवतया मनसो लोलुपतयेन्द्रियग्रामस्यानेकभवाभ्यासापादितविषयमधुरतया प्रबलमोहनीयोदयादशुभवेदनीयोदयासन्नप्रादुर्भावादयशःकीर्त्युत्कटतया अवगणय्याऽऽयतिमविचार्य कार्याकार्यं उररीकृत्य महाव्यसनसागरं साम्प्रतेक्षितयाऽधःकृतकुलक्रमाचारास्तत्त्यजेयुः, तत्त्यागश्च धर्मोपकरणपरित्यागाद्भवतीत्यतस्तद्दर्शयति—वस्त्रमित्यनेन क्षौमिकः कल्पो गृहीतः, तथा 'पतद्ग्रहः' पात्रं 'कम्बलं' और्णिकं कल्पं पात्रनिर्योगं वा 'पादपुञ्छनकं' रजोहरणं, एतानि निरपेक्षतया व्युत्सृज्य कश्चिद्देशविरतिमभ्युपगच्छति, कश्चिद्दर्शनमेवालम्बते, कश्चित्ततोऽपि भ्रश्यति । कथं पुनर्दुर्लभं चारित्रमवाप्य पुनस्तत्त्यजेदित्याह—परीषहान् दुरधिसहनीयान् 'अनुक्रमेण' परिपाट्या यौगपद्येन वोदीर्णाननधिसहमानाः—परीषहैर्भग्ना मोहपरवशतया पुरस्कृतदुर्गतयो मोक्षमार्गं परित्यजन्ति । भोगार्थं त्यक्तवतामपि पापोदयाद्यत्स्यात्तदाह—'कामान्' विरूपानपि 'ममायमाणस्स' त्ति स्वीकुर्वतो भोगाध्यवसायिनोऽन्तरायोदयात् 'इदानीं' तत्क्षणमेव प्रव्रज्यापरित्यागानन्तरमेव भोगप्राप्तिसमनन्तरमेव वा अन्तर्मुहूर्त्तेन वा कण्डरीकस्येवाहोरात्रेण वा ततोऽप्यूर्ध्वं शरीरभेदो भवत्यपरिमाणाय, एवम्भूत आत्मना सार्द्धं विवक्षितशरीरभेदो भवति

५

१०

'अथ' अनन्तरमेके विशुद्धपरिणामतया आसन्नापवर्गतया 'धर्म्मं' श्रुतचारित्राख्यं 'आदाय' गृहीत्वा वस्त्रपतद्ग्रहादिधर्म्मोपकरणसमन्विता धर्म्मकरणेषु प्रणिहिताः परीषहसहिष्णवः सर्वज्ञोपदिष्टं धर्म्मं चरेयुरिति । अत्र च पूर्वाणि प्रमादसूत्राण्यप्रमादाभिप्रायेण पठितव्यानीति, उक्तं च–"यत्र प्रमादेन तिरोऽप्रमादः, स्याद्वाऽपि यत्नेन पुनः प्रमादः । विपर्ययेणापि पठन्ति तत्र, सूत्राण्यधीकारवशाद्विधिज्ञाः ॥१॥" किम्भूताः पुनर्धर्म्मं चरेयुरित्याह–कामेषु मातापित्रादिके वा लोके न प्रलीयमाना अप्रलीयमानाः–अनभिषक्ता धर्म्मचरणे 'दृढाः' तपःसंयमादौ द्रढिमानमालम्बमाना धर्म्मं चरन्तीति, किं च–सर्वां 'गृद्धिं' भोगकाङ्क्षां दुःखरूपतया ज्ञपरिज्ञया परिज्ञाय प्रत्याख्यानपरिज्ञया परित्यजेत् । तत्परित्यागे गुणमाह–'एष' इति कामपिपासापरित्यागी प्रकर्षेण नतः–प्रह्वः संयमे कर्म्मधुननायां वा महामुनिर्भवति, नापर इति । किं च–'अतिगत्य' अत्येत्य–अतिक्रम्य 'सर्वतः' सर्वैः प्रकारैः 'सङ्गं' सम्बन्धं पुत्रकलत्रादिजनितं कामानुषङ्गं वा, किं भावयेदित्याह–न मम किमप्यस्तीति यत्संसारे पतत आलम्बनाय स्यादिति, तदभावाच्च 'इति' उक्तक्रमेणैकोऽहमस्मिन्–संसारोदरे, न चाहमन्यस्य कस्यचिदिति । एतद्भावनाभावितश्च यत्कुर्यात्तदाह–'अत्र' अस्मिन् मौनीन्द्रे प्रवचने विरतः सन् सावद्यानुष्ठानाद्दशविधचक्रवालसामाचार्यां यतमानः, कोऽसौ ?–'अनगारः' प्रव्रजितः, एकत्वभावनां भावयन्नवमौदर्ये संतिष्ठत इत्युत्तरसूत्रेण सम्बन्धः, एवमेव क्रिया अनन्तरसूत्रेष्वपि लगयितव्येति, किं च–'सर्वतः' द्रव्यतो भावतश्च मुण्डो 'रीयमाणः' संयमानुष्ठाने गच्छन्, किम्भूत इत्याह–यः 'अचेलः' अल्पचेलो जिनकल्पिको वा 'पर्युषितः' संयमे उद्युक्तविहारी अन्तप्रान्तभोजी, तदपि न प्रकामतयेत्याह–'संचिक्खइ' संतिष्ठते अवमौदर्ये । न्यूनोदरतायां वर्त्तमानः सन् कदाचित्प्रत्यनीकतया ग्रामकण्टकैस्तुद्येतेत्येतद्दर्शयितुमाह–'स' मुनिर्वाग्भिराक्रुष्टो वा दण्डादिभिर्हतो वा लुञ्चितो वा केशोत्पाटनतः पूर्वकृत-

येनानन्तेनापि कालेन पुनः पञ्चेन्द्रियत्वं न प्राप्नोति। एतदेवोपसञ्जिहीर्षुराह—'एवं' पूर्वोक्तप्रकारेण 'स' भोगाभिलाषी आन्तरायिकैः कामैः–बहुप्रत्यपायैः न केवलमकेवलं तत्र भवा आकेवलिकाः–सद्वन्द्वाः सप्रतिपक्षा इतियावत् असम्पूर्णा वा, तैः सद्भिरवतीर्णाः संसारं, तान् वा द्वितीयार्थे तृतीया, 'चः' समुच्चये, 'एत' इति भोगाभिलाषिणः, कामैरतृप्ता एव शरीरभेदमत्रामुवन्तीति तात्पर्यार्थः ॥ अपरे त्वासन्नतया मोक्षस्य कथञ्चित्कृतश्चित् कदाचिदवाप्य चरणपरिणामं प्रतिक्षणं लघुकर्म्मतया प्रवर्द्धमानाध्यवसायिनो भवन्तीति दर्शयितुमाह—

अहेगे धम्ममायाय आयाणप्पभिइसु पणिहिए चरे, अप्पलीयमाणे दढे सव्वं गिद्धिं परिन्नाय, एस पणए महामुणी, अइअच्च सव्वओ संगं न महं अत्थित्ति इय एगो अहं, अस्सिं जयमाणे इत्थ विरए अणगारे सव्वओ मुंडे रीयंते, जे अचेले परिवुसिए संचिक्खइ ओमोयरियाए, से आकुट्ठे वा हए वा लुंचिए वा पलियं पकत्थ अदुवा पकत्थ अतहेहिं सद्दफासेहिं इय संखाए एगयरे अन्नयरे अभिन्नाय तितिक्खमाणे परिव्वए जे य हिरी जे य अहिरीमाणा (सू. १८०)

'अथ' अनन्तरमेके विशुद्धपरिणामतया आसन्नापवर्गतया 'धर्म्मं' श्रुतचारित्राख्यं 'आदाय' गृहीत्वा वस्त्रपतद्ग्रहादिधर्म्मोपकरणसमन्विता धर्म्मकरणेषु प्रणिहिताः परीषहसहिष्णवः सर्वज्ञोपदिष्टं धर्म्मं चरेयुरिति। अत्र च पूर्वाणि प्रमादसूत्राण्यप्रमादाभिप्रायेण पठितव्यानीति, उक्तं च–"यत्र प्रमादेन तिरोऽप्रमादः, स्याद्वाऽपि यत्नेन पुनः प्रमादः। विपर्ययेणापि पठन्ति तत्र, सूत्राण्यधीकारवशाद्विधिज्ञाः ॥१॥" किम्भूताः पुनर्धर्म्मं चरेयुरित्याह–कामेषु मातापित्रादिके वा लोके न प्रलीयमाना अप्रलीयमानाः–अनभिषक्ता धर्म्मचरणे 'दृढाः' तपःसंयमादौ द्रढिमानमालम्बमाना धर्म्मं चरन्तीति, किं च–सर्वां 'गृद्धिं' भोगकाङ्क्षां दुःखरूपतया ज्ञपरिज्ञया परिज्ञाय प्रत्याख्यानपरिज्ञया परित्यजेत्। तत्परित्यागे गुणमाह–'एष' इति कामपिपासापरित्यागी प्रकर्षेण नतः–प्रह्वः संयमे कर्म्मधुननार्यां वा महामुनिर्भवति, नापर इति। किं च–'अतिगत्य' अत्येत्य–अतिक्रम्य 'सर्वतः' सर्वैः प्रकारैः 'सङ्गं' सम्बन्धं पुत्रकलत्रादिजनितं कामानुषङ्गं वा, किं भावयेदित्याह–न मम किमप्यस्तीति यत्संसारे पतत आलम्बनाय स्यादिति, तदभावाच्च 'इति' उक्तक्रमेणैकोऽहमस्मिन्–संसारोदरे, न चाहमन्यस्य कस्यचिदिति। एतद्भावनाभावितश्च यत्कुर्याच्चदाह–'अत्र' अस्मिन् मौनीन्द्रे प्रवचने विरतः सन् सावद्यानुष्ठानाद्दशविधचक्रवालसामाचार्यां यतमानः, कोऽसौ?—'अनगारः' प्रव्रजितः, एकत्वभावनां भावयन्नवमौदर्ये संतिष्ठत इत्युत्तरसूत्रेण सम्बन्धः, एवमेव क्रिया अनन्तरसूत्रेष्वपि लगयितव्येति, किं च–'सर्वतः' द्रव्यतो भावतश्च मुण्डो 'रीयमाणः' संयमानुष्ठाने गच्छन्, किम्भूत इत्याह–यः 'अचेलः' अल्पचेलो जिनकल्पिको वा 'पर्युषितः' संयमे उद्युक्तविहारी अन्तप्रान्तभोजी, तदपि न प्रकामतयेत्याह–'संचिक्खइ' संतिष्ठते अवमौदर्ये। न्यूनोदरतायां वर्त्तमानः सन् कदाचित्प्रत्यनीकतया ग्रामकण्टकैस्तुद्येतेत्येतद्दर्शयितुमाह–'स' मुनिर्वाग्भिराक्रुष्टो वा दण्डादिभिर्हतो वा लुञ्चितो वा केशोत्पाटनतः पूर्वकृत-

भोगाकांक्षात्यागः

५

१०

प्र. आ. २४१

रान्–प्रतिकूलान् परीषहानुदीर्णानभिज्ञाय सम्यक्तितिक्षमाणः परिव्रजेत्, यदिवाऽन्यथा परीषहाणां द्वैविध्यमित्याह–ये च परीषहाः सत्कारपुरस्कारादयः साधोर्हारिणो–मनआह्लादकारिणो ये तु प्रतिकूलतया अहारिणो–मनसोऽनिष्टा, यदिवा ह्रीरूपाः–याचनाऽचेलादयः अह्रीमनसश्च–अलज्जाकारिणः शीतोष्णादयः इत्येतान् द्विरूपानपि परीषहान् सम्यक् तितिक्षमाणः परिव्रजेदिति ॥ किं च–



चिच्चा सव्वं विसुत्तियं फासे समियदंसणे, एए भो णगिणा वुत्ता जे लोगंसि अणागमणधम्मिणो आणाए मामगं धम्मं एस उत्तरवाए इह माणवाणं वियाहिए, इत्थोवरए तं झोसमाणे आयाणिज्जं परिन्नाय परियाएण विगिंचइ, इह एगेसिं एगचरिया होइ तत्थियरा इयरेहिं कुलेहिं सुद्धेसणाए सव्वेसणाए से मेहावी परिव्वए सुब्भिं अदुवा दुब्भिं अदुवा तत्थ भेरवा पाणा पाणे किलेसंति, ते फासे पुट्ठो धीरे अहियासिज्जासित्तिबेमि (सू. १८१) ॥ धूताध्ययने द्वितीयोद्देशकः ॥ ६–२ ॥



त्यक्त्वा सर्वां परीषहकृतां विस्रोतसिकां परीषहापादितान् स्पर्शान्–दुःखानुभवान् 'स्पृशेत्' अनुभवेत् सम्यगधिसहेत, स किम्भूतः ?–सम्यग् इतं–गतं दर्शनं यस्य स समितदर्शनः, सम्यग्दृष्टिरित्यर्थः। तत्सहिष्णवश्च किम्भूताः स्युरित्याह—'भोः' इत्यामन्त्रणे 'एते' परीषहसहिष्णवो निष्किञ्चना निर्ग्रन्था भावनया 'उक्ताः' अभिहिताः, अस्मिन्मनुष्यलोके अनागमनं धर्मो येषां

तेऽनागमनधर्म्माणः, यथाऽऽरोपितप्रतिज्ञाभारवाहित्वान्न पुनर्गृहं प्रत्यागमनेप्सव इति, किं च–आज्ञाप्यतेऽनयेत्याज्ञा तया मामकं धर्म्मं सम्यगनुपालयेत्, तीर्थकर एवमाहेति, यदिवा धर्म्मानुष्ठाय्येवमाह–धर्म्म एवैको मामकः, अन्यत्तु सर्वं पारक्यमित्यतस्तमहमाज्ञया–तीर्थंकरोपदेशेन सम्यक्करोमीति, किमित्याज्ञया धर्म्मोऽनुपाल्यत इत्यत आह—'एषः' अनन्तरोक्तः 'उत्तरवाद' उत्कृष्टवाद इह मानवानां व्याख्यात इति। किं च—'अत्र' अस्मिन् कर्म्मधुननोपाये संयमे उप–सामीप्येन रत उपरतः तद्–अष्टप्रकारं कर्म्म 'झोपयन्' क्षपयन् धर्म्मं चरेदिति, किं चापरं कुर्यादित्याह–आदीयत इत्यादानीयं–कर्म्म तत्परिज्ञाय मूलोत्तरप्रकृतिभेदतो ज्ञात्वा 'पर्यायेण' श्रामण्येन विवेचयति, क्षपयतीत्यर्थः। अत्र चाशेषकर्म्मधुननासमर्थं तपस्तद्वाह्यमधिकृत्योच्यते—'इह' अस्मिन् प्रवचने 'एकेषां' शिथिलकर्म्मणामेकचर्या भवति–एकाकिविहारप्रतिमाऽभ्युपगमो भवति, तत्र च नानारूपाभिग्रहविशेषास्तपश्चरणविशेषाश्च भवन्तीत्यतस्तावत्प्राभृतिकामधिकृत्याह—'तत्र' तस्मिन्नेकाकिविहारे 'इतरे' सामान्यसाधुभ्यो विशिष्टतरा 'इतरेषु' अन्तप्रान्तेषु कुलेषु शुद्धैषणया दशैषणादोषरहितेनाहारादिना 'सर्वैषणये'ति सर्वा याऽऽहाराद्युद्गमोत्पादनग्रासैषणारूपा तया सुपरिशुद्धेन विधिना संयमे परिव्रजन्ति, बहुत्वेऽप्येकदेशतामाह–स मेधावी मर्यादाव्यवस्थितः संयमे परिव्रजेदिति, किं च–स आहारस्तेष्वितरेषु कुलेषु सुरभिर्वा स्यात् अथवा दुर्गन्धः, न तत्र रागद्वेषौ विदध्यात्, किं च–अथवा तत्रैकाकिविहारित्वे पितृवनप्रतिमाप्रतिपन्नस्य सतो 'भैरवा' भयानका यातुधानादिकृताः शब्दाः प्रादुर्भवेयुः, यदिवा 'भैरवा' बीभत्साः 'प्राणाः' प्राणिनो दीप्तजिह्वादयोऽपरान् प्राणिनः 'क्लेशयन्ति' उपतापयन्ति, त्वं तु पुनस्तैः स्पृष्टस्तान् स्पर्शान् दुःखविशेषान् 'धीरः' अक्षोभ्यः सन्नतिसहस्व। इतिरधिकारपरिसमाप्तौ, ब्रवीमीति पूर्ववत्। धूताध्ययने द्वितीयोद्देशकः परिसमाप्तः॥



१५

२०



२६

उक्तो द्वितीयोद्देशकः, साम्प्रतं तृतीय आरभ्यते, अस्य चायमभिसम्बन्धः, इहानन्तरोद्देशके कर्म्मधूननाऽभिहिता, सा च नोपकरणशरीरविधूननामन्तरेण इत्यतस्तद्विधूननार्थमिदमारभ्यते, इत्यनेन सम्बन्धेनायातस्यास्योद्देशकस्य सूत्रमुच्चारयितव्यम्, तच्चेदम्—

एयं खु मुणी आयाणं सया सुयक्खायधम्मे विहूयकप्पे निज्झोसइत्ता, जे अचेले परिवुसिए तस्स णं भिक्खुस्स नो एवं भवइ—परिजुण्णे मे वत्थे वत्थं जाइस्सामि सुत्तं जाइस्सामि सूइं जाइस्सामि संधिस्सामि सीविस्सामि उक्कसिस्सामि वुक्कसिस्सामि परिहिस्सामि पाउणिस्सामि, अदुवा तत्थ परिक्कमंतं भुज्जो अचेलं तणफासा फुसंति सीयफासा फुसंति तेउफासा फुसंति दंसमसगफासा फुसंति एगयरे अन्नयरे विरूवरूवे फासे अहियासेइ अचेले लाघवं आगममाणे, तवे से अभिसमन्नागए भवइ, जहेयं भगवया पवेइयं तमेव अभिसमिच्चा सव्वओ सव्वत्ताए संमत्तमेव समभिजाणिज्जा, एवं तेसिं महावीराणं चिररायं पुव्वाइं वासाणि रीयमाणाणं दवियाणं पास अहियासियं (सू. १८२)

'एतत्' यत्पूर्वोक्तं वक्ष्यमाणं वा, 'खुः' वाक्यालङ्कारे, आदीयते इत्यादानं—कर्म्म आदीयते वाऽनेन कर्म्मेत्यादानं—कर्म्मोपादानं, तच्च धर्म्मोपकरणातिरिक्तं वक्ष्यमाणं वस्त्रादि तन्मुनिः निर्झोषयित्वेति सम्बन्धः, किम्भूतः ?—'सदा' सर्वकालं सुष्ठ्वाख्यातो धर्म्मो-

ऽस्येति स्वाख्यातधर्म्मा, संसारभीरुत्वाद्यथारोपितभारवाहीत्यर्थः, तथा विधूतः–क्षुण्णः सम्यक्स्पृष्टः कल्पः–आचारो येन स तथा, स एवम्भूतो मुनिरादानं झोषयित्वा आदानमपनेष्यति, कथं पुनस्तदादानं वस्त्रादि स्याद्येन तत् झोषयितव्यं भवेदित्याह–अल्पार्थे नञ्, यथाऽयं पुमानज्ञः, स्वल्पज्ञान इत्यर्थः, यः साधुर्नास्य चेलं–वस्त्रमस्तीत्यचेलः, अल्पचेल इत्यर्थः, संयमे 'पर्युषितो' व्यवस्थित इति, तस्य भिक्षोः 'नैतद्भवति' नैतत्कल्पते यथा परिजीर्णं मे वस्त्रम् अचेलकोऽहं भविष्यामि न मे त्वत्राणं भविष्यति, ततश्च शीताद्यर्दितस्य किं शरणं मे स्यादिति वस्त्रं विनेत्यतोऽहं कञ्चन श्रावकादिकं प्रत्यग्रं वस्त्रं याचिष्ये, तस्य वा जीर्णस्य वस्त्रस्य सन्धानाय सूत्रं याचिष्ये, सूचिं च याचिष्ये, अवाप्ताभ्यां च सूचिसूत्राभ्यां जीर्णवस्त्ररन्ध्रं सन्धास्यामि–पाटितं सेविष्यामि, लघु वा सदपरस्फालनेन उत्कर्षयिष्यामि, दीर्घं वा सत् खण्डापनयनतो व्युत्कर्षयिष्यामि, एवं च कृते सत् परिधास्यामि तथा प्रावरिष्यामीत्याद्यार्त्तध्यानोपहता असत्यपि जीर्णादिवस्त्रसद्भावे यद्भविष्यत्ताऽध्यवसायिनो धर्म्मकथनस्य न भवत्यन्तःकरणवृत्तिरिति, यदिवा जिनकल्पिकाभिप्रायेणैवैतत्सूत्रं व्याख्येयं, तद्यथा—'जे अचेले' इत्यादि, नास्य चेलं–वस्त्रमस्तीत्यचेलः–अच्छिद्रपाणित्वात् पाणिपात्रः, पाणिपात्रत्वात् पात्रादिसप्तविधपात्रनिर्योगरहितोऽभिग्रहविशेषात् त्यक्तकल्पत्रयः, केवलं रजोहरणमुखवस्त्रिकासमन्वितः, तस्याचेलस्य भिक्षोनैतद्भवति, यथा–परिजीर्णं मे वस्त्रं छिद्रं पाटितं चेत्येवमादि वस्त्रगतमपध्यानं न भवति, धर्म्मिणोऽभावात् धर्म्माभावः, सति तु धर्म्मिणि धर्म्मान्वेषणं न्याय्यमिति सत्पथः, तथेदमपि तस्य न भवत्येव यथा–अपरं वस्त्रमहं याचिष्ये इत्यादि पूर्ववन्नेयं, योऽपि छिद्रपाणित्वात् पात्रनिर्योगसमन्वितः कल्पत्रयान्यतरयुक्तोऽसावपि परिजीर्णादिसद्भावे तद्गतमपध्यानं न विधत्ते, यथाकृतस्याल्पपरिकर्म्मणो ग्रहणात्सूचिसूत्रान्वेषणा न करोति। तस्य चाचेलस्याल्पचेलस्य वा तृणादिस्पर्शसद्भावे यद्विधेयं तदाह–

अचेलकता १५

२०

तस्य ह्यचेलतया परिव्रजतो जीर्णवस्त्रादिकृतमपध्यानं न भवति, अथवैतस्यान्–तत्राचेलत्वे पराक्रममाणं पुनस्तं साधुमचेलं कचिद्ग्रामादौ त्वक्त्राणाभावात् तृणशय्याशायिनं तृणानां स्पर्शाः २ परुषास्तृणैर्वा जनिताः स्पर्शाः–दुःखविशेषास्तृणस्पर्शास्ते कदाचित् स्पृशन्ति, तांश्च सम्यग् अदीनमनस्कोऽतिसहत इति सम्बन्धः, तथा शीतस्पर्शाः स्पृशन्ति–उपतापयन्ति, तेजः–उष्णस्तत्स्पर्शाः स्पृशन्ति, तथा दंशमशकस्पर्शाः स्पृशन्ति, एतेषां तु परीषहाणामेकतरेऽविरुद्धा दंशमशकतृणस्पर्शादयः प्रादुर्भवेयुः, शीतोष्णादिपरीषहाणां वा परस्परविरुद्धानामन्यतरे प्रादुष्ष्युः, प्रत्येकं बहुवचननिर्देशश्च तीव्रमन्दमध्यमावस्थासंसूचकः, इत्येतदेव दर्शयति–विरूपं–बीभत्सं मनोऽनाह्लादि विविधं वा मन्दादिभेदाद् रूपं–स्वरूपं येषां ते विरूपरूपाः, के ते ?–'स्पर्शाः' दुःखविशेषाः, सदापादकास्तृणादिस्पर्शा वा, तान्, सम्यक्करणेनापध्यानरहितोऽधिसहते, कोऽसौ ?–'अचेलः' अपगतचेलोऽल्पचेलो वा अचलनस्वरूपो वा सम्यक् तितिक्षते, किमभिसन्धाय परीषहानधिसहत इत्यत आह–लघोर्भावो लाघवं, द्रव्यतो भावतश्च, द्रव्यतो ह्युपकरणलाघवं भावतः कर्मलाघवं 'आगमयन्' अवगमयन्, बुध्यमान इतियावद्, अधिसहते परीषहोपसर्गानिति, नागार्जुनीयास्तु पठन्ति–"एवं खलु से उवगरणलाघवियं तवं कम्मक्खयकारणं करेइ" 'एवम्' उक्तक्रमेण भावलाघवार्थमुपकरणलाघवं ततश्च करोति इति भावार्थः। किं च—'से' तस्योपकरणलाघवेन कर्मलाघवमागमयतः कर्मलाघवेन चोपकरणलाघवमागमयतस्तृणादिस्पर्शानधिसहमानस्य 'तपः' कायक्लेशरूपतया बाह्यमभिसमन्वागतं भवति–सम्यग् आभिमुख्येन सोढं भवति। एतच्च न मयोच्यते इत्येतद्दर्शयितुमाह–'यथा' येन प्रकारेण 'इद' मिति यदुक्तं वक्ष्यमाणं चैतद्भगवता–वीरवर्द्धमानस्वामिना प्रकर्षेणादौ वा वेदितं प्रवेदितमिति, यदि नाम भगवता प्रवेदितं ततः किमित्याह–तद्–उपकरणलाघवमाहारलाघवं वा 'अभिसमेत्य' ज्ञात्वा, एवकारोऽवधारणे, तदेव लाघवं ज्ञात्वे-

अचेलकता

५

१०

आचा० १ श्रुत० ६ अध्य० ३ उद्दे०

त्यर्थः, कथमिति चेत तदुच्यते–'सर्वत' इति द्रव्यतः क्षेत्रतः कालतो भावतश्च, तत्र द्रव्यतः आहारोपकरणादौ, क्षेत्रतः सर्वत्र ग्रामादौ, कालतोऽहनि रात्रौ वा दुर्भिक्षादौ वा सर्वात्मनेति, भावतः कृत्रिमकल्काद्यभावेन, तथा 'सम्यक्त्व'मिति प्रशस्तं शोभनं एकं सङ्गतं वा तत्त्वं सम्यक्त्वं, यदुक्तम् "प्रशस्तः शोभनश्चैव, एकः सङ्गत एव च। इत्येतैरुपसृष्टस्तु, भावः सम्यक्त्वमुच्यते॥१॥" तदेवम्भूतं सम्यक्त्वमेव समत्वमेव वा 'समभिजानीयात्' सम्यगाभिमुख्येन जानीयात्–परिच्छिन्द्यात्, तथाहि–अचेलोऽप्येकचेलादिकं नावमन्यते, यत उक्तम्–"जोऽवि दुवत्थतिवत्थो एगेण अचेलगो व संथरइ। ण हु ते हीलंति परं सव्वेऽपि य ते जिणाणाए ॥१॥" तथा—"जे खलु विसरिसकप्पा संघयणधिइयादिकारणं पप्प। णऽवमन्नइ ण य हीणं अप्पाणं मन्नई तेहिं ॥२॥ सव्वेऽवि जिणाणाए जहाविहिं कम्मखवणअट्ठाए। विहरंति उज्जया खलु सम्मं अभिजाणई एवं ॥३॥" ति, यदिवा तदेव लाघवमभिसमेत्य सर्वतो द्रव्यादिना सर्वात्मना नामादिना सम्यक्त्वमेव सम्यगभिजानीयात्, तीर्थकरगणधरोपदेशात् सम्यक्कुर्यादिति तात्पर्यार्थः। एतच्च नाशक्यानुष्ठानं ज्वरहरतक्षकचूडालङ्काररत्नोपदेशवद्भवतः केवलमुपन्यस्यते, अपि त्वन्यैर्बहुभिश्चिरकालमासेवितमित्येतद्दर्शयितुमाह–'एवम्' इत्यचेलतया पर्युषितानां तृणादिस्पर्शानधिसहमानानां तेषां महावीराणां सकललोकचमत्कृतिकारिणां 'चिररात्रं' प्रभूतकालं यावज्जीवमित्यर्थः, तदेव विशेषतो दर्शयति–'पूर्वाणि' प्रभूतानि वर्षाणि 'रीयमाणानां' संयमानुष्ठानेन गच्छतां, पूर्वस्य तु परिमाणं–वर्षाणां सप्ततिः कोटिलक्षाः षट्पञ्चाशच्च कोटिसहस्राः, तथा प्रभूतानि वर्षाणि रीयमाणानां, तत्र नाभे-

१ योऽपि द्विवस्त्रत्रिवस्त्र एकेन अचेलको वा निर्वहति। नैव हीलयन्ति परं सर्वेऽपि च ते जिनाज्ञायाम् ॥१॥ ये खलु विसदृशकल्पाः संहननधृत्यादिकारणं प्राप्य। नावमन्यते न च हीनमात्मानं मन्यते तैः ॥२॥ सर्वेऽपि जिनाज्ञया यथाविधि कर्मक्षपणार्थं। विहरन्त्युद्यताः खलु सम्यगभिजानात्येवम् ॥३॥

१५ अचेलकता

२०

म. आ. २४५

२६

यादारभ्य शीतलं दशमतीर्थकरं यावत्पूर्वसङ्ख्यासद्भावात् पूर्वाणीत्युक्तं, ततः आरतः श्रेयांसादारभ्य वर्षसङ्ख्याप्रवृत्तेर्वर्षाणीत्युक्तमिति, तथा 'द्रव्याणां' भव्यानां मुक्तिगमनयोग्यानां 'पश्य' अवधारय यत्तृणस्पर्शादिकं पूर्वमभिहितं तदधिसोढव्यमिति सम्यक्करणेन स्पर्शातिसहनं कृतमेतदवगच्छेति ॥ एतच्चाधिसहमानानां यत्स्यात्तदाह—

आगयपन्नाणाणं किसा बाहवो भवंति पयणुए य मंससोणिए विस्सेणिं कट्टु परिन्नाय, एस तिण्णे मुत्ते विरए वियाहिएत्तिबेमि ( सू. १८३)

आगतं प्रज्ञानं पदार्थाविर्भावकं येषां ते तथा तेषामागतप्रज्ञानानां तपसा परीषहातिसहनेन च कृशा 'बाहवः' भुजा भवन्ति, यदिवा सत्यपि महोपसर्गपरीषहादावागतप्रज्ञानत्वाद् 'बाधाः' पीडाः कृशा भवन्ति, कर्म्मक्षपणायोत्थितस्य शरीरमात्रपीडाकारिणः परीषहोपसर्गान् सहायानिति मन्यमानस्य न मनःपीडोत्पद्यत इति, तदुक्तम्–"णिम्मोणेइ परो चिय अप्पा ण उ वेयणं सरीराणं । अप्पाणो चिअ हिअयस्स ण उण दुक्खं परो देइ ॥१॥" इत्यादि, शरीरस्य तु पीडा भवत्येवेति दर्शयितुमाह–प्रतनुके च मांसं च शोणितं च मांसशोणिते द्वे अपि, तस्य हि रूक्षाहारत्वादल्पाहारत्वाच्च प्रायशः खलत्वेनैवाहारः परिणमति, न रसत्वेन, कारणाभावाच्च प्रतन्वेव शोणितं तत्तनुत्वान्मांसमपीति ततो मेदादीन्यपि, यदिवा प्रायशो रूक्षं वातलं भवति, वातप्रधानस्य च प्रतनुतैव मांसशोणितयोः, अचेलतया च तृणस्पर्शादिप्रादुर्भावेन शरीरोपतापात् प्रतनुके मांसशोणिते भवत इति सम्बन्धः, "संसा-

५

१०

1 विदर्शाति परो नेवात्मनो वेदना शरीराणाम् । आत्मन एव हृदयस्य न पुनर्दुःखं परो ददाति ॥१॥

श्रेणी' संसारावतरणी रागद्वेषकषायसंततिस्तां क्षान्त्यादिना विश्रेणीं कृत्वा, तथा 'परिज्ञाय' ज्ञात्वा च समत्वभावनया, तद्यथा— जिनकल्पिकः कश्चिदेककल्पधारी द्वौ त्रीन् वा बिभर्त्ति, स्थविरकल्पिको वा मासार्द्धमासक्षपकः तथा विकृष्टाविकृष्टतपश्चारी प्रत्यहं-भोजी कूरगडुको वा, एते सर्वेऽपि तीर्थकृद्वचनानुसारतः परस्परानिन्दया समत्वदर्शिन इति, उक्तं च—"जोवि दुवत्थतिवत्थो एगेण अचेलगो य संथरइ। न हु ते हीलेंति परं सव्वेवि हु ते जिणाणाए ॥१॥" तथा जिनकल्पिकः प्रतिमाप्रतिपन्नो वा कश्चित्कदाचित् षडपि मासानात्मकल्पेन भिक्षां न लभेत तथाऽप्यसौ कूरगडुकमपि यथौदनमुण्डस्त्वमित्येवं न हीलयति। तदेवं समत्वदृष्टिप्रज्ञया विश्रेणीकृत्य 'एष' उक्तलक्षणो मुनिः तीर्णः संसारसागरं एष एव मुक्तः सर्वसङ्गेभ्यो विरतः सर्वसावद्यानुष्ठानेभ्यो व्याख्यातो नापर इति। ब्रवीमीतिशब्दौ पूर्ववत्॥ तदेवं संसारश्रेणीं विश्लेषयित्वा यः संसारसागरतीर्णवत्तीर्णो मुक्तवन्मुक्तो विरतो व्याख्यातः, तं च तथाभूतं किमरतिरभिभवेदुत नेति?, अचिन्त्यसामर्थ्यात् कर्म्मणोऽभिभवेदित्येतदेवाह—

प्र. आ. २४६

विरयं भिक्खुं रीयंतं चिरराओसियं अरई तत्थ किं विधारए?, संधेमाणे समुट्ठिए, जहा से दीवे असंदीणे एवं से धम्मे आरियपदेसिए, ते अणवकंखमाणा पाणे अणइवाएमाणा जइया मेहाविणो पंडिया, एवं तेसिं भगवओ अणुट्ठाणे जहा से दियापोए एवं ते सिस्सा दिया य राओ य अणुपुव्वेण वाइयत्तिबेमि (सू. १८४)धूताध्ययने तृतीयोद्देशकः।६-३।

विरतमसंयमाद् भिक्षणशीलं भिक्षुं 'रीयमाणं' निस्सरन्तमप्रशस्तेभ्योऽसंयमस्थानेभ्यः प्रशस्तेष्वपि गुणोत्कर्षादुपर्युपरि वर्त्तमानं

अरति-सहनं

१५

२०



२५

चिररात्रं–प्रभूतं कालं संयमे उषितश्चिररात्रोषितस्तमेवंगुणयुक्तम् 'अरतिः' संयमोद्विग्नता 'तत्र' तस्मिन् संयमे प्रवर्त्तमानं 'किं विधारयेत्' किं प्रतिस्खलयेत् ?, किंशब्दः प्रश्ने, किं तथाभूतमपि मोक्षप्रस्थितं प्रणाय्य विषयमरतिर्विधारयेत्, ओमित्युच्यते, तथाहि–दुर्बलान्यविनयवन्ति चेन्द्रियाण्यचिन्त्या मोहशक्तिर्विचित्रा कर्म्मपरिणतिः किं न कुर्यादिति, उक्तं च–"कम्माणि णूणं घणचिक्कणाइं गरुयाइं वइरसाराइं । णाणड्ढिअंपि पुरिसं पंथाओ उप्पहं णिंति ॥१॥" यदिवा किं क्षेपे, किं तथाभूतं विधारयेदरतिः ?, नैव विधारयेदित्यर्थः, तथाहि–असौ क्षणे क्षणे विशुद्धतरचरणपरिणामतया विष्कम्भितमोहनीयोदयत्वाल्लघुकर्म्मा भवतीति, कुतस्तमरतिर्वि(र्न वि)धारयेदित्याह—क्षणे क्षणेऽव्यवच्छेदेनोत्तरोत्तरं संयमस्थानकण्डकं संदधानः सम्यगुत्थितः समुत्थितः उत्तरोत्तरं गुणस्थानकं वा संदधानो यथाख्यातचारित्राभिमुखः समुत्थितोऽसावतस्तमरतिः कथं विधारयेदिति ?। स चैवम्भूतो न केवलमात्मनस्त्राता परेषामप्यरतिविधारकत्वात् त्राणायेत्येतद्दर्शयितुमाह–द्विर्गता आपोऽस्मिन्निति द्वीपः, स च द्रव्यभावभेदात् द्वेधा–तत्र द्रव्यद्वीप आश्वासद्वीपः, आश्वास्यतेऽस्मिन्नित्याश्वासः आश्वासश्चासौ द्वीपश्चाश्वासद्वीपो, यदिवा आश्वसनमाश्वासः, आश्वासाय द्वीप आश्वासद्वीपः, तत्र नदीसमुद्रबहुमध्यप्रदेशे भिन्नबोहित्थादयस्तमवाप्याश्वसन्ति, असावपि द्वेधा—सन्दीनोऽसन्दीनश्चेति, यो हि पक्षमासादावुदकेन प्लाव्यते स सन्दीनो, विपरीतस्त्वसन्दीनः सिंहलद्वीपादिः, यथा हि सायांत्रिकास्तं द्वीपमसन्दीनमुदन्वदादेरुत्तितीर्षवः समवाप्याश्वसन्ति एवं तं भावसंधानायोत्थितं साधुमवाप्यापरे प्राणिनः समाश्वस्युः, यदिवा दीप इति प्रकाशदीपः, प्रकाशाय दीपः प्रकाशदीपः, स चादित्यचन्द्रमण्यादिरसन्दीनोऽपरस्तु विद्युदुल्कादिः सन्दीनो, यदिवा प्रचुरेन्धनतया विवक्षि-

१ कर्माणि नूनं घनचिक्कणानि गुरुकाणि वज्रसाराणि । ज्ञानस्थितमपि पुरुषं पथ उत्पथं नयन्ति ॥१॥

नकालाद्यायमन्दीनो विपरीतस्तु मन्दीन इति, यथा ह्यसौ स्वपुटाद्यावेदनतो हेयोपादेयहानोपादानवतां निमित्तभावमुपयाति तथा कश्चित्सम्यग्रसाधन्तर्वर्त्तिनामाधाम्मकारी च भवति एवं ज्ञानसंधानायोत्थितः परीषहोपसर्गाक्षोभ्यतयाऽसन्दीनः साधुर्विशिष्टोपदेशदानतोऽपरेषामुपकारायेति, अपरे भावद्वीपं भावदीपं वा अन्यथा व्याचक्षते—तद्यथा—भावद्वीपः सम्यक्त्वं, तच्च प्रतिपातित्वादौपशमिकं क्षायोपशमिकं च संदीनो भावद्वीपः, क्षायिकं त्वसन्दीन इति, तं द्विविधमवाप्य परीतसंसारत्वात् प्राणिन आश्वसन्ति, भावदीपस्तु सन्दीनः श्रुतज्ञानम् असंदीनस्तु केवलमिति, तच्चावाप्य प्राणिनोऽवश्यमाश्वसन्त्येवेति. अथवा धर्म्मं संदधानः समुत्थितः सन्नरतेर्दुष्प्रधृष्यो भवतीत्युक्ते कश्चिच्चोदयेत्—किम्भूतोऽसौ धर्म्मो ? यत्सन्धानाय समुत्थित इति, अत्रोच्यते, यथाऽसौ द्वीपोऽसन्दीनः—असलिलप्लुतोऽवरुग्णवाहनानामितरेषां च बहूनां जन्तूनां शरण्यतयाऽऽश्वासहेतुर्भवत्येवमसावपि धर्म्मः 'आर्यप्रदेशितः' तीर्थकरप्रणीतः कषतापच्छेदनिर्घटितोऽसन्दीनः, यदिवा कुतर्काप्रधृष्यतयाऽसन्दीनः—अक्षोभ्यः प्राणिनां त्राणायाश्वासभूमिर्भवति। तस्य चार्यदेशितस्य धर्म्मस्य किं सम्यगनुष्ठायिनः केचन सन्ति ?, ओमित्युच्यते, यदि सन्ति किम्भूतास्त इत्यत आह—'ते' साधवो भावसन्धानोद्यताः संयमारतेः प्रणोदका मोक्षनेदिष्ठा भोगाननवकाङ्क्षन्तो धर्म्मे सम्यगुत्थानवन्तः स्युरिति, एतदुत्तरत्रापि योज्यम्, तथा प्राणिनोऽनतिपातयन्तः, उपलक्षणार्थत्वात् शेषमहाव्रतग्रहणमायोज्यं. तथा कुशलानुष्ठानप्रवृत्तत्वाद्दयिताः सर्वलोकानां, तथा 'मेधाविनो' मर्यादाव्यवस्थिताः 'पण्डिताः' पापोपादानपरिहारितया सम्यक्पदार्थज्ञा धर्म्मचरणाय समुत्थिता भवन्तीति। ये पुनस्तथाभूतज्ञानाभावात् सम्यग्विवेकविकलतया नाद्यापि पूर्वोक्तसमुत्थानवन्तः स्युः ते तथाभूता आचार्यादिभिः सम्यगनुपाल्या यावद्विवेकिनोऽभूवन्नित्येतद्दर्शयितुमाह—'एवम्' उक्तविधिना 'तेषाम्' अपरिकर्मितम-

२०

तीनां 'भगवतो' वीरवर्द्धमानस्वामिनो धर्मे सम्यगनुत्थाने सति तत्परिपालनतस्तथा सदुपदेशदानेन परिकर्मितमतित्वं विधेयमिति, अत्रैव दृष्टान्तमाह-द्विजः-पक्षी तस्य पोतः-शिशुः द्विजपोतः स यथा तेन द्विजेन गर्भप्रसवात् प्रभृत्यण्डकोच्छूनोच्छूनतरभेदादिकाम्ववस्थासु यावन्निष्पन्नपक्षस्तावत्पाल्यते एवमाचार्येणापि शिक्षकः प्रव्रज्यादानादारभ्य सामाचार्युपदेशदानेनाध्यापनेन च तावदनुपाल्यते यावद्गीतार्थोऽभूत्, यः पुनराचार्योपदेशमुल्लङ्घ्य स्वैरित्वाद्यथा कथञ्चित् क्रियासु प्रवर्त्तते स उज्जयिनीराजपुत्रवद्विनश्येदिति, तद्यथा-उज्जयिन्यां जितशत्रो राज्ञो द्वौ पुत्रौ, तत्र ज्येष्ठो धर्मघोषाचार्यसमीपे संसारासारतामवगम्य प्रवव्राज, क्रमेण चाधीतावाशादिशास्त्रोऽवगततदर्थश्च जिनकल्पं प्रतिपित्सुः द्वितीयां सत्त्वभावनां भावयति, सा च पञ्चधा-तत्र प्रथमोपाश्रये द्वितीया तद्बहिः तृतीया चतुष्के चतुर्थी शून्यगृहे पञ्चमी श्मशाने, तत्र पञ्चमीं भावनां भावयतः स कनिष्ठो भ्राता तदनुरागादाचार्यान्तिकमागत्योवाच-मम ज्यायान् भ्राता क्वास्ते ?, साधुभिरभाणि-किं तेन ?, स आह-प्रव्रजाम्यहं, आचार्येणोक्तो-गृहाण तावत् प्रव्रज्यां पुनर्द्रक्ष्यसि, स तु तथैव चक्रे, पुनरपि पृच्छत आचार्या ऊचुः-किं तेन दृष्टेन ?, नासौ कस्यचिदुल्लापमपि ददाति, जिनकल्पं प्रतिपत्तुकाम इति, असावाह-तथाऽपि पश्यामि तावदिति, निर्बन्धे दर्शितः, तूष्णीभावस्थित एव वन्दित, तदनुरागाच्च निषिद्धोऽप्याचार्येण निवार्यमाणोऽप्युपाध्यायेन भ्रियमाणोऽपि साधुभिरसाम्प्रतमेतद्भवतो दुष्करं दुरध्यवसेयमित्येवं कथ्यमानेऽप्यहमपि तेनैव पित्रा जात इत्यवष्टम्भेन मोहात्तथैव तस्थौ यथा ज्येष्ठो भ्रातेति, इतरो देवतयाऽऽगत्य वन्दितः, शिक्षकस्तु न वन्दितः, ततोऽसावपरिकर्मितमतित्वात्कुपितः, अविधिरितिकृत्वा देवताऽपि तस्योपरि कुपिता सती तलप्रहारेणाक्षिगोलकौ बहिर्निश्चिक्षेप, ततस्तज्ज्यायान् हृदयेनैव देवतामाह-किमित्ययमज्ञस्त्वया कदर्थितः ?, तदस्याक्षिणी पुनर्नवीकुरु, मा त्ववादीत्-जीवप्रदेशैर्मुक्ताविमौ गोलकौ

शिष्यपालना

५

१०

न शक्यौ पुनर्नवीकर्त्तुं इत्युक्त्वा ऋषिवचनमलङ्घनीयमित्यवधार्य तत्क्षणश्वपाकन्यापादितैलाक्षिगोलकौ गृहीत्वा तदक्ष्णोश्चकार। इत्येवमनुपदेशप्रवर्तनं सापायमित्यवधार्य शिष्येण सदाऽऽचार्योपदेशवर्त्तिना भाव्यम्, आचार्येणापि सदा स्वपरोपकारवृत्तिना सम्यक् स्वशिष्या यथोक्तविधिना प्रतिपालनीया इति स्थितम्। इत्येतदेवोपसंहरन्नाह—यथा द्विजपोतो मातापितृभ्यामनुपाल्यते एवमाचार्येणापि शिष्या अहर्निशम् 'अनुपूर्वेण' क्रमेण 'वाचिताः' पाठिताः शिक्षां ग्राहिताः समस्तकार्यसहिष्णवः संसारोत्तरणसमर्थाश्च भवन्ति। इतिरधिकारपरिसमाप्तौ, ब्रवीमीति पूर्ववत्। धूताध्ययने तृतीयोद्देशकः 'परिसमाप्त इति॥

---

उक्तस्तृतीयोद्देशकः, साम्प्रतं चतुर्थ आरभ्यते, अस्य चायमभिसम्बन्धः—इहानन्तरोद्देशके शरीरोपकरणधूननाऽभिहिता, सा च परिपूर्णा न गौरवत्रिकसमन्वितस्येत्यतस्तद्धूननार्थमिदमुपक्रम्यत इत्यनेन सम्बन्धेनायातस्यास्योद्देशकस्यास्खलितादिगुणोपेतं सूत्रमुच्चारणीयं तच्चेदम्—

एवं ते सिस्सा दिया य राओ य अणुपुव्वेण वाइया तेहिं महावीरेहिं पन्नाणमन्तेहिं तेसिमंतिए पन्नाणमुवलब्भ हिच्चा उवसमं फारुसियं समाइयंति, वसित्ता बंभचेरंसि आणं तं नोत्ति मन्नमाणा आघायं तु सुच्चा निसम्म, समणुन्ना जीविस्सामो एगे निक्खमंते असंभवंता विडज्झमाणा कामेहिं गिद्धा अज्झोववन्ना समाहिमाघायमजोसयंता सत्थारमेव फरुसं वयंति (सू. १८५)



२०

'एवम्' इति द्विजपोतसंवर्द्धनक्रमेणैव 'ते शिष्याः' स्वहस्तप्रव्राजिता उपसम्पदागताः प्रतीच्छकाश्च दिवा च रात्रौ च 'अनुपूर्वेण' क्रमेण 'वाचिताः' पाठिताः, तत्र कालिकमह्नः प्रथमचतुर्थपौरुष्योरध्याप्यते उत्कालिकं तु कालवेलावर्जं सकलमप्यहोरात्रमिति, तच्चाध्यापनमाचारादिक्रमेण क्रियते, आचारश्च त्रिवर्षपर्यायोऽध्याप्यत इत्यादिक्रमेणाध्यापिताः शिष्याश्चारित्रं च ग्राहिताः, तद्यथा—युगमात्रदृष्टिना गन्तव्यम् कूर्म्मवत्सङ्कुचिताङ्गेन भाव्यमित्याद्येवं शिक्षां ग्राहिता वाचिताः—अध्यापिताः, कैरिति दर्शयति—तैर्महावीरैः- तीर्थकरगणधराचार्यादिभिः, किम्भूतैः ?—प्रज्ञानवद्भिः,ज्ञानिभिरेवोपदेशादि दत्तं लगतीत्यतो विशेषणं, ते तु शिष्याः द्विप्रकारा अपि प्रेक्षापूर्वकारिणस्तेषाम्—आचार्यादीनाम् 'अन्तिके' समीपे प्रकर्षेण ज्ञायते अनेनेति प्रज्ञानं—श्रुतज्ञानं, तस्यैवापरसाद्यासिसद्भावादित्यतस्तद् 'उपलभ्य' लब्ध्वा बहुश्रुतीभूताः प्रबलमोहोदयापनीतसदुपदेशोत्कटमदत्वात् त्यक्त्वोपशमं, स च द्वेधा—द्रव्यभावभेदात्, तत्र द्रव्योपशमः कतकफलाद्यापादितः कलुषजलादेः भावोपशमस्तु ज्ञानादित्रयात्, तत्र यो येन ज्ञानेनोपशाम्यति स ज्ञानोपशमः, तद्यथा—आक्षेपण्याद्यन्यतरया धर्मकथया कश्चिद् उपशाम्यतीत्यादि, दर्शनोपशमस्तु यो हि शुद्धेन सम्यग्दर्शनेनापरमुपशमयति, यथा श्रेणिकेनाश्रद्दधानो देवः प्रतिबोधित इति, दर्शनप्रभावकैर्वा सम्मत्यादिभिः कश्चिदुपशाम्यति, चारित्रोपशमस्तु क्रोधाद्युपशमो विनयनम्रतेति, तत्र केचन क्षुद्रका ज्ञानोदन्वतोऽप्याप्युपर्येव प्लवमानास्तमेवंभूतमुपशमं त्यक्त्वा ज्ञानलवोत्तम्भितगर्वाध्माताः 'पारुष्यं' परुषतां 'समाददति' गृह्णन्ति, तद्यथा—परम्परगुणनिकायां मीमांसायां वा एकोऽपरमाह—त्वं न जानीषे न चैषां शब्दानामयमर्थो यो भवताऽभाणि, अपि च—कश्चिदेव मादृशः शब्दार्थनिर्णयायालं, न सर्व इति, उक्तं च—

"पृष्टा गुरवः स्वयमपि परीक्षितं निश्चितं पुनरिदं नः । वादिनि च मल्लपुल्ले च मादृशेवान्तरं गच्छेत् ॥१॥" द्वितीयस्त्वाह—नन्व-

परुषवादः

५

१०

मदाचार्या एवमाज्ञापयन्तीत्युक्ते पुनराह–सोऽपि वाचिकुण्ठो बुद्धिविकलः किं जानीते ?, त्वमपि च शुकवत्पाठितो निरूहापोह इत्यादीन्यन्यान्यपि दुर्गृहीतकतिचिदक्षरो महोपशमकारणं ज्ञानं विपरीततामापादयन् स्वौद्धत्यमाविर्भावयन् भाषते, उक्तं च— "अन्यैः स्वेच्छारचितानर्थविशेषान् श्रमेण विज्ञाय। कृत्स्नं वाङ्मयमित इति खादत्यङ्गानि दर्पेण ॥१॥ क्रीडनकमीश्वराणां कुक्कुटलावकमभानवाल्लभ्यः। शास्त्राण्यपि हास्यकथां लघुतां वा क्षुल्लको नयति ॥२॥" इत्यादि, पाठान्तरं वा "हेचा उवसमं अहेगे पारुसियं समारुहंति" त्यक्त्वोपशमम् 'अथ' अनन्तरं बहुश्रुतीभूताः, एके न सर्वे, परुषतामालम्बन्ते, ततश्चालप्ताः शब्दिता वा तूष्णीभावं भजन्ते, हुङ्कारशिरःकम्पनादिना वा प्रतिवचनं ददति। किं च–एके पुनर्ब्रह्मचर्य–संयमस्तत्रोषित्वा आचारो वा ब्रह्मचर्यं तदर्थोऽपि ब्रह्मचर्यमेव तत्रोषित्वा आचारार्थानुष्ठायिनोऽपि तद्भर्त्सितास्तामाज्ञां–तीर्थकरोपदेशरूपां 'नो इति मन्यमानाः' नोशब्दो देशप्रतिषेधे देशतस्तीर्थकरोपदेशं न बहु मन्यमानाः सातागौरवबाहुल्याच्छरीरवाकुशिकतामालम्बन्ते, यदिवा अपवादमालम्ब्य वर्तमाना उत्सर्गचोदनाचोदिताः सन्तः नैषा तीर्थकराज्ञेत्येवं मन्यन्ते, दर्शयन्ति चापवादपदानि "कुज्जा भिक्खू गिलाणस्स, अगिलाए समाहियं" इत्यादि, ततश्च यो येन ग्लायति तस्य तदपनयनार्थमाधाकर्माद्यपि कार्यं, स्यादेतत्–किं तेषां नाख्याताः कुशीलानां प्रत्यपायाः यथाऽऽशातनाबहुलानां दीर्घः संसार इति ?, तदुच्यते—'तुः' अवधारणे. आख्यातमेवैतत्कुशीलविपाकादिकं श्रुत्वा 'निशम्य' अवबुध्य च शास्तारमेव परुषं वदन्तीति सम्बन्धः। किमर्थं तर्हि शृण्वन्तीति चेत्तदाह–'समनोज्ञा' लोकसम्मता जीविष्याम इतिकृत्वा प्रश्नव्याकरणार्थमेव शब्दशास्त्रादीनि शास्त्राण्यधीयते, यदिवा अनेनोपायेन लोकसम्मता जीविष्याम इति-

१ पूर्णाङ्गिक्षुर्लानस्य अग्लानया समाहितं.

कृत्वैके निष्क्रम्य, अथवा समनोज्ञा–उद्युक्तविहारिणः सन्तो जीविष्यामः संयमजीवितेनेत्येवं निष्क्रम्य पुनर्मोहोदयाद् असम्भवन्तः–ते गौरवत्रिकान्यतरदोषात् ज्ञानादिके मोक्षमार्गे न सम्यग्भवन्तो–नोपदेशे वर्त्तमाना विविधं दह्यमानाः कामैर्गृद्धा गौरवत्रिकेऽध्युपपन्ना विषयेषु 'समाधिं' इन्द्रियप्रणिधानमाख्यातं तीर्थकृदादिभिः, यमा(आ)वेदितं(तः)वं 'अजोषयन्तः' असेवमाना दुर्विदग्धा आचार्यादिना शास्त्राभिप्रायेण चोद्यमाना अपि तच्छास्तारमेव परुषं वदन्तिः–नासिन्निषये भवान् किञ्चिज्जानाति, यथाऽहं सूत्रार्थं शब्दं गणितं निमित्तं वा जाने तथा कोऽन्यो जानीते ?, इत्येवमाचार्यादिकं शास्तारं हीलयन्तः परुषं वदन्ति, यदिवा शास्ता–तीर्थकृदादिस्तमपि परुषं वदन्ति, तथाहि–क्वचित्स्खलिते चोदिता जगदुः–किमन्यदधिकं तीर्थकृद्वस्यत्यसद्गलकर्त्तनादपीति, इत्यादिभिरपावीनैरालापैरलीकविद्यामदावलेपाच्छास्तृतामपि दूषणानि वदेयुः॥ न केवलं शास्तारं परुषं वदन्त्यपरानपि साधूनपवदेयुरित्येतदाह–



**सीलमंता उवसंता संखाए रीयमाणा असीला अणुवयमाणस्स बिइया मंदस्स बालया (सू. १८६)**

शीलम्–अष्टादशशीलाङ्गसहस्रसङ्ख्यं, यदिवा महाव्रतसमाधानं पञ्चेन्द्रियजयः कषायनिग्रहस्त्रिगुप्तिगुप्तता चेत्येतच्छीलं विद्यते येषां ते शीलवन्तः, तथा उपशान्ताः कषायोपशमात्, अत्र शीलवद्ग्रहणेनैव गतार्थत्वादुपशान्ता इत्येतद्विशेषणं कषायनिग्रहप्राधान्यख्यापनार्थं, सम्यक् ख्यायते–प्रकाश्यतेऽनयेति संख्या–प्रज्ञा तया 'रीयमाणाः' संयमानुष्ठाने पराक्रममाणाः सन्तः कस्यचिद्विशान्तभागधेयतया अशीला एत इत्येवमनुवदतोऽनु–पश्चाद्वदतः पृष्ठतो वदतोऽन्येन वा मिथ्यादृष्ट्यादिना कुशीला इत्येवमुक्तेऽनुवदतः पार्श्वस्थादेः द्वितीयैषा 'मन्दस्य' अज्ञस्य 'बालता' मूर्खता, एकं तावत्स्वतश्चारित्रापगमः पुनरपरानुद्युक्तविहारिणोऽपवदत इत्येषा द्वितीया बालता, यदिवा शीलवन्त एते उपशान्ता वेत्येवमन्येनाभिहिते कैषां प्रचुरोपकरणानां शीलवत्तोपशान्तता वा

इत्येयमनुवदतो हीनाचारस्य द्वितीया बालता भवतीति ॥ अपरे तु वीर्यान्तरायोदयात् स्वतोऽवसीदन्तोऽप्यपरसाधुप्रशंसान्वित यथावस्थितमाचारमावेदयेयुः, इत्येतद्दर्शयितुमाह—

**नियट्टमाणा वेगे आयारगोयरमाइक्खंति, नाणब्भट्ठा दंसणलूसिणो (सू. १८७)**

एके—कर्मोदयात् संयमान्निवर्त्तमाना लिङ्गाद्वा, वाशब्दादनिवर्त्तमाना वा, यथावस्थितमाचारगोचरमाचक्षते, वयं तु कर्त्तुमसहिष्णवः आचारस्त्वेवम्भूत इत्येवं वदतां तेषां द्वितीया बालता न भवत्येव, न पुनर्वदन्ति—एवंभूत एवाचारो योऽस्माभिरनुष्ठीयते, साम्प्रतं दुष्षमानुभावेन बलाद्यपगमान्मध्यभूतैव वर्त्तनी श्रेयसी, नोत्सर्गावसर इति, उक्तं हि—"नात्यायतं न शिथिलं, यथा युञ्जीत सारथिः। तथा भद्रं वहन्त्यश्वा, योगः सर्वत्र पूजितः ॥१॥" अपि च—जो जत्थ होइ भग्गो, ओवासं सो परं अविंदंतो। गंतुं तत्थऽचयंतो, इमं पहाणंति घोसेति ॥१॥" इत्यादि। किम्भूताः पुनरेतदेवं समर्थयेयुरित्याह—सदसद्विवेको ज्ञानं तस्माद्भ्रष्टा ज्ञानभ्रष्टाः, तथा 'दंसणलूसिणो'त्ति सम्यग्दर्शनविध्वंसिनोऽसदनुष्ठानेन स्वतो विनष्टा अपरानपि शङ्कोत्पादनेन सन्मार्गाच्च्यावयन्ति ॥ अपरे पुनरांवक्रियोपपेता अप्यात्मानं नाशयन्तीत्याह—

**नममाणा वेगे जीवियं विप्परिणामंति पुट्ठा वेगे नियट्टंति जीवियस्सेव कारणा, निक्खंतंपि तेसिं दुन्निक्खंतं भवइ, बालवयणिज्जा हु ते नरा, पुणो पुणो जाइं पकप्पिंति अहे**

१ यो यत्र भवति भग्नोऽवकाशं सोऽपरमविन्दन्। गन्तुं तत्रासमर्थ इदं प्रधानमिति घोषयति ॥१॥

संभवंता विद्दायमाणा अहमंसीति विउक्कसे उदासीणे फरुसं वयंति, पलियं पकथे अदुवा पकथे अतहेहिं, तं वा मेहावी जाणिज्जा धम्मं (सू. १८८)

नमन्तोऽप्याचार्यादिद्रव्यतः श्रुतज्ञानार्थं ज्ञानादिभावविनयाभावात् कर्म्मोदयाद्, एके, न सर्वे, संयमजीवितं 'विपरिणामयन्ति' अपनयन्ति, सच्चरितादात्मानं ध्वंसयन्तीत्यर्थः। किं चापरमित्याह–एके–अपरिकर्म्मितमतयो गौरवत्रिकप्रतिबद्धाः स्पृष्टाः परीषहैर्निवर्त्तन्ते संयमात् लिङ्गाद्वेति, किमर्थं?—जीवितस्यैव–असंयमाख्यस्य कारणात्–निमित्तात् सुखेन वयं जीविष्याम इतिकृत्वा सावद्यानुष्ठानतया संयमान्निवर्त्तन्ते। तथाभूतानां च यत्स्यात्तदाह–तेषां गृहवासान्निष्क्रान्तमपि ज्ञानदर्शनचारित्रमूलोत्तरगुणान्यतरोपघाताद्दुर्निष्क्रान्तं भवति। तद्धर्म्मणां च यत्स्यात्तदाह–दुर्हेतौ,यस्मादसम्यगनुष्ठानात् दुर्निष्क्रान्तास्तस्माद्बालानां–प्राकृतपुरुषाणामपि वचनीयाः–गर्ह्या बालवचनीयास्ते नरा इति। किं च–पौनःपुन्येनारहट्टघटीयन्त्रन्यायेन जातिः—उत्पत्तिस्तां कल्पयन्ति, किम्भूतास्ते इत्याह–अधःसंयमस्थानेषु सम्भवन्तो–वर्त्तमाना अविद्यया वाऽधो वर्त्तमानाः सन्तो विद्वांसो वयमित्येवं मन्यमाना लघुतयाऽऽत्मानं व्युत्कर्षयेयुरिति—आत्मनः श्लाघां कुर्वते, यत्किञ्चिज्ज्ञानानोऽपि मानोन्नतत्वाद्रससातागौरवबलोऽहमेवात्र बहुश्रुतो यदाचार्यो जानाति तन्मयाऽल्पेनैव कालेनाधीतमित्येवमात्मानं व्युत्कर्षयेदिति। नात्मश्लाघितयैवासते, अपरानप्यपवदेयुरित्याह–'उदासीनाः' रागद्वेषरहिता मध्यस्था बहुश्रुतत्वे सत्युपशान्तान् स्खलितचोदनोद्यतान् परुषं वदन्ति, तद्यथा–स्वयमेव तावत्कृत्यमकृत्यं वा जानीहि ततोऽन्येषामुपदेक्ष्यसीति। यथा च परुषं वदन्ति तथा सूत्रेणैव दर्शयितुमाह–'पलियं'ति अनुष्ठानं तेन पूर्वा-



५

१०

परितेनानुष्ठानेन तृणहारादिना प्रकथयेद्-एवम्भूतस्त्वमिति, अन्यथा वा कुण्टमण्टादिभिर्गुणैर्मुखविकारादिभिर्वा प्रकथयेदिति। किम्भूतैः ?-'अतथ्यैः' अविद्यमानैरिति। उपसंहरन्नाह-'तद्' वाच्यमवाच्यं वा 'तं' वा धर्म्मं श्रुतचारित्राख्यं 'मेधावी' मर्यादाव्यवस्थितो 'जानीयात्' सम्यक् परिच्छिन्द्यादिति ॥ सोऽसभ्यवादप्रवृत्तो बालो गुर्वादिना यथाऽनुशास्यते तथा दर्शयितुमाह—

अहम्मट्ठी तुमंसि नाम बाले आरंभट्ठी अणुवयमाणे हण पाणे घायमाणे हणओ यावि समणुजाणमाणे, घोरे धम्मे, उदीरिए उवेहइ णं अणाणाए, एस विसन्ने वियद्दे वियाहिए-त्तिबेमि (सू. १८९)

अर्थोऽस्यास्तीत्यर्थी, अधर्म्मेणार्थी अधर्म्मार्थी, यतो नाम त्वमेवम्भूतोऽतोऽनुशास्यसे, कुतोऽधर्म्मार्थी ? यतो 'बालः' अज्ञः, कुतो बालो ?, यत 'आरम्भार्थी' सावद्यारम्भप्रवृत्तः, कुतः आरम्भार्थी ? यतः प्राण्युपमर्दवादाननुवदन्नैतद् ब्रूपे, तद्यथा—जहि प्राणिनोऽपरैरेवं घातयन् घ्नतश्चापि समनुजानासि गौरवत्रिकानुबद्धः पचनपाचनादिक्रियाप्रवृत्तांस्तत्पिण्डतर्की तत्समक्षंताननुवदसि-कोऽत्र दोषो ?, न ह्यशरीरैर्द्धर्म्मः कर्त्तुं पार्य्यते, अतो धर्म्माधारं शरीरं यत्नतः पालनीयमिति, उक्तं च-"शरीरं धर्म्मसंयुक्तं, रक्षणीयं प्रयत्नतः। शरीराज्जायते धर्म्मो, यथा बीजात् सदङ्कुरः ॥१॥" इति, किं चैवं ब्रवीषि त्वं, तद्यथा-'घोरः' भयानको धर्म्मः सर्वास्रवनिरोधात् दुरनुचरः उत्-प्राबल्येनेरितः-कथितः प्रतिपादितस्तीर्थकरगणधरादिभिरित्येवमध्यवसायी सर्वांस्तमनुष्ठानत 'उपेक्षते' उपेक्षां विधत्ते, 'णम्' इति वाक्यालङ्कारे, 'अनाज्ञया' तीर्थकरगणधराननुपदेशेन स्वेच्छया प्रवृत्त इति, क एवम्भूत इति दर्श-



२०

यति-'एष' इत्यनन्तरोक्तोऽधर्म्मार्थी वाल आरम्भार्थी प्राणिनां हन्ता घातयिता घ्नतोऽनुमन्ता धर्म्मोपेक्षक इति, विषण्णः कामभोगेषु, विविधं तर्दतीति वितर्दो-हिंसकः, 'तर्द हिंसाया'मित्यस्मात् कर्त्तरि पचाद्यच्, संयमे वा प्रतिकूलो वितर्दः इत्येवंरूपस्त्वमेष व्याख्यात इत्यतोऽहं ब्रवीमि-त्वं मेधावी धर्म्मं जानीया इति ॥ एतच्च वक्ष्यमाणमहं ब्रवीमीत्यत आह—

किमणेण भो! जणेण करिस्सामित्ति मन्नमाणे एवं एगे वइत्ता मायरं पियरं हिच्चा नायओ य परिग्गहं वीरायमाणा समुट्ठाए अविहिंसा सुव्वया दंता पस्स दीणे उप्पइए पडिवयमाणे, वसट्टा कायरा जणा लूसगा भवंति, अहमेगेसिं सिलोए पावए भवइ, से समणो भवित्ता विब्भंते २ पासहेगे समन्नागएहिं सह असमन्नागए नममाणेहिं अनममाणे विरएहिं अविरए दविएहिं अदविए अभिसमिच्चा पंडिए मेहावी निट्ठियट्ठे वीरे आगमेणं सया परक्कमिज्जासित्तिबेमि ( सू. १९० )॥ इति धूताध्ययने चतुर्थ उद्देशकः ६-४ ॥

केचन-विदितवेद्या वीरायमाणाः सम्यगुत्थानेनोत्थाय पुनः प्राण्युपमर्दका भवन्तीति, कथमुत्थाय ?-किमहमनेन 'भोः' इत्यामन्त्रणे 'जनेन' मातापितृपुत्रकलत्रादिना स्वार्थपरेण परमार्थतोऽनर्थरूपेण करिष्यामीति, न ममायं कस्यचिदपि कार्यस्य रोगापनयनादेरलमित्यतोऽनेन किमहं करिष्ये ?, यदिवा प्रविव्रजिषुः केनचिदभिहितः-किमनया सिकताकवलसन्निभया प्रव्रज्यया करि-

ष्यति भवान् ?, अदृष्टवशायातं तावद्भोजनादिकं भुङ्क्ष्वेत्यभिहितो विरागतामापन्नो ब्रवीति–किमहमनेन भोजनादिना करिष्ये ?, भुक्तं मयाऽनेकशः संसारे पर्यटता तथापि तृप्तिर्नाभूत्, तत्किमिदानीमनेन जन्मना भविष्यतीत्येवं मन्यमाना एके विदितसंसारस्वभावा उदित्वाऽप्येवं ततो 'मातरं' जननीं 'पितरं' जनयितारं 'हित्वा' त्यक्त्वा 'ज्ञातयः' पूर्वापरसम्बन्धिनः स्वजनास्तान्, परिगृह्यत इति परिग्रहः–धनधान्यहिरण्यद्विपदचतुष्पदादिः तं, किम्भूताः ?–वीरमिवात्मानमाचरन्तो वीरायमाणाः, सम्यक् संयमानुष्ठानेनोत्थाय समुत्थाय विविधैरुपायैर्हिंसा विहिंसा न विद्यते विहिंसा येषां तेऽविहिंसाः, तथा शोभनं व्रतं येषां ते सुव्रताः, तथेन्द्रियदमाद्दान्ताः, इत्येवं समुत्थाय, नागार्जुनीयास्तु पठन्ति–"समणा भविस्सामो अणगारा अकिंचणा अपुत्ता अपसूया अविहिंसगा सुव्वया दंता परदत्तभोइणो पावं कम्मं न करेस्सामो समुट्ठाए" सुगमत्वान्न विव्रियते, इत्येवं समुत्थाय पूर्वं पश्चात् 'पश्य' निभालय 'दीनान्' शृगालत्वविहारिणो वान्तं जिघृक्षून् संयमारोहणात् पश्चात्पापोदयात् प्रतिपतत इति, किमिति दीना भवन्तीति दर्शयति–यतो 'वशार्त्ता' वशा इन्द्रियविषयकषायाणां तत आर्त्ता वशार्त्ताः, तथाभूतानां च कर्मानुषङ्गः, तदुक्तम्—"सोइंदियवसट्टे णं भंते ! कइ कम्मपगडीओ बंधइ ?, गोयमा ! आउअवज्जाओ सत्त कम्मपगडीओ जाव अणुपरिअट्टइ। कोहवसट्टे णं भंते ! जीवे० एवं तं चेव" एवं मानादिष्वपीति, तथा 'कातराः' परीषहोपसर्गोपनिपाते सति विषयलोलुपा वा कातराः, के ते ?–जनाः, किं कुर्वन्ति ?–ते प्रतिभग्नाः सन्तः 'लूषका भवन्ति' व्रतानां विध्वंसका भवन्ति, को ह्यष्टादशशीलाङ्गसहस्राणि धारयिष्यतीत्येवमभिसन्धाय द्रव्यलिङ्गं भावलिङ्गं वा परित्यज्य प्राणिनां विराधका भवन्ति। तेषां च पश्चात्कृतलिङ्गानां यत् स्यात्तदाह—'अथ'

प्र. आ.
२५२

२०

॥२२९॥

२५

१ श्रोत्रेन्द्रियवशार्त्तो भदन्त ! कति कर्मप्रकृतीर्बध्नाति ?, गौतम ! आयुर्वर्जाः सप्त कर्मप्रकृतीर्यावत् अनुपरिवर्त्तते। क्रोधवशार्त्तो भदन्त ! जीवः, एवमेव तत्.

आनन्तर्ये 'एकेषां' भग्नप्रतिज्ञानामुत्प्रव्रजितानां तत्समनन्तरमेवान्तर्मुहूर्त्तेन वा पञ्चत्वापत्तिः स्याद्, एकेषां तु 'श्लोको' श्लाघारूपः पापको भवेत्, स्वपक्षात्परपक्षाद्वा महत्ययशःकीर्त्तिर्भवति, तद्यथा—स एष पितृवनकाष्ठममानो भोगाभिलाषी व्रजति वा, नास्य विश्वसनीयं, यतो नास्याकर्त्तव्यमस्तीति, उक्तं च—"परलोकविरुद्धानि, कुर्वाणं दूरतस्त्यजेत् । आत्मानं यो न संधत्ते, सोऽन्यस्मै स्यात्कथं हितः ? ॥१॥" इत्यादि, यदिवा सूत्रेणैवाश्लाघ्यतां दर्शयितुमाह—सोऽयं श्रमणो भूत्वा विविधं भ्रान्तो—भग्नः श्रमणविभ्रान्तो, वीप्सयाऽत्यन्तजुगुप्सामाह, किं च—पश्यत यूयं कर्म्मसामर्थ्यम् 'एके' विश्रान्तभागधेयाः समन्वागतैरुद्युक्तविहारिभिः सह वसन्तोऽप्यसमन्वागताः—शीतलविहारिणः, तथा 'नममानैः' संयमानुष्ठानेन विनयवद्भिः 'अनममानान्' निर्घृणतया मानद्यानुष्ठायिनो, विरतैरविरता द्रव्यभूतैरद्रव्यभूताः पापकलङ्काङ्कितत्वात् एवम्भूतैरपि साधुभिः सह वसन्तोऽपि, एवम्भूतान् 'अभिसमेत्य' ज्ञात्वा किं कर्त्तव्यमिति दर्शयति—'पण्डितः' त्वं ज्ञातज्ञेयो 'मेधावी' मर्यादाव्यवस्थितो 'निष्ठितार्थः' विषयसुखनिष्पिपासो 'वीरः' कर्म्मविदारणसहिष्णुर्भूत्वा 'आगमेन' सर्वज्ञप्रणीतोपदेशानुसारेण 'सदा' सर्वकालं परिक्रामयेरिति । इतिरधिकारपरिसमाप्तौ, ब्रवीमीति पूर्ववद् ॥ धूताध्ययनस्य चतुर्थोद्देशकः परिसमाप्तः ॥

---

उक्तश्चतुर्थोद्देशकः, साम्प्रतं पञ्चम आरभ्यते, अस्य चायमभिसम्बन्धः, इहानन्तरोद्देशके कर्म्मविधूननार्थं गौरवत्रयविधूननाऽभिहिता, सा च कर्मविधूननोपसर्गविधूननया सम्पूर्णतामियादित्यत उपसर्गसन्मानविधूननार्थमिदमुपक्रम्यते, इत्यनेन सम्बन्धेनायातस्यास्योद्देशकस्यास्खलितादिगुणोपेतं सूत्रमुच्चारणीयं, तच्चेदम्—

से गिहेसु वा गिहंतरेसु वा गामेसु वा गामंतरेसु वा नगरेसु वा नगरंतरेसु वा जणवयेसु वा जणवयंतरेसु वा गामनयरंतरे वा गामजणवयंतरे वा नगरजणवयंतरे वा संतेगइया जणा लूसगा भवंति अदुवा फासा फुसंति ते फासे पुट्ठे वीरो अहियासए, ओए समियदंसणे, दयं लोगस्स जाणित्ता पाईणं पडीणं दाहिणं उदीणं आइक्खे, विभए किट्टे वेयवी, से उट्ठिएसु वा अणुट्ठिएसु वा सुस्सूसमाणेसु पवेयए संतिं विरइं उवसमं निव्वाणं सोयं अज्जवियं मद्दवियं लाघवियं अणइवत्तियं सव्वेसिं पाणाणं सव्वेसिं भूयाणं सव्वेसिं जीवाणं सव्वेसिं सत्ताणं अणुवीइ भिक्खू धम्ममाइक्खिज्जा ( सू. १९१ )

२०

'स' पण्डितो मेधावी निष्ठितार्थो वीरः सदा सर्वज्ञप्रणीतोपदेशानुविधायी गौरवत्रिकाप्रतिबद्धो निर्ममो निष्किञ्चनो निराशः एकाकिविहारितया ग्रामानुग्रामं रीयमाणः क्षुद्रतिर्यग्नरामरकृतोपसर्गपरीषहापादितान् दुःखस्पर्शान् निर्जरार्थी सम्यगधिसहेत, क्व पुनर्व्यवस्थितस्य ते परीषहोपसर्गा अभिपतेयुरिति दर्शयति—आहाराद्यर्थं प्रविष्टस्य गृहेषु वा, उच्चनीचमध्यमावस्थासंसूचकं बहुवचनं, तथा गृहान्तरेषु वा, ग्रसन्ति बुद्ध्यादीन् गुणानिति ग्रामाः तेषु वा तदन्तरालेषु वा, नैतेषु करोऽस्तीति नकराणि तेषु वा

तदन्तरालेषु वा, जनानां—लोकानां पदानि—अवस्थानानि येषु ते जनपदाः—अवन्त्यादयः साधुविहरणयोग्याः अर्द्धषड्विंशतिर्देशास्तेषु तदन्तरालेषु वा, तथा ग्रामनगरान्तरे वा ग्रामजनपदान्तरे वा नगरजनपदान्तरे वा उद्याने वा तदन्तरे वा विहारभूमिगतस्य वा गच्छतो वा, तदेवं तस्य भिक्षोर्ग्रामादीनधिशयानस्य कायोत्सर्गादि वा कुर्वत एके कालुष्योपहतात्मानो ये जना लूषयन्तीति लूषका भवन्ति, 'लूष हिंसाया'मित्यस्मात् ल्युट्, ते 'सन्ति' विद्यन्ते, तत्र नारकास्तावदुपसर्गकरणं प्रत्यवस्तु, तिर्यगमरयोरपि कादाचि-त्कत्वान्मनुष्याणामेवानुकूलप्रतिकूलसद्भावाज्जनग्रहणं, यदिवा जायन्त इति जनाः, ते च तिर्यङ्नरामरा एव जनशब्दाभिहिताः, ते च जना अनुकूलप्रतिकूलान्यतरोभयोपसर्गापादानेनोपसर्गयेयुरिति, तत्र दिव्याश्चतुर्विधाः, तद्यथा—हास्यात् १ प्रद्वेषाद् २ विमर्शात् ३ पृथग्विमात्रातो ४ वा, तत्र केलीकिलः कश्चिद्व्यन्तरो विविधानुपसर्गान् हास्यादेव कुर्यात्, यथा भिक्षार्थं प्रविष्टैः क्षुल्लकैर्भिक्षालाभार्थं पललविकटतर्पणादिनोपयाचितकं व्यन्तरस्य प्रपेदे, भिक्षाप्राप्तौ च तद्याचमानस्य कुतश्चिदुपलभ्य विकटादिकं तैर्ढुढौके, तेनापि केल्यैव ते क्षुल्लकाः क्षीवा इव व्यधायिषत १, प्रद्वेषेण यथा भगवतो माघमासरजन्यन्ते तापसीरूपधारिण्या व्यन्तर्योदकजटाभारवल्कलप्रुड्भिस्सेचनमकारि २, विमर्शात् किमयं दृढधर्म्मा न वेत्यनुकूलोपसर्गैः परीक्षयेत्, यथा संविग्नसाधुभावितया कयाचिद्व्यन्तर्या स्त्रीवेषधारिण्या शून्यदेवकुलिकावासितः साधुरनुकूलोपसर्गैरुपसर्गितो दृढधर्मेति च कृत्वा वन्दित इति ३, तथा पृथग् विविधा मात्रा येषूपसर्गेषु ते पृथग्विमात्राः—हास्यादित्रयान्यतरारब्धा अन्यतरावसायिनो भवन्ति, तद्यथा—भगवति सङ्ग-





१ 'पुरच्छिमेणं कप्पइ निग्गंथाण वा निग्गंथीण वा जाव मगहाओ एत्तए, दक्खिणेण कप्पइ निग्गंथीण वा जाव कोसंबीओ एत्तए, पच्छिमेण जाव थूणाविसओ, उत्तरेण जाव कुणालाविसओ, ताव आरिए खित्ते, नो कप्पइ इत्तो बाहिं'ति, अस्मात् आर्यभूमिकाया सार्द्धपञ्चविंशतिर्जनपदा धर्मक्षेत्राण्यर्हद्भिरुक्तानि ॥

भर्कनैव विमर्शारब्धाः प्रद्वेषेण पर्यवसिता इति, मानुषा अपि हास्यप्रद्वेषविमर्शकुशीलप्रतिसेवनाभेदाच्चतुर्द्धा, तत्र हास्याद् देवसेनागणिका क्षुल्लकमुपसर्गयन्ती दण्डेन ताडिता राजानमुपस्थिता, क्षुल्लकेन तदाहूतेन श्रीगृहोदाहरणेन राजा प्रतिबोधित इति १, प्रद्वेषाद् गजसुकुमारस्यैव श्वशुरसोमभूतिनेति २, विमर्शात् चन्द्रगुप्तो राजा चाणाक्यचोदितो धर्म्मपरीक्षार्थमन्तःपुरिकाभिर्धर्म्ममावेदयन्तं साधुमुपसर्गयति, साधुना च प्रताड्य ताः श्रीगृहोदाहरणं राज्ञे निवेदितमिति ३, तत्र कुत्सितं शीलं कुशीलं तस्य प्रतिसेवनं कुशीलप्रतिसेवनं तदर्थं कश्चिदुपसर्गं कुर्यात्, तद्यथा-ईर्ष्यालुगृहपर्युषितः साधुश्चतसृभिः सीमन्तिनीभिः प्रोषितभर्तृकाभिः सकलां रजनीमेकैकया प्रतियाममुपसर्गितो न चासौ तासु लुलुभे मन्दरवन्निष्प्रकम्पोऽभूदिति ४। तैर्यग्योना अपि भयप्रद्वेषाहारापत्यसंरक्षणभेदाच्चतुर्द्धैव, तत्र भयात्सर्पादिभ्यः, प्रद्वेषाद् यथा भगवतश्चण्डकौशिकात्, आहारात् सिंहव्याघ्रादिभ्यः, अपत्यसंरक्षणात् काक्यादिभ्य इति। तदेवमुक्तविधिनोपसर्गोपादकत्वाज्जना लूषका भवन्ति, अथवा तेषु ग्रामादिषु स्थानेषु तिष्ठतो गच्छतो वा स्पर्शाः-दुःखविशेषा आत्मसंवेदनीयाः स्पृशन्ति-अभिभवन्ति, ते चतुर्विधाः-तद्यथा-घट्टनताऽक्षिकणुकादेः पतनता भ्रमिमूर्च्छादिना स्तम्भनता वातादिना श्लेषणता तालुनः पातादङ्गुल्यादेर्वा स्यात्, यदिवा वातपित्तश्लेष्मादिक्षोभात् स्पर्शाः स्पृशन्ति, अथवा निष्किञ्चनतया तृणस्पर्शदंशमशकशीतोष्णाद्यापादिताः स्पर्शाः-दुःखविशेषाः कदाचित्स्पृशन्ति—अभिभवन्ति, तैश्च स्पृष्टः परीषहैस्तान् स्पर्शान्-दुःखविशेषान् 'धीरः' अक्षोभ्योऽधिसहेत नरकादिदुःखभावनयाऽवन्ध्यकर्म्मोदयापादितं पुनरपि मयैवैतत्सोढव्यमित्यांकलय्य सम्यक् तितिक्षेतेति। कीदृक्षोऽधिसहेतेत्यत आह, यदिवा स एवम्भूतो न केवलमात्मनस्त्राता, सदुपदेशदानतः परेषामपीति दर्शयितुमाह-'ओजः' एको रागादिविरहात् सम्यग् इतं-गतं दर्शनमस्येति समितदर्शनः, सम्यग्दृष्टिरित्यर्थः, यदिवा 'शमितम्'

उपशमं नीतं 'दर्शनं' दृष्टिर्ज्ञानमस्येति शमितदर्शनः, उपशान्ताध्यवसाय इत्यर्थः, अथवा समतामितं-गतं दर्शनं—दृष्टिरस्येति समितदर्शनः, समदृष्टिरित्यर्थः, एवम्भूतः स्पर्शानधिसहेत, यदिवा धर्म्ममाचक्षीतेत्युत्तरक्रियया सह सम्बन्धः, किमभिसन्धाय धर्म्ममाचक्षीतेति दर्शयति-'दयां' कृपां 'लोकस्य' जन्तुलोकस्योपरि द्रव्यतो ज्ञात्वा क्षेत्रतः प्राचीनं प्रतीचीनं दक्षिणमुदीचीनमपरानपि दिग्विभागानभिसमीक्ष्य सर्वत्र दयां कुर्वन् धर्म्ममाचक्षीत, कालतो यावज्जीवं, भावतोऽरक्तोऽद्विष्टः, कथमाचक्षीत ?—तद्यथा—सर्वे जन्तवो दुःखद्विषः सुखलिप्सवः आत्मोपमया सदा द्रष्टव्या इति, उक्तं च-"न तत्परस्य संदध्यात्, प्रतिकूलं यदात्मनः। एष सङ्ग्राहिको धर्म्मः, कामादन्यः प्रवर्त्तते ॥१॥" इत्यादि, तथा धर्म्ममाचक्षाणो 'विभजेत्' द्रव्यक्षेत्रकालभावभेदैराक्षेपण्यादिकथाविशेषैर्वा प्राणातिपातमृषावादादत्तादानमैथुनपरिग्रहरात्रीभोजनविरतिविशेषैर्वा धर्म्मं विभजेत्, यदिवा कोऽयं पुरुषः कं नतो देवताविशेषं अभिगृहीतोऽनभिगृहीतो वा ? एवं विभजेत्, तथा कीर्त्तयेद्व्रतानुष्ठानफलं, कोऽसौ कीर्त्तयेद् ?—वेदविद्, आगमविदिति। नागार्ज्जुनीयास्तु पठन्ति-"जे खलु समणे बहुस्सुए बज्झागमे आहरणहेउकुसले धम्मकहालद्धिसम्पन्ने खेत्तं कालं पुरिसं समासज्ज केऽयं पुरिसे कं वा दरिसणमभिसम्पन्नो ? एवंगुणजाइए पभू धम्मस्स आघवित्तए" इति, कण्ठ्यं। स पुनः केषु निमित्तभूतेषु कीर्त्तयेदित्याह-'स' आगमवित् स्वसमयपरसमयज्ञः 'उत्थितेषु वा' भावोत्थानेन यतिषु, वाशब्दः उत्तरापेक्षया पक्षान्तरद्योतकः, पार्श्वनाथशिष्येषु चतुर्यामोत्थितेष्वेव वर्द्धमानतीर्थाचार्यादिः पञ्चयामं धर्म्मं प्रवेदयेदिति, स्वशिष्येषु वा सदोत्थितेष्वज्ञातज्ञापनाय धर्मं प्रवेदयेदिति, 'अनुत्थितेषु वा' श्रावकादिषु 'शुश्रूषमाणेषु' धर्म्मं श्रोतुमिच्छत्सु गुर्वादेः पर्युपास्तिं कुर्वत्सु वा संमारोत्तारणाय धर्म्मं प्रवेदयेत्। किम्भूतं प्रवेदयेदित्याह-शमनं शान्तिः, अहिंसेत्यर्थः, तामाचक्षीत, तथा विरतिम्, अनेन च मृषावादादिशेषव्रतस-

ग्रहः, तथा उपशमं क्रोधजयाद्, अनेन चोत्तरगुणसङ्ग्रहः, तथा निर्वृतिः निर्वाणं मूलगुणोत्तरगुणयोरैहिकामुष्मिकफलभूतमाचक्षीत, तथा 'शौचं' सर्वोपाधिशुचित्वं निर्व्यच्यिव्रतधारणं, तथा आर्जवं मायावक्रतापरित्यागात्, मार्दवं मानस्तब्धतापरित्यागात्, तथा लाघवं सबाह्याभ्यन्तरग्रन्थपरित्यागात्, कथमाचक्षीतेति दर्शयति—'अनतिपत्य' यथावस्थितं वस्त्वागमाभिहितं तथाऽनतिक्रम्येत्यर्थः, केषां कथयति ?—'सर्वेषां प्राणिनां' दशविधाः प्राणा विद्यन्ते येषां ते प्राणिनस्तेषां सामान्यतः संज्ञिपञ्चेन्द्रियाणां, तथा 'सर्वेषां भूतानां' मुक्तिगमनयोग्येन भव्यत्वेन भूतानां—व्यवस्थितानां, तथा 'सर्वेषां जीवानां' संयमजीवितेन जीवतां जिजीविषूणां च, तथा 'सर्वेषां सत्त्वानां' तिर्यङ्नरामराणां संसारे क्लिश्यमानतया करुणास्पदानां, एकार्थिकानि वैतानि प्राणादीनि वचनानि इत्यतस्तेषां क्षान्त्यादिकं दशविधं धर्म्मं यथायोगं प्रागुपन्यस्तं शान्त्यादिपदाभिहितम् 'अनुविचिन्त्य' स्वपरोपकाराय भिक्षणशीलो भिक्षुर्धर्म्मकथालब्धिमान् 'आचक्षीत' प्रतिपादयेदिति । यथा च धर्म्मं कथयेत्तथाऽऽह—

प्र. आ.
२५७

अणुवीइ भिक्खू धम्ममाइक्खमाणे नो अत्ताणं आसाइज्जा नो परं आसाइज्जा नो अन्नाइं पाणाइं भूयाइं जीवाइं सत्ताइं आसाइज्जा, से अणासायए अणासायमाणे वज्झमाणाणं पाणाणं भूयाणं जीवाणं सत्ताणं जहा से दीवे असंदीणे एवं से भवइ सरणं महामुणी, एवं से उट्ठिए ठियप्पा अणिहे अचले चले अबहिल्लेसे परिव्वए संखाय पेसलं धम्मं दिट्ठिमं परिनिव्वुडे

तम्हा संगंति पासह गंथेहिं गढिया नरा विसन्ना कामकंता तम्हा लूहाओ नो परिवित्तसिज्जा, जस्सिमे आरंभा सव्वओ सव्वप्पयाए सुपरिन्नाया भवंति तेसिमे लूसिणो नो परिवित्तसंति, से वंता कोहं च माणं य मायं च लोभं च एस तुट्टे वियाहिएत्तिबेमि (सू. १९२)

स भिक्षुर्मुमुक्षुरनुविचिन्त्य–पूर्वापरेण धर्म्मं पुरुषं वाऽऽलोच्य यो यस्य कथनयोग्यस्तं धर्म्ममाचक्षाणः आङिति मर्यादया यथा-ऽनुष्ठानं सम्यग्दर्शनादेः शातना आशातना तया आत्मानं नो आशातयेत्, तथा धर्म्ममाचक्षीत यथाऽऽत्मन आशातना न भवेत्, यदिवाऽऽत्मन आशातना द्विधा–द्रव्यतो भावतश्च, द्रव्यतो यथाऽऽहारोपकरणादेर्द्रव्यस्य कालातिपातादिकृताऽऽशातना–बाधा न भवति तथा कथयेद्, आहारादिद्रव्यबाधया च शरीरस्यापि पीडा भावाशातनारूपा स्यात्, कथयतो वा यथा गात्र भङ्गरूपा भावाशा-तना न स्यात् तथा कथयेदिति, तथा नो परं शुश्रूषुं आशातयेद्–हीलयेद्, यतः परो हीलनया कुपितः सन्नाहारोपकरणशरीरान्यतर-पीडायै प्रवर्त्तेतेति, अतस्तदाशातनां वर्जयन् धर्म्मं ब्रूयादिति, तथाऽन्यान् वा सामान्येन प्राणिनो भूतान् जीवान् सत्त्वान्नो आशा-तयेद्–बाधयेत्, तदेवं स मुनिः स्वतोऽनाशातकः परैरनाशातयन् तथाऽपरानाशातयतोऽननुमन्यमानोऽपरेषां वध्यमानानां प्राणिनां भूतानां जीवानां सत्त्वानां यथा पीडा नोत्पद्यते तथा धर्म्मं कथयेदिति, तद्यथा–यदि लौकिककुप्रावचनिकपार्श्वस्थादिदानानि प्रशं-सति अवटतटागादीनि वा ततः पृथिवीकायादयो व्यापादिता भवेयुः, अथ दूषयति ततोऽपरेषां अन्तरायापादनेन तत्कृतो बन्ध-विपाकानुभवः स्यात्, उक्तं च–“जे उ दाणं पसंसंति, वहमिच्छंति पाणिणं । जे [illegible] णं पडिसेहिंति, वित्तिच्छेअं करिंति ते ॥१॥”

५

१०

१ ये तु दानं प्रशंसन्ति वधमिच्छन्ति प्राणिनाम् । ये चैतत् प्रतिषेधयन्ति वृत्तिच्छेदं कुर्वन्ति ते ॥१॥

तस्मात्तदानावटतडागादिविधिप्रतिषेधव्युदासेन यथावस्थितं दानं शुद्धं प्ररूपयेत् सावद्यानुष्ठानं चेति, एवं च ब्रुवन्नुभयदोषपरिहारी जन्तूनामाश्वासभूमिर्भवतीति, एतद्दृष्टान्तद्वारेण दर्शयति-यथाऽसौ द्वीपोऽसन्दीनः शरणं भवत्येवमसावपि महामुनिः तद्रक्षणोपायोपदेशतः वध्यमानानां वधकानां च तदध्यवसायविनिवर्त्तनेन विशिष्टगुणस्थानापादनाच्छरण्यो भवति, तथाहि-यथोद्दिष्टेन कथाविधानेन धर्म्मकथां कथयन् कांश्चन प्रव्राजयति कांश्चन श्रावकान् विधत्ते कांश्चन सम्यग्दर्शनयुजः करोति, केषाञ्चित्प्रकृतिभद्रकतामापादयति। किंगुणश्चासौ द्वीप इव शरण्यो भवतीत्याह-'एव'मिति वक्ष्यमाणप्रकारेण 'स' शरण्यो महामुनिर्भावोत्थानेन संयमानुष्ठानरूपेण उत्-प्राबल्येन स्थित उत्थितः, तथा स्थितो ज्ञानादिके मोक्षाध्वन्यात्मा यस्य स स्थितात्मा, तथा स्निह्यतीति स्निहो न स्निहोऽस्निहः रागद्वेषरहितत्वात्, अप्रतिबद्धः, तथा न चलतीत्यचलः परीषहोपसर्गवातेरितोऽपीति, तथा चलः अनियतविहारित्वात्, तथा संयमाद्बहिर्निर्गता लेश्या-अध्यवसायो यस्य स बहिर्लेश्यः यो न तथा सोऽबहिर्लेश्यः, स एवम्भूतः परि-समन्तात् संयमानुष्ठाने व्रजेत् परिव्रजेत्, न क्वचित्प्रतिबध्यमान इतियावत्, स च किमिति संयमानुष्ठाने परिव्रजेदित्याह-'संख्याय' अवधार्य 'पेशलं' शोभनं धर्म्मं अविपरीतार्थं, दर्शनं दृष्टिः सदनुष्ठानं वा सा यस्यास्त्यसौ दृष्टिमान्, स च कषायोपशमात् क्षयाद्वा, परिः-समन्तान्निर्वृत -शीतीभूतो। यस्त्वसङ्ख्यातवान् पेशलं धर्म्मं मिथ्यादृष्टिरसौ न निर्वातीति दर्शयितुमाह-इतिर्हेतौ, यस्माद्विपरीतदर्शनो मिथ्यादृष्टिः सङ्गवान्न निर्वाति तस्मात् 'सङ्गं' मातापितृपुत्रकलत्रादिजनितं धनधान्यहिरण्यादिजनितं वा सङ्गविपाकं वा पश्यत-यूयं विवेकेनावधारयत, सूत्रेणैव सङ्गमाह-त एव सङ्गिनो नराः सबाह्याभ्यन्तरैर्ग्रन्थैर्ग्रथिताअवबद्धा विषण्णा-ग्रन्थमग्ने निमग्नाः कामैः-इच्छामदनरूपैराक्रान्ता-अवष्टब्धा न निर्वान्ति, यद्येवं ततः किं कर्त्तव्यमित्याह-यस्मात्कामाद्यासक्तचेतसः स्वजन-

धनधान्यादिमूर्च्छिताः कामजैः शारीरमानसादिभिर्दुःखैरुपतापितास्तस्माद् रूक्षात्–संयमान्निःसङ्गात्मकात् 'नो परिविनसेत्' न संयमानुष्ठानाद् बिभीयात्, यतः प्रभूततरदुःखानुषङ्गिणो हि सङ्गिन इति। कस्य पुनः संयमान्न परिवित्रसनं सम्भाव्यत इत्याह— यस्य महामुनेरवगतसंसारमोक्षकारणस्येमे सङ्गाः–आरम्भा अनन्तरोक्ताः, अविगानतः सर्वजनाचरितत्वात् प्रत्यक्षासन्नवाचिनेदमाऽभिहिताः, 'सर्वतः' सर्वात्मकतया सुपरिज्ञाता भवन्ति, किम्भूता आरम्भाः ?—येष्विमे ग्रन्थग्रथिता विपण्णाः कामभराक्रान्ता जना 'लूषिणो' लूषणशीलाः हिंसका अज्ञानमोहोदयात् 'न परिवित्रसन्ति' न बिभ्यति, यो ह्येवम्भूतांश्चारम्भान् ज्ञपरिज्ञया परिज्ञाय प्रत्याख्यानपरिज्ञया च परिहरति तस्यैते सुपरिज्ञाता भवन्ति। यश्चारम्भाणां परिज्ञाता स किमपरं कुर्यादित्याह–'स' महामुनिः पूर्वव्यावर्णितस्वरूपो 'वान्त्वा' त्यक्त्वा क्रोधं च मानं च मायां च लोभं चेति, स्वगतभेदसंसूचनार्थो व्यस्तनिर्देशः, सर्वानुयायित्वात् क्रोधस्य प्रथमोपादानं, तत्सम्बद्धत्वान्मानस्य, लोभार्थं मायोपादीयत इत्यतस्तत्कारणत्वान्मायाया लोभस्यादावुपन्यासः, ततः सर्वदोषाश्रयत्वात् सर्वगुरुत्वाच्च सर्वोपरि लोभस्य, क्षपणाक्रमं वाऽऽश्रित्यायमुपन्यास इति, चकारो हीतरेतरापेक्षया समुच्चयार्थः। स एवं क्रोधादीन् वान्त्वा मोहनीयं त्रोटयति, स चैपोऽपगतमोहनीयः ससारसन्ततेस्त्रुट्टः–अपसृतो व्याख्यातस्तीर्थकृदादिभिः इतिरधिकारपरिसमाप्तौ, ब्रवीमीत्येतत् पूर्वोक्तं ॥ यदि वैतद्वक्ष्यमाणमित्याह—





कायस्स वियाघाए एस संगामसीसे वियाहिए से हु पारंगमे मुणी, अविहम्ममाणे फलगावयट्ठी कालोवणीए कंखिज्ज कालं जाव सरीरभेउत्तिबेमि (सू. १९३) ६–५॥ धूताध्ययनम् ॥६॥

'कायः' औदारिकादित्रयं घातिचतुष्टयं वा तस्य 'व्याघातो' विनाशः, अथवा चीयत इति कायस्तस्य विशेषेण आङ् मर्यादयाऽऽयुष्कक्षयानधिलक्षणया घातो व्याघातः–शरीरविनाशः एष सङ्ग्रामशीर्षरूपतया व्याख्यातो, यथा हि सङ्ग्रामशिरसि परानीकनिशिताकृष्टकृपाणनिर्यत्प्रभासंवलितोद्यत्सूर्यत्विडुद्भूतविद्युन्नयनचमत्कृतिकारिणि कृतकरणोऽपि सुभटश्चित्तविकारं विधत्ते, एवं मरणकालेऽपि समुपस्थिते परिकर्म्मितमतेरप्यन्यथाभावः कदाचित्स्याद् अतो यो मरणकाले न मुह्यति स पारगामी मुनिः, संसारस्य कर्म्मणो वा उत्क्षिप्तभारस्य वा पर्यन्तयायीति। किं च–विविधं परीषहोपसर्गैर्हन्यमानो विहन्यमानः न विहन्यमानोऽविहन्यमानः न निर्विण्णः सन् वैहानसं गार्द्धपृष्ठमन्यद्वा बालमरणं प्रतिपद्यत इति, यदिवा हन्यमानोऽपि सबाह्याभ्यन्तरतया तपःपरीषहोपसर्गैः फलकवदवतिष्ठते न कातरीभवति, तथा कालेनोपनीतः कालोपनीतो–मृत्युकालेनान्यवशतां प्रापितः सन् द्वादशवर्षसंलेखनयाऽऽत्मानं संलिख्य गिरिगह्वरादिस्थण्डिलपादपोपगमनेङ्गितमरणभक्तपरिज्ञान्यतरावस्थोपगतः 'कालं' मरणकालमायुष्कक्षयं यावच्छरीरस्य जीवेन सार्द्धं भेदो भवति तावदाकाङ्क्षेद्, अयमेव च मृत्युकालो यदुत शरीरभेदो, न पुनर्जीवस्यात्यन्तिको विनाशोऽस्तीति । इतिरधिकारपरिसमाप्तौ, ब्रवीमीत्यादिकं पूर्ववदिति ॥ पञ्चमोद्देशकः, तत्समाप्तौ समाप्तं धूताख्यं षष्ठमध्ययनमिति ॥ ग्रं.८३५॥

इति श्रीमदाचाराङ्गे प्रथमश्रुतस्कन्धे धूताख्यं षष्ठमध्ययनं समाप्तं



२३

# अथाष्टमं विमोक्षाध्ययनम् (सप्तमं व्युच्छिन्नम्)



उक्तं षष्ठमध्ययनं, अथ सप्तमाष्टमाध्ययनमारभ्यते, अधुना सप्तमाध्ययनस्य महापरिज्ञाख्यस्यावसरः, तच्च व्यवच्छिन्नमितिकृत्वाऽतिलङ्घ्याष्टमस्य सम्बन्धो वाच्यः, स चायम्–इहानन्तराध्ययने निजकर्म्मशरीरोपकरणगौरवत्रिकोपसर्गसन्मानविधूननेन निःसङ्गताऽभिहिता, सा चैवं साफल्यमनुभवति यद्यन्तकालेऽपि सम्यग्निर्याणं स्यादित्यतः सम्यग्निर्याणप्रतिपादनायेदमारभ्यते, यदिवा निःसङ्गविहारिणा नानाविधाः परीषहोपसर्गाः सोढव्या इत्येतत्प्रतिपादितं, तत्र मारणान्तिकोपसर्गनिपाते सति अदीनमनस्केन सम्यग्निर्याणमेव विधेयमित्यस्यार्थस्य प्रतिपादनायेदमारभ्यते इत्यनेन सम्बन्धेनायातस्यास्याध्ययनस्योपक्रमादीनि चत्वार्यनुयोगद्वाराणि भवन्ति, तत्रोपक्रमद्वारायातोऽर्थाधिकारो द्वेधा, तत्राप्यध्ययनार्थाधिकारः प्रागभिहितः, उद्देशार्थाधिकारं तु निर्युक्तिकारो विभणिषुराह— ५

असमणुन्नस्स विमुक्खो पढमे १ बिइए अकप्पियविमुक्खो । पडिसेहणा य रुट्ठस्स चेव सब्भावकहणा य २॥२५२॥<br>
तइयंमि अंगचिट्ठाभासिय आसंकिए य कहणा य ३ । सेसेसु अहीगारो उवगरणसरीरमुक्खेसु ॥२५३॥<br>
उद्देसंमि चउत्थे वेहाणसगिद्धपिट्ठमरणं च ४ । पंचमए गेलन्नं भत्तपरिन्ना य बोद्धव्वा ५ ॥२५४॥<br>
छट्ठंमि उ एगत्तं इंगिणिमरणं च होइ बोद्धव्वं ६ । सत्तमए पडिमाओ पायवगमणं च नायव्वं ७ ॥२५५॥<br>
अणुपुव्विविहारीणं भत्तपरिन्ना य इंगिणीमरणं । पायवगमणं च तहा अहिगारो होइ अट्ठमए ८ ॥२५६॥ १०

अत्राद्योद्देशकेऽयमर्थाधिकारः, तद्यथा–असमनुज्ञानामसमनोज्ञानां वा त्रयाणां त्रिषष्ट्यधिकानां प्रावादुकशतानां विमोक्षः–परित्यागः कार्यः, तथा तदाहारोपधिशय्यातद्दृष्टिपरित्यागश्च, पार्श्वस्थादयः पुनश्चारित्रतपोविनयेष्वसमनोज्ञाः, यथाच्छन्दास्तु पञ्चस्वपि ज्ञानाचारादिष्वसमनोज्ञास्तेषां यथायोगं त्यागो विधेय इति १। द्वितीये तु अकल्पिकस्य–आधाकर्म्मादेर्विमोक्षः–परित्यागः कार्यो, यदिवाऽऽधाकर्म्मणा कश्चिन्निमन्त्रयेत् ततः प्रतिषेधो विधेयः, तत्प्रतिषेधे च रुष्टस्य मतः सिद्धान्तसद्भावः कथनीयो यथैवम्भूतं दानं तव मम च न गुणायेति २। तृतीये तूद्देशकेऽयमर्थाधिकारः, तद्यथा–गोचरगतस्य यतेः शीतादिना कम्पनादिकामङ्गचेष्टां मत्वां गृहस्थस्येयमारेका स्याद् यथा–ग्रामधर्म्मैरुद्बाध्यमानस्य शृङ्गारभावावेशादस्य यतेः कम्पनमित्येवं भाषिते आशङ्किते वा तदाशङ्काव्युदासाय यथावस्थितार्थकथना क्रियत इति ३। शेषेषु तूद्देशकेषु पञ्चस्वयमर्थाधिकारः, तद्यथा–उपकरणशरीराणां विमोक्षः–परित्यागस्तद्विषयः समासतो, व्यासतस्तूच्यते–चतुर्थोद्देशके त्वयमर्थाधिकारः, तद्यथा–वैहानसम्–उद्बन्धनं गार्द्धपृष्ठम्–अपरमांसादिहृदयन्यासाद्गृद्धादिनाऽऽत्मव्यापादनम्, एतत्प्रकारद्वयं मरणं वाच्यं ४। पञ्चमके तु ग्लानता भक्तपरिज्ञा च बोद्धव्या ५। षष्ठे त्वेकत्वम्–एकत्वभावना तथेङ्गितमरणं च बोद्धव्यं ६। सप्तमके तु–प्रतिमाः–भिक्षुप्रतिमा मासादिका वाच्याः, तथा पादपोपगमनं च ज्ञातव्यमिति ७। अष्टमके त्वयमर्थाधिकारः, तद्यथा–अनुपूर्वविहारिणां–प्रतिपालितदीर्घसंयमानां शास्त्रार्थग्रहणप्रतिपादनोत्तरकालमवसीदत्संयमाध्ययनाध्यापनक्रियाणां निष्पादितशिष्याणामुत्सर्गतः द्वादशसंवत्सरसंलेखनाक्रमेण संलिखितदेहानां भक्तपरिज्ञेङ्गितमरणं पादपोपगमनं वा यथा भवति तथोच्यत इति गाथापञ्चकसमासार्थो, व्यासार्थस्तु प्रत्युद्देशकं वक्ष्यते। निक्षेपस्तु त्रिधा–ओघनिष्पन्नो नामनिष्पन्नः सूत्रालापकनिष्पन्नश्चेति, तत्रौघनिष्पन्ने निक्षेपेऽध्ययनं, नामनिष्पन्ने तु विमोक्ष

उद्देशार्थाधिकारः

१५

२०



२६

इति नाम, तत्र विमोक्षस्य निक्षेपं चिकीर्षुः निर्युक्तिकार आह—

नामंठवणविमुक्खो दव्वे खित्ते य काल भावे य। एसो उ विमुक्खस्सा निक्खेवो छव्विहो होइ ॥२५७॥

नामविमोक्षः स्थापनाविमोक्षो द्रव्यविमोक्षः क्षेत्रविमोक्षः कालविमोक्षो भावविमोक्षश्चेत्येवं विमोक्षस्य निक्षेपः षोढा भवतीति गाथासमासार्थः॥ व्यासार्थप्रतिपादनाय तु सुगमनामस्थापनाव्युदासेन द्रव्यादिविमोक्षप्रतिपादनद्वारेणाह—

दव्वविमुक्खो नियलाइएसु खित्तंमि चारयाईसुं। काले चेइयमहिमाइएसु अणघायमाईओ ॥२५८॥

द्रव्यविमोक्षो द्वेधा—आगमतो नोआगमतश्च, आगमतो ज्ञाता तत्र चानुपयुक्तः, नोआगमतस्तु ज्ञशरीरभव्यशरीरव्यतिरिक्तो निगडादिकेषु विषयभूतेषु यो विमोक्षः स द्रव्यविमोक्षः, सुब्व्यत्ययेन वा पञ्चम्यर्थे सप्तमी, निगडादिभ्यो द्रव्येभ्यः सकाशाद्विमोक्षो द्रव्यविमोक्षः, अपरकारकवचनसम्भवस्तु स्वयमभ्यूह्यायोज्यः, तद्यथा—द्रव्येण द्रव्यात् सचित्ताचित्तमिश्राद्विमोक्ष इत्यादि, क्षेत्रविमोक्षस्तु यस्मिन् क्षेत्रे चारकादिके व्यवस्थितो विमुच्यते क्षेत्रदानाद्वा यस्मिन्वा क्षेत्रे व्यावर्ण्यते स क्षेत्रविमोक्षः, कालविमोक्षस्तु चैत्यमहिमादिकेषु कालेष्वनाघातादिघोषणापादितो यावन्तं कालं मुच्यते यस्मिन्वा काले व्याख्यायते सोऽभिधीयते इति गाथार्थः॥ भावविमोक्षप्रतिपादनायाह—



दुविहो भावविमुक्खो देसविमुक्खो य सव्वमुक्खो य। देसविमुक्खा साहू सव्वविमुक्खा भवे सिद्धा॥२५९॥

भावविमोक्षो द्विधा—आगमतो नोआगमतश्च, आगमतो ज्ञाता तत्र चोपयुक्तो, नोआगमतस्तु द्विधा—देशतः सर्वतश्च, तत्र देशतोऽविरतसम्यग्दृष्टीनामाद्यकषायचतुष्कक्षयोपशमाद्देशविरतानामाद्याष्टकषायक्षयोपशमाद्भवति, साधूनां च द्वादशकषायक्षयोपश-



५

१०

मात् क्षपकश्रेण्यां च यस्य यावन्मात्रं क्षीणं तस्य तत्क्षयादेशविमुक्ततेत्यतः साधवो देशविमुक्ता, भवस्थकेवलिनोऽपि भवोपग्राहिसद्भावादेशविमुक्ता एव, सर्वविमुक्ताश्च सिद्धा भवेयुः इति गाथार्थः ॥ ननु बन्धपूर्वकत्वान्मोक्षस्य निगडादिमोक्षवदित्याशङ्काव्यवच्छेदार्थं बन्धाभिधानपूर्वकं मोक्षमाह—

कम्मयदव्वेहि समं संजोगो होइ जो उ जीवस्स। सो बंधो नायव्वो तस्स विओगो भवे मुक्खो ॥२६०॥

'कर्मद्रव्यैः' कर्मवर्गणाद्रव्यैः 'समं' सार्द्धं यः संयोगो—जीवस्य स बन्धः प्रकृतिस्थित्यनुभावप्रदेशरूपो बद्धस्पृष्टनिधत्तनिकाचनावस्थश्च ज्ञातव्यः, तत्रैकैको ह्यात्मप्रदेशोऽनन्तानन्तैः कर्मपुद्गलैर्बद्धः, बध्यमाना अप्यनन्तानन्ता एव, शेषाणामग्रहणयोग्यत्वात्, कथं पुनरष्टप्रकारं कर्म बध्नातीति चेद्, उच्यते, मिथ्यात्वोदयादिति, उक्तं च—"कहं णं भंते! जीवा अट्ठ कम्मपगडीओ बंधंति?, गोअमा! णाणावरणिज्जस्स कम्मस्स उदएणं दरिसणावरणिज्जं कम्मं निअच्छन्ति, दंसणमोहणिज्जस्स कम्मस्स उदएणं मिच्छत्तं, मिच्छत्तेणं उइन्नेणं एवं खलु जीवे अट्ठ कम्मपडीओ बंधइ" यदिवा—"णेहतुप्पिअगत्तस्स रेणुओ लग्गई जहा अंगे। तह रागदोसणेहालियस्स कम्मंपि जीवस्स ॥१॥" इत्यादि, तस्यैवम्भूतस्याष्टप्रकारस्य कर्मणः आस्रवनिरोधात् तपसाऽपूर्वकरणक्षपकश्रेणिप्रक्रमेण शैलेश्यवस्थायां वा योऽसौ वियोगः—क्षयः स मोक्षो भवेदिति गाथार्थः ॥ अस्य च प्रधानपुरुषार्थत्वात् प्रारब्धासिधाराव-

१ अत्र कथमन्यथा? इत्यवतरणा २ कथं भदन्त! जीवा अष्टकर्मप्रकृतीर्बध्नन्ति? गौतम! ज्ञानावरणीयस्य कर्मण उदयेन दर्शनावरणीयं कर्म बध्नन्ति (उदयन्ते), दर्शनमोहनीयस्य कर्मण उदयेन मिथ्यात्वं बध्नन्ति (उदयन्ते), मिथ्यात्वेन उदितेन एवं खलु जीवोऽष्टकर्मप्रकृतीर्बध्नाति. ३ स्नेहम्रक्षितस्य रेणुर्लगति यथाऽङ्गे। तथा रागद्वेषस्नेहाद्रस्य कर्मापि जीवस्य ॥१॥

१५ उद्देशार्थाधिकारः

२०

२५

तानुष्ठानफलत्वात् तीर्थिकैः सह विप्रतिपत्तिसद्भावाच यथावस्थितमव्यभिचारि मोक्षस्य स्वरूपं दर्शयितुमाह, यदिवा पूर्वं कर्म्म-वियोगोद्देशेन मोक्षस्वरूपमभिहित, साम्प्रतं जीववियोगोद्देशेन मोक्षस्वरूप दर्शयितुमाह—

**जीवस्स अत्तजणिएहि चेव कम्मेहि पुव्ववद्धस्स। सव्वविवेगो जो तेण तस्स अह इत्तिओ मुक्खो ॥२६१॥**

जीवस्यासङ्ख्येयप्रदेशात्मकस्य स्वतोऽनन्तज्ञानस्वभावस्यात्मनैव-मिथ्यात्वाविरतिप्रमादकषाययोगपरिणतेन जनितानि-बद्धानि यानि कर्म्माणि तैः पूर्वबद्धस्य-अनादिबन्धबद्धस्य प्रवाहापेक्षया तेन कर्म्मणा 'सर्वविवेकः' सर्वाभावरूपतया यो विश्लेषस्तस्य-जन्तोः 'अथे'त्युपप्रदर्शने एतावन्मात्र एव मोक्षो, नापरः परपरिकल्पितो निर्वाणप्रदीपकल्पादिक इति गाथार्थः॥ उक्तो भावविमोक्षः, स च यस्य भवति तस्यावश्य भक्तपरिज्ञादिमरणत्रयान्यतरेण मरणेन भाव्य, तत्र कार्ये कारणोपचारात् तन्मरणमेव भावविमोक्षो भवतीत्येतत्प्रतिपादयितुमाह—



प्र. आ
२६१

**भत्तपरिन्ना इंगिणि पायवगमणं च होइ नायव्वं। जो मरइ चरिममरणं भावविमुक्खं वियाणाहि ॥२६२॥**

भक्तस्य परिज्ञा भक्तपरिज्ञा अनशनमित्यर्थः, तत्र त्रिविधचतुर्विधाहारनिवृत्तिमान् सप्रतिकर्म्मशरीरो धृतिसहननवान् यथा समाधिर्भवेत्तथाऽनशनं प्रतिपद्यते, तथेङ्गिते प्रदेशे मरणमिङ्गितमरण, इदं चतुर्विधाहारनिवृत्तिस्वरूपं विशिष्टसहननवतः स्वत एवोद्वर्त्तनादिक्रियायुक्तस्यावगन्तव्य, तथा परित्यक्तचतुर्विधाहारस्यैवाविकृतचेष्टाव्यतिरेकेण चेष्टान्तरमविकृत्यैकान्तनिष्प्रतिकर्म्मशरीरस्य पादपस्येवोप-सामीप्येन गमन-वर्त्तन पादपोपगमन एतच्च ज्ञातव्यं भवति, यो हि भवसिद्धिकश्चरमं-अन्तिम मरणमाश्रित्य म्रियते स एतत्पूर्वोक्तत्रयान्यतरेण मरणेन म्रियते,नान्येन वैहानसादिना बालमरणेनेत्येतच्चानन्तरोक्तं मरणं चेष्टाभेदोपाधिविशेषात् त्रैवि-

मात् क्षपकश्रेण्यां च यस्य यावन्मात्रं क्षीणं तस्य तत्क्षयादेशविमुक्ततेत्यतः साधवो देशविमुक्ता, भवस्थकेवलिनोऽपि भवोपग्राहिसद्भावादेशविमुक्ता एव, सर्वविमुक्ताश्च सिद्धा भवेयुः इति गाथार्थः ॥ ननु बन्धपूर्वकत्वान्मोक्षस्य निगडादिमोक्षवदित्याशङ्कांव्यवच्छेदार्थं बन्धाभिधानपूर्वकं मोक्षमाह—

कम्मयदव्वेहि समं संजोगो होइ जो उ जीवस्स। सो बंधो नायव्वो तस्स विओगो भवे मुक्खो ॥२६०॥

'कर्मद्रव्यैः' कर्मवर्गणाद्रव्यैः 'समं' सार्द्धं यः संयोगो–जीवस्य स बन्धः प्रकृतिस्थित्यनुभावप्रदेशरूपो बद्धस्पृष्टनिधत्तनिकाचनावस्थश्च ज्ञातव्यः, तत्रैकैको ह्यात्मप्रदेशोऽनन्तानन्तैः कर्मपुद्गलैर्बद्धः, बध्यमाना अप्यनन्तानन्ता एव, शेषाणामग्रहणयोग्यत्वात्, कथं पुनरष्टप्रकारं कर्म बध्नातीति चेद्, उच्यते, मिथ्यात्वोदयादिति, उक्तं च–"कहं णं भंते! जीवा अट्ठ कम्मपगडीओ बंधंति?, गोअमा! णाणावरणिज्जस्स कम्मस्स उदएणं दरिसणावरणिज्जं कम्मं निअच्छन्ति, दंसणमोहणिज्जस्स कम्मस्स उदएणं मिच्छत्तं, मिच्छत्तेणं उइन्नेणं एवं खलु जीवे अट्ठ कम्मपडीओ बंधइ" यदिवा–"णेहतुप्पिअगत्तस्स रेणुओ लग्गई जहा अंगे। तह रागदोसणेहालियस्स कम्मंपि जीवस्स ॥१॥" इत्यादि, तस्यैवम्भूतस्याष्टप्रकारस्य कर्मणः आस्रवनिरोधात् तपसाऽपूर्वकरणक्षपकश्रेणिप्रक्रमण शैलेश्यवस्थायां वा योऽसौ वियोगः–क्षयः स मोक्षो भवेदिति गाथार्थः ॥ अस्य च प्रधानपुरुषार्थत्वात् प्रारब्धासिधाराव-

१ अत्र कथमन्यथा' इत्ययंपाठः. २ कथं भदन्त! जीवा अष्टकर्मप्रकृतीर्बध्नन्ति? गौतम! ज्ञानावरणीयस्य कर्मण उदयेन दर्शनावरणीयं कर्म बध्नन्ति (उदयते), दर्शनमोहनीयस्य कर्मण उदयेन मिथ्यात्वं बध्नन्ति (उदयते), मिथ्यात्वेन उदितेन एवं खलु जीवोऽष्टकर्मप्रकृतीर्बध्नाति. ३ स्नेहम्रक्षितस्य रेणुर्लगति यथाऽङ्गे। तथा रागद्वेषस्नेहवतः कर्मापि जीवस्य ॥१॥



२०

२५

तानुष्ठानफलत्वात् तीर्थिकैः सह विप्रतिपत्तिसद्भावाच्च यथावस्थितमव्यभिचारि मोक्षस्य स्वरूपं दर्शयितुमाह, यदिवा पूर्वं कर्म्म-वियोगोद्देशेन मोक्षस्वरूपमभिहितं, साम्प्रतं जीववियोगोद्देशेन मोक्षस्वरूपं दर्शयितुमाह—

जीवस्स अत्तजणिएहिं चेव कम्मेहिं पुव्वबद्धस्स । सव्वविवेगो जो तेण तस्स अह इत्तिओ मुक्खो ॥२६१॥

जीवस्यासङ्ख्येयप्रदेशात्मकस्य स्वतोऽनन्तज्ञानस्वभावस्यात्मनैव–मिथ्यात्वाविरतिप्रमादकषाययोगपरिणतेन जनितानि–बद्धानि यानि कर्म्माणि तैः पूर्वबद्धस्य–अनादिबन्धबद्धस्य प्रवाहापेक्षया तेन कर्म्मणा 'सर्वविवेकः' सर्वाभावरूपतया यो विश्लेषस्तस्य–जन्तोः 'अथे'त्युपप्रदर्शने एतावन्मात्र एव मोक्षो, नापरः परपरिकल्पितो निर्वाणप्रदीपकल्पादिक इति गाथार्थः ॥ उक्तो भावविमोक्षः, स च यस्य भवति तस्यावश्यं भक्तपरिज्ञादिमरणत्रयान्यतरेण मरणेन भाव्यं, तत्र कार्ये कारणोपचारात् तन्मरणमेव भावविमोक्षो भवतीत्येतत्प्रतिपादयितुमाह—

५

प्र. आ. २६१

भत्तपरिन्ना इंगिणि पायवगमणं च होइ नायव्वं । जो मरइ चरिममरणं भावविमुक्खं वियाणाहि ॥२६२॥

भक्तस्य परिज्ञा भक्तपरिज्ञा अनशनमित्यर्थः, तत्र त्रिविधचतुर्विधाहारनिवृत्तिमान् सप्रतिकर्म्मशरीरो धृतिसंहननवान् यथा समाधिर्भवेत्तथाऽनशनं प्रतिपद्यते, तथेङ्गिते प्रदेशे मरणमिङ्गितमरणं, इदं चतुर्विधाहारनिवृत्तिस्वरूपं विशिष्टसंहननवतः स्वत एवोद्वर्त्तनादिक्रियायुक्तस्यावगन्तव्यं, तथा परित्यक्तचतुर्विधाहारस्यैवाधिकृतचेष्टाव्यतिरेकेण चेष्टान्तरमधिकृत्यैकान्तनिष्प्रतिकर्म्मशरीरस्य पादपस्येवोप-सामीप्येन गमनं–वर्त्तनं पादपोपगमनं एतच्च ज्ञातव्यं भवति, यो हि भवसिद्धिकश्चरमं–अन्तिमं मरणमाश्रित्य म्रियते स एतत्पूर्वोक्तत्रयान्यतरेण मरणेन म्रियते, नान्येन वैहानसादिना बालमरणेनेत्येतच्चानन्तरोक्तं मरणं चेष्टाभेदोपाधिविशेषात् त्रैवि-

१०

घ्यमनुभवन्नायमोक्षं विजानीहीति गाथार्थः ॥ साम्प्रतमेतदेव मरणं सपराक्रमेतरभेदाद् द्विविधमिति दर्शयितुमाह—

सपरिक्कमे य अपरिक्कमे य वाघाय आणुपुव्वीए। सुत्तत्थजाणएणं समाहिमरणं तु कायव्वं ॥ २६३ ॥

'पराक्रमः' सामर्थ्यं सह पराक्रमेण वर्त्तत इति सपराक्रमस्तस्मिंश्च मरणं स्यात्, तद्विपर्यये चापराक्रमे—जङ्घाबलपरिक्षीणे तद्भक्तपरिज्ञेङ्गितमरणपादपोपगमनभेदात्त्रिविधमपि मरणं सपराक्रमेतरभेदात् प्रत्येकं द्वैविध्यमनुभवति, तदपि व्याघातिमेतरभेदात् द्विधा भवेत्, तत्र व्याघातः सिंहव्याघ्रादिकृतः अव्याघातस्तु प्रव्रज्यासूत्रार्थग्रहणादिकयाऽऽनुपूर्व्या विपक्विममायुष्कक्षयमनुभवतो यो भवति सोऽव्याघात इहानुपूर्वीत्युक्तं, तत्र परमार्थोपक्षेपेणोपसंहरति—व्याघातेनानुपूर्व्या वा सपराक्रमस्यापराक्रमस्य वा मरणे समुस्थिते सति सूत्रार्थज्ञेन कालज्ञतया समाधिमरणमेव कर्त्तव्यं, भक्तपरिज्ञेङ्गितमरणपादपोपगमनानामन्यतरद् यथासमाधि विधेयं, न वेहानसादिकं बालमरणं कर्त्तव्यमिति गाथार्थः ॥ तत्र सपराक्रममरणं दृष्टान्तद्वारेण दर्शयितुमाह—

सपरक्कममाएसो जह मरणं होइ अज्जवइराणं। पायवगमणं च तहा एयं सपरक्कमं मरणं ॥२६४॥

सह पराक्रमेण वर्त्तत इति सपराक्रमं, किं तत् ?—मरणं, आदिश्यते—इत्यादेशः आचार्यपारम्पर्यश्रुत्यायातो वृद्धवादो यमैतिह्यमाचक्षते स आदेशो 'यथे'त्युदाहरणोपन्यासार्थः, यथैतत्तथाऽन्यदप्यनया दिशा द्रष्टव्यं, 'आर्यवैरा'वैरस्वामिनो यथा तेषां मरणमभूत् तथा पादपोपगमनं च, एतच्च सपराक्रमं मरणमन्यत्राप्यायोज्यमिति गाथार्थः ॥ भावार्थस्तु कथानकादवसेयः, तच्च प्रसिद्धमेव, यथाऽऽर्यवैरैर्विस्मृतकर्णाहितशृङ्गवेरैः प्रमादादवगतासन्नमृत्युभिः सपराक्रमैरेव रथावर्त्तशिखरिणि पादपोपगमनमकारीति॥ साम्प्रतमपराक्रमं दर्शयितुमाह—

१५ शाक्याद्युत्त्यनादरः

२०

॥२३७॥ २८

अपरक्कममाएसो जह मरणं होइ उदहिनामाणं । पाओवगमेऽवि तहा एयं अपरक्कमं मरणं ॥२६५॥

न विद्यते पराक्रमः—सामर्थ्यमस्मिन्नित्यपराक्रमं, किं तत् ?—मरणं, तच्च यथा जङ्घाबलपरिक्षीणानामुदधिनाम्नाम्—आर्यसमुद्राणां मरणमभूद्, अयमादेशो—दृष्टान्तो वृद्धवादायात इति, पादपोपगमनेऽपि तथैवादेशं जानीयाद् यथा पादपोपगमनेन तेषां मरणमभूदिति, एतद्—अपराक्रमं मरणं यदार्यसमुद्राणां सञ्जातमेवमन्यत्राप्यायोज्यमिति गाथाऽक्षरार्थः ॥ भावार्थस्तु कथानकादवसेयः, तच्चेदम्—आर्यसमुद्रा आचार्याः प्रकृतिकृशा एवासन्, पश्चाच्च तैर्जङ्घाबलपरिक्षीणैः शरीराल्लाभमनपेक्ष्य तत्तित्यक्षुभिर्गच्छस्थैरेवानशनं विधाय प्रतिश्रयैकदेशे निर्हारिमं पादपोपगमनमकारि ॥ साम्प्रतं व्याघातिममाह—



वाघाइयमाएसो अवरद्धो हुज्ज अन्नतरएणं । तोसलि महिसीइ हओ एयं वाघाइयं मरणं ॥२६६॥



विशेषेणाघातो व्याघातः—सिंहादिकृतः शरीरविनाशस्तेन निर्वृत्तं तत्र वा भवं व्याघातिमं, कश्चित्सिंहाद्यन्यतरेणापराद्धो भवेद्—आरब्धो भवेत् तेन यन्मरणं तद्व्याघातिमं, तत्र वृद्धवादायात आदेशो—दृष्टान्तः, यथा—तोसलिनामाचार्यो महिष्याऽऽरब्धश्चतुर्विधाहारपरित्यागेन मरणमभ्युपगतवान् एतद्व्याघातिमं मरणमिति गाथाऽक्षरार्थो, भावार्थस्तु कथानकादवसेयः, तच्चेदम्—तोसलिनामाचार्योऽरण्यमहिषीभिः प्रारब्धः, तोसलिदेशे वा बह्वयो महिष्यः सम्भवन्ति, ताभिश्च कदाचिदेकः साधुरटव्यन्तर्वर्त्यारब्धः, स च ताभिः क्षुद्यमानोऽनिर्वाहमवगम्य चतुर्विधाहारं प्रत्याख्यातवानिति ॥ साम्प्रतमव्याघातिमप्रतिपादनेच्छयाऽऽह—



अणुपुव्विगमाएसो पव्वज्जासुत्तअत्थकरणं च । वीसज्जिओ(य)निन्तो मुक्को तिविहस्स नीयस्स ॥२६७॥

आनुपूर्वी—क्रमस्तं गच्छतीत्यानुपूर्वीगः, कोऽसौ ?—आदेशो—वृद्धवादः, स चायं, तद्यथा—पूर्वमुत्थितस्य प्रव्रज्यादानं, ततः सूत्र-

करणं पुनरर्थग्रहणं, ततस्तदुभयनिष्णातः सुपात्रनिक्षिप्तसूत्रार्थः गुर्वादिनाऽनुज्ञातोऽभ्युद्यतो मरणत्रिकान्यतराय 'निर्यन्' निर्गच्छन् त्रिविधस्याहारोपधिशय्याख्यस्य नित्यपरिभोगान्नित्यस्य मुक्तो भवति, तत्र यद्याचार्यस्तदा शिष्यान्निष्पाद्यापरमाचार्यं विधायोत्सर्गेण द्वादशसंवत्सरिकया संलेखनया संलिख्य ततो गच्छविसर्जितो गच्छानुज्ञया स्वस्थापिताचार्यविसर्जितो वा अभ्युद्यतमरणायापराचार्यान्तिकमियात्, एवमुपाध्यायः प्रवर्त्तिः स्थविरो गणावच्छेदकः सामान्यसाधुर्वाऽऽचार्यविसर्जितः कृतसंलेखनापरिकर्म्मा भक्तपरिज्ञादिकं मरणमभ्युपेयात्॥ तत्रापि भावसंलेखनां कुर्यात्, द्रव्यसंलेखानायां तु केवलायां दोषसम्भवादित्याह—

पडिचोइओ य कुविओ रण्णो जह तिक्ख सीयला आणा। तंबोले य विवेगो घट्टणया जा पसाओ य ॥२६८॥



प्रतिचोदितः मनाचार्येण पुनरपि संलिखेत्येवमभिहितः 'कुपितः' क्रुद्धो यथा च राज्ञः पूर्वं तीक्ष्णाज्ञा पश्चाच्छीतलीभवति एवमाचार्यस्यापि, 'तम्बोले' नागवल्लीपत्रे च कुथिते शेषरक्षणाय 'विवेकः' परित्यागः कार्यः, ततः 'घट्टना' कदर्थना कार्या, तत्सहिष्णोः पश्चाद्यावत् प्रसाद इति गाथाऽक्षरार्थः, भावार्थस्तु कथानकादवसेयः, तच्चेदम्—एकेन साधुना द्वादशवर्षसंलेखनयाऽऽत्मानं संलिख्य पुनरभ्युद्यतमरणायाचार्यो विज्ञप्तः, तेनाप्यभाणि—यथाऽद्यापि संलिख, ततोऽसौ कुपितः त्वगस्थिशेषामङ्गुलीं भङ्क्त्वा दर्शयति, किमत्राशुद्धमिति ?, आचार्योऽपि येनाभिप्रायेणोक्तवाँस्तमाविष्करोति—अत एवाशुद्धो भवान्, यतो वचनसमनन्तरमेवाङ्गुलीभङ्गद्वारेण भावाशुद्धतामाविष्कृतवानित्युक्त्वाऽऽचार्यस्तत्प्रतिबोधनाय दृष्टान्तं दर्शयति, यथा—कस्यचिद्राज्ञो नित्यं निष्पन्दिनी लोचने, ते च स्ववैद्योपन्यस्तानुष्ठानवतोऽपि न स्वस्थतामियातां, पुनरागन्तुकेन वैद्येनाभिहितः—स्वस्थीकरोमि भवन्तं यदि मुहूर्त्तं वेदनां तितिक्षसे वेदनार्त्तश्च न मां घातयसीति, राज्ञा चाभ्युपगतं, अञ्जनप्रक्षेपानन्तरोद्भूततीव्रवेदनार्त्तेनापगते ममाक्षिणी इत्येवं-

वादिना व्यापादयितुमारेभे, ततो राज्ञस्तीक्ष्णाज्ञा, यतश्च पूर्वमव्यापादनमभ्युपगतमतः शीतलेति, मुहूर्त्ताचापगतवेदनः पटुनयनश्च पूजितवैद्यो मुमुदे राजेति, एवमाचार्यस्यापि तीक्ष्णा प्रतिचोदनादिकाऽऽज्ञा परमार्थतस्तु शीतलेति, यदि पुनरेवं कथितेऽपि नोपशाम्यति ततः शेषसंरक्षणार्थं विकृतनागवल्लीपत्रस्येव विवेकः क्रियते, अथाचार्योपदेशं प्रतिपद्यते ततो गच्छ एव तिष्ठतो घट्टनादुर्वचनादिभिः कदर्थना क्रियते, यदि च तथापि न ज्वलति ततः शुद्ध इतिकृत्वाऽनशनदानेन प्रतिजागरणेन च प्रसादः क्रियत इति ॥ किम्भूतः पुनः कियन्तं वा कालं कथं वाऽऽत्मानं संलिखेदित्येतत् हृदि व्यवस्थाप्याह

शाक्याद्युत्तयनादरः

निप्फाइया य सीसा सउणी जह अंडगं पयत्तेणं । बारससंवच्छरियं सो संलेहं अह करेइ ॥२६९॥

चत्तारि विचित्ताइं विगईनिज्जूहियाइं चत्तारि । संवच्छरे य दुन्नि उ एगंतरियं तु आयामं ॥२७०॥

नाइविगिट्ठो उ तवो छम्मासे परिमियं तु आयामं । अन्नेऽवि य छम्मासे होइ विगिट्ठं तवोकम्मं ॥२७१॥

वासं कोडीसहियं आयामं काउ आणुपुव्वीए । गिरिकंदरंमि गंतुं पायवगमणं अह करेइ ॥२७२॥

सूत्रार्थतदुभयैः स्वशिष्याः प्रातीच्छका वा 'निष्पादिता' योग्यतामापादिताः शकुनिनेवाण्डकं प्रयत्नेन, ततोऽसौ 'अथ' अनन्तरं द्वादशसांवत्सरिकीं संलेखनां करोति, तद्यथा—चत्वारि वर्षाणि 'विचित्राणि' विचित्रतपोऽनुष्ठानवन्ति भवन्ति, चतुर्थषष्ठाष्टमदशमद्वादशादिके कृते पारणकं सविकृतिकमन्यथा वेति, पञ्चमादारभ्य संवत्सरादपराणि चत्वारि वर्षाणि निर्विकृतिकमेव पारणकमिति, नवमदशमसंवत्सरद्वयं त्वेकान्तरितमाचाम्लं, एकस्मिन्नहनि चतुर्थमपरेद्युराचाम्लेन पारणकमिति, तत एकादशसंवत्सरं द्विधा विधत्ते–तत्राद्यं षण्मासं नातिविकृष्टं तपः करोति, चतुर्थं षष्ठं वा विधाय परिमितेनाचाम्लेन पारणकं विधत्ते, न्यूनोदरतां करोती-

५

१०

त्यर्थः, अपरषण्मासं तु विकृष्टतपश्चरणवतः पूर्वोक्तमेव पारणकं, द्वादशं तु संवत्सरं कोटीसहितमाचाम्लं करोति, प्रतिदिनमाचाम्लेन भुङ्क्ते, आचाम्लस्य कोट्याः कोटिं मीलयत्यतः कोटीसहितमित्युक्तं, चतुर्मासावशेषे तु संवत्सरे तैलगण्डूषानस्खलितनमस्काराद्यध्ययनायापगतवातमुखयन्त्रप्रचारार्थं पौनःपुन्येन करोतीति, तदेवमनयाऽऽनुपूर्व्या सर्वं विधाय सति सामर्थ्ये गुरुणाऽनुज्ञातो गिरिकन्दरं गत्वा स्थण्डिलं प्रत्युपेक्ष्य 'अथ' अनन्तरं पादपोपगमनं करोति, इङ्गितमरणं वा भक्तप्रत्याख्यानं वा यथासमाधि विधत्त इति गाथाचतुष्टयार्थः ॥ अनया च द्वादशसंवत्सरसंलेखनाऽऽनुपूर्व्या क्रमेण आहारं परितनुं कुर्वत आहाराभिलाषोच्छेदो भवतीत्येतद्गाथाद्वयेन दर्शयितुमाह—



कह नाम सो तवोकम्मपंडिओ जो न निच्चुज्जुत्तप्पा । लहुवित्तीपरिक्खेवं वचइ जेमंतओ चेव ? ॥२७३॥
आहारेण विरहिओ अप्पाहारो य संवरनिमित्तं । हासंतो हासंतो एवाहारं निरुंभिज्जा ॥२७४॥

कथं नामासौ तपःकर्मणि पण्डितः स्यात् ?, यो न नित्यमुद्युक्तात्मा सन् वर्त्तनं वृत्तिः—द्वात्रिंशत्कवलपरिमाणलक्षणा तस्याः परिक्षेपः—संक्षेपो वृत्तिपरिक्षेपः लघुर्वृत्तिपरिक्षेपोऽस्येति लघुवृत्तिपरिक्षेपः तद्भावं यो भुञ्जान एव न व्रजति कथमसौ तपःकर्मणि पण्डित स्यात् ?, तथाऽऽहारेण विरहितो द्वित्रान् पञ्चषान् वा वासरान् स्थित्वा पुनः पारयति तत्राप्यल्पाहारोऽसौ भवति, किमर्थं ?—'संवरनिमित्तम्' अनशननिमित्तं, एवमसावुपवासैः प्रतिपारणकमल्पाहारतया च ह्रासयन् ह्रासयन्नाहारमुक्तविधिना पश्चान्निरुन्ध्याद्—भक्तप्रत्याख्यानं कुर्यादिति गाथाद्वयार्थः ॥ उक्तो नामनिष्पन्नो निक्षेपस्तन्निर्युक्तिश्च, साम्प्रतं सूत्रानुगमेऽस्खलितादिगुणोपेतं सूत्रमुच्चारणीयं, तच्चेदम्—

से बेमि समणुन्नस्स वा असमणुन्नस्स वा असणं वा पाणं वा खाइमं वा साइमं वा वत्थं वा पडिग्गहं वा कंवलं वा पायपुंछणं वा नो पादेज्जा नो निमंतिज्जा नो कुज्जा वेयावडियं परं आढायमाणेत्तिबेमि (सू. १९४)

सोऽहं ब्रवीमि योऽहं भगवतः सकाशात् ज्ञातज्ञेय इति, किं तद्ब्रवीमि?–वक्ष्यमाणं, तद्यथा—'समनोज्ञस्य वा' वाशब्द उत्तरापेक्षया पक्षान्तरोद्योतकः, समनोज्ञो दृष्टितो लिङ्गतो, न तु भोजनादिभिः, तस्य, तद्विपरीतस्त्वसमनोज्ञः शाक्यादिस्तस्य वा, अश्यत इत्यशनं–शाल्योदनादि, पीयत इति पानं–द्राक्षापानकादि, खाद्यत इति खादिमं–नालिकेरादि, स्वाद्यत इति स्वादिमं–कर्पूरलवङ्गादि, तथा वस्त्रं वा पात्रं वा पतद्ग्रहं वा कम्बलं वा पादपुञ्छनं वा, नो प्रदद्यात्–प्रासुकमप्रासुकं वा तदन्येषां कुशीलानामुपभोगाय नो वितरेत्, नापि दानार्थं निमन्त्रयेत्, न च तेषां वैयावृत्त्यं कुर्यात्, परम्–अत्यर्थमादरवान्न तेभ्यः किमपि दद्यात् नापि तानामन्त्रयेत् न च तेषां वैयावृत्त्यमुच्चावचं कुर्यादिति, ब्रवीमीत्यधिकारपरिसमाप्तौ ॥ एतच्च वक्ष्यमाणमहं ब्रवीमीत्याह—

५

धुवं चेयं जाणिज्जा असणं वा जाव पायपुंछणं वा लभिया नो लभिया भुंजिया नो भुंजिया पंथं विउत्ता विउक्कम्म विभत्तं धम्मं जोसेमाणे समेमाणे चलेमाणे पाइज्जा वा निमंतिज्ज वा कुज्जा वेयावडियं परं अणाढायमाणेत्तिबेमि (सू. १९५)

१०

ते हि शाक्यादयः कुशीला अशनादिकमुपदर्श्यैवं ब्रूयुः, यथा—ध्रुवं चैतज्जानीयात्—नित्यमसदावसथे भवति लभ्यते वाऽतो भवद्भिरेतदशनादिकमन्यत्र लब्ध्वा वाऽलब्ध्वा वा भुक्त्वा वाऽभुक्त्वा वा असद्धृतयेऽवश्यमागन्तव्यं, अलब्धे लाभाय लब्धेऽपि विशेषाय भुक्ते पुनः पुनर्भोजनाय अभुक्तेऽपि प्रथमालिकार्थमसद्धृतये यथाकथञ्चिदागन्तव्यं, यद्यथा वा भवतां कल्पनीयं भवति तत्तथा दास्याम इति, अनुपथ एवास्मदावसथो भवतां वर्त्तते, अन्यथाऽप्यसत्कृते पन्थानं व्यावर्त्यापि वक्रपथेनाप्यागन्तव्यमपक्रम्य वाऽन्यगृहाणि समागन्तव्यं, नात्रागमने खेदो विधेयः, किम्भूतोऽसौ शाक्यादिरिति दर्शयति—'विभक्तं' पृथग्भूतं धर्म्मं 'जुषन्' आचरन्, एतच्च कदाचित्प्रतिश्रयमध्येन 'समेमाणे' त्ति समागच्छन् तथा 'चलेमाणे' त्ति गच्छन् ब्रूयाद्, यदिवाऽशनादि प्रदद्यात् अशनादिदानेन वा निमन्त्रयेदन्यद्वा प्रश्रयवद्वैयावृत्त्यं कुर्यात्, तस्य कुशीलस्य नाभ्युपेयात्, न तेन सह संस्तवमपि कुर्यात्, कथं ?, परम्—अत्यर्थमनाद्रियमाणः—अनादरवान्, एवं हि दर्शनशुद्धिर्भवतीति ब्रवीमीत्येतत्पूर्वोक्तं ॥ यदि चैतद्वक्ष्यमाणमित्याह—

इहमेगेसिं आयारगोयरे नो सुनिसंते भवति ते इह आरंभट्ठी अणुवयमाणा हण पाणे घायमाणा हणओ यावि समणुजाणमाणा अदुवा अदिन्नमाययंति अदुवा वायाउ विउज्जंति, तंजहा—अत्थि लोए नत्थि लोए धुवे लोए अधुवे लोए साइए लोए अणाइए लोए सपज्जवसिए लोए अपज्जवसिए लोए सुकडेत्ति वा दुक्कडेत्ति वा कल्लाणेत्ति वा पावेत्ति वा साहुत्ति

वा असाहुत्ति वा सिद्धित्ति वा असिद्धित्ति वा निरएत्ति वा अनिरएत्ति वा, जमिणं विप्पडिवन्ना मामगं धम्मं पन्नवेमाणा इत्थवि जाणह अकस्मात् एवं तेसिं नो सुयक्खाए धम्मे नो सुपन्नत्ते धम्मे भवइ (सू. १९६)

'इह' अस्मिन्मनुष्यलोके 'एकेषां' पुरस्कृताशुभकर्मविपाकानामाचरणमाचारो–मोक्षार्थमनुष्ठानविशेषस्तस्य गोचरो–विषयः नो सुष्ठु निशान्तः–परिचितो भवति, ते चापरिणताचारगोचरा यथाभूताः स्युः तथा दर्शयितुमाह–'ते' अनधीताचारगोचरा भिक्षाचर्याऽस्नानस्वेदमलपरीषहतर्जिताः सुखविहारिभिः शाक्यादिभिरात्मसात्परिणामिताः 'इह' मनुष्यलोके आरम्भार्थिनो भवन्ति, ते वा शाक्यादयोऽन्ये वा कुशीलाः सावद्यारम्भार्थिनः, तथा विहारारामतडागकूपकरणौद्देशिकभोजनादिभिर्धर्मं वदन्तोऽनुवदन्तः, तथा जहि प्राणिनः इत्येवमपरैर्घातयन्तो घ्नतश्चापि समनुजानन्तः, अथवा अदत्तं परकीयं द्रव्यमगणितविपाकास्तिरोहितशुभाध्यवसायाः 'आददति' गृह्णन्तीति, किं च–तत्र प्रथमतृतीयव्रते अल्पवक्तव्यत्वात् पूर्वं प्रतिपाद्य ततो बहुतरवक्तव्यत्वात् द्वितीयव्रतोपन्यास इति, 'अथवेति' पूर्वस्मात् पक्षान्तरोपक्षेपकः, तद्यथा अदत्तं गृह्णन्त्यथवा वाचो विविधं–नानाप्रकारा युञ्जन्ति, 'तद्यथे'-त्युपक्षेपार्थः, अस्ति 'लोकः' स्थावरजङ्गमात्मकः, तत्र नवखण्डा पृथ्वी सप्तद्वीपा वसुन्धरेति वा, अपरेषां तु ब्रह्माण्डान्तर्वर्त्ती, अपरेषां तु प्रभूतान्येवम्भूतानि ब्रह्माण्डान्युदकमध्ये प्लवमानानि संतिष्ठन्ते, तथा सन्ति जीवाः स्वकृतफलभुजः, अस्ति परलोकः, स्तो बन्धमोक्षौ, सन्ति पञ्च महाभूतानि इत्यादि, तथाऽपरे चार्वाका आहुः–नास्ति लोको मायेन्द्रजालस्वप्नकल्पमेवैतत्सर्वं, तथा ह्यवि-



५

१०

चारितरमणीयतया भूताभ्युपगमोऽपि तेषामतो नास्ति परलोकानुयायी जीवो, न स्तः शुभाशुभे, किण्वादिभ्यो मदशक्तिवद्भूतेभ्य एव चैतन्यमित्यादिना सर्वं मायाकारगन्धर्वनगरतुल्यम्, उपपत्त्यक्षमत्वादिति, उक्तं च—"यथा यथाऽर्थाश्चिन्त्यन्ते, विविच्यन्ते तथा तथा। यद्येतत्स्वयमर्थेभ्यो, रोचते तत्र के वयम्। ॥१॥ भौतिकानि शरीराणि, विषयाः करणानि च। तथापि मन्दैरन्यस्य, तत्त्वं समुपदिश्यते ॥२॥" इत्यादि, तथा साङ्ख्यादय आहुः—'ध्रुवो' नित्यो लोकः, आविर्भावतिरोभावमात्रत्वादुत्पादविनाशयोः, असतोऽनुत्पादात् सतश्चाविनाशात्, यदिवा 'ध्रुवः' निश्चलः, सरित्समुद्रभूभूधराभ्राणां निश्चलत्वात्, शाक्यादयस्त्वाहुः—अध्रुवो लोकोऽनित्यः, प्रतिक्षणं विशरारुस्वभावत्वात्, विनाशहेतोरभावात् नित्यस्य च क्रमयौगपद्याभ्यामर्थक्रियायामसामर्थ्यात्, यदिवा 'अध्रुवः' चलः, तथाहि—भूगोलः केषाञ्चिन्मतेन नित्यं चलन्नेवास्ते, आदित्यस्तु व्यवस्थित एव, तत्रादित्यमण्डलं दूरत्वाद्ये पूर्वतः पश्यन्ति तेषामादित्योदयः, आदित्यमण्डलाधोव्यवस्थितानां मध्याह्नः, ये तु दूरातिक्रान्तत्वान्न पश्यन्ति तेषामस्तमित इति, अन्ये पुनः सादिको लोक इति प्रतिपन्नाः, तथा चाहुः—"आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्। अप्रतर्क्यमविज्ञेयं, प्रसुप्तमिव सर्वतः ॥१॥ तस्मिन्नेकार्णवीभूते, नष्टस्थावरजङ्गमे। नष्टामरनरे चैव, प्रनष्टोरगराक्षसे ॥२॥ केवलं गह्वरीभूते, महाभूतविवर्जिते। अचिन्त्यात्मा विभुस्तत्र, शयानस्तप्यते तपः ॥३॥ तस्य तत्र शयानस्य, नाभेः पद्मं विनिर्गतम्। तरुणरविमण्डलनिभं, हृद्यं काञ्चनकर्णिकम् ॥४॥ तस्मिन् पद्मे तु भगवान् दण्डी यज्ञोपवीतसंयुक्तः। ब्रह्मा तत्रोत्पन्नस्तेन जगन्मातरः सृष्टाः ॥५॥ अदितिः सुरसङ्घानां दितिरसुराणां मनुर्मनुष्याणाम्। विनता विहङ्गमानां माता विश्वप्रकाराणाम् ॥६॥ कद्रूः सरीसृपाणां सुलसा माता तु नागजातीनाम्। सुरभिश्चतुष्पदानामिला पुनः सर्वबीजानाम् ॥७॥" इत्यादि, अपरे तु पुनरनादिको लोक इत्येवं प्रतिपन्नाः, यथा शाक्या-

प्र. आ. २६६

१५ शाक्याद्युक्त्यनादरः

२०

॥२४१॥

२८

एवमाहुः—अनवदग्रोऽयं भिक्षवः ! संसारः, पूर्वा च कोटी न प्रज्ञायते, अविद्या निरावरणानां सत्त्वानां न विद्यते, न च सत्त्वोत्पाद इति, तथा सपर्यवसितो लोको, जगत्प्रलये सर्वस्य विनाशसद्भावात्, तथाऽपर्यवसितो लोकः, सतः आत्यन्तिकविनाशासम्भवात्, 'न कदाचिदनीदृशं जगदि'ति वचनात्, तत्र येषां सादिकस्तेषां सपर्यवसितो येषां त्वनादिकस्तेषामपर्यवसित इति, केषाञ्चित्तूभयमपीति, तथा चोक्तम्—"द्वावेव पुरुषौ लोके, क्षरश्चाक्षर एव च। क्षरः सर्वाणि भूतानि, कूटस्थोऽक्षर उच्यते ॥ १ ॥" इत्यादि, तदेवं परमार्थमजानाना अस्तीत्याद्यभ्युपगमेन लोकं विवदमानाः नानाभूता वाचो नियुञ्जन्ति, तथाऽऽत्मानमपि प्रति विवदन्ते, तद्यथा–सुष्ठु कृतं सुकृतमिति वा दुष्कृतमिति वेत्येवं क्रियावादिनः संप्रतिपद्यन्ते, तथा सुष्ठु कृतं यत् सर्वसङ्गपरित्यागतो महाव्रतमग्राहि, तथाऽपरे दुष्कृतं भवता यदसौ मुग्धमृगलोचना पुत्रमनुत्पाद्योज्झितेति, तथा य एव कश्चित्प्रव्रज्योद्यतः कल्याण इत्येवमभिहितः स एवापरेण पाखण्डिकविप्रलब्धः क्लीबोऽयं गृहाश्रमपालनासमर्थोऽनपत्यः पाप इत्येवमभिधीयते, तथा साधुरिति वा असाधुरिति वा स्वमतिविकल्पितरुचिभिरभिधीयते, तथा सिद्धिरिति वा असिद्धिरिति वा नरक इति वा अनरक इति वा, एवमन्यदप्याश्रित्य स्वाग्रहग्रहिणो विवदन्त इति दर्शयति, 'यदिदं विप्रतिपन्ना' यत्पूर्वोक्तं लोकादिकं तदिदमाश्रित्य विविधं प्रतिपन्ना विप्रतिपन्नाः, तथा चोक्तम्–"इच्छंति कृत्रिमं सृष्टिवादिनः सर्वमेव मितिलिङ्गम्। कृत्स्नं लोकं माहेश्वरादयः सादिपर्यन्तम् ॥१॥ नारीश्वरजं केचित् केचित्सोमाग्निसम्भवं लोकम्। द्रव्यादिषड्विकल्पं जगदेतत्केचिदिच्छन्ति ॥२॥ ईश्वरप्रेरितं केचित्केचिद्ब्रह्मकृतं जगत्। अव्यक्तप्रभवं सर्वं, विश्वमिच्छन्ति कापिलाः ॥३॥ यादृच्छिकमिदं सर्वं, केचिद्भूतविकारजम्। केचिच्चानेकरूपं तु, बहुधा संप्रधाविताः ॥४॥" इत्यादि, तदेवमनवगाहितस्याद्वादोदन्वतामेकांशावलम्बिनां मतिभेदाः प्रादुष्ष्यन्ति, तदुक्तम्–"लोकक्रिया-

शाक्या-
द्युत्य-
नादरः

५

१०

ऽऽत्मतत्त्वे विवदन्ते वादिनो विभिन्नार्थम्। अविदितपूर्वं येषां स्याद्वादविनिश्चितं तत्त्वम्॥१॥" येषां तु पुनः स्याद्वादमतं निश्चितं तेषामस्तित्वनास्तित्वादेरर्थस्य नयाभिप्रायेण कथञ्चिदाश्रयणात् विवादाभाव एवेति, अत्र च बहु वक्तव्यं तत्तु नोच्यते, ग्रन्थविस्तरभयाद्, अन्यत्र च सूत्रकृदादौ विस्तरेण सुविहितत्वादिति। ते च विवदन्तः परस्परतो विप्रतिपन्नाः 'मामकम्' इत्यात्मीयं धर्म्मं प्रज्ञापयन्तः स्वतो नष्टाः परानपि नाशयन्ति, तथाहि—केचित्सुखेन धर्म्ममिच्छन्ति अपरे दुःखेनान्ये स्नानादिनेति, तथा मामक एवैको धर्म्मो मोक्षायानिर्वाच्यश्च नापर इत्येवं वदन्तोऽपुष्टधर्म्माणोऽविदितपरमार्था न् प्रतारयन्ति, तेषामुत्तरं दर्शयति— 'अत्रापि' अस्ति लोको नास्ति वेत्यादौ जानीत यूयम् 'अकस्मादि'ति मागधदेशे आगोपालाङ्गनादिना संस्कृतस्यैवोच्चारणादिहापि तथैवोच्चारित इति, कस्मादिति हेतुः न कस्मादकस्माद् हेतोरभावादित्यर्थः, तत्रास्ति लोक इत्युक्तेऽत्राप्येवं जानीत यथा न भवत्येवमकस्माद्, हेतोरभावादिति, तथाहि—यद्येकान्तेनैव लोकोऽस्ति ततोऽस्तिना सह सामानाधिकरण्याद्यदस्ति तल्लोकः स्याद्, एवं च तत्प्रतिपक्षोऽप्यलोकोऽस्तीतिकृत्वा लोक एवालोकः स्याद्, व्याप्यसद्भावे व्यापकस्यापि सद्भावाद्लोकाभावः, तदभावे च तत्प्रतिपक्षभूतस्य लोकस्य प्रागेवाभावः सर्वगतत्वं वा लोकस्य स्यादिति, अथवा लोकोऽस्ति, न च लोको भवति, लोकोऽपि नामास्ति, न च लोकोऽलोकाभाव इत्येवं स्याद्, अनिष्टं चैतत्, किं च—अस्तेर्व्यापकत्वे लोकस्य घटपटादेरपि लोकत्वप्राप्तिः, व्याप्यस्य व्यापकसद्भावनान्तरीयकत्वात्, किं च—अस्ति लोकः इत्यत्रापि प्रतिज्ञा लोक इतिकृत्वा हेतोरप्यस्तित्वात् प्रतिज्ञाहेत्वोरेकत्वप्राप्तिः, तदेकत्वे हेत्वभावः, तदभावे किं केन सिद्ध्यतीति?, उतास्तित्वादन्यो लोक इत्येवं च प्रतिज्ञाहानिः स्यात्, तदेवमेकान्तेनैव लोकास्तित्वेऽभ्युपगम्यमाने हेत्वभावः प्रदर्शितः, एवं नास्तित्वप्रतिज्ञायामपि वाच्यं, तथाहि—नास्ति लोक इति ब्रुवन् वाच्यः—किं भवा-

(Left margin: ॥०, ७विमो०, १ उदे०, ग्र. आ. २६७)

(Right margin: १५, शाक्याद्युक्त्यनादरः, २०, ॥२४२॥, २८)

नस्त्युत नेति ?, यद्यस्ति किं लोकान्तर्वर्ती न वेति, यदि लोकान्तर्गतः कथं नास्ति लोक इति ब्रवीषि ?, अथ बहिर्भूतस्ततः खर-विषाणवदसद्भूत एवेति कस्य मयोत्तरं दातव्यम्, इत्यनया दिशैकान्तवादिनः स्वयमभ्युह्य प्रतिक्षेप्तव्या इति, 'एव' मिति यथा-ऽस्तित्वनास्तित्ववादस्तेषामाकस्मिको-निर्युक्तिकः, एवं ध्रुवाध्रुवादयोऽपि वादा निर्युक्तिका एवेति, अस्माकं तु स्याद्वादवादिनां कथ-ञ्चिदभ्युपगमान्न यथोक्तदोषानुषङ्गो, यतः स्वपरसत्ताव्युदासोपादानापाद्यं हि वस्तुनो वस्तुत्वम्, अतः स्वद्रव्यक्षेत्रकालस्वभावतो-ऽस्ति परद्रव्यादिचतुष्टयान्नास्तीति, उक्तं च-"सदेव सर्वं को नेच्छेत्, स्वरूपादिचतुष्टयात् ?। असदेव विपर्यासान्न चेन्न व्यवतिष्ठते ॥१॥" इत्यादि, अलमतिप्रसङ्गेनाक्षरगमनिकार्थत्वात् प्रयासस्य, एवं ध्रुवाध्रुवादिष्वपि पञ्चावयवेन दशावयवेन वाऽन्यथा वैकान्तपक्षं विक्षिप्य स्याद्वादपक्षोऽभ्युह्यायोज्य इति। साम्प्रतमुपसंहरति-एवं उक्तनीत्या तेषामेकान्तवादिनां न स्वाख्यातो धर्म्मो भवति, नापि शास्त्रप्रणयनेन सुप्रज्ञापितो भवति॥ किं स्वमनीषिकया भवतेदमभिधीयते ?, नेत्याह, यदिवा किम्भूतस्तर्हि सुप्र-ज्ञापितो धर्म्मो भवतीत्याह—

५

से जहेयं भगवया पवेइयं आसुपन्नेण जाणया पासया अदुवा गुत्ती वओगोयरस्सत्तिबेमि सव्वत्थ संमयं पावं, तमेव उवाइक्कम्म एस महं विवेगे वियाहिए,गामे वा अदुवा रण्णे नेव गामे नेव रण्णे धम्ममायाणह पवेइयं माहणेण मइमया,जामा तिन्नि उदाहिया जेसु इमे आय-रिया संबुज्झमाणा समुट्ठिया, जे णिव्वुया पावेहिं कम्मेहिं अणियाणा ते वियाहिया (सू.१९७)

१०

तद्यथा 'इदं' स्याद्वादरूपं वस्तुनो लक्षणं समस्तव्यवहारानुयायि क्वचिदप्यप्रतिहतं 'भगवता' श्रीवर्द्धमानस्वामिना प्रवेदितम्, एतद्वाऽनन्तरोक्तं भगवता प्रवेदितमिति, किम्भूतेनेति दर्शयति–आशुप्रज्ञेन, निरावरणत्वात् सततोपयुक्तेनेत्यर्थः, किं यौगपद्येन ?, नेति दर्शयति–'जानता' ज्ञानोपयुक्तेन, तथा 'पश्यता' दर्शनोपयुक्तेनैतत्प्रवेदितं, यथा नैषामेकान्तवादिनां धर्म्मः स्वाख्यातो भवति, अथवा गुप्तिर्वाग्गोचरस्य—भाषासमितिः कार्येत्येतत्प्रवेदितं भगवता, यदिवा अस्ति नास्ति ध्रुवाध्रुवादिवादिनां वादायोत्थितानां त्रयाणां त्रिषष्ट्यधिकानां प्रावादुकशतानां वादलब्धिमतां प्रतिज्ञाहेतुदृष्टान्तोपन्यासद्वारेण तदुपन्यस्तदूषणोपन्यासेन च तत्पराजयापादनतः सम्यगुत्तरं देयम्, अथवा गुप्तिर्वाग्गोचरस्य विधेयेत्येतदहं ब्रवीमि, वक्ष्यमाणं चेत्याह–तान् वादिनो वादायोत्थितानेवं ब्रूयाद्–यथा भवतां सर्वेषामपि पृथिव्यप्तेजोवायुवनस्पत्यारम्भः कृतकारितानुमतिभिरनुज्ञातोऽतः सर्वत्र 'सम्मतम्' अभिप्रेतमप्रतिषिद्धं 'पापं' पापानुष्ठानं, मम तु नैतत्सम्मतमित्येतद्दर्शयितुमाह–'तदेव' एतत्पापानुष्ठानमुप–सामीप्येनातिक्रम्य–अतिलङ्घ्य यतोऽहं व्यवस्थितोऽत्र एष मम विवेको व्याख्यातः, तत्कथमहं सर्वाप्रतिषिद्धास्रवद्वारैः संभाषणमपि करिष्ये ?, आस्तां तावद्वाद इत्येवमसमनुज्ञविवेकं करोतीति, अत्राह चोदकः–कथं तीर्थिकाः सम्मतपापा अज्ञानिनो मिथ्यादृष्टयोऽचरित्रिणोऽतपस्विनो वेति ?, तथाहि–तेऽप्यकृष्टभूमिवनवासिनो मूलकन्दाहारा वृक्षादिनिवासिनश्चेति, अत्राहाचार्यः–नारण्यवासादिना धर्मः, अपि तु जीवाजीवपरिज्ञानात् तत्पूर्वकानुष्ठानाच्च, तच्च तेषां नास्तीत्यतोऽसमनोज्ञास्ते इति। किं च–सदसद्विवेकिनो हि धर्म्मः, स च ग्रामे वा स्यात् अथवाऽरण्ये, नैवाधारो ग्रामो, नैवारण्यं धर्मनिमित्तं, यतो भगवता न वसिममितरद्वाऽऽश्रित्य धर्म्मः प्रवेदितः, अपि तु जीवादितत्त्वपरिज्ञानात् सम्यगनुष्ठानाच्च, अतस्तं धर्ममजानीत 'प्रवेदितं' कथितं 'माहणेण'त्ति भगवता, किम्भूतेन ?–'मतिमता' मननं–

प्र. आ. २६८

२० ॥२४३॥ २७

सर्वपदार्थपरिज्ञानं मतिस्तद्वता मतिमता, केवलिनेत्यर्थः। किंभूतो धर्म्मः प्रवेदित इत्याह—'यामा' व्रतविशेषाः त्रय उदाहृताः, तद्यथा-प्राणातिपातो मृषावादः परिग्रहश्चेति. अदत्तादानमैथुनयोः परिग्रह एवान्तर्भावात् त्रयग्रहणं, यदिवा यामा-वयोविशेषाः, तद्यथा-अष्टवर्षादात्रिंशतः प्रथमस्तत ऊर्द्ध्वमाषष्टेः द्वितीयस्तत ऊर्द्ध्वं तृतीय इति. अतिबालवृद्धयोर्व्युदासो, यदिवा यम्यते-उपरम्यते संसारभ्रमणादेभिरिति यामाः-ज्ञानदर्शनचारित्राणीति, ते 'उदाहृता' व्याख्याताः, यदि नामैवं ततः किमित्याह-'येषु' अवस्था-विशेषेषु ज्ञानादिषु वा इमे देशार्या अपाकृतहेयधर्म्मा वा सम्बुध्यमानाः सन्तः समुत्थिताः, के ?-ये 'निर्वृताः' क्रोधाद्यपगमेन शीतीभूताः पापेषु कर्म्मसु 'अनिदाना' निदानरहिताः ते 'व्याख्याताः' प्रतिपादिता इति॥ क च पुनः पापकर्म्मसनिदाना इत्यत आह—

उड्ढं अहं तिरियं दिसासु सव्वओ सव्वावंति च णं पाडियक्कं जीवेहिं कम्मसमारम्भे णं तं परिन्नाय मेहावी नेव सयं एएहिं काएहिं दंडं समारंभिज्जा नेवन्ने एएहिं काएहिं दंडं समारंभाविज्जा नेवन्ने एएहिं काएहिं दंडं समारंभंतेऽवि समणुजाणेज्जा जेवऽन्ने एएहिं काएहिं दंडं समारंभंति तेसिंपि वयं लज्जामो तं परिन्नाय मेहावी तं वा दंडं अन्नं वा नो दंडभी दंडं समारंभिज्जासित्तिवेमि (सू. १९८)॥ विमोक्षाध्ययनोद्देशकः ८-१॥

ऊर्ध्वमधस्तिर्यग्दिक्षु 'सर्वतः' सर्वैः प्रकारैः सर्वा याः काश्चन दिशः चशब्दादनुदिशश्च 'णम्' इति वाक्यालङ्कारे 'प्रत्येकं जीवेषु'

एकेन्द्रियसूक्ष्मेतरादिकेषु यः कर्म्मसमारम्भः-जीवानुद्दिश्य य उपमर्दरूपः क्रियासमारम्भः 'णम्' इति वाक्यालङ्कारे तं कर्म्मसमारम्भं ज्ञपरिज्ञया ज्ञात्वा प्रत्याख्यानपरिज्ञया प्रत्याचक्षीत, कोऽसौ ?—'मेधावी' मर्यादाव्यवस्थित इति, कथं प्रत्याचक्षीतेत्याह—नैव स्वयमात्मना 'एतेषु' चतुर्दशभूतग्रामावस्थितेषु 'कायेषु' पृथिवीकायादिषु 'दण्डम्' उपमर्दं समारभेत, न चापरेण समारम्भयेत्, नैवान्यान् समारभमाणान् समनुजानीयात्, ये चान्ये दण्डं समारभन्ते, सुव्व्यत्ययेन तृतीयार्थे षष्ठी, तैरपि वयं लज्जाम इत्येवं कृताध्यवसायः सन् तज्जीवेषु कर्म्मसमारम्भं महतेऽनर्थाय 'परिज्ञाय' ज्ञात्वा 'मेधावी' मर्यादावान्, तथा पूर्वोक्तं दण्डमन्यद्वा मृषावादादिकं दण्डाद् बिभेतीति दंडदभीः सन् नो 'दण्डं' प्राण्युपमर्दादिकं समारभेथाः, करणत्रिकयोगत्रिकेण परिहरेदिति, इतिरधिकारपरिसमाप्तौ, ब्रवीमीति पूर्ववत्। विमोक्षाध्ययने प्रथमोद्देशक इति ॥



उक्तः प्रथमोद्देशकः साम्प्रतं द्वितीय आरभ्यते, अस्य चायमभिसम्बन्धः, इहानन्तरोद्देशकेऽनघसंयमप्रतिपालनाय कुशीलपरित्यागोऽभिहितः, स चैतावताऽकल्पनीयपरित्यागमृते न सम्पूर्णतामियाद् अतोऽकल्पनीयपरित्यागार्थमिदमुपक्रम्यत इत्यनेन सम्बन्धेनायातस्यास्योद्देशकस्यादिसूत्रम्—

से भिक्खू परिक्कमिज्ज वा चिट्ठिज्ज वा निसीइज्ज वा तुयट्टिज्ज वा सुसाणंसि वा सुन्नागारंसि वा गिरिगुहंसि वा रुक्खमूलंसि वा कुंभाराययणंसि वा हुरत्था वा कहिंचि विहरमाणं



१५

२०

॥२४४॥

२५

तं भिक्खुं उवसंकमित्तु गाहावई बूया-आउसंतो समणा ! अहं खलु तव अट्ठाए असणं वा पाणं वा खाइमं वा साइमं वा वत्थं वा पडिग्गहं वा कंबलं वा पायपुच्छणं वा पाणाइं भूयाइं जीवाइं सत्ताइं समारब्भ समुद्दिस्स कीयं पामिच्चं अच्छिज्जं अणिसट्ठं अभिहडं आहट्टु चेएमि आवसहं वा समुस्सिणोमि से भुंजह वसह, आउसंतो समणा ! भिक्खू तं गाहावइं समणसं सवयसं पडियाइक्खे-आउसंतो ! गाहावई नो खलु ते वयणं आढामि नो खलु ते वयणं परिजाणामि, जो तुमं मम अट्ठाए असणं वा ४ वत्थं वा ४ पाणाइं वा ४ समारम्भ समुद्दिस्स कीयं पामिच्चं अच्छिज्जं अणिसट्ठं अभिहडं आहट्टु चेएसि आवसहं वा समुस्सिणासि, से विरओ आउसो गाहावई ! एयस्स अकरणयाए (सू. १९९)

५

'स' कृतसामायिकः सर्वसावद्याकरणतया प्रतिज्ञामन्दरमारूढो भिक्षणशीलो भिक्षुः भिक्षार्थमन्यकार्याय वा 'पराक्रमेत' विहरेत् तिष्ठेद्वा ध्यानव्यग्रो निषीदेद्वा अध्ययनाध्यापनश्रवणश्रावणादृतः, तथा श्रान्तः क्वचिद्ध्यानादौ त्वग्वर्त्तनं वा विदध्यात्, कैतानि विदध्यादिति दर्शयति-'श्मशाने वा' शवानां शयनं श्मशानं-पितृवनं तस्मिन् वा, तत्र च त्वग्वर्त्तनं न सम्भवत्यतो यथासम्भवं

१०

७विमो० १ उद्दे० प्र. आ. २८०

पराक्रमणाद्यायोज्यं, तथाहि-गच्छवासिनस्तत्र स्थानादिकं न कल्पते, प्रमादस्खलितादौ व्यन्तराद्युपद्रवात्, तथा जिनकल्पार्थं सत्त्वभावनां भावयतोऽपि न पितृवनमध्ये निवासोऽनुज्ञातः, प्रतिमाप्रतिपन्नस्य तु यत्रैव सूर्योऽस्तमुपयाति तत्रैव स्थानं, जिनकल्पिकस्य वा, तदपेक्षया श्मशानग्रहणम्, एवमन्यदपि यथासम्भवमायोज्यं, शून्यागारे वा गिरिगुहायां वा 'हुरत्था व'त्ति अन्यत्र वा ग्रामादेर्बहिस्तं भिक्षुं कचिद्विहरन्तं गृहपतिरुपसंक्रम्य विनेयदेशं गत्वा 'ब्रूयाद्' वदेदिति, यच्च ब्रूयात्तद्दर्शयितुमाह-साधुं श्मशानादिषु परिक्रमणादिकां क्रियां कुर्वाणमुपसङ्क्रम्य-उपेत्य पूर्वस्थितो वा गृहस्थः प्रकृतिभद्रकोऽभ्युपेतसम्यक्त्वो वा साध्वाचाराकोविदः साधुमुद्दिश्यैतद्ब्रूयात्-यथैते लब्धापलब्धभोजिनः त्यक्तारम्भाः सानुक्रोशाः सत्यशुचयः, एतेषु निक्षिप्तमक्षयमित्यतोऽहमेतेभ्यो दास्यामीत्यभिसन्धाय साधुमुपतिष्ठते, वक्ति च-आयुष्मन्! भोः श्रमण! अहं संसारार्णवं समुत्तितीर्षुः 'खलुः' वाक्यालङ्कारे 'तवार्थाय' युष्मन्निमित्तं अशनं वा पानं वा खादिमं वा स्वादिमं वा तथा वस्त्रं वा पतद्ग्रहं वा कम्बलं वा पादपुञ्छनं वा समुद्दिश्य-आश्रित्य, किं कुर्यादिति दर्शयति-पञ्चेन्द्रियोच्छ्वासनिश्वासादिसमन्विताः प्राणिनस्तान्, अभूवन् भवन्ति भविष्यन्ति चेति भूतानि तानि, तथा जीवितवन्तो जीवन्ति जीविष्यन्तीति वा जीवाः तान्, सत्त्वाः सुखदुःखेष्विति सत्त्वास्तान् समारभ्य—उपमर्द्य, तथाहि-अशनाद्यारम्भे प्राण्युपमर्दोऽवश्यंभावी, एतच्च समस्तं व्यस्तं वा कश्चित्प्रतिपद्येत, इयं चाविशुद्धिकोटिर्गृहीता, सा चेमा-"आहाकम्मुद्देसिअ मीसजा बायरा य पाहुडिआ। पूइअ अज्झोयरगो उग्गमकोडी अ छब्भेआ ॥ १ ॥" विशुद्धिकोटिं दर्शयति—'क्रीतं' मूल्येन गृहीतं 'पामिच्चं'ति अपरस्मादुच्छिन्नमुद्यतकं गृहीतं, बलात्कारितया वाऽन्यस्मादाच्छिद्य राजोपसृष्टो वाऽन्येभ्यो गृहिभ्यः

१ आधाकर्मौद्देशिके मिश्रजातं बादरश्च प्राभृतिका। पूतिश्च अध्यवपूरक उद्गमकोटी च षड्भेदा ॥१॥

अशुद्धाशनादिनिषेधः

१५

२०

२५

साधोर्दास्यामीत्याच्छिन्द्यात्, तथा 'अनिसृष्टं' परकीयं यच्चदन्तिके तिष्ठति न च परेण तस्य निसृष्टं—दत्तं तदनिसृष्टं, तदेवंभूतमपि साधोर्दानाय प्रतिपद्यते, तथा स्वगृहादाहृत्य 'चेएमि'त्ति ददामि तुभ्यं वितरामि, एवमशनादिकमुद्दिश्य ब्रूयात्, तथा 'आवसथं वा युष्मदाश्रयं समुच्छृणोमि—आदेरारभ्यापूर्वं करोमि संस्कारं वा करोमीत्येवं प्राञ्जलिरवनतोत्तमाङ्गः सन् अशनादिना निमन्त्रयेत्, यथा—भुङ्क्ष्वाशनादिकं मत्संस्कृतावसथे वसेत्यादि, द्विवचनबहुवचने अप्यायोज्ये। साधुना तु सूत्रार्थविशारदेनादीनमनस्केन प्रतिषेधितव्यमित्याह—आयुष्मन्! श्रमण! भिक्षो! तं गृहपतिं समनसं सवयसमन्यथाभूतं वा प्रत्याचक्षीत, कथमिति चेद्दर्शयति —यथा आयुष्मन्! भो गृहपते! न खलु तवैवंभूतं वचनमहमाद्रिये, खलुशब्दोऽपिशब्दार्थे, स च समुच्चये, नापि तवैतद्वचनं 'परिजानामि' आसेवनपरिज्ञानेन परिविदधेऽहमित्यर्थः, यस्त्वं मम कृतेऽशनादि प्राण्युपमर्देन विदधासि यावदावसथमुच्छ्रयं विदधासि, भो आयुष्मन् गृहपते! विरतोऽहमेवम्भूतादनुष्ठानात्, कथम्?—एतस्य—भवदुपन्यस्तस्याकरणतयेत्यतो भवदीयमभ्युपगमं न जानेऽहमिति॥ तदेवं प्रकटाशनादिसंस्कारप्रतिषेधः प्रतिपादितो, यदि पुनः कश्चिद्विदितसाध्वभिप्रायः प्रच्छन्नमेव विदध्यात् तदपि कुतश्चिदुपलभ्य प्रतिषेधयेदित्याह—

से भिक्खुं परिक्कमिज्ज वा जाव हुरत्था वा कहिंचि विहरमाणं तं भिक्खुं उवसंकमित्तु गाहावई आयगयाए पेहाए असणं वा ४ वत्थं वा ४ जाव आहट्टु चेएइ आवसहं वा समुस्सिणाइ भिक्खू परिघासेउं, तं च भिक्खू जाणिज्जा सहसम्मइयाए परवागरणेणं अन्नेसिं

अशुद्धाशनादिनिषेधः

५

१०

वा सुचा–अयं खलु गाहावई मम अट्ठाए असणं वा ४ वत्थं वा ४ जाव आवसहं वा समुस्सिणाइ, तं च भिक्खू पडिलेहाए आगमित्ता आणविजा अणासेवणाएत्तिबेमि (सू. २००)

तं भिक्षुं कश्चित् श्मशानादौ विहरन्तमुपसङ्क्रम्य प्राञ्जलिर्वन्दित्वा गृहपतिः प्रकृतिभद्रकादिकः कश्चिदात्मगतया प्रेक्षयाऽनाविष्कृताभिप्रायः केनचिदलक्ष्यमाणो यथाऽहमस्य दास्यामीत्यशनादिकं प्राण्युपमर्देनारभेत, किमर्थमिति चेद्दर्शयति—तदशनादिकं भिक्षुं 'परिघामयितुं' भोजयितुं, साधुभोजनार्थमित्यर्थः, आवमथं च साधुभिरधिवासयितुमिति, तदशनादिकं साध्वर्थं निष्पादितं भिक्षुः 'जानीयात्' परिच्छिन्द्यात्, कथमित्याह–स्वसन्मत्या परव्याकरणेन वा तीर्थकरोपदिष्टोपायेन वा अन्येभ्यो वा तत्परिजनादिभ्यः श्रुत्वा, जानीयादिति वर्त्तते, यथाऽयं खलु गृहपतिर्मदर्थमशनादिकं प्राण्युपमर्देन विधाय मह्यं ददाति आवसथं च समुच्छ्रृणोति, तद्भिक्षुः सम्यक् 'प्रत्युपेक्ष्य' पर्यालोच्यावगम्य च ज्ञात्वा 'ज्ञापयेत्' तं गृहपतिमनासेवनया यथाऽनेन विधानेनोपकल्पितमाहारादिकं नाहं भुञ्जे एवं तस्य ज्ञापनं कुर्याद्, यद्यसौ श्रावकस्ततो लेशतः पिण्डनिर्युक्तिं कथयेद्, अन्यस्य च प्रकृतिभद्रकस्योद्गमादिदोषानाविर्भावयेत् प्रासुकदानफलं च प्ररूपयेत्, यथाशक्तितो धर्म्मकथां च कुर्यात्, तद्यथा–"काले देशे कल्प्यं श्रद्धायुक्तेन शुद्धमनसा च। सत्कृत्य च दातव्यं दानं प्रयतात्मना सद्भ्यः ॥१॥" तथा–"दानं सत्पुरुषेषु स्वल्पमपि गुणाधिकेषु विनयेन। वटकणिकेव महान्तं न्यग्रोधं सत्फलं कुरुते ॥२॥ दुःखसमुद्रं प्राज्ञास्तरन्ति पात्रार्पितेन दानेन। लघुनेव मकरनिलयं वणिजः सद्यानपात्रेण ॥३॥ इत्यादि, इतिरधिकारपरिसमाप्तौ, ब्रवीमीत्येतत्पूर्वोक्तं वक्ष्यमाणं चेत्याह—

प्र. आ. २७१ १५ अशुद्धाशनाद्यनासेवा

२०

॥२४६॥ २६

भिक्खुं च खलु पुट्ठा वा अपुट्ठा वा जे इमे आहच्च गंथा वा फुसंति, से हंता हणह खणह छिंदह दहह पयह आलुंपह विलुंपह सहसाकारेह विप्परामुसह, ते फासे धीरो पुट्ठो अहियासए अदुवा आयारगोयरमाइक्खे, तक्किया णमणेलिसं अदुवा वइगुत्तीए गोयरस्स अणुपुव्वेण संमं पडिलेहए आयतगुत्ते बुद्धेहिं एयं पवेइयं (सू. २०१)

'चः' समुच्चये 'खलुः' वाक्यालङ्कारे भिक्षणशीलो भिक्षुस्तं भिक्षुं पृष्ट्वा कश्चिद् यथा भो भिक्षो! भवदर्थमशनादिकमावसथं वा संस्करिष्ये, अननुज्ञातोऽपि तेनासौ तत्करोत्यवश्यम्, चाटुभिर्बलात्कारेण वा ग्राहयिष्यते, अपरस्त्वीपत्साध्वाचारविधिज्ञोऽतोऽपृष्ट्वैव छद्मना ग्राहयिष्यामीत्यभिसन्धायाशनादिकं विदध्यात्, स च तदपरिभोगे श्रद्धाभङ्गाचादुशताग्रहणाच्च रोषावेशान्निःसुखदुःखतयाऽलोकज्ञा इत्यनुशयाच्च राजानुसृष्टतया च न्यक्कारभावनातः प्रद्वेषमुपगतो हननादिकमपि कुर्यादिति दर्शयति—एकाधिकारे बहुतिदेशाद्य इमे प्रश्नपूर्वकमप्रश्नपूर्वकं वा आहारादिकं 'ग्रन्थात्' महतो द्रव्यव्ययाद् 'आहृत्य' ढौकित्वा आहृतग्रन्था वा—व्ययीकृतद्रव्या वा तदपरिभोगे 'स्पृशन्ति' उपतापयन्ति, कथमिति चेद्दर्शयति—'स' ईश्वरादिः प्रद्विष्टः सन् हन्ता स्वतोऽपरांश्च हननादौ चोदयति, तद्यथा—हतैनं साधुं दण्डादिभिः 'क्षणुत' व्यापादयत छिन्त हस्तपादादिकं दहत अग्न्यादिना पचत उरुमांसादिकं आलुम्पत वस्त्रादिकं विलुम्पत सर्वस्वापहारेण सहसात् कारयत—आशु पञ्चत्वं नयत तथा विविधं परामृशत—नानापीडाकरणैर्बाधयत, तांश्चैवम्भूतान् 'स्पर्शान्' दुःखविशेषान् 'धीरः' अक्षोभ्यः तैः स्पर्शैः स्पृष्टः सन्नधिसहेत, तथा परैः क्षुत्पिपासापरीषहैः स्पृष्टः सन्नधिसहेत, न तु पुनरुपसर्गैः

परीषहैर्वा तर्जितो विक्लवतामापन्नस्तदुद्देशिकादिकमभ्युपेयाद् अनुकूलैर्वा सान्त्वनादिभिरुपसर्गितो नाददाद्, अपि तु सति सामर्थ्ये जिनकल्पिकादन्यः आचारगोचरमाक्षीतेत्याह–नानाविधोपसर्गजनितान् स्पर्शानधिसहेत, अथवा साधूनामाचारगोचरम्–आचारानुष्ठानविषयं मूलोत्तरगुणभेदभिन्नमाचक्षीत, न पुनर्नैयैर्द्रव्यविचारं, तत्रापि मूलगुणस्थैर्यार्थमुत्तरगुणान् तत्रापि पिण्डैषणाविशुद्धिमाचक्षीत, अत्र च पिण्डैषणासूत्राणि पठितव्यानि, अपि च–"यत्स्वयमदुःखितं स्यान्न च परदुःखे निमित्तभूतमपि। केवलमुपग्रहकरं धर्म्मकृते तद्भवेद्देयम् ॥१॥" किं सर्वस्य सर्वं कथयेत्?, नेति दर्शयति–'तर्कयित्वा' पर्यालोच्य पुरुषं तद्यथा–कोऽयं पुरुषः कञ्च नतोऽभिगृहीतोऽनभिगृहीतो मध्यस्थः प्रकृतिभद्रको वेत्येवमुपयुज्य यथार्हं यथाशक्ति चावेदयेत्, मत्यां च शक्तौ पञ्चावयवेनान्यथा वा वाक्येनानीदृशम्–अनन्यसदृशं स्वपरपक्षस्थापनाव्युदासद्वारेणावेदयेदिति, अथ सामर्थ्यविकलः स्यात् कुप्यति वा कथ्यमानेऽसावनुकूलप्रत्यनीकस्ततो वाग्गुप्तिर्विधेयेत्याह—सति सामर्थ्ये शृण्वति वा दातरि आचारगोचरमाचक्षीत, 'अथवे'त्यन्यथाभावे तु वाग्गुप्त्या व्यवस्थितः सन्नात्महितमाचरन् 'गोचरस्य' पिण्डविशुद्ध्यादेराचारगोचरस्य 'आनुपूर्व्या' उद्गमप्रश्नादिरूपया सम्यगशुद्धिं प्रत्युपेक्षेत, किम्भूतः?–आत्मगुप्तः सन्, सततोपयुक्त इत्यर्थः, नैतन्मयोच्यत इत्याह–'बुद्धैः' कल्प्याकल्प्यविधिज्ञैः, 'एतत्' पूर्वोक्तं प्रवेदितम्॥ एतद्वा वक्ष्यमाणमित्याह—

से समणुन्ने असमणुन्नस्स असणं वा जाव नो पाइज्जा नो निमंतिज्जा नो कुज्जा वेयावडियं परं आढायमाणेत्तिबेमि (सू. २०२)

हनना-
१५
दिसहनं

२०


२६

न केवलं गृहस्थेभ्यः कुशीलेभ्यो वा अकल्प्यमितिकृत्वाऽऽहारादिकं न गृह्णीयात्, स समनोज्ञोऽसमनोज्ञाय तत् पूर्वोक्तमशनादिकं न प्रदद्यात्, नापि परम्—अत्यर्थमाद्रियमाणोऽशनादिनिमन्त्रणतोऽन्यथा वा तेषां वैयावृत्त्यं कुर्यादिति, ब्रवीमीतिशब्दावधिकारपरिसमाप्त्यर्थौ । किम्भूतस्तर्हि किम्भूताय दद्यादित्याह—



**धम्ममायाणह पवेइयं माहणेण मइमया समणुन्ने समणुन्नस्स असणं वा जाव कुज्जा वेयावडियं परं आढायमाणेत्तिबेमि (सू. २०३) ॥ ८–२ ॥**

५

'धर्म्म' दानधर्म्मं जानीत यूयं 'प्रवेदितं कथितं, केन ?—श्रीवर्द्धमानस्वामिना, किम्भूतेन ? 'मतिमता' केवलिना, किम्भूतं धर्म्ममिति दर्शयति—यथा समनोज्ञः—साधुरुद्युक्तविहारी अपरस्मै—समनोज्ञाय चारित्रवते संविभाय साम्भोगिकायैकसामाचारीप्रविष्टायाशनादिकं चतुर्विधं तथा वस्त्रादिकमपि चतुर्द्धा 'प्रदद्यात्' प्रयच्छेत्, तथा तदर्थं च निमन्त्रयेत्, पेशलमन्यद्वा वैयावृत्त्यम्—अङ्गमर्दनादिकं कुर्यात्, नैतद्विपर्यस्तेभ्यो गृहस्थेभ्यः कुतीर्थिकेभ्यः पार्श्वस्थादिभ्योऽसंविग्नेभ्योऽसमनोज्ञेभ्यो वेत्येतत्पूर्वोक्तं कुर्यादिति, किन्तु समनोज्ञेभ्य एव परम्—अत्यर्थमाद्रियमाणस्तदर्थसीदने परमुत्पद्यमानः सम्यग्वैयावृत्त्यं कुर्यात्, तदेवं गृहस्थादयः कुशीलादयस्त्याज्या इति दर्शितम्, अयं तु विशेषो—गृहस्थेभ्यो यावल्लभ्यते तावद्गृह्यते, केवलमकल्पनीयं प्रतिषिध्यते, असमनोज्ञेभ्यस्तु दानग्रहणं प्रति सर्वनिषेध इति । इतिब्रवीमिशब्दौ पूर्ववत् । विमोक्षाध्ययने द्वितीयोद्देशकः समाप्तः ॥८–२॥

१०





उक्तो द्वितीयोद्देशकः, साम्प्रतं तृतीय आरभ्यते, अस्य चायमभिसम्बन्धः-इहानन्तरोद्देशकेऽकल्पनीयाहारादिप्रतिषेधोऽभिहितस्तत्प्रतिषेधकुपितस्य दातुर्यथावस्थितपिण्डदानप्ररूपणा च, तदिहाप्याहारादिनिमित्तं प्रविष्टेन शीताद्यङ्गोत्कम्पदर्शनान्यथाभाववतो गृहपतेर्यथावस्थितपदार्थविदनतो गीतार्थेन साधुनाऽसदारेकाऽपनेयेत्यनेन सम्बन्धेनायातस्यास्योद्देशकस्य सूत्रानुगमे सूत्रमुच्चारयितव्यं, तच्चेदम्-

मज्झिमेणं वयसावि एगे संबुज्झमाणा समुट्ठिया, सुच्चा मेहावी वयणं पंडियाणं निसामिया समियाए धम्मे आरिएहिं पवेइए ते अणवकंखमाणा अणइवाएमाणा अपरिग्गहेमाणा नो परिग्गहावंती सव्वावंति च णं लोगंसि निहाय दंडं पाणेहिं पावं कम्मं अकुव्वमाणे एस महं अगंथे वियाहिए, ओए जुइमस्स खेयन्ने उववायं चवणं च नच्चा (सू. २०४)

इह त्रीणि वयांसि-युवा मध्यमवया वृद्धश्चेति, तत्र मध्यमवयाः परिपक्वबुद्धित्वाद्धर्मार्ह इत्यादौ दर्शयति-मध्यमेन वयसाऽप्येके सम्बुध्यमानाः धर्मचरणाय सम्यगुत्थिता इति, सत्यपि प्रथमचरमवयसोरुत्थाने यतो बाहुल्याद्योग्यत्वाच्च प्रायो विनिवृत्तभोगकुतूहल इति निष्प्रत्यूहधर्माधिकारीति मध्यमवयोग्रहणं। कथं सम्बुध्यमानाः समुत्थिता इत्याह-इह त्रिविधाः सम्बुध्यमानका भवन्ति, तद्यथा-स्वयंबुद्धाः प्रत्येकबुद्धाः बुद्धबोधिताश्च, तत्र बुद्धबोधितेनेहाधिकार इति दर्शयति-'मेधावी' मर्यादाव्यवस्थितः 'पण्डितानां' तीर्थकृदादीनां 'वचनं' हिताहितप्राप्तिपरिहारप्रवर्त्तकं 'श्रुत्वा' आकर्ण्य पूर्वं पश्चात् 'निशम्य' अवधार्य समतामालम्बेत,

ग्रामधर्मशंका-
१५
निरासः
२०
॥२४८॥
२४

किमिति ?–यतः समतया–माध्यस्थ्येनार्यैः–तीर्थकृद्भिर्धर्म्मः–श्रुतचारित्राख्यः 'प्रवेदितः' आदौ प्रकर्षेण वा कथित इति, ते च मध्यमे वयसि श्रुत्वा धर्म्मं सम्बुध्यमानाः समुत्थिताः सन्तः किं कुर्युरित्याह–ते निष्क्रान्ताः मोक्षमभि प्रस्थिताः कामभोगाननभिकाङ्क्षन्तः तथा प्राणिनोऽनतिपातयन्तः परिग्रहमपरिगृह्णन्तः, आद्यन्तयोर्ग्रहणे मध्योपादानमपि द्रष्टव्यम्, तथा (तो) मृषावादमवदन्त इत्याद्यपि वाच्यम्, एवम्भूताः स्वदेहेऽप्यममत्वाः 'सव्वावंति'त्ति सर्वस्मिन्नपि लोके, चः समुच्चये स च भिन्नक्रमः, 'णम्' इति वाक्यालङ्कारे, नो परिग्रहवन्तश्च भवन्तीतियावत्, किं च–प्राणिनो दण्डयतीति दण्डः–परितापकारी तं दण्डं प्राणिषु प्राणिभ्यो वा निधाय' क्षिप्त्वा त्यक्त्वा 'पापं' पापोपादानं 'कर्म्म' अष्टादशभेदभिन्नं तत् ' अकुर्वाणः ' अनाचरन्नेषु महान् न विद्यते ग्रन्थः सबाह्याभ्यन्तरोऽस्येत्यग्रन्थः 'व्याख्यातः' तीर्थकरगणधरादिभिः प्रतिपादित इति। कथं चम्भूतः स्यादित्याह–'ओजः' अद्वितीयो रागद्वेषरहितः 'द्युतिमान्' संयमो मोक्षो वा तस्य 'खेदज्ञो' निपुणो देवलोकेऽप्युपपातं च्यवनं च ज्ञात्वा सर्वस्थानानित्यताहितमतिः पापकर्म्मवर्जी स्यादिति। केचित्तु मध्यमवयसि समुत्थिता अपि परीषहेन्द्रियैर्ग्लानतां नीयन्त इति दर्शयितुमाह—



**आहारोवचया देहा परीसहपभंगुरा पासह एगे सव्विंदिएहिं परिगिलायमाणेहिं (सू. २०५)**

आहारेणोपचयो येषां ते आहारोपचयाः, के ते ?–दिह्यन्त इति देहाः, तदभावे तु म्लायन्ते म्रियन्ते वा, तथा 'परीषहप्रभङ्गिनः' परीषहैः सद्भिर्भङ्गुरा देहा भवन्ति, ततश्चाहारोपचितदेहा अपि प्राप्तपरीषहा वातादिक्षोभेण वा पश्यत यूयमेके क्लीवाः सर्वैरिन्द्रियैर्ग्लायमानैः क्लीवतामीयुः, तथाहि–क्षुत्पीडितो न पश्यति न शृणोति न जिघ्रतीत्यादि, तत्र केवलिनोऽप्याहारमन्तरेण शरीरं ग्लानभावं यायात्, आस्तां तावदपरः प्रकृतिभङ्गुरशरीर इति, स्यान्मतं–अकेवल्यकृतार्थत्वात् क्षुद्वेदनीयसद्भावाच्चाहारयति दयादीनि

व्रतान्यनुपालयति, केवली तु नियमात् सेत्स्यतीत्यतः किमर्थं शरीरं धारयति ?, तद्धरणार्थं चाहारयतीति ?, अत्रोच्यते, तस्यापि चतुःकर्म्मसद्भावाद्वैकाल्येन कृतार्थता, तत्कृते शरीरं बिभृयात्, तद्धरणं च नाहारमन्तरेण, क्षुद्वेदनीयसद्भावाचेति, तथाहि—वेदनीयसद्भावात्कृता एकादशापि परीषहाः केवलिनो व्यस्तसमस्ताः प्रादुष्ष्यन्ति इत्यत आहारयत्येव केवलीति स्थितम्, अत आहारेणेने ग्लानेन्द्रियाणामिति प्रतिपादितं ॥ विदितवेद्यश्च परीषहपीडितोऽपि किं कुर्यादित्याह—

ओए दयं दयइ, जे संनिहाणसत्थस्स खेयन्ने से भिक्खू कालन्ने बलन्ने मायन्ने खणन्ने विणयन्ने समयन्ने परिग्गहं अममायमाणे कालेणुट्ठाइ अपडिन्ने दुहओ छित्ता नियाइ (सू.२०६)

'ओजः' एको रागादिरहितः सन् सत्यपि क्षुत्पिपासादिपरीषहे 'दयामेव दयते' कृपां पालयति, न परीषहैः तर्जितो दयां खण्डयतीत्यर्थः । कः पुनर्दयां पालयतीत्याह—यो हि लघुकर्म्मा सम्यङ् निधीयते नारकादिगतिषु येन तत्सन्निधानं—कर्म्म तस्य स्वरूपनिरूपकं शास्त्रं तस्य खेदज्ञो—निपुणो, यदिवा सन्निधानस्य—कर्म्मणः शस्त्रं—संयमः सन्निधानशस्त्रं तस्य खेदज्ञः—सम्यक् संयमस्य वेत्ता, यश्च संयमविधिज्ञः स भिक्षुः कालज्ञः—उचितानुचितावसरज्ञः, एतानि च सूत्राणि लोकविजयपञ्चमोद्देशकव्याख्यानुसारेण नेतव्यानीति, तथा बलज्ञो मात्रज्ञः क्षणज्ञो विनयज्ञः समयज्ञः परिग्रहममत्वेन अचरन् कालेनोत्थायी अप्रतिज्ञः उभयतश्छेत्ता, स चैवम्भूतः संयमानुष्ठाने निश्चयेन याति निर्यातीति ॥ तस्य च संयमानुष्ठाने परिव्रजतो यत्स्यात्तदाह—

तं भिक्खुं सीयफासपरिवेवमाणगायं उवसंकमित्ता गाहावई बूया—आउसंतो समणा !

नो खलु ते गामधम्मा उव्वाहंति?, आउसंतो गाहावई! नो खलु मम गामधम्मा उव्वाहंति, सीयफासं च नो खलु अहं संचाएमि अहियासित्तए, नो खलु मे कप्पइ अगणिकायं उज्जालित्तए वा (पज्जालित्तए वा) कायं आयावित्तए वा पयावित्तए वा अन्नेसिं वा वयणाओ, सिया स एवं वयंतस्स परो अगणिकायं उज्जालित्ता पज्जालित्ता कायं आयाविज्ज वा पयाविज्ज वा, तं च भिक्खू पडिलेहाए आगमित्ता आणविज्जा अणासेवणाएत्तिबेमि (सू० २०७)॥८-३॥ ५

'तम्' अन्तप्रान्ताहारतया निस्तेजसं निष्किञ्चनं भिक्षणशीलं भिक्षुमतिक्रान्तसोष्मयौवनावस्थं सम्यग्वस्त्रकम्बलाभावतया शीतस्पर्शपरिवेपमानगात्रं उपसङ्क्रम्य-आगम्यतामेत्य गृहपतिः-ऐश्वर्योष्मानुगतो मृगनाभ्यनुविद्धकश्मीरजघनसारानुलिप्तदेहो मीनमदागुरुघनसारधूपितरल्लिकाच्छादितवपुः प्रौढसीमन्तिनीगन्धोहपरिवृतो वार्तीभूतशीतस्पर्शानुभवः सन् किमयं मुनिरुपहसितसुरसुन्दरीरूपसम्पदो मत्सीमन्तिनीरवलोक्य सात्त्विकभावोपेतः कम्पते उत शीतेनेत्येवं संशयानो ब्रूयात्-भो आयुष्मन्! श्रमण! कुलीनतामात्मन आविर्भावयन् प्रतिषेधद्वारेण प्रश्नयति-नो भवन्तं ग्रामधर्म्माः-विषया उत-प्राबल्येन बाधन्ते?, एवं गृहपतिनोक्ते विदिताभिप्रायः साधुराह-अस्य हि गृहपतेरात्मसीमन्तिन्याऽङ्गनावलोकनाऽऽविष्कृतभावस्यामत्याऽऽशङ्काऽभूद् अतोऽहमस्यापनयामीत्येवमभिसन्धाय साधुर्बभाषे-आयुष्मन्! गृहपते! 'नो खलु' नैव ग्रामधर्म्मा मामुद्बाधन्ते, यत्पुनर्वेपमानगात्रयष्टिं मामीक्षाञ्चकर्थ तच्छी- १०

७ नेमो०
४ उद्दे०

तत्स्पर्शविजृम्भितं, न मनसिजविकारः, शीतस्पर्शमहं न खलु शक्नोम्यधिसोढुं, एवमुक्तः सन् भक्तिकरुणारसाक्षिप्तहृदयो ब्रूयात्—सुप्रज्वलितमाशुशुक्षणिं किमिति न सेवसे?, महामुनिराह—भो गृहपते! न खलु मे कल्पतेऽग्निकायं मनाग् ज्वालयितुं(उज्ज्वालयितुं) प्रकर्षेण ज्वालयितुं प्रज्वालयितुं, ततो ज्वलितादौ 'कायं' शरीरमीषत् तापयितुमातापयितुं वा प्रकर्षेण तापयितुं प्रतापयितुं वा, अन्येषां वा वचनात् ममैतत्कर्तुं न कल्पते, यदिवाऽग्निसमारम्भायान्यो वा वक्तुं न कल्पते ममेति। तं चैवं वदन्तं साधुमवगम्य गृहपतिः कदाचिदेतत्कुर्यादित्याह—स्यात्—कदाचिन्म—परो गृहस्थ एवमुक्तनीत्या वदतः साधोरग्निकायमुज्ज्वाल्य प्रज्वाल्य वा कायमातापयेत् प्रतापयेद्वा, तच्चोज्ज्वालनातापनादिकं भिक्षुः 'प्रत्युपेक्ष्य' विचार्य स्वसन्मत्या परव्याकरणेनान्येषां वाऽन्तिके श्रुत्वा अवगम्य ज्ञात्वा तं गृहपतिमाज्ञापयेत्—प्रतिबोधयेत्, कया?—अनासेवनया, यथैतत् ममायुक्तमासेवितुं, भवता तु पुनः साधुभक्त्यनुकम्पाभ्यां पुण्यप्राग्भारोपार्जनमकारीति, ब्रवीमीतिशब्दावुक्तार्थौ। **विमोक्षाध्ययनस्य तृतीयोद्देशकः परिसमाप्तः।**

अपवाद-
मरणं

१५

२०

---

उक्तस्तृतीयोद्देशकः, साम्प्रतं चतुर्थ आरभ्यते, अस्य चायमभिसम्बन्धः, इहानन्तरोद्देशके गोचरादिगतेन शीताद्यङ्गविकारदर्शनान्यथाभावापन्नस्य गृहस्थस्याशङ्का व्युदस्ता, यदि पुनर्गृहस्थाभावे योषित एवान्यथाभावाभिप्रायेणोपसर्गयेयुः ततो वैहानसगार्द्धपृष्ठादिकं मरणमप्यवलम्बनीयं, कारणाभावे तु तन्न कार्यमित्येतत्प्रतिपादनार्थमिदमारभ्यत इत्यनेन सम्बन्धेनायातस्यास्योद्देशकस्यादिसूत्रम्—

प्र. आ.
२७६



२४

जे भिक्खू तिहिं वत्थेहिं परिवुसिए पायचउत्थेहिं तस्स णं नो एवं भवइ—चउत्थं वत्थं जाइस्सामि, से अहेसणिज्जाइं वत्थाइं जाइज्जा अहापरिग्गहियाइं वत्थाइं धारिज्जा, नो धोइज्जा नो धोयरत्ताइं वत्थाइं धारिज्जा, अपलिओवमाणे गामंतरेसु ओमचेलिए, एयं खु वत्थधारिस्स सामग्गियं (सू० २०८)

इह प्रतिमाप्रतिपन्नो जिनकल्पिको वा अच्छिद्रपाणिः, तस्य हि पात्रनिर्योगसमन्वितं पात्रं कल्पत्रयं चायमेवौघोपधिर्भवति, नौपग्रहिकः, तत्र शिशिरादौ क्षौमिकं कल्पद्वयं सार्द्धहस्तद्वयायामविष्कम्भं, तृतीयस्त्वौर्णिकः, स च सत्यपि शीते नापरमाकाङ्क्षतीत्येतद्दर्शयति—यो भिक्षुः त्रिभिर्वस्त्रैः 'पर्युषितो' व्यवस्थितः, तत्र शीते पतत्येकं क्षौमिकं प्रावृणोति, ततोऽपि शीतासहिष्णुतया द्वितीयं क्षौमिकं, पुनरपि अतिशीततया क्षौमिककल्पद्वयोपर्यौर्णिकमिति, सर्वथौर्णिकस्य बाह्याच्छादनता विधेया, किम्भूतैस्त्रिभिर्वस्त्रैरिति दर्शयति—'पात्रचतुर्थैः' पतन्तमाहारं पातीति पात्रं, तद्ग्रहणेन च पात्रनिर्योगः सप्तप्रकारोऽपि गृहीतः, तेन विना तद्ग्रहणाभावात्, स चायम्—"पत्तं पत्ताबंधो पायट्ठवणं च पायकेसरिआ। पडलाइ रयत्ताणं च गोच्छओ पायणिज्जोगो ॥१॥" तदेवं सप्तप्रकारं पात्रं कल्पत्रयं रजोहरणं १ मुखवस्त्रिका २ चेत्येवं द्वादशधोपधिः, तस्यैवम्भूतस्य भिक्षोः 'णम्' इति वाक्यालङ्कारे 'नैवं भवति'

१ पात्रं पात्रबन्धः पात्रस्थापनं च पात्रकेसरिका। पटलानि रजस्त्राणं च गोच्छकः पात्रनिर्योगः ॥१॥

५

१०

नायमध्यवसायो भवति, तद्यथा-न ममास्मिन् काले कल्पत्रयेण सम्यक् शीतापनोदो भवत्यतश्चतुर्थं वस्त्रमहं याचिष्ये, अध्यवसायनिषेधे च तद्याचनं दूरोत्सादितमेव, यदि पुनः कल्पत्रयं न विद्यते शीतकालश्चापतितस्ततोऽसौ जिनकल्पिकादिर्यथैषणीयानि वस्त्राणि याचेत-उत्कर्षणापकर्षणरहितान्यपरिकर्म्माणि प्रार्थयेदिति, तत्र "उद्दिट्ठ १ पेह २ अंतर ३ उज्झियधम्मा ४ य" चतस्रो वस्त्रैषणा भवन्ति, तत्र चाद्यस्त्योर्द्वयोरग्रहः,इतरयोस्तु ग्रहः, तत्राप्यन्यतरस्यामभिग्रहः, इति, याञ्चावाप्तानि च वस्त्राणि यथापरिगृहीतानि धारयेत्, न तत्रोत्कर्षणधावनादिकं परिकर्म्म कुर्यात् ॥ एतदेव दर्शयितुमाह-नो धावेत्-प्रासुकोदकेनापि न प्रक्षालयेत्, गच्छवासिनो ह्यप्राप्तवर्षादौ ग्लानावस्थायां वा प्रासुकोदकेन यतनया धावनमनुज्ञातं, न तु जिनकल्पिकस्येति, तथा-न धौतरक्तानि वस्त्राणि धारयेत्, पूर्वं धौतानि पश्चाद्रक्तानीति, तथा ग्रामान्तरेषु गच्छन् वस्त्राण्यगोपयन् व्रजेद्, एतदुक्तं भवति-तथाभूतान्यमायन्तप्रान्तानि बिभर्ति यानि गोपनीयानि न भवन्ति, तदेवमवमचेलिकः, अवमं च तच्चेलं च अवमचेलं, प्रमाणतः परिमाणतो मूल्यतश्च, तद्यस्यास्त्यसाववमचेलिकः,इत्येतत्-पूर्वोक्तं 'खु' अवधारणे, एतदेव वस्त्रधारिणः सामग्र्यं भवति-एवंच त्रिकल्पात्मिका द्वादशप्रकारोपिकोपध्यात्मिका वा सामग्री भवति, नापरेति ॥ शीतापगमे तान्यपि वस्त्राणि त्याज्यानीत्येतद्दर्शयितुमाह—



अह पुण एवं जाणिज्जा-उवाइक्कंते खलु हेमंते गिम्हे पडिवन्ने अहापरिजुन्नाइं वत्थाइं परिट्ठविज्जा, अदुवा संतरुत्तरे अदुवा ओमचेले अदुवा एगसाडे अदुवा अचेले (सू० २०९)







यदि तानि वस्त्राण्यपरहेमन्तस्थितिसहिष्णूनि तत उभयकालं प्रत्युपेक्षयन् बिभर्ति, यदि पुनर्जीर्णदेश्यानि जीर्णानीति जानीयात्

ततः परित्यजतीत्यनेन सूत्रेण दर्शयति, अथ पुनरेवं जानीयाद्यथाऽपक्रान्तः खल्वयं हेमन्तो, ग्रीष्मः प्रतिपन्नः, अपगता शीतपीडा, यथापरिजीर्णान्येतानि वस्त्राणि, एवमवगम्य ततः परिष्ठापयेत्-परित्यजेदिति, यदि पुनः सर्वाण्यपि न जीर्णानि ततो यद्यज्जीर्णं तत्तत्परिष्ठापयेत्, परिष्ठाप्य च निस्सङ्गो विहरेत्, यदि पुनरतिक्रान्तेऽपि शिशिरे क्षेत्रकालपुरुषगुणाद्भवेच्छीतं ततः किं कर्त्तव्यमित्याह-अपगते शीते वस्त्राणि त्याज्यानि, अथवा क्षेत्रादिगुणाद्धिमकणिनि वाते वाति सत्यात्मपरितुलनार्थं शीतपरीक्षार्थं च सान्तरोत्तरो भवेत्-सान्तरमुत्तरं-प्रावरणीयं यस्य स तथा, क्वचित्प्रावृणोति क्वचित्पार्श्ववर्त्ति बिभर्त्ति, शीताशङ्कया नाद्यापि परित्यजति, अथवाऽवमचेल एककल्पपरित्यागात्, द्विकल्पधारीत्यर्थः, अथवा शनैः शनैः शीतेऽपगच्छति सति द्वितीयमपि कल्पं परित्यजेत् तत एकशाटकः संवृत्तः, अथवाऽऽत्यन्तिके शीताभावे तदपि परित्यजेदतोऽचेलो भवति, असौ मुखवस्त्रिकारजोहरणमात्रोपधिः ॥ किमर्थमसावेकैकं वस्त्रं परित्यजेदित्याह—



५

लाघवियं आगममाणे, तवे से अभिसमन्नागए भवइ (सू० २१०)

लघोर्भावो लाघवं लाघवं विद्यते यस्यासौ लाघविक(स्त)मात्मानमागमयन्-आपादयन् वस्त्रपरित्यागं कुर्यात्, शरीरोपकरणकर्म्मणि वा लाघवमागमयन् वस्त्रपरित्यागं कुर्यादिति । तस्य चैवम्भूतस्य किं स्यादित्याह-'से' तस्य वस्त्रपरित्यागं कुर्वतः साधोस्तपोऽभिसमन्वागतं भवति, कायक्लेशस्य तपोभेदत्वात्, उक्तं च—"पंचहिं ठाणेहिं समणाणं निग्गंथाणं अचेलगत्ते पसत्थे भवति,

१०

१ पञ्चभिः स्थानैः श्रमणानां निर्ग्रन्थानामचेलत्वं प्रशस्तं भवति तद्यथा—अल्पा प्रतिलेखना । वैश्वासिकं रूपं २ तपोऽनुमतं ३ लाघवं प्रशस्तं ४ विपुल इन्द्रियनिग्रहः ५.

तंजहा-अप्पा पडिलेहा १ वेमाणिए रूवे २ तवे अणुमए ३ लाघवे पसत्थे ४ विउले इंदियनिग्गहे ५" ॥ एतच्च भगवता प्रवेदितमिति दर्शयितुमाह—



जमेयं भगवया पवेइयं तमेव अभिसमिच्चा सव्वओ सव्वत्ताए सम्मत्तमेव समभिजाणिज्जा (सू. २११)

यदेतद्भगवता-वीरवर्द्धमानस्वामिना प्रवेदितं तदेवाभिसमेत्य-ज्ञात्वा 'सर्वतः' सर्वैः प्रकारैः सर्वात्मतया सम्यक्त्वमेव समत्वं वा-सचेलाचेलावस्थयोस्तुल्यतां 'समभिजानीयात्' आसेवनापरिज्ञया आसेवेतेति ॥ यः पुनरल्पसत्त्वतया भगवदुपदिष्टं नैव सम्यग् जानीयात् स एतदध्यवसायी स्यादित्याह—

जस्स णं भिक्खुस्स एवं भवइ-पुट्ठो खलु अहमंसि नालमहमंसि सीयफासं अहियासित्तए, से वसुमं सव्वसमन्नागयपन्नाणेणं अप्पाणेणं केइ अकरणयाए आउट्टे तवस्सिणो हु तं सेयं जमेगे विहमाइए तत्थावि तस्स कालपरियाए, सेऽवि तत्थ विअंतिकारए, इच्चेयं विमोहायतणं हियं सुहं खमं निस्सेसं आणुगामियं तिबेमि (सू. २१२)॥८-४॥ विमोक्षाध्ययने चतुर्थ उद्देशकः॥

प्र. आ.
२७८

'णम्' इति वाक्यालङ्कारे यस्य भिक्षोर्मन्दसंहननतया एवम्भूतोऽध्यवसायो भवति, तद्यथा—स्पृष्टः खल्वहमस्मि रोगातङ्कैः



१५ च २० २४

समत्वं व्यन्ति- क्रिया च

शीतस्पर्शादिभिर्वा हयाद्युपसर्गैर्वा, ततो ममास्मिन्नवसरे शरीरविमोक्षं कर्त्तुं श्रेयो, 'नालं' न समर्थोऽहमस्मि, 'शीतस्पर्शं' शीतापादितं दुःखविशेषं भावशीतस्पर्शं वा ह्याद्युपसर्गम् 'अध्यासयितुम्' अधिसोढुमित्यतो भक्तपरिज्ञेङ्गितमरणपादपोपगमनमुत्सर्गतः कर्त्तुं युक्तं, न च तस्य ममास्मिन्नवसरेऽवसरो यतो मे कालक्षेपामहिष्णुरुपसर्गः समुत्थितो रोगवेदनां वा चिराय सोढुं नालमतो वेहानसं गार्द्धपृष्ठं वा आपवादिकं मरणमत्र साम्प्रतं, न पुनरुपसर्गितस्तद्वेवाभ्युपेयादित्याह–'स' साधुः वसु–द्रव्यं स चात्र संयमः स विद्यते यस्यासौ वसुमान्, सर्वसमन्वागतप्रज्ञानेनात्मना कश्चिदूर्द्ध्वकटाक्षनिरीक्षणाद्युपसर्गसम्भवे सत्यपि तदकरणतया आ–समन्तादृत्तो–व्यवस्थित आवृत्तो, यदिवा शीतस्पर्श–वातादिजनितं दुःखविशेषमसहिष्णुस्तच्चिकित्साया अकरणतया वसुमान् सर्वसमन्वागतप्रज्ञानेनात्मना आवृत्तो–व्यवस्थित इति, स चोपसर्गितो वातादिवेदनां चासहिष्णुः किं कुर्यादित्याह–हुहंतौ यस्माच्चिराय वातादिवेदनां सोढुमसहिष्णुः, यदिवा यस्मात् सीमन्तिनी उपसर्गयितुमुपस्थिता विषभक्षणोद्बन्धनाद्युपन्यासेनापि न मुञ्चति ततस्तपस्विनः प्रभूततरकालनानाविधोपायोपार्जिततपोधनस्य तदेव श्रेयो, यदैकः कश्चिन्निजैः सपत्नीकोऽपवरके प्रवेशितः आरूढप्रणयप्रेयसीप्रार्थितस्तन्निर्गमोपायमलभमान आत्मोद्बन्धनाय विहायोगमनं तदाऽऽदद्याद् विषं वा भक्षयेत् पतनं वा कुर्याद्, दीर्घकालं वा शीतस्पर्शादिकमसहिष्णुः सुदर्शनवत् प्राणान् जह्यात्। ननु च वेहानसादिकं बालमरणमुक्तं, तच्चानर्थाय, तत्कथं तस्याभ्युपगमः?, तथा चागमः–"[1]इच्चेएणं बालमरणेणं मरमाणे जीवे अणंतेहिं नेरइयभवग्गहणेहिं अप्पाणं संजोएइ जाव अणाइयं च णं अणवयग्गं चाउरंतं संसारकंतारं भुज्जो भुज्जो परियट्टइ'त्ति, अत्रोच्यते, नैष दोषोऽस्मासाकमार्हतानां, नैकान्ततः किञ्चित्प्रतिषिद्धमभ्युपगतं वा

---

१ इत्येतेन बालमरणेन म्रियमाणो जीवोऽनन्तैर्नैरयिकभवग्रहणैरात्मानं संयोजयति यावदनादिकं चानवदग्रं चातुरन्तं संसारकान्तारं भूयो भूयः परिवर्त्तते.

मैथुनमेकं विहाय, अपि तु द्रव्यक्षेत्रकालभावानाश्रित्य तदेव प्रतिषिध्यते तदेव चाभ्युपगम्यते,उत्सर्गोऽप्यगुणायापवादोऽपि गुणाय कालज्ञस्य साधोरिति, एतद्दर्शयितुमाह–दीर्घकालं संयमप्रतिपालनं विधाय संलेखनाविधिना कालपर्यायेण भक्तपरिज्ञादिमरणं गुणायेति, एवंविधे त्ववसरे तत्रापि वेहानसगार्द्धपृष्ठादिमरणे अपि कालपर्याय एव, यद्वत्कालपर्यायमरणं गुणाय एवं वेहानसादिकमपीत्यर्थः, यद्बहुनाऽपि कालपर्यायेण यावन्मात्रं कर्म्मासौ क्षपयति तदसावल्पेनापि कालेन कर्म्मक्षयमवाप्नोतीति दर्शयति–'सोऽपि' वेहानसादेर्विधाता, न केवलमानुपूर्व्या भक्तपरिज्ञादेः कर्त्तेत्यपिशब्दार्थः, 'तत्र' तस्मिन् वेहानसादिमरणे 'विअंतिकारए'त्ति विशेषेणान्तिर्व्यन्तिः–अन्तक्रिया तस्याः कारको व्यन्तिकारकः, तस्य हि तस्मिन्नवसरे तद्वेहानसादिकमौत्सर्गिकमेव मरणं, यतोऽनेनाप्यपवादिकेन मरणेनानन्ताः सिद्धाः सेत्स्यन्ति च, उपसञ्जिहीर्षुराह–'इत्येतत्' पूर्वोक्तं वेहानसादिमरणं विगतमोहानामायतनम्–आश्रयः कर्त्तव्यतया, तथा हितम् अपायपरिहारतया, तथा सुखं जन्मान्तरेऽपि सुखहेतुत्वात्,तथा 'क्षमं' युक्तं प्राप्तकालत्वात्, तथा निःश्रेयसं कर्म्मक्षयहेतुत्वात्, तथा 'आनुगामिकं' तदर्जितपुण्यानुगमनात्, इतिब्रवीमिशब्दौ पूर्ववद् । विमोक्षाध्ययनस्य चतुर्थोद्देशकः समाप्तः ॥

---

उक्तश्चतुर्थोद्देशकः, साम्प्रतं पञ्चम आरभ्यते, अस्य चायमभिसम्बन्धः, इहानन्तरोद्देशके बालमरणं गार्द्धपृष्ठादिकमुपन्यस्तम्, इह तु तद्विपर्यस्तं ग्लानभावोपगतेन भिक्षुणा भक्तपरिज्ञाख्यं मरणमभ्युपगन्तव्यमित्येतत्प्रतिपाद्यते, तदनेन सम्बन्धेनायातस्यास्योद्देशकस्यादिसूत्रम्—





२०



२६

जे भिक्खू दोहिं वत्थेहिं परिवुसिए पायतइएहिं तस्स णं नो एवं भवइ—तइयं वत्थं जाइस्सामि, से अहेसणिज्जाइं वत्थाइं जाइज्जा जाव एवं खु तस्स भिक्खुस्स सामग्गियं, अह पुण एवं जाणिज्जा—उवाइक्कंते खलु हेमन्ते, गिम्हे पडिवण्णे, अहापरिजुन्नाइं वत्थाइं परिट्ठविज्जा, अहापरिजुन्नाइं परिट्ठवित्ता अदुवा संतरुत्तरे अदुवा ओमचेले अदुवा एगसाडे अदुवा अचेले लाघवियं आगममाणे तवे से अभिसमन्नागए भवइ, जमेयं भगवया पवेइयं तमेव अभिसमिच्चा सव्वओ सव्वत्ताए सम्मत्तमेव समभिजाणिया, जस्स णं भिक्खुस्स एवं भवइ—पुट्ठो अबलो अहमंसि नालमहमंसि गिहंतरसंकमणं भिक्खायरियं गमणाए, से एवं वयंतस्स परो अभिहडं असणं वा ४ आहट्टु दलइज्जा, से पुव्वामेव आलोइज्जा-आउसंतो! नो खलु मे कप्पइ अभिहडं असणं ४ भुत्तए वा पायए वा अन्ने वा एयप्पगारे (सू. २१३)

तत्र त्रिकल्पपर्युषितः स्थविरकल्पिको जिनकल्पिको वा स्यात्, कल्पद्वयपर्युषितस्तु नियमाज्जिनकल्पिकपरिहारविशुद्धिकयथालन्दिकप्रतिमाप्रतिपन्नानामन्यतमः, अस्मिन् सूत्रेऽपदिष्टो यो भिक्षुर्जिनकल्पिकादिर्द्वाभ्यां वस्त्राभ्यां पर्युषितो, वस्त्रशब्दस्य सामा-

५
१०

न्ययाचितादेकः क्षौमिकोऽपर और्णिक इत्याभ्यां कल्पाभ्यां पर्युषितः-संयमे व्यवस्थितः, किम्भूताभ्यां कल्पाभ्यां ?-पात्रतृतीयाभ्यां पर्युषित इत्याद्यनन्तरोद्देशकवन्नेयं यावत् 'नालमहमंसि'त्ति स्पृष्टोऽहं वातादिभी रोगैः 'अबलः' असमर्थः 'नालं' न समर्थोऽस्मि गृहाद्गृहान्तरं सङ्क्रमितुं, तथा भिक्षार्थं चरणं चर्या भिक्षाचर्या तद्गमनाय 'नालं' न समर्थ इति, तमेवम्भूतं भिक्षुमुपलभ्य स्याद्गृहस्य एवम्भूतामात्मीयामवस्थां वदतः साधोरवदतोऽपि परो गृहस्थादिरनुकम्पाभक्तिरसार्द्रहृदयोऽभिहृतं-जीवोपमर्दनिर्वृत्तं, किं तद् ?-अशनं पानं खादिमं स्वादिमं चेत्यारादाहृत्य तस्मै साधवे 'दलएज्ज'त्ति दद्यादिति। तेन च ग्लानेनापि साधुना सूत्रार्थमनुस्मरता जीवितनिष्पिपासुनाऽवश्यं मर्त्तव्यमित्यध्यवसायिना किं विधेयमित्याह-स जिनकल्पिकादीनां चतुर्णामप्यन्यतमः पूर्वमेव-आदावेव 'आलोचयेत्' विचारयेत्, कतरेणोद्गमादिना दोषेण दुष्टमेतत् ?, तत्राभ्याहृतमिति ज्ञात्वाऽभ्याहृतं च प्रतिषेधयेत्, तद्यथा-आयुष्मन् गृहपते ! न खल्वेतन्ममाभिहृतमभ्याहृतं च कल्पते अशनं भोक्तुं पानं पातुं, अन्यद्वैतत्प्रकारमाधाकर्म्मादिदोषदुष्टं न कल्पते, इत्येवं तं गृहपतिं दानायोद्यतमाज्ञापयेदिति, पाठान्तरं वा "तं भिक्खुं केइ गाहावई! उवसंकमित्तु बूया-आउसंतो समणा ! अहन्नं तव अट्ठाए असणं वा ४ अभिहडं दलामि, से पुव्वामेव जाणेज्जा—आउसंतो गाहावई ? जन्नं तुमं मम अट्ठाए असणं वा ४ अभिहडं चेतेमि,णो य खलु मे कप्पइ एयप्पगारं असणं वा ४ भोत्तए वा पायए वा,अन्ने वा तहप्पगारे"त्ति, कण्ठ्यं, तदेवं प्रतिषिद्धोऽपि श्रावकसंज्ञिप्रकृतिभद्रकमिथ्यादृष्टीनामन्यतम एवं चिन्तयेत्, तद्यथा-एष तावत् ग्लानो न शक्नोति भिक्षामटितुं न चापरं कश्चन ब्रवीति तदस्मै प्रतिषिद्धोऽप्यहं केनचिच्छद्मना दास्यामीत्येवमभिसन्धायाहारादिकं ढौकयति,तत्साधुरनेषणीयमिति कृत्वा प्रतिषेधयेत् ॥ किं च—

जस्स णं भिक्खुस्स अयं पगप्पे—अहं च खलु पडिन्नत्तो अपडिन्नत्तेहिं गिलाणो अगिलाणेहिं अभिकंख साहम्मिएहिं कीरमाणं वेयावडियं साइज्जिस्सामि, अहं वावि खलु अप्पडिन्नत्तो पडिन्नत्तस्स अगिलाणो गिलाणस्स अभिकंख साहम्मियस्स कुज्जा वेयावडियं करणाए आहट्टु परिन्नं अणुक्खिस्सामि आहडं च साइज्जिस्सामि १, आहट्टु परिन्नं आणक्खिस्सामि आहडं च नो साइज्जिस्सामि २, आहट्टु परिन्नं नो आणक्खिस्सामि आहडं च साइज्जिस्सामि ३, आहट्टु परिन्नं नो आणक्खिस्सामि आहडं च नो साइज्जिस्सामि ४, एवं से अहाकिट्टियमेव धम्मं समभिजाणमाणे संते विरए सुसमाहियलेसे तत्थावि तस्स कालपरियाए से तत्थ विअंतिकारए, इच्चेयं विमोहाययणं हियं सुहं खमं निस्सेसं आणुगामियंतिबेमि (सू. २१४) ८—५। विमोक्षाध्ययने पञ्चम उद्देशकः ॥

'णम्' इति वाक्यालङ्कारे यस्य भिक्षोः परिहारविशुद्धिकस्य यथालन्दिकस्य वा अयं—वक्ष्यमाणः 'प्रकल्पः' आचारो भवति, तद्यथा—अहं च खलुः 'चः' समुच्चये 'खलुः' वाक्यालङ्कारे अहं क्रियमाणं वैयावृत्त्यमपरैः 'स्वादयिष्यामि' अभिलषिष्यामि, किम्भू-

आहृत्य प्रतिज्ञामेवम्भूतां, तद्यथा–नान्नीक्षिष्येऽपरनिमित्तमाहारादिकं नाप्याहृतमन्येन स्वादयिष्यामीति ४, एवम्भूतां च नानाप्रकारां प्रतिज्ञां गृहीत्वा कुतश्चिद् ग्लायमानोऽपि जीवितपरित्यागं कुर्यात्, न पुनः प्रतिज्ञालोपमिति। अमुमेवार्थमुपसंहारद्वारेण दर्शयितुमाह–'एवम्' उक्तविधिना 'स' भिक्षुरवगततत्त्वः शरीरादिनिष्पिपासुः यथाकीर्त्तितमेव धर्म्मम्–उक्तस्वरूपं सम्यगभिजानन्–आसेवनापरिज्ञया आसेवमानः, तथा लाघविकमागमयन्नित्यादि यच्चतुर्थोद्देशकेऽभिहितं तदत्र वाच्यमिति, तथा 'शान्तः' कषायोपशमात् श्रान्तो वा अनादिसंसारपर्यटनाद् विरतः सावद्यानुष्ठानात् शोभनाः समाहृता–गृहीता लेश्याः–अन्तःकरणवृत्तयस्तेजसीप्रभृतयो वा येन स सुसमाहृतलेश्यः, एवम्भूतः सन् पूर्वगृहीतप्रतिज्ञापालनासमर्थो ग्लानभावोपगतस्तपसा रोगातङ्केन वा प्रतिज्ञालोपमकुर्वन् शरीरपरित्यागाय भक्तप्रत्याख्यानं कुर्यात्, 'तत्रापि' भक्तपरिज्ञायामपि 'तस्य' कालपर्यायेणानागतमपि कालपर्याय एव निष्पादितशिष्यस्य संलिखितदेहस्य यः कालपर्यायो–मृत्योरवसरोऽत्रापि ग्लानावसरेऽसावेव कालपर्याय इति, कर्म्मनिर्ज्जराया उभयत्र समानत्वात्, स भिक्षुस्तत्र–ग्लानतयाऽनशनविधाने व्यन्तिकारकः–कर्म्मक्षयविधायीति। उद्देशकार्थमुपसञ्जिहीर्षुराह–सर्वं पूर्ववद्। विमोक्षाध्ययनस्य पञ्चमोद्देशकः परिसमाप्तः॥

उक्तः पञ्चमोद्देशकः, साम्प्रतं षष्ठ आरभ्यते, अस्य चायमभिसम्बन्धः–इहानन्तरोद्देशके ग्लानतया भक्तप्रत्याख्यानमुक्तम्, इह धृतिसंहननादिबलोपेत एकत्वभावनां भावयन्निङ्गितमरणं कुर्यादित्येतत्प्रतिपाद्यत इत्यनेन सम्बन्धेनायातस्यास्योद्देशकस्यादौ सूत्रानुगमे सूत्रमुच्चारणीयं, तच्चेदम्—

प्र. आ.
२८१

तोऽहं ?-प्रतिज्ञप्तो-वैयावृत्त्यकरणायापरैरुक्तः-अभिहितो, यथा तव वयं वैयावृत्त्यं यथोचितं कुर्म्म इति, किम्भूतैः परैः ?-अप्रतिज्ञप्तैः-अनुक्तैः, किम्भूतोऽहं-ग्लानो-विकृष्टतपसा कर्त्तव्यताऽशक्तो वातादिक्षोभेण वा ग्लान इति, किम्भूतैरपरैः ?-अग्लानैः-उचितकर्त्तव्यसहिष्णुभिः, तत्र परिहारविशुद्धिकस्यानुपारिहारिकः करोति कल्पस्थितो वा परो, यदि पुनस्तेऽपि ग्लानास्ततोऽन्ये न कुर्वन्ति, एवं यथालन्दिकस्यापीति, केवलं तस्य स्थविरा अपि कुर्वन्तीति दर्शयति- निर्जराम् 'अभिकाङ्क्ष्य' उद्दिश्य 'साधर्म्मिकैः' मध्यकल्पिकैरेककल्पस्थैरपरसाधुभिर्वा क्रियमाणं वैयावृत्त्यमहं 'स्वादयिष्यामि' अभिकाङ्क्षयिष्यामि यस्यायं भिक्षोः प्रकल्पः-आचारः स्यात् स तमाचारमनुपालयन् भक्तपरिज्ञयाऽपि जीवितं जह्यात्, न पुनराचारखण्डनं कुर्यादिति भावार्थः। तदेवमन्येन साधर्म्मिकेण वैयावृत्त्यं क्रियमाणमनुज्ञातं, साम्प्रतं स एवापरस्य कुर्यादिति दर्शयितुमाह—'चः' समुच्चये, अपिशब्दः पुनःशब्दार्थे, स च पूर्वस्माद्विशेषदर्शनार्थः, 'खलुः' वाक्यालङ्कारे, अहं च पुनरप्रतिज्ञप्तः-अनभिहितः प्रतिज्ञप्तस्य-वैयावृत्त्यकरणायाभिहितस्य अग्लानो ग्लानस्य निर्जरामभिकाङ्क्ष्य साधर्म्मिकस्य वैयावृत्त्यं कुर्यां, किमर्थं ?-'करणाय' तदुपकरणाय, तदुपकारायेत्यर्थः, तदेवं प्रतिज्ञां परिगृह्यापि भक्तपरिज्ञया प्राणान् जह्यात्, न पुनः प्रतिज्ञामिति सूत्रभावार्थः। इदानीं प्रतिज्ञाविशेषद्वारेण चतुर्भङ्गिकामाह-एकः कश्चिदेवम्भूतां प्रतिज्ञां गृह्णाति, तद्यथा-ग्लानस्यापरस्य साधर्मिकस्याहारादिकमन्वेषयिष्यामि, अपरं च वैयावृत्त्यं यथोचितं करिष्यामि, तथाऽपरेण च साधर्मिकेणाहृतं-आनीतमाहारादिकं स्वादयिष्यामि-उपभोक्ष्ये, एवम्भूतां प्रतिज्ञामाहृत्य-गृहीत्वा वैयावृत्त्यं कुर्यादिति १, तथाऽपर आहृत्य-प्रतिज्ञां गृहीत्वा यथाऽपरनिमित्तमन्वीक्षिष्ये आहारादिकमाहृतं चापरेण न स्वादयिष्यामीति २, तथाऽपर आहृत्य प्रतिज्ञामेवम्भूतां, तद्यथा—नापरनिमित्तमन्वीक्षिष्याम्याहारादिकमाहृतं चान्येन स्वादयिष्यामीति ३, तथाऽपर

वैयावृ-
त्त्याभि-
ग्रहः

१५

२०



२५

आहृत्य प्रतिज्ञामेवम्भूतां, तद्यथा–नान्वीक्षिष्येऽपरनिमित्तमाहारादिकं नाप्याहृतमन्येन स्वादयिष्यामीति ४, एवम्भूतां च नानाप्रकारां प्रतिज्ञां गृहीत्वा कुतश्चिद् ग्लायमानोऽपि जीवितपरित्यागं कुर्यात्, न पुनः प्रतिज्ञालोपमिति। अमुमेवार्थमुपसंहारद्वारेण दर्शयितुमाह–'एवम्' उक्तविधिना 'स' भिक्षुरवगततत्त्वः शरीरादिनिष्पिपासुः यथाकीर्त्तितमेव धर्म्मम्–उक्तस्वरूपं सम्यगभिजानन्—आसेवनापरिज्ञया आसेवमानः, तथा लाघविकमागमयन्नित्यादि यच्चतुर्थोद्देशकेऽभिहितं तदत्र वाच्यमिति, तथा 'शान्तः' कषायोपशमात् श्रान्तो वा अनादिसंसारपर्यटनाद् विरतः सावद्यानुष्ठानात् शोभनाः समाहृता–गृहीता लेश्याः–अन्तःकरणवृत्तयस्तैजसीप्रभृतयो वा येन स सुसमाहृतलेश्यः, एवम्भूतः सन् पूर्वगृहीतप्रतिज्ञापालनासमर्थो ग्लानभावोपगतस्तपसा रोगातङ्केन वा प्रतिज्ञालोपमकुर्वन् शरीरपरित्यागाय भक्तप्रत्याख्यानं कुर्यात्, 'तत्रापि' भक्तपरिज्ञायामपि 'तस्य' कालपर्यायेणानागतमपि कालपर्याय एव निष्पादितशिष्यस्य संलिखितदेहस्य यः कालपर्यायो–मृत्योरवसरोऽत्रापि ग्लानावसरेऽसावेव कालपर्याय इति, कर्म्मनिर्जराया उभयत्र समानत्वात्, स भिक्षुस्तत्र–ग्लानतयाऽनशनविधाने व्यन्तिकारकः–कर्म्मक्षयविधायीति। उद्देशकार्थमुपसञ्जिहीर्षुराह–सर्वं पूर्ववद्। **विमोक्षाध्ययनस्य पञ्चमोद्देशकः परिसमाप्तः ॥**

वैयावृत्त्याभिग्रहः

५

१०

उक्तः पञ्चमोद्देशकः, साम्प्रतं षष्ठ आरभ्यते, अस्य चायमभिसम्बन्धः–इहानन्तरोद्देशके ग्लानतया भक्तप्रत्याख्यानमुक्तम्, इह धृतिसंहननादिबलोपेत एकत्वभावनां भावयन्निङ्गितमरणं कुर्यादित्येतत्प्रतिपाद्यत इत्यनेन सम्बन्धेनायातस्यास्योद्देशकस्यादौ सूत्रानुगमे सूत्रमुच्चारणीयं, तच्चेदम्—

जे भिक्खू एगेण वत्थेण परिवुसिए पायबिइएण, तस्स णं नो एवं भवइ-बिइयं वत्थं जाइस्सामि, से अहेसणिज्जं वत्थं जाइज्जा अहापरिग्गहियं वत्थं धारिज्जा जाव गिम्हे पडिवन्ने अहापरिजुन्नं वत्थं परिट्ठविज्जा २ ता अदुवा एगसाडे अदुवा अचेले लाघवियं आगममाणे जाव सम्मत्तमेव समभिजाणिया (सू. २१५)

गतार्थं ॥ तस्य च भिक्षोरभिग्रहविशेषात् सपात्रमेकं वस्त्रं धारयतः परिकर्म्मितमतेर्लघुकर्म्मतया एकत्वभावनाऽध्यवसायः स्यादिति दर्शयितुमाह—

जस्स णं भिक्खुस्स एवं भवइ-एगे अहमंसि, न मे अत्थि कोइ, न याहमवि कस्सवि, एवं से एगागिणमेव अप्पाणं समभिजाणिज्जा, लाघवियं आगममाणे तवे से अभिसमन्नागए भवइ जाव समभिजाणिया (सू. २१६)

'णम्' इति वाक्यालङ्कारे, यस्य भिक्षोः 'एव'मिति वक्ष्यमाणं भवति,तद्यथा—एकोऽहमस्मि संसारे पर्यटतो न मे पारमार्थिक उपकारकर्तृत्वेन द्वितीयोऽस्ति, न चाहमन्यस्य दुःखापनयनतः कस्यचिद् द्वितीय इति, स्वकृतकर्म्मफलेश्वरत्वात्प्राणिनां, एवमसौ साधुरेकाकिनमेवात्मानम्-अन्तरात्मानं सम्यगभिजानीयात्, नास्यात्मनो नरकादिदुःखत्राणतया शरण्यो द्वितीयोऽस्तीत्येवं संद-

एकवस्त्रिकः १५ एकत्वं च

२०



२५

धानो यद्यद्रोगादिकमुपतापकारणमापद्यते तत्तदपरशरणनिरपेक्षो मयैवैतत्कृतं मयैव सोढव्यमित्येतदध्यवसायी सम्यगधिसहते। कुत एतदधिसहत इत्यत आह—लाघवियमित्यादि, चतुर्थोद्देशकवद्गतार्थं, यावत् 'सम्मत्तमेव समभिजाणिय'त्ति ॥ इह द्वितीयोद्देशके उद्गमोत्पादनैषणा प्रतिपादिता, तद्यथा—'आउसंतो समणा! अहं खलु तव अट्ठाए असणं वा ४ वत्थं वा पडिग्गहं वा कंबलं वा पायपुंछणं वा पाणाइं भूयाइं जीवाइं सत्ताइं समारंभ समुद्दिस्स कीयं पामिच्चं अच्छेज्जं अणिसिट्ठं आहट्टु चेएमि'इत्यादिना ग्रन्थेनेति, तथाऽनन्तरोद्देशके ग्रहणैषणा प्रतिपादिता, "सिया य से एवं वयंतस्सवि परो अभिहडं असणं वा ४ आहट्टु दलएज्जा" इत्यादिना ग्रन्थेन, ततो ग्रासैषणाऽवशिष्यते, अतस्तत्प्रतिपादनायाह—





**से भिक्खू वा भिक्खुणी वा असणं वा ४ आहारमाणे नो वामाओ हणुयाओ दाहिणं हणुयं संचारिज्जा आसाएमाणे, दाहिणाओ वामं हणुयं नो संचारिज्जा आसाएमाणे, से अणासायमाणे लाघवियं आगममाणे तवे से अभिसमन्नागए भवइ, जमेयं भगवया पवेइयं तमेवं अभिसमिच्चा सव्वओ सव्वत्ताए सम्मत्तमेव अ(सम)भिजाणिया (सू. २१७)**



'स' पूर्वव्यावर्णितो 'भिक्षुः' साधुः साध्वी वा अशनादिकमाहारमुद्गमोत्पादनैषणाशुद्धं प्रत्युत्पन्नं ग्रहणैषणाशुद्धं च गृहीतं सदङ्गारिताभिधूमितवर्जमाहारयेत्, तयोश्चाङ्गारिताभिधूमितयो रागद्वेषौ निमित्तं, तयोरपि सरसनीरसोपलब्धिः, कारणाभावे च कार्या-

भाव इतिकृत्वा रसोपलब्धिनिमित्तपरिहारं दर्शयति–स भिक्षुराहारमाहारयन् नो वामतो हनुतो दक्षिणां हनुं रसोपलब्धये सञ्चारये-दास्वादयन्नशनादिकं, नापि दक्षिणतो वामां सञ्चारयेदास्वादयन्, तत्सञ्चारास्वादनेन हि रसोपलब्धौ रागद्वेषनिमित्ते अङ्गारितत्वा-भिधूमितत्वे स्यातामतो यत्किञ्चिदप्यास्वादनीयं नास्वादयेत्, पाठान्तरं वा'आढायमाणे'आदरवान्-आहारे मूर्च्छितो गृद्धो न सञ्चार-येदिति, हन्वन्तरमङ्गमवदन्यत्रापि नास्वादयेदिति दर्शयति–स ह्याहारं चतुर्विधमप्याहारयन् रागद्वेषौ परिहरन्नास्वादयेदिति,तथा कुत-श्चिन्निमित्ताद्धन्वन्तरं सञ्चारयन्नप्यनास्वादयन् सञ्चारयेदिति। किमिति?,यत आह–आहारलाघवमागमयन्–आपादयन् नो आस्वा-दयेदित्यास्वादनिषेधेन चान्तप्रान्ताहाराभ्युपगमोऽभिहितो भवति, एवं च तपः 'से' तस्य भिक्षोरभिसमन्वागतं भवतीत्यादि गतार्थं यावत् 'सम्मत्तमेव समभिजाणिय'त्ति॥ तस्य चान्तप्रान्ताशितयाऽपचितमांसशोणितस्य जरदस्थिसन्ततेः क्रियाऽवसीदत्कायचेष्टस्य शरीरपरित्यागबुद्धिः स्यादित्याह–



१५

२०

जस्स णं भिक्खुस्स एवं भवइ–से गिलामि च खलु अहं इमंमि समए इमं सरीरगं अणुपुव्वेण परिवहित्तए, से अणुपुव्वेणं आहारं संवट्टिज्जा, अणुपुव्वेणं आहारं संवट्टित्ता कसाए पयणुए किच्चा समाहियच्चे फलगावयट्ठी उट्ठाय भिक्खू अभिनिव्वुडच्चे (सू. २१८)

णम्' इति वाक्यालङ्कारे यस्यैकत्वभावनाभावितस्य भिक्षोराहारोपकरणलाघवं गतस्य 'एव'मिति वक्ष्यमाणोऽभिप्रायो भवति, 'से' इति तच्छब्दार्थे, तच्छब्दोऽपि वाक्योपन्यासार्थे, च शब्दः समुच्चये 'खलुः' अवधारणे, अहं चास्मिन् 'समये' अवसरे संयमा-



२५

वसरे ग्लायामि-ग्लानिमेव गतो रूक्षाहारतया तत्समुत्थेन वा रोगेण पीडितः,अतो न शक्नोमि रूक्षतपोभिरभिनिष्टप्तं शरीरकमानुपूर्व्या-यथेष्टकालावश्यकक्रियारूपया परिवोढुं-नालमहं क्रियासु व्यापारयितुम्, अस्मिन्नवसरे इदं प्रतिक्षणं शीर्यमाणत्वाच्छरीरकमिति मत्वा स भिक्षुरानुपूर्व्या-चतुर्थषष्ठाचाम्लादिकया आहारं 'संवर्त्तयेत्' संक्षिपेत्, न पुनर्द्वादशसंवत्सरसंलेखनाऽऽनुपूर्वीह गृह्यते, ग्लानस्य तावन्मात्रकालस्थितेरभावाद्,अतस्तत्कालयोग्ययाऽऽनुपूर्व्या द्रव्यसंलेखनार्थमाहारं निरुन्ध्यादिति। द्रव्यसंलेखनया संलिख्य च यदपरं कुर्यात्तदाह-षष्ठाष्टमदशमद्वादशादिकयाऽऽनुपूर्व्याऽऽहारं संवर्त्त्य कषायान् प्रतनून् कृत्वा, सर्वकालं हि कषायतानवं विधेयं विशेषतस्तु संलेखनावसरे इत्यतस्तान् प्रतनून् कृत्वा सम्यगाहिता-व्यवस्थापिता अर्चा-शरीरं येन स समाहितार्चः, नियमितकायव्यापार इत्यर्थः, यदिवा अर्चा-लेश्या सम्यगाहिता-जनिता लेश्या येन स समाहितार्चः, अतिविशुद्धाध्यवसाय इत्यर्थः, यदिवाऽर्चा-क्रोधाद्यध्यवसायात्मिका ज्वाला समाहिता-उपशमिताऽर्चा येन स तथा, 'फलं' कर्म्मक्षयरूपं तदेव फलकं तेनापदि संसारभ्रमणरूपायामर्थः-प्रयोजनं फलकापदर्थः,स विद्यते यस्यासौ फलकापदर्थी, यदिवा फलकवद्वास्यादिभिरुभयतो बाह्यतोऽभ्यन्तरतश्चावकृष्टः फलकावकृष्ट इत्येवं विगृह्यार्षत्वात् 'फलगावयट्ठी' इत्युक्तं, यदिवा वक्ष्यमाणोऽपि दुर्वचनवास्यादिभिः कषायाभावतया फलकवदवतिष्ठते तच्छीलश्चेति फलकावस्थायी, वासीचन्दनकल्प इत्यर्थः, स एवम्भूतः प्रतिदिनं साकारभक्तप्रत्याख्यायी वलयति रोगावेगे उत्थाय-अभ्युद्यतमरणोद्यमं विधायाभिनिर्वृत्तार्चः-शरीरसन्तापरहितो धृतिसंहननाद्युपेतो महापुरुषाचीर्णमार्गानुविधायीङ्गितमरणं कुर्यात् ॥ कथं कुर्यादित्याह—

५

१०

अणुपविसित्ता गामं वा नगरं वा खेडं वा कब्बडं वा मडंबं वा पट्टणं वा दोणमुहं वा आगरं

वा आसमं वा सन्निवेसं वा नेगमं वा रायहाणिं वा तणाइं जाइज्जा तणाइं जाइत्ता से तमा-
याए एगंतमवक्कमिज्जा, एगंतमवक्कमित्ता अप्पंडे अप्पपाणे अप्पबीए अप्पहरिए अप्पोसे
अप्पोदए अप्पुत्तिंगपणगदगमट्टियमक्कडासंताणए पडिलेहिय २ पमज्जिय २ तणाइं संथरिज्जा,
तणाइं संथरित्ता इत्थवि समए इत्तरियं कुज्जा, तं सच्चं सच्चवाई ओए तिन्ने छिन्नकहंकहे अ ई-
यट्ठे अणाईए चिच्चाण भेउरं कायं संविहूय विरूवरूवे परीसहोवसग्गे अस्सिं विस्संभणयाए
भेरवमणुचिन्ने तत्थावि तस्स कालपरियाए जाव अणुगामियंतिबेमि (सू० २२९) ८-६॥
विमोक्षाध्ययने षष्ठ उद्देशकः ॥८॥



२०

ग्रसति बुद्ध्यादीन् गुणानिति गम्यो वाऽष्टादशानां कराणामिति ग्रामः, सर्वत्र वाशब्दः पक्षान्तरदर्शनार्थः नात्र करो विद्यत इति नकरं, पांशुप्राकारबद्धं खेटं, क्षुल्लकप्राकारवेष्टितं कर्बटं, अर्द्धतृतीयगव्यूतान्त-र्ग्रामरहितं मडम्बं, पत्तनं तु द्विधा-जलपत्तनं स्थलपत्तनं च जलपत्तनं यथा काननद्वीपः, स्थलपत्तनं यथा मथुरा, 'द्रोणमुखं' जलस्थलनिर्गमप्रवेशं, यथा भरुकच्छं ताम्रलिप्ती वा, 'आकरो' हिरण्याकरादिः, 'आश्रमः' तापसावसथोपलक्षित आश्रयः, 'सन्निवेशः' यात्रासमागतजनावासो जनसमागमो वा 'नैगमः' प्रभूततरवणिग्वर्गावासः 'राजधानी' राजाधिष्ठानं राज्ञः पीठिकास्थानमित्यर्थः, एतेष्वेतानि वा प्रविश्य तृणानि याचेत, ततः किमित्याह-संस्ता-



२६

रकाय प्रासुकानि दर्भवीरणादिकानि कचिद्ग्रामादौ तृणस्वामिनमनुज्ञाप्य तृणानि याचित्वा स तान्यादायैकान्ते–गिरिगुहादावपक्रामेद्–गच्छेदेकान्तं, रहोऽपक्रम्य च प्रासुकं महास्थण्डिलं प्रत्युपेक्षते, किम्भूतं तद्दर्शयति–अल्पान्यण्डानि कीटिकादीनां यत्र तदल्पाण्डं तस्मिन्, अल्पशब्दोऽत्राभावे वर्त्तते, अण्डकरहित इत्यर्थः, तथाऽल्पाः प्राणिनो–द्वीन्द्रियादयो यस्मिन् तत्तथा, तथा अल्पानि बीजानि नीवारश्यामाकादीनां यत्र तत्तथा, तथा अल्पानि हरितानि–दूर्वाप्रवालादीनि यत्र तत्तथा, तथाऽल्पावश्याये–अधस्तनोपरितनावश्यायविप्रुड्वर्जिते, तथाऽल्पोदके–भौमान्तरिक्षोदकरहिते, तथोत्तिङ्गपनकोदकमृत्तिकामर्कटसन्तानरहिते, तत्रोत्तिङ्गः–पिपीलिकासन्तानकः पनको–भूम्यादावुल्लिविशेषः उदकमृत्तिका–अचिराप्कायार्द्रीकृता मृत्तिका मर्कटसन्तानको–लूतातन्तुजालं, तदेवम्भूते महास्थण्डिले तृणानि संस्तरेत्, किं कृत्वा ?–तत् स्थण्डिलं चक्षुषा प्रत्युपेक्ष्य २, वीप्सया भृशभावमाह, एवं रजोहरणादिना प्रमृज्य २, अत्रापि वीप्सया भृशार्थता सूचिता, संस्तीर्य च तृणान्युच्चारप्रस्रवणभूमिं च प्रत्युपेक्ष्य पूर्वाभिमुखसंस्तारकगतः करतलललाटस्पर्शिधृतरजोहरणः कृतसिद्धनमस्कारः आवर्त्तितपञ्चनमस्कारोऽत्रापि समये अपिशब्दादन्यत्र वा समये 'इत्वर'मिति पादपोपगमनापेक्षया नियतदेशप्रचाराभ्युपगमादिङ्गितमरणमुच्यते, न तु पुनरित्वरं,साकारं प्रत्याख्यानं, साकारप्रत्याख्यानस्यान्यस्मिन्नपि काले जिनकल्पिकादेरसम्भवात्, किं पुनर्यावत्कथिकभक्तप्रत्याख्यानावसर इति, इत्वरं हि रोगातुरः श्रावको विधत्ते, तद्यथा–यद्यहमस्माद्रोगात् पञ्चषैरहोभिर्मुक्तः स्यां ततो भोक्ष्ये, नान्यथेत्यादि, तदेवमित्वरम्–इङ्गितमरणं धृतिसंहननादिबलोपेतः स्वकृतत्वग्वर्त्तनादिक्रियो यावज्जीवं चतुर्विधाहारनियमं कुर्यादिति, उक्तं च–"पच्चक्खइ आहारं चउव्विहं णियमओ गुरु-



५

१०

१ प्रत्याख्याति आहारं चतुर्विधं नियमाद् गुरुसमीपे। इङ्गितदेशे तथा चेष्टामपि नियमतः करोति ॥१॥ उद्वर्तते परिवर्तते कायिक्याद्यपि आत्मना करोति। सर्वमिहात्मनैव नान्ययोगेन धृतिबलिकः ॥२॥

ममीवे। इंगियदेसंमि तहा चिट्ठपि हु नियमओ कुणइ ॥१॥ उव्वत्तइ परिअत्तइ काइगमाईऽवि अप्पणा कुणइ। सव्वमिह अप्प-णच्चिअ ण अन्नजोगेण धितिवलिओ ॥२॥" तचेङ्गितमरणं किम्भूतं किम्भूतश्च प्रतिपद्यत इत्याह–'तद्' इङ्गितमरणं सद्भ्यो हितं सत्यं–सुगतिगमनाविसंवादनात्सर्वज्ञोपदेशाच्च सत्यं–तथ्यं, तथा स्वतोऽपि सत्यं वदितुं शीलमस्येति सत्यवादी, यावज्जीवं यथो-क्तानुष्ठानाद्यथाऽऽरोपितप्रतिज्ञाभारनिर्वहणादित्यर्थः, तथा 'ओजः' रागद्वेषरहितः, तथा तीर्णः संसारसागरं, भाविनि भूतवदुप-चारात्तीर्णवत्तीर्ण इत्यर्थः, तथा 'छिन्ना' अपनीता 'कथं' कथमपि या 'कथा' रागकथादिका विकथारूपा येन स छिन्नकथंकथः, यदिवा कथमहमिङ्गितमरणप्रतिज्ञां निर्वहिष्ये इत्येवंरूपा या कथा सा छिन्ना येन स छिन्नकथंकथः, दुष्करानुष्ठानविधायी हि कथंकथी भवति, न तु पुनर्महापुरुषतया न व्याकुलतामियादिति, तथा आ–समन्तादतीव इता–ज्ञाता परिच्छिन्ना जीवाद्योऽर्था येन सोऽ-यमातीतार्थः आदत्तार्थो वा, यदिवाऽतीताः–सामस्त्येनातिक्रान्ताः अर्थाः–प्रयोजनानि यस्य स तथा, उपरतव्यापार इत्यर्थः, तथा आ–समन्तादतीव इतो–गतोऽनाद्यनन्ते संसारे आतीतः न आतीतः अनातीतः, अनादत्तो वा संसारो येन स तथा, संसारार्ण वपारगामीत्यर्थः, स एवम्भूत इङ्गितमरणं प्रतिपद्यते, विधिना 'त्यक्त्वा' प्रोज्झ्य स्वयमेव भिद्यते इति भिदुर–प्रतिक्षणविशरारुं 'कार्य' कर्मवशाद्गृहीतमौदारिकं शरीरं त्यक्त्वा, तथा 'संविधूय' परीषहोपसर्गान् प्रमथ्य 'विरूपरूपान्' नानाप्रकारान् सोढ्वा 'अस्मिन्' सर्वज्ञप्रणीत आगमे 'विस्रम्भणतया' विश्वासास्पदे तदुक्तार्थाविसंवादाध्यवसायेन भैरवं–भयानकमनुष्ठानं क्लीबैर्दुरध्य-वसमिङ्गितमरणाख्यमनुचीर्णवान्–अनुष्ठितवानिति, तच्च तेन यद्यपि रोगातुरतया व्यधायि तथापि तत्कालपर्यायागततुल्यफल-मिति दर्शयितुमाह–'तत्रापि' रोगपीडाऽऽहितेङ्गितमरणाभ्युपगमेऽपि, न केवलं कालपर्यायेणेत्यपिशब्दार्थः, 'तस्य' कालज्ञस्य



१५ २० २७

णस्यागमेन प्रत्यक्षीकृतनारकतिर्यग्वेदनाऽनुभवस्य न मे तृणस्पर्शो महति फलविशेषेऽभ्युद्यतस्य किञ्चित् प्रतिभासते, तथा शीतोष्णदंशमशकस्पर्शमधिसोढुमिति, तथा एकतरान् अन्यतरांश्चानुकूलप्रत्यनीकान् विरूपरूपान् 'स्पर्शान्' दुःखविशेषानध्यासयितुं-सोढुमिति, किं त्वहं ह्री-लज्जा तया गुह्यप्रदेशस्य प्रच्छादनं ह्रीप्रच्छादनं, तच्चाहं त्यक्तुं न शक्नोमि, एतच्च प्रकृतिलज्जालुकतया साधनविकृतरूपतया वा स्यात्, एवमेभिः कारणैः 'से' तस्य 'कल्पते' युज्यते 'कटिबन्धनं' चोलपट्टकं कर्तुं, स च विस्तरेण चतुरङ्गुलाधिको हस्तो दैर्घ्येण कटिप्रमाण इति, गणनाप्रमाणेनैकः, पुनरेतानि कारणानि न स्युः ततोऽचेल एव पराक्रमेत, अचेलतया शीतादिस्पर्शं सम्यगधिसहेतेति ॥ एतत्प्रतिपादयितुमाह—



अदुवा तत्थ परक्कमंतं भुज्जो अचेलं तणफासा फुसन्ति सीयफासा फुसन्ति तेउफासा फुसन्ति दंसमसगफासा फुसन्ति एगयरे अन्नयरे विरूवरूवे फासे अहियासेइ, अचेले लाघवियं आगममाणे जाव समभिजाणिया (सू. २२१)



स एव कारणसद्भावे सति वस्त्रं बिभृयादथवा नैवासौ जिह्रेति, ततोऽचेल एव पराक्रमेत, तं च तत्र संयमेऽचेलं पराक्रममाणं भूयः-पुनस्तृणस्पर्शाः स्पृशन्ति-उपतापयन्ति, तथा शीतोष्णदंशमशकस्पर्शाः स्पृशन्तीति, तथैकतरानन्यतरांश्च विरूपरूपान् स्पर्शानुदीर्णानधिसहते अमावचेलोऽचेललाघवमागमयन्नित्यादि गतार्थं यावत् 'सम्मत्तमेव समभिजाणिय'त्ति ॥ किं च-प्रतिमाप्रतिपन्न एव विशिष्टमभिगृह्णीयात्, तद्यथा-अहमन्येषां प्रतिमाप्रतिपन्नानामेव किञ्चिद्दास्यामि, तेभ्यो वा ग्रहीष्यामीत्येवमाकार

चतुर्भङ्गिकयाऽभिग्रहविशेषमाह—

जस्स णं भिक्खुस्स एवं भवइ—अहं च खलु अन्नेसिं भिक्खूणं असणं वा ४ आहट्टु दलइस्सामि आहडं च साइज्जिस्सामि १, जस्स णं भिक्खुस्स एवं भवइ—अहं च खलु अन्नेसिं भिक्खूणं असणं वा ४ आहट्टु दलइस्सामि आहडं च नो साइस्सामि २, जस्स णं भिक्खुस्स एवं भवइ—अहं च खलु असणं वा ४ आहट्टु नो दलइस्सामि आहडं च साइज्जिस्सामि ३, जस्स णं भिक्खुस्स एवं भवइ—अहं च खलु अन्नेसिं भिक्खूणं असणं वा ४ आहट्टु नो दलइस्सामि आहडं च नो साइज्जिस्सामि ४, अहं च खलु तेण अहाइरित्तेण अहेसणिज्जेण अहापरिग्गहिएणं असणेण वा ४ अभिकङ्ख साहम्मियस्स कुज्जा वेयावडियं करणाए, अहं वावि तेण अहाइरित्तेण अहेसणिज्जेण अहापरिग्गहिएणं असणेण वा पाणेण वा ४ अभिकङ्ख साहम्मिएहिं कीरमाणं वेयावडियं साइज्जिस्सामि लाघवियं आगममाणे जाव सम्मत्तमेव समभिजाणिया (सू. २२२)



५

१०

एतच्च पूर्वं व्याख्यातमेव, केवलमिह संस्कृतेनोच्यते-यस्य भिक्षोरेवं भवति वक्ष्यमाणम्, तद्यथा-अहं च खल्वन्येभ्यो— भिक्षुभ्योऽशनादिकमाहृत्य दास्याम्यपराहृतं च स्वादयिष्यामीत्येको भङ्गकः १, तथा यस्य भिक्षोरेवं भवति, तद्यथा-अहं च खल्वन्येभ्योऽशनादिकमाहृत्य दास्याम्यपराहृतं च नो स्वादयिष्यामीति द्वितीयः २, यस्य भिक्षोरेवं भवति, तद्यथा-अहं च खल्वन्येभ्योऽशनादिकमाहृत्य नो दास्याम्यपराहृतं च स्वादयिष्यामीति तृतीयः ३, तथा यस्य भिक्षोरेवं भवति, तद्यथा-अहं च खल्वन्येभ्यो भिक्षुभ्योऽशनादिकमाहृत्य नो दास्याम्यपराहृतं च नो स्वादयिष्यामीति चतुर्थः ४ । इत्येवं चतुर्णामभिग्रहाणामन्यतरमभिग्रहं गृह्णीयात्, अथवा एतेषामेवाद्यानां त्रयाणां भङ्गानामेकपदेनैव कश्चिदभिग्रहं गृह्णीयादिति दर्शयितुमाह-यस्य भिक्षोरेवंभूतोऽभिग्रहविशेषो भवति, तद्यथा-अहं च खलु तेन यथाऽतिरिक्तेन-आत्मपरिभोगाधिकेन यथैषणीयेन-यत्तेषां प्रतिमाप्रतिपन्नानामेषणीयमुक्तम्, तद्यथा-पञ्चसु प्राभृतिकासु अग्रहः द्वयोरभिग्रहः,तथा यथापरिगृहीतेन-आत्मार्थं स्वीकृतेनाशनादिना निर्जरामभिकाङ्क्ष्य साधर्मिकस्य वैयावृत्यं कुर्याद्, यद्यपि ते प्रतिमाप्रतिपन्नत्वादेकत्र न भुञ्जते तथाप्येकाभिग्रहापादितानुष्ठानत्वात्साम्भोगिका भण्यन्ते अतस्तस्य समनोज्ञस्य करणाय-उपकरणार्थं वैयावृत्यं कुर्यामित्येवंभूतमभिग्रहं कश्चिद्गृह्णाति । तथाऽपरं दर्शयितुमाह-वाशब्दः पूर्वस्मात्पक्षान्तरमाह, अपिशब्दः पुनःशब्दार्थे, अहं वा पुनस्तेन यथातिरिक्तेन यथैषणीयेन यथापरिगृहीतेनाशनेन ४ निर्जरामभिकाङ्क्ष्य साधर्मिकैः क्रियमाणं वैयावृत्यं स्वादयिष्यामि-अभिलषिष्यामि, यो वाऽन्यः साधर्मिकोऽन्यस्य करोति तं चानुमोदयिष्यामि-यथा सुष्ठु भवता कृतमेवंभूतया वाचा, तथा कायेन च प्रसन्नदृष्टिमुखेन तथा मनसा चेति, किमित्येवं करोति-?— लाघविकमित्यादि, गतार्थं ॥ तदेवमन्यतराभिग्रहवान् भिक्षुरचेलः सचेलो वा शरीरपीडायां सत्याससत्यां वा आयुःशेषतामवग-



१५

२०



२५

म्योद्यतमरणं विदध्यादिति दर्शयितुमाह—

जस्स णं भिक्खुस्स एवं भवइ-से गिलामि खलु अहं इमम्मि समए इमं सरीरगं अणुपुव्वेणं परिवहित्तए, से अणुपुव्वेणं आहारं संवट्टिज्जा २ कसाए पयणुए किच्चा समाहियच्चे फलगावयट्ठी उट्ठाय भिक्खू अभिनिव्वुडच्चे अणुपविसित्ता गामं वा नगरं वा जाव रायहाणिं वा तणाइं जाइज्जा जाव सन्थरिज्जा, इत्थवि समए कायं च जोगं च ईरियं च पच्चक्खाइज्जा, तं सच्चं सच्चावाई ओए तिन्ने छिन्नकहंकहे आइयट्ठे अणाईए चिच्चाणं भेउरं कायं संविहुणिय विरूवरूवे परीसहोवसग्गे अस्सिं विस्संभणाए भेरवमणुचिन्ने तत्थवि तस्स कालपरियाए, सेऽवि तत्थ विअन्तिकारए, इच्चेयं विमोहायतणं हियं सुहं खमं निस्सेसं आणुगामियंतिबेमि (सू. २२३) ८—७॥

५

णमिति वाक्यालङ्कारे, यस्य भिक्षोरेवंभूतो-वक्ष्यमाणोऽभिप्रायो भवति, तद्यथा-ग्लायामि खल्वहमित्यादि यावत्तृणानि संस्तरेत्, संस्तीर्य च तृणानि यदपरं कुर्यात्तदाह-अत्रापि समये-अवसरे, न केवलमन्यत्रअनुज्ञाप्य संस्तारकमारुह्य सिद्धसमक्षं स्वत एव

१०

पञ्चमहाव्रतारोपणं करोति, ततश्चतुर्विधमप्याहारं प्रत्याचष्टे, ततः पादपोपगमनाय कायं च-शरीरं प्रत्याचक्षीत, तद्योगं च-आकुञ्चनप्रसारणोन्मेषनिपातादिकम्, तथेरणमीर्यां तां च सूक्ष्मां कायवाग्गतां मनोगतां वाऽप्रशस्तां प्रत्याचक्षीत, तच्च सत्यं सत्यवादीत्याद्यनन्तरोद्देशकवन्नेयम् । इतिब्रवीमिशब्दावपि क्षुण्णार्थाविति ॥ विमोक्षाध्ययनस्य सप्तमोद्देशकः समाप्तः ॥८-७॥

उक्तः सप्तमोद्देशकः, साम्प्रतमष्टम आरभ्यते, अस्य चायमभिसम्बन्धः-इहानन्तरोद्देशकेषु रोगादिसम्भवे कालपर्यायागतं परिज्ञितमरणपादपोपगमनविधानमुक्तम्, इह तु तदेवानुपूर्वीविहारिणां कालपर्यायागतमुच्यते, इत्यनेन, सम्बन्धेनायातस्यास्योद्देशकस्यादिसूत्रमुच्यते—

अनुष्टुप् ॥ अणुपुव्वेण विमोहाइं, जाइं धीरा समासज्ज । वसुमन्तो, मइमन्तो सव्वं नच्चा अणेलिसं ॥१७॥ दुविहंपि विइत्ता णं, बुद्धा धम्मस्स पारगा । अणुपुव्वीइ सङ्खाए, आरम्भाओ (य)तिउट्टई ॥१८॥ कसाए पयणू किज्जा, अप्पाहारे तितिक्खए । अह भिक्खू गिलाइज्जा, आहारस्सेव अन्तियं ॥१९॥ जीवियं नाभिकङ्खेज्जा, मरणं नोवि पत्थए । दुहओऽवि न सज्जिज्जा, जीविए मरणे तहा ॥२०॥

संलेखनाऽनशनं

१९

२०

आनुपूर्वी–क्रमः, तद्यथा–प्रव्रज्याशिक्षासूत्रार्थग्रहणपरिनिष्ठितस्यैकाकिविहारित्वमित्यादि, यदिवा आनुपूर्वी–संलेखनाक्रमश्चत्वारि विकृष्टानीत्यादि तया आनुपूर्व्या यान्यभिहितानि, कानि पुनस्तानि?—'विमोहानि' विगतो मोहो येषु येषां वा येभ्यो वा तानि तथा भक्तपरिज्ञेङ्गितमरणपादपोपगमनानि यान्येवंभूतानि यथाक्रममायातानि धीराः–अक्षोभ्याः समासाद्य–प्राप्य वसु–द्रव्यं संयमस्तद्वन्तो वसुमन्तः, तथा मननं मतिः–हेयोपादेयहानोपादानाध्यवसायस्तद्वन्तो मतिमन्तः, तथा 'सर्वं' कृत्यमकृत्यं च ज्ञात्वा यद्यस्य वा भक्तपरिज्ञानादिकं मरणविधानमुचितं धृतिसंहननाद्यपेक्षयाऽनन्यसदृशम्–अद्वितीयम्, सर्वं ज्ञात्वा समाधिमनुपालये-

५

दिति ॥१॥ किं च–द्वे विधे प्रकारावस्येति द्विविधं तपो बाह्यमभ्यन्तरं च, तद्विदित्वा–आसेव्य यदिवा मोक्षाधिकारे विमोक्तव्यं द्विविधं, तदपि बाह्यं शरीरोपकरणादि आन्तरं रागादि, तद्धेयतया विदित्वा, त्यक्त्वेत्यर्थः,हेयपरित्यागफलत्वात् ज्ञानस्य,'ण'मिति वाक्यालङ्कारे, के विदित्वा?–'बुद्धा' अवगततत्त्वा धर्मस्य–श्रुतचारित्राख्यस्य पारगा–सम्यग्वेत्तारः, ते बुद्धा धर्मस्वरूपवेदिनः 'आनुपूर्व्या' प्रव्रज्यादिक्रमेण संयममनुपाल्य मम जीवतः कश्चिद्गुणो नास्तीत्यतः शरीरमोक्षावसरः प्राप्तः, तथा कस्मै मरणायालमहमित्येवं 'संख्याय' ज्ञात्वा, आरम्भणमारम्भः–शरीरधारणायान्नपानाद्यन्वेषणात्मकस्तस्मात् त्रुट्यति–अपगच्छतीत्यर्थः, सुब्व्यत्ययेन पञ्चम्यर्थे चतुर्थी, पाठान्तरं वा 'कम्मुणाओ तिउट्टई' कर्माष्टभेदं तस्मात् त्रुटयिष्यतीति त्रुट्यति 'वर्त्तमानसामीप्ये वर्त्तमानवद्वे'-(पा॰ ३–३–१३१)त्यनेन भविष्यत्कालस्य वर्त्तमानता ॥२॥ स चाभ्युद्यतमरणाय संलेखनां कुर्वन् प्रधानभूतां भावसंलेखनां कुर्यादित्येतद्दर्शयितुमाह–कषः–संसारस्तस्यायाः कषायाः–क्रोधादयश्चत्वारस्तान् प्रतनून् कृत्वा ततो यत्किञ्चनाश्नीयात्, तदपि न प्रकामसिति दर्शयति–'अल्पाहारः' स्तोकाशी, षष्ठाष्टमादि संलेखनाक्रमायातं तपः कुर्वन् यत्रापि पारयेत्तत्राप्यल्पमित्यर्थः, अल्पाहार-

१०

रागद्वेषयोर्मध्ये तिष्ठतीति मध्यस्थः, यदिवा जीवितमरणयोर्निराकाङ्क्षतया मध्यस्थो, निर्जरामपेक्षितुं शीलमस्येति निर्जरापेक्षी, स एवंभूतः समाधि-मरणसमाधिमनुपालयेत्, जीवितमरणाशंसारहितः कालपर्यायेण यन्मरणमापद्यते तत् समाधिस्थोऽनुपालयेदिति भावः। अन्तः कषायान् बहिरपि शरीरोपकरणादिकं व्युत्सृज्यात्मन्यधि अध्यात्मम्-अन्तःकरणं तच्छुद्धं सकलद्वन्द्वोपरमाद्विस्रोतसिकारहितमन्वेषयेत्-प्रार्थयेदिति ॥५॥ किं च-उपक्रमणमुपक्रमः-उपायस्तं यं कञ्चन जानीत, कस्योपक्रमः ?-'आयुःक्षेमस्य' आयुषः क्षेमं-सम्यक्पालनं तस्य, कस्य सम्बन्धि तदायुः ?-आत्मनः एतदुक्तं भवति-आत्मायुषो यं क्षेमप्रतिपालनोपायं जानीत तं क्षिप्रमेव शिक्षेत्-व्यापारयेत् पण्डितो-बुद्धिमान्, 'तस्यैव' सलेखनाकालस्य 'अन्तरद्धाए'त्ति अन्तरकालेऽर्द्धसंलिखित एव देहे देही यदि कश्चित् वातादिक्षोभात् आतङ्क आशुजीवितापहारी स्यात् ततः समाधिमरणमभिकाङ्क्षन् तदुपशमोपायमेषणीयविधिनाऽभ्यङ्गादिकं विदध्यात्, पुनरपि संलिखेत्, यदिवाऽऽत्मनः आयुःक्षेमस्य-जीवितस्य यत्किमप्युपक्रमणम्-आयुःपुद्गलानां संवर्त्तनं समुपस्थितं तज्जानीत, ततस्तस्यैव सलेखनाकालस्य मध्येऽव्याकुलितमतिः क्षिप्रमेव भक्तपरिज्ञानादिकं शिक्षेत-आसेवेत पण्डितो-बुद्धिमानिति ॥६॥ सलेखनाशुद्धकायश्च मरणकालं समुपस्थितं ज्ञात्वा किं कुर्यादित्याह-ग्रामः-प्रतीतो, ग्रामशब्देन चात्र प्रतिश्रय उपलक्षितः, प्रतिश्रय एव स्थण्डिलं-संस्तारकभुवं प्रत्युपेक्ष्य, तथा अरण्ये वेत्यनेन चोपाश्रयाद्बहिरित्येतदुपलक्षितम्, उद्याने गिरिगुहायामरण्ये वा स्थण्डिलं प्रत्युपेक्ष्य विज्ञाय चाल्पप्राणं-प्राणिरहितम्, ग्रामादियाचितानि प्रासुकानि दर्भादिमयानि तृणानि संस्तरेत् 'मुनिः' यथोचितकालस्य वेत्तेति ॥७॥ संस्तीर्य च तृणानि यत्कुर्यात्तदाह-न विद्यते आहारोऽस्येत्यनाहारः तत्र यथाशक्ति यथासमाधानं च त्रिविधं चतुर्विधं वाऽऽहारं प्रत्याख्यायारोपितपञ्चमहाव्रतः क्षान्तः-क्षामितसमस्तप्राणिगणः समसुखदुःखः

५

१०

आवर्जितपुण्यप्राग्भारतया मरणादविभ्यत् संस्तारके त्वग्वर्त्तनं कुर्यात्, तत्र च स्पृष्टः परीषहोपसर्गैस्त्यक्तदेहतया सम्यक्तानध्यासयेद्–अधिसहेत, तत्र मानुष्यैरनुकूलप्रतिकूलैः परीषहोपसर्गैः स्पृष्टो–व्याप्तो नातिवेलमुपचरेत्–न मर्यादोल्लङ्घनं कुर्यात्, पुत्रकलत्रादिगतध्यानार्तध्यानवशगो भूयात्, प्रतिकूलैर्वा परीषहोपसर्गैर्न क्रोधनिघ्नः स्यादिति ॥८॥ एतदेव दर्शयितुमाह—

संसप्पगा य जे पाणा, जे य उड्ढमहाचरा । भुञ्जन्ति मंससोणियं, न छणे न पमज्जए ॥२५॥ पाणा देहं विहिंसन्ति, ठाणाओ नवि उब्भमे । आसवेहिं विवित्तेहिं, तिप्पमाणोऽहियासए ॥२६॥ गन्थेहिं विवित्तेहिं, आउकालस्स पारए । पग्गहियतरगं चेयं, दवियस्स वियाणओ ॥२७॥ अयं से अवरे धम्मे, नायपुत्तेण साहिए । आयवज्जं पडीयारं, विजहिज्जा तिहा तिहा ॥२८॥

संसर्पन्तीति संसर्पकाः–पिपीलिकाक्रोष्ट्रादयो ये प्राणाः–प्राणिनो ये चोर्द्धचरा–गृध्रादयो ये चाधश्चराः–बिलवासिन्यस्त्वात्मसर्पादयस्त एवंभूता नानाप्रकाराः 'भुञ्जन्ते' अभ्यवहरन्ति मांसं सिंहव्याघ्रादयः तथा शोणितं मशकादयः, तांश्च प्राणिन आहारार्थिनः समागतानवन्तिसुकुमारवद्भस्मादिभिर्न क्षणुयात्–न हन्यात्, न च भक्ष्यमाणं शरीरावयवं रजोहरणादिना प्रमार्जयेदिति ।.९॥ किं च–प्राणाः–प्राणिनो देहं मम (वि) हिंसन्ति, न तु पुनर्ज्ञानदर्शनचारित्राणीत्यतस्त्यक्तदेहाजिनस्थानान्तरायभयाच्च निषेधयेत्,



२०

तस्माच्च स्थानान्नाप्युद्भ्रमेत्–नान्यत्र यायात्, किंभूतः सन् ?–आश्रवैः–प्राणातिपातादिभिर्विषयकषायादिभिर्वा 'विविक्तैः' पृथग्भूतैरविद्यमानैः शुभाध्यवसायी तैर्भक्ष्यमाणोऽप्यमृतादिना तृप्यमाण इव सम्यक्तत्कृतां वेदनां तैस्तप्यमानो वाऽध्यासयेद्–अधिसहेत ॥१०॥ किं च ग्रन्थैः सबाह्याभ्यन्तरैः शरीररागादिभिः 'विविक्तैः, त्यक्तैः मद्भिर्ग्रन्थैर्वा–अज्ञानङ्गप्रविष्टैरात्मानं भावयन् धर्म्मशुक्लध्यानान्यतरोपेतः 'आयुःकालस्य' मृत्युकालस्य 'पारगः' पारगामी स्यात्–यावदन्त्या उच्छ्वासनिश्वासास्तावत्तद्विदध्याद्, एतन्मरणविधानकारी सिद्धिं त्रिविष्टपं वा प्राप्नुयादिति गतं भक्तपरिज्ञामरणं। साम्प्रतमिङ्गितमरणं श्लोकार्द्धादिनोच्यते-तद्यथा–'प्रगृहीततरकं चेदं' प्रकर्षेण गृहीततरं प्रगृहीततरं तदेव प्रगृहीततरकम्, 'इद'मिति वक्ष्यमाणमिङ्गितमरणम्, एतद्धि भक्तप्रत्याख्यानात्मकात्सन्नियमेन चतुर्विधाहारप्रत्याख्यानादिङ्गितप्रदेशसंस्तारकमात्रविहाराभ्युपगमाच्च विशिष्टतरधृतिसंहननाद्युपेतेन प्रकर्षेण गृह्यत इति, कस्यैतद्भवति ?–द्रव्यं–संयमः स विद्यते यस्यासौ द्रविकस्तस्य 'विजानतो' गीतार्थस्य, जघन्यतोऽपि नवपूर्वविशारदस्य भवति, नान्यस्येति, अत्रापीङ्गितमरणे यत्संलेखनातृणसंस्तारादिकमभिहितं तत्सर्वं वाच्यम् ॥११॥ अयमपरो विधिरित्याह–'अयं स' इति सोऽयम् 'अपरः' अन्यो भक्तप्रत्याख्यानाद्भिन्न इङ्गितमरणस्य 'धर्म्मो' विशेषो 'ज्ञातपुत्रेण' वीरवर्द्धमानस्वामिना सुष्ठु आहितः–उपलब्धः स्वाहितः, अस्य चानन्तरं वक्ष्यमाणत्वात्प्रत्यक्षासन्नवाचिनेदमाऽभिधानं, अत्रापीङ्गितमरणे प्रव्रज्यादिको विधिः संलेखना च पूर्ववद्द्रष्टव्या, तथोपकरणादिकं हित्वा स्थण्डिलं प्रत्युपेक्ष्यालोचितप्रतिक्रान्तः पञ्चमहाव्रतारूढश्चतुर्विधमाहारं प्रत्याख्याय संस्तारके तिष्ठति, अयमत्र विशेषः–आत्मवर्जं प्रतिचारम्–अङ्गव्यापारं विशेषेण जह्यात्–त्यजेत् 'त्रिविधत्रिविधेने'ति मनोवाक्कायैः कृतकारितानुमतिभिः स्वव्यापारव्यतिरेकेण परित्यजेत्, स्वयमेव चोद्वर्त्तनपरिवर्त्तनं कायिकायोगा-

श्रा० ७विमो० ६ उ०

दिकं विधत्ते ॥१२॥ सर्वथा प्राणिसंरक्षणं पौनःपुन्येन विधेयमिति दर्शयितुमाह—

हरिएसु न निवज्जिज्जा, थण्डिलं मुणिया सए। विओसिज्ज अणाहारो, पुट्ठो तत्थऽहियासए ॥२९॥ इन्दिएहिं गिलायन्तो, समियं आहरे मुणी। तहावि से अगरिहे, अचले जे समाहिए ॥३०॥ अभिक्कमे पडिक्कमे, सङ्कुचए पसारए। कायसाहारणट्ठाए, इत्थं वावि अचेयणो ॥३१॥ परिक्कमे परिकिलन्ते, अदुवा चिट्ठे अहायए। ठाणे ण परिकिलन्ते, निसीइज्जा य अंतसो ॥३२॥

हरितानि-दूर्वाङ्कुरादीनि तेषु न शयीत, स्थण्डिलं मत्वा शयीत, तथा सबाह्याभ्यन्तरमुपधिं व्युत्सृज्य-त्यक्त्वाऽनाहारः सन् स्पृष्टः परीषहोपसर्गैः 'तत्र' तस्मिन् संस्तारके व्यवस्थितः सन् सर्वमध्यासयेद्-अधिसहेत ॥१३॥ किं च-स ह्यनाहारतया मुनिर्ग्लायमान इन्द्रियैः शमिनो भावः शमिता-समता तां साम्यं वा आत्मन्याहारयेद्-व्यवस्थापयेत्, नार्त्तध्यानोपगतो भूयादिति, यथासमाधानमास्ते, तद्यथा-सङ्कोचननिर्विण्णो हस्तादिकं प्रसारयेत्, तेनापि निर्विण्ण उपविशेत्, यथेङ्गितप्रदेशे सञ्चरेद्वा, तथाप्यसौ स्वकृतचेष्टत्वादगर्ह्य एव, किंभूत इति दर्शयति-अचलो यः समाहितः, यद्यप्यसाविङ्गितप्रदेशे स्वतः शरीरमात्रेण चलति तथाप्यभ्युद्यतमरणान्न चलतीत्यचलः सम्यगाहितं-व्यवस्थापितं धर्मध्याने शुक्लध्याने वा मनो येन स समाहितः, मायाचलितश्चेङ्गितप्रदेशे चङ्क्र-

१५ इंगितमरणं

२०

॥२६५॥ २६

मणादिकमपि कुर्यादिति ॥१४॥ एतद्दर्शयितुमाह-प्रज्ञापकापेक्षयाऽभिमुखं क्रमणमभिक्रमणं, संस्तारकाद्गमनमित्यर्थः, तथा प्रतीपं-पश्चादभिमुखं क्रमणं प्रतिक्रमणमागमनमित्यर्थः, नियतदेशे गमनागमने कुर्यादितियावत्, तथा निष्पन्नो निषण्णो वा यथासमाधानं भुजादिकं सङ्कोचयेत् प्रसारयेद्वा, किमर्थमेतदिति चेद्दर्शयति-कायस्य-शरीरस्य प्रकृतिपेलवस्य साधारणार्थं, कायसाधारणाच्च तत्पीडाकृतायुष्कोपक्रमपरिहारेण स्वायुःस्थितिक्षयान्मरणं यथा स्यात्, न पुनस्तेषां महासत्त्वतया शरीरपीडोत्थापितचित्तस्यान्यथाभावः स्यादिति भावः, ननु च निरुद्धसमस्तकायचेष्टस्य शुष्ककाष्ठवदचेतनतया पतितस्य प्रचुरतरपुण्यप्राग्भारोऽभिहित इति, नायं नियमः, संविशुद्धाध्यवसायतया यथाशक्त्यारोपितभारनिर्वाहिणः तत्तुल्य एव कर्म्मक्षयः, अत्राप्यसौ चाशब्दात्तत्र वा पादपोपगमनेऽचेतनवत्सक्रियोऽपि निष्क्रिय एव, यदिवा 'अत्रापि' इङ्गितमरणेऽचेतनवच्छुष्ककाष्ठवत्सर्वक्रियारहितो यथा पादपोपगमने तथा सति सामर्थ्ये तिष्ठेद् ॥१५॥ एतत्सामर्थ्याभावे चैतत्कुर्यादित्याह—यदि निषण्णस्यानिषण्णस्य वा गात्रभङ्गः स्यात्, ततः परिक्रामेत्-चङ्क्रम्याद् यथानियमिते देशेऽकुटिलया गत्या गतागतानि कुर्यात्, तेनापि श्रान्तः सन् अथवाऽपविष्टस्तिष्ठेत्, 'यथायतो' यथाप्रणिहितगात्र इति, यदा पुनः स्थानेनापि परिक्लममियात् तद्यथा निषण्णो वा पर्यङ्केण वा अर्द्धपर्यङ्केण वोत्कुटुकासनो वा परिताम्यति तदा निषण्णः स्यात्, तत्राप्युत्तानको वा पार्श्वशायी वा दण्डायतो वा लगण्डशायी वा यथासमाधानमवतिष्ठेत् ॥१६॥ किं च-

आसीणेऽणेलिसं मरणं, इन्दियाणि समीरए। कोलावासं समासज्ज, वितहं पाउरे सए ॥३३॥ जओ वज्जं समुप्पज्जे, न तत्थ अवलम्बए। तउ उक्कसे अप्पाणं, फासे तत्थऽहि-

१०

१०

यामए ॥३४॥ अयं चाययतरे सिया, जो एवमणुपालए। सव्वगायनिरोहेऽवि, ठाणाओ नवि उब्भमे ॥३५॥ अयं से उत्तमे धम्मे, पुव्वट्ठाणस्स पग्गहे। अचिरं पडिलेहित्ता, विहरे चिट्ठ माहणे ॥३६॥

'आसीनः' आश्रितः, किं तत्?–मरणम्, किंभूतम्? 'अनीदृशम्' अनन्यसदृशमितरजनदुरध्यवसेयम्, तथाभूतश्च किं कुर्यादिति दर्शयति–इन्द्रियाणीष्टानिष्टस्वविषयेभ्यः सकाशाद्रागद्वेषाकरणतया सम्यगीरयेत् प्रेरयेदिति, कोला–घुणकीटकास्तेषामावासः कोलावासस्तमन्तर्घुणक्षतमुद्देहिकानिचितं वा 'समासाद्य'लब्ध्वा तस्माद्यद्वितथम्–आगन्तुकतदुत्थजन्तुरहितमवष्टम्भनाय प्रादुरेषयेत्–प्रकटं प्रत्युपेक्षणयोग्यमशुषिरमन्वेषयेत् ॥१७॥ इङ्गितमरणे चोदनामभिधाय यन्निषेध्यं तद्दर्शयितुमाह–यतो–यस्मादनुष्ठानादवष्टम्भनादेर्वज्रवद्वज्रं–गुरुत्वात्कर्म्म अवद्यं वा–पापं वा तत्समुत्पद्येत–प्रादुःष्यात्, न तत्र घुणक्षतकाष्ठादाववलम्बेत–नावष्टम्भनादिकां क्रिया कुर्यात्, तथा 'ततः' तस्मादुत्क्षेपणापक्षेपणादेः काययोगाद्दुष्प्रणिहितवाग्योगात्तर्ध्यानादिमनोयोगाच्चावद्यसमुत्पत्तिहेतोरात्मानमुत्कर्षेद्–उत्क्रामयेत्, पापोपादानादात्मानं निवर्त्तयेदितियावत्, तत्र च धृतिसंहननाद्युपेतोऽप्रतिकर्म्मशरीरः प्रवर्धमानशुभाध्यवसायकण्डकोऽपूर्वापूर्वपरिणामारोही सर्वज्ञप्रणीतागमानुसारेण पदार्थस्वरूपनिरूपणाहितमतिः अन्यदिदं शरीरं त्याज्यमित्येवंकृताध्यवसायः सर्वान् स्पर्शान्–दुःखविशेषाननुकूलप्रतिकूलोपसर्गपरीषहापादितान् तथा वातपित्तश्लेष्मद्वन्द्वेतरप्रोद्भूतान् कर्म्मक्षयायोद्यतो मयैवैतदवद्यं कृतं सोढव्यं चेत्येतदध्यवसायी अध्यासयेद्–अधिसहेत, यतो यन्मया त्यक्तं शरीरकमेतदेवोपद्रवन्ति न पुन-

इंगितमरणं १५

२०

श्री. आ. २९३

॥२६६॥ २६

र्जिघृक्षितं धर्म्माचरणमित्याकलय्य सर्वपीडासहिष्णुर्भवेदिति ॥१८॥ गत इङ्गितमरणाधिकारः, साम्प्रतं पादपोपगमनमाश्रित्याह-अनन्तरमभिधास्यमानस्वायोऽयं प्रत्यक्षो मरणविधिः, स चाऽऽयततरो, न केवलं भक्तपरिज्ञाया इङ्गितमरणविधिरायततरः, अयं च तस्मादायततर इति चशब्दार्थः, आयततर इत्याङभिविधौ यमस्त्वेन यत आयतः अयमनयोरतिशयेनायत आयततरः, यदिवा-ऽयमनयोरतिशयेनात्तो-गृहीत आत्ततरः, यत्नेनाध्यवसित इत्यर्थः, तदेवमयं पादपोपगमनमरणविधिरात्ततरो-दृढतरः स्याद्-भवेत्, अत्रापि यदिङ्गितमरणे प्रव्रज्यासंलेखनादिकमुक्तं तत्सर्वं द्रष्टव्यमिति, यद्यसावायततरः ततः किमिति दर्शयति-यो भिक्षुः 'एवम्' उक्तविधिनैव पादपोपगमनविधिमनुपालयेत् 'सर्वगात्रनिरोधेऽपि' उत्तप्यमानकायोऽपि मूर्च्छन्नपि मरणसमुद्घातगतो वा भक्ष्यमाणमांसशोणितोऽपि क्रोष्टुगृद्ध्रपिपीलिकादिभिर्महासत्त्वतयाऽऽशंसितमहाफलविशेषः संस्तस्मात्स्थानात्-प्रदेशात् द्रव्यतो भावतो-ऽपि शुभाध्यवसायस्थानान्न व्युत्क्रमेत्-न स्थानान्तरं यायात् ॥१९॥ किं च—'अय' मित्यन्तःकरणनिष्पन्नत्वात्प्रत्यक्षः 'उत्तमः' प्रधानो मरणविधिः सर्वोत्तरत्वाद्धर्म्मो-विशेषः पादपोपगमनरूपो मरणविशेष इति, उत्तमत्वे कारणं दर्शयति-'पूर्वस्थानस्स प्रग्रह' इति पञ्चम्यर्थे षष्ठी पूर्वस्थानाद्भक्तपरिज्ञेङ्गितमरणरूपात्प्रकर्षेण ग्रहोऽत्र पादपोपगमने, प्रगृहीततरमेतदित्यर्थः, तथाहि-अत्र यदिङ्गितमरणानुमतं कायपरिस्पन्दनं तदपि निषेध्यते, अच्छिन्नमूलपादपवन्निश्चेष्टो निष्क्रियो दह्यमानश्छिद्यमानो वा विषमपतितो वा तथैवास्ते न तस्मात्स्थानाच्चलति, चिलातपुत्रवत्, एतदेव दर्शयति—अचिरं स्थानं, तत्र स्थण्डिलं तत्पूर्वविधिना प्रत्युपेक्ष्य तस्मिन् प्रत्युपेक्षिते स्थण्डिले विहरेदिति, अत्र पादपोपगमनाधिकाराद्विहरणं तद्विधिपालनमुक्तं, तत्र स्थानात्स्थानान्तरसंक्रमणम्, एतदेव च दर्शयति-तिष्ठन् सर्वगात्रनिरोधेऽपि, स्थानान्तरासङ्क्रमणं कुर्यादित्यर्थः, कोऽसौ?-'माहणे'त्ति साधुः, स हि निषण्णोऽनिषण्णो ऊर्ध्व-

५

१०

ग्गितो वा निष्प्रतिकर्म्मा यद्यथानिक्षिप्तमङ्गमचेतन इव न चालयेदितियावत् ॥२०॥ एतदेव प्रकारान्तरेण दर्शयितुमाह—

अचित्तं तु समासज्ज, ठावए तत्थ अप्पगं । वोसिरे सव्वसो कायं, न मे देहे परीसहा- ॥३७॥ जावज्जीवं परीसहा, उवसग्गा इति सङ्खया । संवुडे देहभेयाए, इय पन्नेऽहियासए ॥३८॥ भेउरेसु न रज्जिज्जा, कामेसु बहुतरेसुवि । इच्छा लोभं न सेविज्जा, धुववन्नं सपेहिया ॥३९॥ सासएहिं निमन्तिज्जा, दिव्वमायं न सद्दहे । तं पडिबुज्झ माहणे, सव्वं नूमं विहूणिया ॥४०॥

१५ पादपोगमनं

इत्येतत् 'सङ्ख्याय' ज्ञात्वा तानध्यासयेदिति, यदिवा न मे यावज्जीवं परीषहोपसर्गा इत्येतत्सङ्ख्याय-ज्ञात्वाऽधिसहेत, यदिवा यावज्जीवमिति-यावदेव जीवितं तावत्परीषहोपसर्गजनिता पीडेति, तत्पुनः कतिपयनिमेषाऽवस्थायि एतदवस्थस्य समात्यन्तमल्पमेवेत्यत एतत्सङ्ख्याय-ज्ञात्वा संवृतो यथानिक्षिप्तत्यक्तगात्रो 'देहभेदाय' शरीरत्यागायोत्थित इतिकृत्वा 'प्राज्ञः'- उचितविधानवेदी, यद्यत्कायपीडाकार्युपतिष्ठते तत्तत्सम्यगधिसहेत ॥२२॥ एवंभूतं च साधुमुपलभ्य कश्चिद्राजादिर्भोगैरुपनिमन्त्रयेत्, तत्प्रतिविधानार्थमाह-भेदनशीला भिदुराः-शब्दादयः कामगुणास्तेषु प्रभूततरेष्वपि 'न रज्येत्' न रागं यायात्, पाठान्तरं वा 'कामेसु बहुलेसुवि' इच्छामदनरूपेषु कामेषु बहुलेषु—अनल्पेष्वपीत्यर्थः, यद्यपि राजा राज्यकन्यादानादिनोपप्रलोभयेत् तथापि तत्र न गार्ध्यमियात्, तथा इच्छारूपो लोभ इच्छालोभः—चक्रवर्तीन्द्रत्वाद्यभिलाषादिको निदानविशेषस्तमसौ निर्जरापेक्षी न सेवेत, सुरर्द्धिदर्शनमोहितो ब्रह्मदत्तवन्निदानं न कुर्यादित्यर्थः, तथा चागमः—'इहलोगासंसप्पओगे १ परलोगासंसप्पओगे २ जीवियासंसप्पयोगे ३ मरणासंसप्पयोगे ४ कामभोगासंसप्पयोगे ५' इत्यादि.'वर्णः' संयमो मोक्षो वा स च सूक्ष्मो दुर्ज्ञेयत्वात्, पाठान्तरं वा—'धुववन्नमि'त्यादि, ध्रुवः-अव्यभिचारी स चासौ वर्णश्च ध्रुववर्णस्तं संप्रेक्ष्य ध्रुवां वा शाश्वतीं यशःकीर्तिं पर्यालोच्य कामेच्छालोभविक्षेपं कुर्यादिति ॥२३॥ किं च-शाश्वता-यावज्जीवमपरिक्षयात्प्रतिदिनदानाद्वाऽर्थास्तैस्तथाभूतैर्विभवैः कश्चिन्निमन्त्रयेत् तत्प्रतिबुध्यस्व, यथा शरीरार्थं धनं मृग्यते तदेव शरीरमशाश्वतमिति, तथा दिव्यां मायां न श्रद्दधीत, तद्यथा—यदि कश्चिद्देवो मीमांसया प्रत्यनीकतया वा भक्त्या वाऽन्यथा वा कौतुकादिना नानार्घिदानतो निमन्त्रयेत्, तां च तत्कृतां मायां न श्रद्दधीत, तथा बुध्यस्व यथा देवमायैषा, अन्यथा कुतोऽयमाकस्मिकः पुरुषो दुर्लभमेतद्द्रव्यं प्रभूततरमेवंभूते क्षेत्रे काले भावे च दद्यात् ?, एवं द्रव्यादिनि-



५

१०

स्थितो वा निष्प्रतिकर्म्मा यद्यथानिक्षिप्तमङ्गमचेतन इव न चालयेदितियावत् ॥२०॥ एतदेव प्रकारान्तरेण दर्शयितुमाह—

अचित्तं तु समासज्ज, ठावए तत्थ अप्पगं। वोसिरे सव्वसो कायं, न मे देहे परीसहा- ॥३७॥ जावज्जीवं परीसहा, उवसग्गा इति सङ्ख्या। संवुडे देहभेयाए, इय पन्नेऽहियासए ॥३८॥ भेउरेसु न रज्जिज्जा, कामेसु बहुतरेसुवि। इच्छा लोभं न सेविज्जा, धुववन्नं सपेहिया ॥३९॥ सासएहिं निमन्तिज्जा, दिव्वमायं न सद्दहे। तं पडिबुज्झ माहणे, सव्वं नूमं विहूणिया ॥४०॥

२०

न विद्यते चित्तमस्मिन्नित्यचित्तम्—अचेतनं जीवरहितमित्यर्थः, तच्च स्थण्डिलं फलकादि वा 'समासाद्य' लब्ध्वा फलकेऽपि समर्थः कश्चित्काष्ठे वाऽवष्टभ्य तत्रात्मानं स्थापयेत्, व्यवस्थाप्य च त्यक्तचतुर्विधाहारो मेरुरिव निष्प्रकम्पः कृतालोचनादिपरिकर्म्मा गुरुभिरनुज्ञातो व्युत्सृजेत्, 'सर्वशः' सर्वात्मना 'कायं'देहं, व्युत्सृष्टदेहस्य च यदि केचन परीषहोपसर्गाः स्युस्ततो भावयेत्—'न मे देहे परीषहाः' मत्सम्बन्धी देह एव न भवति, परित्यक्तत्वात्, तदभावे कुतः परीषहाः?, यदिवा न मम देहे परीषहाः, सम्यक्करणेन सहमानस्य तत्कृतपीडयोद्वेगाभावात्, अतः परीषहान् कर्म्मशत्रुजयसहायानिति कृत्वाऽपरीषहानेव मन्यते ॥२१॥ ते पुनः कियन्तं कालं सोढव्या इत्याशङ्काव्युदासार्थमाह—'यावज्जीवं' यावत्प्राणधारणं तावत्परीषहा उपसर्गाश्च सोढव्या

इत्येतत् 'सङ्ख्याय' ज्ञात्वा तानध्यासयेदिति, यदिवा न मे यावज्जीवं परीषहोपसर्गा इत्येतत्सङ्ख्याय-ज्ञात्वाऽधिमहेत, यदिवा यावज्जीवमिति-यावदेव जीवितं तावत्परीषहोपसर्गजनिता पीडेति, तत्पुनः कतिपयनिमेषाऽवस्थायि एतदवस्थस्य ममात्यन्तमल्पमेवेत्यत एतत्सङ्ख्याय-ज्ञात्वा संवृतो यथानिक्षिप्तत्यक्तगात्रो 'देहभेदाय' शरीरत्यागायोत्थित इतिकृत्वा 'प्राज्ञः' उचितविधानवेदी, यद्यत्कायपीडाकार्युपतिष्ठते तत्तत्सम्यगधिमहेत ॥२२॥ एवंभूतं च साधुमुपलभ्य कश्चिद्राजादिर्भोगैरुपनिमन्त्रयेत्, तत्प्रतिविधानार्थमाह-भेदनशीला भिदुराः-शब्दादयः कामगुणास्तेषु प्रभूततरेष्वपि 'न रज्येत्' न रागं यायात्, पाठान्तरं वा 'कामेसु बहुलेसुवि' इच्छामदनरूपेषु कामेषु बहुलेषु—अनल्पेष्वपीत्यर्थः, यद्यपि राजा राज्यकन्यादानादिनोपप्रलोभयेत् तथापि तत्र न गार्ध्यमियात्, तथा इच्छारूपो लोभ इच्छालोभः-चक्रवर्तीन्द्रत्वाद्यभिलाषादिको निदानविशेषस्तमसौ निर्जरापेक्षी न सेवेत, सुरर्द्धिदर्शनमोहितो ब्रह्मदत्तवन्निदानं न कुर्यादित्यर्थः, तथा चागमः-'इहलोगासंसप्पओगे १ परलोगासंसप्पओगे २ जीवियासंसप्पयोगे ३ मरणासंसप्पयोगे ४ कामभोगासंसप्पयोगे ५' इत्यादि. 'वर्णः' संयमो मोक्षो वा स च सूक्ष्मो दुर्ज्ञेयत्वात्, पाठान्तरं वा-'धुववन्नमि'त्यादि, ध्रुवः-अव्यभिचारी स चासौ वर्णश्च ध्रुववर्णस्तं संप्रेक्ष्य ध्रुवां वा शाश्वतीं यशःकीर्तिं पर्यालोच्य कामेच्छालोभविक्षेपं कुर्यादिति ॥२३॥ किं च-शाश्वता-यावज्जीवमपरिक्षयात्प्रतिदिनदानाद्वाऽर्थास्तैस्तथाभूतैर्विभवैः कश्चिन्निमन्त्रयेत् तत्प्रतिबुध्यस्व, यथा शरीरार्थं धनं मृग्यते तदेव शरीरमशाश्वतमिति, तथा दिव्यां मायां न श्रद्दधीत, तद्यथा-यदि कश्चिद्देवो मीमांसया प्रत्यनीकतया वा भक्त्या वाऽन्यथा वा कौतुकादिना नानार्थदानतो निमन्त्रयेत्, तां च तत्कृतां मायां न श्रद्दधीत, तथा बुध्यस्व यथा देवमायैषा, अन्यथा कुतोऽयमाकस्मिकः पुरुषो दुर्लभमेतद्द्रव्यं प्रभूततरमेवंभूते क्षेत्रे काले भावे च दद्यात् ?, एवं द्रव्यादिनि-



५

१०

स्थितो वा निष्प्रतिकर्म्मा यद्यथानिक्षिप्तमङ्गमचेतन इव न चालयेदितियावत् ॥२०॥ एतदेव प्रकारान्तरेण दर्शयितुमाह—

अचित्तं तु समासज्ज, ठावए तत्थ अप्पगं। वोसिरे सव्वसो कायं, न मे देहे परीसहा- ॥३७॥ जावज्जीवं परीसहा, उवसग्गा इति सङ्ख्या। संवुडे देहभेयाए, इय पन्नेऽहिया- सए ॥३८॥ भेउरेसु न रज्जिज्जा, कामेसु बहुतरेसुवि। इच्छा लोभं न सेविज्जा, धुववन्नं सपेहिया ॥३९॥ सासएहिं निमन्तिज्जा, दिव्वमायं न सद्दहे। तं पडिबुज्झ माहणे, सव्वं नूमं विहूणिया ॥४०॥

२०

न विद्यते चित्तमस्मिन्नित्यचित्तम्—अचेतनं जीवरहितमित्यर्थः, तच्च स्थण्डिलं फलकादि वा 'समासाद्य' लब्ध्वा फलकेऽपि समर्थः कश्चित्काष्ठे वाऽवष्टभ्य तत्रात्मानं स्थापयेत्, व्यवस्थाप्य च त्यक्तचतुर्विधाहारो मेरुरिव निष्प्रकम्पः कृतालोचनादिपरिकर्म्मा गुरुभिरनुज्ञातो व्युत्सृजेत्, 'सर्वशः' सर्वात्मना 'कायं' देहं, व्युत्सृष्टदेहस्य च यदि केचन परीषहोपसर्गाः स्युस्ततो भावयेत्—'न मे देहे परीषहाः' मत्सम्बन्धी देह एव न भवति, परित्यक्तत्वात्, तदभावे कुतः परीषहाः ?, यदिवा न मम देहे परीषहाः, सम्यक्करणेन सहमानस्य तत्कृतपीडयोद्वेगाभावात्, अतः परीषहान् कर्म्मशत्रुजयसहायानितिकृत्वाऽपरीषहानेव मन्यते ॥२१॥ ते पुनः कियन्तं कालं सोढव्या इत्याशङ्काव्युदासार्थमाह—'यावज्जीवं' यावत्प्राणधारणं तावत्परीषहा उपसर्गाश्च सोढव्या

इत्येतत् 'सङ्ख्याय' ज्ञात्वा तानध्यासयेदिति, यदिवा न मे यावज्जीवं परीषहोपसर्गा इत्येतत्सङ्ख्याय-ज्ञात्वाऽधिसहेत, यदिवा यावज्जीवमिति-यावदेव जीवितं तावत्परीषहोपसर्गजनिता पीडेति, तत्पुनः कतिपयनिमेषाऽवस्थायि एतदवस्थस्य ममात्यन्तमल्प-मेवेत्यत एतत्सङ्ख्याय-ज्ञात्वा संवृतो यथानिक्षिप्तत्यक्तगात्रो 'देहभेदाय' शरीरत्यागायोत्थित इतिकृत्वा 'प्राज्ञः' उचितविधा-नवेदी, यद्यत्कायपीडाकार्युपतिष्ठते तत्तत्सम्यगधिसहेत ॥२२॥ एवंभूतं च साधुमुपलभ्य कश्चिद्राजादिर्भोगैरुपनिमन्त्रयेत्, तत्प्रति-विधानार्थमाह-भेदनशीला भिदुराः-शब्दादयः कामगुणास्तेषु प्रभूततरेष्वपि 'न रज्येत' न रागं यायात्, पाठान्तरं वा 'कामेसु बहुलेसुवि' इच्छामदनरूपेषु कामेषु बहुलेषु—अनल्पेष्वपीत्यर्थः, यद्यपि राजा राज्यकन्यादानादिनोपप्रलोभयेत् तथापि तत्र न गार्ध्यमियात्, तथा इच्छारूपो लोभ इच्छालोभः-चक्रवर्तीन्द्रत्वाद्यभिलाषादिको निदानविशेषस्तमसौ निर्जरापेक्षी न सेवेत, सुर-र्द्धिदर्शनमोहितो ब्रह्मदत्तवन्निदानं न कुर्यादित्यर्थः, तथा चागमः-'इहलोगासंसप्पओगे १ परलोगासंसप्पओगे २ जीवियासंसप्प-योगे ३ मरणासंसप्पयोगे ४ कामभोगासंसप्पयोगे ५' इत्यादि. 'वर्णः' संयमो मोक्षो वा स च सूक्ष्मो दुर्ज्ञेयत्वात्, पाठान्तरं वा-'धुवरन्नमि'त्यादि, ध्रुवः-अव्यभिचारी स चासौ वर्णश्च ध्रुववर्णस्तं संप्रेक्ष्य ध्रुवां वा शाश्वतीं यशःकीर्तिं पर्यालोच्य कामेच्छालो-भविक्षेपं कुर्यादिति ॥२३॥ किं च-शाश्वता-यावज्जीवमपरिक्षयात्प्रतिदिनदानाद्वाऽर्थास्तैस्तथाभूतैर्विभवैः कश्चिन्निमन्त्रयेत् तत्प्रति-बुध्यस्व, यथा शरीरार्थं धनं मृग्यते तदेव शरीरमशाश्वतमिति, तथा दिव्यां मायां न श्रद्दधीत, तद्यथा-यदि कश्चिद्देवो मीमांसया प्रत्यनीकतया वा भक्त्या वाऽन्यथा वा कौतुकादिना नानर्घदानतो निमन्त्रयेत्, तां च तत्कृतां मायां न श्रद्दधीत, तथा बुध्यस्व यथा देवमायैषा, अन्यथा कुतोऽयमाकस्मिकः पुरुषो दुर्लभमेतद्द्रव्यं प्रभूततरमेवंभूते क्षेत्रे काले भावे च दद्यात् ?, एवं द्रव्यादिनि-

५

१०

रूपणया देवमायां बुध्यस्व इति, तथा देवाङ्गना वा यदि दिव्यं रूपं विधाय प्रार्थयेत् तामपि बुध्यस्वेति, 'माहणे'त्ति साधुः 'सर्वम्' अशेषं 'नूम'ति कर्म्म मायां वा तत् तां वा 'विधूय' अपनीय देवादिमायां बुध्यस्वेति क्रिया ॥२४॥ किं च—

**सव्वद्वेहिं अमुच्छिए, आउकालस्स पारए। तितिक्खं परमं नच्चा, विमोहन्नयरं हियं ॥४१॥-**

**तिबेमि ॥ विमोक्षाध्ययनमष्टमं समाप्तम्। उद्देशः ८॥ ८-८॥**

सर्वैं च तेऽर्थाश्च सर्वार्थाः-पञ्चप्रकाराः कामगुणास्तत्सम्पादका वा द्रव्यनिचयास्तैस्तेषु वा अमूर्च्छितः-अनध्युपपन्नः आयुःकालस्य यावन्मात्रं कालमायुः संतिष्ठते असौ आयुःकालस्तस्य पारम्-आयुष्कपुद्गलानां क्षयो मरणं तद्गच्छतीति पारगः, यथोक्तविधिना पादपोपगमनव्यवस्थितः प्रवर्द्धमानशुभाध्यवसायः स्वायुःकालान्तगः स्यादिति। तदेवं पादपोपगमनविधिं परिसमाप्योपसंहारद्वारेण त्रयाणामपि मरणानां कालक्षेत्रपुरुषावस्थाश्रयणात्तुल्यकक्षतां पश्चार्द्धेन दर्शयति-तितिक्षा-परीषहोपसर्गापादितदुःखविशेषसहनं तत्त्रयाणामपि परमं-प्रधानमस्तीति 'ज्ञात्वा' अवधार्य 'विमोहान्यतरं हित'मिति विगतो मोहो येषु तानि विमोहानि-भक्तपरिज्ञेङ्गितमरणपादपोपगमनानि तेषामन्यतरत्कालक्षेत्रादिकमाश्रित्य तुल्यफलत्वाद्धितं अभिप्रेतार्थसाधनादतो यथाशक्ति त्रयाणामन्यतरत्तुल्यबलत्वाद्यथावसरं विधेयं, इति अधिकारपरिसमाप्तौ ब्रवीमीति पूर्ववत्, नयविचारादिकमनुगतं वक्ष्यमाणं च द्रष्टव्यमिति विमोक्षाध्ययनस्याष्टमोद्देशकः समाप्तः ॥ समाप्तं च विमोक्षाध्ययनमष्टममिति ॥ ग्रन्थाग्रम् ॥१०२०॥

१० ७विमो० ८उ०

श्रु० आ० २९६

१५ तुल्यता

२०

२६

# अथोपधानश्रुताख्यं नवममध्ययनम

उक्तमध्ययनमष्टमं, साम्प्रतं नवममारभ्यते, अस्य चायमभिसम्बन्धः–इहानन्तराध्ययनेऽष्टसु योऽर्थोऽभिहितः स तीर्थकृता वीरवर्द्धमानस्वामिना स्वत एवाचीर्ण इत्येतन्नवमेऽध्ययने प्रतिपाद्यते, अनन्तराध्ययनसम्बन्धस्त्वयम्–इहाभ्युद्यतमरणं त्रिप्रकारमभिहितं,तत्रान्यतरस्मिन्नपि व्यवस्थितोऽष्टाध्ययनार्थविधायिनमतिघोरपरीषहोपसर्गसहिष्णुमाविष्कृतसन्मार्गावतारं तथा घातितघातिचतुष्टयाविर्भूतानन्तातिशयाप्रमेयमहाविषयस्वपरावभासककेवलज्ञानं भगवन्तं श्रीवर्द्धमानस्वामिनं समवसरणस्थं सत्त्वहिताय धर्म्मदेशनां कुर्वाणं ध्यायेदित्येतत्प्रतिपादनार्थमिदमध्ययनमुच्यते, इत्यनेन सम्बन्धेनायातस्यास्याध्ययनस्य चत्वार्यनुयोगद्वाराणि भवन्ति, तत्रोपक्रमेऽर्थाधिकारो द्वेधा–अध्ययनार्थाधिकार उद्देशार्थाधिकारश्च, तत्राध्ययनार्थाधिकारो लेशतोऽभिहितस्तमेव निर्युक्तिकारः स्पष्टतरं विभणिषुराह—

जो जइया तित्थयरो सो तइया अप्पणो य तित्थम्मि । वण्णेइ तवोकम्मं, ओहाणसुयंमि अज्झयणे ॥२७५॥

यो यदा तीर्थकृदुत्पद्यते स तदाऽऽत्मीये तीर्थे आचारार्थप्रणयनावमानाध्ययने स्वतपःकर्म व्यावर्णयतीत्ययं सर्वतीर्थकृतां कल्पः, इह पुनरुपधानश्रुताख्यं चरममध्ययनमभूत् अत उपधानश्रुतमित्युक्तमिति ॥ किमेकाकारं केवलज्ञानवत्सर्वतीर्थकृतां तपःकर्म्मोतान्यथेत्यारेकाव्युदासार्थमाह—

सव्वेसिं तवोकम्मं निरुवसग्गं तु वण्णियं जिणाणं । नवरं तु वद्धमाणस्स सोवसग्गं मुणेयव्वं ॥ २७६ ॥

तित्थयरो चउनाणी सुरमहिओ सिज्झियव्वय धुवम्मि। अणिगूहियबलविरिओ तवोवहाणंमि उज्जमइ ॥२७७॥
किं पुण अवसेसेहिं दुक्खक्खयकारणा सुविहिएहिं। होइ न उज्जमियव्वं सपच्चवायंमि माणुस्से ? ॥२७८॥

गाथात्रयमप्युत्तानार्थम् ॥ अध्ययनार्थाधिकारं प्रतिपाद्योद्देशार्थाधिकारं प्रतिपादयन्नाह—

चरिया १ सिज्जा य २ परीसहा य ३ आयंकिया (ए) चिगिच्छा ४ य। तवचरणेणऽहिगारो चउसुद्देसेसु नायव्वो॥२७९॥

चरणं चर्यत इति वा चर्या—श्रीवीरवर्द्धमानस्वामिनो विहारः, अयं प्रथमोद्देशकेऽर्थाधिकारः १, द्वितीयोद्देशके त्वयमर्थाधिकारः, तद्यथा—शय्या—वसतिः, सा च यादृग्भगवत आसीत् तादृग्वक्ष्यते २, तृतीये त्वयमर्थाधिकारः—मार्गाच्यवननिर्जरार्थं परिषोढव्याः परीषहाः, उपलक्षणार्थत्वादुपसर्गाश्चानुकूलप्रतिकूला वर्द्धमानस्वामिनो येऽभूवन् तेऽत्र प्रतिपाद्यन्ते ३, चतुर्थे त्वयमर्थाधिकारः, तद्यथा—'आतङ्किते' क्षुत्पीडायामातङ्कोत्पत्तौ विशिष्टाभिग्रहावाप्ताहारेण चिकित्सेदिति ४, तपश्चरणाधिकारस्तु चतुर्ष्वप्युद्देशकेष्वनुयायीति गाथार्थः॥ निक्षेपस्त्रिधा—ओघनिष्पन्नः नामनिष्पन्नः सूत्रालापकनिष्पन्नश्च, तत्रौघनिष्पन्ने निक्षेपेऽध्ययनं, नामनिष्पन्ने तूपधानश्रुतमिति द्विपदं नाम। तत्रोपधानस्य श्रुतस्य च यथाक्रमं निक्षेपः कर्तव्य इति न्यायादुपधाननिक्षेपचिकीर्षयाऽऽह—

नामंठवणुवहाणं दव्वे भावे य होइ नायव्वं। एमेव य सुत्तस्सवि निक्खेवो चउव्विहो होइ ॥२८०॥

नामोपधानं स्थापनोपधानं द्रव्योपधानं भावोपधानं च, श्रुतस्याप्येवमेव चतुर्द्धा निक्षेपः, तत्र द्रव्यश्रुतमनुपयुक्तस्य यत् श्रुतं द्रव्यार्थं वा यत् श्रुतं कुप्रावचनिकश्रुतानि चेति द्रव्यश्रुतम्, भावश्रुतं त्वङ्गानङ्गप्रविष्टश्रुतविषयोपयोगः॥ तत्र सुगमनामस्थापनाव्युदासेन द्रव्याद्युपधानप्रतिपादनायाह—



१५

२०



२६

दव्वुवहाणं सयणे भावुवहाणं तवो चरित्तस्स । तम्हा उ नाणदंसणतवचरणेहिं इहाहिगयं ॥२८१॥

उप-सामीप्येन धीयते-व्यवस्थाप्यत इत्युपधानं द्रव्यभूतमुपधानं द्रव्योपधानं, तत्पुनः शय्यादौ सुखशयनार्थं शिरोऽवष्टम्भनवस्तु, 'भावोपधान'मिति भावस्योपधानं भावोपधानं, तत्पुनर्ज्ञानदर्शनचारित्राणि तपो वा सबाह्याभ्यन्तरं, तेन हि चारित्रपरिणतभावस्योपष्टम्भनं क्रियते, यत एवं तस्मात् ज्ञानदर्शनतपश्चरणैरिहाधिकृतमिति गाथार्थः ॥ किं पुनः कारणं चारित्रोपष्टम्भकतया तपो भावोपधानमुच्यते इत्याह—



जह खलु मइलं वत्थं सुज्झइ उदगाइएहिं दव्वेहिं । एवं भावुवहाणेण सुज्झए कम्ममट्ठविहं ॥२८२॥

'यथे'त्युदाहरणोपन्यासार्थः, यथैतत्तथाऽन्यदपि द्रष्टव्यमित्यर्थः, खलुशब्दो वाक्यालङ्कारे, यथा मलिनं वस्त्रमुदकादिभिर्द्रव्यैः शुद्धिमुपयाति एवं जीवस्यापि भावोपधानभूतेन सबाह्याभ्यन्तरेण तपसा अष्टप्रकारं कर्म्म शुद्धिमुपयातीति ॥ अस्य च कर्म्मक्षयहेतोस्तपस उपधानश्रुतत्वेनात्रोपात्तस्य 'तत्त्वभेदपर्यायैर्व्याख्ये'तिकृत्वा पर्यायदर्शनायाह, यदि वा तपोऽनुष्ठानेनापादिता अवधूननादयः कर्म्मापगमविशेषाः सम्भवन्तीत्यतस्तान् दर्शयितुमाह—



ओधूणण धुणण नासण विणासणं झवण खवण सोहिकरं । छेयण भेयण फेडण डहणं धुवणं च कम्माणं ॥ २८३ ॥

तत्रावधूननम्-अपूर्वकरणेन कर्म्मग्रन्थेर्भेदापादनं, तच्च तपोऽन्यतरभेदसामर्थ्याद्भवतीति, एषा क्रिया शेषेष्वप्येकादशसु पदेष्वायोज्या, तथा 'धूननं' भिन्नग्रन्थेरनिवर्त्तिकरणेन सम्यक्त्वावस्थानं, तथा 'नाशनं' कर्म्मप्रकृतेः स्तिबुकसङ्क्रमेण प्रकृत्यन्तरगमनं, तथा 'विनाशनं' शैलेश्यवस्थायां सामस्त्येन कर्म्माभावापादनं, तथा ध्यापनम्-उपशमश्रेण्या कर्म्मानुदयलक्षणं विध्यापनं, तथा

'क्षपणम्' अप्रत्याख्यानादिप्रक्रमेण क्षपकश्रेण्यां मोहाद्यभावापादनं, तथा 'शुद्धिकर'मित्यनन्तानुबन्धिक्षयप्रक्रमेण क्षायिकसम्य-क्त्वापादनं, तथा 'छेदनम्' उत्तरोत्तरशुभाध्यवसायारोहणात्स्थितिह्रासजननं, तथा 'भेदनं' बादरसम्परायावस्थायां सञ्ज्वलनलो-भस्य खण्डशो विधानं, तथा 'फेडण'न्ति अपनयनं चतुःस्थानिकादीनामशुभप्रकृतीनां रसतस्त्र्यादिस्थानापादनं, तथा 'दहनं' केवलिसमुद्घातध्यानाग्निना वेदनीयस्य भस्मसात्करणं शेषस्य च दग्धरज्जुतुल्यत्वापादनं, तथा 'धावनं' शुभाध्यवसायान्मिथ्या-त्वपुद्गलानां सम्यक्त्वभावसंजननमिति, एताश्च कर्म्मणोऽवस्थाः प्रायश उपशमश्रेणिक्षपकश्रेणिकेवलिसमुद्घातशैलेश्यवस्थाप्रकटनेन प्रभूता आविर्भाविता भवन्तीत्यतस्तत्प्रकटनाय प्रक्रम्यते, तत्रोपशमश्रेण्यामादावेवानन्तानुबन्धिनामुपशमना तावत्कथ्यते, इहा-संयतसम्यग्दृष्टिदेशविरतप्रमत्ताप्रमत्तानामन्यतरोऽन्यतरयोगे वर्त्तमान आरम्भको भवति, तत्रापि दर्शनसप्तकमेकेनोपशमयति, तद्यथा —अनन्तानुबन्धिनश्चतुरः, उपरितनलेश्यात्रिके च विशुद्धे साकारोपयोग्यन्तःकोटीकोटीस्थितिसत्कर्म्मा परिवर्त्तमानाः शुभप्रकृतीरेव बध्नन् प्रतिसमयमशुभप्रकृतीनामनुभागमनन्तगुणहान्या ह्रासयन् शुभानां चानन्तगुणवृद्ध्याऽनुभागं व्यवस्थापयन् पल्योपमास-ङ्ख्येयभागहीनमुत्तरोत्तरं स्थितिबन्धं कुर्वन् करणकालादपि पूर्वमन्तर्मुहूर्त्तं विशुध्यमानः करणत्रयं विधत्ते, तच्च प्रत्येकमान्तर्मौहूर्त्तिकं, तद्यथा—यथाप्रवृत्तकरणमपूर्वकरणमनिवृत्तिकरणं चेति, चतुर्थ्युपशान्ताद्धा, तत्र यथाप्रवृत्तकरणे प्रतिसमयमनन्तगुणवृद्ध्या विशु-द्धिमनुभवति, न तत्र स्थितिघातरसघातगुणश्रेणीगुणसङ्क्रमाणामन्यतमोऽपि विद्यते, तथा द्वितीयमपूर्वकरणं, किमुक्तं भवति ?— अपूर्वामपूर्वां क्रियां गच्छतीत्यपूर्वकरणं, तत्र च प्रथमसमय एव स्थितिघातरसघातगुणश्रेणिगुणसङ्क्रमा अन्यश्च स्थितिबन्ध इत्येते पञ्चाप्यधिकारा यौगपद्येन पूर्वमप्रवृत्ताः प्रवर्त्तन्त इत्यपूर्वकरणं, तथाऽनिवृत्तिकरणमित्यन्योऽन्यं नातिवर्त्तन्ते परिणामा अस्मिन्नि-

१५
श्रेण्यारंभः
२०



२८

त्यनिवृत्तिकरणं, एतदुक्तं भवति-प्रथमसमयप्रतिपन्नानां तत्करणमनुमतां सर्वेषां तुल्यः परिणामः, एवं द्वितीयादिष्वप्यायोज्यं, अत्रापि पूर्वोक्ता एव स्थितिघातादयः पञ्चाप्यधिकारा युगपत्प्रवर्त्तन्त इति, तत एभिस्त्रिभिरपि करणैर्यथोक्तक्रमेणानन्तानुबन्धिनः कषायानुपशमयति,उपशमनं नाम यथा धूलिरुदकेन सिक्ता द्रुघणादिभिर्हता न वाय्वादिभिः प्रसर्पणादिविकारभाग्भवति, एवं कर्म्मधूल्यपि विशुद्ध्यदकार्द्रीकृता अनिवृत्तिकरणक्रियाहता सत्युदयोदीरणसङ्क्रमनिधत्तनिकाचनाकरणानामयोग्या भवति, तत्रापि प्रथमसमयोपशान्तं कर्म्मदलिकं स्तोकं द्वितीयादिषु समयेष्वसङ्ख्येयगुणवृद्ध्योपशम्यमानमन्तर्मुहूर्त्तेन सर्वमप्युपशान्तं भवति, एवमेकीयमतेनानन्तानुबन्धिनामुपशमोऽभिहितः,अन्ये त्वनन्तानुबन्धिनां विसंयोजनामेवाभिदधति,तद्यथा-क्षायोपशमिकसम्यग्दृष्टयश्चतुर्गतिका अप्यनन्तानुबन्धिनां विसंयोजकाः,तत्र नारका देवा अविरतसम्यग्दृष्टयस्तिर्यञ्चोऽविरतदेशविरता मनुष्या अविरतदेशविरतप्रमत्ताप्रमत्ताः,एते सर्वेऽपि यथासम्भवं विशोधिविवेकेन परिणता अनन्तानुबन्धिविसंयोजनार्थं प्रागुक्तं करणत्रयं कुर्वन्ति, तत्राप्यनन्तानुबन्धिनां स्थितिमपवर्त्तयन्नपवर्त्तयन् यावत्पल्योपमासङ्ख्येयभागमात्रा तावद्विधत्ते,तमपि पल्योपमासङ्ख्येयभागं बध्यमानासु मोहप्रकृतिषु प्रतिसमयं सङ्क्रामयति, तत्रापि प्रथमसमये स्तोकं द्वितीयादिष्वसङ्ख्येयगुणं एवं यावच्चरमसमये सर्वसङ्क्रमेणावलिकागतं मुक्त्वा सर्वं सङ्क्रामयति,आवलिकागतमपि स्तिबुकसङ्क्रमेण वेद्यमानास्वपरप्रकृतिषु सङ्क्रामयति,एवमनन्तानुबन्धिनो विसंयोजिता भवन्ति। इदानीं दर्शनत्रिकोपशमना भण्यते-तत्र मिथ्यात्वस्योपशमको मिथ्यादृष्टिर्वेदकसम्यग्दृष्टिर्वा सम्यक्त्वसम्यग्मिथ्यात्वयोस्तु वेदक एवोपशमकः,तत्र मिथ्यात्वस्योपशमं कुर्वंस्तस्यान्तरं कृत्वा प्रथमस्थितिं विपाकेनानुभूयोपशान्तमिथ्यात्वः सन्नुपशमसम्यग्दृष्टिर्भवतीति। साम्प्रतं वेदकसम्यग्दृष्टिरुपशमश्रेणिं प्रतिपद्यमानोऽनन्तानुबन्धिनो विसंयोज्य संयमे वर्त्तमानो दर्शनत्रिकमुपशमयत्य-



प्र आ-२९८

आचा. वृत्तौ १ उप.१ उ.

नेन विधिना, तत्र यथाप्रवृत्तादीनि प्राग्वत्रीणि करणानि कृत्वाऽन्तरकरणं कुर्वन् वेदकसम्यक्त्वस्य प्रथमस्थितिमान्तर्मौहूर्त्तिकीं करोति, इतरां त्वावलिकामात्रां, ततः किञ्चिन्न्यूनमुहूर्त्तमात्रां स्थितिं खण्डयित्वा बध्यमानानां प्रकृतीनां स्थितिबन्धमात्रेण कालेन तत्कर्म्मदलिकं सम्यक्त्वप्रथमस्थितौ प्रक्षिपति,एवमनया प्रक्रियया सम्यक्त्वबन्धाभावादन्तरं क्रियमाणं कृतं भवति, मिथ्यात्वसम्यग्मिथ्यात्वप्रथमस्थितिदलिकमावलिकामात्रपरिमाणं सम्यक्त्वप्रथमस्थितौ स्तिबुकसङ्क्रमेण सङ्क्रमयति, तस्यामपि सम्यक्त्वप्रथमस्थितौ क्षीणायां सत्यामुपशान्तदर्शनत्रिको भवतीति । तदनन्तरं चारित्रमोहनीयमुपशमयन् पूर्ववत् करणत्रयं करोति, नवरं यथाप्रवृत्तकरणमप्रमत्तगुणस्थान एव भवति, द्वितीयं त्वपूर्वकरणमष्टममेव गुणस्थानकं, तस्य च प्रथमसमय एव स्थितिघातरसघातगुणश्रेणिगुणसङ्क्रमापूर्वस्थितिबन्धा यौगपद्येन पञ्चाप्यधिकाराः प्रवर्त्तन्ते, तत्रापूर्वकरणसङ्ख्येयभागे गते निद्राप्रचलयोर्बन्धव्यवच्छेदो भवति, ततोऽपि बहुषु स्थितिकण्डकसहस्रेषु गतेषु सत्सु परभविकनाम्नां चरमसमये त्रिंशतो नामप्रकृतीनां बन्धव्यवच्छेदं विधत्ते, ताश्चेमाः—देवगतिस्तदानुपूर्वी पञ्चेन्द्रियजातिर्वैक्रियाहारकशरीरतदङ्गोपाङ्गानि तैजसकार्मणशरीरे चतुरस्रसंस्थानं वर्णगन्धरसस्पर्शागुरुलघूपघातपराघातोच्छ्वासप्रशस्तविहायोगतित्रसबादरपर्याप्तकप्रत्येकस्थिरशुभसुभगसुस्वरादेयनिर्म्माणतीर्थकरनामानि चेति, ततोऽपूर्वकरणचरमसमये हास्यरतिभयजुगुप्सानां बन्धव्यवच्छेदः, हास्यादिषट्कस्य तूदयव्यवच्छेदश्च, सर्वकर्म्मणामप्रशस्तो (र्णा देशो) पशमनानिधत्तनिकाचनाकरणानि च व्यवच्छिद्यन्ते, तदेवमसंयतसम्यग्दृष्ट्यादिष्वपूर्वकरणान्तेषु सप्त कर्म्माण्युपशान्तानि लभ्यन्ते, तत ऊर्ध्वमनिवृत्तिकरणं, स च नवमो गुणः, तत्र व्यवस्थित एकविंशतीनां मोहप्रकृतीनामन्तरं कृत्वा नपुंसकवेदमुपशमयति, तदनन्तरं स्त्रीवेदं,ततो हास्यादिसप्तकं (षट्कं), पुनः पुंवेदस्य बन्धोदयव्यवच्छेदः,तत ऊर्ध्वं समयोनावलिकाद्वयेन

१५ उपशमः

२०



२८

पुंवेदोपशमः, ततः क्रोधद्वयस्य पुनः सञ्ज्वलनक्रोधस्यैवं मानत्रिकस्य मायात्रिकस्य च, ततः सञ्ज्वलनलोभं सूक्ष्मखण्डानि विधत्ते, तत्करणकालचरमसमये लोभद्वयमुपशमयति, एवं चानिवृत्तिकरणान्ते सप्तविंशतिरुपशान्ता भवति, ततः सूक्ष्मखण्डान्यनुभवन् सूक्ष्मसम्परायो भवति, तदन्ते ज्ञानान्तरायदशकदर्शनावरणचतुष्कयशःकीर्त्युच्चैर्गोत्राणां बन्धव्यवच्छेदः, तदेवमष्टाविंशतिमोहप्रकृत्युपशमे सत्युपशान्तवीतरागो भवति, स च जघन्यत एकं समयमुत्कृष्टतोऽन्तर्मुहूर्त्तं, तत्प्रतिपातश्च भवक्षयेणाद्धाक्षयेण वा स्यात्, स च यथाऽऽरूढो बन्धादिव्यवच्छेदं च यथा कृतवांस्तथैव प्रतिपतन्निधत्ते, कश्चिच्च मिथ्यात्वमपि गच्छेदिति, यस्तु भवक्षयेण प्रतिपतति तस्य प्रथमसमय एव सर्वकरणानि प्रवर्त्तन्ते, एकभव एव कश्चिद् वारद्वयमुपशमं निदध्यादिति। साम्प्रतं क्षपकश्रेणिर्व्यावर्ण्यते—अस्याश्च मनुष्य एवाष्टवर्षोपरि वर्त्तमान आरम्भको भवति, स च प्रथममेव करणत्रयपूर्वकमनन्तानुबन्धिनो विसंयोजयति, ततः करणत्रयपूर्वकमेव मिथ्यात्वं तच्छेषं च सम्यग्मिथ्यात्वे प्रक्षिपन् क्षपयति, एवं सम्यग्मिथ्यात्वं, नवरं तच्छेषं सम्यक्त्वे प्रक्षिपति, एवं सम्यक्त्वमपि, तच्चरमसमये च वेदकसम्यग्दृष्टिर्भवति, तत ऊर्ध्वं क्षायिकसम्यग्दृष्टिरिति, एताश्च सप्तापि कर्मप्रकृतीरसंयतसम्यग्दृष्ट्याद्यप्रमत्तान्ताः क्षपयन्ति, बद्धायुष्कश्चात्रैवावतिष्ठते, श्रेणिकवद्, अपरस्तु कषायाष्टकं क्षपयितुं करणत्रयपूर्वकमारभते, तत्र यथाप्रवृत्तकरणमप्रमत्तस्यैव, अपूर्वकरणे तु स्थितिघातादिकं प्राग्वन्निद्राद्विकस्य देवगत्यादीनां च त्रिंशतां हास्यादिचतुष्कस्य (च) यथाक्रमं बन्धव्यवच्छेद उपशमश्रेणिक्रमेण वक्तव्यः, अनिवृत्तिकरणे तु स्त्यानर्द्धित्रिकस्य नरकतिर्यग्गतितदानुपूर्व्येकेन्द्रियादिजातिचतुष्टयातपोद्योतस्थावरसूक्ष्मसाधारणानां षोडशप्रकृतीनां क्षयः, ततः कषायाष्टकस्यापि, अन्येषां तु मतं—पूर्वं कषायाष्टकं क्षप्यते, पश्चात् षोडशेति, ततो नपुंसकवेदं, तदनन्तरं हास्यादिषट्कं, पुनः पुंवेदं, ततः स्त्रीवेदं, ततः क्रमेण

५
प्र आ २९९

१०

क्रोधादीन् सञ्ज्वलनान् क्षपयति, लोभं च खण्डशः कृत्वा क्षपयति, तत्र बादरखण्डानि क्षपयन्ननिवृत्तिबादरः सूक्ष्माणि तु सूक्ष्मसम्पराय इति, तदन्ते च ज्ञानावरणीयादीनां षोडशप्रकृतीनां बन्धव्यवच्छेदं विधत्ते, ततः क्षीणमोहोऽन्तर्मुहूर्तं स्थित्वा तदन्ते द्विचरमसमये निद्राद्वयं क्षपयति,अन्तसमये च ज्ञानान्तरायदशकं दर्शनावरणचतुष्कं च क्षपयित्वा निरावरणज्ञानदर्शनसमन्वितः केवली भवति, स च सातावेदनीयमेवैकं बध्नाति यावत्सयोग इति, स चान्तर्मुहूर्तं देशोनां पूर्वकोटिं वा यावद्भवति, ततोऽयावन्तर्मुहूर्तावशेषमायुर्ज्ञात्वा वेदनीयं च प्रभूततरमतस्तयोः स्थितिसाम्यापादनार्थं समुद्घातमेतेन क्रमेण करोति, तद्यथा-औदारिककाययोगी आलोकान्ताद्र्ध्वाधःशरीरपरिणाहप्रमाणं प्रथमसमये दण्डं करोति, पुनर्द्वितीयसमये तिरश्चीनमालोकान्तात्कायप्रमाणमेवौदारिककार्म्मणशरीरयोगी कपाटवत्कपाटं विधत्ते, तृतीयसमये त्वपरदिक्तिरश्चीनमेव कार्म्मणशरीरयोगी मन्थानवन्मन्थानं करोति, अनुश्रेणिगमनाच्च लोकस्य प्रायशो बहु पूरितं भवति, ततश्चतुर्थसमये कार्मणकाययोगेनैव मन्थान्तरालव्यापनात् सह निष्कुटैर्लोकः पूरितो भवति, पुनरनेनैव क्रमेण पश्चानुपूर्व्या समुद्घातावस्थां चतुर्भिरेव समयैरुपसंहरंस्तद्व्यापारवांस्तद्योगो भवति, केवलं पञ्चमसमये मन्थानमुपसंहरन्नौदारिकमिश्रयोगी स्यादिति, तदेवं केवली समुद्घातं संहृत्य प्रत्यर्प्य च फलकादिकं ततो योगनिरोधं विधत्ते, तद्यथा -पूर्वं मनोयोगं बादरं निरुणद्धि,पुनर्वाग्योगं काययोगं च बादरमेवेति, पुनरनेनैव क्रमेण सूक्ष्ममनोयोगं निरुणद्धि,ततः सूक्ष्मवाग्योगं निरुणद्धि, ततः सूक्ष्मकाययोगं निरुन्धन् सूक्ष्मक्रियमप्रतिपाति तृतीयं शुक्लध्यानभेदमारोहति, तन्निरोधे च व्युपरतक्रियमनिवर्त्ति चतुर्थं शुक्लध्यानमारोहति, तदारूढश्चायोगिकेवलिभावमुपगतः सन्नन्तर्मुहूर्त्तं यावत्कालमजघन्योत्कृष्टमास्ते, तत्र चासौ येषां कर्म्मणामुदयो नास्ति तानि स्थितिक्षयेण क्षपयन् वेद्यमानासु चापरप्रकृतिषु सङ्क्रामयन् क्षपयंश्च तावद्यतो

१५ क्षपणं २० ॥२७२॥ २८

यावद्विचरमसमयं, तत्र च द्विचरमसमये देवगतिसहगताः कर्म्मप्रकृतीः क्षपयति, ताश्चेमाः—देवगतिस्तदानुपूर्वी वैक्रियाहारकशरीरतदङ्गोपाङ्गचतुष्टयमेतद्बन्धनसङ्घाताविति च, तथा तत्रैवापरा इमाः क्षपयति, तद्यथा—औदारिकतैजसकार्मणानि शरीराणि एतद्बन्धनानि त्रीणि सङ्घातांश्च पद् संस्थानानि पद् संहननानि औदारिकशरीराङ्गोपाङ्गं वर्णगन्धरसस्पर्शा मनुष्यानुपूर्व्यगुरुलघूपघातपराघातोच्छ्वासप्रशस्ताप्रशस्तविहायोगतयस्तथाऽपर्याप्तकप्रत्येकस्थिरास्थिरशुभाशुभसुभगदुर्भगसुस्वरदुःस्वरानादेयायशःकीर्त्तिनिर्म्माणानि तथा नीचैर्गोत्रमन्यतरद्वेदनीयमिति, चरमसमये तु मनुष्यगतिपञ्चेन्द्रियजातित्रसबादरपर्याप्तकसुभगादेययशःकीर्त्तितीर्थकरत्वान्यतरद्वेदनीयायुष्कोच्चैर्गोत्राण्येता द्वादश तीर्थकृत् केपांचिन्मतेनानुपूर्वीसहितास्त्रयोदश अतीर्थकृच्च द्वादशैकादश वा क्षपयति, अशेषकर्म्मक्षयसमनन्तरमेव चास्पर्शवद्गत्या ऐकान्तिकात्यन्तिकानाबाधलक्षणं सुखमनुभवन् सिद्धा(द्ध्या)लयं लोकाग्रमुपैतीत्ययं गाथातात्पर्यार्थः ॥ साम्प्रतमुपसंहरंस्तीर्थकरासेवनतः प्रोत्साहनतां दर्शयितुमाह—

एवं तु समणुचिन्नं वीरवरेणं महाणुभावेणं। जं अणुचरित्तु धीरा सिवमचलं जन्ति निव्वाणं॥ २८४ ॥

'एवम्' उक्तविधिना भावोपधानं-ज्ञानादि तपो वा वीरवर्द्धमानस्वामिना स्वतोऽनुष्ठितमतोऽन्येनापि मुमुक्षुणैतदनुष्ठेयमिति गाथार्थः ॥ समाप्ता ब्रह्मचर्याध्ययननिर्युक्तिः ॥ साम्प्रतं सूत्रानुगमे सूत्रमुच्चारणीयं, तच्चेदम्—

अहासुयं वइस्सामि जहा से समणे भगवं उट्ठाए। संखाए तंसि हेमंते, अहुणा पव्वइए रीइत्था ॥४२॥ णो चेविमेण वत्थेण, पिहिस्सामि तंसि हेमंते। से पारए आवकहाए,

आचा. वृत्तौ ९उप. १उ.

एयं खु अणुधम्मियं तस्स ॥४३॥ चत्तारि साहिए मासे, बहवे पाणजाइया आगम्म। अभिरुज्झ कायं विहरिंसु, आरुसिया णं तत्थ हिंसिंसु ॥४४॥ संवच्छरं साहियं मासं जं न रिक्कासि वत्थगं भगवं। अचेलए तओ चाई तं वोसिरिज्ज वत्थमणगारे ॥४५॥

अचेलकता १५

आर्यसुधर्मस्वामी जम्बूस्वामिने पृच्छते कथयति, यथाश्रुतं यथासूत्रं वा वदिष्यामि, तद्यथा–स श्रमणो भगवान् वीरवर्द्धमानस्वाम्युत्थाय–उद्यतविहारं प्रतिपद्य सर्वालङ्कारं परित्यज्य पञ्चमुष्टिकं लोचं विधायैकेन देवदूष्येणेन्द्रक्षिप्तेन युक्तः कृतसामायिकप्रतिज्ञ आविर्भूतमनःपर्यायज्ञानोऽष्टप्रकारकर्मक्षयार्थं तीर्थप्रवर्त्तनार्थं चोत्थाय संख्याय–ज्ञात्वा तस्मिन् हेमन्ते मार्गशीर्षदशम्यां प्राचीनगामिन्यां छायायां प्रव्रज्याग्रहणसमनन्तरमेव 'रीयते स्म' विजहार, तथा च किल कुण्डग्रामान्मुहूर्त्तशेषे दिवसे कर्माग्राममाप, तत्र च भगवानित आरम्य नानाविधाभिग्रहोपेतो घोरान् परीषहोपसर्गानधिसहमानो महासत्त्वतया म्लेच्छानप्युपशमं नयन् द्वादश वर्षाणि साधिकानि छद्मस्थो मौनव्रती तपश्चचार, अत्र च सामायिकारोपणसमनन्तरमेव सुरपतिना भगवदुपरि देवदूष्यं चिक्षिपे, तत् भगवताऽपि निःसङ्गाभिप्रायेणैव धर्मोपकरणमृते न धर्मोऽनुष्ठातुं मुमुक्षुभिरपरैः शक्यत इति कारणापेक्षया मध्यस्थवृत्तिना तथैवावधारितं, न पुनस्तस्य तदुपभोगेच्छाऽस्तीति ॥ एतद्दर्शयितुमाह–न चैवाहमनेन वस्त्रेणेन्द्रप्रक्षिप्तेनात्मानं विधास्यामि–स्थगयिष्यामि तस्मिन् हेमन्ते तदा वस्त्रं त्वक्त्राणीकरिष्यामि, लज्जाप्रच्छादनं वा विधास्यामि, किंभूतोऽसाविति दर्शयति–'स' भगवान् प्रतिज्ञायाः परीषहाणां संसारस्य वा पारं गच्छतीति पारगः, कियन्तं कालमिति दर्शयति

२०



२६

-यावत्कथं,यावज्जीवमित्यर्थः, किमर्थं पुनरसौ बिभर्त्तीति चेद्दर्शयति-खुरवधारणे, स च भिन्नक्रमः,एतद्वस्त्रावज्ञावधारणं तस्य भगवतोऽनु-पश्चाद्धार्म्मिकमनुधार्मिकमेवेति, अपरैरपि तीर्थकृद्भिः समाचीर्णमित्यर्थः, तथा चागमः-"से बेमि जे य अईया जे य पडुप्पन्ना जे य आगमेस्सा अरहंता भगवन्तो जे य पव्वयन्ति जे अ पव्वइस्सन्ति सव्वे ते सोवही धम्मो देसिअव्वोत्तिकट्टु तित्थधम्मयाए एसाऽणुधम्मिगत्ति एगं देवदूसमायाए पव्वइंसु वा पव्वयंति वा पव्वइस्सन्ति व"त्ति, अपि च-'गरीयस्त्वात्सचेलस्य, धर्मस्यान्यैस्तथागतैः। शिष्यस्य प्रत्ययाच्चैव, वस्त्रं दधे न लज्जया ॥१॥" इत्यादि॥ तथा भगवतः प्रव्रजतो ये दिव्याः सुगन्धिपटवासा आसंस्तद्गन्धाकृष्टाश्च भ्रमरादयः समागत्य शरीरमुपतापयन्तीति, एतद्दर्शयितुमाह-चतुरः समधिकान् मासान् बहवः प्राणिजातयो-भ्रमरादिकाः समागत्य आरुह्य च 'कायं' शरीरं 'विजहुः' काये प्रविचारं चक्रुः, तथा मांसशोणिताार्थितयाऽऽरुह्य 'तत्र' काये 'ण'मिति वाक्यालङ्कारे, 'हिंसिंसु' इतश्चेतश्च विलुम्पन्ति स्मेत्यर्थः ॥ कियन्मात्रं कालं तद्देवदूष्यं भगवति स्थितमित्येतद्दर्शयितुमाह-तदिन्द्रोपाहितं वस्त्रं संवत्सरमेकं साधिकं मासं 'जं ण रिकासि'त्ति यन्न त्यक्तवान् भगवान् तत्स्थितकल्प इतिकृत्वा,तत ऊर्ध्वं तद्वस्त्रपरित्यागी,व्युत्सृज्य च तदनगारो भगवानचेलोऽभूदिति,तच्च सुवर्णवालुकानदीपूराहृतकण्टकावलग्नं धिग्जातिना गृहीतमिति॥ किं च-

अदु पोरिसिं तिरियं भित्तिं चक्खुमासज्ज अन्तसो झायइ। अह चक्खुभीया संहिया ते हन्ता हन्ता बहवे कंदिंसु ॥४६॥ सयणेहिं वितिमिस्सेहिं इत्थिओ तत्थ से परिन्नाय। सागारियं न सेवेइ य, से सयं पवेसिया झाइ ॥४७॥ जे के इमे अगारत्था मीसीभावं पहाय से

झाइ। पुट्ठोवि नाभिभासिंसु गच्छइ नाइवत्तइ अंजू ॥४८॥ णो सुकरमेयमेगेसिं नाभिभासे य अभिवायमाणे। हयपुव्वे तत्थ दण्डेहिं लूसियपुव्वे अप्पपुण्णेहिं ॥४९॥

'अथ' आनन्तर्ये पुरुषप्रमाणा पौरुषी–आत्मप्रमाणा वीथी तां गच्छन् ध्यायतीर्यासमितो गच्छति, तदेव चात्र ध्यानं यदीर्यासमितस्य गमनमिति भावः, किंभूतां तां ?–तिर्यग्भित्तिं–शकटोर्द्धिवदादौ सङ्कटामग्रतो विस्तीर्णामित्यर्थः, कथं ध्यायति ?,–'चक्षुरासाद्य' चक्षुर्दर्शनान्तः–मध्ये दत्तावधानो भूत्वेति, तं च तथा रीयमाणं दृष्ट्वा कदाचिदव्यक्तवयसः कुमारादय उपसर्गयेयुरिति दर्शयति—'अथ' आनन्तर्ये चक्षुःशब्दोऽत्र दर्शनपर्यायो, दर्शनादेव भीता दर्शनभीताः संहिता–मीलितास्ते बहवो डिम्भादयः पांशुमुष्ट्यादिभिर्हत्वा हत्वा चक्रन्दुः, अपरांश्च चुकुशुः–पश्यत यूयं नग्नो मुण्डितः, तथा कोऽयं कुतोऽयं किमीयो वा अयमित्येवं हल्बोलं चक्रुरिति ॥ किं च–शय्यत एष्विति शयनानि–वसतयस्तेषु कुतश्चिन्निमित्तात्सतिमिश्रेषु गृहस्थतीर्थिकैः, तत्र व्यवस्थितः सन् यदि स्त्रीभिः प्रार्थ्यते ततस्ताः शुभमार्गार्गला इति ज्ञात्वा ज्ञपरिज्ञया प्रत्याख्यानपरिज्ञया परिहरन् सागारिकं–मैथुनं न सेवेत, शून्येषु च भावमैथुनं न सेवेत, इत्येवं स भगवान् स्वयम्–आत्मना वैराग्यमार्गमात्मानं प्रवेश्य धर्मध्यानं शुक्लध्यानं वा ध्यायति ॥ तथा–ये केचन इमेऽगारं–गृहं तत्र तिष्ठन्तीति अगारस्थाः–गृहस्थास्तैर्मिश्रीभावमुपगतोऽपि द्रव्यतो भावतश्च तं मिश्रीभावं प्रहाय–त्यक्त्वा स भगवान् धर्मध्यानं ध्यायति, तथा कुतश्चिन्निमित्ताद् गृहस्थैः पृष्टोऽपृष्टो वा न वक्ति, स्वकार्याय गच्छत्येव, न तरुक्तो मोक्षपथमतिवर्त्तते ध्यानं वा, 'अंजु'त्ति ऋजुः ऋजोः संयमस्यानुष्ठानात्, नागार्जुनीयास्तु पठ-

१५

२०



२६

न्ति-'पुट्ठो व सो अपुट्ठो व णो अणुन्नाइ पावगं भगवं' कप्स्यम् ॥ किं च-नैतद्वक्ष्यमाणमुक्तं वा एकेषाम्-अन्येषां सुकरमेव, नान्यैः प्राकृतपुरुषैः कर्तुमलं, किं तत्तेन कृतमिति दर्शयति-अभिवादयतो नाभिभाषते, नाप्यनभिवादयद्भ्यः कुप्यति, नापि प्रतिकूलोपसर्गैरन्यथाभावं यातीति दर्शयति-दण्डैर्हतपूर्वः 'तत्र' अनार्यदेशादौ पर्यटन् तथा 'लूषितपूर्वो' हिंसितपूर्वः केशलुञ्चनादिभिरपुण्यैः-अनार्यैः पापाचारैरिति ॥ किं च—

फरुसाइं दुत्तितिक्खाइं अइअच्च मुणी परक्कममाणे । आघायनट्टगीयाइं दण्डजुद्धाइं मुट्ठिजुद्धाइं ॥५०॥ गढिए मिहुकहासु समयंमि नायसुए विसोगे अदक्खु । एयाइ से उरालाइं गच्छइ नायपुत्ते असरणयाए ॥५१॥ अवि साहिए दुवे वासे सीओदं अभुच्चा निक्खन्ते । एगत्तगए पिहियच्चे से अहिन्नायदंसणे सन्ते ॥५२॥



'परुषाणि' कर्कशानि वाग्दुष्टानि तानि चापरैर्दुःखेन तितिक्ष्यन्त इति दुस्तितिक्षाणि तान्यतिगत्य-अविगणय्य 'मुनिः' भगवान् विदितजगत्स्वभावः पराक्रममाणः सम्यक्तितिक्षते, तथा आख्यातानि च तानि नृत्यगीतानि च आख्यातनृत्यगीतानि तानि उद्दिश्य न कौतुकं विदधाति, नापि दण्डयुद्धमुष्टियुद्धान्याकर्ण्य विस्मयोत्फुल्ललोचन उद्धूपितरोमकूपो भवति, तथा 'ग्रथितः' अवबद्धो 'मिथः' अन्योऽन्यं 'कथासु' स्वैरकथासु समयो वा कश्चिदवबद्धस्तं स्त्रीद्वयं वा परस्परं कथायां शुद्धमपेक्ष्य तस्मिन्नवसरे

'ज्ञातपुत्रो' भगवान् विशोको विगतहर्षश्च तान्मिथःकथाऽवबद्धान् मध्यस्थोऽद्राक्षीत्, एतान्यन्यानि चानुकूलप्रतिकूलानि परीषहोपसर्गरूपाण्युरालानि दुष्प्रधृष्याणि दुःखान्यस्मरन् 'गच्छति' संयमानुष्ठाने पराक्रमते, ज्ञाताः-क्षत्रियास्तेषां पुत्रः-अपत्यं ज्ञातपुत्रः -वीरवर्धमानस्वामी स भगवानेतद्दुःखस्मरणाय गच्छति-पराक्रमत इति सम्बन्धः, यदिवा शरणं-गृहं नात्र शरणमस्तीत्यशरणः-संयमस्तस्मै अशरणाय पराक्रमत इति, तथाहि-किमत्र चित्रं यद्भगवानपरिमितबलपराक्रमः प्रतिज्ञामन्दरमारूढः पराक्रमते इति ?, स भगवानप्रव्रजितोऽपि प्रासुकाहारानुपर्यासीत्, श्रूयते च किल पञ्चत्वमुपगते मातापितरि समाप्तप्रतिज्ञोऽभूत्, ततः प्रविव्रजिषुः ज्ञातिभिरभिहितो, यथा-भगवन् ! मा कृथाः क्षते क्षारावसेचनमित्येवमभिहितेन भगवताऽवधिना व्यज्ञायि, यथा-मय्यस्मिन्नवसरे प्रव्रजति सति बहवो नष्टचित्ता विगतासवश्च स्युरित्यवधार्य तानुवाच-कियन्तं कालं पुनरत्र मया स्थातव्यमिति ?, ते ऊचुः-संवत्सरद्वयेनास्माकं शोकापगमो भावीति, भट्टारकोऽप्योमित्युवाच, किं त्वाहारादिकं मया स्वेच्छया कार्यं, नेच्छाविघाताय भवद्भिरुपस्थातव्यं, तैरपि यथाकथञ्चिदयं तिष्ठत्विति मत्वा तैः सर्वैस्तथैव प्रतिपेदे ॥ ततो भगवांस्तद्वचनमनुवर्त्यास्मीयं च निष्क्रमणावसरमवगम्य संसारासारतां विज्ञाय तीर्थप्रवर्त्तनायोद्यत इति दर्शयितुमाह-अवि साधिके द्वे वर्षे शीतोदकमभुक्त्वा-अनभ्यवहृत्यापीत्येत्यर्थः, अपरा अपि पादधावनादिकाः क्रियाः प्रासुकेनैव प्रकृत्य ततो निष्क्रान्तो,यथा च प्राणातिपातं परिहृतवान् एवं शेषव्रतान्यपि पालितवानिति, तथा 'एकत्व'मिति तत एकत्वभावनाभावितान्तःकरणः पिहिता-स्थगिताऽर्चा-क्रोधज्वाला येन स तथा, यदिवा पिहितार्चो-गुप्ततनुः स भगवान् छद्मस्थकालेऽभिज्ञातदर्शनः-सम्यक्त्वभावनया भावितः शान्तः इन्द्रियनोइन्द्रियैः ॥ स एवंभूतो भगवान् गृहवासेऽपि सावद्यारम्भत्यागी, किं पुनः प्रव्रज्यायामिति दर्शयितुमाह—

प्र.आ.२०२

१५

२०



२६

पुढविं च आउकायं च तेउकायं च वाउकायं च। पणगाइं बीयहरियाइं तसकायं च सव्वसो नचा ॥५३॥ एयाइं सन्ति पडिलेहे, चित्तमन्ताइं से अभिन्नाय । परिवज्जिय विहरित्था इय सङ्खाय से महावीरे ॥५४॥ अदु थावरा य तसत्ताए, तसा य थावरत्ताए। अदुवा सव्वजोणिया सत्ता कम्मुणा कप्पिया पुढो बाला ॥५५॥ भगवं च एवमन्नेसिं सोवहिए हु लुप्पई बाले। कम्मं च सव्वसो नच्चा तं पडियाइक्खे पावगं भगवं ॥ ५६ ॥ दुविहं समिच्च मेहावि किरियमक्खायऽणेलिसं नाणी। आयाणसोयमइवायसोयं जोगं च सव्वसो णच्चा ॥५७॥

श्लोकद्वयस्याप्ययमर्थः-एतानि पृथिव्यादीनि चित्तमन्त्यभिज्ञाय तदारम्भं परिवर्ज्य विहरति स्म, क्रियाकारकसम्बन्धः, तत्र पृथिवी सूक्ष्मबादरभेदेन द्विधा, सूक्ष्मा सर्वगा, बादराऽपि श्लक्ष्णकठिनभेदेन द्विधैव, तत्र श्लक्ष्णा शुक्लादिपञ्चवर्णा, कठिना तु पृथ्वीशर्करावालुकादि षट्त्रिंशद्भेदा शस्त्रपरिज्ञानुसारेण द्रष्टव्या, अप्कायोऽपि सूक्ष्मबादरभेदाद्द्विधा,तत्र सूक्ष्मः पूर्ववद् बादरस्तु शुद्धोदकादिभेदेन पञ्चधा, तेज:कायोऽपि पूर्ववत्, नवरं बादरोऽङ्गारादि पञ्चधा, वायुरपि तथैव, नवरं बादर उत्कलिकादिभेदेन पञ्चधा, वनस्पतिरपि सूक्ष्मबादरभेदेन द्विधा, तत्र सूक्ष्मः सर्वगो, बादरोऽप्यग्रमूलस्कन्धपर्वबीजसम्मूर्छनभेदात् सामान्यतः षोढा,

५

१०

पुनर्द्विधा-प्रत्येकः साधारणश्च, तत्र प्रत्येको वृक्षगुच्छादिभेदाद्वादशधा, साधारणस्त्वनेकविध इति, स एवं भेदभिन्नोऽपि वनस्पतिः सूक्ष्मस्य सर्वगतत्वादतीन्द्रियत्वाच्च तद्व्युदासेन बादरो भेदत्वेन संगृहीतः, तद्यथा-पनकग्रहणेन बीजाङ्कुरभावरहितस्य पनकादे-र्ल्यादिविशेषापन्नस्य ग्रहणं, बीजग्रहणेन त्वग्रबीजादेरुपादानं, हरितशब्देन शेषस्येत्येतानि पृथिव्यादीनि भूतानि 'सन्ति' विद्यन्त इत्येवं प्रत्युपेक्ष्य तथा 'चित्तवन्ति' सचेतनान्यभिज्ञाय-ज्ञात्वा 'इति' एतत्सङ्ख्याय-अवगम्य स भगवान्महावीरस्तदारम्भं परिवर्ज्य विहृतवानिति ॥ पृथिवीकायादीनां जन्तूनां त्रसस्थावरत्वेन भेदमुपदर्श्य साम्प्रतमेषां परस्परतोऽनुगमनमप्यस्तीत्येतद्दर्शयितुमाह-'अथ' आनन्तर्ये 'स्थावराः' पृथिव्यप्तेजोवायुवनस्पतयः ते 'त्रसतया' द्वीन्द्रियादितया 'विपरिणमन्ते' कर्म्मवशाद् गच्छन्ति, चशब्द उत्तरापेक्षया समुच्चयार्थ, तथा 'त्रसजीवाश्च' कृम्यादयः 'स्थावरतया' पृथिव्यादित्वेन कर्म्मनिघ्नाः समुत्पद्यन्ते, तथा चान्यत्रा-प्युक्तम्—"अयण्णं भन्ते ! जीवे पुढविकाइयत्ताए जाव तसकाइयत्ताए उववण्णपुव्वे?, हन्ता गोयमा ! असइं अदुवाऽणंतखुत्तो जाव उववण्णपुव्वे"त्ति, अथवा सर्वा योनयः-उत्पत्तिस्थानानि येषां सत्त्वानां ते सर्वयोनिकाः सत्त्वाः सर्वगतिभाजः, ते च 'बाला' रागद्वेषाकलिताः स्वकृतेन कर्मणा पृथक्तया सर्वयोनिभाक्त्वेन च 'कल्पिताः' व्यवस्थिता इति, तथा चोक्तम्—"णत्थि किर सो पएसो लोए वालग्गकोडिमित्तोऽवि। जम्मणमरणाबाहा अणेगसो जत्थ णवि पत्ता ॥१॥" अपि च-"रङ्गभूमिर्न सा काचि-च्छुद्धा जगति विद्यते। विचित्रैः कर्म्मनेपथ्यैर्यत्र सत्त्वैर्न नाटितम् ॥२॥ इत्यादि॥ किं च-भगवांश्च असौ वीरवर्द्धमानस्वाम्येव-

---

१ अथ भदन्त ! जीवः पृथ्वीकायिकतया यावत् त्रसकायिकतयोत्पन्नपूर्वः ? हन्त गौतम ! असकृत् अनन्तकृत्वो यावदुत्पन्नपूर्वः

१ नास्ति किल स प्रदेशो लोके वालाग्रकोटीमात्रोऽपि। जन्ममरणाबाधा अनेकशो यत्र नैव प्राप्ताः ॥१॥

ममन्यत—ज्ञातवान् सह उपधिना वर्त्तत इति सोपधिकः—द्रव्यभावोपधियुक्तः, हुरवधारणे लुप्यत एव—कर्म्मणा क्लेशमनुभवत्येव 'अज्ञो' बाल इति, यदिवा दुर्हेतौ, यस्मात्सोपधिकः कर्म्मणा लुप्यते बालस्तस्मात्कर्म्म च सर्वशो ज्ञात्वा तत्कर्म्म प्रत्याख्यातवांस्तदुपादानं च पापकमनुष्ठानं भगवान् वर्द्धमानस्वामीति ॥ किं च—द्वे विधे—प्रकारावस्येति द्विविधं, किं तत् ?—कर्म्म, तच्चेर्याप्रत्ययं साम्परायिकं च, तद्द्विविधमपि 'समेत्य' ज्ञात्वा 'मेधावी' सर्वभावज्ञः, 'क्रियां' संयमानुष्ठानरूपां कर्म्मोच्छेत्रीमनीदृशीम्—अनन्यसदृशीमाख्यातवान्, किंभूतो ?—ज्ञानी, केवलज्ञानवानित्यर्थः, किं चापरमाख्यातवानिति दर्शयति—आदीयते कर्म्मानेनेति आदानं—दुष्प्रणिहितमिन्द्रियमादानं च तत् स्रोतश्चादानस्रोतस्तत् ज्ञात्वा तथाऽतिपातस्रोतश्च उपलक्षणार्थत्वादस्य मृषावादादिकमपि ज्ञात्वा तथा 'योगं च' मनोवाक्कायलक्षणं दुष्प्रणिहितं 'सर्वशः' सर्वैः प्रकारैः कर्म्मबन्धायेति ज्ञात्वा क्रियां संयमलक्षणामाख्यातवानिति सम्बन्धः ॥ किंच—

अइवत्तियं अणाउट्टिं सयमन्नेसिं अकरणयाए। जस्सित्थिओ परिन्नाया सव्वकम्मावहाउ से अदक्खु ॥५८॥ अहाकडं न से सेवे सव्वसो कम्म अदक्खू। जं किंचि पावगं भगवं तं अकुव्वं वियडं भुंजित्था ॥५९॥ णो सेवइ य परवत्थं परपाएवी से न भुंजित्था। परिवज्जियाण ओमाणं गच्छइ संखडिं असरणयाए ॥६०॥ मायण्णे असणपाणस्स नाणुगिद्धे रसेसु

५

१०

अपडिन्ने। अच्छिंपि नो पमज्जिज्जा नोवि य कंडूयए मुणी गायं ॥६१॥

आकुट्टिः—हिंसा, नाकुट्टिरनाकुट्टिरहिंसेत्यर्थः, किंभूताम् ?—अतिक्रान्ता पातकादतिपातिका—निर्दोषा तामाश्रित्य, स्वतोऽन्येषां चाकरणतया—अव्यापारतया प्रवृत्त इति, तथा यस्य स्त्रियः स्वरूपतस्तद्विपाकतश्च परिज्ञाता भवन्ति, सर्वं कर्म्मावहन्तीति सर्वकर्म्मावहाः—सर्वपापोपादानभूताः स एवाद्राक्षीत्—स एव यथास्थितं संसारस्वभावं ज्ञातवानिति, एतदुक्तं भवति—स्त्रीस्वभावपरिज्ञानेन तत्परिहारेण च स भगवान् परमार्थदर्शभूदिति ॥ मूलगुणानाख्यायोत्तरगुण(णान्)प्रचिकटयिषुराह 'यथा' येन प्रकारेण पृष्टः याऽपृष्टः वा कृतं यथाकृतम्—आधाकर्म्मादि नासौ सेवते, किमिति ?—यतः 'सर्वशः' सर्वैः प्रकारैस्तदासेवनेन कर्म्मणाऽष्टप्रकारेण बन्धमद्राक्षीत्—दृष्टवान्, अन्यदप्येवंजातीयकं न सेवत इति दर्शयति यत्किञ्चित्पापकं—पापोपादानकारणं तद्भगवान् 'विकटं' प्रासुकमभुङ्क्त—उपभुक्तवान् ॥ किं च—नो सेवते च—नोपभुङ्क्ते च परवस्त्रं—प्रधानं वस्त्रं परस्य वा वस्त्रं,परवस्त्रं नासेवते, तथा परपात्रेऽप्यसौ न भुङ्क्ते, तथा परिवर्ज्यापमानम्—अवगणय्य गच्छति असावाहाराय सङ्खण्ड्यन्ते प्राणिनोऽस्यामिति सङ्खण्डिस्तामाहारपाकस्थानभूतामशरणाय शरणमनालभ्यमानोऽदीनमनस्कः कल्प इतिकृत्वा परीषहविजयार्थं गच्छतीति॥ किं च—आहारस्य मात्रां जानातीति मात्राज्ञः, कस्य ?—अश्यत इत्यशनं—शाल्योदनादि पीयत इति पानं—द्राक्षापानकादिः तस्य च, तथा नानुगृद्धो 'रसेषु' विकृतिषु, भगवतो हि गृहस्थभावेऽपि रसेषु गृद्धिर्नासीत्, किं पुनः प्रव्रजितस्येति ?, तथा रसेष्वेव ग्रहणं प्रत्यप्रतिज्ञो, यथा—मयाऽद्य सिंहकेसरा मोदका एव ग्राह्या इत्येवंरूपप्रतिज्ञारहितोऽन्यत्र तु कुल्माषादौ सप्रतिज्ञ एव, तथाऽक्ष्यपि रजःकणुकाद्यपनयनाय नो प्रमार्जयेन्नापि च गात्रं मुनिरसौ कण्डूयते—काष्ठादिना गात्रस्य कण्डूव्यपनोदं न विधत्त इति ॥ किं च—

परपात्रादित्यागः

१५

२०

२६

अप्पं तिरियं पेहाए अप्पिं पिट्ठओ पेहाए। अप्पं बुइएऽपडिभाणी पंथपेहि चरे जयमाणे ॥६२॥ सिसिरंसि अद्धपडिवन्ने तं वोसिज्ज वत्थमणगारे। पसारित्तु बाहुं परक्कमे नो अवलम्बियाण खंधंमि ॥६३॥ एस विही अणुक्कन्तो माहणेण मईमया। बहुसो अपडिन्नेण भगवया एवं रियंति ॥६४॥ त्तिबेमि॥ उपधानश्रुताध्ययने प्रथम उद्देशकः १ ॥ ९-१ ॥

अल्पशब्दोऽभावे वर्त्तते, अल्पं तिर्यक्—तिरश्चीनं गच्छन् प्रेक्षते, तथाऽल्पं पृष्ठतः स्थित्वोत्प्रेक्षते, तथा मार्गादि केनचित्पृष्टः सन्नप्रतिभाषी सन्नल्पं ब्रूते, मौनेन गच्छत्येव केवलमिति दर्शयति-पथिप्रेक्षी 'चरेद्' गच्छेद्यतमानः-प्राणिविषये यत्नवानिति ॥ किंच-अध्वप्रतिपन्ने शिशिरे सति तदेवदुष्यं वस्त्रं व्युत्सृज्यानगारो भगवान् प्रसार्य बाहू पराक्रमते, न तु पुनः शीतार्दितः सन् सङ्कोचयति, नापि स्कन्धेऽवलम्ब्य तिष्ठतीति ॥ साम्प्रतमुपसञ्जिहीर्षुराह-एष चर्याविधिरनन्तरोक्तोऽनुक्रान्तः-अनुचीर्णः 'माहणेण'त्ति श्रीवर्द्धमानस्वामिना 'मतिमता' विदितवेद्येन 'बहुशः' अनेकप्रकारमप्रतिज्ञेन-अनिदानेन 'भगवता' ऐश्वर्यादिगुणोपेतेन, 'एवम्' अनेन पथा भगवदनुचीर्णेनान्ये मुमुक्षवोऽशेषकर्म्मक्षयाय साधवो 'रीयन्ते' गच्छन्तीति। इतिरधिकारपरिसमाप्तौ, ब्रवीमीति पूर्ववत्, उपधानश्रुताध्ययनस्य प्रथमोद्देशक इति॥ उक्तः प्रथमोद्देशकः, साम्प्रतं द्वितीय आरभ्यते, अस्य चायमभिसम्बन्धः-इहानन्तरोद्देशके भगवतश्चर्याऽभिहिता, तत्र चावश्यं कथाचिच्छय्यया—वसत्या भाव्यमतस्तत्प्रतिपादनायायमुद्देशकः प्रक्रम्यते इत्यनेन

मार्गविधिः

५

१०

सम्बन्धेनायातस्यास्योद्देशकस्यादि सूत्रम्—

चरियासणाइं सिज्जाओ एगइयाओ जाओ बुइयाओ। आइक्ख ताइं सयणासणाइं जाइं सेवित्था से महावीरे ॥६५॥ आवेसणसभापवासु पणियसालासु एगया वासो। अदुवा पलियठाणेसु पलालपुंजेसु एगया वासो ॥६६॥ आगन्तारे आरामागारे तह य नगरे व एगया वासो। सुसाणे सुण्णगारे वा रुक्खमूले व एगया वासो ॥६७॥ एएहिं मुणी सयणेहिं समणे आसि पतेरसवासे। राइं दिवंपि जयमाणे अपमत्ते समाहिए झाइ ॥६८॥

चर्यायामवश्यंभावितया यानि शय्यासनान्यभिहितानि सामर्थ्यायातानि तानि शयनासनानि—शय्याफलकादीन्याचक्ष्व, सुधर्मस्वामी जम्बूनाम्नाऽभिहितो, यानि सेवितवान् महावीरो—वर्द्धमानस्वामीति, अयं च श्लोकश्चिरन्तनटीकाकारेण न व्याख्यातः, तत्र किं सुगमत्वादुताभावात्, सूत्रपुस्तकेषु तु दृश्यते, तदभिप्रायं च वयं न विद्म इति ॥ प्रश्नप्रतिवचनमाह—भगवतो ह्याहाराभिग्रहवत् प्रतिमाव्यतिरेकेण प्रायशो न शय्याऽभिग्रह आसीत्, नवरं यत्रैव चरमपौरुषी भवति तत्रैवानुज्ञाप्य स्थितवान्, तद्दर्शयति—आ—समन्ताद्विशन्ति यत्र तदावेशनं—शून्यगृहं सभा नाम ग्रामनगरादीनां तद्वासिलोकास्थायिकार्थमागन्तुकशयनार्थं च कुड्याद्याकृतिः क्रियते, 'प्रपा' उदकदानस्थानम् आवेशनं च सभा च प्रपा च आवेशनसभाप्रपास्तासु, तथा 'पण्यशालासु' आपणेषु 'एकदा'

कदाचिद्वासो भगवतोऽथवा 'पलिय'न्ति कर्म्म तस्य स्थानं कर्म्मस्थानं—अयस्कारवर्द्धकिकुड्यादिकं, तथा पलालपुञ्जेषु मञ्चोपरि व्यवस्थितेष्वधो, न पुनस्तेष्वेव, शुषिरत्वादिति ॥ किं च-श्रमञ्जायाता आगत्य वा यत्र तिष्ठन्ति तदागन्तारं तत्पुनर्ग्रामान्नगराद्वा बहिः स्थानं तत्र, तथा आरामेऽगारं-गृहमारामागारं तत्र वा तथा नगरे वा एकदा वास', तथा श्मशाने शून्यागारे वा, आवेशशून्यागारयोर्भेदः सकुड्याकुड्यकृतो, वृक्षमूले वा एकदा वास इति ॥ किं च-'एतेषु' पूर्वोक्तेषु 'शयनेषु' वसतिषु स 'मुनिः' जगत्त्रयवेत्ता ऋतुबद्धेषु वर्षासु वा 'श्रमणः' तपस्युद्युक्तः समना वाऽऽसीत् निश्चलमना इत्यर्थः, कियन्तं कालं यावदिति दर्शयति-'पतेलसवासे'त्ति प्रकर्षेण त्रयोदशं वर्षं यावत्समस्तां रात्रिं दिनमपि यतमानः संयमानुष्ठान उद्युक्तवान् तथाऽप्रमत्तो-निद्रादिप्रमादरहितः 'समाहितमनाः' विस्रोतसिकारहितो धर्म्मध्यानं शुक्लध्यानं वा ध्यायतीति ॥ किं च—

५

णिद्दंपि नो पगामाए, सेवइ भगवं उट्ठाए। जग्गावइ य अप्पाणं ईसिं साई य अपडिन्ने ॥६९॥ संबुज्झमाणे पुणरवि आसिंसु भगवं उट्ठाए। निक्खम्म एगया राओ बहि चंकमिया मुहुत्तागं ॥७०॥ सयणेहिं तत्थुवसग्गा भीमा आसी अणेगरूवा य। संसप्पगा य जे पाणा अदुवा जे पक्खिणो उवचरन्ति ॥७१॥ अदु कुचरा उवचरन्ति गामरक्खा य सत्तिहत्था य। अदु गामिया उवसग्गा इत्थी एगइया पुरिसा य ॥७२॥

१०

निद्रामप्यसावपरप्रमादरहितो न प्रकामतः सेवते, तथा च किल भगवतो द्वादशसु संवत्सरेषु मध्येऽस्थिकग्रामे व्यन्तरोपसर्गान्ते कायोत्सर्गव्यवस्थितस्यैवान्तर्मुहूर्त्तं यावत्स्वप्नदर्शनाध्यासिनः सकृन्निद्राप्रमाद आसीत्, ततोऽपि चोत्थायात्मानं 'जागरयति' कुशलानुष्ठाने प्रवर्त्तयति, यत्रापीषच्छय्याऽऽसीत् तत्राप्यप्रतिज्ञः–प्रतिज्ञारहितो, न तत्रापि स्वापाभ्युपगमपूर्वकं शयित इत्यर्थः॥ किं च-स मुनिर्निद्राप्रमादाद् व्युत्थितचित्तः 'संबुध्यमानः' संसारपातायायं प्रमाद इत्येवमवगच्छन् पुनरप्रमत्तो भगवान् संयमोत्थानेनोत्थाय यदि तत्रान्तर्व्यवस्थितस्य कुतश्चिन्निद्राप्रमादः स्यात् ततस्तस्मान्निष्क्रम्यैकदा शीतकालरात्र्यादौ बहिश्चङ्क्रम्य मुहूर्त्तमात्रं निद्राप्रमादापनयार्थं ध्याने स्थितवानिति॥ किं च-शय्यते-स्थीयते उत्कटुकासनादिभिर्येष्विति शयनानि—आश्रयस्थानानि तेषु तैर्वा तस्य भगवत उपसर्गा 'भीमा' भयानका आसन् अनेकरूपाश्च शीतोष्णादिरूपतयाऽनुकूलप्रतिकूलरूपतया वा, तथा संसर्प्पन्तीति संसर्प्पकाः–शून्यगृहादावहिनकुलादयो ये प्राणिनः 'उपचरा'उप–सामीप्येन मांसादिकमश्नन्ति अथवा श्मशानादौ पक्षिणो गृध्रादय उपचरन्तीति वर्त्तते॥ किं च–'अथ'अनन्तरं कुत्सितं चरन्तीति कुचराः–चौरपारदारिकादयस्ते च क्वचिच्छून्यगृहादौ 'उपचरन्ति' उपसर्गयन्ति, तथा ग्रामरक्षादयश्च त्रिकचत्वरादिव्यवस्थितं शक्तिकुन्तादिहस्ता उपचरन्तीति, अथ 'ग्रामिका' ग्रामधर्म्माश्रिता उपसर्गा एकाकिनः स्युः, तथाहि—काचित्स्त्री रूपदर्शनाध्युपपन्ना उपसर्गयेत् पुरुषो वेति॥ किं च—

इहलोइयाइं परलोइयाइं भीमाइं अणेगरूवाइं। अवि सुब्भिदुब्भिगन्धाइं सद्दाइं अणेगरूवाइं॥७३॥ अहियासए सया समिए फासाइं विरूवरूवाइं। अरइं रइं अभिभूय रीयइ

माहणे अबहुवाई ॥७४॥ स जणेहिं तत्थ पुच्छिसु एगचराविं एगया राओ। अव्वाहिए कसाइत्था पेहमाणे समाहिं अपडिन्ने ॥७५॥ अयमंतरंसि को इत्थ? अहमंसित्ति भिक्खु आहट्टु। अयमुत्तमे से धम्मे तुसिणीए कसाइए झाइ ॥७६॥

इहलोके भवा ऐहलौकिकाः-मनुष्यकृताः, के ते?—'स्पर्शाः' दुःखविशेषा दिव्यास्तैरश्चाश्च पारलौकिकास्तानुपसर्गापादितान् दुःखविशेषानध्यासयति-अधिसहते, यदिवा इहैव जन्मनि ये दुःखयन्ति दण्डप्रहारादयः प्रतिकूलोपसर्गास्त ऐहलौकिकाः, तद्विपर्यस्तास्तु पारलौकिकाः, 'भीमा' भयानका 'अनेकरूपाः' नानाप्रकाराः, तानेव दर्शयति—अपि सुरभिगन्धाः—स्रक्चन्दनादयो दुर्गन्धाः-कुथितकडेवरादयः, तथा शब्दाश्चानेकरूपा वीणावेणुमृदङ्गादिजनिताः तथा क्रमेलकरसिताद्युत्थापितास्तांश्चाविकृतमना 'अध्यासयति' अधिसहते, सदा-सर्वकालं सम्यगितः समितः-पञ्चभिः समितिभिर्युक्तः, तथा स्पर्शान्—दुःखविशेषानरतिं संयमे रतिं चोपभोगाभिष्वङ्गेऽभिभूय-तिरस्कृत्य 'रीयते' संयमानुष्ठाने व्रजति, 'माहणे'त्ति पूर्ववद् अबहुवादी अबहुभाषी, एकद्विव्याकरणं क्वचिन्निमित्ते कृतवानिति भावः ॥ 'स' भगवानर्द्धत्रयोदश पक्षाधिकाः समा एकाकी विचरन् तत्र शून्यगृहादौ व्यवस्थितः सन् 'जनैः' लोकैः पृष्टः, तद्यथा-को भवान्? किमत्र स्थितः? कुतस्त्यो वेत्येवं पृष्टोऽपि तूर्णीभावमभजत्, तथोपपत्याद्या अप्येकचरा-एकाकिन एकदा-कदाचिद्रात्रावह्नि वा पप्रच्छुः, अव्याहृते च भगवता कषायिताः ततो ज्ञानावृतदृष्टयो दण्डमुष्ट्यादिताडनतोऽनार्यत्वमाचरन्ति, भगवांस्तु तत्समाधिं प्रेक्षमाणो धर्मध्यानोपगतचित्तः सन् सम्यक्तितिक्षते, किंभूतः?—'अप्रतिज्ञो नास्य

रनिर्यातनप्रतिज्ञा नियत इत्यप्रतिज्ञः ॥ कथं ते पप्रच्छुरिति दर्शयितुमाह–अयमन्तः–मध्ये कोऽत्र व्यवस्थितः ?, एवं सङ्केतागता दुश्चारिणः पृच्छन्ति कर्म्मकरादयो वा, तत्र नित्यवासिनो दुष्प्रणिहितमानसाः पृच्छन्ति, तत्र चैवं पृच्छतामेषां भगवांस्तूष्णीभावेन भजते, कचिद्वहुतरदोषापनयनाय जल्पत्यपि, कथमिति दर्शयति–अहं भिक्षुरस्मीति, एवमुक्ते यदि तेऽवधारयन्ति ततस्तिष्ठत्येव, अथाभिप्रेतार्थव्याघातात् कषायिता मोहान्धाः साम्प्रतेक्षितयैवं ब्रूयुः, यथा–तूर्णमस्मात्स्थानान्निर्गच्छ, ततो भगवानचियत्तावग्रह इतिकृत्वा निर्गच्छत्येव, यदि वा न निर्गच्छत्येव भगवान्, किंतु सोऽयमुत्तमः प्रधानो धर्म्म आचार इतिकृत्वा स कषायितेऽपि तस्मिन् गृहस्थे तूष्णीभावव्यवस्थितो यद्भविष्यत्तया ध्यायत्येव–न ध्यानात्प्रच्यवते ॥ किं च–

जंसिप्पेगे पवेयन्ति सिसिरे मारुए पवायन्ते। तंसिप्पेगे अणगारा हिमवाए निवायमेसन्ति ॥७७॥ संघाडीओ पवेसिस्सामो एहा य समादहमाणा । पिहिया व सक्खामो अइदुक्खे हिमगसंफासा ॥७८॥ तंसि भगवं अपडिन्ने अहे विगडे अहियासए। दविए निक्खम्म एगया राओ ठाइए भगवं समियाए ॥७९॥ एस विही अणुक्कन्तो माहणेण मईमया। बहुसो अपडिण्णेण भगवया एवं रीयन्ति ॥८०॥ त्तिबेमि नवमस्य द्वितीय उद्देशक: ९–२ ॥

यस्मिन् शिशिरादावप्येके त्वक्त्राणाभावतया 'प्रवेपन्ते' दन्तवीणादिमन्विताः कम्पन्ते, यदि वा 'प्रवेदयन्ति' शीतजनितं

शीत-
पीडा

आचा०
९ उप०
२ उद्दे०

दुःखस्पर्शमनुभवन्ति, आर्त्तध्यानवशगा भवन्तीत्यर्थः, तस्मिंश्च शिशिरे हिमकणिनि मारुते च प्रवाति सति एके न सर्वे 'अनगाराः' तीर्थिकप्रव्रजिता हिमवाते सति शीतपीडितास्तदपनोदाय पावकं प्रज्वालयन्ति-अङ्गारशकटिकामन्वेषन्ति, प्रावारादिकं याचन्ते, यदिवाऽनगारा इति-पार्श्वनाथतीर्थप्रव्रजिता गच्छवासिन एव शीतार्दिता निवातमेषन्ति-पक्ष्मशालादिका वसतीर्वातायनादिरहिताः प्रार्थयन्ति ॥ किं च-इह सङ्घाटीशब्देन शीतापनोदक्षमं कल्पद्वयं त्रयं वा गृह्यते, ताः सङ्घाटीः शीतार्दिता वयं प्रवेक्ष्यामः, एवं शीतार्दिता अनगारा अपि विदधति, तीर्थिकप्रव्रजितास्त्वेधाः-समिधः काष्ठानीतियावद् एताश्च समादहन्तः शीतस्पर्शं सोढुं शक्ष्यामः, तथा संघाट्या वा पिहिताः-स्थगिताः कम्बलाद्यावृतशरीरा इति, किमर्थमेतत्कुर्वन्तीति दर्शयति-यतोऽतिदुःखमेतद्-अतिदुःसहमेतद् यदुत हिमसंस्पर्शाः, शीतस्पर्शवेदना दुःखेन सह्यन्त इतियावत् ॥ तदेवमेवंभूते शिशिरे यथोक्तानुष्ठानवत्सु च स्वयूथ्येतरेष्वनगारेषु यद्भगवान् व्यधात्तद्दर्शयितुमाह-'तस्मिन्' एवंभूते शिशिरे हिमवाते शीतस्पर्शे च सर्वंकषे 'भगवान्' ऐश्वर्यादिगुणोपेतस्तं शीतस्पर्शमध्यासयति-अधिसहते, किंभूतोऽसौ ?-'अप्रतिज्ञो' न विद्यते निवातवसतिप्रार्थनादिका प्रतिज्ञा यस्य स तथा, क्वाध्यासयति ?-'अधो विकटे' अधः-कुड्यादिरहिते छन्नेऽप्युपरि तदभावेऽपि चेति, पुनरपि विशिनष्टि-रागद्वेषविरहाद्द्रव्यभूतः कर्मग्रन्थिद्रावणाद्वा द्रवः-संयमः स विद्यते यस्यासौ द्रविकः, स च तथाऽध्यासयन् यद्यत्यन्तं शीतेन बाध्यते ततस्तस्मात् छन्नान्निष्क्रम्य बहिरेकदा-रात्रौ मुहूर्त्तमात्रं स्थित्वा पुनः प्रविश्य स भगवान् शमितया सम्यग्वा समतया वा व्यवस्थितः सन् तं शीतस्पर्शं रासभदृष्टान्तेन सोढुं शक्नोति-अधिसहत इति ॥ एतदेवोद्देशकार्थमुपसंजिहीर्षुराह-'एस विही' इत्याद्यनन्तरोद्देशकवन्नेयमिति । इतिब्रवीमीतिशब्दौ पूर्ववद् । उपधानश्रुतस्य द्वितीयोद्देशकः परिसमाप्त इति ॥

५

१०

प्र. आ.
२०९

उक्तो द्वितीयोद्देशकः, साम्प्रतं तृतीय आरभ्यते, अस्य चायमभिसम्बन्धः—इहानन्तरोद्देशके भगवतः शय्याः प्रतिपादिताः, तासु च व्यवस्थितेन ये यथोपसर्गाः परीषहाश्च सोढास्तत्प्रतिपादनार्थमिदमुपक्रम्यत इत्यनेन सम्बन्धेनायातस्यास्योद्देशकस्यादिसूत्रम्—



तणफासे सीयफासे य तेउफासे य दंसमसगे य। अहियासए सया समिए फासाइं विरूवरूवाइं ॥८१॥ अह दुच्चरलाढमचारी वज्जभूमिं च सुब्भभूमिं च। पंतं सिज्जं सेविंसु आसणगाणि चेव पंताणि ॥८२॥ लाढेहिं तस्सुवसग्गा बहवे जाणवया लूसिंसु। अह लूहदेसिए भत्ते कुक्कुरा तत्थ हिंसिंसु निवइंसु ॥८३॥ अप्पे जणे निवारेइ लूसणए सुणए दसमाणे। छुच्छुकारिंति आहंसु समणं कुक्कुरा दसंतुत्ति॥ ८४॥

२०

तृणानां—कुशादीनां स्पर्शास्तृणस्पर्शाः तथा शीतस्पर्शाः तथा तेजःस्पर्शा—उष्णस्पर्शाश्चातापनादिकाले आसन्, यदिवा गच्छतः किल भगवतस्तेजःकाय एवासीत्, तथा दंशमशकादयश्च, एतान् तृणस्पर्शादीन् 'विरूपरूपान्' नानाभूतान् भगवानध्यासयति, सम्यगितः—सम्यग्भावं गतः समितिभिः समितो वेति॥ किं च—'अथ' आनन्तर्ये दुःखेन चर्यतेऽस्मिन्निति दुश्चरः स चासौ लाढश्च—जनपदविशेषो दुश्चरलाढस्तं चीर्णवान्—विहृतवान्, स च द्विरूपो—वज्रभूमिः शुभ्रभूमिश्च, तं द्विरूपमपि विहृतवान्, तत्र च प्रान्तां 'शय्यां' वसतिं शून्यगृहादिकामनेकोपद्रवोपद्रुतां सेवितवान्, तथा प्रान्तानि चासनानि—पांशूत्करशर्करालोष्टाद्युपचितानि च काष्ठानि

च दुर्घटितान्यासेवितवानिति ॥ किं च-लाढा नाम जनपदविशेषास्तेषु च द्विरूपेष्वपि लाढेषु 'तस्य' भगवतो बहव उपसर्गाः प्रायशः प्रतिकूला आक्रोशश्वभक्षणादय आसन्, तानेव दर्शयति-जनपदे भवा जानपदा-अनार्याऽऽचारिणो लोकाः ते भगवन्तं लूषितवन्तो-दन्तभक्षणोल्मुकदण्डप्रहारादिभिर्जिहिंसुः, अथशब्दोऽपिशब्दार्थे, स चैवं द्रष्टव्यः, भक्तमपि तत्र 'रूक्षदेश्यं' रूक्षकल्पमन्तप्रान्तमितियावत्, ते चानार्यतया प्रकृतिक्रोधनाः कर्पासाद्यभावत्वाच्च तृणप्रावरणाः सन्तो भगवति विरूपमाचरन्ति, तथा तत्र 'कुक्कुराः' श्वानस्ते च जिहिंसुः, उपरि च निपेतुरिति ॥ किं च-'अल्पः' स्तोकः स जनो यदि परं सहस्राणामेको यदिवा नास्त्येवासाविति यस्तान् शुनो लूषकान् दशतो 'निवारयति' निषेधयति, अपि तु दण्डप्रहारादिभिर्भगवन्तं हत्वा तत्प्रेरणाय सीत्कुर्वन्ति, कथं नामैनं श्रमणं कुक्कुराः-श्वानो दशन्तु-भक्षयन्तु ?, तत्र चैवंविधे जनपदे भगवान् षण्मासावधिं कालं स्थितवानिति ॥ किं च- ५



एलिक्खए जणा भुज्जो बहवे वज्जभूमि फरुसासी । लट्ठिं गहाय नालियं समणा तत्थ य विहरिंसु ॥८५॥ एवंपि तत्थ विहरन्ता पुट्ठपुव्वा अहेसि सुणिएहिं । संलुञ्चमाणा सुणएहिं दुच्चराणि तत्थ लाढेहिं ॥८६॥ निहाय दण्डं पाणेहिं तं कायं वोसरिज्जमणगारे । अह गामकण्टए भगवन्ते अहिआसए अभिसमिच्चा ॥८७॥ नागो संगामसीसे वा पारए तत्थ से महावीरे । एवंपि तत्थ लाढेहिं अलद्धपुव्वोवि एगया गामो ॥८८॥ १०

१० उ५०
९ उ५०
३ उ६०

'ईदृश:' पूर्वोक्तस्वभावो यत्र जनस्तं तथाभूतं जनपदं भगवान् 'भूयः' पौनःपुन्येन विहृतवान्, तस्यां च वज्रभूमौ बहवो जनाः रूक्षाशिनो-रूक्षाशिनो रूक्षाशितया च प्रकृतिक्रोधनास्ततो यतिरूपमुपलभ्य कदर्थयन्ति, ततस्तत्रान्ये श्रमणाः शाक्यादयो यष्टिं-देह-प्रमाणां चतुरङ्गुलाधिकप्रमाणां वा नालिकां गृहीत्वा श्वादिनिषेधनाय विजहुरिति ॥ किं च एवमपि यष्ट्यादिकया सामग्र्या श्रमणा विहरन्तः 'स्पृष्टपूर्वा' आरब्धपूर्वाः श्वभिरासन्, तथा 'संलुच्यमाना' इतश्चेतश्च भक्ष्यमाणाः श्वभिरासन्, दुर्निवारत्वात्तेषां, 'तत्र' तेषु लाढेष्वार्यलोकानां दुःखेन चर्यन्त इति दुश्चराणि-ग्रामादीनीति ॥ तदेवंभूतेष्वपि लाढेषु कथं भगवान् विहृतवानिति दर्शयितुमाह-प्राणिषु यो दण्डनाद्दण्डो-मनोवाक्कायादिकस्तं भगवान् 'निधाय' त्यक्त्वा, तथा तच्छरीरमप्यनगारो व्युत्सृज्याथ 'ग्रामकण्टकान्' नीचजनरूक्षालापानपि भगवांस्तांस्तान् सम्यक्करणतया निर्जरामभिसमेत्य-ज्ञात्वाऽध्यासयति-अधिसहते ॥ कथमधिसहत इति दृष्टान्तद्वारेण दर्शयितुमाह-'नागो' हस्ती यथाऽसौ संग्राममूर्द्धनि परानीकं जित्वा तत्पारगो भवति एवं भगवानपि महावीरस्तत्र लाढेषु परीषहानीकं विजित्य पारगोऽभूत्, किं च-'तत्र' लाढेषु विरलत्वाद्ग्रामाणां क्वचिदेकदा वासायालब्धपूर्वो ग्रामोऽपि भगवता ॥ किं च-

उवसंकमन्तमपडिन्नं गामंतियम्मि अप्पत्तं । पडिनिक्खमित्तु लूसिंसु एयाओ परं पलेहित्ति ॥८९॥ हयपुव्वो तत्थ दण्डेण अदुवा मुट्ठिणा अदु कुन्तफलेण । अदु लेलुणा कवालेण हन्ता हन्ता बहवे कन्दिंसु ॥९०॥ मंसाणि छिन्नपुव्वाणि उट्ठंभिया एगया कायं । परीसहाइं लुंचिंसु

लाढ-
विहार
१५

२०


२४

अदुवा पंसुणा उवकरिंसु ॥११॥ उच्चालइय निहणिंसु अदुवा आसणाउ खलइंसु। वोसट्ठकायपणयाऽऽसी दुक्खसहे भगवं अपडिन्ने ॥१२॥

'उपसंक्रामन्तं' भिक्षार्थं ग्रामाय वा गच्छन्तं, किंभूतम्–'अप्रतिज्ञं' नियतनिवासादिप्रतिज्ञारहितं ग्रामान्तिकं प्राप्तमप्राप्तमपि तस्माद्ग्रामात्प्रतिनिर्गत्य ते जना भगवन्तमलूषिषुः, एतच्चोचुः–इतोऽपि स्थानात्परं दूरतरं स्थानं 'पर्येहि' गच्छेति ॥ किं च–तत्र ग्रामादेर्बहिर्व्यवस्थितः पूर्वं हतो हतपूर्वः, केन ?–दण्डेनाथवा मुष्टिनाऽथवा कुन्तादिफलेनाथवा लेष्टुना कपालेन–घटखर्परादिना हत्वा हत्वा महतोऽनार्याश्चक्रन्दुः–पश्यत यूयं किंभूतोऽयमित्येवं कलकलं चक्रुः ॥ किं च–मांसानि च तत्र भगवतश्छिन्नपूर्वाणि एकदा कायमवष्टभ्य–आक्रम्य तथा नानाप्रकाराः प्रतिकूलपरीषहाश्च भगवन्तमलुञ्चिषुः, अथवा पांसुनाऽवकीर्णवन्त इति ॥ किं च–भगवन्तमूर्ध्वमुत्क्षिप्य भूमौ 'निहतवन्तः' क्षिप्तवन्तः, अथवा 'आसनात्' गोदोहिकोत्कटुकासनवीरासनादिकात् 'स्खलितवन्तो' निपातितवन्तः, भगवांस्तु पुनर्व्युत्सृष्टकायः परीषहसहनं प्रति प्रणत आसीत्, परीषहोपसर्गकृतं दुःखं सहत इति दुःखसहो भगवान्, नास्य दुःखचिकित्साप्रतिज्ञा विद्यत इत्यप्रतिज्ञः ॥ कथं दुःखसहो भगवानित्येतद्दृष्टान्तद्वारेण दर्शयितुमाह—



५

सूरो संगामसीसे वा संवुडे तत्थ से महावीरे । पडिसेवमाणे फरुसाइं अचले भगवं रीयित्था ॥१३॥ एस विही अणुक्कन्तो० जाव रीयं ॥१४॥ त्तिबेमि ९–३ ॥

१०

यथा हि संग्रामशिरसि 'शूरः' अक्षोभ्यः परैः कुन्तादिभिर्भिद्यमानोऽपि वर्मणा संवृताङ्गो न भङ्गमुपयातीति, एवं स भगवा-

न्महावीरः 'तत्र' लाढादिजनपदे परीषहानभिकुध्यमानोऽपि प्रतिसेवमानश्च 'परुषान्' दुःखविशेषान् मेरुरिवाचलो–निष्प्रकम्पो धृत्या संवृताङ्गो भगवान् 'रीयते स्म' ज्ञानदर्शनचारित्रात्मके मोक्षाध्वनि पराक्रमते स्मेति ॥ उद्देशकार्थमुपसंजिहीर्षुराह–'एस विही'त्यादि पूर्ववत् ॥ उपधानश्रुताध्ययनस्य तृतीयोद्देशकः परिसमाप्तः ॥

---

उक्तस्तृतीयोद्देशकः साम्प्रतं चतुर्थ आरभ्यते, अस्य चायमभिसम्बन्धः–इहानन्तरोद्देशके भगवतः परीषहोपसर्गाधिसहनं प्रतिपादितं, तदिहापि रोगातङ्कपीडाचिकित्साभ्युदासेन सम्यगधिसहते तदुत्पत्तौ च नितरां तपश्चरणायोद्यच्छतीत्येतत्प्रतिपाद्यते, तदनेन सम्बन्धेनायातस्यास्योद्देशकस्यादिसूत्रम्–

ओमोयरियं चाएइ अपुट्ठेऽवि भगवं रोगेहिं । पुट्ठे वा अपुट्ठे वा नो से साइज्जई तेइच्छं ॥९५॥ संसोहणं च वमणं च गायब्भंगणं च सिणाणं च । संबाहणं च न से कप्पे दन्तपक्खालणं च परिन्नाए ॥९६॥ विरए गामधम्मेहिं रीयइ माहणे अबहुवाई । सिसिरंमि एगया भगवं छायाए झाइ आसीय ॥९७॥ आयावइ य गिम्हाणं अच्छइ उक्कुडुए अभित्तावे । अदु जाव इत्थ लूहेणं ओयणमंथुकुम्मासेणं ॥९८॥

रोग-१५ सहनं

२०

पमिति समाहारद्वन्द्वः तेनात्मानं यापयतीति सम्बन्ध इति ॥ एतदेव कालावधिविशेषणतो दर्शयितुमाह—



एयाणि तिन्नि पडिसेवे अट्ठ मासे अ जावयं भगवं। अपि इत्थ एगया भगवं अद्धमासं अदुवा मासंपि ॥९९॥ अपि साहिए दुवे मासे छप्पि मासे अदुवा विहरित्था। राओवरायं अपडिन्ने अन्नगिलायमेगया भुंजे ॥१००॥ छट्ठेण एगया भुंजे अदुवा अट्ठमेण दसमेणं। दुवालसमेण एगया भुंजे पेहमाणे समाहिं अपडिन्ने ॥१०१॥ णच्चा णं से महावीरे नोऽवि य पावगं सयमकासी। अन्नेहिं वा ण कारित्था कीरंतंपि नाणुजाणित्था ॥१०२॥

२०

'एतानि' ओदनादीन्यनन्तरोक्तानि प्रतिसेवते, तानि च समाहारद्वन्द्वेन तिरोहितावयवसमुदायप्रधानेन निर्देशात् कस्यचिन्मन्दबुद्धेः स्यादारेका यथा-त्रीण्यपि समुदितानि प्रतिसेवत इति, अतस्तद्व्युदासाय त्रीणीत्यनया सङ्ख्यया निर्देश इति, त्रीणि समस्तानि व्यस्तानि वा यथालाभं प्रतिसेवत इति, कियन्तं कालमिति दर्शयति—अष्टौ मासान् ऋतुबद्धसंज्ञकानात्मानं अयापयद्-वर्त्तितवान् भगवानिति, तथा पानमप्यर्द्धमासमथवा मासं भगवान् पीतवान् ॥ अपि च-मासद्वयमपि साधिकम् अथवा षडपि मासान् साधिकान् भगवान्पानकमपीत्वाऽपि 'रात्रोपरात्र'मित्यहर्निशं विहृतवान्, किंभूतः ?—'अप्रतिज्ञः' पानाभ्युपगमरहित इत्यर्थः, तथा 'अन्नगिलाय'न्ति पर्युषितं तदेकदा भुक्तवानिति ॥ किं च-षष्ठेनैकदा भुङ्क्ते, षष्ठं हि नामैकस्मिन्नहन्येकभक्तं विधाय पुनर्दिनद्वयम-



२६

भुक्त्वा चतुर्थेऽह्न्येकभक्तमेव विधत्ते, ततश्चाद्यन्तयोरेकभक्तदिनयोर्भक्तद्वयं मध्यदिवसयोश्च भक्तचतुष्टयमित्येवं षण्णां भक्तानां परित्यागात्षष्ठं भवति, एवं दिनादिवृद्ध्याऽष्टमाद्यायोज्यमिति, अथाष्टमेन दशमेनाथवा द्वादशमेनैकदा-कदाचिद्भुक्तवान्, 'समाधिं' शरीरसमाधानं 'प्रेक्षमाणः' पर्यालोचयन्, न पुनर्भग्नतः कथंचिद्दौर्मनस्यं समुत्पद्यते, तथाऽप्रतिज्ञः-अनिदान इति ॥ किं च-ज्ञात्वा हेयोपादेयं स महावीरः कर्मप्रेरणसहिष्णुर्नापि च पापकं कर्म्म स्वयमकार्षीत् न चाप्यन्यैरचीकरत् न च क्रियमाणमपरैरनुज्ञातवानिति ॥ किं च—



गामं पविसे नगरं वा घासमेसे कडं परट्ठाए। सुविसुद्धमेसिया भगवं आयतजोगयाए सेवित्था ॥१०३॥ अदु वायसा दिगिंछत्ता जे अन्ने रसेसिणो सत्ता। घासेसणाए चिट्ठन्ति सययं निवइए य पेहाए ॥१०४॥ अदुवा माहणं च समणं वा गामपिण्डोलगं च अतिहिं वा। सोवागमूसियारिं वा कुकुरं वावि विट्ठियं पुरओ ॥१०५॥ वित्तिच्छेयं वज्जन्तो तेसिमप्पत्तियं परिहरन्तो। मन्दं परक्कमे भगवं अहिंसमाणो घासमेसित्था ॥१०६॥



ग्रामं नगरं वा प्रविश्य भगवान् ग्रासमन्वेषयेत्, परार्थाय कृतमित्युद्गमदोषरहितं, तथा सुविशुद्धमुत्पादनादोषरहितं, तथैषणादोषपरिहारेणैषित्वा-अन्वेष्य भगवानायतः-संयतो योगो-मनोवाक्कायलक्षणः आयतश्चासौ योगश्चायतयोगो—ज्ञानचतुष्टयेन

सम्यग्योगप्रणिधानमायतयोगस्तद्भाव आयतयोगता तया सम्यगाहारं शुद्धं ग्रासैषणादोषपरिहारेण सेवितवानिति ॥ किं च—अथ भिक्षां पर्यटतो भगवतः पथि वायसाः—काका 'दिगिंछ'त्ति बुभुक्षा तयाऽऽर्त्ता बुभुक्षार्त्ता ये चान्ये रसैषिणः—पानार्थिनः कपोतपारापतादयः सत्त्वाः तथा ग्रासैषणार्थम्—अन्वेषणार्थं च ये तिष्ठन्ति तान् सततम्—अनवरतं निपतितान् भूमौ 'प्रेक्ष्य' दृष्ट्वा तेषां वृत्तिव्यवच्छेदं वर्जयन् मन्दमाहारार्थी पराक्रमते ॥ किं च—अथ ब्राह्मणं लाभार्थमुपस्थितं दृष्ट्वा तथा श्रमणं शाक्याजीवकपरिव्राट्तापसनिर्ग्रन्थानामन्यतमं 'ग्रामपिण्डोलक' इति भिक्षयोदरभरणार्थं ग्राममाश्रितस्तुन्दपरिमृजो द्रमक इति, तथाऽतिथिं वा—आगन्तुकम् तथा श्वपाकं—चाण्डालं मार्जारीं वा कुक्कुरं वापि—श्वानं विविधं स्थितं 'पुरतः' अग्रतः समुपलभ्य तेषां वृत्तिच्छेदं वर्जयन् मनसो दुष्प्रणिधानं च वर्जयन् मन्दं—मनाक् तेषां त्रासमकुर्वन् भगवान् पराक्रमते, तथा परांश्च कुन्थुकादीन् जन्तून् अहिंसन् ग्रासमन्वेषितवानिति ॥ किं च—

अवि सूइयं वा सुक्कं वा सीयं पिंडं पुराणकुम्मासं। अदु बुक्कसं पुलागं वा लद्धे पिंडे अलद्धे दविए ॥१०७॥ अवि झाइ से महावीरे आसणत्थे अकुक्कुए झाणं । उड्ढं अहे तिरियं च पेहमाणे समाहिमपडिन्ने ॥१०८॥ अकसाई विगयगेही य सद्दरूवेसु अमुच्छिए झाई । छउमत्थोऽवि परक्कममाणो न पमायं सइंपि कुव्वित्था ॥१०९॥ सयमेव अभिसमागम्म


१५
२०

न प्रमादं-कषायादिकं सकृदपि कृतवानिति ॥ किं च-स्वयमेव-आत्मना तत्त्वमभिसमागम्य विदितसंसारस्वभावः स्वयंबुद्धः संस्तीर्थप्रवर्त्तनायोद्यतवान्, तथा चोक्तम्-"आदित्यादिर्विबुधविसरः सारमस्यां त्रिलोक्यामास्कन्दन्तं पदमनुपमं यच्छिवं त्वामुवाच। तीर्थं नाथो लघुभवभयच्छेदि तूर्णं विधत्स्वेत्येतद्वाक्यं त्वदधिगतये नो किमु स्यान्नियोगः ? ॥१॥" इत्यादि, कथं तीर्थप्रवर्त्तनायोद्यत इति दर्शयति-'आत्मशुद्ध्या' आत्मकर्मक्षयोपशमोपशमक्षयलक्षणयाऽऽयतयोगं-सुप्रणिहितं मनोवाक्कायात्मकं विधाय विषयकषायाद्युपशमादिभिर्निर्वृत्तः शीतीभूतः, तथा अमायावी---मायारहितः, उपलक्षणार्थत्वादस्याक्रोधाद्यपि द्रष्टव्यं, 'यावत्कथ'मिति यावज्जीवं भगवान् पञ्चभिः समितिभिः समितः तथा तिसृभिर्गुप्तिभिर्गुप्तश्चासीदिति ॥ श्रुतस्कन्धाध्ययनोद्देशकार्थमुपसंजिहीर्षुराह-एषः-अनन्तरोक्तः शस्त्रपरिज्ञादेरारभ्य योऽभिहितः सोऽनुक्रान्तः-अनुष्ठित आसेवनापरिज्ञया आसेवितः, केन ?-श्रीवर्द्धमानस्वामिना 'मतिमता' ज्ञानचतुष्टयान्वितेन बहुशः- अनेकशोऽप्रतिज्ञेन-अनिदानेन भगवता-ऐश्वर्यादिगुणोपेतेन, अतोऽपरोऽपि मुमुक्षुरनेनैव भगवदाचीर्णेन मोक्षप्रगुणेन पथाऽऽत्महितमाचरन् रीयते—पराक्रमते, इतिरधिकारपरिसमाप्तौ, ब्रवीमीति सुधर्मस्वामी जम्बूस्वामिने कथयति-सोऽहं ब्रवीमि येन मया भगवद्वदनारविन्दादर्थजातं निर्यातमवधारितमिति ॥ उक्तोऽनुगमः सूत्रालापकनिष्पन्ननिक्षेपश्च सूत्रस्पर्शनिर्युक्तिकः, साम्प्रतं नयाः, ते च नैगमसङ्ग्रहव्यवहारऋजुसूत्रशब्दसमभिरूढैवंभूतभेदभिन्नाः सामान्यतः सप्त, ते चान्यत्र सम्मत्यादौ लक्षणतो विधानतश्च न्यक्षेणाभिहिता इति, इह पुनस्त एव ज्ञानक्रियानयान्तर्भावद्वारेण समासतः प्रोच्यन्ते, अधिकृतानाराङ्गस्य ज्ञानक्रियात्मकतयोभयरूपत्वात् ज्ञानक्रियाधीनत्वान्मोक्षस्य तदर्थं च शास्त्रप्रवृत्तेरिति भावः, अत्र च परस्परतः सव्यपेक्षावेव ज्ञानक्रियानयौ विवक्षितकार्यसिद्धयेऽलं नान्योऽन्यनिरपेक्षावित्येतत्प्रपञ्च्यते; तत्र ज्ञाननयाभिप्रायोऽयम्

-यथा ज्ञानमेव प्रधानं, न क्रियेति, समस्तहेयोपादेयहानोपादानप्रवृत्तेर्ज्ञानाधीनत्वात्, तथाहि-सुनिश्चितात् सम्यग्ज्ञानात्प्रवृत्तोऽर्थक्रियार्थी न विसंवाद्यते, तथा चोक्तम्-"विज्ञप्तिः फलदा पुंसां, न क्रिया फलदा मता। मिथ्याज्ञानात् प्रवृत्तस्य, फलासंवाददर्शनाद् ॥१॥" इत्यादि, संविन्निष्ठत्वाच्च विषयव्यवस्थितीनां तत्पूर्वकसकलदुःखप्रहीणत्वाचान्वयव्यतिरेकदर्शनाच्च ज्ञानस्य प्राधान्यं, तथाहि-ज्ञानाभावेऽनर्थपरिहाराय प्रवर्त्तमानोऽपि तत्करोति येन नितरां पतङ्गवदनर्थेन संयुज्यते. ज्ञानसद्भावे च समस्तानप्यर्थानर्थसंशयांश्च यथाशक्तितः परिहरति, तथा चागमः-'पढमं नाणं तओ' इत्यादि, एवं तावत्क्षायोपशमिकं ज्ञानमाश्रित्योक्तं, क्षायिकमप्याश्रित्य तदेव प्रधानं, यस्माद्भगवतः प्रणतसुरासुरमुकुटकोटिवेदिकाङ्कितचरणयुगलपीठस्य भवाम्भोधितटस्थस्य प्रतिपन्नदीक्षस्य त्रिलोकबन्धोस्तपश्चरणवतोऽपि न तावदपवर्गप्राप्तिः सञ्जायते यावज्जीवाजीवाद्यखिलवस्तुपरिच्छेदरूपं घनघातिकर्म्मसंहतिक्षयात्केवलज्ञानं नोत्पन्नमित्यतो ज्ञानमेव प्रधानमैहिकामुष्मिकफलप्राप्तिकारणं, युक्तियुक्तत्वादिति। अधुना क्रियानयाभिप्रायोऽभिधीयते, तद्यथा-क्रियैव प्रधानमैहिकामुष्मिकफलप्राप्तिकारणं, युक्तियुक्तत्वात्, यस्माद्दर्शितेऽपि ज्ञानेनार्थक्रियासमर्थेऽर्थे प्रमाता प्रेक्षापूर्वकारी यदि हानोपादानरूपां प्रवृत्तिक्रियां न कुर्यात् ततो ज्ञानं विफलतामियात्, तदर्थत्वात्तस्येति, यस्य हि यदर्थं प्रवृत्तिस्तत्तस्य प्रधानमितरदप्रधानमिति न्यायात्, संविदा विषयव्यवस्थानस्याप्यर्थक्रियार्थत्वात्क्रियायाः प्राधान्यम्, अन्वयव्यतिरेकावपि क्रियायां समुपलभ्येते, यतः-सम्यक्चिकित्साविधिज्ञोऽपि यथार्थौषधावाप्तावपि उपयोगक्रियारहितो नोल्लाघतामेति, तथा चोक्तम्-"शास्त्राण्यधीत्यापि भवन्ति मूर्खा, यस्तु क्रियावान् पुरुषः स विद्वान्। संचिन्त्यतामौषधमातुरं हि, किं ज्ञानमात्रेण करोत्यरोगम्? ॥१॥" तथा "क्रियैव फलदा पुंसां, न ज्ञानं फलदं मतम्। यतः स्त्रीभक्ष्यभोगज्ञो, न ज्ञानात्सुखितो भवेत् ॥२॥" इत्यादि, तत्क्रियायुक्तस्तु

यथाऽभिलषितार्थभाग्भवत्यपि, कुत इति चेत्, न हि दृष्टेऽनुपपन्नं नाम, न च सकललोकप्रत्यक्षसिद्धेऽर्थेऽन्यत्प्रमाणान्तरं मृग्यत इति, तथाऽऽमुष्मिकफलप्रार्थिनाऽपि तपश्चरणादिका क्रियैव कर्तव्या, मौनीन्द्रं प्रवचनमप्येवमेव व्यवस्थितं, यत उक्तं–'चेइयकुलगणसङ्घे आयरियाणं च पवयण सुए य। सव्वेसुऽवि तेण कयं तवसञ्जममुज्जमन्तेणं ॥१॥" इतश्चैतदेवमङ्गीकर्तव्यं यतस्तीर्थकृद्भिः क्रियारहितं ज्ञानमप्यफलमुक्तं, उक्तं च–'सुबहुंपि सुअमहीयं किं काही चरणविप्पहूण(मुक्क)स्स ?। अंधस्स जह पलित्ता दीवसतसहस्सकोडीवि ॥१॥" दृशिक्रियापूर्वकक्रियाविकलत्वात्तस्येति भावः, न केवलं क्षायोपशमिकाज्ज्ञानात्क्रिया प्रधाना, क्षायिकादपि, यतः सत्यपि जीवाजीवाद्यखिलवस्तुपरिच्छेदके ज्ञाने समुल्लसिते न व्युपरतक्रियानिवर्त्तिध्यानक्रियामन्तरेण भवधारणीयकर्म्मोच्छेदः, तदच्छेदाच्च न मोक्षावाप्तिरित्यतो न ज्ञानं प्रधानं, चरणक्रियायां पुनरैहिकामुष्मिकफलावाप्तिरित्यतः सैव प्रधानभावमनुभवतीति, तदेवं ज्ञानमृते सम्यक्रियाया अभावः, तदभावाच्च तदर्थप्रवृत्तस्य ज्ञानस्य वैफल्यम्। एवमादीनां युक्तीनामुभयत्राप्युपलब्धेर्व्याकुलितमतिः शिष्यः पृच्छति–किमिदानीं तत्त्वमस्तु ?, आचार्य आह–नन्वभिहितमेव विसरणशीलो देवानांप्रियो यथा ज्ञानक्रियानयौ परस्परमव्यपेक्षौ सकलकर्म्मकन्दोच्छेदात्मकस्य मोक्षस्य कारणभूताविति, प्रदीप्तममस्तनगरान्तर्वर्त्तिपरस्परोपकार्योपकारकभावावाप्तानाबाधस्थानौ पङ्ग्वन्धाविवेति, तथा चोक्तम्–"संजोयसिद्धीएँ फलं वदन्ती'त्यादि, स्वतन्त्रप्रवृत्तौ तु न







१ चैत्यकुलगणसङ्घे आचार्ये च प्रवचने श्रुते च। सर्वेष्वपि तेन कृतं तपःसंयमे उद्यच्छता ॥१॥ सुबह्वपि श्रुतमधीतं किं करिष्यति विप्रहीणचरणस्य ?। अन्धस्य यथा प्रदीप्ता दीपशतसहस्रकोट्यपि ॥ १ ॥ ३ संयोगसिद्धौ फलं वदन्ति (नैकचक्रेण रथः प्रयाति) अन्धश्च पङ्गुश्च वने समेत्य तौ सम्प्रयुक्तौ नगरं प्रविष्टौ ॥ १ ॥

विवक्षितकार्यं साधयत इत्येतच्च प्रसिद्धमेव, यथा 'हयं णाण'मित्यादि, आगमेऽपि सर्वनयोपसंहारद्वारेणायमेवार्थोऽभिहितो, यथा—'सव्वेसिंपि णयाणं बहुविहवत्तव्वयं णिसामेत्ता। तं सव्वणयविसुद्धं जं चरणगुणट्ठिओ साहू ॥१॥त्ति', तदेतदाचाराङ्गं ज्ञानक्रियात्मकं अधिगतसम्यक्पथानां कुश्रुतसरित्कषायझषकुलाकुलं प्रियविप्रयोगाप्रियसंप्रयोगाधनेकव्यसनोपनिपातमहावर्त्तं मिथ्यात्वपवनेरणोपस्थापितभयशोकहास्यरत्यरत्यादितरङ्गं विस्रसावेलाचितं व्याधिशतनक्रचक्रालयं महागम्भीरं भयजननं पश्यतां त्रासोत्पादकं महासंसारार्णवं साधून मुक्तितीर्षतां तदुत्तरणसमर्थमव्याहतं यानपात्रमिति, अतो मुमुक्षुणाऽऽत्यन्तिकैकान्तिकानाबाधं शाश्वतमनन्तमजरममरमक्षयमव्याबाधमुपरतसमस्तद्वन्द्वं सम्यग्दर्शनज्ञानव्रतचरणक्रियाकलापोपेतेन परमार्थपरमकार्यमनुत्तमं मोक्षस्थानं लिप्सुना समालम्बनीयमिति तदात्मकस्य ब्रह्मचर्याख्यश्रुतस्कन्धस्य निर्वृतिकुलीनश्रीशीलाचार्येण तत्त्वादित्यापरनाम्ना वाहरिसाधुसहायेन कृता टीका परिसमाप्तेति ॥ श्लोकतो ग्रन्थमानम् ॥ ९७६ ॥

द्वासप्तत्यधिकेषु हि शतेषु सप्तसु गतेषु गुप्तानाम्। संवत्सरेषु मासि च भाद्रपदे शुक्लपञ्चम्याम् ॥१॥
शीलाचार्येण कृता गम्भूतायां स्थितेन टीकैषा। सम्यगुपयुज्य शोध्यं मात्सर्यविनाकृतैरार्यैः ॥२॥
कृत्वाऽऽचारस्य मया टीकां यत्किमपि संचितं पुण्यम्। तेनाप्नुयाज्जगदिदं निर्वृतिमतुलां सदाचारम् ॥३॥
वर्णः पदमथ वाक्यं पद्यादि च यन्मया परित्यक्तम्। तच्छोधनीयमत्र च व्यामोहः कस्य नो भवति ॥४॥

तत्त्वादित्यपराभिधानश्रीमच्छीलाचार्यविहिता वृत्तिर्ब्रह्मचर्यश्रुतस्कन्धस्य आचाराङ्गस्य समाप्ता ॥

५ १०

* हयं नाणं क्रियाहीनं. १ सर्वेषामपि नयानां बहुविधवक्तव्यतां निशम्य। तत्सर्वनयविशुद्धं यच्चरणगुणस्थितः साधुः ॥१॥

इति श्रीमद्भद्रबाहुस्वामिसंदृब्धनिर्युक्तिसंकलिताचाराङ्गप्रथमश्रुतस्कन्धस्य वृत्तिः श्रीवाहरिगणिविहितसाहाय्यकेन श्रीशीलाङ्काचार्येण तत्त्वादित्यापराभिधानेन विहिताऽऽख्याता संपूर्त्तिम्।

॥ अर्हम् ॥

जयत्यनादिपर्यन्तमनेकगुणरत्नभृत्। न्यक्कृताशेषतीर्थेशं, तीर्थं तीर्थाधिपैर्नुतम् ॥ १ ॥

नमः श्रीवर्द्धमानाय, सदाचारविधायिने । प्रणताशेषगीर्वाणचूडारत्नार्चितांह्रये ॥ २ ॥

आचारमेरोर्गदितस्य लेशतः, प्रवच्मि तच्छेषिकचूलिकागतम् ।

आरिप्सितेऽर्थे गुणवान् कृती सदा, जायेत निःशेषमशेषितक्रियः ॥ ३ ॥



उक्तो नवब्रह्मचर्याध्ययनात्मक आचारश्रुतस्कन्धः, साम्प्रतं द्वितीयोऽग्रश्रुतस्कन्धः समारभ्यते, अस्य चायमभिसम्बन्धः–उक्तं प्रागाचारपरिमाणं प्रतिपादयता, तद्यथा–"नव*बंभचेरमइओ अट्ठारसपयसहस्सिओ वेओ । हवइ य सपंचचूलो बहुबहुअयरो(यरओ) पयग्गेणं ॥१॥" तत्राद्ये–श्रुतस्कन्धे नवब्रह्मचर्याध्ययनानि प्रतिपादितानि,तेषु च न समस्तोऽपि विवक्षितोऽर्थोऽभिहितः,अभिहितोऽपि सङ्क्षेपतः,अतोऽनभिहितार्थाभिधानाय सङ्क्षेपोक्तस्य च प्रपञ्चाय तदग्रभूताश्चतस्रश्चूडा उक्तानुक्तार्थसङ्ग्राहिकाः प्रतिपाद्यन्ते,तदात्मकश्च द्वितीयोऽग्रश्रुतस्कन्धः, इत्यनेन सम्बन्धेनायातस्यास्य व्याख्या प्रतन्यते, तत्र नामस्थापने अनादृत्य द्रव्याग्रनिक्षेपार्थं निर्युक्तिकृदाह–



दव्वो[1]गाहण[2]आएस[3]काल[4]कम[5]गणण[6]संचए[7]भावे[8]। अग्गं भावे पहाण[1]बहुय[2]उवगारओ[3]तिविहं॥२८५॥

तत्र द्रव्याग्रं द्विधा–आगमतो नोआगमतो इत्यादि भणित्वा व्यतिरिक्तं त्रिधा–सचित्ताचित्तमिश्रद्रव्यस्य वृक्षकुन्तादेर्यदग्रमिति, अवगाहनाग्रं यद्यस्य द्रव्यस्याधस्तादवगाढं तदवगाहनाग्रं, तद्यथा–मनुष्यक्षेत्रे मन्दरवर्जानां पर्वतानामुच्छ्रयचतुर्भागो भूमाववगाढ

१ °तविशेष २ °नतम् ३ वीरनाथाय ° °ड्रये * नवब्रह्मचर्यमयोऽष्टादशपदसहस्रको वेदः। भवति च सपञ्चचूलो बहुबहुतरकः पदाग्रेण ॥१॥

इति, मन्दराणां तु योजनसहस्रमिति, आदेशाग्रम्–आदिश्यत इत्यादेशः—व्यापारनियोजना, अग्रशब्दोऽत्र परिमाणवाची, ततश्च यत्र परिमितानामादेशो दीयते तदादेशाग्रं, तद्यथा–त्रिभिः पुरुषैः कर्म कारयति तान् वा भोजयतीति, कालाग्रम्–अधिकमासकः, यदिवाऽग्रशब्दः परिमाणवाचकः तत्रातीतकालोऽनादिरनागतोऽनन्तः सर्वाद्धा वा, क्रमाग्रं तु क्रमेण–परिपाट्याऽग्रं क्रमाग्रं, एतद् द्रव्यादि चतुर्विधं, तत्र द्रव्याग्रमेकाणुकाद् द्व्यणुकं द्व्यणुकाद् त्र्यणुकमित्येवमादि। क्षेत्राग्रम्–एकप्रदेशावगाढाद् द्विप्रदेशावगाढं, द्विप्रदेशावगाढात्त्रिप्रदेशावगाढमित्यादि। कालाग्रमेकसमयस्थितिकाद् द्विसमयस्थितिकं द्विसमयस्थितिकात्त्रिसमयस्थितिकमित्यादि, भावाग्रमेकगुणकृष्णाद् द्विगुणकृष्णं द्विगुणकृष्णात्त्रिगुणकृष्णमित्यादि, गणनाग्रं तु सङ्ख्याधर्मस्थानात्स्थानं, दशगुणमित्यर्थः, तद्यथा–एको दश शतं सहस्रमित्यादि, सञ्चयाग्रं तु सञ्चितस्य द्रव्यस्य यदुपरि तत्सञ्चयाग्रं, यथा ताम्रोपस्करस्य सञ्चितस्योपरि शङ्खः, भावाग्रं तु त्रिविधं–प्रधानाग्रं १ प्रभूताग्रम् २ उपकाराग्रं ३ च, तत्र प्रधानाग्रं सचित्तादि त्रिधा, सचित्तमपि द्विपदादिभेदात्त्रिधैव, तत्र द्विपदेषु तीर्थकरश्चतुष्पदेषु सिंहः अपदेषु कल्पवृक्षः, अचित्तं वैडूर्यादि, मिश्रं तीर्थकर एवालङ्कृत इति, प्रभूताग्रं त्वापेक्षिकं, तद्यथा–"जीवा[1] पोग्गल[2] समया[3] दव्व[4] पएसा[5] य पज्जवा[6] चेव। थोवा[1]ऽणंता[2]णंता[3] विसेसमहिया[4] दुवे[5-6]ऽणंता ॥ १॥" अत्र च यथोत्तरमग्रं, पर्यायाग्रं तु सर्वाग्रमिति, उपकाराग्रं तु यत्पूर्वोक्तस्य विस्तरतोऽनुक्तस्य च प्रतिपादनादुपकारे वर्त्तते तद्, यथा दशवैकालिकस्य चूडे, अयमेव वा श्रुतस्कन्ध आचारस्येत्यतोऽत्रोपकाराग्रेणाधिकार इति ॥ आह च निर्युक्तिकारः—

२०

२५

---

१ जीवाः पुद्गलाः समयाः (त्रैकालिका) द्रव्याणि प्रदेशाश्च पर्यवाश्चैव। स्तोकाः अनन्तगुणा अनन्तगुणा विशेषाधिकाः द्वयेऽनन्ताः (अनन्तगुणाः अनन्तगुणाः ॥१॥

२ गाथाया पज्जवा इत्यनेनोपात्त. ३ उच्चारितस्य सदृश यत्केनचित् तत् प्ररूप्यते विधिना। येनाधिकारस्तस्मिंस्तु प्ररूपिते भवति सुखग्राह्यम् ॥१॥

उवयारेण उ पगयं आयारस्सेव उवरिमाइं तु। रुक्खस्स य पव्वयस्स य जह अग्गाइं तहेयाइं ॥२८६॥

उपकाराग्रेणात्र प्रकृतम्–अधिकारः, यस्मादेतान्याचारस्यैवोपरि वर्त्तन्ते, तदुक्तविशेषत्वादितया तत्संबद्धानि, यथा वृक्षपर्वतादेरग्राणीति। शेषाणि त्वग्राणि शिष्यमतिव्युत्पत्त्यर्थमस्य चोपकाराग्रस्य सुखप्रतिपत्त्यर्थमिति, तदुक्तम्–"उँचारिअस्स मरिसं जं केणइ तं परूवए विहिणा। जेणऽहिगारो तंमि उ परूविए होइ सुहगेज्झं ॥१॥" तत्रेदमिदानीं वाच्यं–केनैतानि निर्यूढानि? किमर्थं? कुतो वेति?, अत आह—

५

थेरेहिंऽणुग्गहट्ठा सीसहिअं होउ पागडत्थं च। आयाराओ अत्थो आयारंगेसु पविभत्तो ॥२८७॥

'स्थविरैः' श्रुतवृद्धैश्चतुर्दशपूर्वविद्भिर्निर्यूढानीति, किमर्थं?, शिष्यहितं भवत्विति कृत्वाऽनुग्रहार्थं, तथाऽप्रकटोऽर्थः प्रकटो यथा स्यादित्येवमर्थं च, कुतो निर्यूढानि?, आचारात्सकाशात् समस्तोऽप्यर्थ आचाराग्रेषु विस्तरेण प्रविभक्त इति॥ साम्प्रतं यद्यस्मान्निर्यूढं तद्विभागेनाचष्ट इति—

बिइअस्स य पंचमए अट्ठमगस्स बिइयंमि उद्देसे। भणिओ पिंडो[1] सिज्जा[2] वत्थं[3] पाउग्गहो[4] चेव ॥२८८॥

१०

पंचमगस्स चउत्थे इरिया[5] वण्णिज्जई समासेणं। छट्ठस्स य पंचमए भासज्जायं[6] वियाणाहि ॥२८९॥

सत्तिक्कगाणि[7-13] सत्तवि निज्जूढाइं महापरिन्नाओ। सत्थपरिन्ना भावण[14] निज्जूढाओ धुयविमुत्ती[15]॥२९०॥

आयारपकप्पो[16] पुण पच्चक्खाणस्स तइयवत्थूओ। आयारनामधिज्जा वीसइमा पाहुडच्छेया ॥२९१॥

ब्रह्मचर्याध्ययनानां द्वितीयमध्ययनं लोकविजयाख्यं, तत्र पञ्चमोद्देशक इदं सूत्रम्–"सव्वामगंधं परिन्नाय निरामगंधो परिव्वए"

तत्रामग्रहणेन हननाद्यास्तिस्रः कोट्यो गृहीताः, गन्धोपादानादपरास्तिस्रः, एताः षडप्यविशोधिकोट्यो गृहीताः, ताश्चेमाः—स्वतो हन्ति घातयति घ्नन्तमन्यमनुजानीते, तथा पचति पाचयति पचन्त (मन्य) मनुजानीत इति, तथा तत्रैव सूत्रम्—"आदिसमाणो कयविक्कएहिं"ति, अनेनापि तिस्रो विशोधिकोट्यो गृहीताः, ताश्चेमाः—क्रीणाति क्रापयति क्रीणन्तमन्यमनुजानीते, तथाऽष्टमस्य—विमोहाध्ययनस्य द्वितीयोद्देशक इदं सूत्रम्—'भिक्खू परक्कमेज्ज चिट्ठेज्ज वा निसीएज्ज वा तुयट्टिज्ज वा सुसाणंसि वे"त्यादि यावद् "बहिया विहरिज्जा तं भिक्खुं गाहावती उवसंकमित्तु वएज्जा—अहमाउसंतो समणा! तुब्भट्ठाए असणं वा पाणं वा खाइमं वा साइमं वा पाणाइं भूयाइं जीवाइं सत्ताइं समारब्भ समुद्दिस्स कीयं पामिच्च"मित्यादि, एतानि सर्वाण्यपि सूत्राण्याश्रित्यैकादश पिण्डैषणा निर्यूढाः, तथा तस्मिन्नेव द्वितीयाध्ययने पञ्चमोद्देशके सूत्रम्—"से वत्थं पडिग्गहं कंबलं पायपुंछणं उग्गहं च कडासण"मिति, तत्र वस्त्रकम्बलपादपुञ्छनग्रहणाद् वस्त्रैषणा निर्यूढा, पतद्ग्रहपदात् पात्रैषणा निर्यूढा, अवग्रह इत्येतस्मादवग्रहप्रतिमा निर्यूढा, कटासनमित्येतस्माच्छय्येति, तथा पञ्चमाध्ययनावन्त्याख्यस्य चतुर्थोद्देशके सूत्रम्—"गामाणुगामं दूइज्जमाणस्स दुज्जायं दुप्परिक्कंतं" इत्यादिनेर्या सङ्क्षेपेण व्यावर्णितेत्यत एव ईर्याध्ययनं निर्यूढम्, तथा षष्ठाध्ययनस्य धूताख्यस्य पञ्चमोद्देशके सूत्रम्—"आइक्खइ विहयइ किट्टइ धम्मकामी"त्येतस्माद्भाषाजाताध्ययनमाकृष्टमित्येवं विजानीयास्त्वमिति। तथा महापरिज्ञाध्ययने सप्तोद्देशकास्तेभ्यः प्रत्येकं सप्तापि सप्तैकका निर्यूढाः, तथा शस्त्रपरिज्ञाध्ययनाद्भावना निर्यूढा, तथा धूताध्ययनस्य द्वितीयचतुर्थोद्देशकाभ्यां विमुक्त्यध्ययनं निर्यूढमिति, तथा 'आचारप्रकल्पः'निशीथः, स च प्रत्याख्यानपूर्वस्य यत्तृतीयं वस्तु तस्यापि यदाचाराख्यं विंशतितमं प्राभृतं ततो निर्यूढ इति ॥ ब्रह्मचर्याध्ययनेभ्य आचाराग्राणि निर्यूढान्यतो निर्यूहनाधिकारादेव तान्यपि शस्त्रपरिज्ञाध्ययनान्निर्यूढानीति दर्शयति—



२०

॥२९०॥
२८

अव्वोगडो उ भणिओ सत्थपरिन्नाय दंडनिक्खेवो । सो पुण विभज्जमाणो तहा तहा होइ नायव्वो ॥२९२॥

'अव्याकृतः' अव्यक्तः अपरिस्फुट इतियावत् 'भणितः' प्रतिपादितः, कोऽसौ ?—'दण्डनिक्षेपः' दण्डः—प्राणिपीडालक्षणस्तस्य निक्षेपः—परित्यागः, संयम इत्यर्थः, स च शस्त्रपरिज्ञायामव्यक्तोऽभिहितो यतस्तेन पुनः विभज्यमानः अष्टस्वप्यध्ययनेष्वसावेव तथा तथा—अनेकप्रकारो ज्ञातव्यो भवतीति ॥ कथं पुनरयं संयमः सङ्क्षेपाभिहितो विस्तार्यते ? इत्याह—

एगविहो पुण सो संजमुत्ति अज्झत्थ बाहिरो य दुहा। मणवयणकाय तिविहो चउव्विहो चाउजामो उ ॥२९३॥

पंच य महव्वयाइं तु पंचहा राइभोअणे छद्धा । सीलंगसहस्साणि य आयारस्सप्पवीभागा ॥२९४॥

अविरतिनिवृत्तिलक्षण एकविधः संयमः, स एवाध्यात्मिकबाह्यभेदाद् द्विधा भवति, पुनर्मनोवाक्काययोगभेदात्त्रिविधः, स एव चतुर्यामभेदाच्चतुर्धा, पुनः पञ्चमहाव्रतभेदात्पञ्चधा, रात्रीभोजनविरतिपरिग्रहाच्च षोढा, इत्यादिकया प्रक्रियया भिद्यमानो यावदष्टादशशीलाङ्गसहस्रपरिमाणो भवतीति ॥ किं पुनरसौ संयमस्तत्र तत्र प्रवचने पञ्चमहाव्रतरूपतया भिद्यते ? इत्याह—



५

आइक्खिउं विभइउं विन्नाउं चेव सुहतरं होइ । एएण कारणेणं महव्वया पंच पन्नत्ता ॥२९५॥

१०

संयमः पञ्चमहाव्रतरूपतया व्यवस्थापितः सन्नाख्यातुं विभक्तुं विज्ञातुं च सुखेनैव भवतीत्यतः कारणात्पञ्च महाव्रतानि प्रज्ञाप्यन्ते ॥ एतानि च पञ्च महाव्रतानि अस्खलितानि फलवन्ति भवन्त्यतो रक्षायत्नो विधेयस्तदर्थमाह—

तेसिं च रक्खणट्ठा य भावणा पंच पंच इक्किक्के । ता सत्थपरिन्नाए एसो अब्भिंतरो होई ॥२९६॥

१ अष्टागणस्य निष्पत्ती प्र. एगो अब्भन्तरो होइ प्र.

'तेषां च' महाव्रतानामेकैकस्य तद्वृत्तिकल्पा पञ्च पञ्च भावना भवन्ति, ताश्च द्वितीयाग्रश्रुतस्कन्धे प्रतिपाद्यन्तेऽतोऽयं शस्त्रपरिज्ञाध्ययनाभ्यन्तरगो भवतीति ॥ साम्प्रतं चूडानां यथास्वं परिमाणमाह—

जावोग्गहपडिमाओ पढमा सत्तिक्कगा बिइअचूला। भावण विमुत्ति आयारपकप्पा तिन्नि इअ पंच ॥२९७॥

पिण्डैषणाध्ययनादारभ्यावग्रहप्रतिमाध्ययनं यावदेतानि सप्ताध्ययनानि प्रथमा चूडा, सप्तसप्तैकका द्वितीया, भावना तृतीया, विमुक्तिश्चतुर्थी, आचारप्रकल्पो निशीथः, सा च पञ्चमी चूडेति। तत्र चूडाया निक्षेपो नामादिः षड्विधः, नामस्थापने क्षुण्णे, द्रव्यचूडा व्यतिरिक्ता सचित्ता कुर्कुटस्य अचित्ता मुकुटस्य चूडामणिः मिश्रा मयूरस्य, क्षेत्रचूडा लोकनिष्कुटरूपा, कालचूडाऽधिकमासकस्वभावा, भावचूडा त्वियमेव, क्षायोपशमिकभाववर्तित्वात्। इयं च सप्ताध्ययनात्मिका, तत्राद्यमध्ययनं पिण्डैषणा, तस्य चत्वार्यनुयोगद्वाराणि भवन्ति, यावन्नामनिष्पन्ने निक्षेपे पिण्डैषणाऽध्ययनं, तस्य निक्षेपद्वारेण सर्वा पिण्डनिर्युक्तिरत्र भणनीयेति ॥ साम्प्रतं सूत्रानुगमेऽस्खलितादिगुणोपेतं सूत्रमुच्चारणीयं, तच्चेदम्—

(मूलं) से भिक्खू वा भिक्खुणी वा गाहावइकुलं पिंडवायपडियाए अणुपविट्ठे समाणे से जं पुण जाणिज्जा—असणं वा पाणं वा खाइमं वा साइमं वा पाणेहिं वा पण गेहिं वा बीएहिं वा हरिएहिं वा संसत्तं उम्मिस्सं सीओदएण वा ओसित्तं रयसा वा परिघासियं वा तहप्पगारं असणं वा पाणं वा खाइमं वा साइमं वा परहत्थंसि वा परपायंसि वा अफासुयं अणेसणिज्जंति मन्नमाणे लाभेऽवि संते नो पडिग्गाहिज्जा ॥ से य आहच्च पडिग्ग-

१ परिवासिय प्र. एवं पूर्वापि प्र०



२०

हिए सिया से तं आयाय एगंतमवक्कमिज्जा, एगंतमवक्कमित्ता अहे आरामंसि वा अहे उवस्सयंसि वा अप्पंडे अप्पपाणे अप्पबीए अप्पहरिए अप्पोसे अप्पुदए अप्पुत्तिंगपणगदगमट्टियमक्कडासंताणए विगिंचिय २ उम्मीसं विसोहिय २ तओ संजयामेव भुंजिज्ज वा पीइज्ज वा, जं च नो संचाइज्जा भुत्तए वा पायए वा से तमायाय एगंतमवक्कमिज्जा, अहे झामथंडिलंसि वा अट्ठिरासिंसि वा किट्टरासिंसि वा तुसरासिंसि वा गोमयरासिंसि वा अन्नयरंसि वा तहप्पगारंसि थंडिलंसि पडिलेहिय पडिलेहिय पमज्जिय पमज्जिय तओ संजयामेव परिट्ठविज्जा (सू० २२४)



'से' इति मागधदेशीवचनतः प्रथमान्तो निर्देशो वर्त्तते, यः कश्चिद्भिक्षणशीलो भावभिक्षुर्मूलोत्तरगुणधारी विविधाभिग्रहरतः 'भिक्षुणी वा' साध्वी, स भावभिक्षुर्वेदनादिभिः कारणैराहारग्रहणं करोति, तानि चामूनि–"वेअण १ वेआवच्चे २ इरियट्ठाए य ३ संजमट्ठाए ४। तह पाणवत्तियाए ५ छट्ठं पुण धम्मचिंताए ६ ॥१॥" इत्यादि, अमीषां मध्येऽन्यतमेनापि कारणेनाहारार्थी सन् गृहपतिः–गृहस्थस्तस्य कुलं–गृहं तदनुप्रविष्टः, किमर्थं ?–'पिंडवायपडियाए'त्ति पिण्डपातो–भिक्षालाभस्तत्प्रतिज्ञया–अहमत्र भिक्षां लप्स्य इति, स प्रविष्टः सन् यत्पुनरशनादि जानीयात्, कथमिति दर्शयति–'प्राणिभिः' रसजादिभिः 'पनकैः' उल्लीजीवैः संसक्तं 'बीजैः' गोधूमादिभिः 'हरितैः' दूर्वाङ्कुरादिभिः 'उन्मिश्रं' शबलीभूतं, तथा शीतोदकेन वा 'अवसिक्तम्' आर्द्रीकृतं 'रजसा वा' सचित्तेन 'परिघासियं'ति परिगुण्डितं, किंबहुना वक्ष्यति ? 'तथाप्रकारम्' एवंजातीयमशुद्धमशनादि चतुर्विधमप्याहारं 'परहस्ते'





[1] वेदना वैयावृत्त्यं ईर्यार्थं च संयमार्थं च। तथा प्राणप्रत्ययाय षष्ठं पुनर्धर्मचिन्तायै ॥१॥

दातृहस्ते परपात्रे वा स्थितम् 'अप्रासुकं' सचित्तम् 'अनेषणीयम्' आधाकर्मादिदोषदुष्टम् 'इति' एवं मन्यमानः 'स' भावभिक्षुः सत्यपि लाभे न प्रतिगृह्णीयादित्युत्सर्गतः, अपवादतस्तु द्रव्यादि ज्ञात्वा प्रतिगृह्णीयादपि, तत्र द्रव्यं दुर्लभद्रव्यं क्षेत्रं साधारणद्रव्यलाभरहितं मरजम्कादिभावितं वा कालो दुर्भिक्षादिः भावो ग्लानतादिः, इत्यादिकारणैरुपस्थितैरल्पबहुत्वं पर्यालोच्य गीतार्थो गृह्णीयादिति ॥ अथ कथञ्चिदनाभोगात्संसक्तमागामिसत्त्वोन्मिश्रं वा गृहीतं तत्र विधिमाह–'से आहच्चे'त्यादि, स च भावभिक्षुः 'आहच्चे'ति सहसा संसक्तादिकमाहारजातं कदाचिदनाभोगात्प्रतिगृह्णीयात्, स चानाभोगो दातृप्रतिगृहीतृपदद्वयाच्चतुर्धा योजनीय इति, 'तम्' एवंभूतमशुद्धमाहारमादायैकान्तम् 'अपक्रामेत्' गच्छेत्, तं 'अपक्रम्य' गत्वेति, यत्र सागारिकाणामनालोकमसम्पातं न भवति, तदेकान्तमनेकधेति दर्शयति–अथारामे वा अथोपाश्रये वा, अथशब्दोऽनापातविशिष्टप्रदेशोपसङ्ग्रहार्थः, वाशब्दो विकल्पार्थः शून्यगृहाद्युपसङ्ग्रहार्थो वा, तद्विशिनष्टि–'अल्पाण्डे' अल्पशब्दोऽभाववचनः, अपगताण्ड इत्यर्थः, एवमल्पबीजेऽल्पहरिते अल्पावश्याये, अवश्याय उदकसूक्ष्मतुषारः, अल्पोदके, तथा 'अल्पोत्तिङ्गपनकदगमृत्तिकामर्कटसन्तानके' तत्रोत्तिङ्गस्तृणाग्र उदकबिन्दुः, [भुञ्जीतेत्युत्तरक्रियया सम्बन्धः] पनकः–उल्लीविशेषः, उदकप्रधाना मृत्तिका उदकमृत्तिकेति, मर्कटः–सूक्ष्मजीवविशेषस्तेषां सन्तानः, यदिवा मर्कटकसन्तानः–कोलियकः, तदेवमण्डादिदोषरहिते आरामादिके स्थण्डिले गत्वा प्राग्गृहीताहारस्य यत्संसक्तं तद् 'विविच्य विविच्य' त्यक्त्वा त्यक्त्वा, क्रियाऽभ्यावृत्त्याऽशुद्धस्य परित्यागनिःशेषतामाह, 'उन्मिश्रं वा' आगामुकसत्त्वसंवलितं सक्तुकादि ततः प्राणिनः 'विशोध्य विशोध्य' अपनीयापनीय 'ततः' तदनन्तरं शेषं शुद्धं परिज्ञाय सम्यग्यत एव भुञ्जीत पिबेद्वा रागद्वेषविप्रमुक्तः सन्निति, उक्तञ्च–"बायालीसेसणसंकडंमि गहणंमि जीव ! ण हु छलिओ। इण्हिं जह न छलिज्जसि भुंजंतो

आचा०
२ श्रुत०
१ चूला

पारिष्ठा-
पनं

रागदोसेहिं ॥१॥ रागेण सइंगालं दोसेण सधूमगं वियाणाहि। रागदोसविमुक्को भुंजेज्जा निज्जरापेही ॥ २ ॥" यच्चाहारादिकं पातुं मोक्तुं वा न शक्नुयात्प्राचुर्यादशुद्धपृथक्करणासम्भवाद्वा स भिक्षुः 'तद्' आहारजातमादायैकान्तमपक्रामेत्, अपक्रम्य च तदाहारजातं 'परिष्ठापयेत्' त्यजेदिति सम्बन्धः, यत्र च परिष्ठापयेत्तद्दर्शयति—'अथ' आनन्तर्यार्थे वाशब्द उत्तरापेक्षया विकल्पार्थः 'झामे'ति दग्धं तस्मिन् वा स्थण्डिलेऽस्थिराशौ वा किट्टो—लोहादिमलस्तद्राशौ वा तुषराशौ वा गोमयराशौ वा, कियद्वा वक्ष्यते इत्युपसंहरति—अन्यतरराशौ वा 'तथाप्रकारे' पूर्वसदृशे प्रासुके स्थण्डिले गत्वा तत् प्रत्युपेक्ष्य प्रत्युपेक्ष्य अक्ष्णा प्रमृज्य २ रजोहरणादिना, अत्रापि द्विर्वचनमादरख्यापनार्थमिति, प्रत्युपेक्षणप्रमार्जनपदाभ्यां सप्त भङ्गका भवन्ति, तद्यथा—अप्रत्युपेक्षितमप्रमार्जितम् १, अप्रत्युपेक्षितं प्रमार्जितं २, प्रत्युपेक्षितमप्रमार्जितं ३, तत्राप्यप्रत्युपेक्ष्य प्रमृजन् स्थानात्स्थानमङ्क्रमणेन त्रसान् विराधयति, प्रत्युपेक्ष्याप्यप्रमृजन्नागन्तुकपृथ्वीकायादीन् विराधयतीति, चतुर्थभङ्गके तु चत्वारोऽमी, तद्यथा—दुष्प्रत्युपेक्षितं दुष्प्रमार्जितं ४, दुष्प्रत्युपेक्षितं सुप्रमार्जितं ५, सुप्रत्युपेक्षितं दुष्प्रमार्जितं ६, सुप्रत्युपेक्षितं सुप्रमार्जितमिति ७, स्थापना। तत्रैवंभूते सप्तमभङ्गायाते स्थण्डिले 'संयत एव' सम्यगुपयुक्त एव शुद्धाशुद्धपुञ्जभागपरिकल्पनया 'परिष्ठापयेत्' त्यजेदिति ॥ साम्प्रतमौपधिविषयं विधिमाह—

| अप्र० | प्र० | अप्र० | दुष्प्र० | सुप्र० | दुष्प्र० | सुप्र० |
| --- | --- | --- | --- | --- | --- | --- |
| अप्र० | अप्र० | प्र० | दुष्प्र० | दुष्प्र० | सुप्र० | सुप्र० |

५

१०

(मूलं)से भिक्खू वा भिक्खुणी वा गाहावइ० जाव पविट्ठे समाणे से जाओ पुण ओसहीओ जाणिज्जा—कसिणाओ सासियाओ अविदलकडाओ अतिरिच्छच्छिन्नाओ अवुच्छिण्णाओ तरुणियं वा छिवाडिं अणभिक्कं-

१ द्वाचत्वारिंशद्देषणासङ्कटे गहने जीव ! नैव छलित. इदानीं यथा न छल्यसे भुञ्जन् रागद्वेषाभ्यां (तथा प्रवर्तस्व) ॥१॥ रागेण साङ्गारं द्वेषेण सधूमकं विजानीहि। रागद्वेषविमुक्तो भुञ्जीत वा निर्जराप्रेक्षी ॥२॥

तभज्जियं पेहाए अफासुयं अणेसणिज्जंति मन्नमाणे लाभे संते नो पडिग्गाहिज्जा ॥ से भिक्खू वा० जाव पविट्ठे समाणे से जाओ पुण ओसहीओ जाणिज्जा—अकसिणाओ असासियाओ विदलकडाओ तिरिच्छच्छिन्नाओ वुच्छिन्नाओ तरुणियं वा छिवाडिं अभिक्कंतं भज्जियं पेहाए फासुयं एसणिज्जंति मन्नमाणे लाभे संते पडिग्गाहिज्जा ॥ ( सू० २२५ )

वा मन्यमानो लाभे सति न प्रतिगृह्णीयात् । साम्प्रतमेतदेव सूत्रं विपर्ययेणाह—स एव भावभिक्षुर्यः पुनरौषधीरेवं जानीयात्, तद्यथा-'अकृत्स्नाः' असम्पूर्णा द्रव्यतो भावतश्च पूर्ववच्चर्चः, 'अस्वाश्रयाः' विनष्टयोनयः, 'द्विदलकृताः' ऊर्ध्वपाटिताः 'तिरश्चीनच्छिन्नाः' कन्दलीकृताः तथा तरुणिकां वा फलीं जीवितादपक्रान्तां भग्नां चेति, तदेवंभूतमाहारजातं प्रासुकमेषणीयं च मन्यमानो लाभे सति कारणे गृह्णीयादिति ॥ ग्राह्याग्राह्याधिकार एवाहारविशेषमधिकृत्याह—



(मूलं) से भिक्खू वा० जाव समाणे से जं पुण जाणिज्जा-पिहुयं वा बहुरयं वा भुंजियं वा मंथुं वा चाउलं वा चाउलपलंबं वा सइं संभज्जियं अफासुयं जाव नो पडिगाहिज्जा ॥ से भिक्खू वा० जाव समाणे से जं पुण जाणिज्जा—पिहुयं वा जाव चाउलपलंबं वा असइं भज्जियं दुक्खुत्तो वा तिक्खुत्तो वा भज्जियं फासुयं एसणिज्जं जाव पडिगाहिज्जा ( सू० २२६ ) ५

स भावभिक्षुर्गृहपतिकुलं प्रविष्टः सन् इत्यादि पूर्ववद्यावत् 'पिहुयं व'त्ति पृथुकं जातावेकवचनं नवस्य शालिव्रीह्यादेरग्निना ये लाजाः क्रियन्ते त इति, बहु रजः-तुषादिकं यस्मिंस्तद्बहुरजः, 'भुंजिय'न्ति अभ्यर्द्धपक्कं गोधूमादेः शीर्षकमन्यद्वा तिलगोधूमादि, १० तथा गोधूमादेः 'मन्थुं' चूर्णं तथा 'चाउलाः' तन्दुलाः शालिव्रीह्यादेः त एव चूर्णीकृतास्तत्कणिका वा चाउलपलंबंति, तदेवंभूतं पृथुकाद्याहारजातं सकृद् एकवारं 'संभज्जियं'ति आमर्दितं किञ्चिदग्निना किञ्चिदपरशस्त्रेणाप्रासुकमनेषणीयं मन्यमानो लाभे सति न प्रतिगृह्णीयात् ॥ एतद्विपरीतं ग्राह्यमित्याह-पूर्ववत्, नवरं यदसकृद्-अनेकशोऽग्न्यादिना पक्कमामर्दितं वा दुष्पक्कादिदोषरहितं प्रासुकं मन्यमानो लाभे सति गृह्णीयादिति ॥ साम्प्रतं गृहपतिकुलप्रवेशविधिमाह—

सभर्ज्जियं पेहाए अफासुयं अणेसणिज्जंति मन्नमाणे लाभे संते नो पडिग्गाहिज्जा ॥ से भिक्खू वा० जाव पविट्ठे समाणे से जाओ पुण ओसहीओ जाणिज्जा–अकसिणाओ असासियाओ विदलकडाओ तिरिच्छच्छिन्नाओ वुच्छिन्नाओ तरुणियं वा छिवाडिं अभिक्कंतं भज्जियं पेहाए फासुयं एसणिज्जंति मन्नमाणे लाभे संते पडिग्गाहिज्जा ॥ ( सू० २२५ )

स भावभिक्षुर्गृहपतिकुलं प्रविष्टः सन् याः पुनः "औषधीः" शालिबीजादिकाः एवंभूता जानीयात्, तद्यथा—'कसिणाओ'त्ति 'कृत्स्नाः' सम्पूर्णा अनुपहताः, अत्र च द्रव्यभावाभ्यां चतुर्भङ्गिका, तत्र द्रव्यकृत्स्ना अशस्त्रोपहताः, भावकृत्स्नाः सचित्ताः, तत्र कृत्स्ना इत्यनेन चतुर्भङ्गेऽप्याद्यं भङ्गत्रयमुपात्तं, 'सासियाओ'त्ति, जीवस्य स्वाम्–आत्मीयामुत्पत्तिं प्रत्याश्रयो यासु ताः साश्रयाः, अविनष्टयोनय इत्यर्थः, आगमे च कासाञ्चिदौषधीनामविनष्टो योनिकालः पठ्यते, तदुक्तम्–"[1]एतेसि णं भंते ! सालीणं० केवइअं कालं जोणी संचिट्ठइ ?" इत्याद्यालापकाः, 'अविदलकडाओ'त्ति न द्विदलकृताः अद्विदलकृताः, अनूर्ध्वपाटिता इत्यर्थः, 'अतिरिच्छच्छिन्नाओ'त्ति तिरश्चीनं छिन्नाः–कन्दलीकृतास्तत्प्रतिषेधादतिरश्चीनच्छिन्नाः, एताश्च द्रव्यतः कृत्स्ना भावतो भाज्याः, 'अव्वोच्छिन्नाओ'त्ति व्यवच्छिन्ना–जीवरहिता न व्यवच्छिन्नाः अव्यवच्छिन्नाः, भावतः कृत्स्ना इत्यर्थः, तथा 'तरुणियं वा छिवाडिं'ति 'तरुणीम्' अपरिपक्वां 'छिवाडि'न्ति मुद्गादेः फलिं, तामेव विशिनष्टि–'अणभिक्कंतमज्जिय'न्ति, नाभिक्रान्ता जीवितादू अनभिक्रान्ता, सचेतनेत्यर्थः, 'अभज्जियं' अभग्नाम्–अमर्दितामविराधितामित्यर्थः, इति 'प्रेक्ष्य' दृष्ट्वा तदेवंभूतमाहारजातमप्रासुकमनेषणीयं

१ एतेषां भदन्त ! शालीनां० कियन्तं कालं योनिः संतिष्ठते.

वा मन्यमानो लाभे सति न प्रतिगृह्णीयात्। साम्प्रतमेतदेव सूत्रं विपर्ययेणाह—स एव भावभिक्षुर्याः पुनरौषधीरेवं जानीयात्, तद्यथा—'अकृत्स्नाः' असम्पूर्णा द्रव्यतो भावतश्च पूर्ववच्चर्चः, 'असाश्रयाः' विनष्टयोनयः, 'द्विदलकृताः' ऊर्ध्वपाटिताः 'तिरश्चीनच्छिन्नाः' कन्दलीकृताः तथा तरुणिकां वा फलीं जीविताद‌पक्रान्तां भग्नां चेति, तदेवंभूतमाहारजातं प्रासुकमेषणीयं च मन्यमानो लाभे सति कारणे गृह्णीयादिति ॥ ग्राह्याग्राह्याधिकार एवाहारविशेषमधिकृत्याह—

(मूलं) से भिक्खू वा० जाव समाणे से जं पुण जाणिज्जा-पिहुयं वा बहुरयं वा भुंजियं वा मंथुं वा चाउलं वा चाउलपलंबं वा सइं संभज्जियं अफासुयं जाव नो पडिगाहिज्जा ॥ से भिक्खू वा० जाव समाणे से जं पुण जाणिज्जा—पिहुयं वा जाव चाउलपलंबं वा असइं भज्जियं दुक्खुत्तो वा तिक्खुत्तो वा भज्जियं फासुयं एसणिज्जं जाव पडिगाहिज्जा ( सू० २२६ )

५

स भावभिक्षुर्गृहपतिकुलं प्रविष्टः सन् इत्यादि पूर्ववद्यावत् 'पिहुयं व'त्ति पृथुकं जातावेकवचनं नवस्य शालिव्रीह्यादेरग्निना ये लाजाः क्रियन्ते त इति, बहु रजः—तुषादिकं यस्मिंस्तद्बहुरजः, 'भुंजिय'न्ति अग्न्यर्द्धपक्वं गोधूमादेः शीर्षकमन्यद्वा तिलगोधूमादि, तथा गोधूमादेः 'मन्थुं' चूर्णं तथा 'चाउलाः' तन्दुलाः शालिव्रीह्यादेः त एव चूर्णीकृतास्तत्कणिका वा चाउलपलंबंति, तदेवंभूतं पृथुकाद्याहारजातं सकृद् एकवारं 'संभज्जिय'ति आमर्दितं किञ्चिदग्निना किञ्चिदपरशस्त्रेणाप्रासुकमनेषणीयं मन्यमानो लाभे सति न प्रतिगृह्णीयात् ॥ एतद्विपरीतं ग्राह्यमित्याह—पूर्ववत्, नवरं यदसकृद्—अनेकशोऽप्यादिना पक्वमामर्दितं वा दुष्पक्वादिदोषरहितं प्रासुकं मन्यमानो लाभे सति गृह्णीयादिति ॥ साम्प्रतं गृहपतिकुलप्रवेशविधिमाह—

१०

(मूलं) से भिक्खू वा भिक्खुणी वा गाहावइकुलं जाव पविसिउकामे नो अन्नउत्थिएण वा गारत्थिएण वा परिहारिओ वा अप्परिहारिएणं सद्धिं गाहावइकुलं पिंडवायपडियाए पविसिज्ज वा निक्खमिज्ज वा॥ से भिक्खू वा० बहिया वियारभूमिं वा विहारभूमिं वा निक्खममाणे वा पविसमाणे वा नो अन्नउत्थिएण वा गारत्थिएण वा परिहारिओ वा अपरिहारिएण सद्धिं बहिया वियारभूमिं वियारभूमिं वा निक्खमिज्ज वा पविसिज्ज वा॥ से भिक्खू वा० गामाणुगामं दूइज्जमाणे नो अन्नउत्थिएण वा जाव गामाणुगामं दूइज्जिज्जा (सू० २२७)

स भिक्षुर्यावद्गृहपतिकुलं प्रवेष्टुकाम एभिर्वक्ष्यमाणैः सार्द्धं न प्रविशेत्, प्राक् प्रविष्टो वा न निष्क्रामेदिति सम्बन्धः। यैः सह न प्रवेष्टव्यं तान् स्वनामग्राहमाह—तत्रान्यतीर्थिकाः—सरजस्कादयः 'गृहस्थाः' पिण्डोपजीविनो धिग्जातिप्रभृतयः, तैः सह प्रविशताममी दोषाः, तद्यथा—ते पृष्ठतो वा गच्छेयुरग्रतो वा, तत्राग्रतो गच्छन्तो यदि साध्वनुवृत्त्या गच्छेयुस्ततस्तत्कृत ईर्याप्रत्ययः कर्मबन्धः प्रवचनलाघवं च, तेषां वा स्वजात्याद्युत्कर्ष इति, अथ पृष्ठतस्ततस्तत्प्रद्वेषो दातुर्वाऽभद्रकस्य, लाभं च दाता संविभज्य दद्यात्, तेनावमौदर्यादौ दुर्भिक्षादौ प्राणवृत्तिर्न स्यादित्येवमादयो दोषाः, तथा परिहरणं परिहारस्तेन चरति पारिहारिकः, पिण्डदोषपरिहरणादुद्युक्तविहारी साधुरित्यर्थः, स एवंगुणकलितः साधुः 'अपरिहारिकेण' पार्श्वस्थावसन्नकुशीलसंसक्तयथाच्छन्दरूपेण न प्रविशेत्, तेन सह प्रविष्टानामनेषणीयभिक्षाग्रहणाग्रहणकृता दोषाः, तथाहि—अनेषणीयग्रहणे तत्प्रवृत्तिरनुज्ञाता भवति, अग्रहणे तैः सहासङ्खडादयो दोषाः, तत एतान् दोषान् ज्ञात्वा साधुर्गृहपतिकुलं पिण्डपातप्रतिज्ञया तैः सह न प्रविशेन्नापि निष्क्रामेदिति॥ तैः सह प्रसङ्गतोऽन्यत्रापि गमनप्रतिषेधमाह—स भिक्षुर्बहिः 'विचारभूमिं' सञ्ज्ञाव्युत्सर्गभूमिं तथा 'विहारभूमिं' स्वाध्यायभूमिं तैरन्य-



२०



२८

तीर्थिकादिभिः सह दोपसम्भवान्न प्रविशेदिति सम्बन्धः, तथाहि–विचारभूमौ प्रासुकोदकस्वच्छास्वच्छबहुल्पनिर्लेपनकृतोपघातसद्भावाद्, विहारभूमौ वा सिद्धान्तालापकविकत्थनभयात्सेहाद्यसहिष्णुकलहसद्भावाच साधुस्तां तैः सह न प्रविशेत् नापि ततो निष्कामेदिति ॥ तथा–स भिक्षुर्ग्रामाद्ग्रामो ग्रामान्तरमुपलक्षणार्थत्वान्नगरादिकमपि 'दुइज्जमाणो'त्ति गच्छन्नेभिरन्यतीर्थिकादिभिः सह दोपसम्भवान्न गच्छेत्, तथाहि–कायिक्यादिनिरोधे सत्यात्मविराधना, व्युत्सर्गे च प्रासुकाप्रासुकग्रहणादावुपघातसंयमविराधने भवतः, एवं भोजनेऽपि दोपसम्भवो भावनीयः सेहादिविप्रतारणादिदोपश्चेति ॥ साम्प्रतं तद्दानप्रतिपेधार्थमाह—

५

(मूलं) से भिक्खू वा भिक्खुणी वा० जाव पविट्ठे समाणे नो अन्नउत्थियस्स वा गारत्थियस्स वा परिहारिओ वा अपरिहारियस्स असणं वा पाणं वा खाइमं वा साइमं वा दिज्जा वा अणुपइज्जा वा ॥ ( सू० २२८ )

स भिक्षुर्गृहपतिकुलं प्रविष्टः सन्नुपलक्षणत्वादुपाश्रयस्थो वा तेभ्योऽन्यतीर्थिकादिभ्यो दोपसम्भवादशनादिकं ४ न दद्यात् स्वतो, नाप्यनुप्रदापयेदपरेण गृहस्थादिनेति, तथाहि–तेभ्यो दीयमानं दृष्ट्वा लोकोऽभिमन्यते- एते ह्येवंविधानामपि दक्षिणार्हाः, अपिच–तदुपष्टम्भादसंयमप्रवर्त्तनादयो दोषा जायन्त इति ॥ पिण्डाधिकार एवानेपणीयविशेषप्रतिपेधमधिकृत्याह—

१०

(मूलं) से भिक्खू वा० जाव समाणे असणं वा ४ अस्संपडियाए एगं साहम्मियं समुद्दिस्स पाणाइं भूयाइं जीवाइं सत्ताइं समारब्भ समुद्दिस्स कीयं पामिच्चं अच्छिज्जं अणिसट्ठं अभिहडं आहट्टु चेएइ, तं तहप्पगारं असणं वा ४ पुरिसंतरकडं वा अपुरिसंतरकडं वा बहिया नीहडं वा अनीहडं वा अत्तट्ठियं वा अणत्तट्ठियं वा (परिभुत्तं वा)अपरिभुत्तं वा आसेवियं वा अणासेवियं वा अफासुयं जाव नो पडिग्गाहिज्जा, एवं बहवे साह-

म्मिणीओ समुद्दिस्स चत्तारि आलावगा भाणियव्वा ॥ (सू० २२९॥

स-भिक्षुर्यावद्गृहपतिकुलं प्रविष्टः सन्नेवंभूतमाहारजातं नो प्रतिगृह्णीयादिति सम्बन्धः, 'अस्संपडियाए'त्ति न विद्यते स्वं-द्रव्यमस्य सोऽयमस्वो-निर्ग्रन्थ इत्यर्थः तत्प्रतिज्ञया कश्चिद्गृहस्थः प्रकृतिभद्रक एकं 'साधर्मिकं' साधुं 'समुद्दिश्य' अस्वोऽयमित्यभिसन्धाय प्राणिनो भूतानि जीवाः सत्त्वाश्च एतेषां किञ्चिद्भेदाद्भेदः तान् समारभ्येत्यनेन मध्यग्रहणात्संरम्भसमारम्भा गृहीताः, एतेषां च स्वरूपमिदम्-संकप्पो संरंभो परियावकरो भवे समारंभो। आरंभो उद्दवओ सुद्धनयाणं तु सव्वेसिं ॥ १ ॥'' इत्येवं समारम्भादि 'समुद्दिश्य' अधिकृत्याधाकर्म कुर्यादिति, अनेन सर्वाऽविशुद्धिकोटिर्गृहीता, तथा 'क्रीतं' मूल्यगृहीतं 'पामिच्चं' उच्छिन्नकम् 'आच्छेद्यं' परस्माद्बलादाच्छिन्नम् 'अणिसिट्ठं'ति 'अनिसृष्टं' तत्स्वामिनाऽननुज्ञातं (मुत्क)लितं चोल्लकादि 'अभ्याहृतं' गृहस्थेनानीतं, तदेवंभूतं क्रीताद्याहृत्य 'चेएइ'त्ति ददाति, अनेनापि समस्ता विशुद्धिकोटिर्गृहीता,'तद्' आहारजातं चतुर्विधमपि 'तथाप्रकारम्' आधाकर्मादिदोषदुष्टं यो ददाति तस्मात्पुरुषादपरः पुरुषः पुरुषान्तरं तत्कृतं वा अपुरुषान्तरकृतं वा-तथा तेनैव दात्रा कृतं, तथा गृहान्निर्गतमनिर्गतं वा, तथा तेनैव दात्रा स्वीकृतमस्वीकृतं वा, तथा तेनैव दात्रा तस्माद्बहुपरिभु(क्तमपरिभु)क्तं वा, तथा स्तोकमास्वादितमनास्वादितं वा, तदेवमप्रासुकमनेषणीयं च मन्यमानो लाभे सति न प्रतिगृह्णीयादिति । एतच्च प्रथमचरमतीर्थकृतोरकल्पनीयं, मध्यमतीर्थकराणां चान्यस्य कृतमन्यस्य कल्पत इति । एवं बहून् साधर्मिकान् समुद्दिश्य प्राग्वच्चर्चः तथा साध्वीसूत्रमप्येकत्वबहुत्वाभ्यां योजनीयमिति ॥ पुनरपि प्रकारान्तरेणाविशुद्धिकोटिमधिकृत्याह—

१ संकल्पः संरम्भः परितापकरो भवेत् समारम्भः । आरम्भ उपद्रवतः शुद्धनयानां च सर्वेषाम् ॥१॥

(मूलं) से भिक्खू वा० जाव समाणे से जं पुण जाणिज्जा असणं वा ४ बहवे समणा माहणा अतिहिकिवणवणीमए पगणिय २ समुद्दिस्स पाणाइं वा ४ समारम्भ जाव नो पडिग्गाहिज्जा ॥ (सू० २३०)

स भावभिक्षुर्यावद्गृहपतिकुलं प्रविष्टस्तद्यत्पुनरेवंभूतमशनादि जानीयात्, तद्यथा-बहून् श्रमणानुद्दिश्य, ते च पञ्चविधा-निर्ग्रन्थशाक्यतापसगैरिकाजीविका इति, ब्राह्मणान्, भोजनकालोपस्थाय्यपूर्वो वाऽतिथिस्तानिति, कृपणा-दरिद्रास्तान् वणीमका-बन्दिप्रायाः, तानपि श्रमणादीन् बहून् 'उद्दिश्य' प्रगणय्योद्दिशति, तद्यथा—द्वित्राः श्रमणाः पञ्चषाः ब्राह्मणा इत्यादिना प्रकारेण श्रमणादीन् परिसङ्ख्यातानुद्दिश्य, तथा प्राण्यादीन् समारभ्य यदशनादि संस्कृतं तदासेवितमनासेवितं वाऽप्रासुकमनेषणीयमाधाकर्म, एवं मन्यमानो लाभे सति न प्रतिगृह्णीयादिति ॥ विशोधिकोटिमधिकृत्याह—

(मूलं) से भिक्खू वा भिक्खुणी वा० जाव पविट्ठे समाणे से जं पुण जाणिज्जा-असणं वा ४ बहवे समणा माहणा अतिहिकिवणवणीमए समुद्दिस्स जाव चेएइ तं तहप्पगारं असणं वा ४ अपुरिसंतरकडं वा अबहिया नीहडं अणत्तट्ठियं अपरिभुत्तं अणासेवियं अफासुयं अणेसणिज्जं जाव नो पडिग्गाहिज्जा। अह पुण एवं जाणिज्जा पुरिसंतरकडं बहिया नीहडं अत्तट्ठियं परिभुत्तं आसेवियं फासुयं एसणिज्जं जाव पडिग्गाहिज्जा ॥ (सू० २३१)

स भिक्षुर्यत्पुनरशनादि जानीयात्, किंभूतमिति दर्शयति-बहून् श्रमणब्राह्मणातिथिकृपणवणीमकान् समुद्दिश्य श्रमणाद्यर्थमिति यावत्, प्राणादींश्च समारभ्य यावदाहृत्य कश्चिद् गृहस्थो ददाति, तत्तथाप्रकारमशनाद्यपुरुषान्तरकृतमबहिर्निर्गतमनात्मीकृतमप-

५

१०

रिभुक्तमनासेवितमप्रासुकमनेषणीयं मन्यमानो लाभे सति न प्रतिगृह्णीयात्, इयं च "जारंविया भिक्ख"त्ति ॥ एतद्व्यत्ययेन ग्राह्यमाह-अथशब्दः पूर्वापेक्षी पुनःशब्दो विशेषणार्थः, अथ स भिक्षुः पुनरेवं जानीयात्, तद्यथा—'पुरुषान्तरकृतम्' अन्यार्थं कृतं बहिर्निर्गतमात्मीकृतं परिभुक्तमासेवितं प्रासुकमेषणीयं च ज्ञात्वा, लाभे सति प्रतिगृह्णीयात्, इदमुक्तं भवति-अविशोधिकोटिर्यथा तथा न कल्पते, विशोधिकोटिस्तु पुरुषान्तरकृतात्मीयकृतादिविशिष्टा कल्पत इति ॥ विशुद्धिकोटिमधिकृत्याह—

(मूलं) से भिक्खू वा भिक्खुणी वा गाहावइकुलं पिंडवायपडियाए पविसिउकामे से जाइं पुण कुलाइं जाणिज्ञा—इमेसु खलु कुलेसु निइए पिंडे दिज्जइ अग्गपिंडे दिज्जइ नियए भाए दिज्जइ अवड्ढभाए दिज्जइ, तहप्पगाराइं कुलाइं निइयाइं निइउमाणाइं नो भत्ताए वा पाणाए वा पविसिज्ज वा निक्खमिज्ज वा ॥ एयं खलु तस्स भिक्खुस्स भिक्खुणीए वा सामग्गियं जं सव्वट्ठेहिं समिए सहिए सया जए (सू० २३२) त्तिबेमि ॥ पिण्डैषणाध्ययन आद्योद्देशकः ॥ २ श्रु. १ चू. १ अ. १ उ. ॥

स भिक्षुर्यावद्गृहपतिकुलं प्रवेष्टुकामः से तच्छब्दार्थे स च वाक्योपन्यासार्थः, यानि पुनरेवंभूतानि कुलानि जानीयात्, तद्यथा—इमेषु कुलेषु 'खलु' वाक्यालङ्कारे 'नित्यं' प्रतिदिनं 'पिण्डः' पोषो दीयते, तथा अग्रपिण्डः-शाल्योदनादेः प्रथममुद्धृत्य भिक्षार्थं व्यवस्थाप्यते सोऽग्रपिण्डो, नित्यं भागः-अर्धपोषो दीयते, तथा नित्यमुपार्द्धभागः-पोषचतुर्थभागः, तथाप्रकाराणि कुलानि 'नित्यानि' नित्यदानयुक्तानि, नित्यदानादेव 'निइउमाणाइ'न्ति नित्यम् 'उमाणं'ति प्रवेशः स्वपक्षपरपक्षयोर्येषु तानि तथा, इदमुक्तं भवति—

१ यावन्तो भिक्षा

नित्यलाभाचेषु स्वपक्षः-संयतवर्गः परपक्षः-अपरभिक्षाचरवर्गः सर्वो भिक्षार्थं प्रविशेत्, तानि च बहुभ्यो दातव्यमिति तथाभूतमेव पाकं कुर्युः, तत्र च षट्कायवधः, अल्पे च पाके तदन्तरायः कृतः स्यादित्यतस्तानि नो भक्तार्थं पानार्थं वा प्रविशेन्निष्क्रामेद्वेति ॥ सर्वोपसंहारार्थमाह-'एतदि'ति यदादेरारभ्योक्तं, खलुशब्दो वाक्यालङ्कारार्थः, एतत्तस्य भिक्षोः 'सामग्र्यं' समग्रता यदुद्गमोत्पादनग्रहणैषणासंयोजनाप्रमाणेङ्गालधूमकारणैः सुपरिशुद्धस्य पिण्डस्योपादानं क्रियते तज्ज्ञानाचारसामग्र्यं दर्शनचारित्रतपोवीर्याचारसंपन्नता चेति, अथवैतत्सामग्र्यं सूत्रेणैव दर्शयति-यत् 'सर्वार्थैः' सरसविरसादिभिराहारगतैः यदिवा रूपरसगन्धस्पर्शगतैः सम्यगितः समितः, संयत इत्यर्थः, पञ्चभिर्वा समितिभिः समितः, शुभेतरेषु रागद्वेषविरहित इतियावत्, एवंभूतश्च सह हितेन वर्त्तत इति सहितः, सहितो वा ज्ञानदर्शनचारित्रैः, एवंभूतश्च सदा 'यतेत' संयमयुक्तो भवेदित्युपदेशः, ब्रवीमीति जम्बूनामानं सुधर्मस्वामीदमाह-भगवतः सकाशाच्छ्रुत्वाऽहं ब्रवीमि, न तु स्वेच्छयेति । शेषं पूर्ववदिति ॥ पिण्डैषणाध्ययनस्य प्रथमोद्देशकः समाप्तः॥





---

उक्तः प्रथमोद्देशकः, साम्प्रतं द्वितीय आरभ्यते, अस्य चायमभिसम्बन्धः-इहानन्तरोद्देशके पिण्डः प्रतिपादितः तदिहापि तद्गतामेव विशुद्धकोटिमधिकृत्याह—



(मूलं) से भिक्खू वा भिक्खुणी वा गाहावइकुलं पिंडवायपडियाए अणुपविट्ठे समाणे से जं पुण जाणिज्जा-असणं वा ४ अट्ठमिपोसहिएसु वा अद्धमासिएसु वा मासिएसु वा दोमासिएसु वा तेमासिएसु वा चाउम्मासिएसु वा पंचमासिएसु वा छम्मासिएसु वा उऊसु वा उउसंधीसु वा उउपरियट्टेसु वा बहवे समणमा-

हणअतिहिकिवणवणीमगे एगाओ उक्खाओ परिएसिज्जमाणे पेहाए दोहिं उक्खाहिं परिएसिज्जमाणे पेहाए तिहिं उक्खाहिं परिएसिज्जमाणे पेहाए कुंभीमुहाओ वा कलोवाइओ वा संनिहिसंनिचयाओ वा परिएसिज्जमाणे पेहाए तहप्पगारं असणं वा ४ अपुरिसंतरकडं जाव अणासेवियं अफासुयं जाव नो पडिग्गाहिज्जा ॥ अह पुण एवं जाणिज्जा पुरिसंतरकडं जाव आसेवियं फासुयं पडिग्गाहिज्जा ॥ ( सू० २३३ )

स भावभिक्षुर्यत्पुनरशनादिकमाहारमेवंभूतं जानीयात्, तद्यथा–अष्टम्यां पौषधः—उपवासादिकोऽष्टमीपौषधः स विद्यते येषां तेऽष्टमीपौषधिका–उत्सवाः तथाऽर्द्धमासिकादयश्च ऋतुसन्धिः–ऋतोः पर्यवसानम् ऋतुपरिवर्त्तः–ऋत्वन्तरम्, इत्यादिषु प्रकरणेषु बहून् श्रमणब्राह्मणातिथिकृपणवणीमगान् एकस्मात्पिठरकाद् गृहीत्वा कूरादिकं 'परिएसिज्जमाणे'त्ति तदीयमानाहारेण भोज्यमानान् 'प्रेक्ष्य' दृष्ट्वा, एवं द्विकादिकादपि पिठरकाद् गृहीत्वेत्यायोजनीयमिति, पिठरक एव सङ्कटमुखः कुम्भीः 'कलोवाइओ व'त्ति पिच्छीपिटकं वा तस्मादेकस्मादिति, सन्निधेः–गोरसादेः संनिचयस्तस्माद्वेति, ['तओ एवंविहं जावंतियं पिंडं समणादीणं परिएसिज्जमाणं पेहाए'त्ति,] एवंभूत पिण्डं दीयमानं दृष्ट्वा अपुरुषान्तरकृतादिविशेषणमप्रासुकमनेषणीयमिति मन्यमानो लाभे सति न प्रतिगृह्णीयादिति ॥ एतदेव सविशेषणं ग्राह्यमाह–अथ पुनः स भिक्षुरेवंभूतं जानीयात्ततो गृह्णीयादिति सम्बन्धः, तद्यथा–पुरुषान्तरकृतमित्यादि ॥ साम्प्रतं येषु कुलेषु भिक्षार्थं प्रवेष्टव्यं तान्यधिकृत्याह—

(मूलं) से भिक्खू वा २ जाव समाणे से जाइं पुण कुलाइं जाणिज्जा, तंजहा–उग्गकुलाणि वा भोगकुलाणि वा राइन्नकुलाणि वा खत्तियकुलाणि वा इक्खागकुलाणि वा हरिवंसकुलाणि वा एसियकुलाणि वा वेसि-

यकुलाणि वा गंडागकुलाणि वा कोट्टागकुलाणि वा गामरक्खकुलाणि वा बुक्कासकुलाणि वा अन्नयरेसु वा तहप्पगारेसु कुलेसु अदुगुंछिएसु अगरहिएसु असणं वा ४ फासुयं जाव पडिग्गाहिज्जा ॥ ( सू० २३४ )

स भिक्षुर्भिक्षार्थं प्रवेष्टुकामो यानि पुनरेवंभूतानि कुलानि जानीयात्तेषु प्रविशेदिति सम्बन्धः, तद्यथा-उग्रा-आरक्षिकाः, भोगा-राज्ञः पूज्यस्थानीयाः, राजन्याः-सखिस्थानीयाः, क्षत्रिया-राष्ट्रकूटादयः, इक्ष्वाकवः-ऋषभस्वामिवंशिकाः, हरिवंशाः-हरिवंशजाः अरिष्टनेमिवंशस्थानीयाः, 'एसिअ'त्ति गोष्ठाः, वैश्या-वणिजः, गण्डको-नापितः, यो हि ग्राम उद्घोषयति, कोट्टागाः-काष्ठतक्षका वर्द्धकिन इत्यर्थः, बोक्कशालियाः-तन्तुवायाः, कियन्तो वा वक्ष्यन्ते इत्युपसंहरति-अन्यतरेषु वा तथाप्रकारेष्वजुगुप्सितेषु कुलेषु, नानादेशविनेयसुखप्रतिपत्त्यर्थं पर्यायान्तरेण दर्शयति-अगर्ह्येषु, यदिवा जुगुप्सितानि चर्मकारकुलादीनि गर्ह्याणि-दास्यादिकुलानि तद्विपर्ययभूतेषु कुलेषु, लभ्यमानमाहारादिकं प्रासुकमेषणीयमिति मन्यमानो गृह्णीयादिति ॥ तथा—



(मूलं) से भिक्खू वा २ जाव समाणे से जं पुण जाणिज्जा-असणं वा ४ समवाएसु वा पिंडनियरेसु वा इंदमहेसु वा खंधमहेसु वा एवं रुद्दमहेसु वा मुगुंदमहेसु वा भूयमहेसु वा जक्खमहेसु वा नागमहेसु वा थूभमहेसु वा चेइयमहेसु वा रुक्खमहेसु वा गिरिमहेसु वा दरिमहेसु वा अगडमहेसु वा तलागमहेसु वा दहमहेसु वा नइमहेसु वा सरमहेसु वा सागरमहेसु वा आगरमहेसु वा अन्नयरेसु वा तहप्पगारेसु विरूवरूवेसु महामहेसु वट्टमाणेसु बहवे समणमाहणअतिहिकिवणवणीमगे एगाओ उक्खाओ परिएसिज्जमाणे पेहाए दोहिं जाव संनिहिसंनिचयाओ वा परिएसिज्जमाणे पेहाए तहप्पगारं असणं वा ४ अपुरिसंतकडं जाव नो पडिग्गाहिज्जा ॥



५

१०

अह पुण एवं जाणिज्जा दिन्नं जं तेसिं दायव्वं, अह तत्थ भुंजमाणे पेहाए गाहावइभारियं वा गाहावइभगिणिं वा गाहावइपुत्तं वा धूयं वा सुण्हं वा धाइं वा दासं वा दासिं वा कम्मकरं वा कम्मकरिं वा से पुव्वामेव आलोइज्जा-आउसित्ति वा भगिणित्ति वा दाहिसि मे इत्तो अन्नयरं भोयणजायं, से सेवं वयंतस्स परो असणं वा ४ आहट्टु दलइज्जा तहप्पगारं असणं वा ४ सयं वा पुण जाइज्जा परो वा से दिज्जा फासुयं जाव पडिग्गाहिज्जा ॥ ( सू० २३५ )

स भिक्षुर्यत्पुनरेवंभूतमाहारादिकं जानीयात् तदपुरुषान्तरकृतादिविशेषणमप्रासुकमनेषणीयमिति मन्यमानो नो गृह्णीयादिति सम्बन्धः, तत्र समवायो-मेलकः शङ्खच्छेदश्रेण्यादेः पिण्डनिकरः-पितृपिण्डो मृतकभक्तमित्यर्थः, इन्द्रोत्सवः-प्रतीतः, स्कन्धः-स्वामिकार्त्तिकेयस्तस्य महिमा-पूजा विशिष्टे काले क्रियते, रुद्रादयः प्रतीताः नवरं मुकुन्दो-बलदेवः, तदेवंभूतेषु नानाप्रकारेषु (उत्सवेषु) सत्सु तेषु च यदि यः कश्चिच्छ्रमणब्राह्मणातिथिकृपणवणीमगादिरायतति तस्मै सर्वस्मै दीयत इति मन्यमानोऽपुरुषान्तरकृतादिविशेषणविशिष्टमाहारादिकं न गृह्णीयात्, अथापि सर्वस्मै न दीयते तथाऽपि जनाकीर्णमिति मन्यमान एवंभूते सङ्खडिविशेषे न प्रविशेदिति ॥ एतदेव सविशेषणं ग्राह्यमाह-अथ पुनरेवंभूतमाहारादिकं जानीयात्, तद्यथा-दत्तं यत्तेभ्यः श्रमणादिभ्यो दातव्यम्, 'अथ' अनन्तरं तत्र स्वत एव तान् गृहस्थान् भुञ्जानान् 'प्रेक्ष्य' दृष्ट्वाऽऽहारार्थी तत्र यायात्, तान् गृहस्थान् स्वनामग्राहमाह, तद्यथा-गृहपतिभार्यादिकं भुञ्जानं पूर्वमेव 'आलोकयेत्' पश्येत् प्रभुं प्रभुसंदिष्टं वा ब्रूयात्, तद्यथा--आयुष्मति ! भगिनि ! इत्यादि, दास्यसि मह्यमन्यतरद्भोजनजातमिति, एवं वदते साधवे परो-गृहस्थ आहृत्याशनादिकं दद्यात्, तत्र च जनसङ्कुलत्वात्मति

वाऽन्यस्मिन् कारणे स्वत एव साधुर्याचेत्, अयाचितो वा गृहस्थो दद्यात्, तत्प्रासुकमेषणीयमिति मन्यमानो गृह्णीयादिति ॥ अन्य ग्रामचिन्तामधिकृत्याह—

(मूलं) से भिक्खू वा २ परं अद्धजोयणमेराए संखडिं नच्चा संखडिपडियाए नो अभिसंधारिज्जा गमणाए ॥ से भिक्खू वा २ पाईणं संखडिं नच्चा पडीणं गच्छे अणाढायमाणे, पडीणं संखडिं नच्चा पाईणं गच्छे अणाढायमाणे, दाहिणं संखडिं नच्चा उदीणं गच्छे अणाढायमाणे, उईणं संखडिं नच्चा दाहिणं गच्छे अणाढायमाणे, ५ जत्थेव सा संखडि सिया, तंजहा-गामंसि वा नगरंसि वा खेडंसि वा कब्बडंसि वा मडंबंसि वा पट्टणंसि वा आगरंसि वा दोणमुहंसि वा नेगमंसि वा आसमंसि वा संनिवेसंसि वा जाव रायहाणिंसि वा संखडिं संखडिपडियाए नो अभिसंधारिज्जा गमणाए, केवली बूया-आयाणमेयं, संखडिं संखडिपडियाए अभिधारेमाणे आहाकम्मियं वा उद्देसियं वा मीसजायं वा कीयगडं वा पामिच्चं वा अच्छिज्जं वा अणिसिट्ठं वा अभिहडं वा आहट्टु दिज्जमाणं भुंजिज्जा, अस्संजए भिक्खुपडियाए खुड्डियदुवारियाओ महल्लियदुवारियाओ कुज्जा, १० महल्लियदुवारियाओ खुड्डियदुवारियाओ कुज्जा, समाओ सिज्जाओ विसमाओ कुज्जा, विसमाओ सिज्जाओ समाओ कुज्जा, पवायाओ सिज्जाओ निवायाओ कुज्जा, निवायाओ सिज्जाओ पवायाओ कुज्जा, अंतो वा बहिं वा उवस्सयस्स हरियाणि छिंदिय छिंदिय दालिय दालिय संथारगं संथारिज्जा, एस विलुंगयामो सिज्जाए, तम्हा से संजए नियंठे तहप्पगारं पुरेसंखडिं वा पच्छासंखडिं वा संखडिं संखडिपडियाए नो अभिसंधारिज्जा

गमणाए, एयं खलु तस्स भिक्खुस्स जाव सया जए(सू० २३६) त्तिबेमि ॥ पिण्डैषणाध्ययने द्वितीयः १-१-२

स भिक्षुः 'परं' प्रकर्षेणार्द्धयोजनमात्रे क्षेत्रे संखण्ड्यन्ते-विराध्यन्ते प्राणिनो यत्र सा सङ्खडिस्तां ज्ञात्वा तत्प्रतिज्ञया 'नाभिसंधारयेत्' न पर्यालोचयेत् तत्र गमनमिति, न तत्र गच्छेदितियावत्॥ यदि पुनर्ग्रामेषु परिपाट्या पूर्वप्रवृत्तं गमनं तत्र च सङ्खडिं परिज्ञाय यद्विधेयं तद्दर्शयितुमाह-स भिक्षुर्यदि 'प्राचीनां' पूर्वस्यां दिशि संखडिं जानीयात् ततः 'प्रतीचीनम्' अपरदिग्भागं गच्छेत्, अथ प्रतीचीनां जानीयात् ततः प्राचीनं गच्छेत्, एवमुत्तरत्रापि व्यत्ययो योजनीयः, कथं गच्छेत् ?-'अनाद्रियमाणः' सङ्खडिमनादरयन्नित्यर्थः, एतदुक्तं भवति—यत्रासौ सङ्खडिः स्यात् तत्र न गन्तव्यमिति, क्व चासौ स्यादिति दर्शयति, तद्यथा-ग्रामे वा प्राचुर्येण ग्रामधर्मोपेतत्वात्, करादिगम्यो वा ग्रामः, नास्मिन् करोऽस्तीति नकरं, धूलिप्राकारोपेतं खेटं, कर्बटं-कुनगरं, सर्वतोऽर्द्धयोजनात् परेण स्थितग्रामं मडम्बं, पत्तनं-यस्य जलस्थलपथयोरन्यतरेण पर्याहारप्रवेशः, आकरः-ताम्रादेरुत्पत्तिस्थानं, द्रोणमुखं-यस्य जलस्थलपथावुभावपि, निगमा-वणिजस्तेषां स्थानं नैगमम्, आश्रमं-यतीर्थस्थानं, राजधानी-यत्र राजा स्वयं तिष्ठति, सन्निवेशो-यत्र प्रभूतानां भाण्डानां प्रवेश इति, तत्रैतेषु स्थानेषु सङ्खडिं ज्ञात्वा सङ्खडिप्रतिज्ञया न गमनम् अभिसंधारयेत्, न पर्यालोचयेत्, किमिति ?, यतः केवली ब्रूयात् 'आदानमेतत्' कर्मोपादानमेतदिति, पाठान्तरं वा 'आययणमेयं'ति आयतनं-स्थानमेतद्दोषाणां यत्सङ्खडीगमनमिति, कथं दोषाणामायतनमिति दर्शयति-'संखडिं संखडिपडियाए'त्ति, या या सङ्खडिस्तां ताम् 'अभिसन्धारयतः' तत्प्रतिज्ञया गच्छतः साधोरवश्यमेतेषां मध्येऽन्यतमो दोषः स्यात्, तद्यथा-आधाकर्म वा औद्देशिकं वा मिश्रजातं वा क्रीतकृतं वा उद्यतकं वा आच्छेद्यं वा अनिसृष्टम(ष्टं वाऽ)भ्याहृतमि (तं चेति,) एतेषां दोषाणामन्यतमदोषदुष्टं भुञ्जीत, स हि प्रकरणकर्त्तव्यमभि-

संधारयेत्–यथाऽयं यतिर्मत्प्रकरणमुद्दिश्येहायातः तदस्य मया येन केनचित्प्रकारेण दयामत्याभिसन्धायाधाकर्मादि विदध्यादिति, यदिवा यो हि लोलुपतया सङ्खडिप्रतिज्ञया गच्छेत् स तत एवाधाकर्माद्यपि भुञ्जीतेति ॥ किञ्च–सङ्खडिनिमित्तमागच्छतः साधूनुद्दिश्य गृहस्थ एवंभूता वसतीः कुर्यादित्याह—'असंयतः' गृहस्थः, स च श्रावकः प्रकृतिभद्रको वा स्यात्, तत्रासौ साधुप्रतिज्ञया क्षुद्रद्वाराः—सङ्कटद्वाराः सत्यस्ता महाद्वाराः कुर्यात्, व्यत्ययं वा कार्यापेक्षया कुर्यात्, तथा समाः शय्या–वसतयो(तीः)विषमाः सागारिकापातभयात् कुर्यात्, साधुसमाधानार्थं वा व्यत्ययं कुर्यात्, तथा प्रवाताः शय्याः शीतभयान्निवाताः कुर्यात्, ग्रीष्मकालापेक्षया वा व्यत्ययं विदध्यादिति, तथाऽन्तः–मध्ये उपाश्रयस्य बहिर्वा हरितानि छित्त्वा छित्त्वा विदार्य विदार्य उपाश्रयं संस्कुर्यात्, संस्तारकं वा संस्तारयेत्, गृहस्थश्चानेनाभिसन्धानेन संस्कुर्याद्–यथैषः साधुः शय्यायाः संस्कारे विधातव्ये 'विलुंगयामो'त्ति निर्ग्रन्थः अकिञ्चन इत्यतः स गृहस्थः कारणे संयतो वा स्वयमेव संस्कारयेदिति, उपसंहरति–तस्मात् 'तथाप्रकाराम्' अनेकदोषदुष्टां सङ्खडिं विज्ञाय सा पुरःसङ्खडिः पश्चात्सङ्खडिर्वा भवेत्, जातनामकरणविवाहादिका पुरःसङ्खडिः तथा मृतकसङ्खडिः पश्चात्सङ्खडिरिति, यदिवा पुरः—अग्रतः सङ्खडिर्भविष्यति अतोऽनागतमेव यायात्, वसतिं वा गृहस्थः संस्कुर्यात्, वृत्ता वा सङ्खडिरतोऽत्र तच्छेषोपभोगाय साधवः समागच्छेयुरिति, सर्वथा सर्वां सङ्खडिं सङ्खडिप्रतिज्ञया 'नोऽभिसंधारयेत्' न पर्यालोचयेद्गमनक्रियामिति, एवं तस्य भिक्षोः सामग्र्यं–सम्पूर्णता भिक्षुभावस्य यत्सर्वथा सङ्खडिवर्जनमिति ॥ प्रथमस्याध्ययनस्य द्वितीयः उद्देशकः समाप्तः ॥

५

१०





उक्तो द्वितीयः, साम्प्रतं तृतीय आरभ्यते, अस्य चायमभिसम्बन्धः—इहानन्तरोद्देशके दोषसंभवात् सङ्खडिगमनं निषिद्धं, प्रकारान्तरेणापि तद्गतानेव दोषानाह—

(मूलं) से एगइओ अन्नयरं संखडिं आसित्ता पिबित्ता छड्डिज्जा वा वमिज्जा, भुत्ते वा से नो सम्मं परिणमिज्जा, अन्नयरे वा से दुक्खे रोगायंके समुप्पज्जिज्जा, केवली बूया आयाणमेयं॥ (सू० २३७) इह खलु भिक्खू गाहावईहिं वा गाहावईणीहिं वा परिवायएहिं वा परिवाईयाहिं वा एगज्जं सद्धिं सुंडं पाउं भो वइमिस्सं हुरत्था वा उवस्सयं पडिलेहेमाणो नो लभिज्जा तमेव उवस्सयं संमिस्सीभावमावज्जिज्जा, अन्नमणे वा से मत्ते विप्परियासियभूए,-इत्थिविग्गहे वा किलीबे वा तं भिक्खुं उवसंकमित्तु बूया—आउसंतो समणा! अहे आरामंसि वा अहे उवस्सयंसि वा राओ वा वियाले वा गामधम्मनियंतियं कट्टु रहस्सियं मेहुणधम्मपरियारणाए आउट्टामो, तं चेवेगइओ सातिज्जिज्जा—अकरणिज्जं चेयं संखाए एए आयाणा (आयतणाणि) संति संचिज्जमाणा पच्चवाया भवंति, तम्हा से संजए नियंठे तहप्पगारं पुरेसंखडिं वा पच्छासंखडिं वा संखडिं संखडिपडियाए नो अभिसंधारिज्जा गमणाए॥ सू० (२३८)

स भिक्षुः 'एकदा' कदाचिद् एकचरो वा 'अन्यतरां' काञ्चित्पुरःसङ्खडिं पश्चात्सङ्खडिं वा 'सङ्खडि'मिति सङ्खडिभक्तम् 'आस्वाद्य' भुक्त्वा तथा पीत्वा शिखरिणीदुग्धादि, तत्रातिलोलुपतया रसगृद्ध्याऽऽहारितं सत् 'छड्डेज वा' छर्दिं विदध्यात्, कदाचिच्चापरि-

ब्रूयात्, यथा 'एतत्' सङ्खडीभक्तम् 'आदान' कर्मोपादानं वर्त्तत इति। यथैतदादानं भवति तथा दर्शयति—'इहे'ति सङ्खडिस्थानेऽस्मिन् वा भवे अमी अपायाः, आमुष्मिकास्तु दुर्गतिगमनादयः, खलुशब्दो वाक्यालङ्कारे, भिक्षणशीलो भिक्षुः स गृहपतिभिस्तद्भार्याभिर्वा परिव्राजकैः परिव्राजिकाभिर्वा सार्द्धमेकध्यम्—एकवाक्यतया संप्रधार्य 'भो' इत्यामन्त्रणे, एतानामन्त्र्य चैतद्दर्शयति—सङ्खडिगतस्य लोलुपतया सर्वं संभाव्यत इति, अतस्तैर्व्यतिमिश्रं 'सोंडं'ति सीधुमन्यद्वा प्रसन्नादिकं 'पातुं' पीत्वा ततः 'हुरत्था वा' बहिर्वा निर्गत्योपाश्रयं याचेत, यदा च प्रत्युपेक्षमाणो विवक्षितमुपाश्रयं न लभेत ततस्तमेवोपाश्रयं यत्रासौ महडिस्तत्रान्यत्र वा गृहस्थपरिव्राजिकादिभिर्मिश्रीभावमापद्येत, तत्र चासावन्यमना मत्तो गृहस्थादिको विपर्यासीभूत आत्मानं न स्मरति, स वा भिक्षुरात्मानं न स्मरेत्, अस्मरणाच्चैवं चिन्तयेद्—यथाऽहं गृहस्थ एव, यदिवा—स्त्रीविग्रहे शरीरे 'विपर्यासीभूतः' अध्युपपन्नः 'क्लीबे वा' नपुंसके वा, सा च स्त्री नपुंसको वा, तं भिक्षुम् 'उपसङ्क्रम्य' आसन्नीभूय ब्रूयात्, तद्यथा—आयुष्मन्! श्रमण! त्वया सहैकान्तमहं प्रार्थयामि, तद्यथा—आरामे वोपाश्रये वा, कालतश्च रात्रौ वा विकाले वा, तं भिक्षुं ग्रामधर्मैः—विषयोपभोगगतैर्व्यापारैर्नियन्त्रितं कृत्वा, तद्यथा—मम त्वया विप्रियं न विधेयं, प्रत्यहमहमनुसर्पणीयेति, एवमादिभिर्नियम्य ग्रामागन्ते वा कुत्रचिद्रहसि मिथुनं—दाम्पत्यं तत्र भवं मैथुनम्—अब्रह्मेति तस्य धर्माः—तद्गता व्यापारास्तेषां परियारणा—आसेवना तया 'आउट्टामो'त्ति प्रवर्त्तामहे, इदमुक्तं भवति—साधुमुद्दिश्य रहसि मैथुनप्रार्थनां काचित्कुर्यात्, तां चैकः कश्चिदेकाकी वा 'साइज्जेज्ज'त्ति अभ्युपगच्छेत्, अकरणीयमेतद्, एवं 'सत्थाय' ज्ञात्वा सङ्खडिगमनं न कुर्याद्, यस्मादेतानि 'आयतनानि' कर्मोपादानकारणानि 'सन्ति' भवन्ति 'संचीयमानानि' प्रतिक्षणमुपचीयमानानि, इदमुक्तं भवति—अन्यान्यपि कर्मोपादानकारणानि भवेयुः, यत एवमादिकाः प्रत्यपाया भवन्ति तस्मादसौ

संयतो निर्ग्रन्थस्तथाप्रकारां सङ्खडिं पुरःसङ्खडिं पश्चात्सङ्खडिं वा सङ्खडिं ज्ञात्वा सङ्खडिप्रतिज्ञया 'नाभिसंधारयेद् गमनाय' गन्तुं न पर्यालोचयेदित्यर्थः ॥ तथा—

(मूलं)से भिक्खू वा २ अन्नयरिं संखडिं सुच्चा निसम्म संपहावइ उस्सुयभूएण अप्पाणेणं, धुवा संखडी, नो संचाएइ तत्थ इयरेहिं कुलेहिं सामुदाणियं एसियं वेसियं पिंडवायं पडिग्गाहित्ता आहारं आहारित्तए, माइट्ठाणं संफासे, नो एवं करिज्जा॥ से तत्थ कालेण अणुपविसित्ता तत्थियरेयरेहिं कुलेहिं सामुदाणियं एसियं वेसियं पिंडवायं पडिगाहित्ता आहारं आहारिज्जा ॥ ( सू० २३९ )

पिण्डादिरहितं पिण्डपातं प्रतिगृह्याहारमाहारयेदिति ॥ पुनरपि सङ्खडिविशेषमधिकृत्याह—

( मूलं ) से भिक्खू वा २ से जं पुण जाणिज्जा गामं वा जाव रायहाणिं वा इमंसि खलु गामंसि वा जाव रायहाणिंसि वा संखडी सिया तंपि य गामं वा जाव रायहाणिं वा संखडिं संखडिपडियाए नो अभिसंधारिज्जा गमणाए ॥ केवली बूया आयाणमेयं, आइन्ना अवमा णं संखडिं अणुपविस्समाणस्स- पाएण वा पाए अक्कतपुव्वे भवइ, हत्थेण वा हत्थे संचालियपुव्वे भवेइ, पाएण वा पाए आवडियपुव्वे भवइ, सीसेण वा सीसे संघट्टियपुव्वे भवइ, काएण वा काए संखोभियपुव्वे भवइ, दंडेण वा अट्ठीण वा मुट्ठीण वा लेलुणा वा कवालेण वा अभिहयपुव्वे वा भवइ, सीओदएण वा उस्सित्तपुव्वे भवइ, रयसा वा परिघासियपुव्वे भवइ, अणेसणिज्जे वा परिभुत्तपुव्वे भवइ, अन्नेसिं वा दिज्जमाणे पडिग्गाहियपुव्वे भवइ, तम्हा से संजए नियंठे तहप्पगारं आइन्नावमा णं संखडिं संखडिपडियाए नो अभिसंधारिज्जा गमणाए ॥ (सू० २४०)

स भिक्षुर्यदि पुनरेवंभूतं ग्रामादिकं जानीयात्, तद्यथा—ग्रामे वा नगरे वा यावद्राजधान्यां वा सङ्खडिर्भविष्यति, तत्र च चरकादयोऽपरे वा भिक्षाचराः स्युरतस्तदपि ग्रामादिकं सङ्खडिप्रतिज्ञया 'नाभिसन्धारयेद्गमनाय' न तत्र गमनं कुर्यादित्यर्थः ॥ तद्गतांश्च दोषान् सूत्रेणैवाह—केवली ब्रूयाद् यथैतदादानं—कर्मोपादानं वर्त्तत इति, (कथमिति) दर्शयति—सा च सङ्खडिः आकीर्णा वा भवेत्—चरकादिभिः सङ्कुला 'अवमा' हीना शतस्योपस्कृते पञ्चशत उपस्थानादिति, तां चाकीर्णामवमां वाऽनुप्रविशतोऽमी दोषाः, तद्यथा—पादेनापरस्य पाद आक्रान्तो भवेत्, हस्तेन वा हस्तः संचालितो भवेत्, 'पात्रेण वा' भाजनेन वा 'पात्रं' भाजनमापतितपूर्वं भवेत्,

१०

शिरसा वा शिरः सङ्घट्टितं भवेत्, कायेनापरस्य—चरकादेः कायः सङ्क्षोभितपूर्वो भवेदिति, स च चरकादिरारुपितः कलहं कुर्यात्, कुपितेन च तेन दण्डेनास्थ्ना वा मुष्टिना वा लोष्टेन वा कपालेन वा साधुरभिहतपूर्वो भवेत्, तथा शीतोदकेन वा कश्चित् सिञ्चेत्, रजसा वा परिघर्षितो भवेत्। एते तावत्सङ्कीर्णदोषाः, अन्यमदोषाश्चामी—अनेषणीयपरिभोगो भवेत्, स्तोकस्य संस्कृतत्वात्प्रभूतत्वाचार्थिनां, प्रकरणकारस्यायमाशयः स्याद्—यथा मत्प्रकरणमुद्दिश्यैते समायातास्तत एतेभ्यो मया यथाकथञ्चिद्देयमित्यभिमन्धिनाऽऽधाकर्माद्यपि कुर्याद्, अतोऽनेषणीयपरिभोगः स्यादिति, कदाचिद्वा दात्राऽन्यस्मै दातुमभिवाञ्छितं, तच्चान्यस्मै दीयमानमन्तराले साधुर्गृह्णीयात्, तस्मादेतान् दोषानभिसंप्रधार्य संयतो निर्ग्रन्थस्तथाप्रकारामाकीर्णामवमां वा सङ्खडिं विज्ञाय सङ्खडिप्रतिज्ञया नाभिसंधारयेद् गमनायेति ॥ साम्प्रतं सामान्येन पिण्डशङ्कामधिकृत्याह—

(मूलं) से भिक्खू वा २ जाव समाणे से जं पुण जाणिज्जा असणं वा ४ एसणिज्जे सिया अणेसणिज्जे सिया वितिगिंछसमावन्नेण अप्पाणेण असमाहडाए लेसाए तहप्पगारं असणं वा ४ लाभे संते नो पडिगाहिज्जा ॥सू. २४१

स भिक्षुर्गृहपतिकुलं प्रविष्टः सन् यत्पुनराहारजातमेषणीयमप्येवं शङ्केत, तद्यथा—विचिकित्सा जुगुप्सा वाऽनेषणीयाशङ्का तया समापन्नः—शङ्कागृहीत आत्मा यस्य स तथा तेन शङ्कासमापन्नेनात्मना 'असमाहडाए' अशुद्धया लेश्यया—उद्गमादिदोषदुष्टमित्येवंचित्तविप्लुत्याऽशुद्धा लेश्या—अन्तःकरणरूपोपजायते तया सत्या 'तथाप्रकारम्' अनेषणीयं शङ्कादोषदुष्टमाहारादिकं सति लाभे "जं संके तं समावज्जे" इति इति वचनान्न प्रतिगृह्णीयादिति ॥ साम्प्रतं गच्छनिर्गतानधिकृत्य सूत्रमाह—

१ य शङ्केत समापन्नः

(मूलं) से भिक्खू गाहावइकुलं पविसिउकामे सव्वं भंडगमायाए गाहावइकुलं पिंडवायपडियाए पविसिज्ज वा निक्खमिज्ज वा॥ से भिक्खू वा बहिया विहारभूमिं वा० निक्खममाणे वा पविसमाणे वा सव्वं भंडगमायाए बहिया विहारभूमिं वा० निक्खमिज्ज वा पविसिज्ज वा ॥ से भिक्खू वा गामाणुगामं दूइज्जमाणे सव्वं भंडगमायाए गामाणुगामं दूइज्जिज्ज ॥ (सू० ३४२)

स भिक्षुर्गच्छनिर्गतो जिनकल्पिकादिर्गृहपतिकुलं प्रवेष्टुकामः 'सर्वं' निरवशेषं 'भण्डकं' धर्मोपकरणम् 'आदाय' गृहीत्वा गृहपतिकुलं पिण्डपातप्रतिज्ञया प्रविशेद्वा ततो निष्क्रामेद्वा, तच्च चोपकरणमनेकधेति, तद्यथा-"दुग तिग चउक्क पंचग नव दस एक्कारसेव बारसहे"त्यादि, तत्र जिनकल्पिको द्विविधः-छिद्रपाणिरच्छिद्रपाणिश्च, तत्राच्छिद्रपाणेः शक्त्यनुरूपाभिग्रहविशेषाद् द्विविधमुपकरणं, तद्यथा-रजोहरणं मुखवस्त्रिका च, कस्यचिच्चक्त्राणार्थं क्षौमपटपरिग्रहात्रिविधम्, अपरस्योदकबिन्दुपरितापादिरक्षणार्थं-मौर्णिकपटपरिग्रहाच्चतुर्द्धा, तथाऽसहिष्णुतरस्य द्वितीयक्षौमपटपरिग्रहात्पञ्चधेति, छिद्रपाणेस्तु जिनकल्पिकस्य सप्तविधपात्रनिर्योगसमन्वितस्य रजोहरणमुखवस्त्रिकादिग्रहणक्रमेण यथायोगं नवविधो दशविध एकादशविधो द्वादशविधश्चोपधिर्भवति, पात्रनिर्योगश्च-"पत्तं १ पत्ताबंधो २ पायट्ठवणं ३ च पायकेसरिया ४। पडलाइं ५ रयत्ताणं ६ च गोच्छओ ७ पायनिज्जोगो ॥१॥" अन्यत्रापि गच्छता सर्वमुपकरणं गृहीत्वा गन्तव्यमित्याह-स भिक्षुर्ग्रामादेर्बहिर्विहारभूमिं-स्वाध्यायभूमिं वा तथा 'विचारभूमिं' विष्ठोत्सर्गभूमिं सर्वमुपकरणमादाय प्रविशेन्निष्क्रामेद्वा, एतद्द्वितीयं, एवं ग्रामान्तरेऽपि तृतीयं सूत्रम् ॥ साम्प्रतं गमनाभावे निमित्तमाह—'

१० 

१ पात्रं पात्रबन्धः पात्रस्थापनं च पात्रकेसरिका। पटलानि रजस्त्राणं च गोच्छकः पात्रनिर्योगः ॥१॥

(मूलं) से भिक्खू० अह पुण एवं जाणिज्जा–तिव्वदेसियं वासं वासेमाणं पेहाए तिव्वदेसियं महियं संनिचयमाणं पेहाए महवाएण वा रयं समुद्धयं पेहाए तिरिच्छसंपाइमा वा तसा पाणा संथडा संनिचयमाणा पेहाए से एवं नच्चा नो सव्वं भंडगमायाए गाहावइकुलं पिंडवायपडियाए पविसिज्ज वा निक्खमिज्ज वा बहिया विहारभूमिं वा वियारभूमिं वा निक्खमिज्ज वा पविसिज्ज वा गामाणुगामं दूइज्जिज्जा ॥ ( सू० २४३ )

स भिक्षुरथ पुनरेवं विजानीयात्, तद्यथा–तीव्रं–बृहद्धारोपेतं देशिकं–बृहत्क्षेत्रव्यापि तीव्रं च तद्देशिकं चेति समासः, बृहद्धारं महति क्षेत्रे वर्षन्तं प्रेक्ष्य, तथा तीव्रदेशिकां–महति देशेऽन्धकारोपेतां 'महिकां वा' भूमिकां संनिपतन्तीं 'प्रेक्ष्य' उपलभ्य, तथा महावातेन वा समुद्धूतं रजः प्रेक्ष्य तिरश्चीनं वा संनिपततो–गच्छतः 'प्राणिनः' पतङ्गादीन् 'संस्कृ(स्त्र)तान्' घनान् प्रेक्ष्य स भिक्षुरेवं ज्ञात्वा गृहपतिकुलादौ सवत्रयोदिष्टं सर्वमादाय न गच्छेन्नापि निष्क्रामेद्वेति, इदमुक्तं भवति–सामाचार्येवैषा यथा गच्छता साधुना गच्छनिर्गतेन तदन्तर्गतेन वा उपयोगो दातव्यः, तत्र यदि वर्षमहिकादिकं जानीयात्ततो जिनकल्पिको न गच्छत्येव, यतस्तस्य शक्तिरेषा यथा पण्मासं यावत्पुरीषोत्सर्गनिषे(रो)धं विदध्यात्, इतरस्तु सति कारणे यदि गच्छेत् न सर्वमुपकरणं गृहीत्वा गच्छेदिति तात्पर्यार्थः॥ अधस्ताज्जुगुप्सितेषु दोषदर्शनात्प्रवेशप्रतिषेध उक्तः, साम्प्रतमजुगुप्सितेष्वपि केषुचिद्दोषदर्शनात्प्रवेशप्रतिषेधं दर्शयितुमाह–

(मूलं) से भिक्खू वा २ से जाइं पुण कुलाइं जाणिज्जा, तंजहा–खत्तियाण वा राईण वा कुराईण वा रायपेसियाण वा रायवंसट्ठियाण वा अंतो वा बाहिं वा गच्छंताण वा संनिविट्ठाण वा निमंतेमाणाण वा अनिमंतेमाणाण वा असणं वा ४ लाभे संते नो पडिगाहिज्जा ॥ (सू० २४४) १-१-३ पिण्डैषणायां तृतीय उद्देशकः ॥

स भिक्षुर्यानि पुनरेवंभूतानि कुलानि जानीयात्, तद्यथा–क्षत्रियाः–चक्रवर्तिवासुदेवबलदेवप्रभृतयस्तेषां कुलानि राजानः–क्षत्रियेभ्योऽन्ये, कुराजानः–प्रत्यन्तराजानः, राजप्रेष्याः–दण्डपाशिकप्रभृतयः, राजवंशे स्थिता–राज्ञो मातुलभागिनेयादयः, एतेषां कुलेषु संपातभयान्न प्रवेष्टव्यं, तेषां च गृहान्तर्बहिर्वा स्थितानां 'गच्छतां' पथि वहतां 'संनिविष्टानाम्' आवासितानां निमन्त्रयतामनिमन्त्रयतां वाऽशनादि सति लाभे न गृह्णीयादिति ॥ प्रथमस्याध्ययनस्य तृतीय उद्देशकः समाप्तः ॥ १–१–३ ॥

उक्तस्तृतीयोदेशकः, साम्प्रतं चतुर्थ आरभ्यते, अस्य चायमभिसम्बन्धः–इहानन्तरोद्देशके सङ्खडिगतो विधिरभिहितस्तदिहापि तच्छेषविधेः प्रतिपादनार्थमाह—

(मूलं) से भिक्खू वा० जाव समाणे से जं पुण जाणेज्जा मंसाइयं वा मच्छाइयं मंसखलं वा मच्छखलं वा आहेणं वा पहेणं वा हिंगोलं वा संमेलं वा हीरमाणं पेहाए अंतरा से मग्गा बहुपाणा बहुबीया बहुहरिया बहुओसा बहुउत्तिंगपणगदगमट्टीमक्कडासंताणया बहवे तत्थ समणमाहणअतिहिकिवणवणीमगा उवागया उवागमिस्संति (उवागच्छंति) तत्थाइन्ना वित्ती नो पन्नस्स निक्खमणपवेसाए नो पन्नस्स वायणपुच्छणपरियट्टणाणुप्पेहधम्माणुओगचिंताए, से एवं नचा तहप्पगारं पुरेसंखडिं वा पच्छासंखडिं वा संखडिं संखडिपडियाए नो अभिसंधारिज्ज गमणाए ॥ से भिक्खू वा० से जं पुण जाणिज्जा मंसाइयं वा मच्छाइयं वा जाव हीरमाणं वा पेहाए अंतरा से मग्गा अप्पा पाणा जाव संताणगा नो जत्थ बहवे समण० जाव उवागमिस्संति अप्पाइन्ना

वित्ती पन्नस्स निक्खमणपवेसाए पन्नस्स वायणपुच्छणपरियट्टणाणुप्पेहधम्माणुओगचिंताए, सेवं नच्चा तहप्पगारं पुरेसंखडिं वा० अभिसंधारिज्ज गमणाए ॥ ( सू० २४९ )

स भिक्षुः क्वचिद्ग्रामादौ भिक्षार्थं प्रविष्टः सन् यद्येवंभूतां सङ्खडिं जानीयात् तत्प्रतिज्ञया नाभिसंधारयेद् गमनायेत्यन्ते क्रिया, यादृग्भूतां च सङ्खडिं न गन्तव्यं तां दर्शयति–मांसमादौ प्रधानं यस्यां सा मांसादिका तामिति, इदमुक्तं भवति—मांसनिर्वृत्तिं कर्तुकामाः पूर्णायां वा निवृत्तौ मांसप्रचुरां सङ्खडिं कुर्युः, तत्र कश्चित्स्वजनादिस्तदनुरूपमेव किञ्चिन्नयेत्, तच्च नीयमानं दृष्ट्वा न तत्र गन्तव्यं, तत्र दोषान् वक्ष्यतीति, तथा मत्स्या आदौ प्रधानं यस्यां सा तथा, एवं मांसखलमिति, यत्र सङ्खडिनिमित्तं मांसं छित्त्वा छित्त्वा शोष्यते शुष्कं वा पुञ्जीकृतमास्ते तत्तथा, क्रिया पूर्ववत्, एवं मत्स्यखलमपीति, तथा 'आहेणं'ति यद्विवाहोत्तरकालं वधूप्रवेशे वरगृहे भोजनं क्रियते,-'पहेणं'ति वध्वा नीयमानाया यत्पितृगृहभोजनमिति, 'हिंगोलं'ति मृतकभक्तं यक्षादियात्राभोजनं वा, 'संमेलं'ति परिजनसन्मानभक्तं गोष्ठीभक्तं वा, तदेवंभूतां सङ्खडिं ज्ञात्वा तत्र च केनचित्स्वजनादिना तन्निमित्तमेव किञ्चिद् 'ह्रियमाणं' नीयमानं प्रेक्ष्य तत्र भिक्षार्थं न गच्छेद्, यतस्तत्र गच्छतो गतस्य च दोषाः संभवन्ति, तांश्च दर्शयति–गच्छतस्तावदन्तरा–अन्तराले 'तस्य' भिक्षोः 'मार्गाः' पन्थानो बहवः प्राणाः–प्राणिनः–पतङ्गादयो येषु ते तथा, बहुबीजा बहुहरिता बह्ववश्याया बहूदका बहूत्तिङ्गपनकोदकमृत्तिकामर्कटसन्तानकाः, प्राप्तस्य च तत्र सङ्खडिस्थाने बहवः श्रमणब्राह्मणातिथिकृपणवणीमगा उपागता उपागमिष्यन्ति तथोपागच्छन्ति च, तत्राकीर्णा चरकादिभिः 'वृत्तिः' वर्तनम् अतो न तत्र प्राज्ञस्य निष्क्रमणप्रवेशाय वृत्तिः कल्पते, नापि प्राज्ञस्य वाचनापृच्छनापरिवर्तनाऽनुप्रेक्षाधर्मानुयोगचिन्तायै वृत्तिः कल्पते, न तत्र जनाकीर्णे गीतवादित्रसम्भवात्

साध्यायादिक्रियाः प्रवर्त्तन्त इति भावः, स भिक्षुरेवं गच्छगतापेक्षया बहुदोषां तथाप्रकारां मांसप्रधानादिकां पुरःसङ्खडिं पश्चात्सङ्खडिं वा ज्ञात्वा तत्प्रतिज्ञया नाभिसन्धारयेद्गमनायेति ॥ साम्प्रतमपवादमाह—स भिक्षुरध्वानक्षीणो ग्लानोत्थितस्तपश्चरणकर्षितो वाऽवमौदर्ये वा प्रेक्ष्य दुर्लभद्रव्यार्थी वा स यदि पुनरेवं जानीयात्—मांसादिकामित्यादि पूर्ववदालापका यावदन्तरा—अन्तराले 'से' तस्य भिक्षोर्गच्छतो मार्गा अल्पप्राणा अल्पबीजा अल्पहरिता इत्यादि व्यत्ययेन पूर्ववदालापकाः, तदेवमल्पदोषां सङ्खडिं ज्ञात्वा मांसादिदोषपरिहरणसमर्थः सति कारणे तत्प्रतिज्ञयाऽभिसंधारयेद्गमनायेति ॥ पिण्डाधिकारेऽनुवर्त्तमाने भिक्षागोचरविशेषमधिकृत्याह—

(मूलं) से भिक्खू वा २ जाव पविसिउकामे से जं पुण जाणिज्जा खीरिणियाओ गावीओ खीरिज्जमाणीओ पेहाए असणं वा ४ उवसंखडिज्जमाणं पेहाए पुरा अप्पजूहिए सेवं नच्चा नो गाहावइकुलं पिंडवायपडियाए निक्खमिज्ज वा पविसिज्ज वा ॥ से तमादाय एगंतमवक्कमिज्जा अणावायमसंलोए चिट्ठिज्जा, अह पुण एवं जाणिज्जा—खीरिणियाओ गावीओ खीरियाओ पेहाए असणं वा ४ उवक्खडियं पेहाए पुराए जूहिए सेवं नच्चा तओ संजयामेव गाहा० निक्खमिज्ज वा ॥ (सू० २४६)

स भिक्षुर्गृहपतिकुलं प्रवेष्टुकामः सन्नथ पुनरेवं विजानीयाद्, यथा क्षीरिण्यो गावोऽत्र दुह्यन्ते, ताश्च दुह्यमानाः प्रेक्ष्य तथाऽशनादिकं चतुर्विधमप्याहारमुपसंस्क्रियमाणं प्रेक्ष्य तथा 'अप्पजूहिए'त्ति सिद्धेऽप्योदनादिके 'पुरा' पूर्वमन्येषामदत्ते सति प्रवर्त्तमानाधिकरणापेक्षी पूर्वत्र च प्रकृतिभद्रकादिः कश्चिद्यतिं दृष्ट्वा श्रद्धावान् बहुतरं दुग्धं ददामीति वत्सकपीडां कुर्यात्, त्रसेयुर्वा दुह्यमाना गावस्तत्र संयमात्मविराधना, अर्द्धपक्वौदने च पाकार्थं त्वरयाऽधिकं यत्नं कुर्यात् ततः संयमविराधनेति, तदेवं ज्ञात्वा स

१०

भिक्षुर्गृहपतिकुलं पिण्डपातप्रतिज्ञया न प्रविशेन्नापि निष्क्रामेदिति ॥ यच्च कुर्यात्तद्दर्शयितुमाह–'सः' भिक्षुः 'तम्' अर्थं गोदोहनादिकम् 'आदाय' गृहीत्वाऽवगम्येत्यर्थः, तत एकान्तमपक्रामेद्, अपक्रम्य च गृहस्थानामनापातेऽसंलोके च तिष्ठेत्, तत्र तिष्ठन्नथ पुनरेवं जानीयाद् यथा क्षीरिण्यो गावो दुग्धा इत्यादि पूर्वव्यत्ययेनालापका नेया यावन्निष्क्रामेत्प्रविशेद्वेति ॥ पिण्डाधिकार एवेदमाह–

(मूलं) भिक्खागा नामेगे एवमाहंसु–समाणा वा वसमाणा वा गामाणुगामं दूइज्जमाणे खुड्डाए खलु अयं गामे संनिरुद्धाए नो महालए से हंता भयंतारो बाहिरगाणि गामाणि भिक्खायरियाए वयह, संति तत्थेगइयस्स भिक्खुस्स पुरेसंथुया वा पच्छासंथुया वा परिवसंति, तंजहा–गाहावई वा गाहावइणीओ वा गाहावइपुत्ता वा गाहावइधूयाओ वा गाहावईसुण्हाओ वा धाइओ वा दासा वा दासीओ वा कम्मकरा वा कम्मकरीओ वा, तहप्पगाराइं कुलाइं पुरेसंथुयाणि वा पच्छासंथुयाणि वा पुव्वामेव भिक्खायरियाए अणुपविसिस्सामि, अविय इत्थ लभिस्सामि पिंडं वा लोयं वा खीरं वा दहिं वा नवणीयं वा घयं वा गुलं वा तिल्लं वा महुं वा मज्जं वा मंसं वा सक्कुलिं वा फाणियं वा पूयं वा सिहिरिणिं वा, तं पुव्वामेव भुच्चा पिच्चा पडिग्गहं च संलिहिय संमज्जिय तओ पच्छा भिक्खूहिं सद्धिं गाहा० पविसिस्सामि वा निक्खमिस्सामि वा, माइट्ठाणं संफासे, तं नो एवं करिज्जा ॥ से तत्थ भिक्खूहिं सद्धिं कालेण अणुपविसित्ता तत्थियरेयरेहिं कुलेहिं सामुदाणियं एसियं वेसियं पिंडवायं पडिगाहित्ता आहारं आहारिज्जा, एयं खलु तस्स भिक्खुस्स वा भिक्खुणीए वा सामग्गियं० (सू० २४७) ॥ १-१-४ ॥ पिण्डैषणायां चतुर्थ उद्देशकः ॥

प्र. आ.
३३५

भिक्षणशीला भिक्षुका नामैके साधवः केचनैवमुक्तवन्तः, किम्भूतास्ते इत्याह–'समानाः' इति जङ्घाबलपरिक्षीणतयैकस्मिन्नेव क्षेत्रे तिष्ठन्तः, तथा 'वसमानाः' मासकल्पविहारिणः, त एवंभूताः प्राघूर्णकान् समायातान् ग्रामानुग्रामं दूयमानान्–गच्छत एवमूचुः–यथा क्षुल्लकोऽयं ग्रामोऽल्पगृहभिक्षादो वा, तथा संनिरुद्धः–सूतकादिना, नो महानिति पुनर्वचनमादरख्यापनार्थम्, 'अतिशयेन क्षुल्लक इत्यर्थः, ततो हन्त ! इत्यामन्त्रणं, यूयं भवन्तः–पूज्या बहिर्ग्रामेषु भिक्षाचर्यार्थं व्रजतेत्येवं ब्रूयात्, यदि वा तत्रैकस्य वास्तव्यस्य भिक्षोः 'पुरःसंस्तुताः' भ्रातृव्यादयः 'पश्चात्संस्तुताः' श्वशुरकुलसंबद्धाः परिवसन्ति, तान् स्वनामग्राहमाह, तद्यथा–गृहपतिर्वेत्यादि सुगमं यावत्तथाप्रकाराणि कुलानि पुरःपश्चात्संस्तुतानि पूर्वमेव भिक्षाकालादहमेतेषु भिक्षार्थं प्रवेक्ष्यामि, अपि चैतेषु स्वजनादिकुलेष्वभिप्रेतं लाभं लप्स्ये, तदेव दर्शयति–'पिण्डं' शाल्योदनादिकं 'लोयम्' इतीन्द्रियानुकूलं रसाद्युपेतमुच्यते, तथा क्षीरं वेत्यादि सुगमं यावत्सिहरिणीं वेति, नवरं मद्यमांसे छेदसूत्राभिप्रायेण व्याख्येये, अथवा कश्चिदतिप्रमादावष्टब्धोऽत्यन्तगृध्नुतया मधुमद्यमांसान्यप्याश्रयेदतस्तदुपादानं, 'फाणियं'ति उदकेन द्रवीकृतो गुडः कथितोऽकथितो वा, शिखरिणी–मार्जिता, तल्लब्धं पूर्वमेव भुक्त्वा पेयं च पीत्वा पतद्ग्रहं संलिह्य–निरवयवं कृत्वा संमृज्य च–वस्त्रादिनाऽऽर्द्रतामपनीय ततः पश्चादुपागते भिक्षाकालेऽविकृतवदनः प्राघूर्णकभिक्षुभिः सार्द्धं गृहपतिकुलं पिण्डपातप्रतिज्ञया प्रवेक्ष्यामि निष्क्रमिष्यामि चेत्यभिसन्धिना मातृस्थानं संस्पृशेदसावित्यतः प्रतिषिध्यते–नैवं कुर्यादिति ॥ कथं च कुर्यादित्याह–'सः' भिक्षुः 'तत्र' ग्रामादौ प्राघूर्णकभिक्षुभिः सार्द्धं 'कालेन' भिक्षावसरेण प्राप्तेन गृहपतिकुलमनुप्रविश्य तत्र 'इतरेतरेभ्यः' उच्चावचेभ्यः कुलेभ्यः 'सामुदानिकं' भिक्षापिण्डम् 'एषणीयम्' उद्गमादिदोषरहितं 'वैषिकं' केवलवेषावाप्तं धात्रीदूतीनिमित्तादिपिण्डदोषरहितं 'पिण्डपातं, भैक्षं प्रतिगृह्य प्राघूर्णकादिभिः सह ग्रासै-



१०

प्रक्रमो–मार्गस्तस्मिन्नन्यस्मिन् सति संयत एव तेन 'पराक्रमेत' गच्छेत्, नैवर्जुना गच्छेत्, किमिति ?, यतः 'केवली' सर्वज्ञो ब्रूयाद्– 'आदानं' कर्मादानमेतत्, संयमात्मविराधनातः, तामेव दर्शयति—'स' भिक्षुः 'तत्र' तस्मिन् वप्रादियुक्ते मार्गे 'पराक्रममाणः' गच्छन् विषमत्वान्मार्गस्य कदाचित् 'प्रचलेत्' कम्पेत् प्रस्खलेद्वा तथा प्रपतेद्वा, स तत्र प्रस्खलन् प्रपतन् वा षण्णां कायानामन्यतमं विराधयेत्, तथा तत्र 'से' तस्य काय उच्चारेण वा प्रस्रवणेन वा श्लेष्मणा वा सिङ्घानकेन वा वान्तेन वा पित्तेन वा पूतेन वा शुक्रेण वा शोणितेन वा उपलिप्तः स्यादित्यत एवंभूतेन पथा न गन्तव्यम्, अथ मार्गान्तराभावाचेनैव गतः प्रस्खलितः सन् कर्दमाद्युपलिप्तकायो नैवं कुर्यादिति दर्शयति–स यतिस्तथाप्रकारम्–अशुचिकर्दमाद्युलिप्तं कायमनन्तर्हितया–अव्यवहितया पृथिव्या तथा 'सस्निग्धया' आर्द्रया एवं सरजस्कया वा, तथा 'चित्तवत्या' सचित्तया शिलया, तथा चित्तवता 'लेलुना' पृथिवीशकलेन वा, एवं कोला–घुणास्तदावासभूते दारुणि जीवप्रतिष्ठिते साण्डे सप्राणिनि यावत् ससन्तानके 'नो' नैव सकृदामृज्यात् नापि पुनः पुनः प्रमृज्यात्, कर्दमादि शोधयेदित्यर्थः, तथा तत्रस्थ एव 'न संलिहेज्जा' न संलिखेत्, न विलिखेत् नोद्वर्त्तनादिनोद्वलेत्, नापि तदेवेपच्छुष्कमुद्वर्त्तयेत्, नापि तत्रस्थ एव सकृदातापयेत्, पुनः पुनर्वा प्रतापयेत्, यत्कुर्यात्तदाह–स भिक्षुः 'पूर्वमेव' तदनन्तरमेवाल्परजस्कं तृणादि याचेत, तेन चैकान्तस्थण्डिले स्थितः सन् गात्रं 'प्रमृज्यात्' शोधयेत्, शेषं सुगममिति ॥ किञ्च—

(मूलं) से भिक्खू वा० से जं पुण जाणिज्जा गोणं वियालं पडिपहे पेहाए महिसं वियालं पडिपहे पेहाए, एवं मणुस्सं आसं हत्थिं सीहं वग्घं विगं दीवियं अच्छं तरच्छं परिसरं सियालं विरालं सुणयं कोलसुणयं कोकंतियं चित्ताचिल्लडयं वियालं पडिपहे पेहाए सइ परक्कमे संजयामेव परक्कमेज्जा, नो उज्जुयं गच्छिज्जा । ॥३०७॥





२८

से भिक्खू वा० समाणे अंतरा से उवाओ वा खाणुए वा कंटए वा घसी वा भिलुगा वा विसमे वा विज्जले वा परियावज्जिज्जा, सइ परक्कमे संजयामेव० नो उज्जुयं गच्छिज्जा ॥ ( सू० २५० )

स भिक्षुर्भिक्षार्थं प्रविष्टः सन् पथ्युपयोगं कुर्यात्, तत्र च यदि पुनरेवं जानीयाद् यथाऽत्र किञ्चिद्गवादिकमास्त इति तन्मार्गे रुन्धानं 'गां' बलीवर्दं 'व्यालं' दृप्तं दुष्टमित्यर्थः, पन्थानं प्रति प्रतिपथस्तस्मिन् स्थितं प्रत्युपेक्ष्य, शेषं सुगमं, यावत्सति पराक्रमे–मार्गान्तरे ऋजुना पथाऽऽत्मविराधनासम्भवान्न गच्छेत्, नवरं 'विगं'ति वृकं 'द्वीपिनं' चित्रकम् 'अच्छं'ति ऋक्षं 'परिसर'न्ति सरभं 'कोलसुणयं' महाशूकरं 'कोकंतिय'न्ति शृगालाकृतिर्लोमटको रात्रौ को को इत्येवं रारटीति, 'चित्ताचिल्लडयं'ति आरण्यो जीवविशेषस्तमिति ॥ तथा–स भिक्षुर्भिक्षार्थं प्रविष्टः सन् मार्गोपयोगं दद्यात्, तत्रान्तराले यद्येतत्पर्यापद्येत–स्यात्, तद्यथा–'अवपातः' गर्त्तः स्थाणुर्वा कण्टको वा घसी नाम–स्थलादधस्तादवतरणं 'भिलुग'त्ति स्फुटितकृष्णभूराजिः विषमं–निम्नोन्नतं विज्जलं–कर्दमः, तत्रात्मसंयमविराधनासम्भवात् 'पराक्रमे' मार्गान्तरे सति ऋजुना पथा न गच्छेदिति ॥ तथा—

(मूलं) से भिक्खू वा० गाहावइकुलस्स दुवारबाहं कंटगबुंदियाए परिपिहियं पेहाए तेसिं पुव्वामेव उग्गहं अणणुन्नविय अपडिलेहिय अप्पमज्जिय नो अवंगुणिज्ज वा पविसिज्ज वा निक्खमिज्ज वा, तेसिं पुव्वामेव उग्गहं अणुन्नविय पडिलेहिय पडिलेहिय पमज्जिय पमज्जिय तओ संजयामेव अवंगुणिज्ज वा पविसेज्ज वा निक्खमेज्ज वा ॥ ( सू० २५१ )

स भिक्षुर्भिक्षार्थं प्रविष्टः सन् गृहपतिकुलस्य 'दुवारबाहं'ति द्वारभागस्तं कण्टकशाखया 'पिहितं' स्थगितं प्रेक्ष्य येषां तद्गृहं तेषा-

मवग्रहं पूर्वमेव 'अननुज्ञाप्य' अयाचित्वा, तथा अप्रत्युपेक्ष्य चक्षुषाऽप्रमृज्य च रजोहरणादिना 'नोऽवंगुणेज'त्ति नैवोद्घाटयेद्, उद्घाट्य च न प्रविशेन्नापि निष्क्रामेत्, दोषदर्शनात्, तथाहि-गृहपतिः प्रद्वेषं गच्छेत्, नष्टे च वस्तुनि साधुविषया शङ्कोत्पद्येत, उद्घाटद्वारे चान्यत् पश्वादि प्रविशेदित्येवं च संयमात्मविराधनेति। सति कारणेऽपवादमाह-स भिक्षुर्येषां तद्गृहं तेषां सम्बन्धिनमवग्रहम् 'अनुज्ञाप्य' याचित्वा प्रत्युपेक्ष्य प्रमृज्य च गृहोद्घाटनादि कुर्यादिति, एतदुक्तं भवति-स्वतो द्वारमुद्घाट्य न प्रवेष्टव्यमेव, यदि पुनर्ग्लानाचार्यादिप्रायोग्यं तत्र लभ्यते वैद्यो वा तत्रास्ते दुर्लभं वा द्रव्यं तत्र भविष्यति अवमौदर्ये वा सति एभिः कारणैरुपस्थितैः स्थगितद्वारि व्यवस्थितः सन् शब्दं कुर्यात्, स्वयं वा यथाविध्युद्घाट्य प्रवेष्टव्यमिति ॥ तत्र प्रविष्टस्य विधिं दर्शयितुमाह-

(मूलं) से भिक्खू वा २ से जं पुण जाणिज्जा समणं वा माहणं वा गामपिंडोलगं वा पुव्वपविट्ठं पेहाए नो तेसिं संलोए सपडिदुवारे चिट्ठिज्जा, से तमायाय एगंतमवक्कमिज्जा २ अणावायमसंलोए चिट्ठिज्जा, से से परो अणावायमसंलोए चिट्ठमाणस्स असणं वा ४ आहट्टु दलइज्जा, से य एवं वइज्जा-आउसंतो समणा! इमे भे असणे वा ४ सव्वजणाए निसट्ठे तं भुंजह वा णं परिभाएह वा णं, तं चेगइओ पडिगाहित्ता तुसिणीओ उवेहिज्जा, अवियाइं एयं ममसेव सिया, माइट्ठाणं संफासे, नो एवं करिज्जा, से तमायाए तत्थ गच्छिज्जा २ से इणामेव आलोइज्जा-आउसंतो समणा! इमे भे असणे वा ४ सव्वजणाए निसिट्ठे तं भुंजह वा णं जाव परिभाएह वा णं, सेणमेवं वयंतं परो वइज्जा-आउसंतो समणा! तुमं चेव णं परिभाएहि, से तत्थ परिभाएमाणे नो अप्पणो खद्धं २ डायं २ उसढं २ रसियं २ मणुन्नं २ निद्धं २ लुक्खं २, से तत्थ अमुच्छिए अगिद्धे अग-

(ना)ढिए अणज्झोववन्ने बहुसममेव परिभाइज्जा, से णं परिभाएमाणं परो वइज्जा–आउसंतो समणा ! मा णं तुमं परिभाएहि सव्वे वेगइआ ठिया उ भुक्खामो वा पाहामो वा, से तत्थ भुंजमाणे नो अप्पणा खद्धं खद्धं जाव लुक्खं, से तत्थ अमुच्छिए ४ बहुसममेव भुंजिज्जा वा पाइज्जा वा ॥ (सू० २९२)

स भिक्षुर्ग्रामादौ भिक्षार्थं प्रविष्टो यदि पुनरेवं विजानीयाद् यथाऽत्र गृहे श्रमणादिः कश्चित्प्रविष्टः, तं च पूर्वप्रविष्टं प्रेक्ष्य दातृप्रतिग्राहकासमाधानान्तरायभयाच्च तदालोके तिष्ठेत्, नापि तन्निर्गमद्वारं प्रति, दातृप्रतिग्राहकासमाधानान्तरायभयात्, किन्तु स भिक्षुस्तं श्रमणादिकं भिक्षार्थमुपस्थितम् 'आदाय' अवगम्यैकान्तमपक्रामेत्, अपक्रम्य चान्येषां चानापाते–विजनेऽसंलोके च संतिष्ठेत्, तत्र च तिष्ठतः स गृहस्थः 'से' तस्य भिक्षोश्चतुर्विधमप्याहारमाहृत्य दद्यात्, प्रयच्छंश्चैतद् ब्रूयाद्–यथा यूयं बहवो भिक्षार्थमुपस्थिताः अहं च व्याकुलत्वान्नाहारं विभाजयितुमलं अतो हे आयुष्मन्तः ! श्रमणाः ! अयमाहारश्चतुर्विधोऽपि 'भे' युष्मभ्यं सर्वजनार्थं मया निसृष्टो–दत्तस्ततसाम्प्रतं स्वरुच्या तमाहारमेकत्र वा भुङ्ग्ध्वं परिभजध्वं वा—विभज्य वा गृह्णीतेत्यर्थः; तदेवंविध आहार उत्सर्गतो न ग्राह्यः, दुर्भिक्षे वाऽध्वाननिर्गतादौ वा द्वितीयपदे कारणे सति गृह्णीयाद्, गृहीत्वा च नैवं कुर्याद्, यथा तमाहारं गृहीत्वा तूष्णीको गच्छन्नेवमुत्प्रेक्षेत–यथा ममैवायमेकस्य दत्तः, अपि चायमल्पत्वान्ममैवैकस्य स्याद्, एवं च मातृस्थानं संस्पृशेद्, अतो नैवं कुर्यादिति, यथा च कुर्यात्तथा च दर्शयति–स भिक्षुस्तमाहारं गृहीत्वा तत्र श्रमणाद्यन्तिके गच्छेद्, गत्वा च सः 'पूर्वमेव' आदावेव तेषामाहारम् 'आलोकयेत्' दर्शयेत्, इदं च ब्रूयाद्–यथा भो आयुष्मन्तः श्रमणादयः ! अयमशनादिक आहारो युष्माकं सर्वजनार्थमविभक्त एव गृहस्थेन निसृष्टो–दत्तः,तद्यूयमेकत्र भुङ्ग्ध्वं विभजध्वं वा,'से' अथैनं साधुमेवं ब्रुवाणं कश्चिच्छ्रम-

णादिरेव ब्रूयाद्–यथा भो आयुष्मन् श्रमण! त्वमेवास्माकं परिभाजय, नैवं तावत्कुर्यात्, अथ सति कारणे कुर्यात् तदाऽनेन विधिनेति दर्शयति–स भिक्षुर्विभाजयन्नात्मनः 'खद्धं २' प्रचुरं २ 'डागं'ति शाकम् 'ऊसढं'ति उच्छ्रितं वर्णादिगुणोपेतं, शेषं सुगमं यावद्रूक्षमिति न गृह्णीयादिति। अपि च–'सः' भिक्षुः 'तत्र' आहारेऽमूर्च्छितोऽगृद्धोऽनादृतोऽनध्युपपन्न इति, एतान्यादरख्यापनार्थमेकार्थिकान्युपात्तानि,कथञ्चिद्भेदाद्वा व्याख्यातव्यानीति, 'बहुसम'मिति(न)सर्वमत्र समं किञ्चित्सिक्थादिना यद्यधिकं भवेदिति, तदेवं प्रभूतसमं परिभाजयेत्, तं च साधुं परिभाजयन्तं कश्चिदेवं ब्रूयाद्, यथा–आयुष्मन्! श्रमण! मा त्वं परिभाजय, किन्तु सर्व एव चैकत्र व्यवस्थिता वयं भोक्ष्यामहे पास्यामो वा, तत्र परतीर्थिकैः सार्द्धं न भोक्तव्यं, स्वयूथ्यैश्च पार्श्वस्थादिभिः सह, सम्भोगिकैः सहौघालोचनां दत्त्वा भुञ्जानानामयं विधिः, तद्यथा–नो आत्मन इत्यादि, सुगममिति॥ इहानन्तरसूत्रे बहिरालोकस्थानं निषिद्धं, साम्प्रतं तत्प्रवेशप्रतिषेधार्थमाह—



(मूलं) से भिक्खू वा० से जं पुण जाणिज्जा समणं वा माहणं वा गामपिंडोलगं वा अतिहिं वा पुव्वपविट्ठं पेहाए नो ते उवाइक्कम्म पविसिज्ज वा ओभासिज्ज वा, से तमायाय एगंतमवक्कमिज्जा २ अणावायमसंलोए चिट्ठिज्जा, अह पुणेवं जाणिज्जा–पडिसेहिए वा दिन्ने वा, तओ तंमि नियत्तिए संजयामेव पविसिज्ज वा ओभासिज्ज वा एयं० सामग्गियं० (सू० २५३)॥ २–१–१–५॥ पिण्डैषणायां पञ्चम उद्देशकः॥

स भिक्षुर्भिक्षार्थं ग्रामादौ प्रविष्टः सन् यदा पुनरेवं विजानीयात्, तद्यथा–अत्र गृहपतिकुले श्रमणादिकः प्रविष्टः, तं च पूर्वप्रविष्टं श्रमणादिकं प्रेक्ष्य ततो न तान् श्रमणादीन् पूर्वप्रविष्टानतिक्रम्य प्रविशेत्, नापि तत्स्थ एव 'अवभाषेत' दातारं याचेत्, अपि

च-स तम् 'आदाय' अवगम्यैकान्तमपक्रामेद् अनापातासंलोके च तिष्ठेत् तावद्यावच्छ्रमणादिके प्रतिषिद्धे पिण्डे वा तस्मै दत्ते, ततस्तस्मिन् 'निवृत्ते' गृहान्निर्गते सति ततः संयत एव प्रविशेदवभाषेत वेति, एवं च तस्य भिक्षोः 'सामग्र्यं' सम्पूर्णो भिक्षुभाव इति ॥ प्रथमस्य पञ्चमोद्देशकः समाप्तः ॥



पञ्चमोद्देशकान्तरं षष्ठः समारभ्यते, अस्य चायमभिसम्बन्धः—इहानन्तरोद्देशके श्रमणाद्यन्तरायभयाद्गृहप्रवेशो निषिद्धः, तदिहाप्यपरप्राण्यन्तरायप्रतिषेधार्थमाह—

( मूलं ) से भिक्खू वा० से जं पुण जाणिज्जा—रसेसिणो बहवे पाणा घासेसणाए संथडे संनिवइए पेहाए, तंजहा—कुक्कुडजाइयं वा सूयरजाइयं वा अग्गपिंडंसि वा वायसा संथडा संनिवइया पेहाए सइ परक्कमे संजया० नो उज्जुयं गच्छिज्जा ॥ ( सू० २५४ )

स भिक्षुर्भिक्षार्थं प्रविष्टः सन् यदि पुनरेवं विजानीयात्, तद्यथा—बहवः 'प्राणाः' प्राणिनः रस्यते—आस्वाद्यत इति रसस्तमेष्टुं शीलमेषां ते रसैषिणः, रसान्वेषिण इत्यर्थः, ते तदर्थिनः सन्तः पथाद् ग्रासार्थं क्वचिद्रथ्यादौ संनिपतितास्तांश्चाहारार्थं संस्त(स्तृ)-तान्—घनान् संनिपतितान् प्रेक्ष्य ततस्तदभिमुखं न गच्छेदिति सम्बन्धः तांश्च प्राणिनः स्वनामग्राहमाह—कुक्कुटजातिकं वेत्यनेन च पक्षिजातिरुद्दिष्टा, सूकरजातिकमित्यनेन च चतुष्पदजातिरिति, 'अग्रपिण्डे वा' काकपिण्ड्यां वा बहिः क्षिप्तायां वायसाः संनिपतिता भवेयुः, तांश्च दृष्ट्वाऽग्रतः, ततः सति पराक्रमे—अन्यस्मिन् मार्गान्तरे 'संयतः' सम्यगुपयुक्तः संयतामन्त्रणं वा ऋजुस्तदभिमुखं



५

१०

न गच्छेद्, यतस्तत्र गच्छतोऽन्तरायं भवति, तेषां चान्यत्र संनिपतितानां वधोऽपि स्यादिति ॥ साम्प्रतं गृहपतिकुलं प्रविष्टस्य साधोर्विधिमाह—

(मूलं) से भिक्खू वा २ जाव नो गाहावइकुलस्स वा दुवारसाहं अवलंबिय २ चिट्ठिज्जा, नो गा० दगच्छड्डुणमत्तए चिट्ठिज्जा, नो गा० चंदणिउयए चिट्ठिज्जा, नो गा० सिणाणस्स वा वच्चस्स वा संलोए सपडिदुवारे चिट्ठिज्जा, नो० आलोयं वा थिग्गलं वा संधिं वा दगभवणं वा बाहाओ पगिज्झिय २ अंगुलियाए वा उद्दिसिय २ उण्णमिय २ अवनमिय २ निज्झाइज्जा, नो गाहावइं अंगुलियाए उद्दिसिय २ जाइज्जा, नो गा० अंगुलिए चालिय २ जाइज्जा, नो गा० अं० तज्जिय २ जाइज्जा, नो गा० अं० उक्खुलंपिय [उक्खलुंदिय] २ जाइज्जा, नो गाहावइं वंदिय २ जाइज्जा, नो वयणं फरुसं वइज्जा ॥ (सू० २५५)

प्र. आ. ३४०

स भिक्षुर्भिक्षार्थं गृहपतिकुलं प्रविष्टः सन्नैतत्कुर्यात्, तद्यथा—नो गृहपतिकुलस्य द्वारशाखाम् 'अवलम्ब्यावलम्ब्य' पौनःपुन्येन भृशं वाऽवलम्ब्य तिष्ठेद्, यतः सा जीर्णत्वात्पतेद् दुष्प्रतिष्ठितत्वाद्वा चलेत् ततश्च संयमात्मविराधनेति, तथा 'उदकप्रतिष्ठापनमात्रके' उपकरणधावनोदकप्रक्षेपस्थाने प्रवचनजुगुप्साभयान्न तिष्ठेत्, तथा 'चंदणिउदय'त्ति आचमनोदकप्रवाहभूमौ न तिष्ठेद्, दोषः पूर्वोक्त एव, तथा स्नानवर्चःसंलोके तत्प्रतिद्वारं वा तिष्ठेत्, एतदुक्तं भवति—यत्र स्थितैः स्नानवर्चःक्रिये कुर्वन् गृहस्थः समवलोक्यते तत्र न तिष्ठेदिति, दोषश्चात्र दर्शनाशङ्कया निःशङ्कतत्क्रियाया अभावेन निरोधप्रद्वेषसम्भव इति, तथा नैव गृहपतिकुलस्य 'आलोकम्' आलोकस्थानं—गवाक्षादिकं, 'थिग्गलं'ति प्रदेशपतितसंस्कृतं, तथा 'संधि'न्ति चौरखातं भित्तिसन्धि वा, तथा 'उदकभवनम्'



वर्चआलोकादिवर्जनं २०



२७

उदकगृहं, सर्वाण्यप्येतानि भुजां 'प्रगृह्य प्रगृह्य' पौनःपुन्येन प्रसार्य तथाऽङ्गुल्योद्दिश्य तथा कायमवनम्योन्नम्य च न निध्यापयेत्-न प्रलोकयेत् नाप्यन्यस्मै प्रदर्शयेत्, सर्वत्र द्विर्वचनमादरख्यापनार्थं, तत्र हि हृतनष्टादौ शङ्कोत्पद्यत इति ॥ अपिच-स भिक्षुर्गृहपतिकुलं प्रविष्टः सन्नैव गृहपतिमङ्गुल्याऽत्यर्थमुद्दिश्य तथा चालयित्वा तथा 'तर्जयित्वा' भयमुपदर्श्य तथा कण्डूयनं कृत्वा तथा गृहपतिं 'वन्दित्वा' वाग्भिः स्तुत्वा प्रशस्य नो याचेत, अदत्ते च नैव तं गृहपतिं परुषं वदेत्, तद्यथा—यक्षस्त्वं परगृहं रक्षसि, कुतस्ते दानं?, वार्त्तैव भद्रिका भवतो, न पुनरनुष्ठानम्, अपिच—"अक्षरद्वयमेतद्धि, नास्ति नास्ति यदुच्यते। तदिदं देहि देहीति, विपरीतं भविष्यति ॥१॥" अन्यच्च—

(मूलं) अह तत्थ कंचि भुंजमाणं पेहाए गाहावइं वा० जाव कम्मकरिं वा से पुव्वामेव आलोइज्जा—आउसोत्ति वा भइणित्ति वा दाहिसि मे इत्तो अन्नयरं भोयणजायं?, से सेवं वयंतस्स परो हत्थं वा मत्तं वा दव्विं वा भायणं वा सीओदगवियडेण वा उसिणोदगवियडेण वा उच्छोलिज्ज वा पहोइज्ज वा, से पुव्वामेव आलोइज्जा—आउसोत्ति वा भइणित्ति वा! मा एयं तुमं हत्थं वा० ४ सीओदगवियडेण वा २ उच्छोलेहि वा २; अभिकंखसि मे दाउं एवमेव दलयाहि, से सेवं वयंतस्स परो हत्थं वा ४ सीओ० उसि० उच्छोलित्ता पहोइत्ता आहट्टु दलइज्जा, तहप्पगारेणं पुरेकम्मएणं हत्थेण वा ४ असणं वा ४ अफासुयं जाव नो पडिगाहिज्जा। अह पुण एवं जाणिज्जा नो पुरेकम्मएणं उदउल्लेणं तहप्पगारेणं वा उदउल्लेण(ससिणिद्धेण)वा हत्थेण वा ४ असणं वा ४ अफासुयं जाव नो पडिगाहिज्जा। अह पुणेवं जाणिज्जा—नो उदउल्लेण ससिणिद्धेण सेसं तं चेव एवं—सस-



पुरःकर्मादि-निषेधः

उल्ले, ससिणिद्धे मट्टिया ऊसे। हरियाले हिंगुलुए, मणोसिला अंजणे लोणे ॥१॥ गेरुय वन्निय सेढिय सोरट्ठिय पिट्ठ कुकुस उक्कुट्ठसंसट्ठेण। अह पुणेवं जाणिज्जा नो असंसट्ठे संसट्ठे, तहप्पगारेण संसट्ठेण हत्थेण वा ४ असणं वा ४ फासुयं जाव पडिगाहिज्जा ॥ (सू० २५६)

अथ भिक्षुस्तत्र गृहपतिकुले प्रविष्टः सन् कञ्चन गृहपत्यादिकं भुञ्जानं प्रेक्ष्य स भिक्षुः पूर्वमेवालोचयेद्—यथाऽयं गृहपतिस्तद्भार्या वा यावत्कर्मकरी वा भुङ्क्ते, पर्यालोच्य च सनामग्राहं याचेत, तद्यथा—'आउसोत्ति वे'ति, अमुक इति गृहपते ! भगिनि ! इति वा इत्याद्यामन्त्र्य दास्यसि मेऽस्मादाहारजातादन्यतरद्भोजनजातमित्येवं याचेत, तच्च न वर्त्तते कर्तुं, कारणे वा सत्येवं वदेत्—अथ 'से' तस्य भिक्षोरेवं वदतो याचमानस्य परो गृहस्थः कदाचिद्धस्तं मात्रं दर्वीं भाजनं वा 'शीतोदकविकटेन' अप्कायेन 'उष्णोदकविकटेन' उष्णोदकेनात्रिदण्डोद्वृत्तेन पश्चाद्वा सचित्तीभूतेन 'उच्छोलेज्ज'त्ति सकृदुदकेन प्रक्षालनं कुर्यात्, 'पहोएज्ज'त्ति प्रकर्षेण वा हस्तादेर्द्धावनं कुर्यात्, स भिक्षुर्हस्तादिकं पूर्वमेव प्रक्षाल्यमानमालोचयेद्, दत्तावधानो भवेदित्यर्थः, तच्च प्रक्षाल्यमानमालोच्यामुक इत्येवं सनामग्राहं निवारयेद्, यथा—मैवं कृथास्त्वमिति, यदि पुनरसौ गृहस्थो हस्तादिकं सचित्तोदकेन प्रक्षाल्य दद्यात्तदप्रासुमिति ज्ञात्वा न प्रतिगृह्णीयादिति ॥ किञ्च—अथासौ भिक्षुर्गृहपतिकुलं प्रविष्टः सन् यदि पुनरेवं विजानीयात्, तद्यथा—'नो' नैव साधुभिक्षादानार्थं पुरः—अग्रतः कृतं प्रक्षालनादिकं कर्म—क्रिया यस्य हस्तादेः स तथा तेनोदकेनार्द्रेणेति—गलद्बिन्दुनेति, एतदुक्तं भवति—साधुभिक्षादानार्थं नैव हस्तादिकं प्रक्षालितं, किन्तु तथाप्रकारः एव स्वतः कुतोऽप्यनुष्ठानादुदकार्द्रो हस्तस्तेन, एवं मात्रादिनाऽपि गलद्बिन्दुना दीयमानं चतुर्विधमप्याहारमप्रासुकमनेषणीयमिति मत्वा नो गृह्णीयादिति ॥ अथ पुनरेवं विजानीयात्, तद्यथा—

एस कारणे एसुवएसे जं तहप्पगारं असणं वा ४ अगणिनिक्खित्तं अफासुयं नो० पडि० एयं सामग्गियं ॥ (सू० २५९) पिंडैषणायां षष्ठ उद्देशकः २-१-१-६ ॥

स भिक्षुर्गृहपतिकुलं प्रविष्टश्चतुर्विधमप्याहारमग्न्युपरि निक्षिप्तं तथाप्रकारं ज्वालासंबद्धं लाभे सति न प्रतिगृह्णीयात्। अत्रैव दोषमाह-केवली ब्रूयात् 'आदानं' कर्मादानमेतदिति, तथाहि 'असंयतः' गृहस्थो भिक्षुप्रतिज्ञया तत्राग्न्युपरिव्यवस्थितमाहारम् 'उत्सिञ्चन्' आक्षिपन् 'निःसिञ्चन्' दत्त्वोद्वरितं प्रक्षिपन्, तथा 'आमर्जयन्' सकृद्धस्तादिना शोधयन्, तथा प्रकर्षेण मार्जयन्-शोधयन्, तथाऽवतारयन्, तथा 'अपवर्तयन्' तिरश्चीनं कुर्वन्नग्निजीवान् हिंस्यादिति। 'अथ' अनन्तरं 'भिक्षूणां' साधूनां पूर्वोपदिष्टा एषा प्रतिज्ञा एष हेतुः तत्कारणमयमुपदेशः यत्तथाप्रकारमग्निसंबद्धमशनाद्यग्निनिक्षिप्तमप्रासुकमनेषणीयमिति ज्ञात्वा लाभे सति न प्रतिगृह्णीयात्, एतत्खलु भिक्षोः 'सामग्र्यं' समग्रो भिक्षुभाव इति ॥ प्रथमाध्ययनस्य षष्ठ उद्देशकः समाप्तः ॥ २-१-१-६ ॥

---

षष्ठोद्देशकानन्तरं सप्तमः समारभ्यते, अस्य चायमभिसम्बन्धः-इहानन्तरोद्देशके संयमविराधनाऽभिहिता, इह तु संयमात्मदातृविराधना तया च विराधनया प्रवचनकुत्सेत्येतदत्र प्रतिपाद्यत इति—

(मूलं) से भिक्खू वा २ से जं० असणं वा खंधंसि वा थंभंसि वा मंचंसि वा मालंसि वा पासायंसि वा हम्मियतलंसि वा अन्नयरंसि वा तहप्पगारंसि अंतलिक्खजायंसि उवनिक्खित्ते सिया तहप्पगारं मालोहडं असणं वा ४ अफासुयं नो०, केवली बूया-आयाणमेयं, अस्संजए भिक्खुपडियाए पीढं वा फलगं वा निस्सेणिं

लपलन'ति अर्द्धपक्वशाल्यादिकणादिकमित्येवमादिकम् 'असंयतः' गृहस्थः 'भिक्षुप्रतिज्ञया' भिक्षुमुद्दिश्य चित्तमत्यां शिलायां तथा सबीजाया सहरिताया साण्डायां यावन्मर्कटसन्तानोपेतायाम् 'अकुट्टिंसु' कुट्टितवन्तः तथा कुट्टन्ति कुट्टिष्यन्ति वा, एकवचनाधिकारेऽपि छान्दसत्वाद्विद्व्यत्ययेन बहुवचनं द्रष्टव्यं, पूर्वत्र वा जातावेकवचनं, तच्च पृथुकादिकं सचित्तमचित्तं वा चित्तमत्यां शिलाया कुट्टयित्वा 'उप्फणिसु'त्ति सारार्थं वाताय दत्तवन्तो ददति दास्यन्ति वा, तदेवं तथाप्रकारं पृथुकादि ज्ञात्वा लाभे सति नो प्रतिगृह्णीयादिति ॥ किञ्च—

(मूलं) से भिक्खू वा २ जाव समाणे से जं० बिलं वा लोणं उब्भियं वा लोणं अस्संजए जाव ससंताणाए भिंदिसु ३ रुचिंसु वा ३ बिलं वा लोणं उब्भियं वा लोणं अफासुयं० नो पडिगाहिज्जा ॥ (सू० २५८)

स भिक्षुर्यदि पुनरेवं विजानीयात्, तद्यथा—बिलमिति खनिविशेषोत्पन्नं लवणम्, अस्य चोपलक्षणार्थत्वात्सैन्धवसौवर्चलादिकमपि द्रष्टव्यं, तथोद्भिज्जमिति समुद्रोपकण्ठे क्षारोदकसम्पर्काद् यदुद्भिद्यते लवणम्, अस्याप्युपलक्षणार्थत्वात्क्षारोदकसेकाद्युद्भवति रुमकादिकं तदपि ग्राह्यं, तदेवंभूतं लवणं पूर्वोक्तविशेषणविशिष्टाया शिलायामभैत्सुः—कणिकाकारं कृतुः, तथा साध्वर्थमेव भिन्दन्ति भेत्स्यन्ति वा, तथा श्लक्ष्णतरार्थं 'रुचिंसु व'त्ति पिष्टवन्तः पिंपन्ति पेक्ष्यन्ति वा, तदपि लवणमेवंप्रकारं ज्ञात्वा नो(प्रति)गृह्णीयात् ॥ अपि च—

(मूलं) से भिक्खू वा० से जं० असणं वा ४ अगणिणिक्खित्तं तहप्पगारं असणं वा ४ अफासुयं नो०, केवली बूया—आयाणमेयं, अस्संजए भिक्खुपडियाए उस्सिंचमाणे वा निस्सिंचमाणे वा आमज्जमाणे वा पमज्जमाणे वा ओयारेमाणे वा उव्वत्तमाणे वा अगणिजीवे हिंसिज्जा, अह भिक्खूणं पुव्वोवइट्ठा एस पइन्ना एस हेऊ

एस कारणे एसुवएसे जं तहप्पगारं असणं वा ४ अगणिनिक्खित्तं अफासुयं नो० पडि० एयं सामग्गियं ॥ (सू० २५९) पिंडैषणायां षष्ठ उद्देशकः २-१-१-६ ॥

स भिक्षुर्गृहपतिकुलं प्रविष्टश्चतुर्विधमप्याहारमग्न्युपरि निक्षिप्तं तथाप्रकारं ज्वालासंबद्धं लाभे सति न प्रतिगृह्णीयात् । अत्रैव दोषमाह-केवली ब्रूयात् 'आदानं' कर्मादानमेतदिति, तथाहि 'असंयतः' गृहस्थो भिक्षुप्रतिज्ञया तत्राग्न्युपरिव्यवस्थितमाहारम् 'उत्सिञ्चन्' आक्षिपन् 'निःसिञ्चन्' दत्तोद्वरितं प्रक्षिपन्, तथा 'आमर्जयन्' सकृद्धस्तादिना शोधयन्, तथा प्रकर्षेण मार्जयन्-शोधयन्, तथाऽवतारयन्, तथा 'अपवर्त्तयन्' तिरश्चीनं कुर्वन्नग्निजीवान् हिंस्यादिति । 'अथ' अनन्तरं 'भिक्षूणां' साधूनां पूर्वोपदिष्टा एषा प्रतिज्ञा एष हेतुः तत्कारणमयमुपदेशः यत्तथाप्रकारमग्निसंबद्धमशनाद्यग्निनिक्षिप्तमप्रासुकमनेषणीयमिति ज्ञात्वा लाभे सति न प्रतिगृह्णीयात्, एतत्खलु भिक्षोः 'सामग्र्यं' समग्रो भिक्षुभाव इति ॥ प्रथमाध्ययनस्य षष्ठ उद्देशकः समाप्तः ॥ २-१-१-६ ॥

---

षष्ठोद्देशकानन्तरं सप्तमः समारभ्यते, अस्य चायमभिसम्बन्धः-इहानन्तरोद्देशके संयमविराधनाऽभिहिता, इह तु संयमात्मदातृविराधना तया च विराधनया प्रवचनकुत्सेत्येतदत्र प्रतिपाद्यत इति—

(मूलं) से भिक्खू वा २ से जं० असणं वा खंधंसि वा थंभंसि वा मंचंसि वा मालंसि वा पासायंसि वा हम्मियतलंसि वा अन्नयरंसि वा तहप्पगारंसि अंतलिक्खजायंसि उवनिक्खित्ते सिया तहप्पगारं मालोहडं असणं वा ४ अफासुयं नो०, केवली बूया-आयाणमेयं, अस्संजए भिक्खुपडियाए पीढं वा फलगं वा निस्सेणिं

वा उदूहलं वा आहट्टु उस्सविय दुरूहिज्जा, से तत्थ दुरूहमाणे पयलिज्ज वा पवडिज्ज वा, से तत्थ पयलमाणे वा २ हत्थं वा पायं वा बाहुं वा ऊरुं वा उदरं वा सीसं वा अन्नयरं वा कायंसि इंदियजालं लूसिज्ज वा पाणाणि वा ४ अभिहणिज्ज वा वित्तासिज्ज वा लेसिज्ज वा संघसिज्ज वा संघट्टिज्ज वा परियाविज्ज वा किलामिज्ज वा ठाणाओ ठाणं संकामिज्ज वा, तं तहप्पगारं मालोहडं असणं वा ४ लाभे संते नो पडिगाहिज्जा, से भिक्खू वा २ जाव समाणे से जं० असणं वा ४ कुट्ठियाओ वा कोलेज्जाउ वा अहसंजए भिक्खुपडियाए उक्कुज्जिय अवउज्जिय ओहरिय आहट्टु दलइज्जा, तहप्पगारं असणं वा ४ लाभे संते नो पडिगाहिज्जा॥ ( सू० २६० )

स भिक्षुर्भिक्षार्थं प्रविष्टः सन् यदि पुनरेवं चतुर्विधमप्याहारं जानीयात्, तद्यथा—'स्कन्धे' अर्द्धप्राकारे 'स्तम्भे वा' शैलदारुमयादौ, तथा मञ्चके वा माले वा प्रासादे वा हर्म्यतले वा अन्यतरस्मिन् वा तथाप्रकारेऽन्तरिक्षजाते स आहारः 'उपनिक्षिप्तः' व्यवस्थापितो भवेत्, तं च तथाप्रकारमाहारं मालाहृतमिति मत्वा लाभे सति न प्रतिगृह्णीयात्, केवली ब्रूयाद् यत आदानमेतदिति, तद्यथा—असंयतो भिक्षुप्रतिज्ञया साधुदानार्थं पीठकं वा फलकं वा निश्रेणिं वा उदूखलं वाऽऽहृत्य—ऊर्ध्वं व्यवस्थाप्यारोहेत्, स तत्रारोहन् प्रचलेद्वा प्रपतेद्वा, प्रपतन् वा हस्तादिकमन्यतरद्वा काये इन्द्रियजातं 'लूसेज'त्ति विराधयेत्, तथा प्राणिनो भूतानि जीवान् सत्त्वानभिहन्याद्वित्रासयेद्वा लेपयेद्वा—संश्लेषं वा कुर्यात् तथा संघर्षं वा कुर्यात् तथा सङ्घट्टं वा कुर्यात्, एतच्च कुर्वंस्तान् परितापयेद्वा क्लामयेद्वा स्थानात्स्थानं सङ्क्रामयेद्वा, तदेतत् ज्ञात्वा यदाहारजातं तथाप्रकारं मालाहृतं तल्लाभे सति नो प्रतिगृह्णीयादिति ॥ स भिक्षुर्यदि पुनरेवंभूतमाहारं जानीयात्, तद्यथा—'कोष्ठिकातः' मृन्मयकुशूलसंस्थानायाः तथा 'कोलेज्जाओ'त्ति अधोवृत्तखाताकाराद् असंयतः

'भिक्षुप्रतिज्ञया' साधुमुद्दिश्य कोष्ठिकातः उक्कुज्जिय-ऊर्द्धकायमुन्नम्य ततः कुब्जीभूय, कोलेज्जाओ 'अवउज्जिअ'त्ति अधोऽवनम्य, तथा 'ओहरिय'त्ति तिरश्चीनो भूत्वाऽऽहारमाहृत्य दद्यात्, तच्च भिक्षुस्तथाप्रकारमधोमालाहृतमितिकृत्वा लाभे सति न प्रतिगृह्णीयादिति ॥ अधुना पृथिवीकायमधिकृत्याह—

(मूलं) से भिक्खू वा० से जं० असणं वा० ४ मट्टियाउलित्तं तहप्पगारं असणं वा ४ लाभे सं०, केवली०, अस्संजए भि० मट्टिओलित्तं असणं वा० उब्भिंदमाणं पुढवीकायं समारंभिज्जा, पुणरवि उल्लिंपमाणे पच्छाकम्मं करिज्जा, अह भिक्खूणं पुव्वो० जं तहप्पगारं मट्टिओलित्तं असणं वा० अफासुयं० । से भिक्खू० जं० असणं वा० ४ आउकायपइट्ठियं चेव, एवं अगणिकायपइट्ठियं लाभे० केवली०, अस्संज० भि० अगणिं उस्सक्किय निस्सक्किय ओहरिय आहट्टु दलइज्जा अह भिक्खूणं० जाव नो पडि० ॥ ( सू० २६१ )

(मूलं) से भिक्खू वा २ से जं० असणं वा ४ अच्चुसिणं अस्संजए भि० सुप्पेण वा विहुयणेण वा तालियंटेण वा पत्तेण वा साहाए वा साहाभंगेण वा पिहुणेण वा पिहुणहत्थेण वा चेलेण वा चेलकण्णेण वा हत्थेण वा मुहेण वा फुमिज्ज वा वीइज्ज वा, से पुव्वामेव आलोइज्जा—आउसोत्ति वा भइणित्ति वा ! एतं तुमं असणं वा अच्चुसिणं सुप्पेण वा जाव फुमाहि वा वीयाहि वा, अभिकंखसि मे दाउं एमेव दलयाहि, से सेवं वयंतस्स परो सुप्पेण वा जाव वीइत्ता आहट्टु दलइज्जा तहप्पगारं असणं वा ४ अफासुयं वा नो पडि० ॥( सू० २६२ )॥

स भिक्षुर्गृहपतिकुलं प्रविष्टः सन् यदि पुनरेवं जानीयात्, तद्यथा—पिठरकादौ मृत्तिकयाऽवलिप्तमाहारं 'तथाप्रकार'मित्यवलिप्तं

केनचित्परिज्ञाय पश्चात्कर्मभयाच्चतुर्विधमप्याहारं लाभे सति न प्रतिगृह्णीयात्, किमिति ?, यतः केवली ब्रूयात्कर्मादानमेतदिति, तदेव दर्शयति-'असंयतः' गृहस्थो भिक्षुप्रतिज्ञया मृत्तिकोपलिप्तमशनादिकम्-अशनादिभाजनं तच्चोद्भिन्दन् पृथिवीकायं समारभेत, स एव केवल्याह, तथा तेजोवायुवनस्पतित्रसकायं समारभेत, दत्ते सत्युत्तरकालं पुनरपि शेषरक्षार्थं तद्भाजनमवलिम्पन् पश्चात्कर्म कुर्यात्, अथ भिक्षूणां पूर्वोपदिष्टा एषा प्रतिज्ञा एष हेतुरेतत्कारणमयमुपदेशः यत्तथाप्रकारं मृत्तिकोपलिप्तमशनादिजातं लाभे सति नो प्रतिगृह्णीयादिति। स भिक्षुर्गृहपतिकुलं प्रविष्टः सन् यदि पुनरेवंभूतमशनादि जानीयात्, तद्यथा-'सचित्तपृथिवीकायप्रतिष्ठितं' पृथ्वीकायोपरिव्यवस्थितमाहार विज्ञाय पृथिवीकायसङ्घट्टनादिभयाल्लाभे सत्यप्रासुकमनेषणीयं च ज्ञात्वा न प्रतिगृह्णीयादिति ॥ एवमप्कायप्रतिष्ठितमग्निकायप्रतिष्ठितं लाभे सति न प्रतिगृह्णीयाद्, यतः केवली ब्रूयादादानमेतदिति। तदेव दर्शयति-असंयतो भिक्षुप्रतिज्ञयाऽग्निकायमुल्मुकादिना 'ओसक्किय'त्ति प्रज्वाल्य (निषिच्य), तथा 'ओहरिय'त्ति अग्निकायोपरि व्यवस्थितं पिठरकादिकमाहारभाजनमपवृत्य तत आहृत्य-गृहीत्वाऽऽहारं दद्यात्, तत्र भिक्षूणां पूर्वोपदिष्टा एषा प्रतिज्ञा यदेतत्तथाभूतमाहारं नो प्रतिगृह्णीयादिति ॥

...दपतिकुलं प्रविष्टः सन् यदि पुनरेवं जानीयाद् यथाऽत्युष्णमोदनादिकमसंयतो भिक्षुप्रतिज्ञया शीतीकरणार्थं सूर्पेण वा मयूरपिच्छकृतव्यजनेनेत्यर्थः, तथा शाखया शाखाभङ्गेन, पल्लवेनेत्यर्थः, तथा बर्हेण वा बर्हकलापेन वा, तथा वस्त्रेण वा हस्तेन वा तथाप्रकारेणान्येन वा केनचित् 'फुमेज्ज वा'त्ति मुखवायुना शीतीकुर्याद्, वस्त्रादिभिर्वा वीजयेत्, स भिक्षुः लोकयेद्' दत्तोपयोगो भवेत्, तथाकुर्वाणं च दृष्ट्वैतद्वदेत्, तद्यथा-अमुक ! इति वा भगिनि ! इति वा इत्यामन्त्र्य मैवं ...हसि मे दातुं तत एवंस्थितमेव ददस्व, अथ पुनः स परो-गृहस्थः'से' तस्य भिक्षोरेवं वदतोऽपि सूर्पेण वा याव-

न्मुखेन वा वीजयित्वाऽऽहृत्य तथाप्रकारमशनादिकं दद्यात्, स च साधुरनेषणीयमिति मत्वा न परिगृह्णीयादिति ॥ पिण्डाधिकार एवैषणादोषमधिकृत्याह—

(मूलं) से भिक्खू वा० २ से जं० असणं वा० वणस्सइकायपइट्ठियं तहप्पगारं असणं वा ४ वण० ल.भे संते नो पडि० । एवं तसकाएवि ॥ ( सू० २६३ )

स भिक्षुर्गृहपतिकुलं प्रविष्टः सन् यत्पुनरेवं जानीयाद्—वनस्पतिकायप्रतिष्ठितं, तं चतुर्विधमप्याहारं न गृह्णीयादिति ॥ एवं त्रसकायसूत्रमपि नेयमिति । अत्र च वनस्पतिकायप्रतिष्ठितमित्यादिना निक्षिप्ताख्य एषणादोषोऽभिहितः, एवमन्येऽप्येषणादोषा यथासम्भवं सूत्रेष्वेवायोज्याः । ते चामी–"संकिय १ मक्खिय २ निक्खित्त ३ पिहिय ४ साहरिय ५ दायगु ६ म्मीसे ७ । अपरिणय ८ लित्त ९ छड्डिय १० एसणदोसा दस हवंति ॥१॥" तत्र शङ्कितमाधाकर्मादिना १, म्रक्षितमुदकादिना २, निक्षिप्तं पृथिवीकायादौ ३, पिहितं बीजपूरकादिना ४, 'साहरियं'ति मात्रकादेस्तुषाद्यदेयमन्यत्र सचित्तपृथिव्यादौ संहृत्य तेन मात्रकादिना यद्ददाति तत्संहृतमित्युच्यते ५, 'दायग'त्ति दाता बालवृद्धाद्ययोग्यः ६, उन्मिश्रं–सचित्तमिश्रम् ७, अपरिणतमिति यद्देयं न सम्यगचित्तीभूतं, दातृग्राहकयोर्वा न सम्यग्भावोपेत ८, लिप्तं वसादिना ९, 'छड्डियं'ति परिशाटवदि १० त्येषणादोषाः ॥ साम्प्रतं पानकाधिकारमुद्दिश्यमाह—

(मूलं) से भिक्खू वा २ से जं पुण पाणगजायं जाणिज्जा, तंजहा–उस्सेइमं १ वा संसेइमं २ वा चाउलोदगं

१ शङ्कित म्रक्षित निक्षिप्त पिहित संहृत दायकोन्मिश्रम् उन्मिश्रम् । अपरिणत लिप्त छर्दित एषणादोषा दश भवन्ति ॥१॥

प्र. आ. ३४५

१. पिण्डैषणाध्य. ७ उद्देशः वनस्पतित्रस-५ प्रतिष्ठनिषेधः

१०

केनचित्परिज्ञाय पश्चात्कर्मभयाच्चतुर्विधमप्याहारं लाभे सति न प्रतिगृह्णीयात्, किमिति ?, यतः केवली ब्रूयात्कर्मादानमेतदिति, तदेव दर्शयति-'असंयतः' गृहस्थो भिक्षुप्रतिज्ञया मृत्तिकोपलिप्तमशनादिकम्-अशनादिभाजनं तच्चोद्भिन्दन् पृथिवीकायं समारभेत, स एव केवलपाह, तथा तेजोवायुवनस्पतित्रसकायं समारभेत, दत्ते सत्युत्तरकालं पुनरपि शेषरक्षार्थं तद्भाजनमवलिम्पन् पश्चात्कर्म कुर्यात्, अथ भिक्षूणां पूर्वोपदिष्टा एषा प्रतिज्ञा एष हेतुरेतत्कारणमयमुपदेशः यत्तथाप्रकारं मृत्तिकोपलिप्तमशनादिजातं लाभे सति नो प्रतिगृह्णीयादिति । स भिक्षुर्गृहपतिकुलं प्रविष्टः सन् यदि पुनरेवंभूतमशनादि जानीयात्, तद्यथा-'सचित्तपृथिवीकायप्रतिष्ठितं' पृथ्वीकायोपरिव्यवस्थितमाहारं विज्ञाय पृथिवीकायसङ्घट्टनादिभयाल्लाभे सत्यप्रासुकमनेषणीयं च ज्ञात्वा न प्रतिगृह्णीयादिति ॥ एवमप्कायप्रतिष्ठितमग्निकायप्रतिष्ठितं लाभे सति न प्रतिगृह्णीयाद्, यतः केवली ब्रूयादादानमेतदिति । तदेव दर्शयति-असंयतो भिक्षुप्रतिज्ञयाऽग्निकायमुल्मुकादिना 'ओसक्किय'त्ति प्रज्वाल्य (निषिच्य), तथा 'ओहरिय'त्ति अग्निकायोपरि व्यवस्थितं पिठरकादिकमाहारभाजनमपवृत्त्य तत आहृत्य-गृहीत्वाऽऽहारं दद्यात्, तत्र भिक्षूणां पूर्वोपदिष्टा एषा प्रतिज्ञा यदेतत्तथाभूतमाहारं नो प्रतिगृह्णीयादिति ॥

स भिक्षुर्गृहपतिकुलं प्रविष्टः सन् यदि पुनरेवं जानीयाद् यथाऽत्युष्णमोदनादिकमसंयतो भिक्षुप्रतिज्ञया शीतीकरणार्थं सूर्पेण वा वीजनेन वा, मयूरपिच्छकृतव्यजनेनेत्यर्थः, तथा शाखया शाखाभङ्गेन, पल्लवेनेत्यर्थः, तथा बर्हेण वा बर्हकलापेन वा, तथा वस्त्रेण वस्त्रकर्णेन वा हस्तेन वा तथाप्रकारेणान्येन वा केनचित् 'फुमेज्ज वे'ति मुखवायुना शीतीकुर्याद्, वस्त्रादिभिर्वा वीजयेत्, स भिक्षुः पूर्वमेव 'आलोकयेद्' दत्तोपयोगो भवेत्, तथाकुर्वाणं च दृष्ट्वैतद्वदेत्, तद्यथा-अमुक ! इति वा भगिनि ! इति वा इत्यामन्त्र्य मैवं कृथाः, यद्यभिकाङ्क्षसि मे दातुं तत एवंस्थितमेव ददस्व, अथ पुनः स परो-गृहस्थः 'से' तस्य भिक्षोरेवं वदतोऽपि सूर्पेण वा याव-

न्मुखेन वा वीजयित्वाऽऽहृत्य तथाप्रकारमशनादिकं दद्यात्, स च साधुरनेषणीयमिति मत्वा न परिगृह्णीयादिति ॥ पिण्डाधिकार एवैषणादोषमधिकृत्याह—

(मूलं) से भिक्खू वा० २ से जं० असणं वा० वणस्सइकायपइट्ठियं तहप्पगारं असणं वा ४ वण० ल०भे संते नो पडि० । एवं तसकाएवि ॥ (सू० २६३)

स भिक्षुर्गृहपतिकुलं प्रविष्टः सन् यत्पुनरेवं जानीयाद्-वनस्पतिकायप्रतिष्ठितं, तं चतुर्विधमप्याहारं न गृह्णीयादिति ॥ एवं त्रसकायसूत्रमपि नेयमिति । अत्र च वनस्पतिकायप्रतिष्ठितमित्यादिना निक्षिप्ताख्य एषणादोषोऽभिहितः, एवमन्येऽप्येषणादोषा यथासम्भवं सूत्रेष्वेवायोज्याः । ते चामी—"संकिय १ मक्खिय २ निक्खित्त ३ पिहिय ४ साहरिय ५ दायगु ६ म्मीसे ७ । अपरिणय ८ लित्त ९ छड्डिय १० एसणदोसा दस हवंति ॥१॥" तत्र शङ्कितमाधाकर्मादिना १, म्रक्षितमुदकादिना २, निक्षिप्तं पृथिवीकायादौ ३, पिहितं बीजपूरकादिना ४, 'साहरियं'ति मात्रकादेस्तुषाद्यदेयमन्यत्र सचित्तपृथिव्यादौ संहृत्य तेन मात्रकादिना यद्दाति तत्संहृतमित्युच्यते ५, 'दायग'त्ति दाता बालवृद्धाद्ययोग्यः ६, उन्मिश्रं—सचित्तमिश्रम् ७, अपरिणतमिति यद्देयं न सम्यगचित्तीभूतं, दातृग्राहकयोर्वा न सम्यग्भावोपेतं ८, लिप्तं वसादिना ९, 'छड्डियं'ति परिशाटवदि १० त्येषणादोषाः ॥ साम्प्रतं पानकाधिकारमुद्दिश्याह—

(मूलं) से भिक्खू वा २ से जं पुण पाणगजायं जाणिज्जा, तंजहा—उस्सेइमं १ वा संसेइमं २ वा चाउलोदगं

१ शङ्कित म्रक्षित निक्षिप्त पिहित संहृत दायकदोषदुष्ट उन्मिश्रम् । अपरिणत लिप्त छर्दित एषणादोषा दश भवन्ति ॥१॥

वा ३ अन्नयरं वा तहप्पगारं पाणगजायं अहुणाधोयं अणंबिलं अव्वुक्कंतं अपरिणयं अविद्धत्थं अफासुयं जाव नो पडिगाहिज्जा। अह पुण एवं जाणिज्जा चिराधोयं अंबिलं वुक्कंतं परिणयं विद्धत्थं फासुयं पडिगाहिज्जा। से भिक्खू वा० से जं पुण पाणगजायं जाणिज्जा, तंजहा-तिलोदगं वा ४ तुसोदगं वा ५ जवोदगं वा ६ आयामं वा ७ सोवीरं ८ सुद्धवियडं वा ९ अन्नयरं वा तहप्पगारं वा पाणगजायं पुव्वामेव आलोइज्जा-आउसोत्ति वा भइणित्ति वा दाहिसि मे इत्तो अन्नयरं पाणगजायं ?, से सेवं वयंतस्स परो वइज्जा-आउसंतो समणा! तुमं चेवेयं पाणगजायं पडिग्गहेण वा उस्सिंचिया णं उयत्तिया णं गिण्हाहि, तहप्पगारं पाणगजायं सयं वा गिण्हिज्जा परो वा से दिज्जा, फासुयं लाभे संते पडिगाहिज्जा ॥ ( सू० २६४ )

॥ भिक्षुर्गृहपतिकुलं पानकार्थं प्रविष्टः सन् यत्पुनरेवं जानीयात्, तद्यथा-'उस्सेइमं वे'ति पिष्टोत्स्वेदनार्थमुदकं १ 'संसेइमं वे'ति तिलधावनोदकं, यदिवाऽरणिकादिसंस्विन्नधावनोदकं २, तत्र प्रथमद्वितीयोदके प्रासुके एव, तृतीयचतुर्थे तु मिश्रे, कालान्तरेण परिणते भवतः, 'चाउलोदयं'ति तन्दुलधावनोदकम् ३, अत्र च त्रयोऽनादेशाः, तद्यथा-बुद्बुदविगमो वा १ भाजनलग्नबिन्दुशोषो वा २ तन्दुलपाको वा ३, आदेशस्त्वयम्-उदकस्वच्छीभावः, तदेवमाद्युदकम् 'अनाम्लं' स्वस्वादादचलितम् अव्युत्क्रान्तमपरिणतमविध्वस्तमप्रासुकं यावन्न प्रतिगृह्णीयादिति ॥ एतद्विपरीतं तु ग्राह्यमित्याह-'अहे'त्यादि, सुगमम्। पुनः पानकाधिकार एव विशेषार्थमाह-स भिक्षुर्गृहपतिकुलं प्रविष्टो यत्पुनः पानकजातमेवं जानीयात्, तद्यथा-'तिलोदकं' तिलैः केनचित्प्रकारेण प्रासुकीकृतमुदकम् ४, एवं तुषैर्यवैर्वा ५-६, तथा 'आचाम्लम्' अवश्यानं ७, 'सौवीरम्' आरनालं ८ 'शुद्धविकटं' प्रासुकमुदकम् ९ अन्यद्वा

तथाप्रकारं द्राक्षापानकादि 'पानकजातं' पानीयसामान्यं पूर्वमेव 'अवलोकयेत्' पश्येत्, तच दृष्ट्वा तं गृहस्थम् अमुक ! इति वा भगिनि ! इति वेत्यामन्त्र्यैवं ब्रूयाद्—यथा दास्यसि मे किञ्चित्पानकजातं ?, स परस्तं भिक्षुमेवं वदन्तमेवं ब्रूयाद्—यथा आयुष्मन्! श्रमण ! त्वमेवेदं पानकजातं स्वकीयेन पतद्ग्रहेण टोप्परिकया कटाहकेन वोत्सिश्च्यापवृत्त्य वा पानकभाण्डकं गृहाण, स एवमभ्यनुज्ञातः स्वयं गृह्णीयात् परो वा तस्मै दद्यात्, तदेवं लाभे सति प्रतिगृह्णीयादिति ॥ किञ्च—

(मूलं) से भिक्खू वा० से जं पुण पाणगं जाणिज्जा—अणंतरहियाए पुढवीए जाव संताणए उद्धट्टु २ निक्खित्ते सिया, असंजए भिक्खुपडियाए उदउल्लेण वा ससिणिद्धेण वा सकसाएण वा मत्तेण वा सीओदगेण वा संभो-(जो)इत्ता आहट्टु दलइज्जा, तहप्पगारं पाणगजायं अफासुयं०, एयं खलु सामग्गियं० (सू० २६५) पिंडैषणायां सप्तमः २-१-१-७ ॥

स भिक्षुर्यदि पुनरेवं जानीयात् तत्पानकं सचित्तेष्वव्यवहितेषु पृथिवीकायादिषु तथा मर्कटकादिसन्तानके वाऽन्यतो भाजनादुद्धृत्योद्धृत्य 'निक्षिप्तं' व्यवस्थापितं स्यात्, यदिवा स एव 'असंयतः' गृहस्थः 'भिक्षुप्रतिज्ञया' भिक्षुमुद्दिश्य 'उदकार्द्रेण' गलद्बिन्दुना 'सस्निग्धेन' अगलदुदकबिन्दुना 'सकषायेण' सचित्तपृथिव्याद्यवयवगुण्ठितेन 'मात्रेण' भाजनेन शीतोदकेन वा संभो(जो)एत्ता—मिश्रयित्वाऽऽहृत्य दद्यात्, तथाप्रकारं पानकजातमप्रासुकमनेषणीयमिति मत्वा न परिगृह्णीयात्, एतत्तस्य भिक्षोर्भिक्षुण्या वा 'सामग्र्यं' समग्रो भिक्षुभाव इति ॥ प्रथमस्य पिण्डैषणाध्ययनस्य सप्तम उद्देशकः समाप्तः ॥ २-१-१-७ ॥

उक्तः सप्तमोद्देशकः, साम्प्रतमष्टमः समारभ्यते, अस्य चायमभिसम्बन्धः–इहानन्तरोद्देशके पानकविचारः कृतः, इहापि तद्गतमेव विशेषमधिकृत्याह–

(मूलं) से भिक्खू वा २ से जं पुण पाणगजायं जाणिज्जा, तंजहा–अंबपाणगं वा १० अंबाडगपाणगं वा ११ कविट्ठपाण० १२ माउलिंगपा० १३ मुद्दियापा० १४ दालिमपा० १५ खज्जूरपा० १६ नालियेरपा० १७ करीरपा० १८ कोलपा० १९ आमलपा० २० चिंचापा० २१ अन्नयरं वा तहप्पगारं पाणगजातं सअट्ठियं सकणुयं सबीयगं अस्संजए भिक्खुपडियाए छब्बेण वा दूसेण वा वालगेण आवीलियाण परिवीलियाण परिसावियाण आहट्टु दलइज्जा तहप्पगारं पाणगजायं अफा० लाभे संते नो पडिगाहिज्जा ॥ ( सू० २६६ )

स भिक्षुर्गृहपतिकुलं प्रविष्टः सन् यत्पुनरेवंभूतं पानकजातं जानीयात्, तद्यथा–'अंबगपाणगं वे'त्यादि सुगमं, नवरं 'मुद्दिया' द्राक्षा कोलानि–बदराणि, एतेषु च पानकेषु द्राक्षाबदराम्लिकादिकतिचित्पानकानि तत्क्षणमेव संमर्द्य क्रियन्ते अपराणि त्वाम्राम्बाडकादिपानकानि द्वित्रादिदिनसन्धानेन विधीयन्त इत्येवंभूतं पानकजातं तथाप्रकारमन्यदपि 'सास्थिकं' सहास्थिना–कुलकेन यद्वर्तते, तथा सह कणुकेन–त्वगाद्यवयवेन यद्वर्त्तते, तथा बीजेन सह यद्वर्त्तते, अस्थिबीजयोश्चामलकादौ प्रतीतो विशेषः, तदेवंभूतं पानकजातम् 'असंयतः' गृहस्थो भिक्षुमुद्दिश्य–साध्वर्थं द्राक्षादिकमामर्द्य पुनर्वंशत्वग्निष्पादितच्छब्बकेन वा, तथा दूसं–वस्त्रं वा, तथा 'वालगेणं'ति गवादिवालधिवालनिष्पन्नचालनकेन सुघरिकागृहकेन इत्यादिनोपकरणेनास्थ्याद्यपनयनार्थं सकृदापीड्य पुनः पुनः परिपीड्य, तथा परिसाव्य–निर्गाल्याहृत्य च साधुसमीपं दद्यादिति, एवंप्रकारं पानकजातमुद्गमदोषदुष्टं सत्यपि लाभे न प्रति-

गृह्णीयात्, ते चामी उद्गमदोषाः—"आहाकम्मु १ देसिअ २ पूतीकम्मे ३ अ मीसजाए अ ४ ।ठवणा ५ पाहुडियाए ६ पाओअर-७ कीय ८ पामिचे ९ ॥१॥ परियट्टिए १० अभिहडे ११ उब्भिन्ने १२ मालोहडे १३ इअ। अच्छेज्जे १४ अनिसट्ठे १५ अज्झोअरए १६ अ सोलसमे ॥२॥" साध्वर्थं यत्सचित्तमचित्तीक्रियते अचित्तं वा यत्पच्यते तदाधाकर्म १। तथाऽऽत्मार्थं यत्पूर्वसिद्धमेव लड्डुकचूर्णकादि साधुमुद्दिश्य पुनरपि [संत] गुडादिना संस्क्रियते तदुद्देशिकं सामान्येन, विशेपतो विशेपसूत्रादवगन्तव्यमिति २। यदाधाकर्मावयवसम्मिश्रं तत्पूतीकर्म ३। संयतासंयताद्यर्थमादेरारम्याहारपरिपाको मिश्रम् ४। साध्वर्थं क्षीरादिस्थापनं स्थापना भण्यते ५। प्रकरणस्स साध्वर्थमुत्सर्पणमवसर्पणं वा प्राभृतिका ६। साधूनुद्दिश्य गवाक्षादिप्रकाशकरणं बहिर्वा प्रकाशे आहारस्य व्यवस्थापनं प्रादुष्करणम् ७। द्रव्यादिविनिमयेन स्वीकृतं क्रीतम् ८। साध्वर्थं यदन्यस्मादुच्छिन्नकं गृह्यते तत्पामिच्चंति ९। यच्छाल्योदनादि कोद्रवादिना प्रातिवेशिकगृहे परिवर्त्य ददाति तत्परिवर्त्तितम् १०। यद्गृहादेः साधुवसतिमानीय ददाति तदाहृतम् ११। गोमयाद्युपलिप्तं भाजनमुद्भिद्य ददाति तदुद्भिन्नम् १२। मालाद्यवस्थितं निश्रेण्यादिनाऽवतार्य ददाति तन्मालाहृतम् १३। भृत्यादेराच्छिद्य यद्दीयते तदाच्छेद्यम् १४। सामान्यं श्रेणीभक्तकाद्येकस्स ददातोऽनिसृष्टम् १५। स्वार्थमधिश्रयणादौ कृते पश्चात्तन्दुलादिप्रक्षेपादध्यवपूरकः १६। तदेवमन्यतमेनापि दोषेण दुष्टं न प्रतिगृह्णीयादिति ॥ पुनरपि भक्तपानविशेषमधिकृत्याह—



(मूलं) से भिक्खू वा० २ आगंतारेसु वा आरामागारेसु वा गाहावईगिहेसु वा परियावसहेसु वा अन्नगंधाणि वा पाणगंधाणि वा सुरभिगंधाणि वा आघाय २ से तत्थ आसायपडियाए मुच्छिए गिद्धे गढिए अज्झोववन्ने अहो गंधो २ (न) गंधमाघाइज्जा ( सू० २६७ )

'आगंतारेसु वा'त्ति पत्तनाद्बहिर्गृहेषु, तेषु ह्यागत्यागत्य पथिकादयस्तिष्ठन्तीति, तथाऽऽरामगृहेषु वा गृहपतिगृहेषु वा 'पर्यावसथेषु' इति भिक्षुकादिमठेषु वा, इत्येवमादिष्वन्नपानगन्धान् सुरभीनाघ्रायाघ्राय स भिक्षुस्तेष्वास्वादनप्रतिज्ञया मूर्छितो गृद्धो ग्रथितोऽध्युपपन्नः सन्नहो ! गन्ध इत्येवमादरवान् न गन्धं जिघ्रेदिति ॥ पुनरप्याहारमधिकृत्याह—

(मूलं) से भिक्खू वा २ से जं० सालुयं वा विरालियं वा सासवनालियं वा अन्नयरं वा तहप्पगारं आमगं असत्थपरिणयं अफासु० । से भिक्खू वा० से जं पुण० पिप्पलिं वा पिप्पलिचुण्णं वा मिरियं वा मिरियचुण्णं वा सिंगबेरं वा सिंगबेरचुण्णं वा अन्नयरं वा तहप्पगारं आमगं वा असत्थप० । से भिक्खू वा० से जं पुण पलंबजायं जाणिज्जा, तंजहा-अंबपलंबं वा अंबाडगपलंबं वा तालप० झिज्झिरिप० सुरहि० सल्लरप० अन्नयरं वा तहप्पगारं पलंबजायं आमगं असत्थप०। से भिक्खू २ से जं पुण पवालजायं जाणिज्जा, तंजहा-आसोट्ठपवालं वा निग्गोहप० पिलुंखुप० निपूरप० सल्लइप० अन्नयरं वा तहप्पगारं पवालजायं आमगं असत्थपरिणयं० । से भि० से जं पुण० सरडुयजायं जाणिज्जा, तंजहा-सरडुयं वा कविट्ठसर० दाडिमसर० बिल्लस० अन्नयरं वा तहप्पगारं सरडुयजायं आमं असत्थपरिणयं०। से भिक्खू वा० से जं पु० तंजहा-उंबरमंथुं वा नग्गोहमं० पिलुंखुमं० आसोत्थमं० अन्नयरं वा तहप्पगारं मंथुजायं आमयं दुरुक्कं साणुवीयं अफासुयं० ॥ (सू० २६८)॥

सुगमं, 'सालुकम्' इति कन्दको जलजः, 'विरालियं' इति कन्द एव स्थलजः, 'सासवणालिअ'न्ति सर्षपकन्दल्य इति ॥ किञ्च—पिप्पलीमरिचे प्रतीते 'शृङ्गबेरम्' आर्द्रकं तथाप्रकारमामलकादि आमम्-अशस्त्रोपहतं न प्रतिगृह्णीयादिति ॥ 'पलंबे'त्यादि सुगमं,

१५ गन्ध-गाध्र्य-शालु-कादि-निषेधः २०

नवर पलम्बजातमिति फलसामान्यं झिज्झिरी—वल्ली पलाशः सुरभिः—शतद्रुरिति ॥ 'पवाले'त्यादि गतार्थं, नवरम् 'आसट्ठे'त्ति अश्वत्थः 'पिलुंखु'त्ति पिप्परी णिपूरो—नन्दीवृक्षः ॥ पुनरपि फलविशेषमधिकृत्याह—'सरडु'इत्यादि सुगमं, नवरं 'सरडुअं' वे'ति अबद्धास्थिफलं, तदेव विशिष्यते कपित्थादिभिरिति ॥ 'उंबरे'त्यादि स्पष्टं, नवरं 'मंथु'न्ति चूर्णः 'दुरुकं'ति ईषत्पिष्टं 'साणुबीय'न्ति अविध्वस्तयोनिर्बीजमिति ॥

(मूलं) से भिक्खू वा० से जं पुण० आमडागं वा पूइपिन्नागं वा महुं वा मज्जं वा खोलं वा पुराणगं वा इत्थ पाणा अणुप्पसूयाइं जायाइं संवुड्ढाइं अव्वुकंताइं अपरिणया इत्थ पाणा अविद्धत्था नो पडिगाहिज्जा ॥(सू० २६९)॥

स भिक्षुर्यत्पुनरेवं जानीयात्, तद्यथा—'आमडागं वे'ति आमपत्रम् अरणिकतदुन्लीयकादि तच्चार्द्धपक्कमपक्कं वा,'पुतिपिन्नाग'न्ति कुथितखलं मधुमद्ये प्रतीते 'सर्पिः' घृतं 'खोलं' मद्याधःकर्दमः, एतानि पुराणानि न ग्राह्याणि, यत एतेषु प्राणिनोऽनुप्रसूता-जाताः संवृद्धा अव्युत्कान्ता अपरिणताः—अविध्वस्ताः, नानादेशजविनेयानुग्रहार्थमेकार्थिकान्येवैतानि, किञ्चिद्भेदाद्वा भेदः ॥

(मूलं) से भिक्खू वा० से जं० उच्छुमेरगं वा अंककरेलुगं वा कसेरुगं वा सिंघाडगं वा पूइआलुगं वा अन्न-यरं वा० । से भिक्खू वा० से जं उप्पलं वा उप्पलनालं वा भिसं वा भिसमुणालं वा पुक्खलं वा पुक्खलविभंगं वा अन्नयरं वा तहप्पगारं० ॥ (सू० २७०) ॥

'उच्छुमेरगं'ति अपनीतत्वगिक्षुगण्डिका 'अककरेलुअं वा' इत्येवमादीन् वनस्पतिविशेषान् जलजान् अन्यद्वा तथाप्रकारमामम्—अशस्त्रोपहतं नो प्रतिगृह्णीयादिति ॥ स भिक्षुर्यत्पुनरेवं जानीयात्, तद्यथा—'उत्पलं' नीलोत्पलादि नालं—तस्यैवाधारः,'भिसं' पद्म-

आमपत्रादि-निषेधः

५

१०

प्र. आ. ३४८

कन्दमूलं 'भिसमृणालं' पद्मकन्दोपरिवर्त्तिनी लता 'पोक्खलं' पद्मकेसरं 'पोक्खलविभंगं' पद्मकन्दः अन्यद्वा तथाप्रकारमामम्-अशस्त्रोपहतं न प्रतिगृह्णीयादिति ॥

(मूलं) से भिक्खू वा० २ से जं पु० अग्गबीयाणि वा मूलबीयाणि वा खंधबीयाणि वा पोरबी० वा अग्गजायाणि वा मूलजा० वा खंधजा० वा पोरजा० वा नन्नत्थ तक्कलिमत्थएण वा तक्कलिसीसेण वा नालियेरमत्थएण वा खज्जूरिमत्थएण वा तालम० अन्नयरं वा तह०। से भिक्खू वा २ से जं० उच्छुं वा काणगं वा अंगारियं वा संमिस्सं विगदूमियं वित(त्त)ग्गगं वा कंदलीऊसुगं अन्नयरं वा तहप्पगा०। से भिक्खू वा० से जं० लसुणं वा लसुणपत्तं वा ल० नालं वा लसुणकंदं वा ल० चोयगं वा अन्नयरं वा०। से भिक्खू वा० से जं० अंच्छियं वा कुंभिपक्कं तिंदुगं वा वेलुगं वा कासवनालियं वा अन्नयरं वा तहप्पगारं आमं असत्थप०। से भिक्खू वा० से जं कणं वा कणकुंडगं वा कणपूयलियं वा चाउलं वा चाउलपिट्ठं वा तिलं वा तिलपिट्ठं वा तिलपप्पडगं वा अन्नयरं वा तहप्पगारं आमं असत्थप० लाभे संते नो प०, एवं खलु तस्स भिक्खुस्स सामग्गियं ॥ (सू० २७१) २-१-१-८ ॥ पिण्डैषणायामष्टम उद्देशकः ॥

स भिक्षुर्यत्पुनरेवं जानीयात्, तद्यथा-'अग्रबीजानि' जपाकुसुमादीनि 'मूलबीजानि' जात्यादीनि 'स्कन्धबीजानि' सल्लक्यादीनि 'पर्वबीजानि' इक्ष्वादीनि, तथा अग्रबीजजातानि बीजजातानि स्कन्धजातानि पर्वजातानीति, 'णन्नत्थ' त्ति नान्यस्मादग्रादेरानीयान्यत्र प्ररोहितानि किन्तु तत्रैवाग्रादौ जातानि, तथा 'तक्कलिमत्थएण वा' तक्कली-कन्दली 'ण' इति वाक्यालङ्कारे तन्मस्तकं-तन्मध्यवर्त्ती गर्भः,



२०



२८.

तथा 'कन्दलीशीर्ष' कन्दलीस्तबकः, एवं नालिकेरादेरपि द्रष्टव्यमिति, अथवा कन्दल्यादिमस्तकेन सदृशमन्यधच्छिन्नानन्तरमेव ध्वंसमुपयाति तत्तथाप्रकारमन्यदामम्-अशस्त्रपरिणतं न प्रतिगृह्णीयादिति ॥ स भिक्षुर्यत्पुनरेवं जानीयात्, तद्यथा-इक्षुं वा 'काणगं'ति व्याधिविशेषात्सच्छिद्रं, तथा 'अंगारकितं' विवर्णीभूतं, तथा 'सम्मिश्रं' स्फुटितत्वक् 'विगदूमियं'ति वृकैः शृगालैर्वा ईषद्भक्षितं, न ह्येतावता रन्ध्राद्युपद्रवेण तत्प्रासुकं भवतीति सूत्रोपन्यासः, तथा वेत्राग्रं 'कंदलीऊसुयं'ति कन्दलीमध्यं, तथाऽन्यदप्येवंप्रकारमामम्-अशस्त्रोपहतं न प्रतिगृह्णीयादिति ॥ एवं लशुनसूत्रमपि सुगमं, नवरं 'चोअगं'ति कोशिकाकारा लशुनस्य बाह्यत्वक्, सा च यावत्सार्द्रा तावत्सचित्तेति ॥ 'अच्छियं'ति वृक्षविशेषफलं 'तंदुयं'ति टेम्बरूयं 'वेलुयं'ति बिल्वं 'कासवनालियं'ति श्रीपर्णीफलं, कुम्भीपक्वशब्दः प्रत्येकमभिसंबध्यते, एतदुक्तं भवति-यदच्छिकफलादि गर्त्तादावप्राप्तपाककालमेव बलात्पाकमानीयते तदामम्-अपरिणतं न प्रतिगृह्णीयादिति ॥ 'कणम्' इति शाल्यादेः कणिकास्तत्र कदाचिन्नाभिः संभवेत् 'कणिककुण्डं' कणिकाभिर्मिश्राः कुक्कुसाः 'कणपूयलिअं'ति कणिकाभिर्मिश्राः पूपलिकाः कणपूपलिकाः, अत्रापि मन्दपक्वादौ नाभिः संभाव्यते, शेषं सुगमं यावत्तस्य भिक्षोः 'सामग्र्यं' सम्पूर्णो भिक्षुभाव इति ॥ प्रथमस्याध्ययनस्याष्टमोद्देशकः समाप्तः ॥





---

उक्तोऽष्टमोद्देशकः, साम्प्रतं नवम आरभ्यते, अस्य चायमभिसम्बन्धः-इहानन्तरमनेषणीयपिण्डपरिहार उक्तः, इहापि प्रकारान्तरेण स एवाभिधीयते—

(मूलं) इह खलु पाईणं वा ४ संतेगइया सड्ढा भवंति, गाहावई वा जाव कम्मकरी वा, तेसिं च णं एवं वुत्त-

पुव्वं भवइ-जे इमे भवंति समणा भगवंता सीलवंतो गुणवंतो संजया संवुडा बंभयारी उवरया मेहुणाओ धम्माओ, नो खलु एएसिं कप्पइ आहाकम्मिए असणे वा ४ भुत्तए वा पायए वा, से जं पुण इमं अम्हं अप्पणो अट्ठाए निट्ठियं तं असणं ४ सव्वमेयं समणाणं निसिरामो, अवियाइं वयं पच्छा अप्पणो अट्ठाए असणं वा ४ चेइस्सामो, एयप्पगारं निग्घोसं सुच्चा निसम्म तहप्पगारं असणं वा ४ अफासुयं० ॥ (सू० २७२)

'इहे'ति वाक्योपन्यासे प्रज्ञापकक्षेत्रे वा, खलुशब्दो वाक्यालङ्कारे, प्रज्ञापकाद्यपेक्षया प्राच्यादौ दिशि सन्ति-विद्यन्ते पुरुषाः तेषु च केचन श्रद्धालवो भवेयुः, ते च श्रावकाः प्रकृतिभद्रका वा, ते चामी-गृहपतिर्यावत्कर्मकरी वेति, तेषां चेदमुक्तपूर्वं भवेत्-'णम्' इति वाक्यालङ्कारे, ये इमे 'श्रमणाः' साधवो भगवन्तः 'शीलवन्तः' अष्टादशशीलाङ्गसहस्रधारिणः 'व्रतवन्तः' रात्रिभोजनविरमणषष्ठपञ्चमहाव्रतधारिणः 'गुणवन्तः' पिण्डविशुद्ध्याद्युत्तरगुणोपेताः 'संयताः' इन्द्रियनोइन्द्रियसंयमवन्तः 'संवृताः' पिहिताश्रवद्वाराः 'ब्रह्मचारिणः' नवविधब्रह्मगुप्तिगुप्ताः 'उपरता मैथुनाद्धर्मात्' अष्टादशविकल्पब्रह्मोपेता(:संयता):, एतेषां च न कल्पते आधाकर्मिकमशनादि भोक्तुं पातुं वा, अतो यदात्मार्थमस्माकं निष्ठितं-सिद्धमशनादि ४ तत्सर्वमेतेभ्यः श्रमणेभ्यः 'णिसिरामो'त्ति प्रयच्छामः, अपिच—वयं पश्चादात्मार्थमशनाद्यन्यत् 'चेतयिष्यामः' सङ्कल्पयिष्यामो निर्वर्तयिष्याम इतियावत्, तदेवं साधुरेनं 'निर्घोषं' ध्वनिं स्वत एव श्रुत्वा अन्यतो वा कुतश्चित् 'निशम्य' ज्ञात्वा तथाप्रकारमशनादि पश्चात्कर्मभयादप्रासुकमित्यनेषणीयं मत्वा लाभे सति न प्रतिगृह्णीयादिति ॥ किञ्च—

(मूलं) से भिक्खू वा० वसमाणे वा गामाणुगामं वा दूइज्जमाणे से जं० गामं वा जाव रायहाणिं वा इमंसि

खलु गामंसि वा रायहाणिंसि वा संतेगइयस्स भिक्खुस्स पुरेसंथुया वा पच्छासंथुया वा परिवसंति, तंजहा-गाहावई वा जाव कम्म० तहप्पगाराइं कुलाइं नो पुव्वामेव भत्ताए वा० निक्खमिज्ज वा पविसेज्ज वा २, केवली बूया-आयाणमेयं, पुरा पेहाए तस्स परो अट्ठाए असणं वा ४ उवकरिज्ज वा उवक्खडिज्ज वा, अह भिक्खूणं पुव्वोवइट्ठा ४ जं नो तहप्पगाराइं कुलाइं पुव्वामेव भत्ताए वा पाणाए वा पविसिज्ज वा निक्खमिज्ज वा २, से तमायाय एगंतमवक्कमिज्जा २ अणावायमसंलोए चिट्ठिज्जा, से तत्थ कालेणं अणुपविसिज्जा २ तत्थियरेयरेहिं कुलेहिं सामुदाणियं एसियं वेसियं पिंडवायं एसित्ता आहारं आहारिज्जा, सिया से परो कालेण अणुपविट्ठस्स आहाकम्मियं असणं वा उवकरिज्ज वा उवक्खडिज्ज वा तं चेगइओ तुसिणीओ उवेहेज्जा, आहडमेव पच्चाइक्खिस्सामि, माइट्ठाणं संफासे, नो एवं करिज्जा, से पुव्वामेव आलोइज्जा-आउसोत्ति वा भइणित्ति वा! नो खलु मे कप्पइ आहाकम्मियं असणं वा ४ भुत्तए वा पायए वा, मा उवकरेहि, मा उवक्खडेहि, से सेवं वयंतस्स परो आहाकम्मियं असणं वा ४ उवक्खडावित्ता आहट्टु दलइज्जा तहप्पगारं असणं वा० अफासुयं०॥ (सू० २७३)









स भिक्षुर्यत्पुनरेवं जानीयात्, तद्यथा-ग्रामं वा यावद्राजधानी वा, अस्मिंश्च ग्रामादौ 'सन्ति' विद्यन्ते कस्यचिद्भिक्षोः 'पूर्वसंस्तुताः' पितृव्यादयः 'पश्चात्संस्तुता वा' श्वशुरादयः, ते च तत्र बद्धगृहाः प्रबन्धेन प्रतिवसन्ति, ते चामी-गृहपतिर्वा यावत्कर्मकरी वा, तथाप्रकाराणि च कुलानि भक्तपानाद्यर्थं न प्रविशेत् नापि निष्क्रामेत्, स्वमनीषिकापरिहारार्थमाह-केवली ब्रूयात्कर्मोपादानमेतत्, किमिति ?, यतः पूर्वमेवैतत् 'प्रत्युपेक्षेत' पर्यालोचयेत्, तथा 'तस्य' भिक्षोः कृते 'परः' गृहस्थोऽशनाद्यर्थम् 'उप

स्कुर्यात्' ढौकयेदुपकरणजातम्, 'उवक्खडेज'त्ति तदशनादि पचेद्वेति, 'अथ' अनन्तरं भिक्षूणां पूर्वोपदिष्टमेतत्प्रतिज्ञादि, यथा–नो तथाप्रकाराणि स्वजनसम्बन्धीनि कुलानि पूर्वमेव–भिक्षाकालादारत एव भक्ताद्यर्थं प्रविशेद्वा निष्क्रामेद्वेति। यद्विधेयं तद्दर्शयति–'से तमादाये'ति 'सः' 'साधुः 'एतत्' स्वजनकुलम् 'आदाय' ज्ञात्वा केनचित्स्वजनेनाज्ञात एवैकान्तमपक्रामेद्, अपक्रम्य च स्वजनायनापातेऽनालोके च तिष्ठेत्, स च तत्र स्वजनसम्बद्धग्रामादौ 'कालेन' भिक्षाऽवसरेणानुप्रविशेत्, अनुप्रविश्य च 'इतरेतरेभ्यः कुलेभ्यः' स्वजनरहितेभ्यः 'एसियं'ति एषणीयम्–उद्गमादिदोषरहितं 'वेसियं'ति वेषमात्रादवाप्तमुत्पादनादिदोषरहितं 'पिण्डपातं' भिक्षाम् 'एषित्वा' अन्विष्य एवंभूतं ग्रासैषणादोषरहितमाहारमाहारयेदिति। ते चामी उत्पादनादोषाः, तद्यथा—"धाई १ दूइ २ निमित्ते ३ आजीव ४ वणीमगे ५ तिगिच्छा ६ य। कोहे ७ माणे ८ माया ९ लोभे १० य हवन्ति दस एए ॥१॥ पुव्विंपच्छासंथव ११ विज्जा १२ मंते १३ अ चुण्ण १४ जोगे १५ य। उप्पायणाय दोसा सोलसमे मूलकम्मे य १६ ॥२॥" तत्राशनाद्यर्थं दातुरपत्योपकारे वर्तत इति धात्रीपिण्डः १, तथा कार्यसङ्घट्टनाय दौत्यं विधत्ते इति दूतीपिण्डः २, निमित्तम्–अङ्गुष्ठप्रश्नादि तदवाप्तो निमित्तपिण्डः ३, तथा जात्याद्याजीवनादवाप्त आजीविकापिण्डः ४, दातुर्यस्मिन् भक्तिस्तत्प्रशंसयाऽवाप्तो वणीमगपिण्डः ५, सूक्ष्मेतरचिकित्सयाऽवाप्तश्चिकित्सापिण्डः ६, एवं क्रोधमानमायालोभैरवाप्तः क्रोधादिपिण्डः १०, भिक्षादानात्पूर्वं पश्चाद्वा दातुः 'कर्णायतं भवानि'त्येवं संस्तवादवाप्तः पूर्वपश्चात्संस्तवपिण्डः ११, विद्ययाऽवाप्तो विद्यापिण्डः १२, तथैव मन्त्रजापावाप्तो मन्त्रपिण्डः १३, वशीकरणाद्यर्थं द्रव्यचूर्णादवाप्तश्चूर्णपिण्डः १४, योगाद्–अञ्जनादेरवाप्तो योगपिण्डः १५, यदनुष्ठानाद्गर्भशातनादेर्मूलमवाप्यते तद्विधानादवाप्तो मूलपिण्डः १६, तदेवमेते साधुसमुत्थाः षोडशोत्पादनादोषाः। ग्रासैषणादोषाश्चामी—"संजोअणा १ पमाणे २

इंगाले ३ धूम ४ कारणे ५ चेव।" तत्राहारलोलुपतया दधिगुडादेः संयोजनां विदधतः संयोजनादोषः १, द्वात्रिंशत्कवलप्रमाणातिरिक्तमाहारयतः प्रमाणदोषः २, तथाऽऽहाररागाद्गार्ध्याद् भुञ्जानस्य चारित्राङ्गारत्वापादनादङ्गारदोषः ३, तथाऽन्तप्रान्तादावाहारद्वेषाच्चारित्रस्याभिधूमनाद्धूमदोषः ४, वेदनादिकारणमन्तरेण भुञ्जानस्य कारणदोषः ५, इत्येवं वेषमात्रावाप्तं ग्रासैषणादिदोषरहितः सन्नाहारमाहारयेदिति। अथ कदाचिदेवं स्यात्, सः 'परः' गृहस्थः कालेनानुप्रविष्टस्यापि भिक्षोराधाकर्मिकमशनादि विदध्यात्, तच्च कश्चित्साधुस्तूष्णींभावेनोत्प्रेक्षेत, किमर्थम्? आहृतमेव प्रत्याख्यास्यामीति, एवं च मातृस्थानं संस्पृशेत्, न चैवं कुर्यात्, यथा च कुर्यात्तद्दर्शयति-स पूर्वमेव 'आलोकयेत्' दत्तोपयोगो भवेत्, दृष्ट्वा चाहारं संस्क्रियमाणमेवं वदेद्-यथा अमुक! इति वा न खलु मम कल्पत आधाकर्मिक आहारो भोक्तुं वा पातुं वाऽतस्तदर्थं यत्नो न विधेयः, अथैवं वदतोऽपि पर आधाकर्मादि कुर्यात् ततो लाभे सति न प्रतिगृह्णीयादिति॥



(मूलं) से भिक्खू वा० से जं० मंसं वा मच्छं वा भज्जिज्जमाणं पेहाए तिल्लपूयं वा आएसाए उवक्खडिज्जमाणं पेहाए नो खद्धं २ उवसंकमित्तु ओभासिज्जा, नन्नत्थ गिलाणणीसाए॥ (सू० २७४)

स पुनः साधुर्यदि पुनरेवं जानीयात्, तद्यथा-मांसं वा मत्स्यं वा 'भज्यमान'मिति पच्यमानं तैलप्रधानं वाऽपूपं, तच्च किमर्थं क्रियते इति दर्शयति-यस्मिन्नायाते कर्मण्यादिश्यते परिजनः स आदेशः-प्राघूर्णकस्तदर्थं संस्क्रियमाणमाहारं प्रेक्ष्य लोलुपतया 'नो' नैव 'खद्धं २'ति शीघ्रं २, द्विर्वचनमादरख्यापनार्थमुपसंक्रम्यावभाषेत-याचेत, अन्यत्र ग्लानादिकार्यादिति॥

(मूलं) से भिक्खू वा० अन्नयरं भोयणजायं पडिगाहित्ता सुब्भिं सुब्भिं भुच्चा दुब्भिं २ परिट्ठवेइ, माइट्ठाणं

संफासे, नो एवं करिज्जा। सुब्भिं वा दुब्भिं वा सव्वं भुंजिज्जा, नो किंचिवि परिट्ठविज्जा ( सू० २७५ )

स भिक्षुरन्यतरद् भोजनजातं परिगृह्य सुरभि सुरभि भक्षयेत् दुर्गन्धं २ परित्यजेत्, वीप्सायां द्विर्वचनं, मातृस्थानं चैवं संस्पृशेत्, तच न कुर्यात्, यथा च कुर्यात् तद्दर्शयति–सुरभि वा दुर्गन्धं वा सर्वं भुञ्जीत, न परित्यजेदिति ॥

(मूलं) से भिक्खू वा २ अन्नयरं पाणगजायं पडिगाहित्ता पुप्फं २ आविइत्ता कसायं २ परिट्ठवेइ, माइट्ठाणं संफासे, नो एवं करिज्जा, पुप्फं पुप्फेइ वा कसायं कसाइ वा सव्वमेयं भुंजिज्जा, नो किंचिवि परि०॥ (सू० २७६)

एवं पानकसूत्रमपि, नवरं वर्णगन्धोपेतं पुष्पं तद्विपरीतं कषायं, वीप्सायां द्विर्वचनं, दोषश्चानन्तरसूत्रयोराहारगार्द्ध्यात् सूत्रार्थहानिः कर्मबन्धश्चेति ॥

( मूलं ) से भिक्खू वा० बहुपरियावन्नं भोयणजायं पडिगाहित्ता बहवे साहम्मिया तत्थ वसंति संभोइया समणुन्ना अपरिहारिया अदूरगया, तेसिं अणालोइय अणामंतिय परिट्ठवेइ, माइट्ठाणं संफासे, नो एवं करेज्जा, से तमायाए तत्थ गच्छिज्जा २ से पुव्वामेव आलोइज्जा—आउसंतो समणा ! इमे मे असणे वा पाणे वा ४ बहुपरियावन्ने तं भुंजह णं, से सेवं वयंतं परो वइज्जा-आउसंतो समणा ! आहारमेयं असणं वा ४ जावइयं २ सरइ तावइयं २ भुक्खामो वा पाहामो वा, सव्वमेयं परिसडइ सव्वमेयं भुक्खामो वा पाहामो वा॥ (सू० २७७)

स भिक्षुर्बह्वशनादि पर्यापन्नं–लब्धं परिगृह्य बहुभिर्वा प्रकारैराचार्यग्लानप्राघूर्णकाद्यर्थं दुर्लभद्रव्यादिभिः पर्यापन्नमाहारजातं परिगृह्य तद्बहुत्वाद्भोक्तुमसमर्थः, तत्र च साधर्मिकाः सम्भोगिकाः समनोज्ञा अपरिहारिकाः, एकार्थाश्चालापकाः, इत्येतेषु सत्स्वद्-

रगतेषु वाताननापृच्छ्य प्रमादितया 'परिष्ठापयेत्' परित्यजेत्, एवं च मातृस्थानं संस्पृशेत्, नेवं कुर्यात्, यच कुर्यात्तद्दर्शयति—स भिक्षुस्तदधिकमाहारजातं परिगृह्य तत्समीपं गच्छेद्, गत्वा च पूर्वमेव 'आलोकयेत्' दर्शयेत्, एवं च ब्रूयाद्—आयुष्मन्! श्रमण! ममैतदशनादि बहु पर्याप्तं नाहं भोक्तुमलमतो यूयं किञ्चिद् भुङ्ग्ध्वं, तस्य चैवं वदतः स परो ब्रूयाद्—यावन्मात्रं भोक्तुं शक्नुमस्तावन्मात्रं भोक्ष्यामहे पास्यामो वा, 'परिशटति' उपयुज्यते तत्सर्वं भोक्ष्यामहे पास्याम इति ॥

(मूलं) से भिक्खू वा २ से जं० असणं वा ४ परं समुद्दिस्स बहिया नीहडं जं परेहिं असमणुन्नायं अणिसिट्ठं अफा० जाव नो पडिगाहिज्जा, जं परेहिं समणुण्णाय सम्मं णिसिट्ठं फासुयं जाव पडिगाहिज्जा, एयं खलु तस्स भिक्खुस्स भिक्खुणीए वा सामग्गियं (सू० २७८) ॥ २-१-१-९ ॥ पिंडैषणायां नवम उद्देशकः।

प्र. आ. ३५२

स पुनर्यदेवंभूतमाहारजातं जानीयात्, तद्यथा—'परं' चारभटादिकमुद्दिश्य गृहान्निष्क्रान्तं यच परैर्यदि भवान् कस्मैचिद्ददाति ददात्वित्येवं समनुज्ञातं नेतुर्दातुर्वा स्वामित्वेनानिसृष्टं वा तद् बहुदोपदुष्टत्वादप्रासुकमनेषणीयमिति मत्वा न प्रतिगृह्णीयात्, तद्विपरीतं तु प्रतिगृह्णीयादिति, एतत्तस्य भिक्षोः सामग्र्यमिति ॥ प्रथमाध्ययनस्य नवमोद्देशकः परिसमाप्तः ॥

---

उक्तो नवमोऽधुना दशम आरभ्यते, अस्य चायमभिसम्बन्धः—इहानन्तरं पिण्डग्रहणविधिः प्रतिपादितः, इह तु साधारणादिपिण्डावाप्तौ वसतौ गतेन साधुना यद्विधेयं तद्दर्शयितुमाह—

(मूल) से एगइओ साहारणं वा पिंडवायं पडिगाहित्ता ते साहम्मिए अणापुच्छित्ता जस्स जस्स इच्छइ तस्स



१०

संफासे, नो एव करिज्जा। सुब्भिं वा दुब्भिं वा सव्वं भुंजिज्जा, नो किंचिवि परिट्ठविज्जा ( सू० २७५ )

स भिक्षुरन्यतरद् भोजनजातं परिगृह्य सुरभि सुरभि भक्षयेत् दुर्गन्ध २ परित्यजेत्, वीप्साया द्विर्वचनं, मातृस्थान चैवं संस्पृशेत्, तच्च न कुर्यात्, यथा च कुर्यात् तद्दर्शयति–सुरभि वा दुर्गन्धं वा सर्वं भुञ्जीत, न परित्यजेदिति ॥

(मूलं) से भिक्खू वा २ अन्नयरं पाणगजायं पडिगाहित्ता पुप्फं २ आविइत्ता कसायं २ परिट्ठवेइ, माइट्ठाणं संफासे, नो एवं करिज्जा, पुप्फं पुप्फेइ वा कसायं कसाइ वा सव्वमेयं भुंजिज्जा, नो किंचिवि परि०॥ (सू० २७६)

एवं पानकसूत्रमपि, नवरं वर्णगन्धोपेतं पुष्पं तद्विपरीतं कषायं, वीप्साया द्विर्वचनं, दोषश्चानन्तरसूत्रयोराहारगार्ध्यात् सूत्रार्थहानिः कर्मबन्धश्चेति ॥

( मूलं ) से भिक्खू वा० बहुपरियावन्नं भोयणजायं पडिगाहित्ता बहवे साहम्मिया तत्थ वसंति संभोइया समणुन्ना अपरिहारिया अदूरगया, तेसिं अणालोइय अणामंतिय परिट्ठवेइ, माइट्ठाणं संफासे, नो एवं करेज्जा, से तमायाए तत्थ गच्छिज्जा २ से पुव्वामेव आलोइज्जा—आउसंतो समणा! इमे मे असणे वा पाणे वा ४ बहुपरियावन्ने तं भुंजह णं, से सेवं वयंतं परो वइज्जा–आउसंतो समणा! आहारमेयं असणं वा ४ जावइयं २ सरइ तावइयं २ भुक्खामो वा पाहामो वा, सव्वमेयं परिसडइ सव्वमेयं भुक्खामो वा पाहामो वा॥ (सू० २७७)

स भिक्षुर्बह्वशनादि पर्यापन्नं–लब्धं परिगृह्य बहुभिर्वा प्रकारैराचार्यग्लानप्राघूर्णकाद्यर्थं दुर्लभद्रव्यादिभिः पर्यापन्नमाहारजातं परिगृह्य तद्बहुत्वाद्भोक्तुमसमर्थः, तत्र च साधर्मिकाः सम्भोगिकाः समनोज्ञा अपरिहारिकाः, एकार्थाश्चालापकाः, इत्येतेषु सत्स्वद्-

रगतेषु वाताननापृच्छय प्रमादितया 'परिष्ठापयेत्' परित्यजेत्, एवं च मातृस्थानं संस्पृशेत्, नैवं कुर्यात्, यच्च कुर्यात्तद्दर्शयति– स भिक्षुस्तदधिकमाहारजातं परिगृह्य तत्समीपं गच्छेद्, गत्वा च पूर्वमेव 'आलोकयेत्' दर्शयेत्, एवं च ब्रूयाद्–आयुष्मन्! श्रमण! ममैतदशनादि बहु पर्याप्तं नाहं भोक्तुमलमतो यूयं किञ्चिद् भुङ्ग्ध्वं, तस्य चैवं वदतः स परो ब्रूयाद्–यावन्मात्रं भोक्तुं शक्नुमस्तावन्मात्रं भोक्ष्यामहे पास्यामो वा, 'परिशटति' उपयुज्यते तत्सर्वं भोक्ष्यामहे पास्याम इति ॥

(मूलं) से भिक्खू वा २ से जं० असणं वा ४ परं समुद्दिस्स बहिया नीहडं जं परेहिं असमणुन्नायं अणिसिट्ठं अफा० जाव नो पडिगाहिज्जा, जं परेहिं समणुण्णायं सम्मं णिसिट्ठं फासुयं जाव पडिगाहिज्जा, एवं खलु तस्स भिक्खुस्स भिक्खुणीए वा सामग्गियं (सू० २७८) ॥ २-१-१-९ ॥ पिंडैपणायां नवम उद्देशकः ।

स पुनर्यदेवंभूतमाहारजातं जानीयात्, तद्यथा—'परं' चारभटादिकमुद्दिश्य गृहान्निष्क्रान्तं यच्च परैर्यदि भवान् कस्मैचिद्ददाति ददात्वित्येवं समनुज्ञातं नेतुर्दातुर्वा स्वामित्वेनानिसृष्टं वा तद् बहुदोपदुष्टत्वादप्रासुकमनेषणीयमिति मत्वा न प्रतिगृह्णीयात्, तद्विपरीतं तु प्रतिगृह्णीयादिति, एतत्तस्य भिक्षोः सामग्र्यमिति ॥ प्रथमाध्ययनस्य नवमोद्देशकः परिसमाप्तः ॥

---

उक्तो नवमोऽधुना दशम आरभ्यते, अस्य चायमभिसम्बन्धः–इहानन्तरं पिण्डग्रहणविधिः प्रतिपादितः, इह तु साधारणादिपिण्डावाप्तौ वसतौ गतेन साधुना यद्विधेयं तद्दर्शयितुमाह—

(मूलं) से एगइओ साहारणं वा पिंडवायं पडिगाहित्ता ते साहम्मिए अणापुच्छित्ता जस्स जस्स इच्छइ तस्स

तस्स खद्धं खद्धं दलइ, माइट्ठाणं संफासे, नो एवं करिज्जा। से तमायाय तत्थ गच्छिज्जा २ एवं वइज्जा–आउसंतो समणा! संति मम पुरेसंथुया वा पच्छा० तंजहा–आयरिए वा १ उवज्झाए वा २ पवित्ती वा ३ थेरे वा ४ गणी वा ५ गणहरे वा ६ गणावच्छेइए वा ७ अवियाइं एएसिं खद्धं खद्धं दाहामि, सेणेवं वयंतं परो वइज्जा–कामं खलु आउसो! अहापज्जत्तं निसिराहि, जावइयं २ परो वदइ तावइयं २ निसिरिज्जा, सव्वमेवं परो वयइ सव्वमेयं निसिरिज्जा॥ (सू० २७९)

'सः भिक्षुः 'एकतरः' कश्चित् 'साधारणं' बहूनां सामान्येन दत्तं, वाशब्दः पूर्वोत्तरापेक्षया पक्षान्तरद्योतकः, पिण्डपातं परिगृह्य तान् साधर्मिकाननापृच्छ्य यस्मै यस्मै रोचते तस्मै तस्मै स्वमनीषिकया 'खद्धं खद्धं'ति प्रभूतं प्रभूतं प्रयच्छति, एवं च मातृस्थानं संस्पृशेत् तस्मान्नैवं कुर्यादिति॥ असाधारणपिण्डावाप्तावपि यद्विधेयं तद्दर्शयति–'सः' भिक्षुः 'तम्' एषणीयं केवलवेपावाप्तं पिण्डमादाय 'तत्र' आचार्याद्यन्तिके गच्छेत्, गत्वा चैवं वदेद्, यथा–आयुष्मन्! श्रमण! 'सन्ति' विद्यन्ते मम 'पुरःसंस्तुताः' यदन्तिके प्रव्रजितस्तत्सम्बन्धिनः 'पश्चात्संस्तुता वा' यदन्तिकेऽधीतं श्रुतं वा तत्सम्बन्धिनो वा अन्यत्रावासिताः, तांश्च स्वनामग्राहमाह, तद्यथा—'आचार्यः' अनुयोगधरः १ 'उपाध्यायः' अध्यापकः २ प्रवृत्तिः यथायोगं वैयावृत्त्यादौ साधूनां प्रवर्त्तकः ३, संयमादौ सीदतां साधूनां स्थिरीकरणात्स्थविरः ४, गच्छाधिपो गणी ५, यस्त्वाचार्यदेशीयो गुर्वादेशात् साधुगणं गृहीत्वा पृथग्विहरति स गणधरः ६, गणावच्छेदकस्तु गच्छकार्यचिन्तकः ७, 'अवियाइं'ति इत्येवमादीनुद्दिश्यैतद्वदेद्–यथाऽहमेतेभ्यो युष्मदनुज्ञया 'खद्धं खद्धं'ति प्रभूतं प्रभूतं दास्यामि, तदेवं विज्ञप्तः सन् 'परः' आचार्यादिर्यावन्मात्रमनुजानीते तावन्मात्रमेव 'निसृजेत्' दद्यात्, सर्वानुज्ञया

सर्वं वा दद्यादिति ॥ किञ्च—

(मूलं) से एगइओ मणुन्नं भोयणजायं पडिगाहित्ता पंतेण भोयणेण पलिच्छाएइ, मा मेयं दाइयं संतं दट्ठूणं सयमायए आयरिए वा जाव गणावच्छेइए वा, नो खलु मे कस्सइ किंचि दायव्वं सिया, माइट्ठाणं संफासे, नो एवं करिज्जा। से तमायाए तत्थ गच्छिज्जा २ पुव्वामेव उत्ताणए हत्थे पडिग्गहं कट्टु इमं खलु इमं खलुत्ति आलोइज्जा, नो किंचिवि णिगूहिज्जा। से एगइओ अन्नयरं भोयणजायं पडिगाहित्ता भद्दयं २ भुच्चा विवन्नं विरसमाहरइ, माइ०, नो एवं० ॥ (सू० २८०)

सुगमं, यावन्नैवं कुर्यात्, यच्च कुर्यात्तद्दर्शयति—'सः' भिक्षुः 'तं' पिण्डमादाय 'तत्र' आचार्याद्यन्तिके गच्छेत्, गत्वा च सर्वं यथाऽवस्थितमेव दर्शयेत्, न किञ्चित् 'अवगूहयेत्' प्रच्छादयेदिति ॥ साम्प्रतमटतो मातृस्थानप्रतिषेधमाह—'सः' भिक्षुः 'एकतरः' कश्चित् 'अन्यतरत्' वर्णाद्युपेतं भोजनजातं परिगृह्याटन्नेव रसगृध्नुतया भद्रकं २ भुक्त्वा यद् 'विवर्णम्' अन्तप्रान्तादिकं तत्प्रतिश्रये 'समाहरति' आनयति, एवं च मातृस्थानं संस्पृशेत्, न चैवं कुर्यादिति ॥ किञ्च—

(मूलं) से भिक्खू वा० से जं० अंतरुच्छियं वा उच्छुगंडियं वा उच्छुचोयगं वा उच्छुमेरगं वा उच्छुसालगं वा उच्छुडालगं वा सिंबलिं वा सिंबलिथालगं वा अस्सिं खलु पडिग्गहियंसि अप्पे भोयणजाए बहुउज्झियधम्मिए तहप्पगारं अंतरुच्छुयं वा० अफा० ॥ से भिक्खू वा २ से जं० बहुअट्ठियं वा मंसं वा मच्छं वा बहुकंटयं अस्सिं खलु० तहप्पगारं बहुअट्ठियं वा मंसं० लाभे संते०। से भिक्खू वा० सिया णं परो बहुअट्ठिएणं मंसेण

दर्शन-
ग्रहणे
मातृ-
स्थानं
बहुज्झि-
तनिषेधः

५

१०

वा बहुकंटएण मच्छेण वा उवनिमंतिज्जा—आउसंतो समणा! अभिकंखसि बहुअट्ठियं मंसं बहुकंटअं मच्छं वा पडिगाहित्तए?, एयप्पगारं निग्घोसं सुचा निसम्म से पुव्वामेव आलोइज्जा—आउसोत्ति वा २ नो खलु मे कप्पइ बहु० पडिगा०, अभिकंखसि मे दाउं जावइयं तावइयं पुग्गलं दलयाहि, मा य अट्ठियाइं, से सेवं वयंतस्स परो अभिहट्टु अंतो पडिग्गहगंसि बहु० परिभाइत्ता निहट्टु दलइज्जा, तहप्पगारं पडिग्गहं परहत्थंसि वा परपायंसि वा अफा० नो०। से आहच्च पडिगाहिए सिया तं नोहित्ति वइज्जा, नो अणिहित्ता वइज्जा, से तमायाय एगंतमवक्कमिज्जा २ अहे आरामंसि वा अहे उवस्सयंसि वा अप्पंडे जाव संताणए मंसगं मच्छगं भुच्चा अट्ठियाइं कंटए गहाय से तमायाय एगंतमवक्कमिज्जा २ अहे झामथंडिलंसि वा जाव पमज्जिय पमज्जिय परट्ठविज्जा ॥ (सू० २८१)

स भिक्षुर्यत्पुनरेवंभूतमाहारजातं जानीयात्, तद्यथा—'अंतरुच्छुअं व'त्ति इक्षुपर्वमध्यम् 'इक्षुगंडियं'ति सपर्वेक्षुशकलं 'चोयगो' पीलितेक्षुच्छोदिका 'मेरुअं' त्वग्रं 'सालगं'ति दीर्घशाखा 'डालगं'ति शाखैकदेशः 'सिंबलि'न्ति मुद्गादीनां विध्वस्ता फलिः 'सिंबलिथालगं'ति वल्ल्यादिफलीनां स्थाली फलीनां वा पाकः, अत्र चैवंभूते परिगृहीतेऽप्यन्तरिक्ष्वादिकेऽल्पमशनीयं बहुपरित्यजनधर्मकमिति मत्वा न प्रतिगृह्णीयादिति ॥ एवं मांससूत्रमपि नेयम्, अस्य चोपादानं क्वचिल्लूताद्युपशमनार्थं सद्वैद्योपदेशतो बाह्यपरिभोगेन स्वेदादिना ज्ञानाद्युपकारकत्वात्फलवद्दृष्टं, भुजिश्चात्र बहिःपरिभोगार्थे, नाभ्यवहारार्थे, पदातिभोगवदिति, एवं गृहस्थामन्त्रणादिविधिपुद्गलसूत्रमपि सुगममिति, तदेवमादिना छेदसूत्राभिप्रायेण ग्रहणे सत्यपि कण्टकादिप्रतिष्ठापनविधिरपि सुगम इति ॥

(मूलं) से भिक्खू० सिया से परो अभिहट्टु अंतो पडिग्गहे बिलं वा लोणं उब्भियं वा लोणं परिभाइत्ता नीहट्टु दलइज्जा, तहप्पगारं पडिग्गहं परहत्थंसि वा २ अफासुयं नो पडि०, से आहच्च पडिगाहिए सिया तं च नाइदूरगए जाणिज्जा, से तमायाए तत्थ गच्छिज्जा २ पुव्वामेव आलोइज्जा–आउसोत्ति वा २ इमं किं ते जाणया दिन्नं उयाहु अजाणया ?, से य भणिज्जा–नो खलु मे जाणया दिन्नं, कामं खलु आउसो ! इयाणिं निसिरामि, तं भुंजह वा णं परिभाएह वा णं, तं परेहिं समणुन्नायं समणुसट्ठं तओ संजयामेव भुंजिज्ज वा पीइज्जा वा, जं च नो संचाएइ भोत्तए वा पायए वा साहम्मिया तत्थ वसंति संभोइया समणुन्ना अपरिहारिया अदूरगया, तेसिं अणुप्पयायव्वं सिया, नो जत्थ साहम्मिया जहेव बहुपरियावन्नं कीरइ तहेव कायव्वं सिया, एवं खलु०॥ (सू० ७८२) पिण्डैषणायां दशम उद्देशकः ॥

५

स भिक्षुर्गृहादौ प्रविष्टः, तस्य च स्यात्–कदाचित् 'परः' गृहस्थः 'अभिहट्टु अंतो' इति अन्तः प्रविश्य पतद्ग्रहे–काष्ठच्छब्बकादौ ग्लानाद्यर्थं खण्डादियाचने सति 'बिडं वा लवण' खनिविशेषोत्पन्नम् 'उद्भिज्जं वा' लवणाकराद्युत्पन्नं 'परिभाएत्त'त्ति दातव्यं विभज्य, दातव्यद्रव्यात्कश्चिदंशं गृहीत्वेत्यर्थः, ततो निःसृत्य दद्यात्, तथाप्रकार परहस्तादिगतमेव प्रतिषेधयेत्, तच्च 'आहच्चे'ति सहसा प्रतिगृहीतं भवेत्, तं च दातारमदूरगतं ज्ञात्वा स भिक्षुस्तल्लवणादिकमादाय तत्समीपं गच्छेद्, गत्वा च पूर्वमेव तल्लवणादिकम् 'आलोकयेत्' दर्शयेद्, एतच्च ब्रूयाद्–अमुक ! इति वा भगिनि ! इति वा, एतच्च लवणादिकं किं त्वया जानता दत्तमुताजानता ?, एवमुक्तः सन् पर एवं वदेद्–यथा पूर्वं मयाऽजानता दत्तं, साम्प्रतं तु यदि भवतोऽनेन प्रयोजनं ततो दत्तम्, एतत्परिभोगं

१०

कुरुध्वं, तदेवं परः समनुज्ञातं समनुसृष्टं सत्प्रासुकं कारणवशादप्रासुकं वा भुञ्जीत पिबेद्वा, यच्च न शक्नोति भोक्तुं पातुं वा तत्सा-धर्मिकादिभ्यो दद्यात्, तदभावे बहुपर्यापन्नविधिं प्राक्तनं विदध्यात्, एतत्तस्य भिक्षोः सामग्र्यमिति ॥ प्रथमस्य दशम उद्देशकः समाप्तः ॥ २-१-१-१० ॥

उक्तो दशमः, अधुनैकादशः समारभ्यते, अस्य चायमभिसम्बन्धः-इहानन्तरोद्देशके लब्धस्य पिण्डस्य विधिरुक्तः, तदिहापि विशेषतः स एवोच्यते—

(मूलं) भिक्खागा नामेगे एवमाहंसु-समाणे वा वसमाणे वा गामाणुगामं वा दूइज्जमाणे मणुन्नं भोयणजायं लभित्ता से भिक्खू गिलाई, से हंदह णं तस्साहरह, से य भिक्खू नो भुंजिज्जा तुमं चेव णं भुंजिज्जासि, से एगइओ भोक्खामित्तिकट्टु पलिउंचिय २ आलोइज्जा, तंजहा—इमे पिंडे इमे लोए इमे तित्ते इमे कडुयए इमे कसाए इमे अंबिले इमे महुरे, नो खलु इत्तो किंचि गिलाणस्स सयइत्ति माइट्ठाणं संफासे, नो एवं करिज्जा, तहाठियं आलोइज्जा जहाठियं गिलाणस्स सयइत्ति, तं०—तित्तयं तित्तएत्ति वा कडुयं कडुअंति कसायं कसायं अंबिलं अंबिलं महुरं महुरं० ॥ (सू० २८३)

भिक्षामटन्ति भिक्षाटाः, भिक्षणशीलाः साधव इत्यर्थः, नामशब्दः सम्भावनायां, वक्ष्यमाणमेषां संभाव्यते, 'एके' केचन एव-माहुः-साधुसमीपमागत्य वक्ष्यमाणमुक्तवन्तः, ते च साधवः 'समाना वा' साम्भोगिका भवेयुः, वाशब्दादसाम्भोगिका वा, तेऽपि

च 'वसन्तः' वास्तव्या अन्यतो वा ग्रामादेः समागता भवेयुः, तेषु च कश्चित्साधुः 'ग्लायति' ग्लानिमनुभवति, तत्कृते तान् सम्भोगिकादींस्ते भिक्षाटा मनोज्ञभोजनलाभे सत्येवमाहुरिति सम्बन्धः, 'से' इति एतन्मनोज्ञमाहारजातं 'हन्दह' गृह्णीत यूयं 'णम्' इति वाक्यालङ्कारे 'तस्स' ग्लानस्य 'आहरत' नयत, तस्मै प्रयच्छत इत्यर्थः. ग्लानश्चेन्न भुङ्क्ते ग्राहक एवाभिधीयते-त्वमेव भुङ्क्ष्वेति, स च भिक्षुर्भिक्षोर्हस्ताद् ग्लानार्थं गृहीत्वाऽऽहारं तत्राध्युपपन्नः सन्नेक एवाहं भोक्ष्य इतिकृत्वा तस्य ग्लानस्य 'पलिउंचिअ पलिउंचिय'त्ति मनोज्ञं गोपित्वा गोपित्वा वातादिरोगमुद्दिश्य तथा तस्य 'आलोकयेत्'-दर्शयति यथाऽपथ्योऽयं पिण्ड इति बुद्धिरुत्पद्यते, तद्यथा-अग्रतो ढौकयित्वा वदति-अयं पिण्डो भवदर्थं साधुना दत्तः, किन्त्वयं 'लोए'त्ति रूक्षः, तथा तिक्तः कटुः कषायोऽम्लो मधुरो वेत्यादिदोषदुष्टत्वान्नातः किञ्चिद् ग्लानस्य स्वदतीति, उपकारे न वर्त्तत इत्यर्थः, एवं च मातृस्थानं संस्पृशेत्, न चैतत्कुर्यादिति। यथा च कुर्यात्तद्दर्शयति-तथाऽवस्थितमेव ग्लानस्यालोकयेद्यथाऽवस्थितमिति, एतदुक्तं भवति-मातृस्थानपरित्यागेन यथाऽवस्थितमेव ब्रूयादिति, शेषं सुगमम् ॥ तथा—



**(मूलं) भिक्खागा नामेगे एवमाहंसु-समाणे वा वसमाणे वा गामाणुगामं दूइज्जमाणे वा मणुन्नं भोयणजायं लभित्ता से य भिक्खू गिलाइ से हंदह णं तस्स आहरह, से य भिक्खू नो भुंजिज्जा आहारिज्जा, से णं नो खलु मे अंतराए आहरिस्सामि, इच्चेयाइं आयतणाइं उवाइक्कम्म ॥ ( सू० २८४ )**



'भिक्षादाः' साधवो मनोज्ञमाहारं लब्ध्वासमनोज्ञांस्तांश्च वास्तव्यान् प्राघूर्णकान् वा ग्लानमुद्दिश्यैवमूचुः-एतन्मनोज्ञमाहारजातं गृह्णीत यूयं ग्लानाय नयत, स चेन्न भुङ्क्ते ततोऽस्मदन्तिकमेव ग्लानाद्यर्थम् 'आहरेत्' आनयेत्, स चैवमुक्तः सन्नेवं वदेद्-यथा-

ऽन्तरायमन्तरेणाहरिष्यामीति प्रतिज्ञयाऽऽहारमादाय ग्लानान्तिकं गत्वा प्राक्तनान् भक्तादिरूक्षादिदोषानुद्भाव्य ग्लानायादत्त्वा स्वत एव लौल्याद्भुक्त्वा ततस्तस्य साधोर्निवेदयति, यथा मम शूलं वैयावृत्त्यकालापर्याप्त्यादिकमन्तरायिकमभूदतोऽहं तद् ग्लानभक्तं गृहीत्वा नायात इत्यादि मातृ[सं]स्थानं संस्पृशेत्, एतदेव दर्शयति–इत्येतानि–पूर्वोक्तान्यायतनानि–कर्मोपादानस्थानानि 'उपातिक्रम्य' सम्यक् परिहृत्य मातृस्थानपरिहारेण ग्लानाय वा दद्याद्वृत्साधुसमीपं वाऽऽहरेदिति ॥ पिण्डाधिकार एव सप्तपिण्डैषणा अधिकृत्य सूत्रमाह—

२०

(मूलं) अह भिक्खू जाणिज्जा सत्त पिंडेसणाओ सत्त पाणेसणाओ, तत्थ खलु इमा पढमा पिंडेसणा–असंसट्ठे हत्थे असंसट्ठे मत्ते, तहप्पगारेण असंसट्ठेण हत्थेण वा मत्तेण वा असणं वा ४ सयं वा णं जाइज्जा परो वा से दिज्जा फासुयं पडिगाहिज्जा, पढमा पिंडेसणा १ ॥ अहावरा दुच्चा पिंडेसणा—संसट्ठे हत्थे संसट्ठे

तइया पिंडेसणा ३ ॥ अहावरा चउत्था पिंडेसणा-से भिक्खू वा० से जं० पिहुयं वा जाव चाउलपलंबं वा अस्सिं खलु पडिग्गहियंसि अप्पे पच्छाकम्मे अप्पे पज्जवजाए, तहप्पगारं पिहुयं वा जाव चाउलपलंबं वा सयं वा णं० जाव पडि०, चउत्था पिंडेसणा ४ ॥ अहावरा पंचमा पिंडेसणा-से भिक्खू वा २ उग्गहियमेव भोयणजायं जाणिज्जा, तंजहा-सरावंसि वा डिंडिमंसि वा कोसगंसि वा, अह पुणेवं जाणिज्जा बहुपरियावन्ने पाणीसु दगलेवे, तहप्पगारं असणं वा ४ सयं जाव पडिगाहि०, पंचमा पिंडेसणा ५॥ अहावरा छट्ठा पिंडेसणा-से भिक्खू वा २ पग्गहियमेव भोयणजायं जाणिज्जा, जं च सयट्ठाए पग्गहियं, जं च परट्ठाए पग्गहियं, तं पायपरियावन्नं तं पाणिपरियावन्नं फासुयं पडि०, छट्ठा पिंडेसणा ६॥ अहावरा सत्तमा पिंडेसणा—से भिक्खू वा० बहुउज्झियधम्मियं भोयणजायं जाणिज्जा, जं चऽन्ने बहवे दुपयचउप्पयसमणमाहणअतिहिकिवणवणीमगा नावकंखंति, तहप्पगारं उज्झियधम्मियं भोयणजायं सयं वा णं जाइज्जा परो वा से दिज्जा जाव पडि०, सत्तमा पिंडेसणा ७॥ इच्चेयाओ सत्त पिंडेसणाओ, अहावराओ सत्त पाणेसणाओ, तत्थ खलु इमा पढमा पाणेसणा-असंसट्ठे हत्थे असंसट्ठे मत्ते, तं चेव भाणियव्वं, नवरं चउत्थाए नाणत्तं, से भिक्खू वा० से जं० पुण पाणगजायं जाणिज्जा, तंजहा—तिलोदगं वा ६, अस्सिं खलु पडिग्गहियंसि अप्पे पच्छाकम्मे तहेव पडिगाहिज्जा ( सू० २८९ )

प्र. आ.
३५६

अथशब्दोऽधिकारान्तरे, किमधिकुरुते ?, सप्त पिण्डैषणाः पानैषणाश्चेति,'अथ' अनन्तरं भिक्षुर्जानीयात्, काः?—सप्त पिण्डैषणाः



५

१०

ऽन्तरायमन्तरेणाहरिष्यामीति प्रतिज्ञयाऽऽहारमादाय ग्लानान्तिकं गत्वा प्राक्तनान् भक्तादिरूक्षादिदोषानुद्घाट्य ग्लानायादत्त्वा स्वत एव लौल्याद्भुक्त्वा ततस्तस्य साधोर्निवेदयति, यथा मम शूलं वैयावृत्त्यकालपर्यायस्यादिकमन्तरायिकमभूदतोऽहं तद् ग्लानभक्तं गृहीत्वा नायात इत्यादि मातृ[सं]स्थानं संस्पृशेत्, एतदेव दर्शयति–इत्येतानि–पूर्वोक्तान्यायतनानि–कर्मोपादानस्थानानि 'उपातिक्रम्य' सम्यक् परिहृत्य मातृस्थानपरिहारेण ग्लानाय वा दद्याद्दातृसाधुसमीपं वाऽऽहरेदिति ॥ पिण्डाधिकार एव सप्तपिण्डैषणा अधिकृत्य सूत्रमाह—

(मूलं) अह भिक्खू जाणिज्जा सत्त पिंडेसणाओ सत्त पाणेसणाओ, तत्थ खलु इमा पढमा पिंडेसणा–असंसट्ठे हत्थे असंसट्ठे मत्ते, तहप्पगारेण असंसट्ठेण हत्थेण वा मत्तेण वा असणं वा ४ सयं वा णं जाइज्जा परो वा से दिज्जा फासुयं पडिगाहिज्जा, पढमा पिंडेसणा १ ॥ अहावरा दुच्चा पिंडेसणा—संसट्ठे हत्थे. संसट्ठे मत्ते, तहेव दुच्चा पिंडेसणा २ ॥ अहावरा तच्चा पिंडेसणा–इह खलु पाईणं वा ४ संतेगइया सड्ढा भवंति–गाहावई वा जाव कम्मकरी वा, तेसिं च णं अन्नयरेसु विरूवरूवेसु भायणजाएसु उवनिक्खित्तपुव्वे सिया, तंजहा–थालंसि वा पिढरंसि वा सरगंसि वा वरगंसि वा, अह पुणेवं जाणिज्जा–असंसट्ठे हत्थे संसट्ठे मत्ते, संसट्ठे वा हत्थे असंसट्ठे मत्ते, से य पडिग्गहधारी सिया पाणिपडिग्गहिए वा, से पुव्वामेव०–आउसोत्ति वा ! २ एएण तुमं असंसट्ठेण हत्थेण संसट्ठेण मत्तेणं संसट्ठेण वा हत्थेण असंसट्ठेण मत्तेण अस्सिं पडिग्गहगंसि वा पाणिंसि वा निहट्टु उचित्तु दलयाहि तहप्पगारं भोयणजायं सयं वा णं जाइज्जा २ फासुयं० पडिगाहिज्जा,

तइया पिंडेसणा ३॥ अहावरा चउत्था पिंडेसणा-से भिक्खू वा० से जं० पिहुयं वा जाव चाउलपलंबं वा अस्सिं खलु पडिग्गहियंसि अप्पे पच्छाकम्मे अप्पे पज्जवजाए, तहप्पगारं पिहुयं वा जाव चाउलपलंबं वा सयं वा णं० जाव पडि०, चउत्था पिंडेसणा ४॥ अहावरा पंचमा पिंडेसणा-से भिक्खू वा २ उग्गहियमेव भोयणजायं जाणिज्जा, तंजहा-सरावंसि वा डिंडिमंसि वा कोसगंसि वा, अह पुणेवं जाणिज्जा बहुपरियावन्ने पाणीसु दगलेवे, तहप्पगारं असणं वा ४ सयं जाव पडिगाहि०, पंचमा पिंडेसणा ५॥ अहावरा छट्ठा पिंडेसणा-से भिक्खू वा २ पग्गहियमेव भोयणजायं जाणिज्जा, जं च सयट्ठाए पग्गहियं, जं च परट्ठाए पग्गहियं, तं पायपरियावन्नं तं पाणिपरियावन्नं फासुयं पडि०, छट्ठा पिंडेसणा ६॥ अहावरा सत्तमा पिंडेसणा—से भिक्खू वा० बहुउज्झियधम्मियं भोयणजायं जाणिज्जा, जं चऽन्ने बहवे दुपयचउप्पयसमणमाहणअतिहिकिवणवणीमगा नावकंखंति, तहप्पगारं उज्झियधम्मियं भोयणजायं सयं वा णं जाइज्जा परो वा से दिज्जा जाव पडि०, सत्तमा पिंडेसणा ७॥ इच्चेयाओ सत्त पिंडेसणाओ, अहावराओ सत्त पाणेसणाओ, तत्थ खलु इमा पढमा पाणेसणा-असंसट्ठे हत्थे असंसट्ठे मत्ते, तं चेव भाणियव्वं, नवरं चउत्थाए नाणत्तं, से भिक्खू वा० से जं० पुण पाणगजायं जाणिज्जा, तंजहा—तिलोदगं वा ६, अस्सिं खलु पडिग्गहियंसि अप्पे पच्छाकम्मे तहेव पडिगाहिज्जा ( सू० २८९ )

अथशब्दोऽधिकारान्तरे, किमधिकुरुते ?, सप्त पिण्डैषणाः पानैषणाश्चेति,'अथ' अनन्तरं भिक्षुर्जानीयात्, काः?—सप्त पिण्डैषणाः

प्र. आ.
३५६

पिण्ड-
पानै-
षणाः

५

१०

पानैषणाश्च, ताश्चेमाः, तद्यथा—"असंसट्ठा-१ संसट्ठा २ उद्धडा ३ अप्पलेवा ४ उग्गहिआ ५ पग्गहिया ६ उज्झियधम्मे"ति, अत्र च द्वये साधवो—गच्छान्तर्गता गच्छविनिर्गताश्च, तत्र गच्छान्तर्गतानां सप्तानामपि ग्रहणमनुज्ञातं, गच्छनिर्गतानां पुनराद्ययोर्द्वयोरग्रहः पञ्चस्वभिग्रह इति, तत्राद्यां तावद्दर्शयति—'तत्र' तासु मध्ये 'खलु' इत्यलङ्कारे, इमा प्रथमा पिण्डैषणा, तद्यथा—असंसृष्टो हस्तोऽसंसृष्टं च मात्रं, द्रव्यं पुनः सावशेषं वा स्यान्निरवशेषं वा, तत्र निरवशेषे पश्चात्कर्मदोषस्तथाऽपि गच्छस्य बालाद्याकुलत्वात्तन्निषेधो नास्ति, अत एव सूत्रे तच्चिन्ता न कृता, शेषं सुगमम् ॥ तथाऽपरा द्वितीया पिण्डैषणा, तद्यथा—संसृष्टो हस्तः संसृष्टं मात्रमित्यादि सुगमम् ॥ अथापरा तृतीया पिण्डैषणा, तद्यथा—इह खलु प्रज्ञापकापेक्षया प्राच्यादिषु दिक्षु सन्ति केचित् श्रद्धालवः, ते चामी—गृहपत्यादयः कर्मकरीपर्यन्ताः, तेषां च गृहेष्वन्यतरेषु नानाप्रकारेषु भाजनेषु पूर्वमुत्क्षिप्तमशनादि स्यात्, भाजनानि च स्थालादीनि सुबोध्यानि नवरं 'सरगम्' इति शरिकाभिः कृतं सूर्पादि 'परगं' वंशनिष्पन्नं छब्बकादि 'वरगं' मण्यादि महार्घमूल्यं, शेषं सुगमं यावत्परिगृह्णीयादिति, अत्र च संसृष्टासंसृष्टसावशेषद्रव्यैरष्टौ भङ्गाः, तेषु चाष्टमो भङ्गः संसृष्टो हस्तः संसृष्टं मात्रं सावशेषं द्रव्यमित्येष गच्छनिर्गतानामपि कल्पते, शेषास्तु भङ्गा गच्छान्तर्गतानां सूत्रार्थहान्यादिकं कारणमाश्रित्य कल्पन्त इति ॥ अपरा चतुर्थी पिण्डैषणाऽल्पलेपा नाम, सा यत्पुनरेवमल्पलेपं जानीयात्, तद्यथा—'पृथुकम्' इति भृष्टशाल्याद्यपगततुषं यावत् 'तन्दुलपलम्बं' इति भृष्टशाल्यादितन्दुलानिति, अत्र च पृथुकादिके गृहीतेऽप्यल्पं पश्चात्कर्मादि, तथाऽल्पं पर्यायजातमल्पं तुषादि त्यजनीयमित्येवंप्रकारमल्पलेपम् अन्यदपि वल्लचनकादि यावत्परिगृह्णीयादिति ॥ अथापरा पञ्चमी पिण्डैषणाऽवगृहीता नाम, तद्यथा—स भिक्षुर्यावदुपहृतमेव भोक्तुकामस्य भाजनस्थितमेव भोजनजातं ढौकितं जानीयात्, तत्पुनर्भाजनं दर्शयति, तद्यथा—'शरावं'

प्रतीतं 'डिण्डिमं' कंश (कांस्य) भाजनं 'कोशकं' प्रतीतं, तेन च दात्रा कदाचित् पूर्वमेवोदकेन हस्तो मात्रकं वा धौतं स्यात्, तथा च निषिद्धं ग्रहणम्, अथ पुनरेवं जानीयाद्बहुपर्यापन्नः-परिणतः पाण्यादिषूदकलेपः, तत एवं ज्ञात्वा यावद् गृह्णीयादिति ॥ अथापरा षष्ठी पिण्डैषणा प्रगृहीता नाम-स्वार्थं परार्थं वा पिठरकादेरुद्धृत्य चट्टकादिनोत्क्षिप्ता परेण च न गृहीता प्रव्रजिताय वा दापिता सा प्रकर्षेण गृहीता प्रगृहीता तां तथाभूतां प्राभृतिकां 'पात्रपर्यापन्नां वा' पात्रस्थितां 'पाणिपर्यापन्नां वा' हस्तस्थितां वा यावत्प्रतिगृह्णीयादिति ॥ अथापरा सप्तमी पिण्डैषणा उज्झितधर्मिका नाम, सा च सुगमा ॥ आसु च सप्तस्वपि पिण्डैषणासु संसृष्टाद्यष्टभङ्गका भणनीयाः, नवरं चतुर्थ्यां नानात्वमिति, तस्या अलेपत्वात्संसृष्टाद्यभाव इति ॥ एवं पानैषणा अपि नेया भङ्गकाश्चायोज्याः, नवरं चतुर्थ्यां नानात्वं, स्वच्छत्वाच्च तस्या अल्पलेपत्वं, ततश्च संसृष्टाद्यभाव इति, आसां चैषणानां यथोत्तरं विशुद्धितारतम्यादेष एव क्रमो न्याय्य इति ॥ साम्प्रतमेताः प्रतिपद्यमानेन पूर्वप्रतिपन्नेन वा यद्विधेयं तद्दर्शयितुमाह—

प्र. आ. ३५७

(मूलं) इच्चेयासिं सत्तण्हं पिंडेसणाणं सत्तण्हं पाणेसणाणं अन्नयरं पडिमं पडिवज्जमाणे नो एवं वइज्जा-मिच्छापडिवन्ना खलु एए भयंतारो, अहमेगे सम्मं पडिवन्ने, जे एए भयंतारो एयाओ पडिमाओ पडिवज्जित्ता णं विहरंति जो य अहमंसि एयं पडिमं पडिवज्जित्ताणं विहरामि सव्वेऽपि ते उ जिणाणाए उवट्ठिया अन्नुन्नसमाहीए, एवं च णं विहरंति, एयं खलु तस्स भिक्खुस्स भिक्खुणीए वा सामग्गियं ॥ (सू० २८६) २-१-१-११ पिण्डैषणायामेकादश उद्देशकः ॥ पिण्डैषणाध्ययनं समाप्तं ॥

इत्येतासां सप्तानां पिण्डैषणानां पानैषणानां चाऽन्यतरां प्रतिमां प्रतिपद्यमानो नैवद्वदेत्, तद्यथा-'मिथ्याप्रतिपन्नाः' न सम्यक्

पिण्डैषणाद्यभिग्रहवन्तो भगवन्तः—साधवः, अहमेवैकः सम्यक्प्रतिपन्नो, यतो मया विशुद्धः पिण्डैषणाभिग्रहः कृत एभिश्च न, इत्येवं (गच्छवासिना) गच्छनिर्गतेन वा समदृष्ट्या द्रष्टव्याः,नापि गच्छान्तर्गतेनोत्तरोत्तरपिण्डैषणाभिग्रहवता पूर्वपूर्वतरपिण्डैषणाभिग्रहवन्तो दृष्या इति,यच्च विधेयं तद्दर्शयति—य एते भगवन्तः—साधव एताः 'प्रतिमाः' पिण्डैषणाद्यभिग्रहविशेषान् 'प्रतिपद्य' गृहीत्वा ग्रामानुग्रामं 'विहरन्ति' यथायोगं पर्यटन्ति, यां चाहं प्रतिमां प्रतिपद्य विहरामि, सर्वेऽप्येते जिनाज्ञायां जिनाज्ञया वा 'समुत्थिताः' अभ्युद्यतविहारिणः संवृत्ताः, ते चान्योऽन्यसमाधिना यो यस्य गच्छान्तर्गतादेः समाधिरभिहितः, तद्यथा—सप्तापि गच्छवासिनां, तन्निर्गतानां तु द्वयोरग्रहः पञ्चस्वभिग्रहः इत्यनेन 'विहरन्ति' यतन्त इति, तथाविहारिणश्च सर्वेऽपि ते जिनाज्ञां नातिलङ्घन्ते, तथा चोक्तम्—"जोऽवि दुवत्थतिवत्थो बहुवत्थ अचेलओ व संथरइ। न हु ते हीलंति परं सव्वेऽवि अ ते जिणाणाए ॥१॥"एतत्तस्य भिक्षोर्भिक्षुण्या वा 'सामग्र्यं' सम्पूर्णो भिक्षुभावो यदात्मोत्कर्षवर्जनमिति २-१-१-११ ॥ द्वितीयश्रुतस्कन्धे प्रथमाध्ययनटीका परिसमाप्ता ॥

१५ उत्कर्षवर्जनं

२०

१ योऽपि द्विवस्त्रस्त्रिवस्त्रो बहुवस्त्रोऽचेलको वा संस्तरति । नैव ते हीलन्ति परान् सर्वेऽपि च ते जिनाज्ञायाम् ॥१॥

# अथ द्वितीयं शय्यैषणाख्यमध्ययनम्

उक्तं प्रथममध्ययनं, साम्प्रतं द्वितीयमारभ्यते, अस्य चायमभिसम्बन्धः—इहानन्तराध्ययने धर्माधारशरीरपरिपालनार्थमा- दावेव पिण्डग्रहणविधिरुक्तः, स च गृहीतः सन्नवश्यमल्पसागारिके प्रतिश्रये भोक्तव्य इत्यतस्तद्गतगुणदोषनिरूपणार्थं द्वितीयम- ध्ययनम्, अनेन च सम्बन्धेनायातस्यास्याध्ययनस्य चत्वार्यनुयोगद्वाराणि व्यावर्णनीयानि, तत्र नामनिष्पन्ने निक्षेपे शय्यैषणेति, तस्या निक्षेपविधानाय पिण्डैषणानिर्युक्तियंत्रया संभवति तां तत्रातिदिश्य प्रथमगाथया अपरासां च निर्युक्तीनां यथायोगं संभवं द्वितीयगाथया आविर्भाव्य निक्षेपं च तृतीयगाथया शय्याषट्कनिक्षेपे प्राप्ते नामस्थापने अनादृत्य निर्युक्तिकृदाह— ५

पिण्डेसणाए जा णिज्जुत्ती सा चेव होइ सेज्जाए। वत्थेसण पाएसण उग्गहपडिमाए सच्चेव ॥२९८॥

सव्वा वयणविसोही णिज्जुत्ती जा वक्कसुद्धीए। सच्चेव णिरवसेसा भासज्जाएवि णायव्वा ॥२९९॥

सेज्जा इरिया तह उग्गहे य तिण्हंपि छक्कणिक्खेवो। पिंडे भासा वत्थे पाए य चउक्कणिक्खेवो ॥३००॥

दव्वे खित्ते काले भावे सिज्जा य जा तहिं पगयं। केरिसिया सिज्जा खलु संजयजोगत्ति नायव्वा ॥३०१॥

द्रव्यशय्या क्षेत्रशय्या कालशय्या भावशय्या, अत्र च या द्रव्यशय्या तस्यां प्रकृतं, तामेव च दर्शयति—कीदृशी सा द्रव्यशय्या? संयतानां योग्येत्येवं ज्ञातव्या भविष्यति॥ द्रव्यशय्यान्याचिख्यासयाऽऽह— १०

तिविहा य दव्वसिज्जा सचित्ताऽचित्त मीसगा चेव। खित्तंमि जंमि खित्ते काले जा जंमि कालंमि ॥३०२॥

त्रिविधा द्रव्यशय्या भवति, तद्यथा-सचित्ता अचित्ता मिश्रा चेति, तत्र सचित्ता पृथिवीकायादौ, अचित्ता तत्रैव प्रासुके, मिश्राऽपि तत्रैवार्द्धपरिणते, अथवा सचित्तामुत्तरगाथया स्वत एव निर्युक्तिकृद् भावयिष्यति। 'क्षेत्र'मिति तु क्षेत्रशय्या, सा च यत्र ग्रामादिके क्षेत्रे क्रियते, कालशय्या तु या यस्मिन्नृतुबद्धादिके काले क्रियते ॥ तत्र सचित्तद्रव्यशय्योदाहरणार्थमाह—

उक्कलकलिंग गोअम वग्गुमई चेव होइ नायव्वा। एयं तु उदाहरणं नायव्वं दव्वसिज्जाए ॥३०३॥

अस्या भावार्थः कथानकादवसेयः,तच्चेदम्-एकस्यामटव्यां द्वौ भ्रातरावुत्कलकलिङ्गाभिधानौ विषमप्रदेशे पल्लिं निवेश्य चौर्येण वर्त्तते, तयोश्च भगिनी वल्गुमती नाम, तत्र कदाचिद् गौतमाभिधानो नैमित्तिकः समायातः, ताभ्यां च प्रतिपन्नः, तया च वल्गुमत्योक्तं-यथा नायं भद्रकः, अत्र वसन् यदा तदाऽयमस्माकं पल्लिविनाशाय भविष्यत्यतो निर्द्धाट्यते, ततस्ताभ्यां तद्वचनान्निर्द्धाटितः, स तस्यां प्रद्वेषमापन्नः प्रतिज्ञामग्रहीद्, यथा-नाहं गौतमो भवामि यदि वल्गुमत्युदरं विदार्य तत्र न स्वपिमीति, अन्ये तु भणन्ति-सैव वल्गुमती अपत्यानां लघुत्वात्पल्लिस्वामिनी,उत्कलकलिङ्गौ नैमित्तिकौ, सा तयोर्भक्त्या गौतमं पूर्वनैमित्तिकं निर्द्धाटितवती, अतस्तत्प्रद्वेषात्प्रतिज्ञामादाय सर्पपान् वपन्निर्गतः, सर्षपाश्च वर्षाकालेन जाताः, ततस्तदनुसारेणान्यं राजानं प्रवेश्य सा पल्ली समस्ता लुण्टिता दग्धा च, गौतमेनापि वल्गुमत्या उदरं पाटयित्वा सावशेषजीवितदेहाया उपरि सुप्तमिति एषा वा सचित्ता द्रव्यशय्येति ॥ भावशय्याप्रतिपादनार्थमाह—

दुविहा य भावसिज्जा कायगए छव्विहे य भावंमि। भावे जो जत्थ जया सुहदुहगब्भाइसिज्जासु ॥३०४॥

२०

द्वे विधे-प्रकारावस्याः सा द्विविधा, तद्यथा-कायविषया षड्भावविषया च, तत्र यो जीवः 'यत्र' औदयिकादौ भावे 'यदा' यस्मिन् काले वर्त्तते सा तस्य षड्भावरूपा भावशय्या, शयनं शय्या स्थितिरितिकृत्वा, तथा स्त्र्यादिकायगतो गर्भत्वेन स्थितो यो जीवस्तस्य स्त्र्यादिकाय एव भावशय्या, यतः स्त्र्यादिकाये सुखिते दुःखिते सुप्ते उत्थिते वा तादृगवस्थ एव तदन्तर्वर्त्ती जीवो भवति, अतः कायविषया भावशय्या द्वितीयेति ॥ अध्ययनार्थाधिकारः सर्वोऽपि शय्याविषयः, उद्देशार्थाधिकारप्रतिपादनाय निर्युक्तिकृदाह-

सव्वेवि य सिज्जविसोहिकारगा तहवि अत्थि उ विसेसो । उद्देसे उद्देसे वुच्छामि समासओ किंचि ॥३०५॥

'सर्वेऽपि' त्रयोऽप्युद्देशका यद्यपि शय्याविशुद्धिकारकास्तथाऽपि प्रत्येकमस्ति विशेषस्तमहं लेशतो वक्ष्य इति ॥ एतदेवाह—

उग्गमदोसा पढमिल्लुयंमि संसत्तपच्चवाया य १ । बीयंमि सोअवाई बहुविहसिज्जाविवेगो २ य ॥३०६॥

तइए जयंतछलणा सज्झायस्सऽणुवरोहि जइयव्वं । समविसमाईएसु य समणेणं निज्जरट्ठाए ३ ॥३०७॥

तत्र प्रथमोद्देशके वसतेरुद्गमदोषाः-आधाकर्मादयस्तथा गृहस्थादिसंसक्तप्रत्यपायाश्च चिन्त्यन्ते १, तथा द्वितीयोद्देशके शौचवादि-दोषा बहुप्रकारः शय्याविवेकश्च-त्यागश्च प्रतिपाद्यत इत्ययमर्थाधिकारः २ ॥ तृतीयोद्देशके यतमानस्य-उद्गमादिदोषपरिहारिणः साधोर्या छलना स्यात्तत्परिहारे यतितव्यं, तथा स्वाध्यायानुपरोधिनि समविषमादौ प्रतिश्रये साधुनानिर्जरार्थिना स्थातव्यमित्ययमर्थाधिकारः ३ ॥ गतो निर्युक्त्यनुगमः, अधुना सूत्रानुगमे सूत्रमुच्चारयितव्यं, तच्चेदम्—

(मूलं) से भिक्खू वा० अभिकंखिज्जा उवस्सयं एसित्तए अणुपविसित्ता गामं वा जाव रायहाणिं वा, से जं पुण उवस्सयं जाणिज्जा सअंडं जाव ससंताणयं तहप्पगारे उवस्सए नो ठाणं वा सिज्जं वा निसीहियं वा चेइज्जा ॥



५

१०

से भिक्खू वा० से जं पुण उवस्सयं जाणिज्जा अप्पंडं जाव अप्पसंताणयं तहप्पगारे उवस्सए पडिलेहित्ता पमज्जित्ता तओ संजयामेव ठाणं वा ३ चेइज्जा ॥ से जं पुण उवस्सयं जाणिज्जा अस्सिं पडियाए एगं साहम्मियं समुद्दिस्स पाणाइं ४ समारब्भ समुद्दिस्स कीयं पामिच्चं अच्छिज्जं अणिसट्ठं अभिहडं आहट्टु चेइए, तहप्पगारे उवस्सए पुरिसंतरकडे वा जाव अणासेविए वा नो ठाणं वा ३ चेइज्जा । एवं बहवे साहम्मिया एगं साहम्मिणिं बहवे साहम्मिणीओ ॥ से भिक्खू वा० से जं पुण उ० बहवे समणवणीमए पगणिय २ समुद्दिस्स तं चेव भाणियव्वं ॥ से भिक्खू वा० से जं० बहवे समण० समुद्दिस्स पाणाइं ४ जाव चेएति, तहप्पगारे उवस्सए अपुरिसंतरकडे जाव अणासेविए नो ठाणं वा ३ चेइज्जा ३, अह पुणेवं जाणिज्जा पुरिसंतरकडे जाव सेविए पडिलेहित्ता २ तओ संजयामेव चेइज्जा ॥ से भिक्खू वा० से जं पुण अस्संजए भिक्खुपडियाए कडिए वा उक्कंविए वा छन्ने वा लित्ते वा घट्ठे वा मट्ठे वा संमट्ठे वा संपधूमिए वा तहप्पगारे उवस्सए अपुरिसंतरकडे जाव अणासेविए नो ठाणं वा सेज्जं वा निसीहिं वा चेइज्जा, अह पुण एवं जाणिज्जा पुरिसंतरकडे जाव आसेविए पडिलेहित्ता २ तओ चेइज्जा ॥ ( सू० २८७ )

२०

स भिक्षुः 'उपाश्रयं' वसतिमेषितुं यद्यभिकाङ्क्षेत्ततो ग्रामादिकमनुप्रविशेत्, तत्र च प्रविश्य साधुयोग्यं प्रतिश्रयमन्वेषयेत्, तत्र च यदि साण्डादिकमुपाश्रयं जानीयात्ततस्तत्र स्थानादिकं न विदध्यादिति दर्शयति-सुगमं, नवरं 'स्थानं' कायोत्सर्गः 'शय्या' संस्तारकः 'निषीधिका' स्वाध्यायभूमिः 'णो चेइज्ज'त्ति नो चेतयेत्-नो कुर्यादित्यर्थः ॥ एतद्विपरीते तु प्रत्युपेक्ष्य स्थानादीनि कुर्या-

दिति ॥ साम्प्रतं प्रतिश्रयगतानुद्गमादिदोषान् बिभणिषुराह–'सः' भावभिक्षुर्यत्पुनरेवंभूतं प्रतिश्रयं जानीयात्, तद्यथा–'अस्सिंप-डियाए'त्ति एतत्प्रतिज्ञया एतान् साधून् प्रतिज्ञाय–उद्दिश्य प्राण्युपमर्देन साधुप्रतिश्रयं कश्चिच्छ्राद्धः कुर्यादिति । एतदेव दर्शयति–एकं साधर्मिकं 'साधुम्' अर्हत्प्रणीतधर्मानुष्ठायिनं सम्यगुद्दिश्य–प्रतिज्ञाय प्राणिनः 'समारभ्य' प्रतिश्रयार्थमुपमर्द्य प्रतिश्रयं कुर्यात्, तथा तमेव साधुं सम्यगुद्दिश्य 'क्रीतं' मूल्येनावाप्तं, तथा 'पामिच्चं'ति अन्यस्मादुच्छिन्नं गृहीतम् 'आच्छेद्य'मिति भृत्यादेर्बलादाच्छिद्य गृहीतम् 'अनिसृष्टं' स्वामिनाऽनुत्सङ्कलितम् 'अभ्याहृतं' निष्पन्नमेवान्यतः समानीतम्, एवंभूतं प्रतिश्रयम् 'आहृत्य' उपेत्य 'चेए-इ'त्ति साधवे ददाति, तथाप्रकारे चोपाश्रये पुरुषान्तरकृतादौ स्थानादि न विदध्यादिति, एवं बहुवचनसूत्रमपि नेयम् ॥ तथा साध्वी-सूत्रमप्येकवचनबहुवचनाभ्यां नेयमिति ॥ किञ्च–सूत्रद्वयं पिण्डैषणानुसारेण नेयं, सुगमं च ॥ तथा–स भिक्षुर्यत्पुनरेवंभूतं जानी-यात्, तद्यथा–भिक्षुप्रतिज्ञया 'असंयतः' गृहस्थः प्रतिश्रयं कुर्यात्, स चैवंभूतः स्यात्, तद्यथा–'कटकितः' काष्ठादिभिः कुड्यादौ संस्कृतः 'उक्कंबिओ'त्ति वंशादिकम्बाभिरवबद्धः 'छन्ने व'त्ति दर्भादिभिश्छादितः लिप्तः गोमयादिना घृष्टः सुधादिखरपिण्डेन मृष्टः स एव लेवनिकादिना समीकृतः 'संमृष्टः' भूमिकर्मादिना संस्कृतः 'संप्रधूपितः' दुर्गन्धापनयनार्थं धूपादिना धूपितः, तदेवंभूते प्रतिश्रयेऽपुरुषान्तरस्वीकृते यावदनासेविते स्थानादि न कुर्यात्, पुरुषान्तरकृतासेवितादौ प्रत्युपेक्ष्य स्थानादि कुर्यादिति ॥

५

(मूलं) से भिक्खू वा० से जं पुण उवस्सयं जा० अस्संजए भिक्खुपडियाए खुड्डियाओ दुवारियाओ महल्लि-याओ कुज्जा, जहा पिंडेसणाए जाव संथारगं संथारिज्जा बहिया वा निन्नक्खु तहप्पगारे उवस्सए अपु० नो ठाणं० ३ अह पुणेवं० पुरिसंतरकडे आसेविए पडिलेहित्ता २ तओ संजयामेव जाव चेइज्जा ॥ से भिक्खू वा०

१०

से जं० अस्संजए भिक्खुपडियाए उदगप्पसूयाणि कंदाणि वा मूलाणि वा पत्ताणि वा पुप्फाणि वा फलाणि वा बीयाणि वा हरियाणि वा ठाणाओ ठाणं साहरइ बहिया वा निण्णक्खू त० अपु० नो ठाणं वा चेइज्जा, अह पुण० पुरिसंतरकडं चेइज्जा ॥ से भिक्खू वा से जं० अस्संज० भि० पीढं वा फलगं वा निस्सेणिं वा उदूखलं वा ठाणाओ ठाणं साहरइ बहिया वा नीणक्खू तहप्पगारे उ० अपु० नो ठाणं वा चेइज्जा, अह पुण पुरिसं० चेइज्जा ॥ ( सू० २८८ )



स भिक्षुर्यं पुनरेवंभूतं प्रतिश्रयं जानीयात्, तद्यथा-'असंयतः' गृहस्थः साधुप्रतिज्ञया लघुद्वारं प्रतिश्रयं महाद्वारं विदध्यात्, तत्रैवंभूते पुरुषान्तरास्वीकृतादौ स्थानादि न विदध्यात्, पुरुषान्तरस्वीकृतासेवितादौ तु विदध्यादिति, अत्र सूत्रद्वयेऽप्युत्तरगुणा अभिहिताः, एतद्दोषदुष्टाऽपि पुरुषान्तरस्वीकृतादिका कल्पते, मूलगुणदुष्टा तु पुरुषान्तरस्वीकृताऽपि न कल्पते, ते चामी मूलगुण-दोषाः—"पट्टी[1] वंसो दो धारणाउ चत्तारि मूलवेलीओ" एतैः पृष्ठवंशादिभिः साधुप्रतिज्ञया या वसतिः क्रियते सा मूलगुणदुष्टा ॥ स भिक्षुर्यं पुनरेवम्भूतं प्रतिश्रयं जानीयात्, तद्यथा-गृहस्थः साधुप्रतिज्ञया उदकप्रसूतानि कन्दादीनि स्थानान्तरं सङ्क्रामयति बहिर्वा 'निण्णक्खु'त्ति निस्सारयति तथाभूते प्रतिश्रये पुरुषान्तरास्वीकृते स्थानादि न कुर्यात्, पुरुषान्तरस्वीकृते तु कुर्यादिति ॥ एवमचित्तनिःसारणसूत्रमपि नेयम्, अत्र च त्रसादिविराधना स्यादिति भावः ॥ किञ्च—



(मूलं) से भिक्खू वा० से जं० तंजहा-खंधंसि वा मंचंसि वा मालंसि वा पासा० हम्मि० अन्नयरंसि वा



१ पृष्ठिवंशो द्वे धारणे चतस्रो मूलवेरय.,

तहप्पगारंसि अंतलिक्खजायंसि, नन्नत्थ आगाढाणागाढेहिं कारणेहिं ठाणं वा नो चेइज्जा ॥ से आहच्च चेइए सिया नो तत्थ सीओदगवियडेण वा २ हत्थाणि वा पायाणि वा अच्छीणि वा दंताणि वा मुहं वा उच्छोलिज्ज वा पहोइज्ज वा, नो तत्थ ऊसढं पकरेज्जा, तंजहा—उच्चारं वा पा० खे० सिं० वंतं वा पित्तं वा पूयं वा सोणियं वा अन्नयरं वा सरीरावयवं वा, केवली बूया आयाणमेयं, से तत्थ ऊसढं पगरेमाणे पयलिज्ज वा २, से तत्थ पयलमाणे वा पवडमाणे वा हत्थं वा जाव सीसं वा अन्नयरं वा कायंसि इंदियजालं लूसिज्ज वा पाणिं ४ अभिहणिज्ज वा जाव ववरोविज्ज वा, अथ भिक्खूणं पुव्वोवइट्ठा ४ जं तहप्पगारं उवस्सए अंतलिक्खजाए नो ठाणंसि वा ३ चेइज्जा ॥ (सू० २८९)

स भिक्षुर्य पुनरेवंभूतमुपाश्रयं जानीयात्, तद्यथा—स्कन्धः—एकस्य स्तम्भस्योपर्याश्रयः, मञ्चमालौ—प्रतीतौ, प्रासादो—द्वितीयभूमिका, हर्म्यतलं—भूमिगृहम्, अन्यस्मिन् वा तथाप्रकारे प्रतिश्रये स्थानादि न विदध्यादन्यत्र तथाविधप्रयोजनादिति, स चैवंभूतः प्रतिश्रयस्तथाविधप्रयोजने सति यद्याहृत्य—उपेत्य गृहीतः स्यात्तदानीं यत्तत्र विधेयं तद्दर्शयति न तत्र शीतोदकादिना हस्तादिधावनं विदध्यात्, तथा न च तत्र व्यवस्थितः 'उत्सृष्टम्' उत्सर्जनं—त्यागमुच्चारादेः कुर्यात्, केवली ब्रूयात्कर्मोपादानमेतदात्मसंयमविराधनातः, एतदेव दर्शयति-स तत्र त्यागं कुर्वन् पतेद्वा पतंश्चान्यतरं शरीरावयवमिन्द्रियं वा विनाशयेत्, तथा प्राणिनश्चाभिहन्याद्यावज्जीविताद् 'व्यपरोपयेत्' प्रच्यावयेदिति, अथ भिक्षूणां पूर्वोपदिष्टमेतत्प्रतिज्ञादिकं यत्तथाभूतेऽन्तरिक्षजाते प्रतिश्रये स्थानादि न विधेयमिति ॥ अपि च—



१०

(मूलं) से भिक्खू वा० से जं० सइत्थियं सखुड्डं सपसुभत्तपाणं तहप्पगारे सागारिए उवस्सए नो ठाणं वा ३ चेइज्जा। आयाणमेयं भिक्खुस्स गाहावइकुलेण सद्धिं संवसमाणस्स अलसगे वा विसूइया वा छड्डी वा उव्वाहिज्जा अन्नयरे वा से दुक्खे रोगायंके समुप्पज्जिज्जा, अस्संजए कलुणवडियाए तं भिक्खुस्स गायं तिल्लेण वा घएण वा नवणीएण वा वसाए वा अब्भंगिज्ज वा मक्खिज्ज वा सिणाणेण वा कक्केण वा लुद्धेण वा वण्णेण वा चुण्णेण वा पउमेण वा आघंसिज्ज वा पघंसिज्ज वा उव्वलिज्ज वा उव्वट्टिज्ज वा सीओदगवियडेण वा उसिणोदगवियडेण वा उच्छोलिज्ज वा पक्खालिज्ज वा सिणाविज्ज वा सिंचिज्ज वा दारुणा वा दारुपरिणामं कट्टु अगणिकायं उज्जालिज्ज वा पज्जालिज्ज वा उज्जालित्ता २ कायं आयाविज्जा वा प० अह भिक्खूणं पुव्वोवइट्ठा० जं तहप्पगारे सागारिए उवस्सए नो ठाणं वा ३ चेइज्जा ॥ ( सू० २९० )

स भिक्षुर्यं पुनरेवंभूतमुपाश्रयं जानीयात् तद्यथा—यत्र स्त्रियं तिष्ठन्तीं जानीयात्, तथा 'सखुड्ड'न्ति सबालं, यदिवा सह क्षुद्रैरवद्धः—सिंहश्वमार्जारादिभिर्यो वर्त्तते, तथा पशवश्च भक्तपाने च, यदिवा पशूनां भक्तपाने तद्युक्तं, तथाप्रकारे सागारिके गृहस्थाकुलप्रतिश्रये स्थानादि न कुर्याद्, यतस्तत्रामी दोषाः, तद्यथा—आदानं—कर्मोपादानमेतद् भिक्षोर्गृहपतिकुटुम्बेन सह संवसतो, यतस्तत्र भोजनादिक्रिया निःशङ्का न संभवति, व्याधिविशेषो वा कश्चित्संभवेदिति दर्शयति—'अलसगे'त्ति हस्तपादादिस्तम्भः श्वयथुर्वा, विशूचिकाछर्दी प्रतीते, एते व्याधयस्तं साधुमुद्बाधेरन्, अन्यतरद्वा दुःखं 'रोगः' ज्वरादिः 'आतङ्कः' सद्यः प्राणहारी शूलादिस्तत्र समुत्पद्येत, तं च तथाभूतं रोगातङ्कपीडितं दृष्ट्वाऽसंयतः कारुण्येन भक्त्या वा तद्भिक्षुगात्रं तैलादिनाऽभ्यञ्ज्यात् तथेषन्म्रक्षयेद्वा

पुनश्च स्नानं-सुगन्धिद्रव्यसमुदयः, कल्कः-कषायद्रव्यक्वाथः, लोध्रं-प्रतीतं, वर्णकः-कम्पिल्लकादिः, चूर्णो यवादीनां पद्मकं-प्रतीतम्, इत्यादिना द्रव्येण ईषत् पुनः पुनर्वा घर्षयेत्, घृष्ट्वा चाभ्यङ्गापनयनार्थमुद्वर्त्तयेत्, ततश्च शीतोदकेन वा उष्णोदकेन वा 'उच्छोलेज्ज'ति ईषदुच्छोलनं विदध्यात् प्रक्षालयेत्, पुनः पुनः स्नानं वा-सोत्तमाङ्गं कुर्यात्सिञ्चेद्वेति, तथा दारुणा वा दारूणां परिणामं कृत्वा-संघर्षं कृत्वाऽग्निमुज्ज्वालयेत्प्रज्वालयेद्वा, तथा च कृत्वा साधुकायम् आतापयेत् सकृत् प्रतापयेत्पुनः पुनः। अथ साधूनां पूर्वोपदिष्टमेतत्प्रतिज्ञादिकं यत् तथाभूते ससागारिके प्रतिश्रये स्थानादिकं न कुर्यादिति ॥

(मूलं) आयाणमेयं भिक्खुस्स सागारिए उवस्सए संवसमाणस्स इह खलु गाहावई वा जाव कम्मकरी वा अन्नमन्नं अक्कोसंति वा पचंति वा रुंभंति वा उद्दविंति वा, अह भिक्खूणं उच्चावयं मणं नियंछिज्जा, एए खलु अन्नमन्नं अक्कोसंतु वा मा वा अक्कोसंतु जाव मा वा उद्दविंतु, अह भिक्खूणं पुव्वो० जं तहप्पगारे सा० नो ठाणं वा चेइज्जा ॥ ( सू० २९१ )

कर्मोपादानतमेद्भिक्षोः ससागारिके प्रतिश्रये वसतो, यतस्तत्र बहवः प्रत्यपायाः संभवन्ति, तानेव दर्शयति-'इह' इत्थंभूते प्रतिश्रये गृहपत्यादयः परस्परत आक्रोशादिकाः क्रियाः कुर्युः, तथा च कुर्वतो दृष्ट्वा स साधुः कदाचिदुच्चावचं मनः कुर्यात्, तत्रोच्चं नाम मैवं कुर्वन्तु, अवचं नाम कुर्वन्त्विति, शेषं सुगममिति ॥



(मूलं) आयाणमेयं भिक्खुस्स गाहावईहिं सद्धिं संवसमाणस्स, इह खलु गाहावई अप्पणो सयट्ठाए अगणिकायं उज्जालिज्ज वा पज्जालिज्ज वा विज्झविज्ज वा, अह भिक्खू उच्चावयं मणं नियंछिज्जा, एए खलु अग-

णिकायं उ० वा २ मा वा उ० पज्जालिंतु वा मा वा प०, विज्झवितु वा मा वा वि०, अह भिक्खूणं पु० जं तहप्पगारे उ० नो ठाणं वा ३ चेइज्जा ॥ (सू० २९२)

एतदपि गृहस्थादिभिः स्वार्थमग्निसमारम्भे क्रियमाणे भिक्षोरुच्चावचमनःसम्भवप्रतिपादकं सूत्रं सुगमम् ॥ अपिच—

(मूलं) आयाणमेयं भिक्खुस्स गाहावईहिं सद्धिं संवसमाणस्स इह खलु गाहावइस्स कुंडले वा गुणे वा मणी वा मुत्तिए वा हिरण्णेसु वा सुवण्णेसु वा कडगाणि वा तुडियाणि वा तिसराणि वा पालंबाणि वा हारे वा अद्धहारे वा एगावली वा कणगावली वा मुत्तावली वा रयणावली वा तरुणीयं वा कुमारिं अलंकियविभूसियं पेहाए, अह भिक्खू उच्चाव० एरिसिया वा सा नो वा एरिसिया इय वा णं बूया इय वा णं मणं साइज्जा, अह भिक्खूणं पु० ४ जं तहप्पगारे उवस्सए नो० ठा० ॥ सू० २९३)

गृहस्थैः सह संवसतो भिक्षोरेते च वक्ष्यमाणा दोषाः, तद्यथा—अलङ्कारजातं दृष्ट्वा कन्यकां वाऽलङ्कृतां समुपलभ्य ईदृशी तादृशी वा शोभनाऽशोभना वा भद्राभरणसदृशी वा तथाऽलङ्कारो वा शोभनोऽशोभन इत्यादिका वाचं ब्रूयात्, तथोच्चावचं शोभनाशोभनादौ मनः कुर्यादिति समुदायार्थः, तत्र गुणो—रसना हिरण्यं—दीनारादिद्रव्यजातं त्रुटितानि—मृणालिकाः प्रालम्बः—आप्रदीपन आभरणविशेषः, शेषं सुगमम् ॥ किञ्च—

(मूलं) आयाणमेयं भिक्खुस्स गाहावईहिं सद्धिं संवसमाणस्स, इह खलु गाहावइणीओ वा गाहावइधूयाओ वा गा० सुण्हाओ वा गा० धाईओ वा गा० दासीओ वा गा० कम्मकरीओ वा तासिं च णं एवं वुत्तपुव्वं

भवइ—जे इमे भवंति समणा भगवंतो जाव उवरया मेहुणाओ धम्माओ, नो खलु एएसिं कप्पइ मेहुणध-म्मं परियारणाए आउट्टित्तए, जा य खलु एएहिं सद्धिं मेहुणधम्मं परियारणाए आउट्टाविज्जा पुत्तं खलु सा ओलभिज्जा ओयसिं तेयसिं वच्चसिं जसंसिं संपराइयं आलोयणदरसणिज्जं,एयप्पगारं निग्घोसं सुच्चा निसम्म तासिं च णं अन्नयरी सड्ढी तं तवसिं भिक्खुं मेहुणधम्मपडियारणाए आउट्टाविज्जा, अह भिक्खूणं पु० जं तहप्पगारे सा० उ० नो ठा० ३ चेइज्जा एयं खलु तस्स० ॥ (सू० २२४) पढमा सिज्जा सम्मत्ता २-१-२-१ ॥

पूर्वोक्ते गृहे वसतो भिक्षोरमी दोषाः, तद्यथा—गृहपतिभार्यादय एवमालोचयेयुः—यथैते श्रमणा मैथुनादुपरताः, तदेवमेतेभ्यो यदि पुत्रो भवेत्ततोऽसौ 'ओजस्वी' बलवान् 'तेजस्वी' दीप्तिमान् 'वर्चस्वी' रूपवान् 'यशस्वी' कीर्त्तिमान्, इत्येवं संप्रधार्य तासां च मध्ये एवंभूतं शब्दं काचित्पुत्रश्रद्धालुः श्रुत्वा तं साधुं मैथुनधर्म(स्य) 'पडियारणाए'त्ति आसेवनार्थम् 'आउट्टाविज्ज'त्ति अभिमुखं कुर्यात्, अत एतद्दोषभयात्साधूनां पूर्वोपदिष्टमेतत्प्रतिज्ञादिकं यत्तथाभूते प्रतिश्रये स्थानादि न कार्यमिति, एतत्तस्य भिक्षोर्भिक्षुण्या वा 'सामग्र्यं' सम्पूर्णो भिक्षुभाव इति ॥ द्वितीयाध्ययनस्य प्रथमोद्देशकः समाप्तः ॥ २-१-२-१ ॥

---

उक्तः प्रथमोद्देशकः, अधुना द्वितीयः समारभ्यते, अस्य चायमभिसम्बन्धः—इहानन्तरोद्देशके सागारिकप्रतिबद्धवसतिदोषाः प्रतिपादिताः, इहापि तथाविधवसतिदोषविशेषप्रतिपादनायाह—

(मूलं) गाहावई नामेगे सुइसमायारा भवंति, से भिक्खू य असिणाणए मोयसमायारे से तग्गंधे पडिकूले

णिकायं उ० वा २ मा वा उ० पज्जालिंतु वा मा वा प०, विज्झविंतु वा मा वा वि०, अह भिक्खूणं पु० जं तहप्पगारे उ० नो ठाणं वा ३ चेइज्जा ॥ ( सू० २९२ )

एतदपि गृहपत्यादिभिः स्वार्थमग्निसमारम्भे क्रियमाणे भिक्षोरुच्चावचमनःसम्भवप्रतिपादकं सूत्रं सुगमम् ॥ अपिच—

( मूलं ) आयाणमेयं भिक्खुस्स गाहावईहिं सद्धिं संवसमाणस्स इह खलु गाहावइस्स कुंडले वा गुणे वा मणी वा मुत्तिए वा हिरण्णेसु वा सुवण्णेसु वा कडगाणि वा तुडियाणि वा तिसराणि वा पालंबाणि वा हारे वा अद्धहारे वा एगावली वा कणगावली वा मुत्तावली वा रयणावली वा तरुणीयं वा कुमारिं अलंकियविभूसियं पेहाए, अह भिक्खू उच्चाव० एरिसिया वा सा नो वा एरिसिया इय वा णं बूया इय वा णं मणं साइज्जा, अह भिक्खूणं पु० ४ जं तहप्पगारे उवस्सए नो० ठा० ॥ सू० २९३ )

गृहस्थैः सह संवसतो भिक्षोरेते च वक्ष्यमाणा दोषाः, तद्यथा—अलङ्कारजातं दृष्ट्वा कन्यकां वाऽलङ्कृतां समुपलभ्य ईदृशी तादृशी वा शोभनाऽशोभना वा मद्भार्यासदृशी वा तथाऽलङ्कारो वा शोभनोऽशोभन इत्यादिका वाचं ब्रूयात्, तथोच्चावचं शोभनाशोभनादौ मनः कुर्यादिति समुदायार्थः, तत्र गुणो—रसना हिरण्यं—दीनारादिद्रव्यजातं त्रुटितानि—मृणालिकाः प्रालम्बः—आप्रदीपन आभरणविशेषः, शेषं सुगमम् ॥ किञ्च—

(मूलं) आयाणमेयं भिक्खुस्स गाहावईहिं सद्धिं संवमाणस्स, इह खलु गाहावइणीओ वा गाहावइधूयाओ वा गा० सुण्हाओ वा गा० धाईओ वा गा० दासीओ वा गा० कम्मकरीओ वा तासिं च णं एवं वुत्तपुव्वं

भवइ—जे इमे भवंति समणा भगवंतो जाव उवरया मेहुणाओ धम्माओ, नो खलु एएसिं कप्पइ मेहुणधम्मं परियारणाए आउट्टित्तए, जा य खलु एएहिं सद्धिं मेहुणधम्मं परियारणाए आउट्टाविज्जा पुत्तं खलु सा ओलभिज्जा ओयस्सिं तेयस्सिं वच्चस्सिं जसंसिं संपराइयं आलोयणदरसणिज्जं, एयप्पगारं निग्घोसं सुच्चा निसम्म तासिं च णं अन्नयरी सड्ढी तं तवस्सिं भिक्खुं मेहुणधम्मपडियारणाए आउट्टाविज्जा, अह भिक्खूणं पु० जं तहप्पगारे सा० उ० नो ठा० ३ चेइज्जा एयं खलु तस्स० ॥ (सू० २१४) पढमा सिज्जा सम्मत्ता २-१-२-१ ॥

पूर्वोक्ते गृहे वसतो भिक्षोरमी दोषाः, तद्यथा—गृहपतिभार्यादय एवमालोचयेयुः—यथैते श्रमणा मैथुनादुपरताः, तदेवमेतेभ्यो यदि पुत्रो भवेत्ततोऽसौ 'ओजस्वी' बलवान् 'तेजस्वी' दीप्तिमान् 'वर्चस्वी' रूपवान् 'यशस्वी' कीर्त्तिमान्, इत्येवं संप्रधार्य तासां च मध्ये एवंभूतं शब्दं काचित्पुत्रश्रद्धालुः श्रुत्वा तं साधुं मैथुनधर्म(स्य) 'पडियारणाए'त्ति आसेवनार्थम् 'आउट्टावेज'त्ति अभिमुखं कुर्यात्, अत एतद्दोषभयात्साधूनां पूर्वोपदिष्टमेतत्प्रतिज्ञादिकं यत्तथाभूते प्रतिश्रये स्थानादि न कार्यमिति, एतत्तस्य भिक्षोर्भिक्षुण्या वा 'सामग्र्यं' सम्पूर्णो भिक्षुभाव इति ॥ द्वितीयाध्ययनस्य प्रथमोद्देशकः समाप्तः ॥ २-१-२-१ ॥

---

उक्तः प्रथमोद्देशकः, अधुना द्वितीयः समारभ्यते, अस्य चायमभिसम्बन्धः—इहानन्तरोद्देशके सागारिकप्रतिबद्धवसतिदोषाः प्रतिपादिताः, इहापि तथाविधवसतिदोषविशेषप्रतिपादनायाह—

(मूलं) गाहावई नामेगे सुइसमायारा भवंति, से भिक्खू य असिणाणए मोयसमायारे-से तग्गंधे पडिकूले

पडिलोमे यावि भवइ, ज पुव्वं कम्मं तं पच्छा कम्मं जं पच्छा कम्मं तं पुरे कम्मं, तं भिक्खुपडियाए वट्टमाणा करिज्जा वा नो करिज्जा वा, अह भिक्खूणं पु० जं तहप्पगारे उ० नो ठाणं० ॥ (सू० २९५)

'एके' केचन गृहपतयः शुचिः समाचारो येषां ते तथा, ते च भागवतादिभक्ता भवन्ति भोगिनो वा—चन्दनागुरुकुङ्कुमकर्पूरादिसेविनः, भिक्षुश्चास्नानतया तथा कार्यवशात् 'मोया'त्ति कायिका तत्समाचरणात्स भिक्षुस्तद्गन्धो भवति, तथा च दुर्गन्धः, एवंभूतश्च तेषां गृहस्थानां 'प्रतिकूलः' नानुकूलोऽनभिमतः, तथा 'प्रतिलोमः' तद्गन्धाद्विपरीतगन्धो भवति, एकार्थिकौ वैतावतिशयानभिमतत्वख्यापनार्थावुपात्ताविति, तथा ते गृहस्थाः साधुप्रतिज्ञया यत्तत्र भोजनस्वाध्यायभूमौ स्नानादिकं पूर्वं कृतवन्तस्तत्तेषामुपरोधात्पश्चात्कुर्वन्ति यद्वा पश्चात्कृतवन्तस्तत्पूर्वं कुर्वन्ति, एवमवसर्पणोत्सर्पणक्रियया साधूनामधिकरणसम्भवः, यदिवा ते गृहस्थाः साधूपरोधात्प्राप्तकालमपि भोजनादिकं न कुर्युः, ततश्चान्तरायमनःपीडादिदोषसम्भवः, अथवा त एव साधवो गृहस्थोपरोधाद्यत्पूर्वं कर्म—प्रत्युपेक्षणादिकं तत्पश्चात्कुर्युर्विपरीतं वा कालातिक्रमेण कुर्युर्न कुर्युर्वा, अथ भिक्षूणां पूर्वोपदिष्टमेतत्प्रतिज्ञानादिकं यत्तथाविधे प्रतिश्रये स्थानादिकं न कार्यमिति ॥ किञ्च—

(मूलं) आयाणमेयं भिक्खुस्स गाहावईहिं सद्धिं सं०, इह खलु गाहावइस्स अप्पणो सयट्ठाए विरूवरूवे भोयणजाए उवक्खडिए सिया, अह पच्छा भिक्खुपडियाए असणं वा ४ उवक्खडिज्ज वा उवकरिज्ज वा, तं च भिक्खू अभिकंखिज्जा भुत्तए वा पायए वा वियट्टित्तए वा, अह भि० जं नो तह० ॥ (सू. २९६) आयाणमेयं भिक्खुस्स गाहावइणा सद्धिं संव० इह खलु गाहावइस्स अप्पणो सयट्ठाए विरूवरूवाइं दारुयाइं भिन्नपुव्वाइं

२ शय्यैषणाध्य० २ उद्देशः भोजनं दारुभेदः

२०



२७

भवंति, अह पच्छा भिक्खुपडियाए विरूवरूवाइं दारुयाइं भिंदिज्ज वा किणिज्ज वा पामिच्चेज्ज वा दारुणा वा दारुपरिणामं कट्टु अगणिकायं उ० प०, तत्थ भिक्खू अभिकंखिज्जा आयावित्तए वा पयावित्तए वा वियट्टित्तए वा, अह भिक्खू० जं नो तहप्पगारे० ॥ (सू० २९७)

कर्मोपादानमेतद्भिक्षोर्यद्गृहस्थावबद्धे प्रतिश्रये स्थानमिति, तद्यथा-'गाहावइस्स अप्पणो'त्ति, तृतीयार्थे षष्ठी, गृहपतिना आत्मना स्वार्थं 'विरूपरूपः' नानाप्रकार आहारः संस्कृतः स्यात्, 'अथ' अनन्तरं पश्चात्साधूनुद्दिश्याशनादिपाकं वा कुर्यात्, तदुपकरणादिं वा ढौकयेत्, तं च तथाभूतमाहारं साधूर्भोक्तुं पातुं वाऽभिकाङ्क्षेत्, 'विअट्टित्तए व'त्ति तत्रैवाहारगृद्ध्या विवर्तितुम्-आसितुमाकाङ्क्षेत्, शेषं पूर्ववदिति ॥ एवं काष्ठाग्निप्रज्वालनसूत्रमपि नेयमिति ॥ किञ्च-

(मूलं) से भिक्खू वा० उच्चारपासवणेण उब्बाहिज्जमाणे राओ वा वियाले वा गाहावइकुलस्स दुवारबाहं अवंगुणिज्जा, तेणे य तस्संधिचारी अणुपविसिज्जा, तस्स भिक्खुस्स नो कप्पइ एवं वइत्तए—अयं तेणो पविसइ वा नो वा पविसइ उवल्लियइ वा नो वा० आवयइ वा नो वा० वयइ वा नो वा० तेण हडं अन्नेण हडं तस्स हडं अन्नस्स हडं अयं तेणे अयं उवचरए अयं हंता अयं इत्थमकासी तं तवस्सिं भिक्खुं अतेणं तेणंति संकइ, अह भिक्खूणं पु० जाव नो ठा० ॥ (सू० २९८)

स भिक्षुस्तत्र गृहस्थसंसक्ते प्रतिश्रये वसन्नुच्चारादिना बाध्यमानो विकालादौ प्रतिश्रयद्वारभागं समुद्घाटयेत्, तत्र च 'स्तेनः' चौरः 'तत्सन्धिचारी' छिद्रान्वेषी अनुप्रविशेत्, तं च दृष्ट्वा तस्य भिक्षोर्नैवं वक्तुं कल्पते-यथाऽयं चौरः प्रविशति न वेति, तथो-



५

१०

पलीयते न वेति, तथाऽप्यप्रतिपतति न वेति, तथा वदति वा न वदति वा, तेनामुकेनापहृतम् अन्येन वा, तस्यापहृतमन्यस्य वा, अयं स स्तेनस्तदुपचारको वा, अयं गृहीतायुधोऽयं हन्ता अयमत्राकार्षीदित्यादि न वदनीयं, एवं तस्य चौरस्य व्यापत्तिः स्यात्, स वा प्रद्विष्टस्तं साधुं व्यापादयेदित्यादिदोषाः, अश्रमणने च तमेव तपस्विनं भिक्षुमस्तेनं स्तेनमित्याशङ्केतेति, शेषं पूर्ववदिति ॥ पुनरपि वसतिदोषाभिधित्सयाऽऽह—

(मूलं) से भिक्खू वा से जं० तणपुंजेसु वा पलालपुंजेसु वा सअंडे जाव ससंताणए तहप्पगारे उ० नो ठाणं वा० ॥२॥ से भिक्खू वा० से जं तणपुं० पलाल० अप्पंडे जाव चेइज्जा ॥ (सू० २९९)

सुगमम्, एतद्विपरीतसूत्रमपि सुगमं, नवरमल्पशब्दोऽभाववाची ॥ साम्प्रतं वसतिपरित्यागमुद्देशकार्थाधिकारनिर्दिष्टमधिकृत्याह—

(मूलं) से आगंतारेसु आरामागारेसु वा गाहावइकुलेसु वा परियावसहेसु वा अभिक्खणं साहम्मिएहिं ओवयमाणेहिं नो उवइज्जा ॥ (सू० ३००)

यत्र ग्रामादेर्बहिरागत्यागत्य पथिकादयस्तिष्ठन्ति तान्यागन्तागाराणि, तथाऽऽराममध्यगृहाण्यारामागाराणि, पर्यावसथा—मठा', इत्यादिषु प्रतिश्रयेषु 'अभीक्ष्णम्' अनवरतं 'साधर्मिकैः' अपरसाधुभिः 'अवपतद्भिः' आगच्छद्भिर्मासादिविहारिभिश्छर्दितेषु 'नावपतेत्' नागच्छेत्—तेषु मासकल्पादि न कुर्यादिति ॥ साम्प्रतं कालातिक्रान्तवसतिदोषमाह—

(मूलं) से आगंतारेसु वा ४ जे भयंतारो उडुबद्धियं वा वासावासियं वा कप्पं उवाइणित्ता तत्थेव भुज्जो संवसंति, अयमाउसो ! कालाइक्कंतकिरियावि भवति १ ॥ (सू० ३०१)

तेष्वागन्तागारादिषु ये 'भगवन्तः 'ऋतुबद्धम्' इति शीतोष्णकालयोर्मासकल्पम् 'उपनीय' अतिवाह्य वर्षासु वा चतुरो मासानतिवाह्य तत्रैव पुनः कारणमन्तरेणासते, अयमायुष्मन् ! कालातिक्रमदोषः संभवति, तथा च स्त्र्यादिप्रतिबन्ध- स्नेहादुद्गमादिदोषसम्भवो वेत्यतस्तथा स्थानं न कल्पत इति १ ॥ इदानीमुपस्थानदोषमभिधित्सुराह—

(मूलं) से आगंतारेसु वा ४ जे भयंतारो उडु० वासा० कप्पं उवाइणावित्ता तं दुगुणा दु(ति)गुणेण वा अपरिहरित्ता तत्थेव भुज्जो० अयमाउसो ! उवट्ठाणकि० २ ॥ (सू. ३०२)

ये 'भगवन्तः'- साधव आगन्तागारादिषु ऋतुबद्धं वर्षां वाऽतिवाह्यान्यत्र मासमेकं स्थित्वा 'द्विगुणत्रिगुणादिना' मास(मादि)कल्पेन अपरिहृत्य-द्वित्रैर्मासैर्व्यवधानमकृत्वा पुनस्तत्रैव वसन्ति, अयमेवंभूतः प्रतिश्रय उपस्थानक्रियादोषदुष्टो भवत्यतस्तत्रावस्थातुं न कल्पत इति २ ॥ इदानीमभिक्रान्तवसतिप्रतिपादनायाह—

(मूलं) इह खलु पाईणं वा ४ संतेगइया सड्ढा भवंति, तंजहा-गाहावई वा जाव कम्मकरीओ वा, तेसिं च णं आयारगोयरे नो सुनिसंते भवइ, तं सद्दहमाणेहिं पत्तियमाणेहिं रोयमाणेहिं बहवे समणमाहणअतिहिकिवणवणीमए समुद्दिस्स तत्थ २ अगारीहिं अगाराइं चेइयाइं भवंति, तंजहा-आएसणाणि वा आयतणाणि वा देवकुलाणि वा सहाओ वा पवाणि वा पणियगिहाणि वा पणियसालाओ वा जाणगिहाणि वा जाणसालाओ वा सुहाकम्मंताणि वा दब्भकम्मंताणि वा बद्धक० वक्कयक० इंगालकम्मं० कट्ठक० सुसाणक० सुण्णागारगिरिकंदरसंतिसेलोवट्ठाणकम्मंताणि वा भवणगिहाणि वा, जे भयंतारो तहप्पगाराइं आएसणाणि



१०

वा जाव गिहाणि वा तेहिं ओवयमाणेहिं ओवयंति अयमाउसो! अभिक्कंतकिरिया यावि भवइ ३॥(सू.३०२)

इह प्रज्ञापकाद्यपेक्षया प्राच्यादिषु दिक्षु श्रावकाः प्रकृतिभद्रका वा गृहपत्यादयो भवेयुः, तेषां च साध्वाचारगोचरः 'णो सुणिसंतो भवइ'त्ति न सुष्ठु निशान्तः-श्रुतोऽवगतो भवति, साधूनामेवंभूतः प्रतिश्रयः कल्पते, नैवंभूतः, इत्येवं न ज्ञातं भवतीत्यर्थः, प्रतिश्रयदानफलं च स्वर्गादिकं तैः कुतश्चिदवगतं, तच्छ्रद्दधानैः प्रतीयमानै रोचयद्भिरित्येकार्था एते किञ्चिद्भेदाद्वा भेदः, तदेवंभूतैः 'अगारिभिः' गृहस्थैर्बहून् श्रमणादीन् उद्दिश्य तत्र-आरामादौ यानशालादीनि स्वार्थं कुर्वद्भिः श्रमणाद्यवकाशार्थं 'चेइयाइं' महान्ति कृतानि भवन्ति, तानि चागाराणि स्वनामग्राहं दर्शयति, तद्यथा—'आदेशनानि' लोहकारादिशालाः 'आयतनानि' देवकुलपार्श्वापवरकाः 'देवकुलानि' प्रतीतानि 'सभाः' चातुर्वेद्यादिशालाः 'प्रपाः' उदकदानस्थानानि 'पण्यगृहाणि वा' पण्यापणाः 'पण्यशाला.' घट्टशालाः 'यानगृहाणि' रथादीनि यत्र यानानि तिष्ठन्ति 'यानशालाः' यत्र यानानि निष्पाद्यन्ते 'सुधाकर्मान्तानि' यत्र सुधापरिकर्म क्रियते, एवं दर्भवर्ध्रवल्कजाङ्गारकाष्ठकर्म[काष्ठ]गृहाणि द्रष्टव्यानि, 'श्मशानगृहं' प्रतीतं (शून्यागारं-विविक्तगृहं) शान्तिकर्मगृहं-यत्र शान्तिकर्म क्रियते गिरिगृहं-पर्वतोपरि गृहं कन्दरं-गिरिगुहा संस्कृता शैलोपस्थापनं-पाषाणमण्डपः, तदेवंभूतानि गृहाणि तैश्चरकब्राह्मणादिभिरभिक्रान्तानि पूर्वं पश्चाद् 'भगवन्तः' साधवः 'अवपतन्ति' अवतरन्ति, इयमायुष्मन्! विनेयामन्त्रणम्, अभिक्रान्तक्रिया वसतिर्भवति, अल्पदोषा चेयम् ३॥

(मूलं) इह खलु पाईणं वा जाव रोयमाणेहिं बहवे समणमाहणअतिहिकिवणवणिमए समुद्दिस्स तत्थ तत्थ अगारीहिं अगाराइं चेइयाइं भवंति, तं०-आएसणाणि वा जाव भवणगिहाणि वा, जे भयंतारो तहप्प०

आएसणाणि जाव गिहाणि वा तेहिं अणोवयमाणेहिं ओवयंति अयमाउसो! अणभिक्कंतकिरिया यावि भवइ ॥ (सू. ३०४)

सुगमं, नवरं चरकादिभिरनवसेवितपूर्वा अनभिक्रान्तक्रिया वसतिर्भवति, इयं चानभिक्रान्तत्वादेवाकल्पनीयेति ४ ॥ साम्प्रतं वर्ज्याभिधानां वसतिमाह—

(मूलं) इह खलु पाईणं वा ४ जाव कम्मकरीओ वा, तेसिं च णं एवं वुत्तपुव्वं भवइ-जे इमे भवंति समणा भगवंतो जाव उवरया मेहुणाओ धम्माओ, नो खलु एएसिं भयंताराणं कप्पइ आहाकम्मिए उवस्सए वत्थए, से जाणिमाणि अम्हं अप्पणो सयट्ठाए चेइयाइं भवंति, तं०–आएसणाणि वा जाव गिहाणि वा, सव्वाणि ताणि समणाणं निसिरामो, अवियाइं वयं पच्छा अप्पणो सयट्ठाए चेइस्सामो, तं०–आएसणाणि वा जाव०, एयप्पगारं निग्घोसं सुच्चा निसम्म जे भयंतारो तहप्प० आएसणाणि वा जाव गिहाणि वा उवागच्छंति इयराइयरेहिं पाहुडेहिं वट्टंति, अयमाउसो! वज्जकिरियावि भवइ ५ ॥ (सू. ३०५)

इह खल्वित्यादि प्रायः सुगमं, समुदायार्थस्त्वयम्–गृहस्थैः साध्वाचाराभिज्ञैर्यान्यात्मार्थं गृहाणि निर्वर्तितानि तानि साधुभ्यो दत्त्वाऽऽत्मार्थं त्वन्यानि कुर्वन्ति, ते च साधवस्तेष्वितरेतरेषूपचावचेषु 'पाहुडेहिं'ति प्रदत्तेषु गृहेषु यदि वर्तन्ते ततो वर्ज्यक्रियाभिधाना वसतिर्भवति, सा च न कल्पत इति ५ ॥ इदानीं महावर्ज्याभिधानां वसतिमधिकृत्याह—

(मूलं) इह खलु पाईणं वा ४ संतेगइआ सड्डा भवंति, तेसिं च णं आयारगोयरे जाव तं रोयमाणेहिं बहवे



१०

समणमाहण जाव वणीमगे पगणिय २ समुद्दिस्स तत्थ २ अगारीहिं अगाराइं चेइयाइं भवंति, तं०-आएसणाणि वा जाव गिहाणि वा, जे भयंतारो तहप्पगाराइं आएसणाणि वा जाव गिहाणि वा उवागच्छंति इयराइयरेहिं पाहुडेहिं०, अयमाउसो! महावज्जकिरियावि भवइ ६॥ (सू. ३०६)

इहेत्यादि प्रायः सुगममेव, नवरं श्रमणाद्यर्थं निष्पादितायां यावन्तिकवसतौ स्थानादि कुर्वतो महावर्ज्याभिधाना वसतिर्भवति, अतः अकल्प्या चेयं विशुद्धकोटिश्चेति ६ ॥ इदानीं सावद्याभिधानामधिकृत्याह—

(मूलं) इह खलु पाईणं वा ४ संतेगइया जाव तं सद्दहमाणेहिं तं पत्तियमाणेहिं तं रोयमाणेहिं बहवे समणमाहणअतिहिकिवणवणीमगे पगणिय २ समुद्दिस्स तत्थ २ अगाराइं चेइयाइं भवंति तं०-आएसणाणि वा जाव भवणगिहाणि वा, जे भयंतारो तहप्पगाराणि आएसणाणि वा जाव भवणगिहाणि वा उवागच्छंति इयराइयरेहिं पाहुडेहिं, अयमाउसो! सावज्जकिरिया यावि भवइ ७॥ (सू. ३०७)

इहेत्यादि प्रायः सुगमं, नवरं पञ्चविधश्रमणाद्यर्थमेवैषा कल्पिता, ते चामी श्रमणाः—"निग्गंथ १ सक्क २ तावस ३ गेरुअ ४ आजीव ५ पंचहा समणा।" इति, अस्यां च स्थानादि कुर्वतः सावद्यक्रियाऽभिधाना वसतिर्भवति, अकल्पनीया चेयं विशुद्धकोटिश्चेति ७ ॥ महासावद्याभिधानामधिकृत्याह—

(मूलं) इह खलु पाईणं वा ४ जाव तं रोयमाणेहिं एगं समणजायं समुद्दिस्स तत्थ २ अगारीहिं चेइयाइं भवन्ति,

१ निर्ग्रन्थाः शाक्याः तापसाः गैरिकाः आजीविकाः पञ्चधा श्रमणाः.

तं०-आएसणाणि जाव गिहाणि वा महया पुढविकायसमारंभेणं जाव महया तसकायसमारंभेणं महया विरूवरूवेहिं पावकम्मकिच्चेहिं, तंजहा-छायणओ लेवणओ संथारदुवारपिहणओ सीओदए वा परट्ठवियपुव्वे भवइ अगणिकाए वा उज्जालियपुव्वे भवइ, जे भयंतारो तह० आएसणाणि वा० उवागच्छंति इयराइयरेहिं पाहुडेहिं दुपक्खं ते कम्मं सेवंति, अयमाउसो! महासावज्जकिरिया यावि भवइ ॥ (सू० ३०८)

इह कश्चिद्गृहपत्यादिरेकं साधर्मिकमुद्दिश्य पृथिवीकायादिसंरम्भसमारम्भैरन्यतरेण वा महता तथा 'विरूपरूपैः' नानारूपैः पापकर्मकृत्यैः-अनुष्ठानैः, तद्यथा-छादनतो लेपनतस्तथा संस्तारकार्थं द्वारढकनार्थं च, इत्यादीनि प्रयोजनान्युद्दिश्य शीतोदकं त्यक्तपूर्वं भवेत् अग्निर्वा प्रज्वालितपूर्वो भवेत्, तदस्यां वसतौ स्थानादि कुर्वन्तस्ते द्विपक्षं कर्मासेवन्ते, तद्यथा-प्रव्रज्याम् आधाकर्मिकवसत्यासेवनाद्गृहस्थत्वं च रागं द्वेषं च ईर्यापथं साम्परायिकं च, इत्यादिदोषान्महासावद्यक्रियाऽभिधाना वसतिर्भवतीति ८॥ इदानीमल्पक्रियाऽभिधानामधिकृत्याह—

(मूलं) इह खलु पाईणं वा० रोयमाणेहिं अप्पणो सयट्ठाए तत्थ २ अगारीहिं जाव उज्जालियपुव्वे भवइ, जे भयंतारो तहप्प० आएसणाणि वा० उवागच्छंति इयरायरेहिं पाहुडेहिं एगपक्खं ते कम्मं सेवंति, अयमाउसो! अप्पसावज्जकिरिया यावि भवइ ९ ॥ एवं खलु तस्स० ॥ (सू० ३०९) ॥ २-१-२-२ ॥ शय्यैषणायां द्वितीयोद्देशकः॥

सुगमं, नवरमल्पशब्दोऽभाववाचीति ९। एतत्तस्य भिक्षोः 'सामग्र्यं' संपूर्णो भिक्षुभाव इति ॥ "कालाइकंतु १ चट्ठाण २ अभिकंता

१ कालातिक्रान्ता उपस्थाना अभिक्रान्ता चैवानभिक्रान्ता च। वर्ज्या च महावर्ज्या सावद्या महासावद्या अल्पक्रिया च ॥१॥



५

१०

३ चेव अणभिकंता ४ य। वज्जा य ५ महावज्जा ६ सावज्ज ७ मह ८ ऽप्पकिरिआ ९ य ॥१॥" एताश्च नव वसतयो यथाक्रमं नवभिरनन्तरसूत्रैः प्रतिपादिताः, आसु चाभिक्रान्ताल्पक्रिये योग्ये, शेषास्त्वयोग्या इति ॥ द्वितीयाध्ययनस्य द्वितीयः ॥ २-१-२-२ ॥

उक्तो द्वितीयोद्देशकः, अधुना तृतीयः समारभ्यते, अस्य चायमभिसंबन्धः, इहानन्तरसूत्रेऽल्पक्रिया शुद्धा वसतिरभिहिता, इहाप्यादिसूत्रेण तद्विपरीतां दर्शयितुमाह—

(मूलं) से य नो सुलभे फासुए उंछे अहेसणिज्जे नो य खलु सुद्धे इमेहिं पाहुडेहिं, तंजहा—छायणओ लेवणओ संथारदुवारपिहणओ पिंडवाएसणाओ, से य भिक्खू चरियारए ठाणरए निसीहियारए सिज्जासंथारपिंडवाएसणारए, संति भिक्खुणो एवमक्खाइणो उज्जुया नियागपडिवन्ना अमायं कुव्वमाणा वियाहिया, संतेगइया पाहुडिया उक्खित्तपुव्वा भवइ, एवं निक्खित्तपुव्वा भवइ, परिभाइयपुव्वा भवइ, परिभुत्तपुव्वा भवइ, परिट्ठवियपुव्वा भवइ, एवं वियागरेमाणे समियाए वियागरेइ ?, हंता भवइ ॥ (सू० ३१०)

अत्र च कदाचित्कश्चित्साधुर्वसत्यन्वेषणार्थं भिक्षार्थं वा गृहपतिकुलं प्रविष्टः सन् केनचिच्छ्रद्धालुनैवमभिधीयते, तद्यथा—प्रचुरान्नपानोऽयं ग्रामोऽतोऽत्र भवतां वसतिमभिगृह्य स्थातुं युक्तमित्येवमभिहितः सन्नेवमाचक्षीत—न केवलं पिण्डपातः प्रासुको दुर्लभस्तदवाप्तावपि यत्रासौ भुज्यते स च प्रासुकः—आधाकर्मादिरहितः प्रतिश्रयो दुर्लभः, 'उंछ' इति छादनाद्युत्तरदोषरहितः, एतदेव दर्शयति—'अहेसणिज्जे'त्ति यथाऽसौ मूलोत्तरगुणदोषरहितत्वेनैषणीयो भवति तथाभूतो दुर्लभ इति, ते चामी मूलोत्तरगुणाः—

"पंट्ठी वंसो दो धारणाओ चत्तारि मूलवेलीओ। मूलगुणेहिं विसुद्धा एसा आहागडा वसही ॥१॥ वंसगकडणोकंपण छायण लेवण दुवारभूमीओ। परिकम्मविप्पमुक्का एसा मूलुत्तरगुणेसु ॥२॥ दूमिअधूमिअवासिअउज्जोवियबलिकडा अ वत्ता य। सित्ता सम्मट्ठावि अ विसोहिकोडीगया वसही ॥३॥" अत्र च प्रायशः सर्वत्र सम्भवित्वादुत्तरगुणानां तानेव दर्शयति, न चासौ शुद्धा भवत्यमीभिः कर्मोपादानकर्मभिः, तद्यथा—छादनतः दर्भादिना, लेपनतः गोमयादिना संस्तारकम्—अपवर्त्तकमाश्रित्य, तथा द्वारमाश्रित्य बृहल्लघुत्वापादानतः, तथा द्वारस्थगनं—कपाटमाश्रित्य, तथा पिण्डैपणामाश्रित्य, तथाहि—कस्मिंश्चित्प्रतिश्रये प्रतिवसतः साधून् शय्यातरः तथा पिण्डेनोपनिमन्त्रयेत्, तद्ग्रहे निपिद्धाचरणं अग्रहे तत्प्रद्वेपादिसम्भव इत्यादिभिरुत्तरगुणैः शुद्धः प्रतिश्रयो दुरापः, शुद्धे च प्रतिश्रये साधुना स्थानादि विधेयं, यत उक्तम्—मूलुत्तरगुणसुद्धं थीपसुपंडगविवज्जियं वसहिं। सेवेज्ज सव्वकालं विवज्जए हुंति दोसा उ ॥ १ ॥" मूलोत्तरगुणशुद्धावाप्तावपि स्वाध्यायादिभूमीसमन्वितो विविक्तो दुराप इति दर्शयति—'से' इत्यादि, तत्र च भिक्षवः चर्यारताः—निरोधासहिष्णुत्वाचङ्क्रमणशीलाः, तथा 'स्थानरताः' कायोत्सर्गकारिणः 'निपीधिकारताः' स्वाध्यायध्यायिनः शय्या—सर्वाङ्गिकी संस्तारकः—अर्द्धतृतीयहस्तप्रमाणः, यदिवा शयनं शय्या तदर्थं संस्तारकः शय्यासंस्तारकस्तत्र केचिद्रताः—ग्लानादिभावात्, तथा लब्धे पिण्डपाते ग्रासैपणारताः, तदेवं 'सन्ति' भवन्ति केचन भिक्षवः 'एवमाख्यायिनः' यथाऽवस्थितवसतिगुणदोपाख्यायिनः



---

१ पृष्ठिवंशो द्वे धारणे चतस्रो मूलवल्यः। मूलगुणैर्विशुद्धा एषा यथाकृता वसतिः ॥ १ वंशककटनोत्कम्पनच्छादनलेपन द्वारभूमे। परिकर्मविप्रमुक्ता एषा मूलोत्तरगुणैः ॥२॥ धवलिता धूपिता वासिता उद्योतिता कृतबलिका च व्यक्ता च। सिक्ता सम्मृष्टाऽपि च विशोधिकोटीगता वसति ॥३॥ २ मूलोत्तरगुणशुद्धां स्त्रीपशुपण्डकविवर्जितां वसतिम्। सेवेत सदाकाल विपर्यये तु भवन्ति दोषा ॥१॥

ऋजवो नियागः-संयमो मोक्षो वा तं प्रतिपन्नाः, तथा अमायाविनः, एवंविशिष्टाः साधवः 'व्याख्याताः' प्रतिपादिताः, तदेवं वसतिगुणदोषानाख्याय गतेषु तेषु तैश्च श्रावकैरेवंभूतैपणीयवसत्यभावे साध्वर्थमादेरारभ्य वसतिः कृता पूर्वकृता वा छादनादिना संस्कृता भवेत्, पुनश्च तेष्वन्येषु वा साधुषु समागतेषु 'सन्ति' विद्यन्ते तथाभूताः केचन गृहस्थाः य एवंभूतां छलनां विदध्युः, तद्यथा-प्राभृतिकेव प्राभृतिका-दानार्थं कल्पिता वसतिरिह गृह्यते, सा च तैर्गृहस्थैः 'उत्क्षिप्तपूर्वा' तेषामादौ दर्शिता यथाऽस्सां वसत यूयमिति, तथा 'निक्षिप्तपूर्वा' पूर्वमेव अस्माभिरात्मकृते निष्पादिता, तथा 'परिभाइयपुव्व'त्ति पूर्वमेवास्माभिरियं भ्रातृव्यादेः परिकल्पितेत्येवंभूता भवेत्, तथाऽन्यैरपीयं परिभुक्तपूर्वा, तथा पूर्वमेवास्माभिरियं परित्यक्तेति, यदि च भगवतां नोपयुज्यते ततो वयमेनामपनेष्यामः, इत्येवमादिका छलना पुनः सम्यग् विज्ञाय परिहर्त्तव्येति, ननु किमेवं छलनासम्भवेऽपि यथाऽवस्थितवसतिगुणदोषादिकं गृहस्थेन पृष्टः साधुर्व्याकुर्वन्-कथयन् सम्यगेव व्याकरोति ?, यदिवैवं व्याकुर्वन् सम्यग् व्याकर्त्ता भवति ?, आचार्य आह-हन्त इति शिष्यामन्त्रणे सम्यगेव व्याकर्त्ता भवतीति ॥ तथाविधकार्यवशाच्चरककार्पटिकादिभिः सह संवासे विधिमाह—

(मूलं) से भिक्खू वा० जं पुण उवस्सयं जाणिज्जा खुड्डियाओ खुड्डदुवारियाओ निययाओ संनिरुद्धाओ भवन्ति, तहप्पगा० उवस्सए राओ वा वियाले वा निक्खममाणे वा प० पुरा हत्थेण वा पच्छा पाएण वा तओ संजयामेव निक्खमिज्ज वा २, केवली बूया-आयाणमेयं, जे तत्थ समणाण वा माहणाण वा छत्तए वा मत्तए वा दंडए वा लट्ठिया वा भिसिया वा नालिया वा चेलं वा चिलिमिली वा चम्मकोसए वा दुब्बद्धे दुन्निक्खित्ते अणिकंपे चलाचले, भिक्खू य राओ वा वियाले वा निक्खममाणे वा २ पयलिज्ज वा २, से तत्थ पयलमाणे वा०



२०

२५

हत्थं वा० लूसिज्ज वा पाणाणि वा ४ जाव ववरोविज्ज वा, अह भिक्खूणं पुव्वोवइट्ठं जं तह० उवस्सए पुरा हत्थेण निक्ख० वा पच्छा पाएणं तओ संजयामेव नि० पविसिज्ज वा ॥ (सू. ३११)

स भिक्षुर्यं पुनरेवंभूतं प्रतिश्रयं जानीयात्, तद्यथा—'क्षुद्रिकाः' लघ्व्यः तथा क्षुद्रद्वाराः 'नीचाः' उच्चैस्त्वरहिताः 'संनिरुद्धाः' गृहस्थाकुला वसतयो भवन्ति, तार्थंवं भवन्ति—तस्यां साधुवसतौ शय्यातरेणान्येषामपि कतिपयदिवसस्थायिनां चरकादीनामवकाशो दत्तो भवेत्, तेषां वा पूर्वस्थितानां पश्चात्साधूनामुपाश्रयो दत्तो भवेत्, तत्र कार्यवशाद्वसता रात्र्यादौ निर्गच्छता प्रविशता वा यथा चरकाद्युपकरणोपघातो न भवति तदवयवोपघातो वा तथा पुरो हस्तकरणादिकया गमनागमनादिक्रियया यतितव्यं, शेषं कण्ठ्यं, नवरं 'चिलिमिलि' यमनिका 'चर्मकोशः' पाष्णित्रं खल्लकादिः ॥ इदानीं वसतियाञ्चाविधिमधिकृत्याह—

(मूलं) से आगंतारेसु वा अणुवीय उवस्सयं जाइज्जा, जे तत्थ ईसरे जे तत्थ समहिट्ठाए ते उवस्सयं अणुन्नविज्जा—कामं खलु आउसो! अहालंदं अहापरिन्नायं वसिस्सामो जाव आउसंतो! जाव आउसंतस्स उवस्सए जाव साहम्मियाइं ततो उवस्सयं गिण्हिस्सामो, तेण परं विहरिस्सामो ॥ (सू० ३१२)

स भिक्षुरागन्तागारादीनि गृहाणि पूर्वोक्तानि तेषु प्रविश्यानुविचिन्त्य च—किंभूतोऽयं प्रतिश्रयः? कश्चात्रेश्वरः? इत्येवं पर्यालोच्य च प्रतिश्रयं याचेत, यस्तत्र 'ईश्वरः' गृहस्वामी यो वा तत्र 'समधिष्ठाता' प्रभुनियुक्तस्तानुपाश्रयमनुज्ञापयेत्, तद्यथा—'कामं' तवेच्छया आयुष्मन्! त्वया यथापरिज्ञातं प्रतिश्रयं कालतो भूभागतश्च तथैवाधिवत्स्यामः, एवमुक्तः स कदाचिद् गृहस्थ एवं ब्रूयाद्—यथा कियत्कालं भवतामत्रावस्थानमिति?, एवं गृहस्थेन पृष्टः साधुः—वसतिप्रत्युप्रेक्षक एतद् ब्रूयाद्—यथा कारणमन्तरेण ऋतुबद्धे

तह उ० नो ठा० ॥ (सू. ३१५)

यत्रोपाश्रयस्य गृहस्थगृहमध्येन पन्थास्तत्र बह्वपायसम्भवात्तत्र न स्थातव्यमिति ॥ तथा—

(मूलं) से भिक्खू वा० से जं०, इह खलु गाहावई वा० कम्मकरीओ वा अन्नमन्नं अक्कोसंति वा जाव उद्दवंति वा नो पन्नस्स०, सेवं नचा तहप्पगारे उ० नो ठा० ॥ (सू. ३१६) से भिक्खू वा० से जं पुण० इह खलु गाहावई वा कम्मकरीओ वा अन्नमन्नस्स गायं तिल्लेण वा नव० घ० वसाए वा अब्भंगेति वा मक्खेंति वा नो पण्णस्स जाव तहप्प० उव० नो ठा० (सू. ३१७) से भिक्खू वा० से जं पुण०—इह खलु गाहावई वा जाव कम्मकरीओ अन्नमन्नस्स गायं सिणाणेण वा क० लु० चु० प० आघंसंति वा पघंसंति वा उव्वलंति वा उव्वट्टिंति वा नो पण्णस्स० (सू. ३१८) से भिक्खू० से जं पुण उवस्सयं जाणिज्जा, इह खलु गाहावती वा जाव कम्मकरी वा अण्णमण्णस्स गायं सीओदग० उसिणो० उच्छो० पहोयंति सिंचंति सिणायंति वा नो पन्नस्स जाव नो ठाणं ॥ (सू. ३१९)

सुगमं, नवरं यत्र प्रातिवेशिकाः प्रत्यहं कलहायमानास्तिष्ठन्ति तत्र स्वाध्यायाद्युपरोधान्न स्थेयमिति ॥ एवं तैलाद्यभ्यङ्गकल्काद्युद्वर्त्तनोदकप्रक्षालनसूत्रमपि नेयमिति ॥ किञ्च—

(मूलं) से भिक्खू वा० से जं० इह खलु गाहावई वा जाव कम्मकरीओ वा निगिणा ठिया निगिणा उल्लीणा मेहुणधम्मं विन्नविंति रहस्सियं वा मंतं मंतंति नो पन्नस्स जाव नो ठाणं वा ३ चेइज्जा ॥ (सू. ३२०)

यत्र प्रातिवेशिकस्त्रियः 'णिगिणाउ'त्ति मुक्तपरिधाना आसते, तथा 'उपलीनाः' प्रच्छन्ना मैथुनधर्मविषयं किञ्चिद्रहस्यं रात्रिसम्भोगं परस्परं कथयन्ति, अपरं वा रहस्यमकार्यसंबद्धं मन्त्रं मन्त्रयंते, तथाभूते प्रतिश्रये न स्थानादि विधेयं, यतस्तत्र स्वाध्यायक्षितिचित्तविप्लुत्यादयो दोषाः समुपजायन्त इति ॥ अपि च—

(मू०) से भिक्खू वा से जं पुण उ० आइन्नसंलिक्खं नो पन्नस्स० ॥ (सू. ३२१)

नवरं तत्रायं दोषः—चित्रभित्तिदर्शनात्स्वाध्यायक्षितिः, तथाविधचित्रस्त्र्यादिदर्शनात्पूर्वक्रीडिताक्रीडितस्मरणकौतुका इति ॥ साम्प्रतं फलहकादिसंस्तारकमधिकृत्याह—

तद्बन्धनादिपलिमन्थदोषः ४, पञ्चमसूत्रे त्वल्पाण्डं यावदल्पसन्तानकलघुप्रातिहारिकाववद्धत्वात्सर्वदोषविप्रमुक्तत्वात्संस्तारको ग्राह्य इति सूत्रपञ्चकसमुदायार्थः ५॥ साम्प्रतं संस्तारकमुद्दिश्याभिग्रहविशेषानाह—

(मूलं) इच्चेयाइं आयतणाइं उवाइक्कम्म—अह भिक्खू जाणिज्जा इमाइं चउहिं पडिमाहिं संथारगं एसित्तए, तत्थ खलु इमा पढमा पडिमा—से भिक्खू वा २ उद्दिसिय २ संथारगं जाइज्जा, तंजहा-इक्कडं वा कढिणं वा जंतुयं वा परगं वा मोरगं वा तणगं वा सोरगं वा कुसं वा कुच्चगं वा पिप्पलगं वा पलालगं वा, से पुव्वामेव आलोइज्जा—आउसोत्ति वा भ० दाहिसि मे इत्तो अन्नयरं संथारगं? तह० संथारगं सयं वा णं जाइज्जा परो वा देज्जा फासुयं एसणिज्जं जाव पडि०, पढमा पडिमा॥ (सू. ३२३) अहावरा दुचा पडिमा—से भिक्खू वा० पेहाए संथारगं जाइज्जा, तंजहा-गाहावइं वा कम्मकरिं वा से पुव्वामेव आलोइज्जा-आउ०! भइ०! दाहिसि मे? जाव पडिगाहिज्जा, दुचा पडिमा २॥ अहावरा तचा पडिमा-से भिक्खू वा० जस्सुवस्सए संवसिज्जा जे तत्थ अहासमन्नागए, तंजहा-इक्कडे इ वा जाव पलाले इ वा तस्स लाभे संवसिज्जा तस्सऽलाभे उक्कुडुए वा नेसज्जिए वा विहरिज्जा, तच्चा पडिमा ३॥ (सू. ३२४) अहावरा चउत्था पडिमा—से भिक्खू वा अहासंथडमेव संथारगं जाइज्जा, तंजहा-पुढविसिलं वा कट्ठसिलं वा अहासंथडमेव, तस्स लाभे संते संवसिज्जा, तस्स अलाभे उक्कुडुए वा २ विहरिज्जा, चउत्था पडिमा ४॥ (सू. ३२५) इच्चेयाणं चउण्हं पडिमाणं अन्नयरं पडिमं पडिवज्जमाणे तं चेव जाव अन्नोऽन्नसमाहीए एवं च णं विहरंति॥ (सू. ३२६) से भिक्खू वा०

यत्र प्रातिवेशिकस्त्रियः 'णिगिणाउ'त्ति 'मुक्तपरिधाना आसते, तथा 'उपलीनाः' प्रच्छन्ना मैथुनधर्मविषयं किञ्चिद्रहस्यं रात्रिसम्भोगं परस्परं कथयन्ति, अपरं वा रहस्यमकार्यसंबद्धं मन्त्रं मन्त्रयंते, तथाभूते प्रतिश्रये न स्थानादि विधेयं, यतस्तत्र स्वाध्यायक्षितिचित्तविप्लुत्यादयो दोषाः समुपजायन्त इति ॥ अपि च—

(मूलं) से भिक्खू वा से जं पुण उ० आइन्नसंलिक्खं नो पन्नस्स० ॥ (सू. ३२१)

कण्ठ्यं, नवरं तत्रायं दोषः—चित्रभित्तिदर्शनात्स्वाध्यायक्षितिः, तथाविधचित्रस्थस्त्र्यादिदर्शनात्पूर्वक्रीडिताक्रीडितस्मरणकौतुकादिसम्भव इति ॥ साम्प्रतं फलहकादिसंस्तारकमधिकृत्याह—

२०

(मूलं) से भिक्खू वा० अभिकंखिज्जा संथारगं एसित्तए, से जं० संथारगं जाणेज्जा सअंडं जाव ससंताणयं, तहप्पगारं संथारं लाभे संते नो पडि० १ ॥ से भिक्खू वा से जं० अप्पंडं जाव संताणगरुयं तहप्पगारं नो प० २ ॥ से भिक्खू वा० अप्पंडं लहुयं अपाडिहारियं तह० नो प० ३ ॥ से भिक्खू वा० अप्पंडं जाव अप्पसंताणगं लहुअं पाडिहारियं नो अहाबद्धं तहप्पगारं लाभे संते नो पडिगाहिज्जा ४ ॥ से भिक्खू वा २ से जं पुण संथारगं जाणिज्जा अप्पंडं जाव संताणगं लहुअं पाडिहारिअं अहाबद्धं, तहप्पगारं संथारगं लाभे संते पडिगाहिज्जा ५ ॥ (सू. ३२२)



स भिक्षुर्यदि फलहकादिसंस्तारकमेषितुमभिकाङ्क्षेत्, तच्चैवभूतं जानीयात्, तद्यथा—प्रथमसूत्रे साण्डादित्वात्संयमविराधनादोषः १, द्वितीयसूत्रे गुरुत्वादुत्क्षेपणादावात्मविराधनादिदोषः २, तृतीयसूत्रेऽप्रतिहारकत्वात्तत्परित्यागादिदोषः ३, चतुर्थसूत्रे त्वबद्धत्वा-

चद्धन्धनादिपलिमन्थदोषः ४, पञ्चमसूत्रे त्वल्पाण्डं यावदल्पसन्तानकलघुप्रातिहारिकावबद्धत्वात्सर्वदोषविप्रमुक्तत्वात्संस्तारको ग्राह्य इति सूत्रपञ्चकसमुदायार्थः ५॥ साम्प्रतं संस्तारकमुद्दिश्याभिग्रहविशेषानाह—

(मूलं) इच्चेयाइं आयतणाइं उवाइक्कम्म—अह भिक्खू जाणिज्जा इमाइं चउहिं पडिमाहिं संथारगं एसित्तए, तत्थ खलु इमा पढमा पडिमा—से भिक्खू वा २ उद्दिसिय २ संथारगं जाइज्जा, तंजहा–इक्कडं वा कढिणं वा जंतुयं वा परगं वा मोरगं वा तणगं वा सोरगं वा कुसं वा कुच्चगं वा पिप्पलगं वा पलालगं वा, से पुव्वामेव आलोइज्जा—आउसोत्ति वा भ० दाहिसि मे इत्तो अन्नयरं संथारगं? तह० संथारगं सयं वा णं जाइज्जा परो वा देज्जा फासुयं एसणिज्जं जाव पडि०, पढमा पडिमा॥ ( सू. ३२३ ) अहावरा दुच्चा पडिमा—से भिक्खू वा० पेहाए संथारगं जाइज्जा, तंजहा–गाहावइं वा कम्मकरिं वा से पुव्वामेव आलोइज्जा–आउ०! भइ०! दाहिसि मे? जाव पडिगाहिज्जा, दुच्चा पडिमा २॥ अहावरा तच्चा पडिमा–से भिक्खू वा० जस्सुवस्सए संवसिज्जा जे तत्थ अहासमन्नागए, तंजहा–इक्कडे इ वा जाव पलाले इ वा तस्स लाभे संवसिज्जा तस्सऽलाभे उक्कुडुए वा नेसज्जिए वा विहरिज्जा, तच्चा पडिमा ३॥ ( सू. ३२४ ) अहावरा चउत्था पडिमा—से भिक्खू वा अहासंथडमेव संथारगं जाइज्जा, तंजहा–पुढविसिलं वा कट्ठसिलं वा अहासंथडमेव, तस्स लाभे संते संवसिज्जा, तस्स अलाभे उक्कुडुए वा २ विहरिज्जा, चउत्था पडिमा ४॥ ( सू. ३२५ ) इच्चेयाणं चउण्हं पडिमाणं अन्नयरं पडिमं पडिवज्जमाणे तं चेव जाव अन्नोऽन्नसमाहीए एवं च णं विहरंति॥ (सू. ३२६) से भिक्खू वा०

अभिकंखिज्जा संथारगं पच्चप्पिणित्तए, से जं पुण संथारगं जाणिज्जा सअंडं जाव ससंताणयं तहप्प० संथारगं नो पच्चप्पिणिज्जा ॥ (सू. ३२७) से भिक्खू अभिकंखिज्जा सं० से जं० अप्पंडं० तहप्पगारं० संथारगं पडिलेहिय २ प० २ आयाविय २ विहुणिय २ तओ संजयामेव पच्चप्पिणिज्जा ॥ (सू. ३२८)

'इत्येतानि' पूर्वोक्तानि 'आयतनादीनि' दोषरहितस्थानानि वसतिगतानि संस्तारकगतानि च 'उपातिक्रम्य' परिहृत्य वक्ष्यमाणांश्च दोषान् परिहृत्य संस्तारको ग्राह्य इति दर्शयति-'अथ' आनन्तर्ये स भावभिक्षुर्जानीयात् 'आभिः' करणभूताभिश्चतसृभिः 'प्रतिमाभिः' अभिग्रहविशेषभूताभिः संस्तारकमन्वेष्टुं, ताश्चेमाः-उद्दिष्ट १ प्रेक्ष्य २ तस्यैव ३ यथासंस्तृत ४ रूपाः, तत्रोद्दिष्टा फलहकादीनामन्यतमद्ग्रहीष्यामि नेतरदिति प्रथमा १, यदेव प्रागुद्दिष्टं तदेव द्रक्ष्यामि ततो ग्रहीष्यामि नान्यदिति द्वितीया प्रतिमा २, तदपि यदि तस्यैव शय्यातरस्य गृहे भवति ततो ग्रहीष्यामि नान्यत आनीय तत्र शयिष्य इति तृतीया ३ तदपि फलहकादिकं यदि यथासंस्तृतमेवास्ते ततो गृहीष्यामि नान्यथेति चतुर्थी प्रतिमा ४। आसु च प्रतिमास्वाद्ययोः प्रतिमयोर्गच्छनिर्गतानामग्रहः, उत्तरयोरन्यतरस्यामभिग्रहः, गच्छान्तर्गतानां तु चतस्रोऽपि कल्पन्त इति, एताश्च यथाक्रमं सूत्रैर्दर्शयति-तत्र खल्विमा प्रथमा प्रतिमा, तद्यथा-उद्दिश्योद्दिश्येक्कडादीनामन्यतमद्ग्रहीष्यामीत्येवं यस्याभिग्रहः सोऽपरलाभेऽपि न प्रतिगृह्णीयादिति, शेषं कण्ठ्यं, नवरं 'कठिनं' वंशकटादि 'जन्तुकं' तृणविशेषोत्पन्नं 'परकं' येन तृणविशेषेण पुष्पाणि ग्रथ्यन्ते 'मोरगं'ति मयूरपिच्छनिष्पन्नं 'कुचगं'ति येन कूर्चकाः क्रियन्ते, एते चैवंभूताः संस्तारका अनूपदेशे साद्रादिभूम्यन्तरणार्थमनुज्ञाता इति ॥

अत्रापि पूर्ववत्सर्वं भणनीयं, यदि परं तमिक्कडादिकं संस्तारकं दृष्ट्वा याचते, नादृष्टमिति ॥ एवं तृतीयाऽपि नेया, इयांस्तु विशेषः-

गच्छान्तर्गतो निर्गतो वा यदि वसतिदातैव संस्तारकं प्रयच्छति ततो गृह्णाति, तदभावे उत्कटुको वा निषण्णो वा पद्मासनादिना सर्वरात्रमास्त इति ॥ एतदपि सुगम, केवलमस्यायं विशेषः-यदि शिलादिसंस्तारकं यथासंस्तृतं शयनयोग्यं लभ्यते ततः शेते, नान्यथेति ॥ किञ्च-आसां चतसृणां प्रतिमानामन्यतरां प्रतिपद्यमानोऽन्यमपरप्रतिमाप्रतिपन्नं साधुं न हीलयेद्, यस्मात्ते सर्वेऽपि जिनाज्ञामाश्रित्य समाधिना वर्त्तन्त इति ॥ साम्प्रतं प्रातिहारिकसंस्तारकप्रत्यर्पणे विधिमाह—स भिक्षुः प्रातिहारकं संस्तारकं यदि प्रत्यर्पयितुमभिकाङ्क्षेदेवंभूतं जानीयात् तद्यथा-गृहकोकिलकाचण्डकसंबद्धमप्रत्युपेक्षणयोग्यं ततो न प्रत्यर्पयेदिति ॥ किञ्च—

सुगमम् । साम्प्रतं वसतौ वसता विधिमधिकृत्याह—

(मूलं) से भिक्खू वा० समाणे वा वसमाणे वा गामाणुगामं दूइज्जमाणे वा पुव्वामेव पन्नस्स उच्चारपासवणभूमिं पडिलेहिज्जा, केवली बूया-आयाणमेयं, अपडिलेहियाए उच्चारपासवणभूमीए, से भिक्खू वा० राओ वा वियाले वा उच्चारपासवणं परिट्ठवेमाणे पयलिज्ज वा २, से तत्थ पयलमाणे वा २ हत्थं वा पायं वा जाव लूसेज्ज व पाणाणि वा ४ ववरोविज्जा, अह भिक्खू णं पु० जं पुव्वामेव पन्नस्स उ० भूमिं पडिलेहिज्जा॥ (सू. ३२९)

सुगम, नवरं साधूनां सामाचार्येषा, यदुत-विकाले प्रश्रवणादिभूमयः प्रत्युपेक्षणीया इति ॥ साम्प्रतं संस्तारकभूमिमधिकृत्याह—

(मूलं) से भिक्खू वा २ अभिकंखिज्जा सिज्जासंथारगभूमिं पडिलेहित्तए, नन्नत्थ आयरिएण वा उ० जाव गणावच्छेएण वा बालेण वा वुड्ढेण वा सेहेण वा गिलाणेण वा आएसेण वा अंतेण वा मज्झेण वा समेण वा विसमेण वा पवाएण वा निवाएण वा, तओ संजयामेव पडिलेहिय २ पमज्जिय २ तओ संजयामेव बहुफासुयं



१०

सिज्जासंथारगं संथरिज्जा ॥ (सू. ३३०)

स भिक्षुराचार्योपाध्यायादिभिः स्वीकृतां भूमिं मुक्त्वाऽन्यां स्वसंस्तरणाय प्रत्युपेक्षेत, शेषं सुगमं, नवरमादेशः-प्राघूर्णक इति, तथाऽन्तेन चेत्यादीनां पदानां तृतीया सप्तम्यर्थ इति ॥ इदानीं शयनविधिमधिकृत्याह—

(मूलं) से भिक्खू वा० बहु० संथरित्ता अभिकंखिज्जा बहुफासुए सिज्जासंथारए दुरूहित्तए॥ से भिक्खू० बहु० दुरूहमाणे पुव्वामेव ससीसोवरियं कायं पाए य पमज्जिय २ तओ संजयामेव बहु० दुरूहित्ता तओ संजयामेव बहु० सइज्जा ॥ (सू. ३३१)

से इत्यादि स्पष्टम् । इदानीं सुप्तविधिमधिकृत्याह—

(मूलं) से भिक्खू वा० बहु सयमाणे नो अन्नमन्नस्स हत्थेण हत्थं पाएण पायं काएण कायं आसाइज्जा, से अणासायमाणे तओ संजयामेव बहु० सइज्जा ॥ से भिक्खू वा० उस्सासमाणे वा नीसासमाणे वा कासमाणे वा छीयमाणे वा जंभायमाणे वा उड्डोए वा वायनिसग्गं वा करेमाणे पुव्वामेव आसयं वा पोसयं वा पाणिणा परिपेहित्ता तओ संजयामेव ऊससिज्जा वा जाव वायनिसग्गं वा करेज्जा ॥ (सू. ३३२)

निगदसिद्धम्, इयमत्र भावना-स्वपद्भिर्हस्तमात्रव्यवहितसंस्तारकैः स्वप्तव्यमिति ॥ एवं सुप्तस्य निःश्वसितादिविधिसूत्रमुत्तानार्थं, नवरम् 'आसयं च'त्ति आस्यं 'पोसयं वा' इत्यधिष्ठानमिति ॥ साम्प्रतं सामान्येन शय्यामङ्गीकृत्याह—

(मूलं) से भिक्खू वा० समा वेगया सिज्जा भविज्जा विसमा वेगया सि० पवाया वे० निवाया वे० ससरक्खा

वे० अप्पससरक्खा वे० सदंसमसगा वेगया अप्पदंसमसगा० सपरिसाडा वे० अपरिसाडा० सउवसग्गा वे० निरुवसग्गा वे० तहप्पगाराहिं सिज्जाहिं संविज्जमाणाहिं पग्गहियतरागं विहारं विहरिज्जा, नो किंचिवि गिलाइज्जा, एवं खलु० जं सव्वट्ठेहिं सहिए सया जएत्ति बेमि (सू० ३३३) ॥ २-१-२-२ ॥

सुखोत्थेयं, यावत्तथाप्रकारासु वसतिषु विद्यमानासु 'प्रगृहीततर'मिति यैव काचिद्विषमसमादिका वसतिः संपन्ना तामेव समचित्तोऽधिवसेत्-न तत्र व्यलीकादिकं कुर्यात्, एतत्तस्य भिक्षोः सामग्र्यं यत्सर्वार्थैः सहितः सदा यतेतेति ॥ द्वितीयमध्ययनं शय्याख्यं समाप्तम् ॥२-१-२-२ ॥

---

उक्तं द्वितीयमध्ययनं, साम्प्रतं तृतीयमारभ्यते, अस्य चायमभिसम्बन्धः-इहाद्येऽध्ययने धर्मशरीरपरिपालनार्थं पिण्डः प्रतिपादितः, स चावश्यमैहिकामुष्मिकापायरक्षणार्थं वसतौ भोक्तव्य इति द्वितीयेऽध्ययने वसतिः प्रतिपादिता, साम्प्रतं तयोरन्वेषणार्थं गमनं विधेयं, तच्च यदा यथा विधेयं यथा च न विधेयमित्येतत्प्रतिपाद्यम्, इत्यनेन सम्बन्धेनायातस्यास्याध्ययनस्य चत्वार्यनुयोगद्वाराणि भवन्ति, तत्र निक्षेपनिर्युक्त्यनुगमे नामनिक्षेपणार्थं निर्युक्तिकृदाह—

नामं १ ठवणाइरिया २ दव्वे ३ खित्ते ४ य काल ५ भावे ६ य। एसो खलु इरियाए निक्खेवो छव्विहो होइ ॥३०८॥

कण्ठ्यं। नामस्थापने क्षुण्णत्वादनादृत्य द्रव्येर्याप्रतिपादनार्थमाह—

दव्वइरियाओ तिविहा सचित्ताचित्तमीसगा चेव। खित्तंमि जंमि खित्ते काले कालो जहिं होइ ॥३०९॥

तत्र द्रव्येर्या सचित्ताचित्तमिश्रभेदात्रिविधा, ईरणमीर्या गमनमित्यर्थः, तत्र सचित्तस्य-वायुपुरुषादेर्द्रव्यस्य यद्गमनं सा सचित्तद्रव्येर्या, एवं परमाण्वादिद्रव्यस्य गमनमचित्तद्रव्येर्या, तथा मिश्रद्रव्येर्या रथादिगमनमिति, क्षेत्रेर्या यस्मिन् क्षेत्रे गमनं क्रियते ईर्या वा वर्ण्यते, एवं कालेर्याऽपि द्रष्टव्येति ॥ भावेर्याप्रतिपादनायाह—

भावइरिया उ दुविहा चरणरिया चेव संजमरिया य। समणस्स कहं गमणं निद्दोसं होइ परिसुद्धं ? ॥३१०॥

भावविषयेर्या द्विधा-चरणेर्या संयमेर्या च, तत्र संयमेर्या सप्तदशविधसंयमानुष्ठानं, यदिवाऽसङ्ख्येयेषु संयमस्थानेष्वेकस्मात्संयमस्थानादपरं संयमस्थानं गच्छतः संयमेर्या भवति, चरणेर्या तु 'अभ्र वभ्र मभ्र चर गत्यर्थाः' चरतेर्भावे ल्युट् चरणं तद्रूपेर्या चरणेर्या, चरणं गतिर्गमनमित्यर्थः, तच्च श्रमणस्य 'कथं' केन प्रकारेण भावरूपं गमनं निर्दोषं भवति ? इति ॥ आह—

आलंबणे य काले मग्गे जयणाइ चेव परिसुद्धं। भंगेहिं सोलसविहं जं परिसुद्धं पसत्थं तु ॥३११॥

'आलम्बनं' प्रवचनसङ्घगच्छाचार्यादिप्रयोजनं 'कालः' साधूनां विहरणयोग्योऽवसरः 'मार्गः' जनैः पद्भ्यां क्षुण्णः पन्थाः 'यतना' उपयुक्तस्य युगमात्रदृष्टित्वं, तदेवमालम्बनकालमार्गयतनापदैरेकैकपदव्यभिचाराद् ये भङ्गास्तैः षोडशविधं गमनं भवति ॥ तस्य च यत्परिशुद्धं तदेव प्रशस्तं भवतीति दर्शयितुमाह—

चउकारणपरिसुद्धं अहवावि (हु) होज्ज कारणज्जाए। आलंबणजयणाए काले मग्गे य जइयव्वं ॥३१२॥

चतुर्भिः कारणैः साधोर्गमनं परिशुद्धं भवति, तद्यथा-आलम्बने दिवा मार्गेण यतनया गच्छत इति, अथवाऽकालेऽपि ग्लानाद्यालम्बनेन यतनया गच्छतः शुद्धमेव गमनं भवति, एवंभूते च मार्गे साधुना यतितव्यमिति ॥ उक्तो नामनिष्पन्नो निक्षेपः, साम्प्र-



१५
२०
२७

तदुद्देशार्थाधिकारमधिकृत्याह—

सव्वेवि ईरियविसोहिकारगा तहवि अत्थि उ विसेसो । उद्देसे उद्देसे वुच्छामि जहक्कमं किंचि ॥३१३॥

'सर्वेऽपि' त्रयोऽपि यद्यपीर्याविशुद्धिकारकास्तथाऽपि प्रत्युद्देशकमस्ति विशेषः, तं च यथाक्रमं किञ्चिद्वक्ष्याम इति ॥ यथाप्रतिज्ञातमाह—

पढमे उवागमण निग्गमो य अद्धाण नावजयणा य । बिइए आरूढछलणं जंघासंतार पुच्छा य ॥३१४॥

तइयंमि अदायणया अप्पडिबंधो य होइ उवहिंमि । वज्जेयव्वं च सया संसारियरायगिहगमणं ॥३१५॥

प्रथमोद्देशके वर्षाकालादावुपागमनं-स्थानं तथा निर्गमश्च शरत्कालादौ यथा भवति तदत्र प्रतिपाद्यमध्वनि यतना चेति, द्वितीयोद्देशके नावादावारूढस्य छलनं-प्रक्षेपणं व्यावर्ण्यते, जङ्घासन्तारे च पानीये यतना, तथा नानाप्रकारे च प्रश्ने साधुना यद्विधेयमेतच्च प्रतिपाद्यमिति ॥ तृतीयोद्देशके यदि कश्चिदुदकादीनि पृच्छति, तस्य जानताऽप्यदर्शनता विधेयेत्ययमधिकारः, तथोपधावप्रतिबन्धो विधेयः, तदरणे च स्वजनराजगृहगमनं च वर्जनीयं, न च तेषामाख्येयमिति ॥ साम्प्रतं सूत्रानुगमेऽस्खलितादिगुणोपेतं सूत्रमुच्चारणीयं, तच्चेदम्— 

(मूलं) अब्भुवगए खलु वासावासे अभिपवुट्ठे बहवे पाणा अभिसंभूया बहवे बीया अहुणाभिन्ना अंतरा से मग्गा बहुपाणा बहुबीया जाव ससंताणगा अणभिक्कंता पंथा नो विन्नाया मग्गा सेवं नच्चा नो गामाणुगामं दूइज्जिज्जा, तओ संजयामेव वासावासं उवल्लिइज्जा ॥ (सू० ३३४)



आभिमुख्येनोपगतासु वर्षासु अभिप्रवृष्टे च पयोमुचि, अत्र वर्षाकालवृष्टिभ्यां चत्वारो भङ्गाः, तत्र साधूनां सामाचार्येवैषा, यदुत-

निर्व्याघातेनाप्राप्त एवाषाढचतुर्मासके तृणफलकडगलकभस्समात्रकादिपरिग्रहः, किमिति ?, यतो जातायां वृष्टौ बहवः 'प्राणिनः' इन्द्रगोपकश्रीयावककर्दभकादयः 'अभिसंभूताः' प्रादुर्भूताः, तथा बहूनि 'बीजानि' अभिनवाङ्कुरितानि, अन्तराले च मार्गास्तस्य- साधोर्गच्छतो बहुप्राणिनो बहुबीजा यावत्ससन्तानका अनभिक्रान्ताश्च पन्थानः, अत एव तृणाकुलत्वान्न विज्ञाताः मार्गाः, सं- साधुरेवं ज्ञात्वा न ग्रामाद्ग्रामान्तरं यायात्, ततः संयत एव वर्षासु यथाऽवसरप्राप्तायां वसतावुपलीयेत-वर्षाकालं कुर्यादिति ॥ एतदपवादार्थमाह—

(मूलं) से भिक्खू वा० से जं० गामं वा जाव रायहाणिं वा इमंसि खलु गामंसि वा जाव राय० नो महई विहा- रभूमी नो महई वियारभूमी नो सुलभे पीढफलगसिज्जासंथारगे नो सुलभे फासुए उंछे अहेसणिज्जे जत्थ बहवे समण० वणीमगा उवागया उवागमिस्संति य अच्चाइन्ना वित्ती नो पन्नस्स निक्खमणे जाव चिंताए, सेवं नच्चा तहप्पगारं गामं वा नगरं वा जाव रायहाणिं वा नो वासावासं उवल्लिइज्जा। से भि० से जं० गामं वा जाव राय० इमंसि खलु गामंसि वा जाव महई विहारभूमी महई वियार० सुलभे जत्थ पीढ ४ सुलभे फा० नो जत्थ बहवे समण० उवागमिस्संति वा अप्पाइन्ना वित्ती जाव रायहाणिं वा तओ संजयामेव वासावासं उवल्लिइज्जा ॥ ( सू० ३३५ )

स भिक्षुर्यत्पुनरेवं राजधान्यादिकं जानीयात्, तद्यथा—अस्मिन् ग्रामे यावद्-राजधान्यां वा न विद्यते महती 'विहारभूमिः' स्वाध्यायभूमिः, तथा 'विचारभूमिः' बहिर्गमनभूमिः, तथा नैवात्र सुलभानि पीठफलहकशय्यासंस्तारकादीनि, तथा न सुलभः

प्रासुकः पिण्डपातः, 'उंछे'त्ति एषणीयः, एतदेव दर्शयति—'अहेसणिज्जे'त्ति यथाऽसावुद्गमादिदोषरहित एषणीयो भवति तथाभूतो दुर्लभ इति, यत्र च ग्रामनगरादौ बहवः श्रमणब्राह्मणकृपणवणीमगादय उपागता अपरे चोपागमिष्यन्ति, एवं च तत्रात्याकीर्णा वृत्तिः, वर्त्तनं-वृत्तिः, सा च भिक्षाटनस्वाध्यायध्यानबहिर्गमनकार्येषु जनसङ्कुलत्वादाकीर्णा भवति, ततश्च न प्राज्ञस्य तत्र निष्क्रमणप्रवेशौ यावच्चिन्तनादिकाः क्रिया निरुपद्रवाः संभवन्ति, स साधुरेवं ज्ञात्वा न तत्र वर्षाकालं विदध्यादिति ॥ एवं च व्यत्ययसूत्रमपि व्यत्ययेन नेयमिति ॥ साम्प्रतं गतेऽपि वर्षाकाले यदा यथा च गन्तव्यं तदधिकृत्याह—

(मूलं) अह पुणेवं जाणिज्जा–चत्तारि मासा वासावासाणं वीइक्कंता हेमंताण य पंचदसरायकप्पे परिवुसिए, अंतरा से मग्गे बहुपाणा जाव ससंताणगा नो जत्थ बहवे जाव उवागमिस्संति, सेवं नच्चा नो गामाणुगामं दूइज्जिज्जा ॥ अह पुणेवं जाणिज्जा चत्तारि मासा० कप्पे परिवुसिए, अंतरा से मग्गे अप्पंडा जाव असंताणगा बहवे जत्थ समण० उवागमिस्संति, सेवं नच्चा तओ संजयामेव० दूइज्जिज्ज ॥ (सू. ३३६)

अथैवं जानीयाद् यथा चत्वारोऽपि मासाः प्रावृट्कालसम्बन्धिनोऽतिक्रान्ताः, कार्त्तिकचातुर्मासिकमतिक्रान्तमित्यर्थः, तत्रोत्सर्गतो यदि न वृष्टिस्ततः प्रतिपद्येवान्यत्र गत्वा पारणकं विधेयम्, अथ वृष्टिस्ततो हेमन्तस्य पञ्चसु दशसु वा दिनेषु 'पर्युषितेषु' गतेषु गमनं विधेयं, तत्रापि यद्यन्तराले पन्थानः साण्डा यावत्ससन्तानका भवेयुर्न च तत्र बहवः श्रमणब्राह्मणादयः समागताः समागमिष्यन्ति वा ततः समस्तमेव मार्गशिरः यावत्तत्रैव स्थेयं, तत ऊर्द्ध्वं यथा तथाऽस्तु न स्थेयमिति ॥ एवमेतद्विपर्ययसूत्रमप्युक्तार्थम् ॥ इदानीं मार्गयतनामधिकृत्याह—



१०

(मूलं) से भिक्खू वा० गामाणुगामं दूइज्जमाणे पेहमाणे दट्ठूण तसे पाणे उद्धट्टु पादं रीइज्जा साहट्टु पायं रीयेज्जा वितिरिच्छं वा कट्टु पायं रीइज्जा, सइ परक्कमे संजयामेव परिक्कमिज्जा, नो उज्जुयं गच्छिज्जा, तओ संजयामेव गामाणुगामं दूइज्जिज्जा ॥ से भिक्खू वा० गामा० दूइज्जमाणे अंतरा से पाणाणि वा वी० हरि० उदए वा मट्टिआ वा अविद्धत्थे० सइ परक्कमे जाव नो उज्जुयं गच्छिज्जा, तओ संजया० गामा० दूइज्जिज्जा ॥ (सू. ३३७)

स भिक्षुर्यावद् ग्रामान्तरं गच्छन् 'पुरतः' अग्रतः 'युगमात्रं' चतुर्हस्तप्रमाणं शकटोर्द्धिसंस्थितं भूभागं पश्यन् गच्छेत्, तत्र च पथि दृष्ट्वा 'त्रसान् प्राणिनः' पतङ्गादीन् 'उद्धट्टु'त्ति पादमुद्धृत्याग्रतलेन पादप्रातप्रदेशं वाऽतिक्रम्य गच्छेत्, एवं संहृत्य—शरीराभिमुखमाक्षिप्य पादं विवक्षितपादपातप्रदेशादारत एव विन्यस्य उत्क्षिप्य वाऽग्रभागं पार्ष्णिकया गच्छेत्, तथा तिरश्चीनं वा पादं कृत्वा गच्छेत्, अयं चान्यमार्गाभावे विधिः, सति त्वन्यस्मिन् पराक्रमे—गमनमार्गे संयतः संस्तेनैव 'पराक्रमेत्' गच्छेत्, न ऋजुनेत्येवं ग्रामान्तरं गच्छेत्, सर्वोपसंहारोऽयमिति ॥ से इत्यादि, उत्तानार्थम् ॥ अपि च—

(मूलं) भिक्खू वा० गामा० दूइज्जमाणे अंतरा से विरूवरूवाणि पच्चंतिगाणि दस्सुगायतणाणि मिलक्खूणि अणायरियाणि दुस्सन्नप्पाणि दुप्पन्नवणिज्जाणि अकालपडिबोहीणि अकालपरिभोईणि सइ लाढे विहाराए संथरमाणेहिं जाणवएहिं नो विहारवडियाए पवज्जिज्जा गमणाए, केवली बूया आयाणमेयं, ते णं बाला अयं तेणे अयं उवचरए अयं ततो आगएत्तिकट्टु तं भिक्खुं अक्कोसिज्ज वा जाव उद्दविज्ज वा वत्थं प० कं० पाय० अच्छिदिज्ज वा भिंदिज्ज वा अवहरिज्ज वा परिट्ठविज्ज वा, अह भिक्खूणं पु० जं तहप्पगाराइं विरू० पच्चंतियाणि

दस्सुगा० जाव विहारवत्तियाए नो पवज्जिज्ज वा गमणाए, तओ संजया गा० दू० ॥ (सू. ३३८)

स भिक्षुर्ग्रामान्तरं गच्छन् यत्पुनरेवं जानीयात्, तद्यथा—'अन्तरा' ग्रामान्तराले 'विरूपरूपाणि' नानाप्रकाराणि प्रात्यन्तिकानि दस्यूनां—चौराणामायतनानि—स्थानानि 'मिलक्खूणि'त्ति बर्बरशबरपुलिन्द्रादिम्लेच्छप्रधानानि 'अनार्याणि' अर्द्धषड्विंशजनपदबाह्यानि 'दुःसञ्ज्ञाप्यानि' दुःखेनार्यसञ्ज्ञां ज्ञाप्यन्ते, तथा 'दुष्प्रज्ञाप्यानि' दुःखेन धर्मसञ्ज्ञोपदेशेनानार्यसङ्कल्पान्निवर्त्यन्ते 'अकालप्रतिबोधीनि' न तेषां कश्चिदपर्यटनकालोऽस्ति, अर्द्धरात्रादावपि मृगयादौ गमनसम्भवात्, तथाऽकालभोजीन्यपीति, सत्यन्यस्मिन् ग्रामादिके विहारे विद्यमानेषु चान्येष्वार्यजनपदेषु न—तेषु म्लेच्छस्थानेषु विहरिष्यामीति गमनं न प्रतिपद्येत, किमिति?, यतः केवली ब्रूयात्कर्मोपादानमेतत्, संयमात्मविराधनातः, तत्रात्मविराधने संयमविराधनाऽपि संभवतीत्यात्मविराधनां दर्शयति—'ते' म्लेच्छाः 'णम्' इति वाक्यालङ्कारे एवमूचुः, तद्यथा—अयं स्तेनः, अयमुपचरकः—चरोऽयं तस्मादस्मच्छत्रुग्रामादागत इतिकृत्वा वाचाऽऽक्रोशयेयुः, तथा दण्डेन ताडयेयुः यावज्जीविताद्व्यपरोपयेयुः, तथा वस्त्रादि 'आच्छिन्द्युः' अपहरेयुः, ततस्तं साधुं निर्द्धाटयेयुरिति। अथ साधूनां पूर्वोपदिष्टमेतत्प्रतिज्ञानादिकं यत्तथाभूतेषु म्लेच्छस्थानेषु गमनार्थं न प्रतिपद्यते, ततस्तानि परिहरन् संयत एव ग्रामान्तरं गच्छेदिति ॥ तथा— १०

प्र. आ. ३७७

(मूलं) से भिक्खू० दूइज्जमाणे अंतरा से अरायाणि वा गणरायाणि वा जुवरायाणि वा दोरज्जाणि वा वेरज्जाणि वा विरुद्धरज्जाणि वा सइ लाढे विहाराए संथ० जण० नो विहारवडियाए०, केवली बूया—आयाणमेयं, ते णं बाला तं चेव जाव गमणाए तओ सं० गा० दू० ॥ (सू. ३३९)

कष्टं, नवाम् 'अराजानि' यत्र राजा मृतः 'युवराजानि' यत्र नाद्यापि, राज्याभिषेको भवतीति ॥ किञ्च—

(मूलं) से भिक्खू वा गा० दूइज्जमाणे अंतरा से विहं सिया, से जं पुण विहं जाणिज्जा एगाहेण वा दुयाहेण वा तिआहेण वा चउआहेण वा पंचाहेण वा पाउणिज्ज वा नो पाउणिज्ज तहप्पगारं विहं अणेगाहगमणिज्जं सइ लाढे जाव गमणाए, केवली बूया-आयाणमेयं, अंतरा से वासे सिया पाणेसु वा पणएसु वा बीएसु वा हरि० उद० मट्टियाए वा अविद्धत्थाए, अह भिक्खू जं तह० अणेगाह० जाव नो पव०, तओ सं० गा० दू० ॥ (सू. ३४०)

स भिक्षुर्ग्रामान्तरं गच्छन् यत्पुनरेवं जानीयात् 'अन्तरा' ग्रामान्तराले मम गच्छतः 'विहं'ति अनेकाहगमनीयः पन्थाः 'स्यात्' भवेत्, तमेवंभूतमध्वानं ज्ञात्वा सत्यन्यस्मिन् विहारस्थाने न तत्र गमनाय मतिं विदध्यादिति, शेषं सुगमम् ॥ साम्प्रतं नौगमनविधिमधिकृत्याह—

(मूलं) से भि० गामा० दूइज्जिज्जा० अंतरा से नावासंतारिमे उदए सिया, से जं पुण नावं जाणिज्जा असंजए अ भिक्खुपडियाए किणिज्ज वा पामिच्चेज्ज वा नावाए वा नावं परिणामं कट्टु थलाओ वा नावं जलंसि ओगाहिज्जा जलाओ वा नावं थलंसि उक्कसिज्जा पुण्णं वा नावं उस्सिंचिज्जा सन्नं वा नावं उप्पीलाविज्जा तहप्पगारं नावं उड्ढगामिणिं वा अहेगा० तिरियगामि० परं जोयणमेराए अद्धजोयणमेराए अप्पतरे वा भुज्जतरे वा नो दूरुहिज्जा गमणाए ॥ से भिक्खू वा० पुव्वामेव तिरिच्छसंपाइमं नावं जाणिज्जा, जाणित्ता से तमायाए एगंतमवक्कमिज्जा २ भण्डगं पडिलेहिज्जा २ एगओ भोयणभंडगं करिज्जा २ ससीसोवरियं कायं-पाए पमज्जिज्जा

सागारं भत्तं पच्चक्खाइज्जा, एगं पायं जले किच्चा एगं पायं थले किच्चा तओ सं० नावं दूरूहिज्जा ॥ (सू. ३४१)

स भिक्षुर्ग्रामान्तराले यदि नौसतार्यमुदकं जानीयात्, नावं चैवंभूतां विजानीयात्, तद्यथा–'असंयतः' गृहस्थो भिक्षुप्रतिज्ञया नावं क्रीणीयात्, अन्यस्मादुच्छिन्ना वा गृह्णीयात्, परिवर्तना वा कुर्यात्, एवं स्थलाद्यानयनादिक्रियोपेतां नावं ज्ञात्वा नारुहेदिति, शेषं सुगमम् ॥ इदानीं कारणजाते नावारोहणविधिमाह–सुगमम् ॥ तथा—

(मूलं) से भिक्खू वा० नावं दुरूहमाणे नो नावाओ पुरओ दुरूहिज्जा नो नावाओ मग्गओ दुरूहिज्जा नो नावाओ मज्झओ दुरूहिज्जा नो बाहाओ पगिज्झिय २ अंगुलियाए उद्दिसिय २ ओणमिय २ उन्नमिय २ निज्झाइज्जा। से णं परो नावागओ नावागयं वइज्जा–आउसंतो! समणा एयं ता तुमं नावं उक्कसाहिज्जा वा वुक्कसाहि वा खिवाहि वा रज्जूयाए वा गहाय आकसाहि, नो से तं परिन्नं परिजाणिज्जा, तुसिणीओ उवेहिज्जा। से णं परो नावागओ नावाग० वइ०–आउसं० नो संचाएसि तुमं नावं उक्कसित्तए वा ३ रज्जूयाए वा गहाय आकसित्तए वा, आहर एयं नावाए रज्जूयं सयं चेव णं वयं नावं उक्कसिस्सामो वा जाव रज्जूए वा गहाय आकसिस्सामो, नो से तं प० तुसि०। से णं प० आउसं० एअं ता तुमं नावं आलित्तेण वा पीढएण वा वंसेण वा वलएण वा अवल्लुएण वा वाहेहि, नो से तं प० तुसि०। से णं परो० एयं ता तुमं नावाए उदयं हत्थेण वा पाएण वा मत्तेण वा पडिग्गहेण वा नावाउस्सिंचणेण वा उस्सिंचाहि, नो से तं०।से णं परो० समणा! एयं तुमं नावाए उत्तिंगं हत्थेण वा पाएण वा बाहुणा वा ऊरुणा वा उदरेण वा सीसेण वा काएण वा उस्सिंच-



५

१०

णेण वा चेलेण वा मट्टियाए वा कुसपत्तएण वा कुविंदएण वा पिहेहि, नो से तं० ॥ से भिक्खू वा २ नावाए उत्तिंगेण उदयं आसवमाणं पेहाए उवरुवरिं नावं कज्जलावेमाणिं पेहाए नो परं उवसंकमित्तु एवं बूया— आउसंतो! गाहावई एयं ते नावाए उदयं उत्तिंगेण आसवइ उवरुवरिं नावा वा कज्जलावेइ, एयप्पगारं मणं वा वायं वा नो पुरओ कट्टु विहरिज्जा, अप्पुस्सुए अबहिल्लेसे एगंतगएण अप्पाणं विउसेज्जा समाहीए, तओ० सं०, नावासंतारिमे य उदए आहारियं रीइज्जा, एवं खलु सया जइज्जासित्तिबेमि ॥ इरियाए पढमो उद्देसो (सू. २४२) २-१-३-१ ॥

एयाणि तुमं विरूवरूवाणि सत्थजायाणि धारेहि, एयं ता तुमं दारगं वा पज्जेहि, नो से तं० (सू. ३४३)

सः 'परः' गृहस्थादिर्नावि व्यवस्थितस्तत्स्थमेव साधुमेवं ब्रूयात्, तद्यथा–आयुष्मन्! श्रमण! एतन्मदीयं तावच्छत्रकादि गृहाण, तथैतानि 'शस्त्रजातानि' आयुधविशेषान् धारय, तथा दारकाद्युदकं पायय, इत्येतां 'परिज्ञां' प्रार्थना परस्य न शृणुयादिति ॥ तदकरणे च परः प्रद्विष्टः सन् यदि नावः प्रक्षिपेत्तत्र यत्कर्त्तव्यं तदाह–

(मूलं) से णं परो नावागए नावागयं वएज्जा–आउसंतो! एस णं समणे नावाए भंडभारिए भवइ, से णं बाहाए गहाय नावाओ उदगंसि पक्खिविज्जा, एयप्पगारं निग्घोसं सुच्चा निसम्म से य चीवरधारी सिया खिप्पामेव चीवराणि उव्वेढिज्ज वा निवेढिज्ज वा उप्फेसं वा करिज्जा, अह० अभिक्कंतकूरकम्मा खलु बाला बाहाहिं गहाय ना० पक्खिविज्जा से पुव्वामेव वइज्जा–आउसंतो! गाहावई मा मेत्तो बाहाए गहाय नावाओ उदगंसि पक्खिवह, सयं चेव णं अहं नावाओ उदगंसि ओगाहिस्सामि, से णेवं वयंतं परो सहसा बलसा बाहाहिं ग० पक्खिविज्जा तं नो सुमणे सिया, नो दुम्मणे सिया, नो उच्चावयं मणं नियंछिज्जा, नो तेसिं बालाणं घायए वहाए समुट्ठिज्जा, अप्पुस्सुए जाव समाहीए तओ सं० उदगंसि पविज्जा (सू. ३४४)

स परः 'णम्' इति वाक्यालङ्कारे नौगतस्तत्स्थं साधुमुद्दिश्यापरमेवं ब्रूयात्, तद्यथा–आयुष्मन्! अयमत्र श्रमणो भाण्डवन्निश्चेष्टत्वाद् गुरुः भाण्डेन वोपकरणेन गुरुः, तदेनं च बाहुग्राहं नाव उदके प्रक्षिपत यूयमित्येवंप्रकारं शब्दं श्रुत्वा तथाऽन्यतो वा कुतश्चित् 'निशम्य' अवगम्य 'सः' साधुर्गच्छगतो निर्गतो वा तेन च चीवरधारिणैतद्विधेयं–क्षिप्रमेव चीवराण्यसाराणि गुरुत्वान्निर्गा-



१०

णेण वा चेलेण वा मट्टियाए वा कुसपत्तएण वा कुविंदएण वा पिहेहि, नो से तं० ॥ से भिक्खू वा २ नावाए उत्तिंगेण उदयं आसवमाणं पेहाए उवरुवरिं नावं कज्जलावेमाणिं पेहाए नो परं उवसंकमित्तु एवं बूया— आउसंतो! गाहावई एयं ते नावाए उदयं उत्तिंगेण आसवइ उवरुवरिं नावा वा कज्जलावेइ, एयप्पगारं मणं वा वायं वा नो पुरओ कट्टु विहरिज्जा, अप्पुस्सुए अबहिल्लेसे एगंतगएण अप्पाणं विउसेज्जा समाहीए, तओ० सं०, नावासंतारिमे य उदए आहारियं रीइज्जा, एयं खलु सया जइज्जासित्तिबेमि ॥ इरियाए पढमो उद्देसो (सू. ३४२) २-१-३-१ ॥

स्पष्टं, नवरं नो नावोऽग्रभागमारुहेत् निर्यामकोपद्रवसम्भवात्, नावारोहिणां वा पुरतो नारोहेत्, प्रवर्त्तनाधिकरणसम्भवात्, तत्रस्थश्च नौव्यापारं नापरेण चोदितः कुर्यात्, नाप्यन्यं कारयेदिति। 'उत्तिंगं'ति रन्ध्रं 'कज्जलावेमाणं'ति प्लाव्यमानम् 'अप्पुस्सुए'त्ति अविमनस्कः शरीरोपकरणादौ मूर्छामकुर्वन् तत्सिश्रोदके नावं गच्छन् 'आहारिय'मिति यथाऽऽर्यं भवति तथा गच्छेद्, विशिष्टाध्यवसायो यायादित्यर्थः, एतत्तस्य भिक्षोः सामग्र्यमिति ॥ तृतीयस्याध्ययनस्य प्रथमोद्देशकः समाप्तः २-१-३-१ ॥

---

उक्तः प्रथमोद्देशकोऽधुना द्वितीयः समारभ्यते, अस्य चायमभिसम्बन्धः—इहानन्तरोद्देशके नावि व्यवस्थितस्य विधिरभिहितस्तदिहापि स एवाभिधीयते, इत्यनेन सम्बन्धेनायातस्यास्योद्देशकस्यादिसूत्रम्—

(मूलं) से णं परो णावा० आउसंतो! समणा० एयं ता तुमं छत्तगं वा जाव चम्मछेयणगं वा गिण्हाहि,

एयाणि तुमं विरूवरूवाणि सत्थजायाणि धारेहि, एयं ता तुमं दारगं वा पज्जेहि, नो से तं० (सू. ३४३)

सः 'परः' गृहस्थादिर्नाविं व्यवसितस्तत्स्यमेव साधुमेवं ब्रूयात्, तद्यथा–आयुष्मन्! श्रमण! एतन्मदीयं तावच्छत्रकादि गृहाण, तथैतानि 'शस्त्रजातानि' आयुधविशेषान् धारय, तथा दारकायुदकं पायय, इत्येतां 'परिज्ञां' प्रार्थनां परस्य न शृणुयादिति ॥ तदकरणे च परः प्रद्विष्टः सन् यदि नावः प्रक्षिपेत्तत्र यत्कर्त्तव्यं तदाह—

( मूल ) से णं परो नावागए नावागयं वएज्जा–आउसंतो! एस णं समणे नावाए भंडभारिए भवइ, से णं बाहाए गहाय नावाओ उदगंसि पक्खिविज्जा, एयप्पगारं निग्घोसं सुच्चा निसम्म से य चीवरधारी सिया खिप्पामेव चीवराणि उव्वेढिज्ज वा निवेढिज्ज वा उप्फेसं वा करिज्जा, अह० अभिक्कंतकूरकम्मा खलु बाला बाहाहिं गहाय ना० पक्खिविज्जा से पुव्वामेव वइज्जा–आउसंतो! गाहावई मा मेत्तो बाहाए गहाय नावाओ उदगंसि पक्खिवह, सयं चेव णं अहं नावाओ उदगंसि ओगाहिस्सामि, से णेवं वयंतं परो सहसा बलसा बाहाहिं ग० पक्खिविज्जा तं नो सुमणे सिया, नो दुम्मणे सिया, नो उच्चावयं मणं नियंछिज्जा, नो तेसिं बालाणं घायाए वहाए समुट्ठिज्जा, अप्पुस्सुए जाव समाहीए तओ सं० उदगंसि पविज्जा। ( सू. ३४४ ) १०

स परः 'णम्' इति वाक्यालङ्कारे नौगतस्तत्स्थं साधुमुद्दिश्यापरमेवं ब्रूयात्, तद्यथा–आयुष्मन्! अयमत्र श्रमणो भाण्डवन्निश्चेष्टत्वाद् गुरुः भाण्डेन वोपकरणेन गुरुः, तदेनं च बाहुग्राहं नावः उदके प्रक्षिपत यूयमित्येवंप्रकारं शब्दं श्रुत्वा तथाऽन्यतो वा कुतश्चित् 'निशम्य' अवगम्य 'सः' साधुर्गच्छगतो निर्गतो वा तेन च चीवरधारिणैतद्विधेयं–क्षिप्रमेव चीवराण्यसाराणि गुरुत्वान्निर्वा-

हितुमशक्यानि च 'उद्वेष्टयेत्' पृथक् कुर्यात्, तद्विपरीतानि तु 'निर्वेष्टयेत्' सुबद्धानि कुर्यात्, तथा 'उप्फेसं वा कुज्ज'त्ति शिरोवेष्टनं वा कुर्याद् येन संवृतोपकरणो निर्व्याकुलत्वात्सुखेनैव जलं तरति, तांश्च धर्मदेशनयाऽनुकूलयेत्, अथ पुनरेवं जानीयादित्यादि सुगममिति ॥ साम्प्रतमुदकं प्लवमानस्य विधिमाह—

(मूलं) से भिक्खू वा० उदगंसि पवमाणे नो हत्थेण हत्थं पाएण पायं काएण कायं आसाइज्जा, से अणासायणाए अणासायमाणे तओ सं० उदगंसि पविज्जा ॥ से भिक्खू वा० उदगंसि पवमाणे नो उम्मुग्गनिमुग्गियं करिज्जा, मामेयं उदगं कन्नेसु वा अच्छीसु वा नक्कंसि वा मुहंसि वा परियावज्जिज्जा, तओ० संजयामेव उदगंसि पविज्जा ॥ से भिक्खू वा उदगंसि पवमाणे दुब्बलियं पाउणिज्जा, खिप्पामेव उवहिं विगिंचिज्ज वा विसोहिज्ज वा, नो चेव णं साइज्जिज्जा, अह पु० पारए सिया उदगाओ तीरं पाउणित्तए, तओ संजयामेव उदउल्लेण वा ससिणिद्धेण वा काएण उदगतीरे चिट्ठिज्जा ॥ से भिक्खू वा० उदउल्लं वा २ कायं नो आमज्जिज्जा वा णो पमज्जिज्जा वा संलिहिज्जा वा निल्लिहिज्जा वा उव्वलिज्जा वा उव्वट्टिज्जा वा आयाविज्ज वा पया०, अह पु० विगओदओ मे काए छिन्नसिणेहे काए तहप्पगारं कायं आमज्जिज्ज वा पयाविज्ज वा, तओ सं० गामा० दूइज्जिज्जा ॥ (सू.३४५)

स भिक्षुरुदके प्लवमानो हस्तादिकं हस्तादिना 'नासादयेत्' न संस्पृशेद्, अप्कायादिसंरक्षणार्थमिति भावः, ततस्तथा कुर्वन् संयत एवोदकं प्लवेदिति ॥ तथा च भिक्षुरुदके प्लवमानो मज्जनोन्मज्जने नो विदध्यादिति (शेषं) सुगममिति ॥ किञ्च—स भिक्षुरुदके प्लवमानः 'दौर्बल्यं' श्रमं प्राप्नुयात्, ततः क्षिप्रमेवोपधिं त्यजेत्, तदेकं वा विशोधयेत्—त्यजेदिति, नैवोपधावासक्तो भवेद् । अथ पुनरेवं

जानीयात् 'पारए सिअ'त्ति समर्थोऽहमस्मि सोपधिरेवोदकपारगमनाय ततस्तस्मादुदकादुत्तीर्णः सन् संयत एवोदकार्द्रेण गलद्विन्दुना कायेन सस्निग्धेन वोदकतीरे तिष्ठेत्, तत्र चेर्यापथिकां च प्रतिक्रामेत् ॥ न चैतत्कुर्यादित्याह–स्पष्टं, नवरमत्रेयं सामाचारी–यदुदकार्द्रं वस्त्रं तत्स्वत एव यावन्निष्प्रगलं भवति तावदुदकतीर एव स्थेयम्, अथ चौरादिभयाद्गमनं स्यात्ततः प्रलम्बमानं कायेनास्पृशता नेयमिति ॥ तथा—

(मूलं) से भिक्खू वा० गामाणुगामं दूइज्जमाणे नो परेहिं सद्धिं परिजविय २ गामा० दूइ०, तओ० सं० गामा० दूइ० ॥ ( सू० ३४६ )

कण्ठ्यं, नवरं 'परिजविय२'त्ति परैः सार्द्धं भृशमुल्लापं कुर्वन्न गच्छेदिति ॥ इदानीं जङ्घासंतरणविधिमाह—

( मूलं ) से भिक्खू वा० गामा० दू० अंतरा से जंघासंतारिमे-उदगे सिया, से पुव्वामेव ससीसोवरियं कायं पाए य पमज्जिज्जा २ एगं पायं जले किच्चा एगं पायं थले किच्चा तओ सं० उदगंसि आहारियं रीएज्जा ॥ से भि० आहारियं रीयमाणे नो हत्थेण हत्थं जाव अणासायमाणे तओ संजयामेव जंघासंतारिमे उदए अहारियं रीएज्जा ॥ से भिक्खू वा० जंघासंतारिमे उदए अहारियं रीयमाणे नो सायावडियाए नो परिदाहपडियाए महइमहालयंसि उदयंसि कायं विउसिज्जा, तओ संजयामेव जंघासंतारिमे उदए अहारियं रीएज्जा, अह पुण एवं जाणिज्जा-पारए सिया उदगाओ तीरं पाउणित्तए० तओ संजयामेव उदउल्लेण वा २ काएण दगतीरए चिट्ठिज्जा ॥ से भि० उदउल्लं वा कायं ससि० कायं नो आमज्जिज्ज वा नो०, अह पु० विगओदए मे काए छिन्नसिणेहे तहप्पगारं



१०

. आ.

काये आमज्जिज्ज वा० पयाविज्ज वा, तओ सं० गामा० दूइ० ॥ ( सू० ३४७ )

'तस' भिक्षोर्ग्रामान्तरं गच्छतो यदा अन्तराले जानुदघ्नादिकमुदकं स्यात्त ऊर्द्धकायं मुखवस्त्रिकया अधःकायं च रजोहरणेन प्रमृज्योदकं प्रविशेत्, प्रविश्य पादमेकं जले कृत्वाऽपरमुत्क्षिपन् गच्छेत्, न जलमालोडयता गन्तव्यमित्यर्थः, 'अहारियं रीएज्ज' त्ति यथा ऋजु भवति तथा गच्छेत्, नार्दवितर्दं विकारं वा कुर्वन् गच्छेदिति ॥ स भिक्षुर्यथाऽऽर्यमेव गच्छन् महत्युदके महाश्रये वक्षःस्थलादिप्रमाणे जङ्घातरणीये नदीह्रदादौ पूर्वविधिनैव कायं प्रवेशयेत्, प्रविश्य यद्युपकरणं निर्वाहयितुमसमर्थस्ततः सर्वमसारं वा परित्यजेत्, अथैवं जानीयाच्छक्तोऽहं पारगमनाय ततस्तथाभूत एव गच्छेत्, उत्तीर्णश्च कायोत्सर्गादि पूर्ववत्कुर्यादिति ॥ आमर्जनप्रमार्जनादिसूत्रं पूर्ववन्नेयमिति ॥ साम्प्रतमुदकोत्तीर्णस्य गमनविधिमाह—

(मूलं) से भिक्खू वा गामा० दूइज्जमाणे नो मट्टियागएहिं पाएहिं हरियाणि छिंदिय २ विकुज्जिय २ विफालिय २ उम्मग्गेण हरियवहाए गच्छिज्जा, जमेयं पाएहिं मट्टियं खिप्पामेव हरियाणि अवहरंतु, माइट्ठाणं संफासे, नो एवं करिज्जा, से पुव्वामेव अप्पहरियं मग्गं पडिलेहिज्जा, तओ० सं० गामा० ॥ से भिक्खू वा २ गामाणुगामं दूइज्जमाणे अंतरा से वप्पाणि वा फ० पा० तो० अ० अग्गलपासगाणि वा गड्ढाओ वा दरीओ वा सइ परक्कमे संजयामेव परिक्कमिज्जा, नो उज्जु०, केवली०, से तत्थ परक्कममाणे पयलिज्ज वा २, से तत्थ पयलमाणे वा २ रुक्खाणि वा गुच्छाणि वा गुम्माणि वा लयाओ वा वल्लीओ वा तणाणि वा गहणाणि वा हरियाणि वा अवलंबिय २ उत्तरिज्जा, जे तत्थ पाडिपहिया उवागच्छंति ते पाणी जाइज्जा २, तओ सं० अवलंबिय २

उत्तरिज्जा, तओ स० गामा० दू०॥ से भिक्खू वा० गा० दूइज्जमाणे अंतरा से जवसाणि वा सगडाणि वा रहाणि वा सचक्काणि वा परचक्काणि वा से णं वा विरूवरूवं संनिरुद्धं पेहाए सइ परकमे सं०, नो उ०, से णं परो सेणागओ वइज्जा-आउसंतो! एस णं समणे सेणाए अभिनिवारियं करेइ, से णं बाहाए गहाय आगसह, से णं परो बाहाहिं गहाय आगसिज्जा, तं नो सुमणे सिया जाव समाहीए, तओ सं० गामा० दू०॥(सू० ३४८)

स भिक्षुरुदकादुत्तीर्णः सन् कर्दमाविलपादः सन्(नो)हरितानि भृशं छित्त्वा तथा विकुब्जानि कृत्वा एवं भृशं पाटयित्वोन्मार्गेण हरितवधाय गच्छेत्-यथैना पादमृत्तिकां हरितान्यपनयेयुरित्येवं मातृस्थानं संस्पृशेत्, न चैतत्कुर्याच्छेषं सुगममिति ॥ स भिक्षुर्ग्रामान्तराले यदि वप्रादिकं पश्येत्ततः सत्यन्यस्मिन् सङ्क्रमे तेन ऋजुना पथा न गच्छेद्, यतस्तत्र गर्तादौ निपतन् सचित्तं वृक्षादिकमवलम्बेत, तच्चायुक्तम्, अथ कारणिकस्तेनैव गच्छेत्, कथञ्चित्पतितश्च गच्छगतो वल्ल्यादिकमप्यवलम्ब्य प्रातिपथिकं हस्तं वा याचित्वा सयत एव गच्छेदिति ॥ किञ्च-स भिक्षुर्यदि ग्रामान्तराले 'यवसं' गोधूमादिधान्यं शकटस्कन्धावारनिवेशादिकं वा भवेत् तत्र बह्वपायसम्भवात्तन्मध्येन सत्यपरस्मिन् पराक्रमे न गच्छेत्, शेषं सुगममिति ॥ तथा—

(मूलं) से भिक्खू वा गामा० दूइज्जमाणे अंतरा से पाडिवहिया उवागच्छिज्जा, ते णं पाडिवहिया एवं वइज्जा-आउ० समणा! केवइए एस गामे वा जाव रायहाणी वा केवईया इत्थ आसा हत्थी गामपिंडोलगा मणुस्सा परिवसंति? से बहुभत्ते बहुउदए बहुजणे बहुजवसे से अप्पभत्ते अप्पुदए अप्पजणे अप्पजवसे?, एयप्पगाराणि पसिणाणि पुच्छिज्जा, एयप्प० पुट्ठो वा अपुट्ठो वा नो वागरिज्जा, एवं खलु० जं सव्वट्ठेहिं०॥ (सू० ३४९) २-१-३-२

१०

'से' तस्य भिक्षोरपान्तराले गच्छतः 'प्रातिपथिकाः' संमुखाः पथिका भवेयुः, ते चैवं वदेयुर्यथाऽऽयुष्मन् ! श्रमण ! किम्भूतोऽयं ग्रामः ? इत्यादि पृष्टो न तेषामाचक्षीत, नापि तान् पृच्छेदिति पिण्डार्थः, एतत्तस्य भिक्षोः सामग्र्यमिति ॥ तृतीयस्याध्ययनस्य द्वितीय उद्देशकः ॥ २-१-३-२

---

उक्तो द्वितीयोद्देशकः, साम्प्रतं तृतीयः समारभ्यते, अस्य चायमभिसम्बन्धः—इहानन्तरं गमनविधिः प्रतिपादितः, इहापि स एव प्रतिपाद्यते, इत्यनेन सम्बन्धेनायातस्यास्योद्देशकस्यादिसूत्रम्—

(मूलं) से भिक्खू वा गामा० दूइज्जमाणे अंतरा से वप्पाणि वा जाव दरीओ वा जाव कूडागाराणि वा पासायाणि वा नूमगिहाणि वा रुक्खगिहाणि वा पव्वयगि० रुक्खं वा चेइयकडं थूभं वा चेइयकडं आएसणाणि वा जाव भवणगिहाणि वा नो बाहाओ पगिज्झिय २ अंगुलिआए उद्दिसिय २ ओणमिय २ उन्नमिय २ निज्झाइज्जा, तओ० सं० गामा० ॥ से भिक्खू वा० गामा० दू० माणे अंतरा से कच्छाणि वा दवियाणि वा नूमाणि वा वलयाणि वा गहणाणि वा गहणविदुग्गाणि वणाणि वा वणवि० पव्वयाणि वा पव्वयवि० अगडाणि वा तलागाणि वा दहाणि वा नईओ वा वावीओ वा पुक्खरिणीओ वा दीहियाओ वा गुंजालियाओ वा सराणि वा सरपंतियाणि वा सरसरपंतियाणि वा नो बाहाओ पगिज्झिय २ जाव निज्झाइज्जा, केवली०, जे तत्थ मिगा वा पसू वा पंखी वा सरीसिवा वा सीहा वा जलचरा वा थलचरा वा खहचरा वा सत्ता ते उत्तसिज्ज वा

वित्तसिज्ज वा घाउं वा सरणं वा कंखिज्जा, चारित्ति मे अयं समणे, अह भिक्खू णं पु० जं नो वाहाओ पगि- ज्झिय २ निज्झाइज्जा, तओ संजयामेव आयरिउवज्झाएहिं सद्धिं गामाणुगामं दूइज्जिज्जा ॥ (सू० ३५०)

स भिक्षुर्ग्रामाद्ग्रामान्तरं गच्छन् यदन्तराले एतत्पश्येत्, तद्यथा—परिखाः प्राकारान् 'कूटागारान्' पर्वतोपरि गृहाणि 'नूमगृहाणि' भूमीगृहाणि, वृक्षप्रधानानि तदुपरि वा गृहाणि वृक्षगृहाणि, पर्वतगृहाणि—पर्वतगुहाः, 'रुक्खं वा चेइअकडं'ति वृक्षस्याधो व्यन्त- रादिस्थलकं 'स्तूपं वा' व्यन्तरादिकृतं, तदेवमादिकं साधुना भृशं बाहुं 'प्रगृह्य' उत्क्षिप्य तथाऽङ्गुलीः प्रसार्य तथा कायमवनम्यो- न्नम्य वा न दर्शनीयं नाप्यवलोकनीयं, दोषाश्चात्र दग्धमुषितादौ साधुराशङ्क्येताजितेन्द्रियो वा संभाव्येत तत्स्थः पक्षिगणो वा संत्रासं गच्छेत्, एतद्दोषभयात्संयत एव 'दूयेत्' गच्छेदिति ॥ तथा—स भिक्षुर्ग्रामान्तरं गच्छेत्, तस्य च गच्छतो यद्येतानि भवेयुः, तद्यथा—'कच्छाः' नद्यासन्ननिम्नप्रदेशा मूलकवालुङ्कादिवाटिका वा 'दवियाणि'त्ति अटव्यां घासार्थं राजकुलावरुद्धभूमयः 'निम्नानि' गर्तादीनि 'वलयानि' नद्यादिवेष्टितभूमिभागाः 'गहनं' निर्जलप्रदेशोऽरण्यक्षेत्रं वा 'गुञ्जालिका' दीर्घा गम्भीराः कुटिलाः श्लक्ष्णाः जलाशयाः 'सरःपङ्क्तयः' प्रतीताः 'सरःसरःपङ्क्तयः' परस्परसंलग्नानि बहूनि सरांसीति, एवमादीनि बाह्वादिना न प्रदर्शयेद् अव- लोकयेद्वा, यतः केवली ब्रूयात्कर्मोपादानमेतत्, किमिति ?, यतो ये तत्स्थाः पक्षिमृगसरीसृपादयस्ते त्रासं गच्छेयुः, तदाश्रितानां वा साधुविषयाऽऽशङ्का समुत्पद्येत, अथ साधूनां पूर्वोपदिष्टमेतत्प्रतिज्ञादिकं यत्तथा न कुर्यात्, आचार्योपाध्यायादिभिश्च गीतार्थैः सह विहरेदिति ॥ साम्प्रतमाचार्यादिना सह गच्छतः साधोर्विधिमाह—

(मूलं) भिक्खू वा २ आयरिउवज्झा० गामा० नो आयरियउवज्झायस्स हत्थेण वा हत्थं जाव अणासायमाणे

तओ संजयामेव आयरिउ० सद्धिं जाव दूईज्जिज्जा ॥ से भिक्खू वा आय० सद्धिं दूइज्जमाणे अंतरा से पाडिवहिया उवागच्छिज्जा, ते णं पा० एवं वइज्जा–आउसंतो ! समणा ! के तुब्भे ? कओ वा एह ? कहिं वा गच्छिहिह ?, जे तत्थ आयरिए वा उवज्झाए वा से भासिज्ज वा वियागरिज्ज वा, आयरिउवज्झायस्स भासमाणस्स वा वियागरेमाणस्स वा नो अंतरा भासं करिज्जा, तओ० सं० अहाराइणिए वा० दूइज्जिज्जा ॥ से भिक्खू वा अहाराइणियं गामा० दू० नो राइणियस्स हत्थेण हत्थं जाव अणासायमाणे तओ सं० अहाराइणियं गामा० दू० ॥ से भिक्खू वा २ अहाराइणिअं गामाणुगामं दूइज्जमाणे अंतरा से पाडिवहिया उवागच्छिज्जा, ते णं पाडिपहिया एवं वइज्जा–आउसंतो ! समणा ! के तुब्भे ?, जे तत्थ सव्वराइणिए से भासिज्ज वा वागरिज्ज वा, राइणियस्स भासमाणस्स वा वियागरेमाणस्स वा नो अंतरा भासं भासिज्जा, तओ संजयामेव अहाराइणियाए गामाणुगामं दूइज्जिज्जा (सू० ३५१)

स भिक्षुराचार्यादिभिः सह गच्छंस्तावन्मात्रायां भूमौ स्थितो गच्छेद् यथा हस्तादिसंस्पर्शो न भवतीति ॥ तथा–स भिक्षुराचार्यादिभिः सार्द्धं गच्छन् प्रातिपथिकेन पृष्टः सन् आचार्यादीनतिक्रम्य नोत्तरं दद्यात्, नाप्याचार्यादौ जल्पत्यन्तरभाषां कुर्यात्, गच्छंश्च संयत एव युगमात्रया दृष्ट्या यथारत्नाधिकं गच्छेदिति तात्पर्यार्थः ॥ एतत्सूत्रद्वयमप्याचार्योपाध्यायैरिवापरेणापि रत्नाधिकेन साधुना सह गच्छता हस्तादिसङ्घट्टोऽन्तरभाषा च वर्जनीयेति द्रष्टव्यमिति ॥ किञ्च–

(मूलं) से भिक्खू वा० दूइज्जमाणे अंतरा से पाडिवहिया उवागच्छिज्जा, ते णं पा० एवं वइज्जा–आउ० स० !



प्राकाराद्यदर्शनं २० आचार्यादिभिः सहगमने विधिः

अवियाइं इत्तो पडिवहे पासह, तं०—मणुस्सं वा गोणं वा महिसं वा पसुं वा पक्खिं वा सिरीसिवं वा जलयरं वा से आइक्खह दंसेह, तं नो आइक्खिज्जा नो दंसिज्जा, नो तस्स तं परिन्नं परिजाणिज्जा, तुसिणीए उवेहिज्जा, जाणं वा नो जाणंति वइज्जा, तओ सं० गामा० दू० ॥ से भिक्खू वा० गा० दू० अंतरा से पाडि० उवा०, ते णं पा० एवं वइज्जा—आउ० स०! अवियाइं इत्तो पडिवहे पासह उदगपसूयाणि कंदाणि वा मूलाणि वा तया पत्ता पुप्फा फला बीया हरिया उदगं वा संनिहियं अगणिं वा संनिखित्तं से आइक्खह जाव दूइज्जिज्जा ॥ से भिक्खू वा० गामा० दूइज्जमाणे अंतरा से पाडि० उवा०, ते णं पाडि० एवं आउ० स० अवियाइं इत्तो पडिवहे पासह जवसाणि वा जाव से णं वा विरूवरूवं संनिविट्ठं से आइक्खह जाव दूइज्जिज्जा ॥ से भिक्खू वा० गामा० दूइज्जमाणे अंतरा पा० जाव आउ० स० केवइए इत्तो गामे वा जाव रायहाणिं वा से आइक्खह जाव दूइज्जिज्जा ॥ से भिक्खू वा २ गामाणुगामं दूइज्जेज्जा, अंतरा से पाडिपहिया आउसंतो समणा! केवइए इत्तो गामस्स नगरस्स वा जाव रायहाणीए वा मग्गे से आइक्खह, तहेव जाव दूइज्जिज्जा ॥ (सू. ३५२)

'से' तस्य भिक्षोर्गच्छतः प्रातिपथिकः कश्चित्संमुखीन एतद् ब्रूयात्, तद्यथा—आयुष्मन्! श्रमण! अपिच किं भवता पथ्यागच्छता कश्चिन्मनुष्यादिरुपलब्धः?, तं चैवं पृच्छन्तं तूष्णीभावेनोपेक्षेत, यदिवा जानन्नपि नाहं जानामीत्येवं वदेदिति ॥ अपि च—स भिक्षुर्ग्रामान्तरं गच्छन् केनचित्संमुखीनेन प्रातिपथिकेन पृष्टः सन् उदकप्रसूतं कन्दमूलादि नैवाचक्षीत, जानन्नपि नैव जानामीति वा ब्रूयादिति ॥ एवं यवसासनादिसूत्रमपि नेयमिति ॥ तथा कियद्दूरे ग्रामादिप्रश्नसूत्रमपि नेयमिति ॥ एवं कियान् पन्था?

स०। आहर एयं वत्थं वा ४ देहि निक्खिवाहि, तं नो दिज्जा निक्खिविज्जा, नो वंदिय २ जाइज्जा, नो अंजलिं कट्टु जाइज्जा, नो कलुणवडियाए जाइज्जा, धम्मियाए जाइज्जा, तुसिणीयभावेण वा उवेहिज्जा, ते णं आमोसगा सयं करणिज्जंतिकट्टु अक्कोसंति वा जाव उद्दविंति वा वत्थं वा ४ अच्छिंदिज्ज वा जाव परिट्ठविज्ज वा, तं नो गामसंसारियं कुज्जा, नो रायसंसारियं कुज्जा, नो परं उवसंकमित्तु बूया-आउसंतो! गाहावई एए खलु आमोसगा उवगरणवडियाए सयं करणिज्जंतिकट्टु अक्कोसंति वा जाव परिट्ठवंति वा, एयप्पगारं मणं वा वायं वा नो पुरओ कट्टु विहरिज्जा, अप्पुस्सुए जाव समाहीए तओ संजयामेव गामा० दूइ० ॥ एयं खलु० सया जइ० (सू. ३५४)-त्तिबेमि ॥ समाप्तमीर्याख्यं तृतीयमध्ययनम् ॥ २-१३--३ ॥

स भिक्षुर्ग्रामान्तरे गच्छन् यदि स्तेनैरुपकरणं याच्येत तचेषां न समर्पयेत्, बलाद्गृहतां भूमौ निक्षिपेत्, न च चौरगृहीतमुपकरणं वन्दित्वा दीनं वा वदित्वा पुनर्याचेत, अपि तु धर्मकथनपूर्वकं गच्छान्तर्गतो याचेत तूष्णीभावेन वोपेक्षेत, ते पुनः स्तेनाः स्वकरणीयमितिकृत्वैतत्कुर्युः, तद्यथा-आक्रोशन्ति वाचा ताडयन्ति दण्डेन यावज्जीविताद्व्यपरोपयन्ति, वस्त्रादिकं वाऽऽच्छिन्द्युर्यावत्तत्रैव 'प्रतिष्ठापयेयुः' त्यजेयुः, तच्च तेषामेवं चेष्टितं न ग्रामे 'संसारणीयं' कथनीयं, नापि राजकुलादौ, नापि परं-गृहस्थमुपसंक्रम्य चौरचेष्टितं कथयेत्, नाप्येवंप्रकारं मनो वाचं वा सङ्कल्प्यान्यत्र गच्छेदिति, एतच्चस्य भिक्षोः सामग्र्यमिति ॥ तृतीयमध्ययनं समाप्तम् ॥

इत्येतदपीति ॥ किञ्च—

(मूलं) से भिक्खू० गा० दू० अंतरा से गोणं वियालं पडिवहे पेहाए जाव चित्तचिल्लडं वियालं प० पेहाए नो तेसिं भीओ उम्मग्गेणं गच्छिज्जा नो मग्गाओ उम्मग्गं संकमिज्जा नो गहणं वा वणं वा दुग्गं वा अणुपविसिज्जा नो रुक्खंसि दुरुहिज्जा नो महइमहालयंसि उदयंसि कायं विउसिज्जा नो वाडं वा सरणं वा सेणं वा सत्थं वा कंखिज्जा अप्पुस्सुए जाव समाहीए तओ संजयामेव गामाणुगामं दूइज्जिज्जा ॥ से भिक्खू० गामाणुगामं दूइज्जमाणे अंतरा से विहं सिया, से जं पुण विहं जाणिज्जा इमंसि खलु विहंसि बहवे आमोसगा उवगरणपडियाए संपिंडिया गच्छिज्जा, नो तेसिं भीओ उम्मग्गेण गच्छिज्जा जाव समाहीए तओ संजयामेव गामाणुगामं दूइज्जेज्जा ॥ (सू० ३५३)

स भिक्षुर्ग्रामान्तरं गच्छन् यद्यन्तराले 'गां' वृषभं 'व्यालं' दर्पितं प्रतिपथे पश्येत्, तथा सिंहं व्याघ्रं यावच्चित्रकं तदपत्यं वा व्यालं क्रूरं दृष्ट्वा च तद्भयान्नैवोन्मार्गेण गच्छेत्, न च गहनादिकमनुप्रविशेत्, नापि वृक्षादिकमारोहेत्, न चोदकं प्रविशेत्, नापि शरणमभिकाङ्क्षेत्, अपि त्वल्पोत्सुकोऽविमनस्कः संयत एव गच्छेत्, एतच्च गच्छनिर्गतैर्विधेयं, गच्छान्तर्गतास्तु व्यालादिकं परिहरत्यपीति ॥ किञ्च—'से' तस्य भिक्षोर्ग्रामान्तराले गच्छतः 'विहं'ति अटवीप्रायो दीर्घोऽध्वा भवेत्, तत्र च 'आमोषकाः' स्तेनाः 'उपकरणप्रतिज्ञया' उपकरणार्थिनः समागच्छेयुः, न तद्भयादुन्मार्गगमनादि कुर्यादिति ॥

(मूलं) से भिक्खू वा० गा० दू० अंतरा से आमोसगा संपिंडिया गच्छिज्जा, ते णं आ० एवं वइज्जा—आउ०

स०! आहर एयं वत्थं वा ४ देहि निक्खिवाहि, तं नो दिज्जा निक्खिवविज्जा, नो वंदिय २ जाइज्जा, नो अंजलिं कट्टु जाइज्जा, नो कलुणवडियाए जाइज्जा, धम्मियाए जाइज्जा, तुसिणीयभावेण वा उवेहिज्जा, ते णं आमोसगा सयं करणिज्जंतिकट्टु अक्कोसंति वा जाव उद्दविंति वा वत्थं वा ४ अच्छिंदिज्ज वा जाव परिट्ठविज्ज वा, तं नो गामसंसारियं कुज्जा, नो रायसंसारियं कुज्जा, नो परं उवसंकमित्तु बूया-आउसंतो! गाहावई एए खलु आमोसगा उवगरणवडियाए सयं करणिज्जंतिकट्टु अक्कोसंति वा जाव परिट्ठवंति वा, एयप्पगारं मणं वा वायं वा नो पुरओ कट्टु विहरिज्जा, अप्पुस्सुए जाव समाहीए तओ संजयामेव गामा० दूइ० ॥ एयं खलु० सया जइ० (सू. ३५४)-त्तिबेमि ॥ समासमीर्याख्यं तृतीयमध्ययनम् ॥ २-१३-३ ॥

स भिक्षुर्ग्रामान्तरे गच्छन् यदि स्तेनैरुपकरणं याच्येत तत्तेषां न समर्पयेत्, बलाद्गृहीतं भूमौ निक्षिपेत्, न च चौरगृहीतमुपकरणं वन्दित्वा दीनं वा वदित्वा पुनर्याचेत, अपि तु धर्मकथनपूर्वकं गच्छान्तर्गतो याचेत तूष्णीभावेन वोपेक्षेत, ते पुनः स्तेनाः स्वकरणीयमितिकृत्वैतत्कुर्युः, तद्यथा-आक्रोशन्ति वाचा ताडयन्ति दण्डेन यावज्जीविताद्व्यापरोपयन्ति, वस्त्रादिकं वाऽऽच्छिन्द्युर्यावत्तत्रैव 'प्रतिष्ठापयेयुः' त्यजेयुः, तच्च तेषामेवं चेष्टितं न ग्रामे 'संसारणीयं' कथनीयं, नापि राजकुलादौ, नापि परं-गृहस्थमुपसंक्रम्य चौरचेष्टितं कथयेत्, नाप्येवंप्रकारं मनो वाचं वा सङ्कल्प्यान्यत्र गच्छेदिति, एतत्तस्य भिक्षोः सामग्र्यमिति ॥ तृतीयमध्ययनं समाप्तम् ॥

१०

# अथ चतुर्थं भाषाजातमध्ययनम्।



उक्तं तृतीयमध्ययनं, साम्प्रतं चतुर्थमारभ्यते, अस्य चायमभिसम्बन्धः-इहानन्तराध्ययने पिण्डविशुद्ध्यर्थं गमनविधिरुक्तः, तत्र च गतेन पथि वा यादृग्भूतं वाच्यं न वाच्यं वा, अनेन च सम्बन्धेनायातस्य भाषाजाताध्ययनस्य चत्वार्यनुयोगद्वाराणि भवन्ति, तत्र निक्षेपनिर्युक्त्यनुगमे भाषाजातशब्दयोर्निक्षेपार्थं निर्युक्तिकृदाह—

जह वक्कं तह भासा जाए छक्कं च होइ नायव्वं। उप्पत्तीए १ तह पज्जवं २ तरे ३ जायगहणे ४ य॥ ३१३॥

यथा वाक्यशुद्ध्यध्ययने वाक्यस्य निक्षेपः कृतस्तथा भाषाया अपि कर्त्तव्यः, जातशब्दस्य तु षट्‌निक्षेपोऽयं ज्ञातव्यो—नाम १-स्थापना २ द्रव्य ३ क्षेत्र ४ काल ५ भाव ६ रूपः, तत्र नामस्थापने क्षुण्णे, द्रव्यजातं तु आगमतो नोआगमतः, व्यतिरिक्तं निर्युक्तिकारो गाथापश्चार्द्धेन दर्शयति—तच्चतुर्विधम्, उत्पत्तिजातं १ पर्यवजातम् २ अन्तरजातं ३ ग्रहणजातं ४, तत्रोत्पत्तिजातं नाम यानि द्रव्याणि भाषावर्गणान्तःपातीनि काययोगगृहीतानि वाग्योगेन निसृष्टानि भाषात्वेनोत्पद्यन्ते तदुत्पत्तिजातं, यद्द्रव्यं भाषात्वेनोत्पन्नमित्यर्थः १, पर्यवजातं तैरेव वाग्निसृष्टभाषाद्रव्यैर्यानि विश्रेणिस्थानि भाषावर्गणान्तर्गतानि निसृष्टद्रव्यपराघातेन भाषापर्यायत्वेनोत्पद्यन्ते तानि द्रव्याणि पर्यवजातमित्युच्यन्ते २, यानि त्वन्तराले समश्रेण्यामेव निसृष्टद्रव्यमिश्रितानि भाषापरिणामं भजन्ते तान्यन्तरजातमित्युच्यन्ते ३, यानि पुनर्द्रव्याणि समश्रेणिविश्रेणिस्थानि भाषात्वेन परिणतानि कर्णशष्कुलीविवरप्रविष्टानि गृह्यन्ते तानि चानन्तप्रदेशिकानि द्रव्यतः क्षेत्रतोऽसङ्ख्येयप्रदेशावगाढानि कालत एकद्वित्र्यादियावदसङ्ख्येयसमयस्थितिकानि भावतो

वर्णगन्धरसस्पर्शवन्ति तानि चैवंभूतानि ग्रहणजातमित्युच्यन्ते ४। उक्तं द्रव्यजातं, क्षेत्रादिजातं तु स्पष्टत्वान्निर्युक्तिकारेण नोक्तं, तच्चैवंभूतं-यस्मिन् क्षेत्रे भाषाजातं व्यावर्ण्यते यावन्मात्रं वा क्षेत्रं स्पृशति तत्क्षेत्रजातम्, एवं कालजातमपि, भावजातं तु तान्येवोत्पत्तिपर्यवान्तरग्रहणद्रव्याणि श्रोतरि यदा शब्दोऽयमिति बुद्धिमुत्पादयन्तीति। इह त्वधिकारो द्रव्यभाषाजातेन, द्रव्यस्य प्राधान्यविवक्षया, द्रव्यस्य तु विशिष्टावस्था भाव इतिकृत्वा भावभाषाजातेनाप्यधिकार इति॥ उद्देशार्थाधिकारार्थमाह—

सव्वेऽवि य वयणविसोहिकारगा तहवि अत्थि उ विसेसो। वयणविभत्ती पढमे उप्पत्ती वज्जणा बीए ॥३१७॥

यद्यपि द्वावप्युद्देशकौ वचनविशुद्धिकारकौ तथाऽप्यस्ति विशेषः, स चायं-प्रथमोद्देशके वचनस्य विभक्तिः वचनविभक्तिः-एकवचनादिषोडशविधवचनविभागः, तथैवंभूतं भाषणीयं नैवंभूतमिति व्यावर्ण्यते, द्वितीयोद्देशके तूत्पत्तिः-क्रोधाद्युत्पत्तिर्यथा न भवति तथा भाषितव्यम्॥ साम्प्रतं सूत्रानुगमेऽस्खलितादिगुणोपेतं सूत्रमुच्चारणीयं, तच्चेदम्—

(मूलं) से भिक्खू वा २ इमाइं वयायाराइं सुच्चा निसम्म इमाइं अणायाराइं अणारियपुव्वाइं जाणिज्जा-जे कोहा वा वायं विउंजंति जे माणा वा० जे मायाए वा० जे लोभा वा वायं विउंजंति जाणओ वा फरुसं वयंति अजाणओ वा फ० सव्वं चेयं सावज्जं वज्जिज्जा विवेगमायाए, धुवं चेयं जाणिज्जा अधुवं चेयं जाणिज्जा असणं वा लभिय नो लभिय भुंजिय नो भुंजिय अदुवा आगओ अदुवा नो आगओ अदुवा एइ अदुवा नो एइ अदुवा एहिइ अदुवा नो एहिइ इत्थवि आगए इत्थवि नो आगए इत्थवि एइ इत्थवि नो एति इत्थवि एहिति इत्थवि नो एहिति॥ अणुवीइ निट्ठाभासी समियाए संजए भासं भासिज्जा, तंजहा-एगवयणं १ दुवयणं २ बहुव० ३ इत्थि०

प्र. आ. ३८५

४ भाषाध्य० १ उद्देशः जात-निक्षेपाः ५

१०

४ पुरि० ५ नपुंसगवयणं ६ अज्झत्थव० ७ उवणीयवयणं ८ अवणीयवयणं ९ उवणीयअवणीयव० १० अवणीयउवणीयव० ११ तीयव० १२ पडुप्पन्नव० १३ अणागयव० १४ पच्चक्खवयणं १५ परुक्खव० १६, से एगवयणं वइस्सामीति एगवयणं वइज्जा जाव परुक्खवयणं वइस्सामीति परुक्खवयणं वइज्जा, इत्थी वेस पुरिसो वेस नपुसगं वेस एयं वा चेयं अन्नं वा चेयं अणुवीइ णिट्ठाभासी समियाए संजए भासं भासिज्जा, इच्चेयाइं आययणाइं उवातिकम्म ॥ अह भिक्खू जाणिज्जा चत्तारि भासज्जायाइं, तंजहा–सच्चमेगं पढमं भासज्जायं १ बीयं मोसं २ तईयं सच्चामोसं ३ जं नेव सच्चं नेव मोसं नेव सच्चामोसं असच्चामोसं नाम तं चउत्थं भासजायं ४ ॥ से बेमि जे अईया जे य पडुप्पन्ना जे अणागया अरहंता भगवंतो सव्वे ते एयाणि चेव चत्तारि भासज्जायाइं भासिंसु वा भासंति वा भासिस्संति वा पन्नविंसु वा ३, सव्वाइं च णं एयाइं अचित्ताणि वण्णमंताणि गंधमंताणि रसमंताणि फासमंताणि चओवचइयाइं विप्परिणामधम्माइं भवंतीति अक्खायाइं ॥ (सू. ३५५)

स भावभिक्षुः 'इमान्' इत्यन्तःकरणनिष्पन्नान्, इदमः प्रत्यक्षासन्नवाचित्वात्समनन्तरं वक्ष्यमाणान्, वाच्याचारा वागाचाराः–वाग्व्यापारास्तान् श्रुत्वा, तथा 'निशम्य' ज्ञात्वा भाषासमित्या भाषा भाषेतेत्युत्तरेण सम्बन्ध इति । तत्र यादृग्भूता भाषा न भाषितव्येति तद्यावद्दर्शयति–'इमान्' वक्ष्यमाणान् 'अनाचारान्' साधूनामभाषणयोग्यान् पूर्वसाधुभिरनाचीर्णपूर्वान् साधुर्जानीयात्, तद्यथा–ये केचन क्रोधाद्वा वाचं 'विउजन्ति' विविधं व्यापारयन्ति–भाषन्ते, यथा चौरस्त्वं दासस्त्वमित्यादि, तथा मानेन भाषन्ते, यथोत्तमजातिरहं हीनस्त्वमित्यादि, तथा मायया यथा ग्लानोऽहमपरमन्देशकं वा सावद्यकं केनचिदुपायेन कथयित्वा मिथ्यादुष्कृतं

करोति सहसा ममैतदायातमिति, तथा लोभेनाहमनेनोक्तेनातः किञ्चिल्लप्स्य इति, तथा कस्यचिद्दोषं जानानास्तद्दोषोद्घटनेन परुषं वदन्ति अजानाना वा, सर्वं चैतत्क्रोधादिवचनं सहावद्येन-पापेन गर्ह्येण वा वर्त्तत इति सावद्यं तद्वर्जयेत् विवेकमादाय, विवेकिना भूत्वा सावद्यं वचनं वर्जनीयमित्यर्थः, तथा केनचित्साद्धं साधुना जल्पता नैव सावधारणं वचो वक्तव्यं यथा 'ध्रुवमेतत्'-निश्चितं वृष्ट्यादिकं भविष्यतीत्येवं जानीयाद्, अध्रुवं वा जानीयादिति। तथा कश्चित्साधुं भिक्षार्थं प्रविष्टं ज्ञातिकुलं वा गतं चिरयन्तमुद्दिश्यापरे साधव एवं ब्रवीरन् यथा-भुञ्ज्महे वयं, स तत्राशनादिकं लब्ध्वैव समागमिष्यति, यदिवा भ्रियते तदर्थं किञ्चित्, नैवासौ तस्माल्लब्धलाभः समागमिष्यति, एवं तत्रैव भुक्त्वाऽभुक्त्वा वा समागमिष्यतीति सावधारणं न वक्तव्यम्, अथ चैवंभूतां सावधारणां वाचं न ब्रूयाद् यथाऽऽगतः कश्चिद्राजादिः नो वा समागतः, तथाऽऽगच्छति न वा समागच्छति, एवं समागमिष्यति न वेति, एवमत्र पत्तनमठादावपि भूतादिकालत्रयं योज्यं, यमर्थं सम्यग् न जानीयात्तदेवमेवैतदिति न ब्रूयादिति भावार्थः, सामान्येन सर्वत्रगः साधोरयमुपदेशो, यथा-'अनुविचिन्त्य' विचार्य सम्यग्निश्चित्यातिशयेन श्रुतोपदेशेन वा प्रयोजने सति 'निष्ठाभाषी' सावधारणभाषी सन् 'समित्या' भाषासमित्या 'समतया वा' रागद्वेषाकरणलक्षणया षोडशवचनविधिज्ञो भाषां भाषेत। यादृग्भूता च भाषा भाषितव्या तां षोडशवचनविधिगतां दर्शयति-'तद्यथे'त्युपप्रदर्शनार्थः, एकवचनं वृक्षः १, द्विवचनं वृक्षौ २, बहुवचनं वृक्षा इति ३, स्त्रीवचनं वीणा कन्या इत्यादि ४, पुंवचनं घटः पट इत्यादि ५. नपुंसकवचनं पीठं देवकुलमित्यादि ६, अध्यात्मवचनम्, आत्मन्यधि अध्यात्मं-हृदयगतं तत्परिहारेणान्यद्भणिष्यतस्तदेव सहसा पतितम् ७, 'उपनीतवचनं' प्रशंसावचनं यथा रूपवती स्त्री ८ तद्विपर्ययेणापनीतवचनं यथेयं रूपहीनेति ९, 'उपनीतापनीतवचनं' कश्चिद् गुणः प्रशस्यः कश्चिन्निन्द्यो, यथा-



५

१०

रूपवतीयं स्त्री किन्त्वसद्वृत्तेति १०, अपनीतोपनीतवचनम्, अरूपवती स्त्री किन्तु सद्वृत्तेति ११, 'अतीतवचनं' कृतवान् १२ 'वर्तमानवचनं' करोति १३ 'अनागतवचनं' करिष्यति १४ 'प्रत्यक्षवचनम्' एष देवदत्तः १५, परोक्षवचनं स देवदत्तः १६, इत्येतानि षोडश वचनानि, अमीषां स भिक्षुरेकार्थविवक्षायामेकवचनमेव ब्रूयाद् यावत्परोक्षवचनविवक्षायां परोक्षवचनमेव ब्रूयादिति। तथा रूपादिके दृष्टे सति रूपवैषा पुरुषो वा नपुंसकं वा, एवमेवैतदन्यद्वैतत्, एवम् 'अनुविचिन्त्य' निश्चित्य निष्ठाभाषी सन् समित्या समतया संयत एव भाषां भाषेत, तथा 'इत्येतानि' पूर्वोक्तानि भाषागतानि वक्ष्यमाणानि वा 'आयतनानि' दोषस्थानानि 'उपातिक्रम्य' अतिलङ्घ्य भाषां भाषेत। अथ स भिक्षुर्जानीयात् 'चत्वारि भाषाजातानि' चतस्रो भाषाः, तद्यथा-सत्यमेकं प्रथमं भाषाजातं यथार्थम्-अवितथं, तद्यथा गौर्गौरेवाश्वोऽश्व एवेति १, एतद्विपरीता तु मृषा द्वितीया, यथा गौरश्वोऽश्वो गौरिति २, तृतीया भाषा सत्यामृषेति, यत्र किञ्चित्सत्यं किञ्चिन्मृषेति, यथाऽश्वेन यान्तं देवदत्तमुष्ट्रेण यातीत्यभिदधाति ३, चतुर्थी तु भाषा योच्यमाना न सत्या नापि मृषा नापि सत्यामृषा आमन्त्रणाज्ञापनादिका साऽत्रासत्याऽमृषेति ४॥ स्वमनीषिकापरिहारार्थमाह-सोऽहं यदेतद्ब्रवीमि तत्सर्वैरेव तीर्थकृद्भिरतीतानागतवर्त्तमानैर्भाषितं भाष्यते च, अपि चैतानि-सर्वाण्यप्येतानि भाषाद्रव्याण्यचित्तानि च वर्णगन्धरसस्पर्शवन्ति चयोपचयिकानि विविधपरिणामधर्म्माणि भवन्तीति, एवमाख्यातं तीर्थकृद्भिरिति, अत्र च वर्णादिमत्त्वाविष्करणेन शब्दस्य मूर्त्तत्वमावेदितं, न ह्यमूर्त्तस्याकाशादेर्वर्णादयः संभवन्ति, तथा चयोपचयधर्माणीत्यनेन तु शब्दस्यानित्यत्वमाविष्कृतं, विचित्रपरिणामत्वाच्छब्दद्रव्याणामिति॥ साम्प्रतं शब्दस्य कृतकत्वाविष्करणायाह-

(मूलं) से भिक्खू वा० से जं पुण जाणिज्जा पुव्विं भासा अभासा भासिज्जमाणी भासा भासा भासासम-

यवीइकंता च णं भासिया भासा अभासा ॥ से भिक्खू वा० से जं पुण जाणिज्जा जा य भासा सच्चा १ जा य भासा मोसा २ जा य भासा सच्चामोसा २ जा य भासा असच्चाऽमोसा ४, तहप्पगारं भासं सावज्जं सकिरियं कक्कसं कडुयं निट्ठुरं फरुसं अण्हयकरिं छेयणकरिं भेयणकरिं परियावणकरिं भूओवघाइयं अभिकंख नो भासिज्जा ॥ से भिक्खू वा भिक्खुणी वा से जं पुण जाणिज्जा, जा य भासा सच्चा सुहुमा जा य भासा असच्चामोसा तहप्पगारं भासं असावज्जं जाव अभूओवघाइयं अभिकंख भासं भासिज्जा ॥ (सू. ३५६)



स भिक्षुरेवंभूतं शब्दं जानीयात्, तद्यथा-भाषाद्रव्यवर्गणानां वाग्योगनिस्सरणात् 'पूर्वं' प्रागभाषा, 'भाष्यमाणैव' वाग्योगेन निसृज्यमानैव भाषा, भाषाद्रव्याणि भाषा भवति, तदनेन ताल्वोष्ठादिव्यापारेण प्रागसतः शब्दस्य निष्पादनात्स्फुटमेव कृतकत्वमावेदितं, मृत्पिण्डे दण्डचक्रादिनेव घटस्येति, सा चोच्चरितप्रध्वंसित्वाच्छब्दानां भाषणोत्तरकालमप्यभाषैव, यथा कपालावस्थायां घटोऽघट इति, तदनेन प्रागभावप्रध्वंसाभावौ शब्दस्यावेदिताविति ॥ इदानीं चतसृणां भाषाणामभाषणीयामाह-स भिक्षुर्या पुनरेवं जानीयात्, तद्यथा-सत्यां १ मृषां २ सत्यामृषाम् ३ असत्यामृषां ४, तत्र मृषा सत्यामृषा च साधूनां तावन्न वाच्या, सत्याऽपि या कर्कशादिगुणोपेता सा न वाच्या, तां च दर्शयति-सहावद्येन वर्त्तत इति सावद्यां सत्यामपि न भाषेत, तथा सह क्रियया-अनर्थदण्डप्रवृत्तिलक्षणया वर्त्तत इति सक्रिया तामिति, तथा 'कर्कशां' चर्वितक्षरां, तथा 'कटुकां' चित्तोद्वेगकारिणीं, तथा 'निष्ठुरां' हक्काप्रधानां, 'परुषां' मर्मोद्घाटनपराम् 'अण्हयकरि'न्ति कर्माश्रवकरीम्, एवं छेदनभेदनकरीं यावदपद्रावणकरीमित्येवमादिकां 'भूतोपघातिनीं' प्राण्युपतापकारिणीम्, 'अभिकाङ्क्ष्य' मनसा पर्यालोच्य सत्यामपि न भाषेतेति ॥ भाषणीयां त्वाह-स भिक्षुर्या पुन-

रूपवतीयं स्त्री किन्त्वसद्वृत्तेति १०, अपनीतोपनीतवचनम्, अरूपवती स्त्री किन्तु सद्वृत्तेति ११, 'अतीतवचनं' कृतवान् १२ 'वर्त्तमानवचनं' करोति १३ 'अनागतवचनं' करिष्यति १४ 'प्रत्यक्षवचनम्' एष देवदत्तः १५, परोक्षवचनं स देवदत्तः १६, इत्येतानि षोडश वचनानि, अमीषां स भिक्षुरेकार्थविवक्षायामेकवचनमेव ब्रूयाद् यावत्परोक्षवचनविवक्षायां परोक्षवचनमेव ब्रूयादिति। तथा रूपादिके दृष्टे सति रूपवत्येषा पुरुषो वा नपुंसकं वा, एवमेवैतदन्यद्वैतत्, एवम् 'अनुविचिन्त्य' निश्चित्य निष्ठाभाषी सन् समित्या समतया संयत एव भाषां भाषेत, तथा 'इत्येतानि' पूर्वोक्तानि भाषागतानि वक्ष्यमाणानि वा 'आयतनानि' दोषस्थानानि 'उपातिक्रम्य' अतिलङ्घ्य भाषां भाषेत। अथ स भिक्षुर्जानीयात् 'चत्वारि भाषाजातानि' चतस्रो भाषाः, तद्यथा—सत्यमेकं प्रथमं भाषाजातं यथार्थम्—अवितथं, तद्यथा गौर्गौरेवाश्वोऽश्व एवेति १, एतद्विपरीता तु मृषा द्वितीया, यथा गौरश्वोऽश्वो गौरिति २, तृतीया भाषा सत्यामृषेति, यत्र किञ्चित्सत्यं किञ्चिन्मृषेति, यथाऽश्वेन यान्तं देवदत्तमुष्ट्रेण यातीत्यभिदधाति ३, चतुर्थी तु भाषा योच्यमाना न सत्या नापि मृषा नापि सत्यामृषा आमन्त्रणाज्ञापनादिका साऽसत्याऽमृषेति ४॥ स्वमनीषिकापरिहारार्थमाह—सोऽहं यदेतद्ब्रवीमि तत्सर्वैरेव तीर्थकृद्भिरतीतानागतवर्त्तमानैर्भाषितं भाष्यते च, अपि चैतानि—सर्वाण्यप्येतानि भाषाद्रव्याण्यचित्तानि च वर्णगन्धरसस्पर्शवन्ति चयोपचयिकानि विविधपरिणामधर्म्माणि भवन्तीति, एवमाख्यातं तीर्थकृद्भिरिति, अत्र च वर्णादिमत्त्वाविष्करणेन शब्दस्य मूर्त्तत्वमावेदितं, न ह्यमूर्त्तस्याकाशादेर्वर्णादयः संभवन्ति, तथा चयोपचयधर्माणीत्यनेन तु शब्दस्यानित्यत्वमाविष्कृतं, विचित्रपरिणामत्वाच्छब्दद्रव्याणामिति॥ साम्प्रतं शब्दस्य कृतकत्वाविष्करणायाह—

(मूलं) से भिक्खू वा० से जं पुण जाणिज्जा पुव्विं भासा अभासा भासिज्जमाणी भासा भासा भासासम-

तथा 'वसुले'त्ति वृषलः 'कुपक्षः' कुत्सितान्वयः घटदास इति वा श्वेति वा स्तेन इति वा चारिक इति वा मायीति वा मृषावादीति वा, इत्येतानि–अनन्तरोक्तानि त्वमसि तव जनकौ वा–मातापितरावेतानीति, एवंप्रकारां भाषां यावन्न भाषेतेति ॥ एतद्विपर्ययेण च भाषितव्यमाह–स भिक्षुः पुमांसमामन्त्रयन्नामन्त्रितं वाऽशृण्वन्तमेवं ब्रूयाद् यथाऽमुक इति वा आयुष्मन्निति वा आयुष्मन्त इति वा तथा श्रावक धर्मप्रिय इति, एवमादिकां भाषां भाषेतेति ॥ एवं स्त्रियमधिकृत्य सूत्रद्वयमपि प्रतिषेधविधिभ्यां नेयमिति ॥ पुनरप्यभाषणीयामाह—



(मूलं) से भि० नो एवं वइज्जा–नभोदेवित्ति वा गज्जदेवित्ति वा विज्जुदेवित्ति वा पवुट्ठदे० निवुट्ठदेवित्ति वा पडउ वा वासं मा वा पडउ निप्फज्जउ वा सस्सं मा वा नि० विभाउ वा रयणी मा वा विभाउ उदेउ वा सूरिए मा वा उदेउ सो वा राया जयउ वा मा जयउ, नो एयप्पगारं भासं भासिज्जा ॥ पन्नवं से भिक्खू वा २ अंतलिक्खेत्ति वा गुज्झाणुचरिएत्ति वा संमुच्छिए वा निवइए वा पओ वइज्जा वुट्ठबलाहगेत्ति वा, एयं खलु तस्स भिक्खुस्स भिक्खुणीए वा सामग्गियं जं सव्वट्ठेहिं समिए सहिए सया जइज्जासित्तिबेमि २-१-४-१ ॥ भाषाध्ययनस्य प्रथमः उद्देशकः ॥ (सू० ३५८)

प्र. आ. ३८८



स भिक्षुरेवंभूतामसंयतभाषां न वदेत्, तद्यथा–नभोदेव इति वा गर्जति देव इति वा तथा विद्युद्देवः प्रवृष्टो देवः निवृष्टो देवः, एवं पततु वर्षा मा वा, निष्पद्यतां शस्यं मेति वा, विभातु रजनी मा वा, उदेतु सूर्यो मा वा, जयत्वसौ राजा मा चेति, एवंप्रकारां देवादिकां भाषां न भाषेत ॥ कारणजाते तु प्रज्ञावान् संयतभाषयाऽन्तरिक्षमित्यादिकया भाषेत, एतत्तस्य भिक्षोः सामग्र्यमिति ॥

एवं जानीयात्, तद्यथा—या च भाषा सत्या 'सूक्ष्मे'ति कुशाग्रीयया बुद्ध्या पर्यालोच्यमाना मृषाऽपि सत्या भवति, यथा सत्यपि मृगदर्शने लुब्धकादेरपलाप इति, उक्तञ्च—"अलिअं न भासिअव्वं अत्थि हु सच्चंपि जं न वत्तव्वं। सच्चंपि होइ अलिअं जं परपीडाकरं वयणं ॥ १ ॥" या चासत्यामृषा—आमन्त्रण्याज्ञापनादिका तां तथाप्रकारां भाषामसावद्यामक्रियां यावदभूतोपघातिनीं मनसा पूर्वम् 'अभिकाङ्क्ष्य' पर्यालोच्य सर्वदा साधुर्भाषां भाषेतेति ॥ किञ्च—

(मूलं) से भिक्खू वा० पुमं आमंतमाणे आमंतिए वा अपडिसुणेमाणं नो एवं वइज्जा—होलित्ति वा गोलित्ति वा वसुलेत्ति वा कुपक्खेत्ति वा घडदासित्ति वा साणेत्ति वा तेणित्ति वा चारिएत्ति वा माईत्ति वा मुसावाइत्ति वा, एयाइं तुमं ते जणगा वा, एअप्पगारं भासं सावज्जं सकिरियं जाव भूओवघाइयं अभिकंख नो भासिज्जा ॥ से भिक्खू वा० पुमं आमंतेमाणे आमंतिए वा अप्पडिसुणेमाणे एवं वइज्जा—अमुगे इ वा आउसंतारो वा सावगेत्ति वा धम्मिएत्ति वा धम्मपिएत्ति वा, एयप्पगारं भासं असावज्जं जाव अभिकंख भासिज्जा ॥ से भिक्खू वा २ इत्थिं आमंतेमाणे आमंतिए य अप्पडिसुणेमाणीं एवं वइज्जा—आउसोत्ति वा भइणित्ति वा भोईति वा भगवईति वा साविगेति वा उवासिएत्ति वा धम्मिएत्ति वा धम्मप्पिएत्ति वा, एयप्पगारं भासं असावज्जं जाव अभिकंख भासिज्जा ॥ (सू. ३५७)

स भिक्षुः पुमांसमामन्त्रयन्नामन्त्रितं वाऽशृण्वन्तं नैवं भाषेत, तद्यथा—होल इति वा गोल इति वा, एतौ च देशान्तरेऽवज्ञासंसूचकौ,

१ अलीकं न भाषितव्यं अस्ति हि सत्यमपि यन्न वक्तव्यम्। सत्यमपि भवत्यलीकं यत् परपीडाकरं वचनम् ॥ १ ॥

चतुर्थस्य प्रथमोद्देशकः समाप्तः २-१-४-१ ॥

उक्तः प्रथमोद्देशकः, साम्प्रतं द्वितीय आरभ्यते, अस्य चायमभिसम्बन्धः-इहानन्तरोद्देशके वाच्यावाच्यविशेषोऽभिहितः, तदिहापि स एव शेषभूतोऽभिधीयते, इत्यनेन सम्बन्धेनायातस्यास्योद्देशकस्यादिसूत्रम्—

(मूलं) से भिक्खू वा २ जहा वेगइयाइं रूवाइं पासिज्जा तहावि ताइं नो एवं वइज्जा, तंजहा-गंडी गंडीति वा कुट्ठी कुट्ठीति वा जाव महुमेहुणीति वा हत्थच्छिन्नं हत्थच्छिन्नेत्ति वा एवं पायछिन्नेत्ति वा नक्कछिण्णेइ वा कण्णछिन्नेइ वा उट्ठछिन्नेति वा, जे यावन्ने तहप्पगारा एयप्पगाराहिं भासाहिं वुइया २ कुप्पंति माणवा ते यावि तहप्पगाराहिं भासाहिं अभिकंख नो भासिज्जा ॥ से भिक्खू वा० जहा वेगइयाइं रूवाइं पासिज्जा तहावि ताइं एवं वइज्जा-तंजहा-ओयंसी ओयंसित्ति वा तेयंसी तेयंसीति वा जसंसी जसंसीइ वा वच्चंसी वच्चंसीइ वा अभिरूयंसी २ पडिरूवंसी २ पासाइयं २ दरिसणिज्जं दरिसणीयत्ति वा, जे यावन्ने तहप्पगारा तहप्पगाराहिं भासाहिं वुइया २ नो कुप्पंति माणवा ते यावि तहप्पगारा एयप्पगाराहिं भासाहिं अभिकंख भासिज्जा ॥ से भिक्खू वा० जहा वेगइयाइं रूवाइं पासिज्जा, तंजहा-वप्पाणि वा जाव गिहाणि वा, तहावि ताइं नो एवं वइज्जा, तंजहा-सुकडे इ वा सुट्ठुकडे इ वा साहुकडे इ वा कल्लाणे इ वा, करणिज्जे इ वा, एयप्पगारं भासं सावज्जं जाव नो भासिज्जा ॥ से भिक्खू वा० जहा वेगइयाइं रूवाइं पासिज्जा, तंजहा-वप्पाणि वा जाव गिहाणि

वा तहावि ताइं एवं वइज्जा, तंजहा–आरंभकडे इ वा सावज्जकडे इ वा पयत्तकडे इ वा पासाइयं पासाइए वा दरिसणीयं दरसणीयंति वा अभिरूवं अभिरूवंति वा पडिरूवं पडिरूवंति वा एयप्पगारं भासं असावज्जं जाव भासिज्जा ॥ (सू० ३५९)

स भिक्षुर्यद्यपि 'एगइयाइ'न्ति कानिचिद्रूपाणि गण्डीपदकुष्ठ्यादीनि पश्येत् तथाप्येतानि स्वनामग्राहं तद्विशेषणविशिष्टानि नोच्चारयेदिति, तद्यथेत्युदाहरणोपप्रदर्शनार्थः, 'गण्डी' गण्डमस्यास्तीति गण्डी यदिवोच्छूनगुल्फपादः स गण्डीत्येवं न व्याहर्त्तव्यः, तथा कुष्ठ्यपि न कुष्ठीति व्याहर्त्तव्यः, एवमपरव्याधिविशिष्टो न व्याहर्त्तव्यो यावन्मधुमेहीति मधुवर्णमूत्रानवरतप्रश्रावीति, अत्र च धूताध्ययने व्याधिविशेषाः प्रतिपादितास्तदपेक्षया सूत्रे यावदित्युक्तम्, एवं छिन्नहस्तपादनासिकाकर्णोष्ठादयः, तथाऽन्ये च तथाप्रकाराः काणकुण्टादयः, तद्विशेषणविशिष्टाभिर्वाग्भिरुक्ता उक्ताः कुप्यन्ति मानवास्तांस्तथाप्रकाराभिर्वाग्भिरभिकाङ्क्षय नो भाषेतेति। यथा च भाषेत तथाऽऽह–स भिक्षुर्यद्यपि गण्डीपदादिव्याधिग्रस्तं पश्येत्तथाऽपि तस्य यः कश्चिद्विशिष्टो गुण ओजस्तेज इत्यादिकस्तमुद्दिश्य सति कारणे वदेदिति, केशववत्कृष्णश्वशुक्लदन्तगुणोद्घाटनवद् गुणग्राही भवेदित्यर्थः ॥ तथा स भिक्षुर्यद्यप्येतानि रूपाणि पश्येत्तद्यथा–'वप्राः' प्राकारा यावद्गृहाणि, तथाऽप्येतानि नैवं वदेत्, तद्यथा–सुकृतमेतत् सुष्ठु कृतमेतत् साधु–शोभनं कल्याणमेतत्, कर्त्तव्यमेवैतदेवंविधं भवद्विधानामिति, एवंप्रकारामन्यामपि भाषामधिकरणानुमोदनात् नो भाषेतेति ॥ पुनर्भाषणीयामाह–स भिक्षुर्वप्रादिकं दृष्ट्वाऽपि तदुद्देशेन न किञ्चिद् ब्रूयात्, प्रयोजने सत्येवं संयतभाषया ब्रूयात्, तद्यथा महारम्भकृतमेतत् सावद्यकृतमेतत् तथा प्रयत्नकृतमेतत्, एवं प्रसादनीयदर्शनादिकां भाषामसावद्यां भाषेतेति ॥

प्र. आ ३८९

१०

चतुर्थस्य प्रथमोद्देशकः समाप्तः २-१-४-१॥

उक्तः प्रथमोद्देशकः, साम्प्रतं द्वितीय आरभ्यते, अस्य चायमभिसम्बन्धः—इहानन्तरोद्देशके वाच्यावाच्यविशेषोऽभिहितः, तदिहापि स एव शेषभूतोऽभिधीयते, इत्यनेन सम्बन्धेनायातस्यास्योद्देशकस्यादिसूत्रम्—

(मूलं) से भिक्खू वा २ जहा वेगइयाइं रूवाइं पासिज्जा तहावि ताइं नो एवं वइज्जा, तंजहा—गंडी गंडीति वा कुट्ठी कुट्ठीति वा जाव महुमेहुणीति वा हत्थच्छिन्नं हत्थच्छिन्नेत्ति वा एवं पायछिन्नेत्ति वा नक्कछिण्णेइ वा कण्णछिन्नेइ वा उट्ठछिन्नेति वा, जे यावन्ने तहप्पगारा एयप्पगाराहिं भासाहिं वुइया २ कुप्पंति माणवा ते यावि तहप्पगाराहिं भासाहिं अभिकंख नो भासिज्जा॥ से भिक्खू वा० जहा वेगइयाइं रूवाइं पासिज्जा तहावि ताइं एवं वइज्जा-तंजहा-ओयंसी ओयंसित्ति वा तेयंसी तेयंसीति वा जसंसी जसंसीइ वा वच्चंसी वच्चंसीइ वा अभिरूयंसी २ पडिरूवंसी २ पासाइयं २ दरिसणिज्जं दरिसणीयत्ति वा, जे यावन्ने तहप्पगारा तहप्पगाराहिं भासाहिं वुइया २ नो कुप्पंति माणवा ते यावि तहप्पगारा एयप्पगाराहिं भासाहिं अभिकंख भासिज्जा॥ से भिक्खू वा० जहा वेगइयाइं रूवाइं पासिज्जा, तंजहा—वप्पाणि वा जाव गिहाणि वा, तहावि ताइं नो एवं वइज्जा, तंजहा—सुकडे इ वा सुट्ठुकडे इ वा साहुकडे इ वा कल्लाणे इ वा, करणिज्जे इ वा, एयप्पगारं भासं सावज्जं जाव नो भासिज्जा॥ से भिक्खू वा० जहा वेगइयाइं रूवाइं पासिज्जा, तंजहा—वप्पाणि वा जाव गिहाणि

वा तहावि ताइं एवं वइज्जा, तंजहा-आरंभकडे इ वा सावज्जकडे इ वा पयत्तकडे इ वा पासाइयं पासाइए वा दरिसणीयं दरसणीयंति वा अभिरूवं अभिरूवंति वा पडिरूवं पडिरूवंति वा एयप्पगारं भासं असावज्जं जाव भासिज्जा ॥ (सू० ३५९)

स भिक्षुर्यद्यपि 'एगइयाइ'न्ति कानिचिद्रूपाणि गण्डीपदकुष्ठ्यादीनि पश्येत् तथाप्येतानि स्वनामग्राहं तद्विशेषणविशिष्टानि नोच्चारयेदिति, तद्यथेत्युदाहरणोपप्रदर्शनार्थः, 'गण्डी' गण्डमस्यास्तीति गण्डी यदिवोच्छूनगुल्फपादः स गण्डीत्येवं न व्याहर्त्तव्यः, तथा कुष्ठ्यपि न कुष्ठीति व्याहर्त्तव्यः, एवमपरव्याधिविशिष्टो न व्याहर्त्तव्यो यावन्मधुमेहीति मधुवर्णमूत्रानवरतप्रश्रावीति, अत्र च धूताध्ययने व्याधिविशेषाः प्रतिपादितास्तदपेक्षया सूत्रे यावदित्युक्तम्, एवं छिन्नहस्तपादनासिकाकर्णोष्ठादयः, तथाऽन्ये च तथाप्रकाराः काणकुण्टादयः, तद्विशेषणविशिष्टाभिर्वाग्भिरुक्ता उक्ताः कुप्यन्ति मानवास्तांस्तथाप्रकाराभिर्वाग्भिरभिकाङ्क्ष्य नो भाषेतेति। यथा च भाषेत तथाऽऽह-स भिक्षुर्यद्यपि गण्डीपदादिव्याधिग्रस्तं पश्येत्तथाऽपि तस्य यः कश्चिद्विशिष्टो गुण ओजस्तेज इत्यादिकः समुद्दिश्य सति कारणे वदेदिति, केशववत्कृष्णश्वशुक्लदन्तगुणोद्घाटनवद् गुणग्राही भवेदित्यर्थः ॥ तथा स भिक्षुर्यद्यप्येतानि रूपाणि पश्येत्तद्यथा-'वप्राः' प्राकारा यावद्गृहाणि, तथाऽप्येतानि नैवं वदेत्, तद्यथा-सुकृतमेतत् सुष्ठु कृतमेतत् साधु-शोभनं कल्याणमेतत्, कर्त्तव्यमेवैतदेवंविधं भवद्विधानामिति, एवंप्रकारामन्यामपि भाषामधिकरणानुमोदनात् नो भाषेतेति ॥ पुनर्भाषणीयामाह-स भिक्षुर्वप्रादिकं दृष्ट्वाऽपि तदुद्देशेन न किञ्चिद् ब्रूयात्, प्रयोजने सत्येवं संयतभाषया ब्रूयात्, तद्यथा-महारम्भकृतमेतत् सावद्यकृतमेतत् तथा प्रयत्नकृतमेतत्, एवं प्रसादनीयदर्शनादिकां भाषामसावद्यां भाषेतेति ॥

(मूलं) से भिक्खू वा २ असणं वा० उवक्खडियं तहाविहं नो एवं वइज्जा,तं०-सुकडेत्ति वा सुट्ठुकडे इ वा साहुकडे इ वा कल्लाणे इ वा करणिज्जे इ वा, एयप्पगारं भासं सावज्जं जाव नो भासिज्जा ॥ से भिक्खू वा २ असणं वा ४ उवक्खडियं पेहाय एवं वइज्जा, तं०-आरंभकडेत्ति वा सावज्जकडेत्ति वा पयत्तकडे इ वा भद्दयं भद्देति वा ऊसढं ऊसढे इ वा रसियं २ मणुन्नं २ एयप्पगारं भासं असावज्जं जाव भासिज्जा ॥ (सू. ३६०)

एवमशनादिगतप्रतिषेधसूत्रद्वयमपि नेयमिति, नवरम् 'ऊसढ'न्ति उच्छ्रितं वर्णगन्धाद्युपेतमिति ॥ पुनरभाषणीयामाह, किञ्च—

(मूलं) से भिक्खू वा भिक्खुणी वा मणुस्सं वा गोणं वा महिसं वा मिगं वा पसुं वा पक्खि वा सरीसिवं वा जलचरं वा सेत्तं परिवूढकायं पेहाए नो एवं वइज्जा-थूले इ वा पमेइले इ वा वट्टे इ वा वज्झे इ वा पाइमे इ वा, एयप्पगारं भासं सावज्जं जाव नो भासिज्जा ॥ से भिक्खू वा भिक्खुणी वा मणुस्सं वा जाव जलयरं वा सेत्तं परिवूढकायं पेहाए एवं वइज्जा-परिवूढकाएत्ति वा उवचियकाएत्ति वा थिरसंघयणेत्ति वा चियमंससोणिएत्ति वा बहुपडिपुन्नइंदिएत्ति वा, एयप्पगारं भासं असावज्जं जाव भासिज्जा ॥ से भिक्खू वा २ विरूवरूवाओ गाओ पेहाए नो एवं वइज्जा, तंजहा-गाओ दुज्झाओत्ति वा दम्मेत्ति वा गोरहत्ति वा वाहिमत्ति वा रहजोग्गत्ति वा, एयप्पगारं भासं सावज्जं जाव नो भासिज्जा ॥ से भि० विरूवरूवाओ गाओ पेहाए एवं वइज्जा, तंजहा-जुवंगवित्ति वा धेणुत्ति वा रसवइत्ति वा हस्से इ वा महल्ले इ वा महव्वए इ वा संवहणित्ति वा, एयप्पगारं भासं असावज्जं जाव अभिकंख भासिज्जा ॥ से भिक्खू वा० तहेव गंतुमुज्जाणाइं पव्वयाइं वणाणि

प्र. आ.
३९०

या रुक्खा महल्ले पेहाए नो एवं वइज्जा, तं०—पासायजोग्गाति वा तोरणजोग्गाइ वा गिहजोग्गाइ वा फलिहजो० अग्गलजो० नावाजो० उदग० दोणजो० पीढचंगबेरनंगलकुलियजंतलट्ठीनाभिगंडीआसणजो० सयणजाणउवस्सयजोग्गाइं वा, एयप्पगारं० नो भासिज्जा ॥ से भिक्खू वा० तहेव गंतु० एवं वइज्जा, तंजहा—जाइमंता इ वा दीहवट्टा इ वा महालया इ वा पयायसाला इ वा विडिमसाला इ वा पासाइया इ वा जाव पडिरूवाति वा एयप्पगारं भासं असावज्जं जाव भासिज्जा ॥ से भिक्खू० बहुसंभूया वणफला अंबा पेहाए एवं वइज्जा, तं०—असंथडा इ वा बहुनिवट्टिमफला इ वा बहुसंभूया इ वा भूयरुविंत्ति वा, एयप्पगारं भा० असा० ॥ से० बहुसंभूया ओसही पेहाए तहावि ताओ न एवं वइज्जा, तंजहा—पक्का इ वा नीलिया इ वा छवीइया इ वा लाइमा इ वा भज्जिमा इ वा बहुखज्जा इ वा, एयप्पगा० नो भासिज्जा ॥ से० बहु० पेहाए तहावि एवं वइज्जा, तं०—रूढा इ वा बहुसंभूया इ वा थिरा इ वा ऊसढा इ वा गब्भिया इ वा पसूया इ वा ससारा इ वा, एयप्पगारं भासं असावज्जं जाव भासि० ॥ ( सू. ३६१ )

स भिक्षुर्गवादिकं 'परिवृद्धकायं' पुष्टकायं प्रेक्ष्य नैतद्वदेत्, तद्यथा—स्थूलोऽयं प्रमेदुरोऽयं तथा वृत्तस्तथा वध्यो वहनयोग्यो वा, एवं पचनयोग्यो देवतादेः पातनयोग्यो वेति, एवमादिकामन्यामप्येवंप्रकारां सावद्यां भाषां नो भाषेतेति ॥ भाषणविधिमाह—स भिक्षुर्गवादिकं परिवृद्धकायं प्रेक्ष्यैवं वदेत्, तद्यथा—परिवृद्धकायोऽयमित्यादि सुगममिति ॥ तथा—स भिक्षुः 'विरूपरूपाः' नानाप्रकारा गाः समीक्ष्य नैतद्वदेत्, तद्यथा—दोहनयोग्या एता गावो दोहनकालो वा वर्त्तते, तथा 'दम्यः' दमनयोग्योऽयं 'गोरहकः'

१०

कल्होटकः, एवं वाहनयोग्यो रथयोग्यो वेति, एवंप्रकारां सावद्यां भाषां भाषेतेति ॥ सति कारणे विधिमाह—स भिक्षुर्नानाप्रकारा गाः प्रेक्ष्य प्रयोजने सत्येवं ब्रूयात्, तद्यथा—'जुवंगवे'त्ति युवाऽयं गौः धेनुरिति वा रसवतीति वा, (ह्रस्वः महान् महाव्ययो वा) एवं संवहन इति, एवंप्रकारामसावद्यां भाषां भाषेतेति ॥ किञ्च—स भिक्षुरुद्यानादिकं गत्वा महतो वृक्षान् प्रेक्ष्य नैवं वदेत्, तद्यथा—प्रासादादियोग्या अमी वृक्षा इति, एवमादिकां सावद्यां भाषां नो भाषेतेति ॥ यत्तु वदेत्तदाह—स भिक्षुस्तथैवोद्यानादिकं गत्वैवं वदेत्, तद्यथा—'जातिमन्तः' सुजातय इति, एवमादिकां भाषामसावद्यां संयत एव भाषेतेति ॥ किञ्च—स भिक्षुर्बहुसंभूतानि वृक्षफलानि प्रेक्ष्य नैवं वदेत्, तद्यथा—एतानि फलानि 'पक्वानि' पाकप्राप्तानि, तथा 'पाकखाद्यानि' बद्धास्थीनि गर्त्ताप्रक्षेपकोद्रवपलालादिना विपच्य भक्षणयोग्यानीति, तथा 'वेलोचितानि' पाकातिशयतो ग्रहणकालोचितानि, अतः परं कालं न विषहन्तीत्यर्थः, 'टालानि' अनवबद्धास्थीनि, कोमलास्थीनीति यदुक्तं भवति, तथा 'द्वैधिकानि' इति पेशीसम्पादनेन द्वैधीभावकरणयोग्यानि वेति, एवमादिकां भाषां फलगतां सावद्यां नो भाषेत ॥ यदभिधानीयं तदाह—स भिक्षुर्बहुसम्भूतफलानाम्रान् प्रेक्ष्यैवं वदेत्, तद्यथा—'असमर्थाः' अतिभारेण न शक्नुवन्ति फलानि धारयितुमित्यर्थः, एतेन पक्वार्थ उक्तः, तथा 'बहुनिर्वर्त्तितफलाः' बहूनि निर्वर्त्तितानि फलानि येषु ते तथा, एतेन पाकखाद्यार्थ उक्तः, तथा 'बहुसम्भूताः' बहूनि संभूतानि पाकातिशयतो ग्रहणकालोचितानि फलानि येषु ते तथा, अनेन वेलोचितार्थ उक्तः, तथा 'भूतरूपाः इति वा' भूतानि रूपाण्यनवबद्धास्थीनि कोमलफलरूपाणि येषु ते तथा, अनेन टालाद्यर्थ उपलक्षितः, एवंभूता एते आम्राः, आम्रग्रहणं प्रधानोपलक्षणम्, एवंभूतामनवद्यां भाषां भाषेतेति ॥ किञ्च—स भिक्षुर्बहुसम्भूता ओषधीर्वीक्ष्य तथाऽप्येता नैतद्वदेत्, तद्यथा—पक्वा नीला आर्द्राः छविमत्यः 'लाइमाः' लाजायोग्या रोपणयोग्या

वा, तथा 'भज्जिमाओ'त्ति पचनयोग्या भर्जनयोग्या वा 'बहुखज्जा' बहुभक्ष्याः पृथुककरणयोग्या वेति, एवंप्रकारां सावद्यां भाषां नो भाषेत ॥ यथा च भाषेत तदाह–स भिक्षुर्बहुसंभूता ओषधीः प्रेक्ष्यैतद् ब्रूयात्, तद्यथा–रूढा इत्यादिकामसावद्यां भाषां भाषेत ॥ किञ्च–

(मूलं) से भिक्खू वा० तहप्पगाराइं सद्दाइं सुणिज्जा तहावि एयाइं नो एवं वइज्जा, तंजहा–सुसद्देत्ति वा दुसद्देत्ति वा, एयप्पगारं भासं सावज्जं नो भासिज्जा ॥ से भि० तहावि ताइं एवं वइज्जा, तंजहा–सुसद्दं सुसद्दित्ति वा दुसद्दं दुसद्दित्ति वा, एयप्पगारं असावज्जं जाव भासिज्जा, एवं रूवाइं किण्हेत्ति वा ५ गंधाइं सुरभिगंधत्ति वा २ रसाइं तित्ताणि वा ५ फासाइं कक्खडाणि वा ८॥ (सू. ३६२)

स भिक्षुर्यद्यप्येतान् शब्दान् शृणुयात् तथाऽपि नैवं वदेत्, तद्यथा–शोभनः शब्दोऽशोभनो वा माङ्गलिकोऽमाङ्गलिको वा, इत्ययं न व्याहर्त्तव्यः ॥ विपरीतं त्वाह–यथाऽवस्थितशब्दप्रज्ञापनाविषये एतद्वदेत्, तद्यथा–'सुसद्दं'ति शोभनशब्दं शोभनमेव ब्रूयाद्, अशोभनं त्वशोभनमिति ॥ एवं रूपादिसूत्रमपि नेयम् ॥ किञ्च–

(मूलं) से भिक्खू वा० वंता कोहं च माणं च मायं च लोभं च अणुवीइ निट्ठाभासी निसम्मभासी अतुरियभासी विवेगभासी समियाए संजए भासं भासिज्जा ५ ॥ एवं खलु० सया जइ० (सू. ३६३) त्तिबेमि ॥ २–१–४–२ ॥ भाषाऽध्ययनं चतुर्थम् ॥ २–१–४ ॥

स भिक्षुः क्रोधादिकं वान्त्वैवंभूतो भवेत्, तद्यथा–अनुविचिन्त्य निष्ठाभाषी निशम्यभाषी अत्वरितभाषी विवेकभाषी भाषासमित्युपेतो भाषां भाषेत, एतत्तस्य भिक्षोः सामग्र्यमिति ॥ चतुर्थमध्ययनं भाषाजाताख्यं २–१–४–२ समाप्तमिति ॥



# अथ वस्त्रैषणाऽध्ययनम् ।

चतुर्थाध्ययनानन्तरं पञ्चममारभ्यते, अस्य चायमभिसम्बन्धः–इहानन्तराध्ययने भाषासमितिः प्रतिपादिता, तदनन्तरमेषणासमितिर्भवतीति सा वस्त्रगता प्रतिपाद्यते, इत्यनेन सम्बन्धेनायातस्यास्याध्ययनस्य चत्वार्यनुयोगद्वाराणि उपक्रमादीनि भवन्ति, तत्रोपक्रमान्तर्गतोऽध्ययनार्थाधिकारो वस्त्रैषणा प्रतिपाद्येति, उद्देशार्थाधिकारदर्शनार्थं तु निर्युक्तिकार आह–

**पढमे गहणं बीए धरणं पगयं तु दव्ववत्थेणं । एमेव होइ पायं भावे पायं तु गुणधारी ॥ ३१५ ॥**

प्रथमे उद्देशके वस्त्रग्रहणविधिः प्रतिपादितः द्वितीये तु धरणविधिरिति ॥ नामनिष्पन्ने तु निक्षेपे वस्त्रैषणेति, तत्र वस्त्रस्य नामादिश्चतुर्विधो निक्षेपः, तत्रापि नामस्थापने क्षुण्णे, द्रव्यवस्त्रं त्रिधा, तद्यथा–एकेन्द्रियनिष्पन्नं कार्पासिकादि, विकलेन्द्रियनिष्पन्नं चीनांशुकादि, पञ्चेन्द्रियनिष्पन्नं कम्बलरत्नादि, भाववस्त्रं त्वष्टादशशीलाङ्गसहस्राणीति, इह तु द्रव्यवस्त्रेणाधिकारः, तदाह निर्युक्तिकारः–'पगयं तु दव्ववत्थेणं'ति । वस्त्रस्येव पात्रस्यापि निक्षेप इति मन्यमानोऽत्रैव पात्रस्यापि निक्षेपातिदेशं निर्युक्तिकारो गाथापश्चार्द्धेनाह–'एवमेव' इति, वस्त्रवत्पात्रस्यापि चतुर्विधो निक्षेपः, तत्र द्रव्यपात्रमेकेन्द्रियादिनिष्पन्नं, भावपात्रं साधुरेव गुणधारीति । साम्प्रतं सूत्रानुगमेऽस्खलितादिगुणोपेतं सूत्रमुच्चारणीयं, तच्चेदम्–

(मूलं) से भि० अभिकंखिज्जा वत्थं एसित्तए, से जं पुण वत्थं जाणिज्जा, तंजहा–जंगियं वा भंगियं वा साणियं वा पोत्तगं वा खोमियं वा तूलकडं वा, तहप्पगारं वत्थं वा जे निग्गंथे तरुणे जुगवं बलवं अप्पायंके थिरसं-

पयणे से एगं वत्थं धारिज्जा नो बीयं, जा निग्गंथी सा चत्तारिसंघाडीओ धारिज्जा, एगं दुहत्थवित्थारं दो तिहत्थवित्थाराओ एगं चउहत्थवित्थारं, तहप्पगारेहिं वत्थेहि असंधिज्जमाणेहिं, अह पच्छा एगमेगं संसिविज्जा ॥(सू. ३६४)

स भिक्षुरभिकाङ्क्षेद्वस्त्रमन्वेष्टुं तत्र यत्पुनरेवंभूतं वस्त्रं जानीयात्, तद्यथा–'जंगियं'ति जङ्गमोष्ट्राद्यूर्णानिष्पन्नं, तथा 'भंगियं'ति नानाभङ्गिकविकलेन्द्रियलालानिष्पन्नं, तथा 'साणयं'ति सणवल्कलनिष्पन्नं 'पोत्तगं'ति ताड्यादिपत्रसङ्घातनिष्पन्नं 'खोमियं'ति कार्पासिकं 'तूलकडं'ति अर्कादितूलनिष्पन्नम्, एवं तथाप्रकारमन्यदपि वस्त्रं धारयेदित्युत्तरेण सम्बन्धः। येन साधुना यावन्ति धारणीयानि तद्दर्शयति–तत्र यस्तरुणो निर्ग्रन्थः–साधुर्यौवने वर्त्तते 'बलवान्' समर्थः 'अल्पातङ्कः' अरोगी 'स्थिरसंहननः' दृढकायो दृढधृतिश्च, स एवंभूतः साधुरेकं 'वस्त्रं' प्रावरणं त्वक्त्राणार्थं धारयेत्, नो द्वितीयमिति, यदपरमाचार्यादिकृते बिभर्त्ति तस्य स्वयं परिभोगं न कुरुते, यः पुनर्बालो दुर्बलो वृद्धो वा यावदल्पसंहननः स यथासमाधि द्व्यादिकमपि धारयेदिति, जिनकल्पिकस्तु यथाप्रतिज्ञमेव धारयेत्, न तत्रापवादोऽस्ति। या पुनर्निर्ग्रन्थी सा चतस्रः संघाटिका धारयेत्, तद्यथा–एकां द्विहस्तपरिमाणां यां प्रतिश्रये तिष्ठन्ती प्रावृणोति, द्वे त्रिहस्तपरिमाणे, तत्रैकामुज्ज्वलां भिक्षाकाले प्रावृणोति, अपरां बहिर्भूमिगमनावसर इति, तथाऽपरां चतुर्हस्तविस्तरां समवसरणादौ सर्वशरीरप्रच्छादिकां प्रावृणोति, तस्याश्च यथाकृताया अलाभे अथ पश्चादेकमेकेन सार्द्धं सीव्येदिति ॥ किञ्च–

(मूलं) से भि० परं अद्धजोयणमेराए वत्थपडियाए नो अभिसंधारिज्ज गमणाए ॥ (सू. ३६५)

स भिक्षुर्वस्त्रार्थमर्द्धयोजनात्परतो गमनाय मनो न विदध्यादिति ॥

(मूलं) से भि० से जं असिंसपडियाए एगं साहम्मियं समुद्दिस्स पाणाइं जहा पिंडेसणाए भाणियव्वं ॥ एवं

बहवे साहम्मिया एगं साहम्मिणिं बहवे साहम्मिणीओ बहवे समणमाहण० तहेव पुरिसंतरकडा जहा पिंडेसणाए ॥ (सू. ३६६)

सूत्रद्वयमाधाकर्मिकोद्देशेन पिण्डैषणावन्नेयमिति ॥ साम्प्रतमुत्तरगुणानधिकृत्याह—

(मूलं) से भि० से जं० असंजए भिक्खुपडियाए कीयं वा धोयं वा रत्तं वा घट्ठं वा मट्ठं वा संपधूमियं वा तहप्पगारं वत्थं अपुरिसंतरकडं जाव नो०, अह पु० पुरिसं० जाव पडिगाहिज्जा ॥ (सू. ३६७)

'साधुप्रतिज्ञया' साधुमुद्दिश्य गृहस्थेन क्रीतधौतादिकं वस्त्रमपुरुषान्तरकृतं न प्रतिगृह्णीयात्, पुरुषान्तरस्वीकृतं तु गृह्णीयादिति पिण्डार्थः ॥ अपि च—

(मूलं) से भिक्खू वा २ से जाइं पुण वत्थाइं जाणिज्जा विरूवरूवाइं महद्धणमुल्लाइं, तं०—आईणगाणि वा सहिणाणि वा सहिणकल्लाणाणि वा आयाणि वा कायाणि वा खोमियाणि वा दुगुल्लाणि वा पट्टाणि वा मलयाणि वा पत्तुन्नाणि वा अंसुयाणि वा चीणंसुयाणि वा देसरागाणि वा अमिलाणि वा गज्जफलाणि वा फालियाणि वा कोयवाणि वा कंबलगाणि वा पावराणि वा, अन्नयराणि वा तह० वत्थाइं महद्धणमुल्लाइं लाभे संते नो पडिगाहिज्जा ॥ से भि० आइण्णपाउरणाणि वत्थाणि जाणिज्जा, तं०—उद्दाणि वा पेसाणि वा पेसलाणि वा किण्हमिगाईणगाणि वा नीलमिगाईणगाणि वा गोरमि० कणगाणि वा कणगकंताणि वा कणगपट्टाणि वा कणगखइयाणि वा कणगफुसियाणि वा वग्घाणि वा विवग्घाणि वा [ विगाणि वा ] आभरणाणि वा आभ-

प्र. आ. ३९३

रणविचित्ताणि वा, अन्नयराणि तह० आईणपाउरगाणि वत्थाणि लाभे संते नो० ॥ (सू. ३६८)

स भिक्षुर्यानि पुनर्महाधनमूल्यानि जानीयात्, तद्यथा—'आजिनानि' मूषकादिचर्मनिष्पन्नानि श्लक्ष्णानि—सूक्ष्माणि च तानि वर्णच्छव्यादिभिश्च कल्याणानि—शोभनानि वा सूक्ष्मकल्याणानि, 'आयाणि'त्ति क्वचिद्देशविशेषेऽजाः सूक्ष्मरोमवत्यो भवन्ति तत्पक्ष्मनिष्पन्नानि आजकानि भवन्ति, तथा क्वचिद्देशे इन्द्रनीलवर्णः कर्पासो भवति तेन निष्पन्नानि कायकानि, 'क्षौमिकं' सामान्यकार्पासिकं 'दुकूलं' गौडविषयविशिष्टकार्पासिकं, पट्टसूत्रनिष्पन्नानि पट्टानि 'मलयानि' मलयजसूत्रोत्पन्नानि 'पन्नुन्नं'ति वल्कलतन्तुनिष्पन्नम् अंशुकचीनांशुकादीनि नानादेशेषु प्रसिद्धाभिधानानि, तानि च महार्घमूल्यानीतिकृत्वा ऐहिकामुष्मिकापायभयाल्लाभे सति न प्रतिगृह्णीयादिति ॥ स भिक्षुर्यानि पुनरेवंभूतानि अजिननिष्पन्नानि 'प्रावरणीयानि' वस्त्राणि जानीयात्, तद्यथा—'उद्दाणि व'त्ति उद्राः—सिन्धुविषये मत्स्यास्तत्सूक्ष्मचर्मनिष्पन्नानि उद्राणि 'पेसाणि'त्ति सिन्धुविषय एव सूक्ष्मचर्माणः पशवस्तच्चर्मनिष्पन्नानीति 'पेसलाणि'त्ति तच्चर्मसूक्ष्मपक्ष्मनिष्पन्नानि कृष्णनीलगौरमृगाजिनानि प्रतीतानि 'कनकानि च' यानि कनकरसच्छुरितानि, तथा कनकस्येव कान्तिर्येषां तानि कनककान्तीनि, तथा कृतकनकरसपट्टानि कनकपट्टानि एवं 'कनकखचितानि' कनकरसस्तबकाञ्चितानि कनकस्पृष्टानि तथा व्याघ्रचर्माणि एवं 'वग्घाणि'त्ति व्याघ्रचर्मविचित्रितानि 'आभरणानि' आभरणप्रधानानि 'आभरणविचित्राणि' गिरिविडकादिविभूषितानि अन्यानि वा तथाप्रकारान्यजिनप्रावरणानि लाभे सति न प्रतिगृह्णीयादिति ॥ साम्प्रतं वस्त्रग्रहणाभिग्रहविशेषमधिकृत्याह—



(मूलं) इच्चेइयाइं आयतणाइं उवाइकम्म अह भिक्खू जाणिज्जा चउहिं पडिमाहिं वत्थं एसित्तए, तत्थ खलु

इमा पढमा पडिमा, से भि० २ उद्देसिय वत्थं जाइज्जा, तं०-जंगियं वा जाव तूलकडं वा, तह० वत्थं सयं वा णं जाइज्जा, परो० फासुयं० पडि०, पढमा १। अहावरा दुच्चा पडिमा-से भि० पेहाए वत्थं जाइज्जा गाहावई वा० कम्मकरी वा, से पुव्वामेव आलोइज्जा-आउसोत्ति वा २ दाहिसि मे इत्तो अन्नयरं वत्थं ?, तहप्प० वत्थं सयं वा० परो० फासुयं एस० लाभे० पडि०, दुच्चा पडिमा २। अहावरा तच्चा पडिमा-से भिक्खू वा० से जं पुण० तं अंतरिज्जं वा तहप्पगारं वत्थं सयं० पडि०, तच्चा पडिमा ३। अहावरा चउत्था पडिमा-से० उज्झिय-धम्मियं वत्थं जाइज्जा जं चऽन्ने बहवे समण० वणीमगा नावकंखंति तहप्प० उज्झिय० वत्थं सयं० परो० फासुयं जाव प०, चउत्था पडिमा ४॥ इच्चेयाणं चउण्हं पडिमाणं जहा पिंडेसणाए॥ सिया णं एताए एसणाए एस-माणं परो वइज्जा-आउसंतो समणा! इज्जाहि तुमं मासेण वा दसराएण वा पंचराएण वा सुते सुततरे वा, तो ते वयं अन्नयरं वत्थं दाहामो, एयप्पगारं निग्घोसं सुच्चा नि० से पुव्वामेव आलोइज्जा-[आउ० स०! पुव्वामेव आलोइज्जा]-आउसोत्ति वा! २ नो खलु मे कप्पइ एयप्पगारं संगारं पडिसुणित्तए, अभिकंखसि मे दाउं इयाणिमेव दलयाहि, से णेवं वयंतं परो वइज्जा-आउ० स०! अणुगच्छाहि तो ते वयं अन्नं वत्थं दाहामो, से पुव्वामेव आलोइज्जा-आउसोत्ति! वा २ नो खलु मे कप्पइ संगारवयणे पडिसुणित्तए०, से सेवं वयंतं परो णेया वइज्जा-आउसोत्ति वा भइणित्ति वा! आहरेयं वत्थं समणस्स दाहामो, अवियाइं वयं पच्छावि अप्पणो सय-ट्ठाए पाणाइं ४ समारंभ समुद्दिस्स जाव चेइस्सामो, एयप्पगारं निग्घोसं सुच्चा नियमम तहप्पगारं वत्थं अफा-

सुअं जाव नो पडिगाहिज्जा ॥ सिआ णं परो नेता वइज्जा–आउसोत्ति ! वा २ आहर एयं वत्थं सिणाणेण वा ४ आघंसित्ता वा प० समणस्स णं दाहामो, एयप्पगारं निग्घोसं सुच्चा नि० से पुव्वामेव० आउ० भ० ! मा एयं तुमं वत्थं सिणाणेण वा जाव पघंसाहि वा, अभि० एमेव दलयाहि, से सेवं वयंतस्स परो सिणाणेण वा पघंसित्ता दलइज्जा, तहप्प० वत्थं अफा० नो प० ॥ से णं परो नेता वइज्जा०–भ० ! आहर एयं वत्थं सीओदगवियडेण वा २ उच्छोलेत्ता वा पहोलेत्ता वा समणस्स णं दाहामो०, एय० निग्घोसं तहेव नवरं मा एयं तुमं वत्थं सीओदग० उसि० उच्छोलेहि वा पहोलेहि वा, अभिकंखसि, सेसं तहेव जाव नो पडिगाहिज्जा ॥ से णं परो ने० आ० भ० ! आहरेयं वत्थं कंदाणि वा जाव हरियाणि वा विसोहित्ता समणस्स णं दाहामो, एय० निग्घोसं तहेव, नवरं मा एयाणि तुमं कंदाणि वा जाव विसोहेहि, नो खलु मे कप्पइ एयप्पगारे वत्थे पडिग्गाहित्तए, से सेवं वयंतस्स परो जाव विसोहित्ता दलइज्जा, तहप्प० वत्थं अफासुअं नो प० ॥ सिया से परो नेता वत्थं निसिरिज्जा, से पुव्वा० आ० भ० ! तुमं चेव णं संतियं वत्थं अंतोअंतेणं पडिलेहिज्जिस्सामि, केवली बूया आ०, वत्थंतेण बद्धे सिया कुंडले वा गुणे वा हिरण्णे वा सुवण्णे वा मणी वा जाव रयणावली वा पाणे वा बीए वा हरिए वा, अह भिक्खू णं पु० जं पुव्वामेव वत्थं अंतोअंतेण पडिलेहिज्जा ॥ ( सू. २६९ )



–'इत्येतानि' पूर्वोक्तानि वक्ष्यमाणानि वाऽऽयतनान्यतिक्रम्याथ भिक्षुश्चतसृभिः 'प्रतिमाभिः' वक्ष्यमाणैरभिग्रहविशेषैर्वस्त्रमन्वेष्टुं जानीयात्, तद्यथा–'उद्दिष्टं' प्राक् सङ्कल्पितं वस्त्रं याचिष्ये, प्रथमा प्रतिमा १, तथा 'प्रेक्षितं' दृष्टं सद् वस्त्रं याचिष्ये, नापरमिति

द्वितीया २, तथा अन्तरपरिभोगेन उत्तरीयपरिभोगेन वा शय्यातरेण परिभुक्तप्रायं वस्त्रं ग्रहीष्यामीति तृतीया ३, तथा तदेवोत्सृष्टधार्मिकं वस्त्रं ग्रहीष्यामीति चतुर्थी प्रतिमेति ४ सूत्रचतुष्टयसमुदायार्थः। आसां चतसृणां प्रतिमानां शेषो विधिः पिण्डैषणावन्नेय इति ॥ किञ्च-'स्यात्' कदाचित् 'णम्' इति वाक्यालङ्कारे 'एतया' अनन्तरोक्तया वस्त्रैषणया वस्त्रमन्वेषयन्तं साधुं परो वदेद्, यथा-आयुष्मन्! श्रमण! त्वं मासादौ गते समागच्छेः ततोऽहं वस्त्रादिकं दास्यामि, इत्येवं तस्य न शृणुयात्, शेषं सुगमं यावदिदानीमेव ददस्वेति, एवं वदन्तं साधुं परो ब्रूयाद्, यथा-अनुगच्छ तावत्पुनः स्तोकवेलायां समागताय दास्यामि, इत्येतदपि न प्रतिशृणुयाद्, यदं चेदानीमेव ददस्वेति, तदेवं पुनरपि वदन्तं साधुं 'परो' गृहस्थो नेताऽपरं भगिन्यादिकमाहूय वदेद् यथाऽऽनयैतद् वस्त्रं येन श्रमणाय दीयते, वयं पुनरात्मार्थं भूतोपमर्देनापरं करिष्याम इति, एतत्प्रकारं वस्त्रं पश्चात्कर्मभयाल्लाभे सति न प्रतिगृह्णीयादिति ॥ तथा-स्यात्पर एवं वदेद्, यथा-स्नानादिना सुगन्धिद्रव्येणाघर्षणादिकां क्रियां कृत्वा दास्यामि, तदेतन्निशम्य प्रतिषेधं विदध्यात्, अथ प्रतिषिद्धोऽप्येवं कुर्यात् ततो न प्रतिगृह्णीयादिति ॥ एवमुदकादिना धावनादिसूत्रमपि ॥ स परो यदेद्याचितः सन् यथा कन्दादीनि वस्त्रादपनीय दास्यामीति, अत्रापि पूर्ववन्निषेधादिकश्चर्च इति ॥ किञ्च-स्यात्परो याचितः सन् कदाचिद्वस्त्रं 'निसृजेत्' दद्यात्, तं च ददमानमेवं ब्रूयाद्, यथा-त्वदीयमेवाहं वस्त्रमन्तोपान्तेन प्रत्युपेक्षिष्ये, नैवाप्रत्युपेक्षितं गृह्णीयाद्, यतः केवली ब्रूयात्कर्मोपादानमेतत्, किमिति?, यतस्तत्र किञ्चित्कुण्डलादिकमाभरणजातं बद्धं भवेत्, सचित्तं वा किंचिद् भवेद्, अतः साधूनां पूर्वोपदिष्टमेतत्प्रतिज्ञादिकं यद्वस्त्रं प्रत्युपेक्ष्य गृह्णीयादिति ॥ किञ्च—

(मूलं) से भि० से जं० सअंडं० ससंताणं तहप्प० वत्थं अफा० नो प०॥ से भि० से जं अप्पंडं जाव अप्पसंताणगं

अनलं अथिरं अधुवं अधारणिज्जं रोइज्जंतं न रुच्चइ तह अफा० नो प०॥ से भि० से जं० अप्पंडं जाव अप्पसंताणगं अलं थिरं धुवं धारणिज्जं रोइज्जंतं तह० वत्थं फासु० पडि० ॥ से भि० नो नवए मे वत्थेत्तिकट्टु नो बहुदेसिएण सिणाणेण वा जाव पघंसिज्जा ॥ से भि० नो नवए मे वत्थेत्तिकट्टु नो बहुदे० सीओदगवियडेण वा २ जाव पहोइज्जा ॥ से भिक्खू वा २ दुब्भिगंधे मे वत्थित्तिकट्टु नो बहु० सिणाणेण तहेव बहुसीओ० उस्सिं० आलावओ ॥ ( सू. ३७० )



स भिक्षुर्यत्पुनः साण्डादिकं वस्त्रं जानीयात् तन्न प्रतिगृह्णीयादिति ॥ स भिक्षुर्यत्पुनरेवंभूतं वस्त्रं जानीयात्, तद्यथा—अल्पाण्डं यावदल्पसन्तानकं किन्तु 'अनलम्' अभीष्टकार्यासमर्थं हीनादित्वात्, तथा 'अस्थिरं' जीर्णम् 'अध्रुवं' स्वल्पकालानुज्ञापनात्, तथा 'अधरणीयम्' अप्रशस्तप्रदेशखञ्जनादिकलङ्काङ्कितत्वात्, तथा चोक्तम्—"चत्तारि देविया भागा, दो य भागा य माणुसा । आसुरा य दुवे भागा, मज्झे वत्थस्स रक्खसो ॥१॥ देविएसुत्तमो लाभो, माणुसेसु अ मज्झिमो । आसुरेसु अ गेलन्नं, मरणं जाण रक्खसे ॥२॥" स्थापना चेयम् ॥ किञ्च—"लक्खणहीणो उवही उवहणई नाणदंसणचरित्तं" इत्यादि, तदेवंभूतमप्रायोग्यं 'रोच्यमानं' प्रशस्यमानं दीयमानमपि वा दात्रा न रोचते, साधवे न कल्पत इत्यर्थः। एतेषां चानलादीनां चतुर्णां पदानां षोडश भङ्गा भवन्ति, तत्राद्याः पञ्चदशाशुद्धाः, शुद्धस्त्वेकः षोडशस्तमधिकृत्य सूत्रमाह—स भिक्षुर्यत्पुनरेवंभूतं वस्त्रं चतुष्पदविशुद्धं जानीयात्तच्च लाभे



१ चत्वारो दैविका भागा द्वौ च भागौ च मानुषौ । आसुरौ च द्वौ च भागौ मध्ये वस्त्रस्य राक्षसौ ॥१॥ दैविकेषूत्तमो लाभो मानुष्ययोश्च मध्यमः । आसुरयोश्च ग्लानत्वं मरणं जानीहि राक्षसे ॥२॥ २ लक्षणहीन उपधिरुपहन्ति ज्ञानदर्शनचारित्राणि.

सति गृह्णीयादिति पिण्डार्थः ॥ किञ्च–स भिक्षुः 'नवम्' अभिनवं वस्त्रं मम नास्तीतिकृत्वा ततः 'बहुदेश्येन' ईषद्बहुना 'स्नानादिकेन' सुगन्धिद्रव्येणाघृष्य प्रघृष्य वा नो शोभनत्वमापादयेदिति ॥ तथा–स भिक्षुः 'नवम्' अभिनवं वस्त्रं मम नास्तीतिकृत्वा ततस्तदेव 'नो' नैव शीतोदकेन, बहुशो न धावनादि कुर्यादिति ॥ अपि च–स भिक्षुर्यद्यपि मलोपचितत्वाद्दुर्गन्धि वस्त्रं स्यात् तथाऽपि तदपनयनार्थं सुगन्धिद्रव्योदकादिना नो धावनादि कुर्याद् गच्छनिर्गतः, तदन्तर्गतस्तु यतनया प्रासुकोदकादिना लोकोपघातसंसक्तिभयात् मलापनयनार्थं कुर्यादपीति ॥ धौतस्य प्रतापनविधिमधिकृत्याह—

(मूलं) से भिक्खू वा० अभिकंखिज्ज वत्थं आयावित्तए वा प०, तहप्पगारं वत्थं नो अणंतरहियाए जाव पुढवीए संताणए आयाविज्ज वा प० ॥ से भि० वत्थं आ० प० त० वत्थं थूणंसि वा गिहेलुगंसि उसुयालंसि वा कामजलंसि वा अन्नयरे तहप्पगारे अंतलिक्खजाए दुब्बद्धे दुन्निक्खित्ते अणिकंपे चलाचले नो आ० नो प०॥ से भिक्खू वा० अभि० आयावित्तए वा तह० वत्थं कुलियंसि वा भित्तंसि वा सिलंसि वा लेलुंसि वा अन्नयरे वा तह० अंतलि० जाव नो आयाविज्ज वा प० ॥ से भि० वत्थं आया० प० तह० वत्थं खंधंसि वा मं० मा० पासा० ह० अन्नयरे वा तह० अंतलि० जाव नो आयाविज्ज वा० प०॥ से० तमायाए एगंतमवक्कमिज्जा २ अहे झामथंडिल्लंसि वा जाव अन्नयरंसि वा तहप्पगारंसि थंडिल्लंसि पडिलेहिय २ पमज्जिय २ तओ सं० वत्थं आयाविज्ज वा पया०, एयं खलु० सया जइज्जासि (सू. ३७१) त्तिबेमि॥ २-१-५-१ ॥ वत्थेसणस्स पढमो उद्देसो समत्तो ॥

स भिक्षुरव्यवहितायां भूमौ वस्त्रं नातापयेदिति ॥ किञ्च–स भिक्षुर्यद्यभिकाङ्क्षेद्वस्त्रमातापयितुं ततः स्थूणादौ चलाचले स्थूणा-

दिवस्त्रपतनभयान्नातापयेत्, तत्र गिहेलुकः-उम्बरः 'उसूयालं' उदूखलं 'कामजलं' स्नानपीठमिति ॥ स भिक्षुर्भित्तिशिलादौ पतनादिभयाद्वस्त्रं नातापयेदिति ॥ स भिक्षुः स्कन्धमञ्चकप्रासादादावन्तरिक्षजाते वस्त्रं पतनादिभयादेव नातापयेदिति ॥ यथा चातापयेत्तथा चाह-स भिक्षुस्तद्वस्त्रमादाय स्थण्डिलादि प्रत्युपेक्ष्य चक्षुषा प्रमृज्य च रजोहरणादिना तत आतापनादिकं कुर्यादिति, एतत्तस्य भिक्षोः सामग्र्यमिति ॥ पञ्चमस्य वस्त्राध्ययनस्य प्रथमोद्देशकः समाप्तः ॥ २-१-५-१ ॥

---

उक्तः प्रथमोद्देशकः, साम्प्रतं द्वितीयः समारभ्यते, अस्य चायमभिसम्बन्धः-इहान्तरोद्देशके वस्त्रग्रहणविधिरभिहितस्तदनन्तरं धरणविधिरभिधीयते, इत्यनेन सम्बन्धेनायातस्यास्योद्देशकस्यादिसूत्रम्—

(मूलं) से भिक्खू वा० अहेसणिज्जाइं वत्थाइं जाइज्जा, अहापरिग्गहियाइं वत्थाइं धारिज्जा, नो धोइज्जा नो रएज्जा नो धोयरत्ताइं वत्थाइं धारिज्जा, अपलिउंचमाणो गामंतरेसु० ओमचेलिए, एयं खलु वत्थधारिस्स सामग्गियं ॥ से भि० गाहावइकुलं पविसिउकामे सव्वं चीवरमायाए गाहावइकुलं निक्खमिज्ज वा पविसिज्ज वा, एवं बहिया विहारभूमिं वा वियारभूमिं वा गामाणुगामं वा दूइज्जिज्जा, अह पु० तिव्वदेसियं वा वासं वासमाणं पेहाए जहा पिंडेसणाए नवरं सव्वं चीवरमायाए ॥ (सू. ३७२)

स भिक्षुः 'यथैषणीयानि' अपरिकर्माणि वस्त्राणि याचेत, यथापरिगृहीतानि च धारयेत् , न तत्र किञ्चित्कुर्यादिति दर्शयति, तद्यथा-न तद्वस्त्रं गृहीतं सत् प्रक्षालयेत् नापि रञ्जयेत्, तथा नापि बाकुशिकतया धौतरक्तानि धारयेत्, तथाभूतानि न गृह्णीयादि-



१०

काहं यावत्पश्चाहं चोपित्वाऽऽगतः, तस्य चैकाकित्वात्स्वपतो वस्त्रमुपहतं, तच्च तथाविधं वस्त्रं तस्य समर्पयतोऽपि वस्त्रस्वामी न गृह्णीयात्, नापि गृहीत्वाऽन्यस्मै दद्यात्, नाप्युच्छिन्नं दद्याद्, यथा गृहाणेदं त्वं पुनः कतिभिरहोभिर्ममान्यद्दद्यात्, नापि तदेव वस्त्रेण परिवर्त्तयेत्, न चापरं साधुमुपसंक्रम्यैतद्वदेत्, तद्यथा-आयुष्मन्! श्रमण! अभिकाङ्क्षसि' इच्छसेवंभूतं वस्त्रं धारयितुं परिभोक्तुं चेति?, यदि पुनरेकाकी कश्चिद्गच्छेत्तस्य तदुपहतं वस्त्रं समर्पयेत्, न स्थिरं—दृढं सत् 'परिच्छिन्द्य परिच्छिन्द्य' खण्डशः २ कृत्वा 'परिष्ठापयेत्' त्यजेत्, तथाप्रकारं वस्त्रं 'ससंधिय'न्ति उपहतं स्वतो वस्त्रस्वामी 'नास्वादयेत्' न परिभुञ्जीत, अपि तु तस्यैवोपहन्तुः समर्पयेत्, अन्यस्मै वैकाकिनो गन्तुः समर्पयेदिति। एवं बहुवचनेनापि नेयमिति॥ किञ्च-'सः' भिक्षुः 'एकः' कश्चिदेवं साध्वाचारमवगम्य ततोऽहमपि प्रातिहारिकं वस्त्रं मुहूर्त्तादिकालमुद्दिश्य याचित्वाऽन्यत्रैकाहादिना वासेनोपहनिष्यामि, ततस्तद्वस्त्रं ममैव भविष्यतीत्येवं मातृस्थानं संस्पृशेत्, न चैतत्कुर्यादिति॥ तथा—

(मूलं) से भि० नो वण्णमंताइं वत्थाइं विवण्णाइं करिज्जा, विवण्णाइं न वण्णमंताइं करिज्जा, अन्नं वा वत्थं लभिस्सामित्तिकट्टु नो अन्नमन्नस्स दिज्जा, नो पामिच्चं कुज्जा, नो वत्थेण वत्थपरिणामं कुज्जा, नो परं उवसंकमित्तु एवं वदेज्जा-आउसो०! समभिकंखसि मे वत्थं धारित्तए वा परिहरित्तए वा?, थिरं वा संतं नो पलिच्छिंदिय २ परिट्ठविज्जा, जहा मेयं वत्थं पावगं परो मन्नइ, परं च णं अदत्तहारी पडिपहे पेहाए तस्स वत्थस्स नियाणाय नो तेसिं भीओ उम्मग्गेणं गच्छिज्जा जाव अप्पुस्सुए, तओ संजयामेव गामाणुगामं दूइज्जिज्जा॥ से भिक्खू वा० गामाणुगामं दूइज्जमाणे अंतरा से विहं सिया, से जं पुण विहं जाणिज्जा-इमंसि खलु विहंसि

५ वस्त्रैषणाध्य. २ उद्देशः
वस्त्रधारणं
५
प्रातिहारिकनिषेधः

त्यर्थः, तथाभूताधौतारक्तवस्त्रधारी च ग्रामान्तरे गच्छन् 'अपलिउंचमाणे'त्ति अगोपयन् सुखेनैव गच्छेद्, यतोऽसौ-'अवमचेलिकः' असारवस्त्रधारी, इत्येतत्तस्य भिक्षोर्वस्त्रधारिणः 'सामग्र्यं' सम्पूर्णो भिक्षुभावः यदेवंभूतवस्त्रधारणमिति, एतच्च सूत्रं जिनकल्पिकोद्देशेन द्रष्टव्यं, वस्त्रधारित्वविशेषणाद् गच्छान्तर्गतेऽपि चाविरुद्धमिति ॥ किञ्च-से इत्यादि पिण्डैषणावन्नेयं, नवरं तत्र तु सर्वं चीवरमादायेति विशेषः ॥ इदानीं प्रातिहारिकोपहतवस्त्रविधिमधिकृत्याह—

(मूलं) से एगइओ मुहुत्तगं २ पाडिहारियं वत्थं जाइज्जा जाव एगाहेण वा दु० ति० चउ० पंचाहेण वा विप्पवसिय २ उवागच्छिज्जा, नो तह वत्थं अप्पणो गिण्हिज्जा, नो अन्नमन्नस्स दिज्जा, नो पामिचं कुज्जा, नो वत्थेण वत्थपरिणामं करिज्जा, नो परं उवसंकमित्ता एवं वइज्जा-आउ० समणा! अभिकंखसि वत्थं धारित्तए वा परिहरित्तए वा?, थिरं वा संतं नो पलिच्छिंदिय २ परिट्ठविज्जा, तहप्पगारं वत्थं ससंधियं वत्थं तस्स चेव निसिरिज्जा, नो णं साइज्जिज्जा ॥ से एगइओ एयप्पगारं निग्घोसं सुच्चा नि० जे भयंतारो तहप्पगाराणि वत्थाणि ससंधियाणि मुहुत्तगं २ जाव एगाहेण वा० ५ विप्पवसिय २ उवागच्छंति, तह० वत्थाणि नो अप्पणा गिण्हंति, नो अन्नमन्नस्स दलयंति, तं चेव जाव नो साइज्जंति, बहुवयणेण भाणियव्वं, से हंता अहमवि मुहुत्तगं पाडिहारियं वत्थं जाइत्ता जाव एगाहेण वा ५ विप्पवसिय २ उवागच्छिस्सामि, अवियाइं एयं ममेव सिया, माइट्ठाणं संफासे नो एवं करिज्जा ॥ (सू. ३७२)

स कश्चित्साधुरपरं साधुं मुहूर्तादिकालोद्देशेन प्रातिहारिकं वस्त्रं याचेत, याचित्वा चैकाक्येव ग्रामान्तरादौ गतः, तत्र चासावे-

प्र. आ. ३९७

५ वस्त्रैषणाध्य. २ उद्देशः वस्त्रधारणं प्रातिहारिकनिषेधः

१५

२०



२७

काहं यावत्पश्चाहं चोषित्वाऽऽगतः, तस्य चैकाकित्वात्स्वपतो वस्त्रमुपहतं, तच्च तथाविधं वस्त्रं तस्य समर्पयतोऽपि वस्त्रस्वामी न गृह्णीयात्, नापि गृहीत्वाऽन्यस्मै दद्यात्, नाप्युच्छिन्नं दद्याद्, यथा गृहाणेदं त्वं पुनः कतिभिरहोभिर्ममान्यद्दद्यात्, नापि तदेव वस्त्रेण परिवर्त्तयेत्, न चापरं साधुमुपसंक्रम्यैतद्वदेत्, तद्यथा–आयुष्मन्! श्रमण! अभिकाङ्क्षसि' इच्छस्येवंभूतं वस्त्रं धारयितुं परिभोक्तुं चेति?, यदि पुनरेकाकी कश्चिद्व्रजेत्तस्य तदुपहतं वस्त्रं समर्पयेत्, न स्थिरं—दृढं सत् 'परिच्छिन्द्य परिच्छिन्द्य' खण्डशः २ कृत्वा 'परिष्ठापयेत्' त्यजेत्, तथाप्रकारं वस्त्रं 'ससंधिय'न्ति उपहतं स्वतो वस्त्रस्वामी 'नास्वादयेत्' न परिभुञ्जीत, अपि तु तस्यैवोपहन्तुः समर्पयेत्, अन्यस्मै वैकाकिनो गन्तुः समर्पयेदिति। एवं बहुवचनेनापि नेयमिति॥ किञ्च–'सः' भिक्षुः 'एकः' कश्चिदेवं साध्वाचारमवगम्य ततोऽहमपि प्रातिहारिकं वस्त्रं मुहूर्त्तादिकालमुद्दिश्य याचित्वाऽन्यत्रैकाहादिना वासेनोपहनिष्यामि, ततस्तद्वस्त्रं ममैव भविष्यतीत्येवं मातृस्थानं संस्पृशेत्, न चैतत्कुर्यादिति॥ तथा—

(मूलं) से भि० नो वण्णमंताइं वत्थाइं विवण्णाइं करिज्जा, विवण्णाइं न वण्णमंताइं करिज्जा, अन्नं वा वत्थं लभिस्सामित्तिकट्टु नो अन्नमन्नस्स दिज्जा, नो पामिचं कुज्जा, नो वत्थेण वत्थपरिणामं कुज्जा, नो परं उवसंकमित्तु एवं वदेज्जा–आउसो०! समभिकंखसि मे वत्थं धारित्तए वा परिहरित्तए वा?, थिरं वा संतं नो पलिच्छिंदिय २ परिट्ठविज्जा, जहा मेयं वत्थं पावगं परो मन्नइ, परं च णं अदत्तहारी पडिपहे पेहाए तस्स वत्थस्स निदाणाय नो तेसिं भीओ उम्मग्गेणं गच्छिज्जा जाव अप्पुस्सुए, तओ संजयामेव गामाणुगामं दूइज्जिज्जा॥ से भिक्खू वा० गामाणुगामं दूइज्जमाणे अंतरा से विहं सिया, से जं पुण विहं जाणिज्जा–इमंसि खलु विहंसि

५ वस्त्रैषणाध्य.
२ उद्देशः
वस्त्रधारणं
५
प्रातिहारिकनिषेधः

यद्वे आमोसगा वत्थपडियाए संपिंडिया गच्छेज्जा, णो तेसिं भीओ उम्मग्गेणं गच्छेज्जा जाव गामा० दूइज्जेज्जा ॥ से भि० दूइज्जमाणे अंतरा से आमोसगा पडियागच्छेज्जा, ते णं आमोसगा एवं वदेज्जा—आउसं० ! आहरेयं वत्थं देहि णिक्खिवाहि जहा रियाए णाणत्तं वत्थपडियाए, एयं खलु० जइज्जासि (सू. ३७४) त्तिवेमि वत्थेसणा समत्ता ॥ २-१-५-२ ॥

स भिक्षुर्यर्णवन्ति वस्त्राणि चौरादिभयान्नो विगतवर्णानि कुर्यात्, उत्सर्गतस्तादृशानि न ग्राह्याण्येव, गृहीतानां वा परिकर्म न विधेयमिति तात्पर्यार्थः, तथा विवर्णानि न शोभनवर्णानि कुर्यादित्यादि सुगममिति ॥ नवरं 'विहं'ति अटवीप्रायः पन्थाः । तथा तस्य भिक्षोः पथि यदि 'आमोषकाः' चौरा वस्त्रग्रहणप्रतिज्ञया समागच्छेयुरित्यादि पूर्वोक्तं यावदेतत्तस्य भिक्षोः सामग्र्यमिति ॥ पञ्चममध्ययनं समाप्तम् ॥ २-१-५-२.॥



# अथ पात्रैषणाख्यं षष्ठमध्ययनम् ।



पञ्चमाध्ययनानन्तरं षष्ठमारभ्यते, अस्य चायमभिसम्बन्धः—इह प्रथमेऽध्ययने पिण्डविधिरुक्तः, स च वसतावागमोक्तेन विधिना भोक्तव्य इति द्वितीये वसतिविधिरभिहितः, तदन्वेषणार्थं च तृतीये ईर्यासमितिः प्रतिपादिता, पिण्डाद्यर्थं प्रवृत्तेन कथं भाषितव्यमिति चतुर्थे भाषासमितिरुक्ता, स च पटलकैर्विना न ग्राह्य इति तदर्थं पञ्चमे वस्त्रैषणा प्रतिपादिता, तदधुना पात्रेणापि विना पिण्डो न ग्राह्य इत्यनेन सम्बन्धेन पात्रैषणाऽध्ययनमायातम्, अस्य च चत्वार्यनुयोगद्वाराणि भवन्ति, तत्र नामनिष्पन्ने निक्षेपे पात्रैषणाऽध्ययनम्, अस्य च निक्षेपोऽर्थाधिकारश्चानन्तराध्ययन एव लाघवार्थं निर्युक्तिकृताऽभिहितः, साम्प्रतं सूत्रानुगमेऽस्खलितादिगुणोपेतं सूत्रमुच्चारणीयं, तच्चेदम्—

(मूलं) से भिक्खू वा अभिकंखिज्जा पायं एसित्तए, से जं पुण पादं जाणिज्जा, तंजहा—अलाउयपायं वा दारुपायं वा मट्टियापायं वा, तहप्पगारं पायं जे निग्गंथे तरुणे जाव थिरसंघयणे से एगं पायं धारिज्जा नो बिइयं ॥ से भि० परं अद्धजोयणमेराए पायपडियाए नो अभिसंधारिज्जा गमणाए ॥ से भि० से जं० अस्सिं पडियाए एगं साहम्मियं समुद्दिस्स पाणाइं ४ जहा पिंडेसणाए चत्तारि आलावगा, पंचमे बहवे समण० पगणिय २ तहेव ॥ से भिक्खू वा० अस्संजए भिक्खुपडियाए बहवे समणमाहणे० वत्थेसणाऽऽलावओ ॥ से भिक्खू वा० से जाइं पुण पायाइं जाणिज्जा विरूवरूवाइं महद्धणमुल्लाइं, तं०—अयपायाणि वा तउपाया० तंबपाया० सीस-



१०

गपा० हिरण्णपा० सुवण्णपा० रीरिअपाया० हारपुडपा० मणिकायकंसपाया० संखसिंगपा० दंतपा० चेलपा० सेलपा० चम्मपा० अन्नयराइं वा तह० विरूवरूवाइं महद्धणमुल्लाइं पायाइं अफासुयाइं नो० ॥ से भि० से जाइं पुण पाया० विरूव० महद्धणबंधणाइं, तं०-अयबंधणाणि वा जाव चम्मबंधणाणि वा, अन्नयराइं तहप्प० महद्धणबंधणाइं अफा० नो प० ॥ इच्चेयाइं आयतणाइं उवाइकम्म अह भिक्खू जाणिज्जा चउहिं पडिमाहिं पायं एसित्तए, तत्थ खलु इमा पढमा पडिमा-से भिक्खू० उद्दिसिय २ पायं जाएज्जा, तंजहा-अलाउयपायं वा ३ तह० पायं सयं वा णं जाइज्जा जाव पडि० पढमा पडिमा १। अहावरा० से० पेहाए पायं जाइज्जा, तं०-गाहा-

ते वयं आउसो० ! सपाणं सभोयणं पडिग्गहं दाहामो, तुच्छए पडिग्गहे दिन्ने समणस्स नो सुट्ठु साहु भवइ, से पुव्वामेव आलोइज्जा-आउ० भइ० ! नो खलु मे कप्पइ आहाकम्मिए असणे वा ४ भुत्तए वा०, मा उव्करेहि मा उवक्खडेहि, अभिकंखसि मे दाउं एमेव दलयाहि, से सेवं वयंतस्स परो असणं वा ४ उवकरित्ता उवक्खडित्ता सपाणं सभोयणं पडिग्गहगं दलइज्जा तह० पडिग्गहगं अफासुयं जाव नो पडिगाहिज्जा ॥ सिया से परो उवणित्ता पडिग्गहगं निसिरिज्जा, से पुव्वामे० आउ० भ० ! तुमं चेव णं संतियं पडिग्गहगं अंतोअंतेणं पडिलेहिस्सामि, केवली० आयाण० अंतो पडिग्गहगंसि पाणाणि वा बीया० हरि०, अह भिक्खूणं पु० जं पुव्वामेव पडिग्गहगं अंतोअंतेणं पडि० सअंडाइं सव्वे आलावगा भाणियव्वा जहा वत्थेसणाए, नाणत्तं तिल्लेण वा घय० नव० वसाए वा सिणाणादि जाव अन्नयरंसि वा तहप्पगा० थंडिलंसि पडिलेहिय २ पम० २ तओ० संज० आमज्जिज्जा, एवं खलु० सया जएज्जासित्तिबेमि ॥ (सू० ३७५) २-१-६-१

स भिक्षुरभिकाङ्क्षेत् पात्रमन्वेष्टुं, तत्पुनरेवं जानीयात्, तद्यथा-अलाबुकादिकं तत्र च यः स्थिरसंहननाद्युपेतः स एकमेव पात्रं बिभृयात्, न च द्वितीयं, स च जिनकल्पिकादिः, इतरस्तु मात्रकसद्वितीयं पात्रं धारयेत्, तत्र सङ्घाटके सत्येकस्मिन् भक्तं द्वितीये पात्रे पानकं, मात्रकं त्वाचार्यादिप्रायोग्यकृतेऽशुद्धस्य वेति ॥ 'से भिक्खू' इत्यादीनि सूत्राणि सुगमानि यावन्महार्घमूल्यानि पात्राणि लाभे सत्यप्रासुकानि न प्रतिगृह्णीयादिति, नवरं 'हारपुडपाय'त्ति लोहपात्रमिति ॥ एवमयोबन्धनादिसूत्रमपि सुगमं । तथा प्रतिमाचतुष्टयसूत्राण्यपि वस्त्रैषणावन्नेयानीति, नवरं तृतीयप्रतिमायां 'संगइयं'ति दातुः स्वाङ्गिकं-परिभुक्तप्रायं 'वेजयंतियं'ति द्वित्रेषु

पात्रेषु पर्यायेणोपभुज्यमानं पात्रं याचेत ॥ 'एतया' अनन्तरोक्तया पात्रैषणया पात्रमन्विषन्तं साधुं प्रेक्ष्य परो ब्रूयाद् भगिन्यादिकं यथा-तैलादिनाऽभ्यज्य साधवे ददस्वेत्यादि सुगममिति ॥ तथा-स नेता तं साधुमेवं ब्रूयाद्, यथा-रिक्तं पात्रं दातुं न वर्त्तत इति मुहूर्त्तकं तिष्ठ त्वं यावदशनादिकं कृत्वा पात्रकं भृत्वा ददामीत्येवं कुर्वन्तं निषेधयेत्, निषिद्धोऽपि यदि कुर्यात्ततः पात्रं न गृह्णीयादिति ॥ यथा दीयमानं गृह्णीयात्तथाऽऽह-तेन दात्रा दीयमानं पात्रमन्तोपान्तेन प्रत्युपेक्षेतेत्यादि वस्त्रवन्नेयमिति, एतत्तस्य भिक्षोः सामग्र्यमिति ॥ षष्ठस्याध्ययनस्य प्रथमोद्देशकः परिसमाप्तः ॥ २-१-६-१ ॥

---

उद्देशकाभिसम्बन्धोऽयम्-इहानन्तरसूत्रे पात्रनिरीक्षणमभिहितमिहापि तच्छेषमभिधीयते इत्यनेन सम्बन्धेनायातस्यास्योद्देशकस्येदमादिसूत्रम्—

(मूलं) से भिक्खू वा २ गाहावइकुलं पिंड० पविट्ठे समाणे पुव्वामेव पेहाए पडिग्गहगं अवहट्टु पाणे पमज्जिय रयं तओ सं० गाहावइ० पिंड० निक्ख० प० केवली०, आउ० ! अंतो पडिग्गहगंसि पाणे वा बीए वा हरि० परियावज्जिज्जा, अह भिक्खूणं पु० जं पुव्वामेव पेहाए पडिग्गहं अवहट्टु पाणे पमज्जिय रयं तओ सं० गाहावइ० निक्खमिज्ज वा २ ॥ (सू. ३७६)

स भिक्षुर्गृहपतिकुलं पिण्डपातप्रतिज्ञया प्रविशन् पूर्वमेव भृशं प्रत्युपेक्ष्य पतद्ग्रहं, तत्र च यदि प्राणिनः पश्येत्ततस्तान् 'आहृत्य' निष्कृत्य, त्यक्त्वेत्यर्थः, तथा प्रमृज्य च रजस्ततः संयत एव गृहपतिकुलं प्रविशेद्वा निष्क्रामेद्वा इत्येषोऽपि पात्रविधिरेव, यतोऽत्रापि



२०



२७

पूर्वं पात्रं सम्यक् प्रत्युपेक्ष्य प्रमृज्य च पिण्डो ग्राह्य इति पात्रगतैव चिन्तेति, किमिति पात्रं प्रत्युपेक्ष्य पिण्डो ग्राह्य इति ?, अप्रत्युपेक्षिते तु कर्मबन्धो भवतीत्याह-केवली ब्रूयाद् यथा कर्मोपादानमेतत्, यथा च कर्मोपादानं तथा दर्शयति-'अन्तः' मध्ये पतद्ग्रहकस्य प्राणिनो-द्वीन्द्रियादयः तथा बीजानि रजो वा 'पर्यापद्येरन्' भवेयुः, तथाभूते च पात्रे पिण्डं गृह्णतः कर्मोपादानं भवतीत्यर्थः, साधूनां पूर्वोपदिष्टमेतत्प्रतिज्ञादिकं यत्पूर्वमेव पात्रप्रत्युपेक्षणं कृत्वा तद्गतप्राणिनो रजश्चापनीय गृहपतिकुले प्रवेशो निष्क्रमणं वा कार्यमिति ॥ किञ्च—

(मूलं) से भि० जाव समाणे सिया से परो आहट्टु अंतो पडिग्गहगंसि सीओदगं परिभाइत्ता नीहट्टु दलइज्जा, तहप्प० पडिग्गहगं परहत्थंसि वा परपायंसि वा अफासुयं जाव नो प०, से य आहच्च पडिग्गहिए सिया खिप्पामेव उदगंसि साहरिज्जा, से पडिग्गहमायाए पाणं परिट्ठविज्जा, ससिणिद्धाए वा भूमीए नियमिज्जा ॥ से० उदउल्लं वा ससिणिद्धं वा पडिग्गहं नो आमज्जिज्जा वा २ अह पु० विगओदए मे पडिग्गहए छिन्नसिणेहे तह० पडिग्गहं तओ० सं० आमज्जिज्ज वा जाव पयाविज्ज वा ॥ से भि० गाहा० पविसिउकामे पडिग्गहमायाए गाहा० पिंड० पविसिज्ज वा नि०, एवं बहिया वियारभूमीं विहारभूमीं वा गामा० दूइज्जिज्जा, तिव्वदेसियाए जहा बिइयाए वत्थेसणाए नवरं इत्थ पडिग्गहे, एयं खलु तस्स० जं सव्वट्ठेहिं सहिए सया जएज्जासि; ( सू. ३७७ ) त्तिबेमि ॥ पाएसणा सम्मत्ता ॥ २-१-६-२ ॥

स भिक्षुर्गृहपतिकुलं पिण्डपातप्रतिज्ञया प्रविष्टः सन् पानकं याचेत, तस्य च स्यात्-कदाचित् स परो-गृहस्थोऽनाभोगेन प्रत्यनी-

कतया तथाऽऽनुकम्पया विमर्षतया वा गृहान्तः—मध्य एवापरस्मिन् पतद्ग्रहे—स्वकीये भाजने आहृत्य शीतोदकं 'परिभाज्य' विभागीकृत्य 'णीहट्टु'त्ति निःसार्य दद्यात्, स—साधुस्तथाप्रकारं शीतोदकं परहस्तगतं परपात्रगतं वाऽप्रासुकमिति मत्वा न प्रतिगृह्णीयात्, तद् यथाऽकामेन विमनस्केन वा प्रतिगृहीतं स्यात् ततः क्षिप्रमेव तस्यैव दातुरुदकभाजने प्रक्षिपेत्, अनिच्छतः कूपादौ समानजातीयोदके प्रतिष्ठापनविधिना प्रतिष्ठापनं कुर्यात्, तदभावेऽन्यत्र वा छायागर्त्तादौ प्रक्षिपेत्, सति चान्यस्मिन् भाजने तत् सभाजनमेव निरुपरोधिनि स्थाने मुञ्चेदिति ॥ तथा—स भिक्षुरुदकार्द्रादिः पतद्ग्रहस्यामर्जनादि न कुर्यादीपच्छुष्कस्य तु कुर्यादिति पिण्डार्थः ॥ किञ्च—स भिक्षुः क्वचिद् गृहपतिकुलादौ गच्छन् सपतद्ग्रह एव गच्छेदित्यादि सुगमं यावदेतत्तस्य भिक्षोः सामग्र्यमिति ॥ षष्ठमध्ययनं समाप्तम् ॥ २-१-६ ॥



## अथ सप्तममवग्रहप्रतिमाख्यमध्ययनम्।

उक्तं षष्ठमध्ययनं अधुना सप्तममारभ्यते, अस्य चायमभिसम्बन्धः—पिण्डशय्यावस्त्रपात्राद्योऽवग्रहमाश्रित्य भवन्तीत्यतोऽसावेव कतिविधो भवतीत्यनेन सम्बन्धेनायातस्यास्याध्ययनस्य चत्वार्यनुयोगद्वाराणि भवन्ति, तत्रोपक्रमान्तर्गतोऽर्थाधिकारोऽयं—यथा साधुना विशुद्धोऽवग्रहो ग्राह्य इति, नामनिष्पन्ने तु निक्षेपेऽवग्रहप्रतिमेति नाम, तत्रावग्रहस्य नामस्थापने क्षुण्णत्वादनादृत्य द्रव्यादिचतुर्विधं निक्षेपं दर्शयितुकामो निर्युक्तिकार आह—

दव्वे खित्ते काले भावेऽवि य उग्गहो चउद्धा उ। देविंद १ रायउग्गह २ गिहवइ ३ सागरिय ४ साहम्मी ॥३१९॥

द्रव्यावग्रहः क्षेत्रावग्रहः कालावग्रहो भावावग्रहश्चेत्येवं चतुर्विधोऽवग्रहः, यदिवा सामान्येन पञ्चविधोऽवग्रहः, तद्यथा—देवेन्द्रस्य लोकमध्यवर्त्तिरुचकदक्षिणार्द्धमवग्रहः १, राज्ञश्चक्रवर्त्यादेर्भरतादिक्षेत्रं २, गृहपतेः—ग्राममहत्तरादेर्ग्रामपाटकादिकमवग्रहः ३, तथा सागारिकस्य—शय्यातरस्य पञ्चशालादिकं ४, साधर्मिकाः—साधवो ये मासकल्पेन तत्रावस्थितास्तेषां वसत्यादिरवग्रहः सपादं योजनमिति ५, तदेवं पञ्चविधोऽवग्रहः, वसत्यादिपरिग्रहं च कुर्वता सर्वेऽप्येते यथाऽवसरमनुज्ञाप्या इति ॥ साम्प्रतं द्रव्याद्यवग्रहप्रतिपादनायाह—

दव्वुग्गहो उ तिविहो सचित्ताचित्तमीसओ चेव। खित्तुग्गहोऽवि तिविहो दुविहो कालुग्गहो होइ ॥३२०॥

द्रव्यावग्रहस्त्रिविधः, शिष्यादेः सचित्तो रजोहरणादेरचित्तः शिष्यरजोहरणादेर्मिश्रः, क्षेत्रावग्रहोऽपि सचित्तादिस्त्रिविध एव, यदिवा ग्रामनगरारण्यभेदादिति, कालावग्रहस्तु ऋतुबद्धवर्षाकालभेदाद्द्विधेति ॥ भावावग्रहप्रतिपादनार्थमाह—

मइउग्गहो य गहणुग्गहो य भावुग्गहो दुहा होइ। इंदिय नोइंदिय अत्थवंजणे उग्गहो दसहा ॥३२१॥

भावावग्रहो द्वेधा, तद्यथा—मत्यवग्रहो ग्रहणावग्रहश्च, तत्र मत्यवग्रहो द्विधा—अर्थावग्रहो व्यञ्जनावग्रहश्च, तत्रार्थावग्रह इन्द्रियनोइन्द्रियभेदात् षोढा, व्यञ्जनावग्रहस्तु चक्षुरिन्द्रियमनोवर्जश्चतुर्धा, स एष सर्वोऽपि मतिभावावग्रहो दशधेति ॥ ग्रहणावग्रहार्थमाह—

गहणुग्गहम्मि अपरिग्गहस्स समणस्स गहणपरिणामो। कह पाडिहारियाऽपाडिहारिए होइ? जइयव्वं ॥३२२॥

अपरिग्रहस्य साधोर्यदा पिण्डवसतिवस्त्रपात्रग्रहणपरिणामो भवति तदा स ग्रहणभावावग्रहो भवति, तस्मिंश्च सति 'कथं' केन



१०

प्रकारेण मम शुद्धं चमत्यादिकं प्रातिहारिकमप्रातिहारिकं वा भवेदित्यत्र यतितव्यमिति, प्रागुक्तश्च देवेन्द्राद्यवग्रहः पञ्चविधोऽप्य-स्मिन् ग्रहणावग्रहे द्रष्टव्य इति ॥ गतो नामनिष्पन्नो निक्षेपः, साम्प्रतं सूत्रानुगमे सूत्रमुच्चारणीयं, तच्चेदम्—

(मूलं) समणे भविस्सामि अणगारे अकिंचणे अपुत्ते अपसू परदत्तभोई पावं कम्मं नो करिस्सामित्ति समु-ट्ठाए सव्वं भंते! अदिन्नादाणं पच्चक्खामि, से अणुपविसित्ता गामं वा जाव रायहाणिं वा नेव सयं अदिन्नं गिण्हिज्जा नेवऽन्नेहिं अदिन्नं गिण्हाविज्जा अदिन्नं गिण्हंतंवि अन्नं न समणुजाणिज्जा, जेहिवि सद्धिं संपव्वइए तेसिंपि जाइं छत्तगं वा जाव चम्मछेयणगं वा तेसिं पुव्वामेव उग्गहं अणणुण्णविय अपडिलेहिय २ अपम-ज्जिय २ नो उग्गिण्हिज्जा वा परिगिण्हिज्ज वा, तेसिं पुव्वामेव उग्गहं जाइज्जा अणुन्नविय पडिलेहिय पमज्जिय तओ सं० उग्गिण्हिज्ज वा प० ॥ (सू. ३७८)

श्राम्यतीति श्रमणः—तपस्वी यतोऽहमत एवंभूतो भविष्यामीति दर्शयति—'अनगारः' अगा—वृक्षास्तैर्निष्पन्नमगारं तन्न विद्यत इत्य-नगारः, त्यक्तगृहपाश इत्यर्थः, तथा 'अकिञ्चनः' न विद्यते किमप्यस्येत्यकिञ्चनो, निष्परिग्रह इत्यर्थः, तथा 'अपुत्रः' स्वजनबन्धु रहितो, निर्मम इत्यर्थः, एवम् 'अपशुः' द्विपदचतुष्पदादिरहितः, यत एवमतः परदत्तभोजी सन् पापं कर्म न करिष्यामीत्येवं समुत्थायैतत्प्रतिज्ञो भवामीति दर्शयति—यथा सर्वं भदन्त! अदत्तादानं प्रत्याख्यामि, दन्तशोधनमात्रमपि परकीयमदत्तं न गृह्णा-मीत्यर्थः, तदनेन विशेषणकदम्बकेनापरेषां शाक्यमरजस्कादीनां सम्यक्श्रमणत्वं निराकृतं भवति, स चैवंभूतोऽकिञ्चनः श्रमणो-ऽनुप्रविश्य ग्रामं वा यावद्राजधानीं वा नैव स्वयमदत्तं गृह्णीयात् नैवापरेण ग्राहयेत् नाप्यपरं गृह्णन्तं समनुजानीयात्, यैर्वा साधुभिः

सह सम्यक् प्रव्रजितः तिष्ठति वा तेषामपि सम्बन्ध्युपकरणमननुज्ञाप्य न गृह्णीयादिति दर्शयति, तद्यथा-छत्रकमिति 'छद अपवारणे' छादयतीति छत्रं-वर्षाकल्पादि, यदिवा कारणिकः क्वचित्कुङ्कणदेशादावतिवृष्टिसम्भवाच्छत्रकमपि गृह्णीयाद्, यावच्चर्मच्छेदनकमप्यननुज्ञाप्याप्रत्युपेक्ष्य च न अवगृह्णीयात् सकृत् प्रगृह्णीयाद् अनेकशः। तेषां च सम्बन्धि यथा गृह्णीयात्तथा दर्शयति-पूर्वमेव ताननुज्ञाप्य प्रत्युपेक्ष्य चक्षुषा प्रमृज्य रजोहरणादिना सकृदनेकशो वा गृह्णीयादिति ॥ किञ्च—

(मूलं) से भि० आगंतारेसु वा ४ अणुवीइ उग्गहं जाइज्जा, जे तत्थ ईसरे जे तत्थ समहिट्ठए ते उग्गहं अणुन्नविज्जा-कामं खलु आउसो०! अहालंदं अहापरिन्नायं वसामो जाव आउसो! जाव आउसंतस्स उग्गहे जाव साहम्मिया एइ तावं उग्गहं उग्गिण्हिस्सामो, तेण परं विहरिस्सामो ॥ से किं पुण तत्थोग्गहंसि एवोग्गहियंसि जे तत्थ साहम्मिया संभोइया समणुन्ना उवागच्छिज्जा जे तेण सयमेसित्तए असणे वा ४ तेण ते साहम्मिया ३ उवनिमंतिज्जा, नो चेव णं परवडियाए ओगिज्झिय २ उवनि० ॥ (सू. ३७९)

स भिक्षुरागन्तागारादौ प्रविश्यानुविचिन्त्य च-पर्यालोच्य यतिविहारयोग्यं क्षेत्रं ततोऽवग्रहं-वसत्यादिकं याचेत, यश्च याच्यस्तं दर्शयति-यस्तत्र 'ईश्वरः' गृहस्वामी तथा यस्तत्र 'समधिष्ठाता' गृहपतिना निक्षिप्तभरः कृतस्तानवग्रहं-क्षेत्रावग्रहम् 'अनुज्ञापयेत्' याचेत, कथमिति दर्शयति-'काम'मिति तवेच्छया 'खलु' इति वाक्यालङ्कारे आयुष्मन्! गृहपते! 'अहालंद'मिति यावन्मात्रं कालं भवाननुजानीते 'अहापरिन्नायं'ति यावन्मात्रं क्षेत्रमनुजानीषे, तावन्मात्रं कालं तावन्मात्रं च क्षेत्रमाश्रित्य वयं वसाम इतियावत्, इहायुष्मन्! यावन्मात्रं कालमिहायुष्मतोऽवग्रहो यावन्तश्च साधर्मिकाः-साधवः समागमिष्यन्ति एतावन्मात्रमवग्रहिष्यामस्तत ऊर्ध्वं

विहरिष्याम इति ॥ अवगृहीते चावग्रहे सत्युत्तरकालविधिमाह-तदेवमवगृहीतेऽवग्रहे स साधुः किं पुनः कुर्यादिति दर्शयति-ये तत्र केचन प्राघूर्णकाः 'साधर्मिकाः' साधवः 'साम्भोगिकाः' एकसामाचारीप्रविष्टाः 'समनोज्ञाः' उद्युक्तविहारिणः 'उपागच्छेयुः' अतिथयो भवेयुः, ते चैवंभूता ये तेनैव साधुना परलोकार्थिना स्वयमेषितव्याः, ते च स्वयमेवागता भवेयुः, तांश्चाशनादिना स्वयमाहृतेन स साधुरुपनिमन्त्रयेद्, यथा-गृह्णीत यूयमेतन्मयाऽऽनीतमशनादिकं क्रियतां ममानुग्रहमित्येवमुपनिमन्त्रयेत्, न चैव 'परवडियाए'त्ति, परानीतं यदशनादि तद् भृशम् 'अवगृह्य' आश्रित्य नोपनिमन्त्रयेत्, किं तर्हि ?, स्वयमेवानीतेन निमन्त्रयेदिति ॥ तथा-

(मूलं) से आगंतारेसु वा ४ जाव से किं पुण तत्थोग्गहंसि एवोग्गहियंसि जे तत्थ साहम्मिआ अन्नसंभोइआ समणुन्ना उवागच्छिज्जा जे तेण सयमेसित्तए पीढे वा फलए वा सिज्जा वा संथारए वा तेण ते साहम्मिए अन्नसंभोइए समणुन्ने उवनिमंतिज्जा, नो चेव णं परवडियाए ओगिज्झिय २ उवनिमंतिज्जा ॥ से आगंतारेसु वा ४ जाव से किं पुण तत्थुग्गहंसि एवोग्गहियंसि जे तत्थ गाहावईण वा गाहा० पुत्ताण वा सूई वा पिप्पलए वा कण्णसोहणए वा नहच्छेयणए वा तं अप्पणो एगस्स अट्ठाए पाडिहारियं जाइत्ता नो अन्नमन्नस्स दिज्ज वा अणुपइज्ज वा, सयंकरणिज्जंतिकट्टु, से तमायाए तत्थ गच्छिज्जा २ पुव्वामेव उत्ताणए हत्थे कट्टु भूमीए वा ठवित्ता इमं खलु २ त्ति आलोइज्जा, नो चेव णं सयं पाणिणा परपाणिंसि पच्चप्पिणिज्जा ॥ (सू. ३८०)

प्र. आ. ४०३

पूर्वसूत्रवत्सर्वं, नवरमसाम्भोगिकान् पीठफलकादिनोपनिमन्त्रयेद्, यतस्तेषां तदेव पीठिकादिसंभोग्यं, नाशनादीति ॥ किञ्च-तस्मिन्नवग्रहे गृहीते यस्तत्र गृहपत्यादिको भवेत् तस्य सम्बन्धि सूच्यादिकं यदि कार्यार्थमेकमात्मानमुद्दिश्य गृह्णीयात् तदपरेषां साधूनां

न समर्पयेत्, कृतकार्यश्च प्रतीपं गृहस्थसंवानेन प्रशोकेन विधिना समर्पयेदिति ॥ अपिच—

(मूलं) से भि० से जं० उग्गहं जाणिज्जा अणंतरहियाए पुढवीए जाव संताणए तह० उग्गहं नो गिण्हिज्जा वा २॥ से भि० से जं पुण उग्गहं थूणंसि वा ४ तह० अंतलिक्खजाए दुब्बद्धे जाव नो उग्गिण्हिज्जा वा २॥ से भि० से जं० कुलियंसि वा ४ जाव नो उग्गिण्हिज्ज वा २॥ से भि० खंधंसि वा ४ अन्नयरे वा तह० जाव नो उग्गहं उग्गिण्हिज्ज वा २॥ से भि० से जं० पुण० ससागारियं० सखुड्डपसुभत्तपाणं नो पन्नस्स निक्खमणपवेसे जाव धम्माणुओगचिंताए, सेवं नच्चा तह० उवस्सए ससागारिए० नो उवग्गहं उग्गिण्हिज्जा वा २॥ से भि० से जं० गाहावइकुलस्स मज्झंमज्झेणं गंतुं पंथे पडिबद्धं वा नो पन्नस्स जाव सेवं न०॥ से भि० से जं० इह खलु गाहावई वा जाव कम्मकरीओ वा अन्नमन्नं अक्कोसंति वा तहेव तिल्लादि सिणाणादि सीओदगवियडादि निगिणाइ वा जहा सिज्जाए आलावगा नवरं उग्गहवत्तव्वया॥ से भि० से जं० आइन्नसंलिक्खे नो पन्नस्स० उग्गिण्हिज्ज वा २, एयं खलु०॥ (सू. ३८२) उग्गहपडिमाए पढमो उद्देसो ॥ २-१-७-१ ॥

१०

यत्पुनः सचित्तपृथिवीसम्बन्धमवग्रहं जानीयात्तन्न गृह्णीयादिति ॥ तथा-अन्तरिक्षजातमप्यवग्रहं न गृह्णीयादित्यादि शय्यावन्नेयं यावदुद्देशकसमाप्तिः, नवरमवग्रहाभिलाप इति ॥ सप्तमस्य प्रथमोद्देशकः समाप्तः ॥ २-१-७-१ ॥

---

उक्तः प्रथमोद्देशकः, अधुना द्वितीयः समारभ्यते, अस्य चायमभिसम्बन्धः-पूर्वोद्देशकेऽवग्रहः प्रतिपादितस्तदिहापि तच्छे-

पप्रतिपादनायोद्देशकः, तस्य चादिसूत्रम्—

(मूलं) से आगंतारेसु वा ४ अणुवीइ उग्गहं जाइज्जा, जे तत्थ ईसरे० ते उग्गहं अणुन्नविज्जा-कामं खलु आउसो! अहालंदं अहापरिन्नायं वसामो जाव आउसो! जाव आउसंतस्स उग्गहे जाव साहम्मिआए ताव उग्गहं उग्गिण्हिस्सामो, तेण परं वि०, से किं पुण तत्थ उग्गहंसि एवोग्गहियंसि जे तत्थ समणाण वा माह० छत्तए वा जाव चम्मछेदणए वा तं नो अंतोहिंतो बाहिं नीणिज्जा बहियाओ वा नो अंतो पविसिज्जा, सुत्तं वा नो पडिबोहिज्जा, नो तेसिं किंचिवि अप्पत्तियं पडिणीयं करिज्जा ॥ (सू. ३८२)

स भिक्षुरागन्तागारादावपरब्राह्मणाद्युपभोगसामान्ये कारणिकः सन्नीश्वरादिकं पूर्वप्रक्रमेणावग्रहं याचेत, तस्मिंश्चावगृहीतेऽवग्रहे यत्तत्र श्रमणब्राह्मणादीनां छत्राद्युपकरणजातं भवेत्तन्नैवाभ्यन्तरतो बहिर्निष्कामयेत् नापि ततोऽभ्यन्तरं प्रवेशयेत् नापि ब्राह्मणादिकं सुप्तं प्रतिबोधयेत्, न च तेषाम् 'अप्पत्तियं'ति मनसः पीडां कुर्यात्, तथा 'प्रत्यनीकता' प्रतिकूलतां न विदध्यादिति ॥

(मूलं) से भि० अभिकंखिज्जा अंबवणं उवागच्छित्तए जे तत्थ ईसरे २ ते उग्गहं अणुजाणाविज्जा-कामं खलु जाव विहरिस्सामो, से किं पुण० एवोग्गहियंसि अह भिक्खू इच्छिज्जा अंबं भुत्तए वा, से जं पुण अंबं जाणिज्जा सअंडं ससंताणं तह० अंबं अफा० नो प०॥ से भि० से जं० अप्पंडं अप्पसंताणगं अतिरिच्छच्छिन्नं अव्वोच्छिन्नं अफासुयं जाव नो पडिगाहिज्जा ॥ से भि० से जं० अप्पंडं वा जाव संताणगं तिरिच्छच्छिन्नं वुच्छिन्नं फा० पडि०॥ से भि० अंबभित्तगं वा अंबपेसियं वा अंबचोयगं वा अंबसालगं वा अंबडालगं वा भुत्तए वा पायए

वा, से जं० अंबभित्तगं वा ५ सअंडं अफा० नो पडि०॥ से भिक्खू वा २ से जं० अंबं वा अंबभित्तगं वा अप्पंडं० अतिरिच्छच्छिन्नं २ अफा० नो प०॥ से जं० अंबडालगं वा अप्पंडं ५ तिरिच्छच्छिन्नं वुच्छिन्नं फासुयं पडि०॥ से भि० अभिकंखिज्जा उच्छुवणं उवागच्छित्तए, जे तत्थ ईसरे जाव उग्गहंसि०॥ अह भिक्खू इच्छिज्जा उच्छुं भुत्तए वा पा०, से जं० उच्छुं जाणिज्जा सअंडं जाव नो प०, अतिरिच्छच्छिन्नं तहेव, तिरिच्छच्छिन्नेऽवि तहेव॥ से भि० अभिकंखि० अंतरुच्छुयं वा उच्छुगंडियं वा उच्छुचोयगं वा उच्छुसा० उच्छुडा० भुत्तए वा पाय०, से जं पु० अंतरुच्छुयं वा जाव डालगं वा सअंडं० नो प०॥ से भि० से जं० अंतरुच्छुयं वा० अप्पंडं वा० जाव पडि०, अतिरिच्छच्छिन्नं तहेव॥ से भि० ल्हसणवणं उवागच्छित्तए, तहेव तिन्निवि आलावगा, नवरं ल्हसुणं॥ से भि० ल्हसुणं वा ल्हसुणकंदं वा ल्ह० चोयगं वा ल्हसुणनालगं वा भुत्तए वा २ से जं० लसुणं वा जाव लसुणबीयं वा सअंडं जाव नो प०, एवं अतिरिच्छच्छिन्नेऽवि तिरिच्छच्छिन्ने जाव प०॥ (सू. १८३)

स भिक्षुः कदाचिदाम्रवनेऽवग्रहमीश्वरादिकं याचेत, तत्रस्थश्च सति कारणे आम्रं भोक्तुमिच्छेत्, तच्चाम्रं साण्डं ससन्तानकमप्रासुकमिति च मत्वा न प्रतिगृह्णीयादिति॥ किञ्च–स भिक्षुर्यत्पुनराम्रमल्पाण्डमल्पसन्तानकं वा जानीयात् किन्तु 'अतिरश्चीनच्छिन्नं' तिरश्चीनमपाटितं तथा 'अव्यवच्छिन्नम्' अखण्डितं यावदप्रासुकं न प्रतिगृह्णीयादिति॥ तथा–स भिक्षुरल्पाण्डमल्पसन्तानकं तिरश्चीनच्छिन्नं तथा व्यच्छिन्नं यावत्प्रासुकं कारणे सति गृह्णीयादिति॥ एवमाम्रावयवसम्बन्धि सूत्रत्रयमपि नेयमिति, नवरम्–'अंबभित्तयं'ति आम्रार्द्धम् 'अंबपेसी' आम्रफाली 'अंबचोयगं'ति आम्रच्छल्ली सालगं–रसं 'डालगं'ति आम्रश्लक्ष्णखण्डानीति॥ एवमि-

प्रतिपादनायोद्देशकः, तस्य चादिसूत्रम्—

(मूल) से आगंतारेसु वा ४ अणुवीइ उग्गहं जाइज्जा, जे तत्थ ईसरे० ते उग्गहं अणुन्नविज्जा–कामं खलु आउसो! अहालंदं अहापरिन्नायं वसामो जाव आउसो! जाव आउसंतस्स उग्गहे जाव साहम्मिआए ताव उग्गहं उग्गिण्हिस्सामो, तेण परं वि०, से किं पुण तत्थ उग्गहंसि एवोग्गहियंसि जे तत्थ समणाण वा माह० छत्तए वा जाव चम्मछेदणए वा तं नो अंतोहितो बाहिं नीणिज्जा बहियाओ वा नो अंतो पविसिज्जा, सुत्तं वा नो पडिबोहिज्जा, नो तेसिं किंचिवि अप्पत्तियं पडिणीयं करिज्जा ॥ (सू. ३८२)



स भिक्षुरागन्तागारादावपरब्राह्मणाद्युपभोगसामान्ये कारणिकः सन्नीश्वरादिकं पूर्वप्रक्रमेणावग्रहं याचेत, तस्मिंश्चावगृहीतेऽवग्रहे यत्तत्र श्रमणब्राह्मणादीनां छत्राद्युपकरणजातं भवेत्तन्नैवाभ्यन्तरतो बहिर्निष्क्रामयेत् नापि ततोऽभ्यन्तरं प्रवेशयेत् नापि ब्राह्मणादिकं सुप्तं प्रतिबोधयेत्, न च तेषाम् 'अप्पत्तियं'ति मनसः पीडां कुर्यात्, तथा 'प्रत्यनीकता' प्रतिकूलतां न विदध्यादिति ॥

(मूल) से भि० अभिकंखिज्जा अंबवणं उवागच्छित्तए जे तत्थ ईसरे २ ते उग्गहं अणुजाणाविज्जा–कामं खलु जाव विहरिस्सामो, से किं पुण० एवोग्गहियंसि अह भिक्खू इच्छिज्जा अंबं भुत्तए वा, से जं पुण अंबं जाणिज्जा सअंडं ससंताणं तह० अंबं अफा० नो प०॥ से भि० से जं० अप्पंडं अप्पसंताणगं अतिरिच्छछिन्नं अव्वोच्छिन्नं अफासुयं जाव नो पडिगाहिज्जा ॥ से भि० से जं० अप्पंडं वा जाव संताणगं तिरिच्छछिन्नं वुच्छिन्नं फा० पडि०॥ से भि० अंबभित्तगं वा अंबपेसियं वा अंबचोयगं वा अंबसालगं वा अंबडालगं वा भुत्तए वा पायए

स भिक्षुरागन्तागारादावग्रहे गृहीते ये तत्र गृहपत्यादयस्तेषां सम्बन्धीन्यायतनानि पूर्वप्रतिपादितान्यतिक्रम्यैतानि च वक्ष्यमाणानि कर्मोपादानानि परिहृत्यावग्रहमवग्रहीतुं जानीयात्, अथ भिक्षुः सप्तभिः प्रतिमाभिरभिग्रहविशेषैरवग्रहं गृह्णीयात्, तत्रेयं प्रथमा प्रतिमा, तद्यथा-स भिक्षुरागन्तागारादौ पूर्वमेव विचिन्त्यैवंभूतः प्रतिश्रयो मया ग्राह्यो, नान्यथाभूत इति प्रथमा। तथाऽन्यस्य च भिक्षोरेवंभूतोऽभिग्रहो भवति, तद्यथा-अहं च खल्वन्येषा साधूनां कृतेऽवग्रहं 'ग्रहीष्यामि' याचिष्ये, अन्येषां वाऽवग्रहे गृहीते सति 'उपालयिष्ये' वत्स्यामीति द्वितीया। प्रथमा प्रतिमा सामान्येन, इयं तु गच्छान्तर्गतानां साधूनां साम्भोगिकानामसाम्भोगिकानां चोद्युक्तविहारिणा, यतस्तेऽन्योऽन्यार्थं याचन्त इति। तृतीया त्वियम्-अन्यार्थमवग्रहं याचिष्ये, अन्यावगृहीते तु न स्थास्यामीति, एषा त्वाहालन्दिकाना, यतस्ते सूत्रार्थविशेषमाचार्यादभिकाङ्क्षन्त आचार्यार्थं याचन्ते। चतुर्थी पुनरहमन्येषां कृतेऽवग्रहं न याचिष्ये अन्यावगृहीते च वत्स्यामीति, इयं तु गच्छ एवाभ्युद्यतविहारिणां जिनकल्पाद्यर्थं परिकर्म कुर्वताम्। अथापरा पञ्चमी-अहमात्मकृतेऽवग्रहमवग्रहीष्यामि न चापरेषा द्वित्रिचतुष्पञ्चानामिति, इयं तु जिनकल्पिकस्य। अथापरा षष्ठी-यदीयमवग्रहं ग्रहीष्यामि तदीयमेवोत्कटादिसंस्तारकं ग्रहीष्यामि, इतरथोत्कुटुको वा निषण्णः उपविष्टो वा रजनीं गमिष्यामीत्येषा जिनकल्पिकादेरिति। अथापरा सप्तमी-एषैव पूर्वोक्ता, नवरं यथासंस्तृतमेव शिलादिकं ग्रहीष्यामि नेतरदिति, शेषमात्मोत्कर्षवर्जनादि पिण्डैषणावन्नेयमिति॥ किञ्च—

(मूलं) सुयं मे आउसंतेणं भगवया एवमक्खायं-इह खलु थेरेहिं भगवंतेहिं पंचविहे उग्गहे पन्नत्ते, तं०-देविंदउग्गहे १ रायउग्गहे २ गाहावइउग्गहे ३ सागारियउग्गहे ४ साहम्मियउग्ग० ५, एवं खलु तस्स भिक्खुस्स

क्षुद्यत्रयमप्याम्रसूत्रवन्नेयमिति, नवरम् 'अंतरुच्छुयं'ति पर्वमध्यमिति ॥ एवं लशुनसूत्रत्रयमपि नेयमिति, आम्रादिसूत्राणामवकाशो निशीथषोडशोद्देशकादवगन्तव्य इति ॥ साम्प्रतमवग्रहाभिग्रहविशेषानधिकृत्याह—

(मूलं) से भि० आगंतारेसु वा ४ जावोग्गहियंसि जे तत्थ गाहावईण वा गाहा० पुत्ताण वा इच्चेयाइं आयाणाइं उवाइक्कम्म अह भिक्खू जाणिज्जा, इमाहिं सत्तहिं पडिमाहिं उग्गहं उग्गिण्हित्तए, तत्थ खलु इमा पढमा पडिमा–से आगंतारेसु वा ४ अणुवीइ उग्गहं जाइज्जा जाव विहरिस्सामो पढमा पडिमा १। अहावरा० जस्स णं भिक्खुस्स एवं भवइ–अहं च खलु अन्नेसिं भिक्खूणं अट्ठाए उग्गहं उग्गिण्हिस्सामि, अण्णेसिं भिक्खूणं उग्गहे उग्गहिए उवल्लिस्सामि, दुच्चा पडिमा २। अहावरा० जस्स णं भि० अहं च० नो उग्गिण्हिस्सामि अन्नेसिं च उग्गहे उग्गहिए नो उवल्लिस्सामि, तच्चा पडिमा ३। अहावरा० जस्स णं भि० अहं च० उग्गिण्हिस्सामि, अन्नेसिं च उग्गहे उग्गहिए उवल्लिस्सामि, चउत्था पडिमा४ अहावरा० जस्स णं अहं च खलु अप्पणो अट्ठाए उग्गहं च उ०, नो दुण्हं नो तिण्हं नो चउण्हं नो पंचण्हं०, पंचमा पडिमा ५। अहावरा० से भि० जस्स एव उग्गहे उवल्लिइज्जा जे तत्थ अहासमन्नागए इक्कडे वा जाव पलाले तस्स लाभे संवसिज्जा, तस्स अलाभे उक्कुडुओ वा नेसज्जिओ वा विहरिज्जा, छट्ठा पडिमा ६। अहावरा स० जे भि० अहासंथडमेव उग्गहं जाइज्जा, तंजहा–पुढविसिलं वा कट्ठसिलं वा अहासंथडमेव तस्स लाभे संते०, तस्स अलाभे उ० ने० विहरिज्जा, सत्तमा पडिमा ७। इच्चेयासिं सत्तण्हं पडिमाणं अन्नयरं जहा पिंडेसणाए॥ (सू. ३८४)

स भिक्षुरागन्तागारादाववग्रहे गृहीते ये तत्र गृहपत्यादयस्तेषां सम्बन्धीन्यायतनानि पूर्वप्रतिपादितान्यतिक्रम्यैतानि च वक्ष्यमाणानि कर्मोपादानानि परिहृत्यावग्रहमवग्रहीतुं जानीयात्, अथ भिक्षुः सप्तमिः प्रतिमाभिरभिग्रहविशेषैरवग्रहं गृह्णीयात्, तत्रेयं प्रथमा प्रतिमा, तद्यथा–स भिक्षुरागन्तागारादौ पूर्वमेव विचिन्त्यैवंभूतः प्रतिश्रयो मया ग्राह्यो, नान्यथाभूत इति प्रथमा। तथाऽन्यस्य च भिक्षोरेवंभूतोऽभिग्रहो भवति, तद्यथा–अहं च खल्वन्येषां साधूनां कृतेऽवग्रहं 'ग्रहीष्यामि' याचिष्ये, अन्येषां वाऽवग्रहे गृहीते सति 'उपालयिष्ये' वत्स्यामीति द्वितीया। प्रथमा प्रतिमा सामान्येन, इयं तु गच्छान्तर्गतानां साधूनां साम्भोगिकानामसांभोगिकानां चोद्युक्तविहारिणां, यतस्तेऽन्योऽन्यार्थं याचन्त इति। तृतीया त्वियम्–अन्यार्थमवग्रहं याचिष्ये, अन्यावगृहीते तु न स्थास्यामीति, एषा त्वाहालन्दिकानां, यतस्ते सूत्रार्थविशेषमाचार्यादभिकाङ्क्षन्त आचार्यार्थं याचन्ते। चतुर्थी पुनरहमन्येषां कृतेऽवग्रहं न याचिष्ये अन्यावगृहीते च वत्स्यामीति, इयं तु गच्छ एवाभ्युद्यतविहारिणां जिनकल्पाद्यर्थं परिकर्म कुर्वताम्। अथापरा पञ्चमी–अहमात्मकृतेऽवग्रहमवग्रहीष्यामि न चापरेषां द्वित्रिचतुष्पञ्चानामिति, इयं तु जिनकल्पिकस्य। अथापरा षष्ठी–यदीयमवग्रहं ग्रहीष्यामि तदीयमेवोत्कडादिसंस्तारकं ग्रहीष्यामि, इतरथोत्कुटुको वा निषण्णः उपविष्टो वा रजनीं गमिष्यामीत्येषा जिनकल्पिकादेरिति। अथापरा सप्तमी–एषैव पूर्वोक्ता, नवरं यथासंस्तृतमेव शिलादिकं ग्रहीष्यामि नेतरदिति, शेषमात्मोत्कर्षवर्जनादि पिण्डैषणावन्नेयमिति ॥ किञ्च—

(मूलं) सुयं मे आउसंतेणं भगवया एवमक्खायं–इह खलु थेरेहिं भगवंतेहिं पंचविहे उग्गहे पन्नत्ते, तं०–देविंदउग्गहे १ रायउग्गहे २ गाहावइउग्गहे ३ सागारियउग्गहे ४ साहम्मियउग्ग० ५, एवं खलु तस्स भिक्खुस्स

नेनाधिकारः, तदाह निर्युक्तिकारः—ऊर्द्धस्थाने 'प्रकृतं' प्रस्ताव इति, द्वितीयमध्ययनं निशीथिका, तस्याश्च पदको निक्षेपः, तं च स्वस्थान एव करिष्यामीति। साम्प्रतं सूत्रमुच्चारणीयं, तच्चेदम्—

(मूलं) से भिक्खू वा० अभिकंखेज्जा ठाणं ठाइत्तए, से अणुपविसिज्जा गामं वा जाव रायहाणिं वा, से जं पुण ठाणं जाणिज्जा-सअंडं जाव मक्कडासंताणयं तं तह० ठाणं अफासुयं अणेस० लाभे संते नो प०, एवं सिज्जागमेण नेयव्वं जाव उदयपसूयाइंति॥ इच्चेयाइं आयतणाइं उवाइक्कम्म २ अह भिक्खू इच्छिज्जा चउहिं पडिमाहिं ठाणं ठाइत्तए, तत्थिमा पढमा पडिमा—अचित्तं खलु उवसज्जिज्जा अवलंबिज्जा काएण विप्परिकम्माइ नो सवियारं ठाणं ठाइस्सामि।दुच्चा पडिमा—अचित्तं खलु उवसज्जेज्जा अवलंबिज्जा नो काएण विप्परिकम्माई नो सवियारं ठाणं ठाइस्सामि दुच्चा पडिमा। अहावरा तच्चा पडिमा—अचित्तं खलु उवसज्जेज्जा अवलंबिज्जा नो काएण विपरिकम्माइ नो सवियारं ठाणं ठाइस्सामित्ति तच्चा पडिमा। अहावरा चउत्था पडिमा—अचित्तं खलु उवसज्जेज्जा नो अवलंबिज्जा काएण नो परकम्माई नो सवियारं ठाणं ठाइस्सामित्ति वोसट्ठकाए वोसट्ठकेसमंसुलोमनहे संनिरुद्धं वा ठाणं ठाइस्सामित्ति चउत्था पडिमा। इच्चेयासिं चउण्हं पडिमाणं जाव पग्गहियतरायं विहरिज्जा, नो किंचिवि वइज्जा, एयं खलु तस्स जाव तस्स० जाव जइज्जासित्तिबेमि (सू. ३८६) ठाणासत्तिक्कयं सम्मत्तं॥२-२-८॥

'स' पूर्वोक्तो भिक्षुर्यदा स्थानमभिकाङ्क्षेत् स्थातुं तदा सोऽनुप्रविशेद्ग्रामादिकम्, अनुप्रविश्य च स्थानमूर्द्धस्थानाद्यर्थमन्वेषयेत्,

भिक्खुणीए वा सामग्गियं ॥ (सू. ३८५) उग्गहपडिमा सम्मत्ता ॥ अध्ययनं समाप्तं सप्तमम् ॥ २-१-७-२॥

श्रुतं मयाऽऽयुष्मता भगवतैवमाख्यातम्—इह खलु स्थविरैर्भगवद्भिः पञ्चविधोऽवग्रहो व्याख्यातः, तद्यथा—देवेन्द्रावग्रह इत्यादि सुगमं यावदुद्देशकसमाप्तिरिति ॥ अवग्रहप्रतिमाख्यं सप्तममध्ययनं समाप्तं, तत्समाप्तौ प्रथमाऽऽचाराङ्गचूला समाप्ता ॥ २-१-७॥

## सप्तसप्तिकाख्या द्वितीया चूला।

उक्तं सप्तममध्ययनं, तदुक्तौ च प्रथमचूलाऽभिहिता, इदानीं द्वितीया समारभ्यते, अस्याश्चायमभिसम्बन्धः—इहानन्तरचूडायां वसत्यवग्रहः प्रतिपादितः, तत्र च कीदृशे स्थाने कायोत्सर्गस्वाध्यायोच्चारप्रश्रवणादि विधेयमित्येतत्प्रतिपादनाय द्वितीयचूडा, सा च सप्ताध्ययनात्मिकेति निर्युक्तिकृद्दर्शयितुमाह—

सत्तिक्कगाणि इक्कस्सरगाणि पुव्व भणिय तहिं ठाणं। उद्धट्ठाणे पगयं निसीहियाए तहिं छक्कं ॥ ३२३॥

'सप्तकान्येकसराणी'ति सप्ताध्ययनान्युद्देशकरहितानि भवन्तीत्यर्थः, तत्रापि 'पूर्वं' प्रथमं स्थानाख्यमध्ययनमभिहितमित्यतस्तद्व्याख्यायते इत्यनेन सम्बन्धेनायातस्यास्याध्ययनस्य चत्वार्यनुयोगद्वाराणि भवन्ति, तत्रोपक्रमान्तर्गतोऽर्थाधिकारोऽयम्—किंभूतं साधुना स्थानमाश्रयितव्यमिति, नामनिष्पन्ने तु निक्षेपे स्थानमिति नाम, तस्य च नामादिश्चतुर्धा निक्षेपः, तत्रेह द्रव्यमाश्रित्योर्ध्वस्था-

नेनाधिकारः, तदाह निर्युक्तिकारः—ऊर्द्धस्थाने 'प्रकृतं' प्रस्ताव इति, द्वितीयमध्ययनं निशीथिका, तस्याश्च यदुक्तो निक्षेपः, तं च स्वस्थान एव करिष्यामीति। साम्प्रतं सूत्रमुच्चारणीयं, तच्चेदम्—

(मूलं) से भिक्खू वा० अभिकंखेज्जा ठाणं ठाइत्तए, से अणुपविसिज्जा गामं वा जाव रायहाणिं वा, से जं पुण ठाणं जाणिज्जा—सअंडं जाव मक्कडासंताणयं तं तह० ठाणं अफासुयं अणेस० लाभे संते नो प०, एवं सिज्जागमेण नेयव्वं जाव उदयपसूयाइंति॥ इच्चेयाइं आयतणाइं उवाइकम्म २ अह भिक्खू इच्छिज्जा चउहिं पडिमाहिं ठाणं ठाइत्तए, तत्थिमा पढमा पडिमा—अचित्तं खलु उवसज्जिज्जा अवलंबिज्जा काएण विप्परिकम्माइ नो सवियारं ठाणं ठाइस्सामि। दुचा पडिमा—अचित्तं खलु उवसज्जेज्जा अवलंबिज्जा नो काएण विप्परिकम्माई नो सवियारं ठाणं ठाइस्सामि दुचा पडिमा। अहावरा तचा पडिमा—अचित्तं खलु उवसज्जेज्जा अवलंबिज्जा नो काएण विपरिकम्माइ नो सवियारं ठाणं ठाइस्सामित्ति तचा पडिमा। अहावरा चउत्था पडिमा—अचित्तं खलु उवसज्जेज्जा नो अवलंबिज्जा काएण नो परकम्माई नो सवियारं ठाणं ठाइस्सामित्ति वोसट्ठकाए वोसट्ठकेसमंसुलोमनहे संनिरुद्धं वा ठाणं ठाइस्सामित्ति चउत्था पडिमा। इच्चेयासिं चउण्हं पडिमाणं जाव पग्गहियतरायं विहरिज्जा, नो किंचिवि वइज्जा, एवं खलु तस्स जाव तस्स० जाव जइज्जासित्तिबेमि (सू. ३८६) ठाणासत्तिक्कयं सम्मत्तं॥२-२-८॥

'स' पूर्वोक्तो भिक्षुर्यदा स्थानमभिकाङ्क्षेत् स्थातुं तदा सोऽनुप्रविशेद्ग्रामादिकम्. अनुप्रविश्य च स्थानमूर्द्धस्थानाद्यर्थमन्वेषयेत्,

१ स्थानसप्तिका: स्थानादिनिक्षेपः ५

तच साण्डं यावत्ससन्तानकमप्रासुकमिति लाभे सति न प्रतिगृह्णीयादिति, इत्येवमन्यान्यपि सूत्राणि शय्यावद्रष्टव्यानि यावदुदक्प्रसूतानि कन्दादीनि यदि भवेयुस्तत्तथाभूतं स्थानं न गृह्णीयादिति ॥ साम्प्रतं प्रतिमोद्देशेनाह-'इत्येतानि' पूर्वोक्तानि वक्ष्यमाणानि वा 'आयतनानि' कर्मोपादानानि 'उपातिक्रम्य २' अतिलङ्घ्याथ भिक्षुः स्थानं स्थातुमिच्छेत् 'चतुर्भिः प्रतिमाभिः' अभिग्रहविशेषैः करणभूतैः, ताश्च यथाक्रममाह, तत्रेयं प्रथमा-कस्यचिद्भिक्षोरेवंभूतोऽभिग्रहो भवति, यथाऽहमचित्तं स्थानमुपाश्रयिष्यामि, तथा किञ्चिदचित्तं कुड्यादिकमवलम्बयिष्ये कायेन, तथा 'विपरिक्रमिष्यामि' परिस्पन्दं करिष्यामि, हस्तपादाद्याकुञ्चनादि करिष्यामीत्यर्थः, तथा तत्रैव सविचारं स्तोकपादादिविहरणरूपं स्थानं 'स्थास्यामि' समाश्रयिष्यामि, प्रथमा प्रतिमा। द्वितीयायां त्वालम्बनाकुञ्चनप्रसारणादिक्रियामवलम्बनं च करिष्ये, न पादविहरणमिति। तृतीयायां त्वाकुञ्चनप्रसारणमेव नावलम्बनपादविहरणे इति। चतुर्थ्यां पुनस्त्रयमपि न विधत्ते, स चैवंभूतो भवति-व्युत्सृष्टः-त्यक्तः परिमितं कालं कायो येन स तथा, तथा व्युत्सृष्टं केशश्मश्रुलोमनखं येन स तथा, एवंभूतश्च सम्यग्निरुद्धं स्थानं स्थास्यामीत्येवं प्रतिज्ञाय कायोत्सर्गव्यवस्थितो मेरुवन्निष्प्रकम्पस्तिष्ठेत्, यद्यपि कश्चित्केशाद्युत्पाटयेत्तथाऽपि स्थानान्न चलेदिति, आसां चान्यतमां प्रतिमां प्रतिपद्य नापरमप्रतिपन्नप्रतिमं साधुमपवदेत् नात्मोत्कर्षं कुर्यात् न किञ्चिदेवंजातीयं वदेदिति ॥ प्रथमः सप्तैककः समाप्तः ॥ २-२-८ ॥

प्रथमानन्तरं द्वितीयः सप्तैककः, सम्बन्धश्चास्य-इहानन्तराध्ययने स्थानं प्रतिपादितं, तच्च किंभूतं स्वाध्याययोग्यं ?, तस्यां च स्वाध्यायभूमौ यद्विधेयं यच्च न विधेयमित्यनेन सम्बन्धेन निषीधिकाऽध्ययनमायातम्, अस्य च चत्वार्यनुयोगद्वाराणि भवन्ति,

तत्र नामनिष्पन्ने निक्षेपे निषीथिकेति नाम, अस्य च नामस्थापनाद्रव्यक्षेत्रकालभावैः षड्विधो निक्षेपः, नामस्थापने पूर्ववत्, द्रव्यनिषीथं नोआगमतो ज्ञशरीरभव्यशरीरव्यतिरिक्तं यद्द्रव्यं प्रच्छन्नं, क्षेत्रनिषीथं तु ब्रह्मलोकरिष्ठविमानपार्श्ववर्तिन्यः कृष्णराजयो यस्मिन् वा क्षेत्रे तद्व्याख्यायते, कालनिषीथं कृष्णरजन्यो यत्र वा काले निषीथं व्याख्यात इति, भावनिषीथं नोआगमत इदमेवाध्ययनम्, आगमैकदेशत्वात्, गतो नामनिष्पन्नो निक्षेपः, साम्प्रतं सूत्रानुगमे सूत्रमुच्चारणीयं, तच्चेदम्—

(मूलं) से भिक्खू वा २ अभिकं० निसीहियं फासुयं गमणाए, से पुण निसीहियं जाणिज्जा–सअंडं तह० अफा० नो चेइस्सामि ॥ से भिक्खू० अभिकंखेज्जा निसीहियं गमणाए, से पुण नि० अप्पपाणं अप्पबीयं जाव संतापयं तह० निसीहियं फासुयं चेइस्सामि, एवं सिज्जागमेणं नेयव्वं जाव उदयप्पसूयाइं ॥ जे तत्थ दुवग्गा तिवग्गा चउवग्गा पंचवग्गा वा अभिसंधारिंति निसीहियं गमणाए ते नो अन्नमन्नस्स कायं आलिंगिज्ज वा चुंबिज्ज वा दंतेहिं वा नहेहिं वा अच्छिंदिज्ज वा वुच्छि०, एयं खलु० जं सव्वट्ठेहिं सहिए समिए सया जएज्जा, सेयमिणं मन्निज्जासित्तिबेमि ॥ (सू. ३८७) निसीहियासत्तिक्कयं ॥ २-२-९ ॥

१०

स भावभिक्षुर्यदि वसतेरुपहताया अप्यत्र निषीधिकां–स्वाध्यायभूमिं गन्तुमभिकाङ्क्षेत्, तां च यदि साण्डां यावत्ससन्तानकां जानीयात्ततोऽप्रासुकत्वान्न परिगृह्णीयादिति ॥ किञ्च–स भिक्षुरल्पाण्डादिकां गृह्णीयादिति ॥ एवमन्यान्यपि सूत्राणि शय्यावन्नेयानि यावद् पत्रोदकप्रसूतानि कन्दादीनि स्युस्तां न गृह्णीयादिति ॥ तत्र गतानां विधिमधिकृत्याह–ये तत्र साधवो नैषेधिकाभूमौ द्वित्राद्या

१ निशीथनिशीधयोः प्राकृते एकेन निसीहशब्देन वाच्यत्वात् एव निक्षेपवर्णनं, तथा च निषीधिका निशीथिकेत्युभयमपि समतमभिधानयो ।

गच्छेयुस्ते नान्योऽन्यस्य 'कायं' शरीरमालिङ्गयेयुः-परस्परं गात्रसंस्पर्शं न कुर्युरित्यर्थः, नापि 'विविधम्' अनेकप्रकारं यथा मोहोदयो भवति तथा विलिङ्गेयुरिति, तथा कन्दर्पप्रधाना नखसंयोगादिकाः क्रिया न कुर्युरिति, एतच्चस्य भिक्षोः सामग्र्यं यदसौ 'सर्वार्थैः' अशेषप्रयोजनैरामुष्मिकैः 'सहितः' समन्वितः तथा 'समितः' पञ्चभिः समितिभिः 'सदा' यावदायुस्तावत्संयमानुष्ठाने यतेत, एतदेव च श्रेय इत्येवं मन्येतेति ब्रवीमीति पूर्ववत् ॥ निषीधिकाऽध्ययनं द्वितीयमादितो नवमं समाप्तमिति ॥ २-२-२ ॥

---

साम्प्रतं तृतीयः सप्तककः समारभ्यते, अस्य चायमभिसम्बन्धः-इहानन्तरे निषीधिका प्रतिपादिता, तत्र च कथम्भूतायां भूमावुच्चारादि विधेयमिति, अस्य च नामनिष्पन्ने निक्षेपे उच्चारप्रश्रवण इति नाम, तदस्य निरुक्तपर्थं निर्युक्तिकृदाह—

उच्चवइ सरीराओ उच्चारो पसवइत्ति पासवणं। तं कह आयरमाणस्स होइ सोही न अइयारो ? ॥३२४॥

शरीरादुत्-प्राबल्येन च्यवते-अपयाति चरतीति वा उच्चारः-विष्ठा, तथा प्रकर्षेण श्रवतीति प्रश्रवणम्-एकिका, तच्च कथमाचरतः साधोः शुद्धिर्भवति नातिचार इति ? ॥ उत्तरगाथया दर्शयितुमाह—

मुणिणा छक्कायदयावरेण सुत्तभणियंमि ओगासे। उच्चारविउस्सग्गो कायव्वो अप्पमत्तेणं ॥३२५॥

'साधुना' षड्जीवकायरक्षणोद्युक्तेन वक्ष्यमाणसूत्रोक्ते स्थण्डिले उच्चारप्रश्रवणे विधेये अप्रमत्तेनेति ॥ निर्युक्त्यनुगमानन्तरं सूत्रानुगमे सूत्रं, तच्चेदम्—

(मूलं) से भि० उच्चारपासवणकिरियाए उब्बाहिज्जमाणे सयस्स पायपुंछणस्स असईए तओ पच्छा साहम्मियं



१५ १० २६

जाइज्जा ॥ से भि० से जं पु० थंडिल्लं जाणिज्जा सअंडं० तह० थंडिल्लंसि नो उच्चारपासवणं वोसिरिज्जा ॥ से भि० जं पुण थं० अप्पाणं जाव संताणयं तह० थं० उच्चा० वोसिरिज्जा ॥ से भि० से जं० अस्सिंपडियाए एगं साहम्मियं समुद्दिस्स वा अस्सिं० बहवे साहम्मिया स० अस्सिं प० एगं साहम्मिणिं स० अस्सिंप० बहवे साहम्मिणीओ स० अस्सिं बहवे समण० पगणिय २ समु० पाणाइं ४ जाव उद्देसियं चेएइ, तह० थंडिल्लं पुरिसंतरकडं जाव बहिया नीहडं वा अनी० अन्नयरंसि वा तहप्पगारंसि थं० उच्चारं नो वोसि० ॥ से जं० बहवे समणमा० कि० व० अतिही समुद्दिस्स पाणाइं भूयाइं जीवाइं सत्ताइं जाव उद्देसिय चेएइ, तह० थंडिलं पुरिसंतरगडं जाव बहिया अनीहडं अन्नयरंसि वा तह० थंडिल्लंसि नो उच्चारपासवण०, अह पुण एवं जाणिज्जा–अपुरिसंतरगडं जाव बहिया नीहडं अन्नयरंसि वा तहप्पगारं० थं० उच्चार० वोसि० ॥ से० जं० अस्सिंपडियाए कयं वा कारियं वा पामिच्चियं वा छन्नं वा घट्ठं वा मट्ठं वा लित्तं वा संमट्ठं वा संपधूयं वा अन्नयरंसि वा तह० थंडि० नो उ०॥ से भि० से जं पुण थं० जाणेज्जा, इह खलु गाहावई वा गाहा० पुत्ता वा कंदाणि वा जाव हरियाणि वा अंतराओ वा बाहिं नीहरंति बहियाओ वा अंतो साहरंति अन्नयरंसि वा तह० थं० नो उच्चा०॥ से भि० से जं पुण० जाणेज्जा–खंधंसि वा पीढंसि वा मंचंसि वा मालंसि वा अट्टंसि वा पासायंसि वा अन्नयरंसि वा० थं० नो उ० ॥ से भि० से जं पुण० अणंतरहियाए पुढवीए ससिणिद्धाए पु० ससरक्खाए पु० मट्टियाए मक्कडाए चित्तमंताए सिलाए चित्तमंताए लेलुयाए कोलावासंसि वा दारुयंसि वा जीवपइट्ठियंसि वा जाव मक्कडासं-



१०

ताणयंसि अन्न० थं० नो उ० ॥ (सू. ३८८)

स भिक्षुः कदाचिदुच्चारप्रश्रवणकर्त्तव्यतयोत्-प्राबल्येन बाध्यमानः स्वकीयपादपुञ्छनसमाध्यादावुच्चारादिकं कुर्यात्, स्वकीयस्य त्वभावेऽन्यं 'साधर्मिकं' साधुं याचेत पूर्वप्रत्युपेक्षितं पादपुञ्छनकसमाध्यादिकमिति, तदनेनैतत्प्रतिपादितं भवति-वेगधारणं न कर्त्तव्यमिति ॥ अपिच-स भिक्षुरुच्चारप्रश्रवणाशङ्कायां पूर्वमेव स्थण्डिलं गच्छेत्, तस्मिंश्च साण्डादिकेऽप्रासुकत्वादुच्चारादि न कुर्यादिति ॥ किञ्च-अल्पाण्डादिके तु प्रासुके कार्यमिति ॥ तथा स भिक्षुर्यत्पुनरेवंभूतं स्थण्डिलं जानीयात्, तद्यथा-एकं बहून् वा साधर्मिकान् समुद्दिश्य तत्प्रतिज्ञया कदाचित्कश्चित्स्थण्डिलं कुर्यात् तथा श्रमणादीन् प्रगणय्य वा कुर्यात्, तच्चैवंभूतं पुरुषान्तरस्वीकृतमस्वीकृतं वा मूलगुणदुष्टमुद्देशिकं स्थण्डिलमाश्रित्योच्चारादि न कुर्यादिति ॥ अपिच-स भिक्षुः साधुमुद्दिश्य क्रीतादावुत्तरगुणाशुद्धे स्थण्डिले उच्चारादि न कुर्यादिति ॥ किञ्च-स भिक्षुर्गृहपत्यादिना कन्दादिके स्थण्डिलान्निष्काश्यमाने तत्र वा निक्षिप्यमाणे नोच्चारादि कुर्यादिति ॥ किञ्च-स भिक्षुः स्कन्धादौ स्थण्डिले नोच्चारादि कुर्यादिति ॥ किञ्च-स भिक्षुर्यत्पुनरेवंभूतं स्थण्डिलं जानीयात्, तद्यथा-अनन्तरितायां सचित्तायां पृथिव्यां तत्रोच्चारादि न कुर्यात्, शेषं सुगमं, नवरं 'कोलावासं'ति घुणावासम् ॥ अपि च-

(मूलं) से भि० से जं० जाणे०-इह खलु गाहावई वा गाहावइपुत्ता वा कंदाणि वा जाव बीयाणि वा परिसाडिंसु वा परिसाडिंति वा परिसाडिस्संति वा अन्न० तह० नो उ० ॥ से भि० से जं० इह खलु गाहावई वा गा० पुत्ता वा सालीणि वा वीहीणि वा मुग्गाणि वा मासाणि वा कुलत्थाणि वा जवाणि वा जवजवाणि वा पइरिंसु वा पइरिंति वा पइरिस्संति वा अन्नयरंसि वा तह० थंडि० नो उ० ॥ से भि० २ जं० आमोयाणि वा



२०



२८

घासाणि वा भिलुयाणि वा विज्जलयाणि वा खाणुयाणि वा कडयाणि वा पगडाणि वा दरीणि वा पडुग्गाणि वा समाणि वा विसमाणि वा अन्नयरंसि तह० नो उ०॥ से भिक्खू० से जं० पुण थंडिलं जाणिज्जा माणुसरंधणाणि वा महिसकरणाणि वा वसहक० अस्सक० कुक्कुडक० मक्कडक० हयक० लावयक० वट्टयक० तित्तिरक० कवोयक० कविंजलकरणाणि वा अन्नयरंसि वा तह० नो उ०॥ से जं जाणे० वेहाणसट्ठाणेसु वा गिद्धपट्ठा० वा तरुपडण-ट्ठाणेसु वा० मेरुपडणठा० विसभक्खणयठा० अगणिपडणट्ठा० अन्नयरंसि वा तह० नो उ०॥ से भि० से जं० आरामाणि वा उज्जाणाणि वा वणाणि वा वणसंडाणि वा देवकुलाणि वा सभाणि वा पवाणि वा अन्न० तह० नो उ०॥ से भिक्खू० से जं पुण जा० अट्टालयाणि वा चरियाणि वा दाराणि वा गोपुराणि वा अन्नयरंसि वा तह० थं० नो उ०॥ से भि० से जं० जाणे० तिगाणि वा चउक्काणि वा चच्चराणि वा चउम्मुहाणि वा अन्नयरंसि वा तह० नो उ०॥ से भि० से जं० जाणे० इंगालदाहेसु खारदाहेसु वा मडयदाहेसु वा मडयथूभियासु वा वा मडयचेइएसु वा अन्नयरंसि वा तह० थं० नो उ०॥ से जं जाणे० नइयायतणेसु वा पंकाययणेसु वा ओघा-ययणेसु वा सेयणवहंसि वा अन्नयरंसि वा तह० थं० नो उ०॥ से भि० से जं जाणे० नवियासु वा मट्टियखा-णिआसु नवियासु गोप्पहेलियासु वा गवाणीसु वा खाणीसु वा अन्नयरंसि वा तह० थं० नो उ०॥ से जं जा० डागवच्चंसि वा सागव० मूलग० हत्थंकरवच्चंसि वा अन्नयरंसि वा तह० नो उ० वो०॥ से भि० से जं असण-वणंसि वा सणव० धायइव० केयइवणंसि वा अंबव० असोगव० नागव० पुन्नागव० चुल्लगव० अन्नयरेसु तह०



५

१०

पत्तोवेएसु वा पुप्फोवेएसु वा फलोवेएसु वा बीओवेएसु वा हरिओवेएसु वा नो उ० वो०॥ ( सू० ३८९ )

स भिक्षुर्यत्पुनरेवंभूतं स्थण्डिलं जानीयात्, तद्यथा-यत्र गृहपत्यादयः कन्दबीजादिपरिक्षेपणादिक्रियाः कालत्रयवर्त्तिनीः कुर्युस्तत्रैहिकामुष्मिकापायभयादुच्चारादि न कुर्यादिति ॥ तथा-यत्र च गृहपत्यादयः शाल्यादीन्युप्तवन्तो वपन्ति वप्स्यन्ति वा तत्राप्युच्चारादि न विदध्यादिति ॥ किञ्च-स भिक्षुर्यत् पुनरेवंभूतं स्थण्डिलं जानीयात्, तद्यथा-'आमोकानि' कचवरपुञ्जाः 'घासाः' बृहत्यो भूमिराजयः 'भिलुगाणि' श्लक्ष्णभूमिराजयः 'विज्जलं' पिच्छलं 'स्थाणुः' प्रतीतः 'कडवाणि' इक्षुयोन्नलकादिदण्डकाः 'प्रगर्त्ताः' महागर्त्ताः 'दरी' प्रतीता 'प्रदुर्गाणि' कुड्यप्राकारादीनि, एतानि च समानि वा विषमाणि वा भवेयुस्तदेतेष्वात्मसंयमविराधनासम्भवान्नोच्चारादि कुर्यादिति ॥ किञ्च-स भिक्षुर्यत्पुनरेवंभूतं स्थण्डिलं जानीयात्, तद्यथा—'मानुषरन्धनानि' चुल्ल्यादीनि तथा महिष्यादीनुद्दिश्य यत्र किञ्चित्क्रियते ते वा यत्र स्थाप्यन्ते तत्र लोकविरुद्धप्रवचनोपघातादिभयान्नोच्चारादि कुर्यादिति ॥ तथा-स भिक्षुः 'वेहानसस्थानानि' मानुषोल्लम्बनस्थानानि 'गृध्रपृष्ठस्थानानि' यत्र मुमूर्षवो गृध्रादिभक्षणार्थं रुधिरादिदिग्धदेहा निपत्यासते 'तरुपतनस्थानानि' यत्र मुमूर्षव एवानशनेन तरुरत्पतितास्तिष्ठन्ति तरुभ्यो वा यत्र पतन्ति, एवं मेरुपतनस्थानान्यपि, मेरुश्च पर्वतोऽभिधीयत इति, एवं विषभक्षणाग्निप्रवेशस्थानादिषु नोच्चारादि कुर्यादिति ॥ अपिच-आरामदेवकुलादौ नोच्चारादि विदध्यादिति ॥ तथा-प्राकारसम्बन्धिन्यट्टालादौ नोच्चारादि कुर्यादिति॥ किञ्च-त्रिकचतुष्कचत्वरादौ च नोच्चारादि व्युत्सृजेदिति ॥ किञ्च-स भिक्षुरङ्गारदाहस्थानश्मशानादौ नोच्चारादि विदध्यादिति ॥ अपिच-'नद्यायतनानि' यत्र तीर्थस्थानेषु लोकाः पुण्यार्थं स्नानादि कुर्वन्ति-'पङ्कायतनानि' यत्र पङ्किलप्रदेशे लोका धर्मार्थं लोठनादिक्रियां कुर्वन्ति 'ओघायतनानि' यानि प्रवाहत एव पूज्यस्थानानि



२०



२८

तडागजलप्रवेशौघमार्गो वा 'सेचनपथे वा' नीकादौ नोच्चारादि विधेयमिति ॥ तथा-स भिक्षुरभिनवासु मृत्सु खनिषु, तथा नवासु गोप्रहेल्यासु 'गवादनीषु' सामान्येन वा गवादनीषु खनीषु वा नोच्चारादि विदध्यादिति ॥ किञ्च-'डाग'त्ति डालप्रधानं शाकं, पत्रप्रधानं तु शाकमेव, तद्वति स्थाने, तथा मूलकादिवति च नोच्चारादि कुर्यादिति ॥ तथा-अशनो-बीयकस्तद्वनादौ च नोच्चारादि कुर्यादिति, तथा पत्रपुष्पफलाद्युपेतेष्विति ॥ कथं चोच्चारादि कुर्यादिति दर्शयति—

( मूलं ) से भि० सयपायंयं वा परपायंयं वा गहाय से तमायाए एगंतमवक्कमे अणावायंसि असंलोयंसि अप्पपाणंसि जाव मक्कडासंताणयंसि अहारामंसि वा उवस्सयंसि तओ संजयामेव उच्चारपासवणं वोसिरिज्जा, से तमायाए एगंतमवक्कमे अणाबाहंसि जाव संताणयंसि अहारामंसि वा झामथंडिल्लंसि वा अन्नयरंसि वा तह० थंडिल्लंसि अचित्तंसि तओ संजयामेव उच्चारपासवणं वोसिरिज्जा, एयं खलु तस्स० सया जइज्जासि-(सू. ३९०) त्तिबेमि ॥ उच्चारपासवणसत्तिक्कओ सम्मत्तो ॥ २-२-३-१० ॥

५

स भिक्षुः स्वकीयं परकीयं वा 'पात्रकं' समाधिस्थानं गृहीत्वा स्थण्डिलं वाऽनापातमसंलोकं गत्वोच्चारं प्रस्रवणं वा 'कुर्यात्' प्रतिष्ठापयेदिति, शेषमध्ययनसमाप्तिं यावत्पूर्ववदिति ॥ तृतीयं सप्तकैकाध्ययनमादितो दशमं समाप्तम् ॥२-२-३-१०॥

१०

तृतीयानन्तरं चतुर्थः सप्तैककः समारभ्यते, अस्य चायमभिसम्बन्धः-इहाद्ये स्थानं द्वितीये स्वाध्यायभूमिस्तृतीये उच्चारादिविधिः प्रतिपादितः, तेषु च वर्तमानो यद्यनुकूलप्रतिकूलशब्दान् शृणुयात्तेष्वरक्तद्विष्टेन भाव्यम्, इत्यनेन सम्बन्धेनायातस्यास्य

नामनिष्पन्ने निक्षेपे शब्दसप्तकक इति नाम, अस्य च नामस्थापने अनादृत्य द्रव्यनिक्षेपं दर्शयितुं निर्युक्तिकृद्गाथापश्चार्द्धेनाह—'

[ दव्वं संठाणाई भावो वन्न कसिणं सभावो य ] दव्वं सद्दपरिणयं भावो उ गुणा य कित्ती य ॥३२३॥

द्रव्यं नोआगमतो व्यतिरिक्तं शब्दत्वेन यानि भाषाद्रव्याणि परिणतानि तानीह गृह्यन्ते, भावशब्दस्त्वागमतः शब्दे उपयुक्तः, नोआगमतस्तु गुणा—अहिंसादिलक्षणा यतोऽसौ हिंसाऽनृतादिविरतिलक्षणैर्गुणैः श्लाघ्यते, कीर्तिश्च यथा भगवत एव चतुस्त्रिंशदतिशयाद्युपेतस्य सातिशयरूपसंपत्समन्वितस्येत्यर्हन्निति लोके ख्यातिरिति ॥ निर्युक्त्यनुगमादनन्तरं सूत्रानुगमे सूत्रं, तच्चेदम्—

(मूलं) से भि० मुइंगसद्दाणि वा नंदीस० झल्लरीस० अन्नयराणि वा तह० विरूवरूवाइं सद्दाइं वितताइं कन्नसोयणपडियाए नो अभिसंधारिज्जा गमणाए ॥ से भि० अहावेगइयाइं सद्दाइं सुणेइ, तं०-वीणासद्दाणि वा विपंचीस० पिप्पी (बद्धी)सगस० तृणयसद्दा० वीणियस० तुंबवीणियसद्दाणि वा ढंकुणसद्दाइं अन्नयराइं तह० विरूवरूवाइं० सद्दाइं वितताइं कण्णसोयपडियाए नो अभिसंधारिज्जा गमणाए ॥ से भि० अहावेगइयाइं सद्दाइं सुणेइ, तं०-तालसद्दाणि वा कंसतालसद्दाणि वा लत्तियसद्दा० गोधियस० किरिकिरियास० अन्नयरा० तह० विरूव० सद्दाणि कण्ण० गमणाए ॥ से भि० अहावेग० तं०-संखसद्दाणि वा वेणु० वंसस० खरमुहिस० परिपिरियास० अन्नय० तह० विरूव० सद्दाइं झुसिराइं कन्न० ॥ (सू० ३९१)

'स' पूर्वाधिकृतो भिक्षुर्यदि विततततघनशुषिररूपांश्चतुर्विधानातोद्यशब्दान् शृणुयात्, ततस्तच्छ्रवणप्रतिज्ञया 'नाभिसन्धारयेद्गमनाय' न तदाकर्णनाय गमनं कुर्यादित्यर्थः, तत्र विततं—मृदङ्गनन्दीझल्लर्यादि, ततं—वीणाविपञ्चीबद्धीसकादितन्त्रीवाद्यं, वीणादीनां

च भेदस्तन्त्रीसङ्ख्यातोऽवसेयः, घनं तु-हस्ततालकंसालादि प्रतीतमेव नवरं लत्तिका-कंशिका गोहिका-भाण्डानां कक्षाहस्तगता-तोद्यविशेषः 'किरिकिरिया' तेषामेव वंशादिकम्बिकातोद्यं, शुषिरं तु शङ्खवेण्वादीनि प्रतीतान्येव, नवरं खरमुही-तीहाडिका 'परि-पिरिय'त्ति कोलियकपुटावनद्धा वंशादिनलिका, इत्येष सूत्रचतुष्टयसमुदायार्थः ॥ किञ्च—



(मूलं) से भि० अहावेग० तं० वप्पाणि वा फलिहाणि वा जाव सराणि वा सागराणि वा सरसरपंतियाणि वा अन्न० तह० विरूव० सद्दाइं कण्ण०॥ से भि० अहावे० तं०-कच्छाणि वा णूमाणि वा गहणाणि वा वणाणि वा वणदुग्गाणि पव्वयाणि वा पव्वयदुग्गाणि वा अन्नः॥ अहा० तं०-गामाणि वा नगराणि वा निगमाणि वा रायहाणाणि वा आसमपट्टणसंनिवेसाणि वा अन्न० तह० नो अभि० से भि० अहावे० आरामाणि वा उज्जाणाणि वा वणसंडाणि वा देवकुलाणि वा सभाणि वा पवाणि वा अन्नय० तहा० सद्दाइं नो अभि०॥ से भि० अहावे० अट्टाणि वा अट्टालयाणि वा चरियाणि वा दाराणि वा गोपुराणि वा अन्न० तह० सद्दाइं नो अभि०॥ से भि० अहावे० तंजहा-तियाणि वा चउक्काणि वा चच्चराणि वा चउम्मुहाणि वा अन्न० तह० सद्दाइं नो अभि०॥ से भि० अहावे० तंजहा-महिसकरणट्ठाणाणि वा वसभक० अस्सक० हत्थिक० जाव कविंजल-करणट्ठा० अन्न० तह० नो अभि०॥ से भि० अहावे० तंज०-महिसजुद्धाणि वा जाव कविंजलजु० अन्न० तह० नो अभि०॥ से भि० अहावे० तं०-जूहियठाणाणि वा हयजू० गयजू० अन्न० तह० नो अभि०॥ (सू. ३९२)

५

१०

स भिक्षुरथ कदाचिदेकतरान् कांश्चित् शब्दान् शृणुयात्, तद्यथा-'वप्पाणि वे'ति वप्रः-केदारस्तदादिर्वा, तद्वर्णकाः शब्दा वप्रा

एवोक्ताः, वप्रादिषु ■ श्रव्यगेयादयो ये शब्दास्तच्छ्रवणप्रतिज्ञया वप्रादीन्न गच्छेदित्येवं सर्वत्रायोज्यम्। अपि च-यावत् महिष- युद्धानीति षडपि सूत्राणि सुबोध्यानि ॥ किञ्च-स भिक्षुर्यूथमिति-द्वन्द्वं वधूवरादिकं तत्स्थानं वेदिकादि, तत्र श्रव्यगेयादिशब्दश्रवणप्रतिज्ञया न गच्छेत्, वधूवरवर्णनं वा यत्र क्रियते तत्र न गच्छेदिति, एवं हयगजयूथादिस्थानानि द्रष्टव्यानीति ॥ तथा—

(मूलं) से भि० जाव सुणेइ, तंजहा-अक्खाइयठाणाणि वा माणुम्माणियट्ठाणाणि महताऽऽहयनट्टगीयवाइयतंतीतलतालतुडियपडुप्पवाइयट्ठाणाणि वा अन्न० तह० सद्दाइं नो अभिसं० ॥ से भि० जाव सुणेइ, तं०—कलहाणि वा डिंबाणि वा डमराणि वा दोरज्जाणि वा वेर० विरुद्धर० अन्न० तह० सद्दाइं नो०॥ से भि० जाव सुणेइ खुड्डियं दारियं परिभुत्तमंडियं अलंकियं निवुज्झमाणिं पेहाए एगं वा पुरिसं वहाए नीणिज्जमाणं पेहाए अन्नयराणि वा तह० नो अभि०॥ से भि० अन्नयराइं विरूव० महासवाइं एवं जाणेज्जा तंजहा—बहुसगडाणि वा बहुरहाणि वा बहुमिलक्खूणि वा बहुपचंताणि वा अन्न० तह० विरूव० महासवाइं कन्नसोयपडियाए नो अभिसंधारिज्जा गमणाए ॥ से भि० अन्नयराइं विरूव० महुस्सवाइं एवं जाणिज्जा, तंजहा-इत्थीणि वा पुरिसाणि वा थेराणि वा डहराणि वा मज्झिमाणि वा आभरणविभूसियाणि वा गायंताणि वा वायंताणि नच्चंताणि वा हसंताणि रमंताणि वा मोहंताणि वा विपुलं असणं पाणं खाइमं साइमं परिभुंजंताणि वा परिभायंताणि वा विच्छड्डियमाणाणि वा विगोवयमाणाणि वा अन्नय० तह० विरूव० महु० कन्नसोय० ॥ से भि० नो इहलोइएहिं सद्देहिं नो परलोइएहिं स० नो सुएहिं स० नो असुएहिं स० नो दिट्ठेहिं सद्देहिं नो अदिट्ठेहिं स० नो कंतेहिं सद्देहिं



२०

॥३८०॥
२८

कादीनि 'काष्ठकर्माणि' रथादीनि 'पुस्तकर्माणि' लेप्यकर्माणि 'चित्रकर्माणि' प्रतीतानि 'मणिकर्माणि' विचित्रमणिनिष्पादितस्वस्तिकादीनि, तथा 'दन्तकर्माणि' दन्तपुत्तकालिकादीनि, तथा पत्रच्छेद्यकर्माणि, इत्येवमादीनि विरूपरूपाणि चक्षुर्दर्शनप्रतिज्ञया नाभिसन्धारयेद्गमनाय, एतानि द्रष्टुं गमने मनोऽपि न विदध्यादित्यर्थः। एवं शब्दसप्तैककसूत्राणि चतुर्विधातोद्यरहितानि सर्वाण्यपीहायोज्यानि, केवलं रूपप्रतिज्ञयेत्येवमभिलापो योज्यः, दोषाश्चात्र प्राग्वत्समायोज्या इति ॥ पञ्चमं सप्तैककाध्ययनमादितो द्वादशं समाप्तमिति ॥ २-२-५-१२ ॥

५

अथ षष्ठं परक्रियाभिधं सप्तैककमध्ययनम्। साम्प्रतं पञ्चमानन्तरं षष्ठः सप्तैककः समारभ्यते, अस्य चायमभिसम्बन्धः-अनन्तरं रागद्वेषोत्पत्तिनिमित्तप्रतिषेधोऽभिहितः, तदिहापि स एवान्येन प्रकारेणाभिधीयते इत्यनेन सम्बन्धेनायातस्यास्य नामनिष्पन्ने निक्षेपे परक्रियेत्यादानपदेन नाम, तत्र परशब्दस्य षड्विधं निक्षेपं दर्शयितुं निर्युक्तिकारो गाथाऽर्द्धमाह—

छक्कं परइक्किक्कं त १ दन्न २ माएस ३ कम ४ बहु ५ पहाणे ६।

१०

षट्कं 'पर' इति परशब्दविषये नामादिः षड्विधो निक्षेपः, तत्र नामस्थापने क्षुण्णे, द्रव्यादिपरमेकैकं षड्विधं भवतीति दर्शयति, तद्यथा—तत्परम् १ अन्यपरम् २ आदेशपरं ३ क्रमपरं ४ बहुपरं ५ प्रधानपरं ६ मिति, तत्र द्रव्यपरं तावत्तद्रूपतयैव वर्तमानं परम्—अन्यत्तत्परं यथा परमाणोः परः परमाणुः १, अन्यपरं त्वन्यरूपतया परम्—अन्यद्, यथा एकाणुकाद् द्व्यणुकत्र्यणुकादि, एवं द्व्यणुकादेकाणुकत्र्यणुकादि २, 'आदेशपरम्' आदिश्यते—आज्ञाप्यत इत्यादेशः—यः कस्यांचित्क्रियायां नियोज्यते कर्मकरादिः स

**अथ पञ्चमं रूपसप्तैककमध्ययनम्।** चतुर्थसप्तैककान्तरं पञ्चमं समारभ्यते, अस्य चायमभिसम्बन्धः-इहानन्तरं श्रवणेन्द्रियमाश्रित्य रागद्वेषोत्पत्तिर्निषिद्धा तदिहापि चक्षुरिन्द्रियमाश्रित्य निषिध्यते, इत्यनेन सम्बन्धेनायातस्यास्याध्ययनस्य नामनिष्पन्ने निक्षेपे रूपसप्तैकक इति नाम, तत्र रूपस्य चतुर्धा निक्षेपः, नामस्थापने अनादृत्य द्रव्यभावनिक्षेपार्थं निर्युक्तिकृद् गाथाऽर्द्धमाह—

**दव्वं संठाणाई भावो वन्न कसिणं सभावो य। [दव्वं सद्दपरिणयं भावो उ गुणा य कित्ती य] ॥३२७॥**

तत्र द्रव्यं नोआगमतो व्यतिरिक्तं पञ्च संस्थानानि परिमण्डलादीनि, भावरूपं द्विधा-वर्णतः स्वभावतश्च, तत्र वर्णतः कृत्स्नाः पञ्चापि वर्णाः, स्वभावरूपं त्वन्तर्गतक्रोधादिवशाद् भ्रूभङ्गललाटनयनारोपणनिष्ठुरवागादिकम्, एतद्विपरीतं प्रसन्नस्येति, उक्तञ्च-"रुट्ठस्स खरा दिट्ठी उप्पलधवला पसन्नचित्तस्स। दुहियस्स ओमिलायइ गंतुमणस्सुस्सुआ होइ ॥१॥" सूत्रानुगमे सूत्रं, तच्चेदम्—

**(मूलं) से भि० अहावेगइयाइं रूवाइं पासइ, तं० गंथिमाणि वा वेढिमाणि वा पूरिमाणि वा संघाइमाणि वा कट्ठकम्माणि वा पोत्थकम्माणि वा चित्तक० मणिकम्माणि वा दंतक० पत्तच्छिज्जकम्माणि वा विविहाणि वा वेढिमाइं अन्नयराइं० विरू० चक्खुदंसणपडियाए नो अभिसंधारिज्ज गमणाए, एवं नायव्वं जहा सद्दपडिमा सव्वा वाइत्तवज्जा रूवपडिमावि ॥ (सू. ३९४) पञ्चमं सत्तिक्कयं ॥ २-२-५ ॥**



स भावभिक्षुः क्वचित् पर्यटन्नथैकानि-कानिचिन्नानाविधानि रूपाणि पश्यति, तद्यथा-'ग्रथितानि' ग्रथितपुष्पादिनिर्वर्तितस्वस्तिकादीनि 'वेष्टिमानि' वस्त्रादिनिर्वर्तितपुत्तलिकादीनि 'पूरिमाणि'त्ति यान्यन्तः पूरणेन पुरुषाद्याकृतीनि भवन्ति 'संघातिमानि' चोल-



---

१ रुष्टस्य खरा दृष्टि उत्पलधवला प्रसन्नचित्तस्य। दुःखितस्यावम्लायति गन्तुमनस उत्सुका भवति ॥ १ ॥

कादीनि 'काष्ठकर्माणि' रथादीनि 'पुस्तकर्माणि' लेप्यकर्माणि 'चित्रकर्माणि' प्रतीतानि 'मणिकर्माणि' विचित्रमणिनिष्पादितमस्ति-कादीनि, तथा 'दन्तकर्माणि' दन्तपुत्तलिकादीनि, तथा पत्रच्छेद्यकर्माणि, इत्येवमादीनि विरूपरूपाणि चक्षुर्दर्शनप्रतिज्ञया नाभि-सन्धारयेद्गमनाय, एतानि द्रष्टुं गमने मनोऽपि न विदध्यादित्यर्थः । एवं शब्दसप्तककसूत्राणि चतुर्विधातोद्यरहितानि सर्वाण्यपी-हायोज्यानि, केवलं रूपप्रतिज्ञयेत्येवमभिलापो योज्यः, दोषाश्चात्र प्राग्वत्समायोज्या इति ॥ पञ्चमं सप्तैककाख्यमध्ययनमादितो द्वादशं समाप्तमिति ॥ २-२-५-१२ ॥



५

---

अथ षष्ठं परक्रियाभिधं सप्तैककमध्ययनम् । साम्प्रतं पञ्चमानन्तरं षष्ठः सप्तैककः समारभ्यते, अस्य चायमभिसम्बन्धः-अनन्तरं रागद्वेषोत्पत्तिनिमित्तप्रतिषेधोऽभिहितः, तदिहापि स एवान्येन प्रकारेणाभिधीयते इत्यनेन सम्बन्धेनायातस्यास्य नाम-निष्पन्ने निक्षेपे परक्रियेत्यादानपदेन नाम, तत्र परशब्दस्य षड्विधं निक्षेपं दर्शयितुं निर्युक्तिकारो गाथार्द्धमाह—

छक्कं परइक्किक्कं त १ दन्न २ माएस ३ कम ४ बहु ५ पहाणे ६ ।

१०

षट्कं 'पर' इति परशब्दविषये नामादिः षड्विधो निक्षेपः, तत्र नामस्थापने क्षुण्णे, द्रव्यादिपरमेकैकं षड्विधं भवतीति दर्शयति, तद्यथा—तत्परम् १ अन्यपरम् २ आदेशपरं ३ क्रमपरं ४ बहुपरं ५ प्रधानपर ६ मिति, तत्र द्रव्यपरं तावत्तद्रूपतयैव वर्तमानं परम्—अन्यत्तत्परं यथा परमाणोः परः परमाणुः १, अन्यपरं त्वन्यरूपतया परम्—अन्यद्, यथा एकाणुकाद् द्व्यणुकत्र्यणुकादि, एवं द्व्यणुकादेकाणुकत्र्यणुकादि २, 'आदेशपरम्' आदिश्यते—आज्ञाप्यत इत्यादेशः—यः कस्यांचित्क्रियायां नियोज्यते कर्मकरादिः स

**अथ पञ्चमं रूपसप्तैकककमध्ययनम्।** चतुर्थसप्तैकककान्तरं पञ्चमं समारभ्यते, अस्य चायमभिसम्बन्धः—इहानन्तरं श्रवणेन्द्रियमाश्रित्य रागद्वेषोत्पत्तिर्निषिद्धा तदिहापि चक्षुरिन्द्रियमाश्रित्य निषिध्यते, इत्यनेन सम्बन्धेनायातस्यास्याध्ययनस्य नामनिष्पन्ने निक्षेपे रूपसप्तैकक इति नाम, तत्र रूपस्य चतुर्धा निक्षेपः, नामस्थापने अनादृत्य द्रव्यभावनिक्षेपार्थं निर्युक्तिकृद् गाथाऽर्द्धमाह—

दव्वं संठाणाई भावो वन्न कसिणं सभावो य। [दव्वं सद्दपरिणयं भावो उ गुणा य कित्ती य] ॥३२७॥

तत्र द्रव्यं नोआगमतो व्यतिरिक्तं पञ्च संस्थानानि परिमण्डलादीनि, भावरूपं द्विधा—वर्णतः स्वभावतश्च, तत्र वर्णतः कृत्स्नाः पञ्चापि वर्णाः, स्वभावरूपं त्वन्तर्गतक्रोधादिवशाद् भ्रूभङ्गललाटनयनारोपणनिष्ठुरवागादिकम्, एतद्विपरीतं प्रसन्नस्येति, उक्तञ्च—

"रुट्ठस्स खरा दिट्ठी उप्पलधवला पसन्नचित्तस्स। दुहियस्स ओमिलायइ गंतुमणस्सुस्सुआ होइ ॥१॥" सूत्रानुगमे सूत्रं, तच्चेदम्—

(मूलं) से भि० अहावेगइयाइं रूवाइं पासइ, तं० गंथिमाणि वा वेढिमाणि वा पूरिमाणि वा संघाइमाणि वा कट्ठकम्माणि वा पोत्थकम्माणि वा चित्तक० मणिकम्माणि वा दंतक० पत्तच्छिज्जकम्माणि वा विविहाणि वा वेढिमाइं अन्नयराइं० विरू० चक्खुदंसणपडियाए नो अभिसंधारिज्ज गमणाए, एवं नायव्वं जहा सद्दपडिमा सव्वा वाइत्तवज्जा रूवपडिमावि ॥ (सू. ३९४) पञ्चमं सत्तिक्कयं ॥ २-२-५ ॥



स भावभिक्षुः क्वचित् पर्यटन्नथैकानि—कानिचिन्नानाविधानि रूपाणि पश्यति, तद्यथा—'ग्रथितानि' ग्रथितपुष्पादिनिर्वर्त्तितस्वस्तिकादीनि 'वेष्टिमानि' वस्त्रादिनिर्वर्त्तितपुत्तलिकादीनि 'पूरिमाणि'त्ति यान्यन्तः पूरणेन पुरुषाद्याकृतीनि भवन्ति 'संघातिमानि' चोल-



१ रुष्टस्य खरा दृष्टिः उत्पलधवला प्रसन्नचित्तस्य। दुःखितस्यावम्लायति गन्तुमनस उत्सुका भवति ॥ १ ॥

मञ्जिज्जा नो गिज्झिज्जा, एयं खलु० जाव जएज्जासि(सू. ३९३)त्तिबेमि ॥ सद्दसत्तिक्कओ सम्मत्तो ॥२-२-४-११॥

स भिक्षुः 'आख्यायिकास्थानानि' कथानकस्थानानि, तथा 'मानोन्मानस्थानानि' मानं-प्रस्थकादिः उन्मानं-नाराचादि, यदिवा मानोन्मानमित्यश्वादीनां वेगादिपरीक्षा तत्स्थानानि तद्वर्णनस्थानानि वा, तथा महान्ति च तानि आहतनृत्यगीतवादित्रतन्त्रीतलताललुटितप्रत्युत्पन्नानि च तेषां स्थानानि-सभास्तद्वर्णनानि वा श्रवणप्रतिज्ञया नाभिसन्धारयेद्गमनायेति ॥ किञ्च—कलहादिवर्णनं तत्स्थानं वा श्रवणप्रतिज्ञया न गच्छेदिति ॥ अपिच-स भिक्षुः क्षुल्लिकां 'दारिकां' डिक्करिकां मण्डितालङ्कृतां बहुपरिवृतां 'णिवुज्झमाणिं'ति अश्वादिना नीयमानां, तथैकं पुरुषं वधाय नीयमानं प्रेक्ष्याहमत्र किञ्चिच्छ्रोष्यामीति श्रवणार्थं तत्र न गच्छेदिति ॥ स भिक्षुर्यान्येवं जानीयात्-महान्त्येतान्याश्रवस्थानानि-पापोपादानस्थानानि वर्त्तन्ते, तद्यथा-बहुशकटानि बहुरथानि बहुम्लेच्छानि बहुप्रात्यन्तिकानि, इत्येवंप्रकाराणि स्थानानि श्रवणप्रतिज्ञया नाभिसन्धारयेद् गन्तुमिति ॥ किञ्च-स भिक्षुर्महोत्सवस्थानानि यान्येवंभूतानि जानीयात्, तद्यथा-स्त्रीपुरुषस्थविरबालमध्यवयांस्येतानि भूषितानि गायनादिकाः क्रिया यत्र कुर्वन्ति तानि स्थानानि श्रवणेच्छया न गच्छेदिति ॥ इदानीं सर्वोपसंहारार्थमाह-सः 'भिक्षु' ऐहिकामुष्मिकापायभीरुः 'नो' नैव 'ऐहलोकिकैः' मनुष्यादिकृतैः पारापतादिकृतैरैहिकामुष्मिकैर्वा शब्दैः, तथा श्रुतैरश्रुतैर्वा, तथा साक्षादुपलब्धैरनुपलब्धैर्वा 'न सङ्गं कुर्यात्' न रागं गच्छेत्-न गार्द्ध्यं प्रतिपद्येत न तेषु मुह्येत नाध्युपपन्नो भवेत्, एतच्चस्य भिक्षोः सामग्र्यं, शेषं पूर्ववत्, इह च सर्वत्राप्यं दोषः-अजितेन्द्रियत्वं स्वाध्यायादिहानी रागद्वेषसम्भव इति, एवमन्येऽपि दोषा ऐहिकामुष्मिकापायभूताः सुधिया समालोच्या इति ॥ चतुर्थसप्तैकाध्ययनमादित एकादशं समाप्तम् ॥ २-२-४-११ ॥

५

१०

नीहरिज्ज वा विसोहिज्ज वा नो तं० २। से सिया परो पायाओ पूयं वा सोणियं वा नीहरिज्ज वा विसो० नो तं० २। से सिया परो कायं आमज्जेज्ज वा पमज्जिज्ज वा नो तं सायए नो तं नियमे। से सिया परो कायं [लोद्धेणं वा] संवाहिज्ज वा पलिमद्दिज्ज वा नो तं० २। से सिया परो कायं तिल्लेण वा घ० वसा० मक्खिज्जा वा अब्भंगिज्ज वा नो तं० २। से सिया परो कायं लुद्धेण वा ४ उल्लोढिज्ज वा उव्वलिज्ज वा नो तं० २। से सिया परो कायं सीओ० उसिणो० उच्छोलिज्ज वा प० नो तं० २। से सिया परो कायं अन्नयरेण विलेवणजाएण आलिंपिज्ज वा २ नो तं० २। से० कायं अन्नयरेण धूवणजाएण धूविज्ज वा प० नो तं २। से० कायंसि वणं आमज्जिज्ज वा २ नो तं० २। से० वणं संवाहिज्ज वा पलि० नो तं०। से० वणं तिल्लेण वा घ० २ मक्खिज्ज वा अब्भं० नो तं० २। से० वणं लुद्धेण वा ४ उल्लोढिज्ज वा उव्वलेज्ज वा नो तं० २। से सिया परो कायंसि वणं सीओ० उ० उच्छोलिज्ज वा प० नो तं० २। से० सि वणं वा गंडं वा अरइं वा पुलइयं वा भगंदलं वा अन्नयरेणं सत्थजाएणं अच्छिंदिज्ज वा विच्छिंदिज्ज वा नो तं० २। से सिया परो अन्न० जाएण अच्छिंदित्ता वा विच्छिंदित्ता वा पूयं वा सोणियं वा नीहरिज्ज वा वि० नो तं० २। से० कायंसि गंडं वा अरइं वा पुलइयं वा भगंदलं वा आमज्जिज्ज वा २ नो तं० २। से० गंडं वा ४ संवाहिज्ज वा पलि० नो तं० २। से० कायं० गंडं वा ४ तिल्लेण वा ३ मक्खिज्ज वा २ नो तं० २। से० गंडं ४ लुद्धेण वा ४ उल्लोढिज्ज वा उ० नो तं० २। से० गंडं वा ४ सीओदग २ उच्छोलिज्ज वा प० नो तं० २। से० गंडं वा ४ अन्नयरेणं सत्थजाएणं अच्छिंदिज्ज वा वि० अन्न० सत्थ० अच्छिं-

१३ परक्रियासप्तैककं पादाद्यामर्जनादि-निषेधः

१०

दित्ता वा २ पूयं वा २ सोणियं वा नीह० विसो० नो तं सायए २। से सिया परो कायंसि सेयं वा जल्लं वा नीहरिज्ज वा वि० नो तं० २। से सिया परो अच्छिमलं वा कण्णमलं वा दंतमलं वा नहम० नीहरिज्ज वा २ नो तं० २। से सिया परो दीहाइं वालाइं दीहाइं वा रोमाइं दीहाइं भमुहाइं दीहाइं कक्खरोमाइं दीहाइं वत्थिरोमाइं कप्पिज्ज वा संठविज्ज वा नो तं० २। से सिया परो सीसाओ लिक्खं वा जूयं वा नीहरिज्ज वा वि० नो तं० २। से सिया परो अंकंसि वा पलियंकंसि वा तुयट्टावित्ता पायाइं आमज्जिज्ज वा पम०, एवं हिट्ठिमो गमो पायाइ भाणियव्वो। से सिया परो अंकंसि वा २ तुयट्टावित्ता हारं वा अद्धहारं वा उरत्थं वा गेवेयं वा मउडं वा पालंबं वा सुवन्नसुत्तं वा आविहिज्ज वा पिणहिज्ज वा नो तं० २। से० परो आरामंसि वा उज्जाणंसि वा नीहरित्ता वा पविसित्ता वा पायाइं आमज्जिज्ज वा प० नो तं साएइ॥ एवं नेयव्वा अन्नमन्नकिरियावि॥ (सू. ३९५)

परः-आत्मनो व्यतिरिक्तोऽन्यस्तस्य क्रिया-चेष्टा कायव्यापाररूपा तां परक्रियाम् 'आध्यात्मिकीम्' आत्मनि क्रियमाणां, पुनरपि विशिनष्टि-'सांश्लेपिकीं' कर्मसंश्लेपजननीं 'नो' नैव 'आस्वादयेत्' अभिलषेत्, मनसा न तदभिलाषं कुर्यादित्यर्थः, तथा न तां परक्रियां 'नियमयेत्' कारयेद्वाचा, नापि कायेनेति। तां च परक्रियां विशेषतो दर्शयति-'से' तस्य साधोर्निष्प्रतिकर्मशरीरस्य सः 'परः' अन्यो धर्मश्रद्धया पादौ रजोऽवगुण्ठितौ आमृज्यात् कर्पटादिना, वाशब्दस्तूत्तरपक्षापेक्षः, तच्चास्वादयेन्नापि नियमयेदिति, एवं स साधुस्तं परं पादौ संबाधयन्तं मर्दयन्तं वा स्पर्शयन्तं रञ्जयन्तं, तथा तैलादिना म्रक्षयन्तमभ्यञ्जयन्तं वा, तथा लोध्रादिना उद्वर्त्तनादि कुर्वन्तं, तथा शीतोदकादिना उच्छोलनादि कुर्वाणं, तथाऽन्यतरेण सुगन्धिद्रव्येणालिम्पन्तं, तथा विशिष्टधूपेन धूपयन्तं,

तथा पादात्कण्टकादिकमुद्धरन्तम्, एवं शोणितादिकं निस्सारयन्तं 'नास्वादयेत्' मनसा नाभिलषेत् नापि नियमयेत्–कारयेद्वाचा कायेनेति ॥ शेषाणि कायव्रणगतादीनि आरामप्रवेशनिष्क्रमणप्रमार्जनसूत्रं यावदुत्तानार्थानि ॥ एवममुमेवार्थमुत्तरसप्तकेऽपि तुल्यत्वात्सङ्क्षेपरुचिः सूत्रकारोऽतिदिशति–'एवम्' इति याः पूर्वोक्ताः रजःप्रमार्जनादिकास्ताः 'अन्योऽन्यं' परस्परतः साधुना कृतप्रतिक्रियया न विधेया इत्येवं नेतव्योऽन्योऽन्यक्रियासप्तैकक इति ॥ किञ्च—

(मूलं) से सिया परो सुद्धेणं असुद्धेणं वा वइबलेण वा तेइच्छं आउट्टे से० असुद्धेणं वइबलेणं तेइच्छं आउट्टे० से सिया परो गिलाणस्स सचित्ताणि वा कंदाणि वा मूलाणि वा तयाणि वा हरियाणि वा खणित्तु वा कड्ढित्तु वा कड्ढावित्तु वा तेइच्छं आउट्टाविज्ज नो तं सा० २ कडुवेयणा पाणभूयजीवसत्ता वेयणं वेइंति, एयं खलु० समिए सया जए सेयमिणं मन्निज्जासि (सू. ३९६) त्तिबेमि ॥ छट्ठओ सत्तिक्कओ ॥ २–२–६ ॥

'से' तस्य साधोः स परः शुद्धेनाशुद्धेन वा 'वाग्बलेन' मन्त्रादिसामर्थ्येन 'चिकित्सां' व्याध्युपशमम् 'आउट्टे'त्ति कर्तुमभिलषेत्। तथा स परो ग्लानस्य साधोश्चिकित्सार्थं सचित्तानि कन्दमूलादीनि 'खनित्वा' समाकृष्य स्वतोऽन्येन वा खानयित्वा चिकित्सां कर्तुमभिलषेत् तच्च 'नास्वादयेत्' नाभिलषेन्मनसा, एतच्च भावयेत्–इह पूर्वकृतकर्मफलेश्वरा जीवाः कर्मविपाककृतकटुकवेदनाः कृत्वा परेषां शारीरमानसा वेदनाः स्वतः प्राणिभूतजीवसत्त्वास्तत्कर्मविपाकजां वेदनामनुभवन्तीति, उक्तञ्च—"पुनरपि सहनीयो दुःखपाकस्त्वयायं, न खलु भवति नाशः कर्मणां सञ्चितानाम् । इति सह गणयित्वा यद्यदायाति सम्यक् सदसदिति विवेकोऽन्यत्र भूयः कुतस्ते ? ॥१॥" शेषमुक्तार्थं यावदध्ययनपरिसमाप्तिरिति ॥ षष्ठमादितस्त्रयोदशं सप्तैकाध्ययनं समाप्तम् ॥२–१–६–१३॥

दित्ता या २ पूयं वा २ सोणियं वा नीह० विसो० नो तं सायए २। से सिया परो कायंसि सेयं वा जल्लं वा नीहरिज्ज वा वि० नो तं० २। से सिया परो अच्छिमलं वा कण्णमलं वा दंतमलं वा नहम० नीहरिज्ज वा २ नो तं० २। से सिया परो दीहाइं वालाइं दीहाइं वा रोमाइं दीहाइं भमुहाइं दीहाइं कक्खरोमाइं दीहाइं वत्थिरोमाइं कप्पिज्ज वा संठविज्ज वा नो तं० २। से सिया परो सीसाओ लिक्खं वा जूयं वा नीहरिज्ज वा वि० नो तं० २। से सिया परो अंकंसि वा पलियंकंसि वा तुयट्टावित्ता पायाइं आमज्जिज्ज वा पम०, एवं हिट्ठिमो गमो पायाइ भाणियव्वो। से सिया परो अंकंसि वा २ तुयट्टावित्ता हारं वा अद्धहारं वा उरत्थं वा गेवेयं वा मउडं वा पालंबं वा सुवन्नसुत्तं वा आविहिज्ज वा पिणहिज्ज वा नो तं० २। से० परो आरामंसि वा उज्जाणंसि वा नीहरित्ता वा पविसित्ता वा पायाइं आमज्जिज्ज वा प० नो तं साएइ ॥ एवं नेयव्वा अन्नमन्नकिरियावि ॥ (सू. ३९८)

परः–आत्मनो व्यतिरिक्तोऽन्यस्तस्य क्रिया–चेष्टा कायव्यापाररूपा तां परक्रियाम् 'आध्यात्मिकीम्' आत्मनि क्रियमाणां, पुनरपि विशिनष्टि–'सांश्लेषिकीं' कर्मसंश्लेषजननीं 'नो' नैव 'आस्वादयेत्' अभिलषेत्, मनसा न तदभिलाषं कुर्यादित्यर्थः, तथा न तां परक्रियां 'नियमयेत्' कारयेद्वाचा, नापि कायेनेति। तां च परक्रियां विशेषतो दर्शयति–'से' तस्य साधोर्निष्प्रतिकर्मशरीरस्य सः 'परः' अन्यो धर्मश्रद्धया पादौ रजोऽवगुण्ठितौ आमृज्यात् कर्पटादिना, वाशब्दस्तूत्तरपक्षापेक्षः, तन्नास्वादयेन्नापि नियमयेदिति, एवं स साधुस्तं परं पादौ संबाधयन्तं मर्दयन्तं वा स्पर्शयन्तं रञ्जयन्तं, तथा तैलादिना म्रक्षयन्तमञ्जयन्तं वा, तथा लोध्रादिना उद्वर्त्तनादि कुर्वन्तं, तथा शीतोदकादिना उच्छोलनादि कुर्वाणं, तथाऽन्यतरेण सुगन्धिद्रव्येणालिम्पन्तं, तथा विशिष्टधूपेन धूपयन्तं,

तथा पादात्कण्टकादिकमुद्धरन्तम्, एवं शोणितादिकं निस्सारयन्तं 'नास्वादयेत्' मनसा नाभिलषेत् नापि नियमयेत्-कारयेद्वाचा कायेनेति ॥ शेषाणि कायव्रणगतादीनि आरामप्रवेशनिष्क्रमणप्रमार्जनसूत्रं यावदुत्तानार्थानि ॥ एवममुमेवार्थमुत्तरसप्तकेऽपि तुल्यत्वात्सङ्क्षेपरुचिः सूत्रकारोऽतिदिशति-'एवम्' इति याः पूर्वोक्ताः रजःप्रमार्जनादिकास्ताः 'अन्योऽन्यं' परस्परतः साधुना कृतप्रतिक्रियया न विधेया इत्येवं नेतव्योऽन्योऽन्यक्रियासप्तैकक इति ॥ किञ्च—

**(मूलं) से सिया परो सुद्धेणं असुद्धेणं वा वइबलेण वा तेइच्छं आउट्टे से० असुद्धेणं वइबलेणं तेइच्छं आउट्टे० से सिया परो गिलाणस्स सचित्ताणि वा कंदाणि वा मूलाणि वा तयाणि वा हरियाणि वा खणित्तु वा कड्डित्तु वा कड्डावित्तु वा तेइच्छं आउट्टाविज्ज नो तं सा० २ कडुवेयणा पाणभूयजीवसत्ता वेयणं वेइंति, एयं खलु० समिए सया जए सेयमिणं मन्निज्जासि (सू. ३९६) त्तिबेमि ॥ छट्ठओ सत्तिक्कओ ॥ २-२-६ ॥**

१०

'से' तस्य साधोः स परः शुद्धेनाशुद्धेन वा 'वाग्बलेन' मन्त्रादिसामर्थ्येन 'चिकित्सां' व्याध्युपशमम् 'आउट्टे'त्ति कर्तुमभिलषेत्। तथा स परो ग्लानस्य साधोश्चिकित्सार्थं सचित्तानि कन्दमूलादीनि 'खनित्वा' समाकृष्य स्वतोऽन्येन वा खानयित्वा चिकित्सां कर्तुमभिलषेत् तच्च 'नास्वादयेत्' नाभिलषेन्मनसा, एतच्च भावयेत्-इह पूर्वकृतकर्मफलेश्वरा जीवाः कर्मविपाककृतकटुकवेदनाः कृत्वा परेषां शारीरमानसा वेदनाः स्वतः प्राणिभूतजीवसत्त्वास्तत्कर्मविपाकजां वेदनामनुभवन्तीति, उक्तञ्च—"पुनरपि सहनीयो दुःखपाकस्त्वयायं, न खलु भवति नाशः कर्मणां सञ्चितानाम् । इति सहगणयित्वा यद्यदायाति सम्यक्, सदसदिति विवेकोऽन्यत्र भूयः कुतस्ते ? ॥१॥" शेषमुक्तार्थं यावदध्ययनपरिसमाप्तिरिति ॥ षष्ठमादितस्त्रयोदशं सप्तैककाध्ययनं समाप्तम् ॥२-१-६-१३॥

अथ सप्तममन्योऽन्यक्रियाभिधमध्ययनम्। षष्ठानन्तरं सप्तमः, अस्य चायमभिसम्बन्धः–इहानन्तराध्ययने सामान्येन परक्रिया निषिद्धा, इह तु गच्छनिर्गतोद्देशेनान्योऽन्यक्रिया निषिध्यते, इत्यनेन सम्बन्धेनायातस्यास्याध्ययनस्य नामनिष्पन्ने निक्षेपे अन्योऽन्यक्रियेति नाम, तत्रान्यस्य निक्षेपार्थं निर्युक्तिकृद् गाथापश्चार्द्धमाह–

अन्ने छक्कं तं पुण तदन्नमाएसओ चेव ॥ ३२५ ॥

अन्यस्य नामादिषड्विधो निक्षेपः, तत्र नामस्थापने क्षुण्णे, द्रव्यान्यत्रिधा–तदन्यद् अन्यान्यद् आदेशान्यच्चेति, द्रव्यपरवच्चेयमिति ॥ अत्र परक्रियायामन्योऽन्यक्रियायां च गच्छान्तर्गतैर्यतना कर्त्तव्येति, गच्छनिर्गतानां त्वेतया न प्रयोजनमिति दर्शयितुं निर्युक्तिकृदाह–

जयमाणस्स परो जं करेइ जयणाएँ नत्थ अहिगारो। निप्पडिकम्मस्स उ अन्नमन्नकरणं अजुत्तं तु ॥३२६॥

॥ सत्तिक्काणं निज्जुत्ती सम्मत्ता ॥

जयमाणस्सेत्यादि पातनिकयैव भावितार्था ॥ साम्प्रतं सूत्रं, तच्चेदम्–

(मूलं) से भिक्खू वा २ अन्नमन्नकिरियं अज्झत्थियं संसेइयं नो तं सायए २॥ से अन्नमन्नं पाए आमज्जिज्ज वा० नो तं०, सेसं तं चेव, एयं खलु० जइज्जासि (सू. १७७) त्तिबेमि ॥ सप्तमम् ॥ २–२–७॥

अन्योऽन्यस्य–परस्परस्य क्रियां–पादादिप्रमार्जनादिकां सर्वां पूर्वोक्तां क्रियाव्यतिहारविशेषितामाध्यात्मिकीं सांश्लेषिकीं नास्वा-

दयेदित्यादि पूर्ववन्नेयं यावदध्ययनसमाप्तिरिति ॥ सप्तममादितश्चतुर्दशं सप्तैककाध्ययनं समाप्तं, द्वितीया च समाप्ता चूलिका ॥ २-२-७-१० ॥

---

## अथ भावनाख्या तृतीया चूलिका।

उक्ता द्वितीया चूला, तदनन्तरं तृतीया समारभ्यते, अस्याश्चायमभिसम्बन्धः—इहादितः प्रभृति येन श्रीवर्द्धमानस्वामिनेदमर्थतोऽभिहितं तस्योपकारित्वात्तद्वक्तव्यतां प्रतिपादयितुं तथा पञ्चमहाव्रतोपेतेन साधुना पिण्डशय्यादिकं ग्राह्यमतस्तेषां महाव्रतानां परिपालनार्थं भावनाः प्रतिपाद्या इत्यनेन सम्बन्धेनायातेयं चूडेति, अस्याश्चत्वार्यनुयोगद्वाराणि भवन्ति, तत्रोपक्रमान्तर्गतोऽयमर्थाधिकारः, तद्यथा—अप्रशस्तभावनापरित्यागेन प्रशस्ता भावना भावयितव्या इति नामनिष्पन्ने निक्षेपे भावनेति नाम, तस्याश्च नामादि चतुर्विधो निक्षेपः, तत्र नामस्थापने क्षुण्णत्वादनादृत्य द्रव्यादिनिक्षेपार्थं निर्युक्तिकृदाह—

दव्वं गंधंगतिलाइएसु सीउण्हविसहणाईसु। भावंमि होइ दुविहा पसत्थ तह अप्पसत्था य ॥३३०॥

तत्र 'द्रव्य'मिति[1] द्रव्यभावना नोआगमतो व्यतिरिक्ता गन्धाङ्गैः—जातिकुसुमादिभिर्द्रव्यैस्तिलादिषु द्रव्येषु या वासना सा द्रव्यभावनेति, तथा शीतेन भावितः शीतसहिष्णुरुष्णेन वा उष्णसहिष्णुर्भवतीति, आदिग्रहणाद्व्यायामक्षुण्णदेहो व्यायामसहिष्णुरित्यादि, अन्येनापि द्रव्येण द्रव्यस्य या भावना सा द्रव्यभावनेति भावे तु—भावविषया प्रशस्ताप्रशस्तभेदेन द्विरूपा भावनेति ॥ तत्राप्रशस्तां भावभावनामधिकृत्याह—

पाणिवहमुसावाए अदत्तमेहुणपरिग्गहे चेव । कोहे माणे माया लोभे य हवंति अपसत्था ॥ ३३१ ॥

प्राणिवधादिकार्येषु प्रथमं प्रवर्त्तमानः साशङ्कः प्रवर्तते, पश्चात्पौनःपुन्यकरणतया निशङ्कः प्रवर्तते, तदुक्तम्—"करोत्यादौ तावत्सघृणहृदयः किञ्चिदशुभं, द्वितीयं सापेक्षो विमृशति च कार्यं च कुरुते । तृतीयं निशङ्को विगतघृणमन्यत्प्रकुरुते, ततः पापाभ्यासात्सततमशुभेषु प्ररमते ॥१॥" ॥ प्रशस्तां भावनामाह—

दंसणनाणचरित्ते तववेरग्गे य होइ उ पसत्था । जा य जहा ता य तहा लक्खण वुच्छं सलक्खणओ ॥३३२॥

दर्शनज्ञानचारित्रतपोवैराग्यादिषु या यथा च प्रशस्ता भावना भवति तां प्रत्येकं लक्षणतो वक्ष्य इति ॥ दर्शनभावनार्थमाह—

तित्थगराण भगवओ पवयणपावयणिअइसइड्ढीणं । अभिगमणनमणदरिसणकित्तणसंपूअणाथुणणा ॥३३३॥

तीर्थकृतां भगवतां प्रवचनस्य—द्वादशाङ्गस्य गणिपिटकस्य, तथा प्रावचनिनाम्—आचार्यादीनां युगप्रधानानां तथाऽतिशयिनामृद्धिमतां-केवलिमनःपर्यायावधिमचतुर्दशपूर्वविदां तथाऽऽमर्षौषध्यादिप्राप्तऋद्धीनां यदभिगमनं गत्वा च दर्शनं तथा गुणोत्कीर्त्तनं संपूजनं गन्धादिना स्तोत्रैः स्तवनमित्यादिका दर्शनभावना, अनया हि दर्शनभावनयाऽनवरतं भाव्यमानया दर्शनशुद्धिर्भवतीति ॥ किञ्च—

जम्माभिसेयनिक्खमणचरणनाणुप्पया य निव्वाणे । दियलोअभवणमंदरनंदीसरभोमनगरेसुं ॥३३४॥

अट्ठावयमुज्जिंते गयग्गपयए य धम्मचक्के य । पासरहावत्तनगं चमरुप्पायं च वंदामि ॥३३५॥

तीर्थकृतां जन्मभूमिषु तथा निष्क्रमणचरणज्ञानोत्पत्तिनिर्वाणभूमिषु तथा देवलोकभवनेषु मन्दरेषु तथा नन्दीश्वरद्वीपादौ भौमेषु च-पातालभवनेषु यानि शाश्वतानि चैत्यानि तानि वन्देऽहमिति द्वितीयगाथायामन्ते क्रियेति, एवमष्टापदे, तथा श्रीमदुज्जयन्तगिरौ



२०

गजाग्रपदे दशार्णकूटवर्त्तिनि तथा तक्षशिलायां धर्मचक्रे तथा अहिच्छत्रायां पार्श्वनाथस्य धरणेन्द्रमहिमास्थाने, एवं रथावर्त्ते पर्वते वैरस्वामिना यत्र पादपोपगमनं कृतं यत्र च श्रीमद्वर्द्धमानमाश्रित्य चमरेन्द्रेणोत्पतनं कृतम्, एतेषु च स्थानेषु यथासम्भवमभिगमनवन्दनपूजनोत्कीर्त्तनादिकाः क्रियाः कुर्वतो दर्शनशुद्धिर्भवतीति ॥ किञ्च—

गणियं निमित्त जुत्ती संदिट्ठी अवितहं इमं नाणं । इय एगंतमुवगया गुणपच्चइया इमे अत्था ॥ ३३६ ॥
गुणमाहप्पं इसिनामकित्तणं सुरनरिंदपूया य । पोराणचेइयाणि य इय एसा दंसणे होइ ॥ ३३७ ॥

प्रवचनविदाममी गुणप्रत्ययिका अर्था भवन्ति, तद्यथा–गणितविषये–बीजगणितादौ परं पारमुपगतोऽयं, तथाऽष्टाङ्गस्य निमित्तस्य पारगोऽयं, तथा दृष्टिपातोक्ता नानाविधा युक्तीः–द्रव्यसंयोगान् हेतून् वा वेत्ति, तथा सम्यग्–अविपरीता दृष्टिः–दर्शनमस्य, त्रिदशैरपि चालयितुमशक्या, तथाऽवितथमस्येदं ज्ञानं, यथैवायमाह तत्तथैवेत्येवं प्रावचनिकस्याचार्यादेः प्रशंसां कुर्वतो दर्शनविशुद्धिर्भवतीति, एवमन्यदपि गुणमाहात्म्यमाचार्यादेर्वर्णयतः तथा पूर्वमहर्षीणां च नामोत्कीर्त्तनं कुर्वतः तेषामेव च सुरनरेन्द्रपूजादिकं कथयतः तथा चिरन्तनचैत्यानि पूजयतः इत्येवमादिकां क्रियां कुर्वतस्तद्वासनावासितस्य दर्शनविशुद्धिर्भवतीत्येषा प्रशस्ता दर्शनविषया भावनेति ॥ ज्ञानभावनामधिकृत्याह—

तत्तं जीवाजीवा नायव्वा जाणणा इहं दिट्ठा । इह कज्जकरणकारगसिद्धी इह बंधमुक्खो य ॥ ३३८ ॥
बद्धो य बंधहेऊ बंधण बंधप्फलं सुकहियं तु । संसारपवंचोऽवि य इहयं कहिओ जिणवरेहिं ॥ ३३९ ॥
नाणं भविस्सई एवमाइया वायणाइयाओ य । सज्झाए आउत्तो गुरुकुलवासो य इय नाणे ॥ ३४० ॥

तत्र ज्ञानस्य भावना ज्ञानभावना-एवंभूतं मौनीन्द्रं ज्ञानं-प्रवचनं यथाऽवस्थिताशेषपदार्थाविर्भावकमित्येवंरूपेति, अनया च प्रधानमोक्षाङ्गं सम्यक्त्वमाधिगमिकमाविर्भवति, यतस्तत्त्वार्थश्रद्धानं सम्यग्दर्शनं, तत्त्वं च जीवाजीवादयो नव पदार्थाः, ते च तत्त्वज्ञानार्थिना सम्यग् ज्ञातव्याः, तत्परिज्ञानमिहैव-आर्हते प्रवचने दृष्टम्-उपलब्धमिति, तथैहैव-आर्हते प्रवचने कार्यं-परमार्थरूपं मोक्षाख्यं तथा करणं-क्रियासिद्धौ प्रकृष्टोपकारकं सम्यग्दर्शनज्ञानचारित्राणि कारकः-साधुः सम्यग्दर्शनाद्यनुष्ठाता क्रियासिद्धिश्च-इहैव मोक्षावाप्तिलक्षणा, तामेव दर्शयति-बन्धः-कर्मबन्धनं तस्मान्मोक्षः-कर्मविघटनलक्षणः असावपीहैव, नान्यत्र शाक्यादिकप्रवचने भवति, इत्येवं ज्ञानं भावयतो ज्ञानभावना भवतीति ॥ तथा 'बद्धः' अष्टप्रकारकर्मपुद्गलैः प्रतिप्रदेशमवष्टब्धो जीवः, तथा 'बन्धहेतवः' मिथ्यात्वाविरतिप्रमादकषाययोगाः तथा बन्धनम्-अष्टप्रकारकर्मवर्गणारूपं तत्फलं-चतुर्गतिसंसारपर्यटनसातासाताद्यनुभवनरूपमिति, एतत्सर्वमत्रैव सुकथितम्, अन्यद्वा यत्किञ्चित्सुभाषितं तदिहैव प्रवचनेऽभिहितमिति ज्ञानभावना, तथा विचित्रसंसारप्रपञ्चोऽत्रैव जिनेन्द्रैः कथित इति ॥ तथा ज्ञानं मम विशिष्टतरं भविष्यतीति ज्ञानभावना विधेया, ज्ञानमभ्यसनीयमित्यर्थः, आदिग्रहणादेकाग्रचित्ततादयो गुणा भवन्तीति, तथैतदपि ज्ञाने भावनीयं, यथा—"जं अन्नाणी कम्मं खवेइ" इत्यादि, तथैभिश्च कारणैर्ज्ञानमभ्यसनीयं, तद्यथा—ज्ञानसङ्ग्रहार्थं निर्जरार्थम् अव्यवच्छित्त्यर्थं स्वाध्यायार्थमित्यादि, तथा ज्ञानभावनया नित्यं गुरुकुलवासो भवति, तथा चोक्तम्—"णाणस्स होइ भागी थिरयरओ दंसणे चरित्ते य। धन्ना आवकहाए गुरुकुलवासं न मुञ्चन्ति ॥१॥",

१ ज्ञानस्य भवत्याभागी स्थिरतरो ज्ञाने दर्शनचारित्रे च । धन्या यावत्कथा गुरुकुलवास न मुञ्चति ॥ १ ॥ २ एको मे शाश्वत आत्मा ज्ञानदर्शनसंयुतः । शेषा मे बाह्या भावाः सर्वे संयोगलक्षणाः ॥ १ ॥

२०

२७

इत्यादिका ज्ञानविषया भावना भवतीति ॥ चारित्रभावनामधिकृत्याह—

साहुमहिंसाधम्मो सचमदत्तविरई य बंभं च। साहु परिग्गहविरई साहु तवो बारसंगो य ॥ ३४१ ॥

वेरग्गमप्पमाओ एगत्ता (ग्गे) भावणा य परिसंगं। इय चरणमणुगयाओ भणिया इत्तो तवो वुच्छं ॥३४२॥

साधु—शोभनोऽहिंसादिलक्षणो धर्म इति प्रथमव्रतभावना, तथा सत्यमस्मिन्नेवार्हते साधु—शोभनं नान्यत्रेति द्वितीयव्रतस्य, तथाऽदत्तविरतिश्चात्रैव साध्वीति तृतीयस्य, एवं ब्रह्मचर्यमप्यत्रैव नवगुप्तिगुप्तं धार्यत इति, तथा परिग्रहविरतिश्चेहैव साध्वीति, एवं द्वादशाङ्गं तप इहैव शोभनं, नान्यत्रेति ॥ तथा वैराग्यभावना सांसारिकसुखजुगुप्सारूपा, एवमप्रमादभावना मद्यादिप्रमादानां कर्मबन्धोपादानरूपाणामनासेवनरूपा, तथैकाग्रभावना—एको मे सासओ अप्पा, णाणदंसणसंजुओ। सेसा मे बाहिरा भावा, सव्वे संजोगलक्खणा ॥ १ ॥" इत्यादिका भावनाः ( इति प्रकृष्टमपि स्वाङ्गं ) 'चरणमुपगताः' चरणमाश्रिताः, इत ऊर्ध्वं तपोभावनां 'वक्ष्ये' अभिधास्य इति ॥

किह मे हविज्जऽवंझो दिवसो? किं वा पहू तवं काउं?। को इह दव्वे जोगो खित्ते काले समयभावे ॥३४३॥

'कथं' केन निर्विकृत्यादिना तपसा मम दिवसोऽवन्ध्यो भवेत्?, कतरद्वा तपोऽहं विधातुं 'प्रभुः' शक्तः?, तच कतरत्तपः कस्मिन् द्रव्यादौ मम निर्वहति? इति भावनीयं, तत्र द्रव्ये उत्सर्गतो वल्लचणकादिके क्षेत्रे स्निग्धरूक्षादौ काले शीतोष्णादौ भावेऽग्लानोऽहमेवंभूतं तपः कर्तुमलम्, इत्येवं द्रव्यादिकं पर्यालोच्य यथाशक्ति तपो विधेयं "शक्तितस्त्यागतपसी" (तत्त्वार्थे अ० ६ सू०

एको मे शाश्वत आत्मा ज्ञानदर्शनसंयुतः । शेषा मे बाह्या भावाः सर्वे संयोगलक्षणाः ॥१॥

२३ ) इति ॥ किञ्च—

उच्छाहपालणाए इति (एव) तवे संजमे य संघयणे। वेरग्गेऽणिचाई होइ चरित्ते इहं पगयं ॥३४४॥

तथाऽनशनादिके तपस्यनिगूहितबलवीर्येणोत्साहः कर्त्तव्यः, गृहीतस्य च प्रतिपालनं कर्त्तव्यमिति, उक्तञ्च—"तित्थयरो चउनाणी सुरमहिओ सिज्झिअव्वयधुवम्मि। अणिगूहिअबलविरिओ सव्वत्थामेसु उज्जमइ ॥१॥ किं पुण अवसेसेहिं दुक्खक्खयकारणा सुविहिएहिं। होइ न उज्जमिअव्वं सपच्चवायंमि माणुस्से ? ॥२॥" इत्येवं तपसि भावना विधेया। एवं 'संयमे' इन्द्रियनोइन्द्रियनिग्रहरूपे, तथा 'संहनने' वज्रर्षभादिके तपोनिर्वाहनसमर्थे भावना विधेयेति, वैराग्यभावना त्वनित्यत्वादिभावनारूपा, तदुक्तम्—भावयितव्यमनित्यत्व १ मशरणत्वं २ तथैकता ३ ऽन्यत्वे ४। अशुचित्वं ५ संसारः ६ कर्माश्रव ७ संवर ८ विधिश्च ॥१॥ निर्जरण-९ लोकविस्तर १० धर्मस्वाख्याततत्त्वचिन्ता च ११। बोधेः सुदुर्लभत्वं च १२ भावना द्वादश विशुद्धाः ॥२॥"इत्यादिका अनेकप्रकारा भावना भवन्तीति, इह पुनश्चारित्रे प्रकृतं—चारित्रभावनयेहाधिकार इति ॥ निर्युक्त्यनुगमानन्तरं सूत्रमुच्चारणीयं, तच्चेदम्—

( मूलं ) तेणं कालेणं तेणं समएणं समणे भगवं महावीरे पंचहत्थुत्तरे यावि हुत्था, तंजहा—हत्थुत्तराहिं चुए चइत्ता गब्भं वक्कंते हत्थुत्तराहिं गब्भाओ गब्भं साहरिए हत्थुत्तराहिं जाए हत्थुत्तराहिं मुंडे भवित्ता अगाराओ अणगारियं पव्वइए हत्थुत्तराहिं कसिणे पडिपुन्ने अव्वाघाए निरावरणे अणंते अणुत्तरे केवलवरनाण-

१ तीर्थकरश्चतुर्ज्ञानी सुरमहितो ध्रुवे सेधितव्ये ! अनिगूहितबलवीर्यः सर्वस्थाम्नोद्यच्छति ॥१॥ किं पुनरवशेषैर्दुःखक्षयकारणात् सुविहितैः। भवति नोद्यमितव्यं सप्रत्यपाये मानुष्ये ॥ २ ॥



२६

दंसणे समुप्पन्ने, साइणा भगवं परिनिव्वुए। (सू. ३९८)

(मूलं) समणे भगवं महावीरे इमाए ओसप्पिणीए सुसमसुसमाए समाए वीइक्कंताए सुसमाए समाए वीइक्कंताए सुसमदुस्समाए समाए वीइक्कंताए दूसमसुसमाए बहुविइक्कंताए पन्नहत्तरीए वासेहिं मासेहि य अद्धनवमेहिं सेसेहिं जे से गिम्हाणं चउत्थे मासे अट्ठमे पक्खे आसाढसुद्धे तस्स णं आसाढसुद्धस्स छट्ठीपक्खेणं हत्थुत्तराहिं नक्खत्तेणं जोगमुवागएणं महाविजयसिद्धत्थपुप्फुत्तरवरपुंडरीयदिसासोवत्थियवद्धमाणाओ महाविमाणाओ वीसं सागरोवमाइं आउयं पालइत्ता आउक्खएणं ठिइक्खएणं भवक्खएणं चुए चइत्ता इह खलु जंबुद्दीवे णं दीवे भारहे वासे दाहिणड्ढभरहे दाहिणमाहणकुंडपुरसंनिवेसंमि उसभदत्तस्स माहणस्स कोडालसगोत्तस्स देवाणंदाए माहणीए जालंधरस्स गुत्ताए सीहुब्भवभूएणं अप्पाणेणं कुच्छिंसि गब्भं वक्कंते, समणे भगवं महावीरे तिन्नाणोवगए यावि हुत्था, चइस्सामित्ति जाणइ चुएमित्ति जाणइ चयमाणे न याणेइ, सुहुमे णं से काले पन्नत्ते, तओ णं समणे भगवं महावीरे हियाणुकंपएणं देवेणं जीयमेयंतिकट्टु जे से वासाणं तच्चे मासे पंचमे पक्खे आसोयबहुले तस्स णं आसोयबहुलस्स तेरसीपक्खेणं हत्थुत्तराहिं नक्खत्तेणं जोगमुवागएणं बासीहिं राइंदिएहिं वइक्कंतेहिं तेसीइमस्स राइंदियस्स परियाए वट्टमाणे दाहिणमाहणकुंडपुरसंनिवेसाओ उत्तरखत्तियकुंडपुरसंनिवेसंसि नायाणं खत्तियाणं सिद्धत्थस्स खत्तियस्स कासवगुत्तस्स तिसलाए खत्तियाणीए वासिट्ठसगुत्ताए असुभाणं पुग्गलाणं अवहारं करित्ता सुभाणं पुग्गलाणं पक्खेवं करित्ता कुच्छिंसि



१०

गब्भं साहरइ, जेवि य से तिसलाए खत्तियाणीए कुच्छिंसि गब्भे तंपि य दाहिणमाहणकुंडपुरसंनिवेसंसि उस० को० देवा० जालंधरायणगुत्ताए कुच्छिंसि गब्भं साहरइ, समणे भगवं महावीरे तिन्नाणोवगए यावि होत्था—साहरिज्जिस्सामित्ति जाणइ साहरिज्जमाणे न याणइ साहरिएमित्ति जाणइ समणाउसो!। तेणं कालेणं तेणं समएणं तिसलाए खत्तियाणीए अहऽन्नया कयाई नवण्हं मासाणं बहुपडिपुन्नाणं अद्धट्ठमाणराइंदियाणं वीइक्कंताणं जे से गिम्हाणं पढमे मासे दुच्चे पक्खे चित्तसुद्धे तस्स णं चित्तसुद्धस्स तेरसीपक्खेणं हत्थु० जोग० समणं भगवं महावीरं अरोग्गा अरोग्गं पसूया। जण्णं राइं तिसला ख० समणं० महावीरं अरोया अरोयं पसूया तण्णं राइं भवणवइवाणमंतरजोइसियविमाणवासिदेवेहिं देवीहि य ओवयंतेहिं उप्पयंतेहि य एगे महं दिव्वे देवुज्जोए देवसन्निवाए देवकहक्कहए उप्पिंजलगभूए यावि हुत्था। जण्णं रयणिं० तिसला ख० समणं० पसूया तण्णं रयणिं बहवे देवा य देवीओ य एगं महं अमयवासं च १ गंधवासं च २ चुन्नवासं च ३ पुप्फवा० ४ हिरन्नवासं च ५ रयणवासं च ६ वासिंसु, जण्णं रयणिं तिसला ख० समणं० पसूया तण्णं रयणिं भवणवइवाणमंतरजोइसियविमाणवासिणो देवा य देवीओ य समणस्स भगवओ महावीरस्स सूइकम्माइं तित्थयराभिसेयं च करिंसु, जओ णं पभिइ भगवं महावीरे तिसलाए ख० कुच्छिंसि गब्भं आगए तओ णं पभिइ तं कुलं विपुलेणं हिरन्नेणं सुवन्नेणं धणेणं धन्नेणं माणिक्केणं मुत्तिएणं संखसिलप्पवालेणं अईव २ परिवड्ढइ, तओ णं समणस्स भगवओ महावीरस्स अम्मापियरो एयमट्ठं जाणित्ता निव्वत्तदसाहंसि वुक्कंतंसि सुइभूयंसि विपुलं

असणपाणखाइमसाइमं उवक्खडाविंति २ त्ता मित्तनाइसयणसंबंधिवग्गं उवनिमंतंति मित्त० उवनिमंतित्ता बहवे समणमाहणकिवणवणीमगाहिं भिच्छुंडगपंडरगाईण विच्छड्डंति विग्गोविंति विस्साणिंति दायारेसु दाणं पज्जभाइंति विच्छड्डित्ता विग्गो० विस्साणित्ता दाया० पज्जभाइत्ता मित्तनाइ० भुंजाविंति मित्त० भुंजावित्ता मित्त० वग्गेण इममेयारूवं नामधिज्जं कारविंति-जओ णं पभिइ इमे कुमारे ति० ख० कुच्छिंसि गब्भे आहूए तओ णं पभिइ इमं कुलं विपुलेणं हिरन्नेणं० संखसिलप्पवालेणं अतीव २ परिवड्ढइ, ता होउ णं कुमारे वद्धमाणे, तओ णं समणे भगवं महावीरे पंचधाइपरिवुडे, तं०-खीरधाईए १ मज्जणधाईए २ मंडणधाईए ३ खेलावणधाइए ४ अंकधा० ५, अंकाओ अंकं साहरिज्जमाणे रम्मे मणिकुट्टिमतले गिरिकंदरसमल्लीणेविव चंपयपायवे अहाणुपुव्वीए संवड्ढइ, तओ णं समणे भगवं० विन्नायपरिणय (मित्ते) विणियत्तबालभावे अप्पुस्सुयाइं उरालाइं माणुस्सगाइं पंचलक्खणाइं कामभोगाइं सद्दफरिसरसरूवगंधाइं परियारेमाणे एवं च णं विहरइ। (सू.३९९) समणे भगवं महावीरे कासवगुत्ते, तस्स णं इमे तिन्नि नामधिज्जा एवमाहिज्जंति, तंजहा-अम्मापिउसंति वद्धमाणे १ सहसंमइए समणे २ भीमं भयभेरवं उरालं अचलयं परीसहसहत्तिकट्टु देवेहिं से नामं कयं समणे भगवं महावीरे ३, समणस्स णं भगवओ महावीरस्स पिया कासवगुत्तेणं, तस्स णं तिन्नि नाम०, तं०-सिद्धत्थे इ वा सिज्जंसे इ वा जसंसे इ वा, समणस्स णं० अम्मा वासिट्ठस्सगुत्ता, तीसे णं तिन्नि ना०, तं०—तिसला इ वा विदेहदिन्ना इ वा पियकारिणी इ वा, समणस्स णं भ०-पित्तिअए सुपासे कासवगुत्ते णं, समण० जिट्ठे भाया



५

१०

नंदिवद्धणे कासवगुत्ते णं, समणस्स णं जेट्ठा भइणी सुदंसणा कासवगुत्तेणं, समणस्स णं भग० भज्जा जसोया कोडिन्नागुत्तेणं, समणस्स णं० धूया कासवगोत्तेणं, तीसे णं दो नामधिज्जा एवमा०—अणुज्जा इ वा पियदंसणा इ वा, समणस्स णं भ० नत्तूई कोसियागुत्तेणं, तीसे णं दो नाम० तं०—सेसवई इ वा जसवई इ वा, (सू. ४००) समणस्स णं० ३ अम्मापियरो पासावचिज्जा समणोवासगा यावि हुत्था, ते णं बहूइं वासाइं समणोवासगपरियागं पालइत्ता छण्हं जीवनिकायाणं सारक्खणनिमित्तं आलोइत्ता निंदित्ता गरिहित्ता पडिक्कमित्ता अहारिहं उत्तरगुणपायच्छित्ताइं पडिवज्जित्ता कुससंथारगं दुरूहित्ता भत्तं पच्चक्खायंति २ अपच्छिमाए मारणंतियाए संलेहणाए झुसियसरीरा कालमासे कालं किच्चा तं सरीरं विप्पजहित्ता अच्चुए कप्पे देवत्ताए उववन्ना, तओ णं आउक्खएणं भव० ठि० चुए चइत्ता महाविदेहे वासे चरमेणं उस्सासेणं सिज्झिस्संति बुज्झिस्संति मुच्चिस्संति परिनिव्वाइस्संति सव्वदुक्खाणमंतं करिस्संति (सू. ४०१)। तेणं कालेणं २ समणे भ० नाए नायपुत्ते नायकुलनिव्वत्ते विदेहे विदेहदिन्ने विदेहजच्चे विदेहसूमाले तीसं वासाइं विदेहंसित्तिकट्टु अगारमज्झे वसित्ता अम्मापिऊहिं कालगएहिं देवलोगमणुपत्तेहिं समत्तपइन्ने चिच्चा हिरन्नं चिच्चा सुवन्नं चिच्चा बलं चिच्चा वाहणं चिच्चा धणकणगरयणसंतसारसावइज्जं विच्छड्डित्ता विग्गोवित्ता विस्साणित्ता दायारेसु दाणं दाइत्ता परिभाइत्ता संवच्छरं दलइत्ता जे से हेमंताणं पढमे मासे पढमे पक्खे मग्गसिरबहुलस्स दसमीपक्खेणं हत्थुत्तरा० जोग० अभिनिक्खमणाभिप्पाए यावि हुत्था-संवच्छरेण होहिइ अभिनिक्खमणं तु जिणवरिंदस्स। तो अत्थ-

संपयाणं पवत्तई पुव्वसूराओ ॥११२॥ एगा हिरन्नकोडी अट्ठेव अणूणगा सयसहस्सा। सूरोदयमाईयं दिज्जइ जा पायरासुत्ति ॥११३॥ तिन्नेव य कोडिसया अट्ठासीइं च हुंति कोडीओ। असिइं च सयसहस्सा एयं संवच्छरे दिन्नं ११४॥ वेसमणकुंडधारी देवा लोगंतिया महिड्डीया। बोहिंति य तित्थयरं पन्नरससुं कम्मभूमीसु ॥११५॥ बंभंमि य कप्पंमी बोद्धव्वा कण्हराइणो मज्झे। लोगंतिया विमाणा अट्ठसु वत्था असंखिज्ञा ॥११६॥ एए देवनिकाया भगवं बोहिंति जिणवरं वीरं। सव्वजगज्जीवहियं अरिहं! तित्थं पवत्तेहि ॥ ११७ ॥ तओ णं समणस्स भ० म० अभिनिक्खमणाभिप्पायं जाणित्ता भवणवइवा० जो० विमाणवासिणो देवा य देवीओ य सएहिं २ रूवेहिं सएहिं २ नेवत्थेहिं सए० २ चिंधेहिं सव्विड्ढीए सव्वजुईए सव्वबलसमुदएणं सयाइं २ जाणविमाणाइं दुरूहंति सया० दुरूहित्ता अहाबायराइं पुग्गलाइं परिसाडंति २ अहासुहमाइं पुग्गलाइं परियाइंति २ उड्ढं उप्पयति उड्ढं उप्पइत्ता ताए उक्किट्ठाए सिग्घाए चवलाए तुरियाए दिव्वाए देवगईए अहे णं ओवयमाणा २ तिरिएणं असंखिज्ञाइं दीवसमुद्दाइं वीइक्कममाणा २ जेणेव जंबुद्दीवे दीवे तेणेव उवागच्छंति २ जेणेव उत्तरखत्तियकुंडपुरसंनिवेसे तेणेव उवागच्छंति, उत्तरखत्तियकुंडपुरसंनिवेसस्स उत्तरपुरच्छिमे दिसीभाए तेणेव झत्ति वेगेण ओवइया, तओ णं सक्के देविंदे देवराया सणियं २ जाणविमाणं पट्ठवेति सणियं २ जाणविमाणाओ पचोरुहइ२ सणियं २ एगंतमवक्कमइ एगंतमवक्कमित्ता महया वेउव्विएणं समुग्घाएणं समोहणइ २ एगं महं नाणामणिकणगरयणभत्तिचित्तं सुभं चारुकंतरूवं देवच्छंदयं विउव्वइ, तस्स णं देवच्छंदयस्स बहुम-



१०

